# महाभारत - आरण्यक पर्व

# ॥ महाभारत आरण्यकपर्व ॥

## आरण्यकपर्व

## अध्याय ००१

जनमेजय उवाच ॥

एवं द्यूतजिताः पार्थाः कोपिताश्च दुरात्मभिः ।
धार्तराष्ट्रैः सहामात्यैर्निकृत्या द्विजसत्तम ॥ ००१ ॥

श्राविताः परुषा वाचः सृजद्भिर्वैरमुत्तमम् ।
किमकुर्वन्त कौरव्या मम पूर्वपितामहाः ॥ ००२ ॥

कथं चैश्वर्यविभ्रष्टाः सहसा दुःखमेयुषः ।
वने विजह्रिरे पार्थाः शक्रप्रतिमतेजसः ॥ ००३ ॥

के चैनानन्ववर्तन्त प्राप्तान्व्यसनमुत्तमम् ।
किमाहाराः किमाचाराः क्व च वासो महात्मनाम् ॥ ००४ ॥

कथं द्वादश वर्षाणि वने तेषां महात्मनाम् ।
व्यतीयुर्ब्राह्मणश्रेष्ठ शूराणामरिघातिनाम् ॥ ००५ ॥

कथं च राजपुत्री सा प्रवरा सर्वयोषिताम् ।
पतिव्रता महाभागा सततं सत्यवादिनी ॥ ००६ ॥

वनवासमदुःखार्हा दारुणं प्रत्यपद्यत ॥ ००६ ॥

एतदाचक्ष्व मे सर्वं विस्तरेण तपोधन ।
श्रोतुमिच्छामि चरितं भूरिद्रविणतेजसाम् ॥ ००७ ॥

कथ्यमानं त्वया विप्र परं कौतूहलं हि मे ॥ ००७ ॥

वैशंपायन उवाच ॥

एवं द्यूतजिताः पार्थाः कोपिताश्च दुरात्मभिः ।
धार्तराष्ट्रैः सहामात्यैर्निर्ययुर्गजसाह्वयात् ॥ ००८ ॥

वर्धमानपुरद्वारेणाभिनिष्क्रम्य ते तदा ।
उदङ्मुखाः शस्त्रभृतः प्रययुः सह कृष्णया ॥ ००९ ॥

इन्द्रसेनादयश्चैनान्भृत्याः परिचतुर्दश ।
रथैरनुययुः शीघ्रैः स्त्रिय आदाय सर्वशः ॥ ०१० ॥

व्रजतस्तान्विदित्वा तु पौराः शोकाभिपीडिताः ।
गर्हयन्तोऽसकृद्भीष्मविदुरद्रोणगौतमान् ॥ ०११ ॥

ऊचुर्विगतसंत्रासाः समागम्य परस्परम् ॥ ०११ ॥

नेदमस्ति कुलं सर्वं न वयं न च नो गृहाः ।
यत्र दुर्योधनः पापः सौबलेयेन पालितः ॥ ०१२ ॥

कर्णदुःशासनाभ्यां च राज्यमेतच्चिकीर्षति ॥ ०१२ ॥

नो चेत्कुलं न चाचारो न धर्मोऽर्थः कुतः सुखम् ।
यत्र पापसहायोऽयं पापो राज्यं बुभूषते ॥ ०१३ ॥

दुर्योधनो गुरुद्वेषी त्यक्ताचारसुहृज्जनः ।
अर्थलुब्धोऽभिमानी च नीचः प्रकृतिनिर्घृणः ॥ ०१४ ॥

नेयमस्ति मही कृत्स्ना यत्र दुर्योधनो नृपः ।
साधु गच्छामहे सर्वे यत्र गच्छन्ति पाण्डवाः ॥ ०१५ ॥

सानुक्रोशा महात्मानो विजितेन्द्रियशत्रवः ।
ह्रीमन्तः कीर्तिमन्तश्च धर्माचारपरायणाः ॥ ०१६ ॥

एवमुक्त्वानुजग्मुस्तान्पाण्डवांस्ते समेत्य च ।
ऊचुः प्राञ्जलयः सर्वे तान्कुन्तीमाद्रिनन्दनान् ॥ ०१७ ॥

क्व गमिष्यथ भद्रं वस्त्यक्त्वास्मान्दुःखभागिनः ।
वयमप्यनुयास्यामो यत्र यूयं गमिष्यथ ॥ ०१८ ॥

अधर्मेण जिताञ्श्रुत्वा युष्मांस्त्यक्तघृणैः परैः ।
उद्विग्नाः स्म भृशं सर्वे नास्मान्हातुमिहार्हथ ॥ ०१९ ॥

भक्तानुरक्ताः सुहृदः सदा प्रियहिते रतान् ।
कुराजाधिष्ठिते राज्ये न विनश्येम सर्वशः ॥ ०२० ॥

श्रूयतां चाभिधास्यामो गुणदोषान्नरर्षभाः ।
शुभाशुभाधिवासेन संसर्गं कुरुते यथा ॥ ०२१ ॥

वस्त्रमापस्तिलान्भूमिं गन्धो वासयते यथा ।
पुष्पाणामधिवासेन तथा संसर्गजा गुणाः ॥ ०२२ ॥

मोहजालस्य योनिर्हि मूढैरेव समागमः ।

अहन्यहनि धर्मस्य योनिः साधुसमागमः ॥ ०२३ ॥

तस्मात्प्राज्ञैश्च वृद्धैश्च सुस्वभावैस्तपस्विभिः ।
सद्भिश्च सह संसर्गः कार्यः शमपरायणैः ॥ ०२४ ॥

येषां त्रीण्यवदातानि योनिर्विद्या च कर्म च ।
तान्सेवेत्तैः समास्या हि शास्त्रेभ्योऽपि गरीयसी ॥ ०२५ ॥

निरारम्भा ह्यपि वयं पुण्यशीलेषु साधुषु ।
पुण्यमेवाप्नुयामेह पापं पापोपसेवनात् ॥ ०२६ ॥

असतां दर्शनात्स्पर्शात्सञ्जल्पनसहासनात् ।
धर्माचाराः प्रहीयन्ते न च सिध्यन्ति मानवाः ॥ ०२७ ॥

बुद्धिश्च हीयते पुंसां नीचैः सह समागमात् ।
मध्यमैर्मध्यतां याति श्रेष्ठतां याति चोत्तमैः ॥ ०२८ ॥

ये गुणाः कीर्तिता लोके धर्मकामार्थसंभवाः ।
लोकाचारात्मसंभूता वेदोक्ताः शिष्टसंमताः ॥ ०२९ ॥

ते युष्मासु समस्ताश्च व्यस्ताश्चैवेह सद्गुणाः ।
इच्छामो गुणवन्मध्ये वस्तुं श्रेयोऽभिकाङ्क्षिणः ॥ ०३० ॥

युधिष्ठिर उवाच ॥

धन्या वयं यदस्माकं स्नेहकारुण्ययन्त्रिताः ।
असतोऽपि गुणानाहुर्ब्राह्मणप्रमुखाः प्रजाः ॥ ०३१ ॥

तदहं भ्रातृसहितः सर्वान्विज्ञापयामि वः ।
नान्यथा तद्धि कर्तव्यमस्मत्स्नेहानुकम्पया ॥ ०३२ ॥

भीष्मः पितामहो राजा विदुरो जननी च मे ।
सुहृज्जनश्च प्रायो मे नगरे नागसाह्वये ॥ ०३३ ॥

ते त्वस्मद्धितकामार्थं पालनीयाः प्रयत्नतः ।
युष्माभिः सहितैः सर्वैः शोकसंतापविह्वलाः ॥ ०३४ ॥

निवर्ततागता दूरं समागमनशापिताः ।
स्वजने न्यासभूते मे कार्या स्नेहान्विता मतिः ॥ ०३५ ॥

एतद्धि मम कार्याणां परमं हृदि संस्थितम् ।
सुकृतानेन मे तुष्टिः सत्कारश्च भविष्यति ॥ ०३६ ॥

वैशंपायन उवाच ॥

तथानुमन्त्रितास्तेन धर्मराजेन ताः प्रजाः ।
चक्रुरार्तस्वरं घोरं हा राजन्निति दुःखिताः ॥ ०३७ ॥

गुणान्पार्थस्य संस्मृत्य दुःखार्ताः परमातुराः ।
अकामाः संन्यवर्तन्त समागम्याथ पाण्डवान् ॥ ०३८ ॥

निवृत्तेषु तु पौरेषु रथानास्थाय पाण्डवाः ।
प्रजग्मुर्जाह्नवीतीरे प्रमाणाख्यं महावटम् ॥ ०३९ ॥

तं ते दिवसशेषेण वटं गत्वा तु पाण्डवाः ।
ऊषुस्तां रजनीं वीराः संस्पृश्य सलिलं शुचि ॥ ०४० ॥

उदकेनैव तां रात्रिमूषुस्ते दुःखकर्शिताः ॥ ०४० ॥

अनुजग्मुश्च तत्रैतान्स्नेहात्केचिद्द्विजातयः ।
साग्नयोऽनग्नयश्चैव सशिष्यगणबान्धवाः ॥ ०४१ ॥

स तैः परिवृतो राजा शुशुभे ब्रह्मवादिभिः ॥ ०४१ ॥

तेषां प्रादुष्कृताग्नीनां मुहूर्ते रम्यदारुणे ।
ब्रह्मघोषपुरस्कारः सञ्जल्पः समजायत ॥ ०४२ ॥

राजानं तु कुरुश्रेष्ठं ते हंसमधुरस्वराः ।
आश्वासयन्तो विप्राग्र्याः क्षपां सर्वां व्यनोदयन् ॥ ०४३ ॥

---

# अध्याय ००२

वैशंपायन उवाच ॥

प्रभातायां तु शर्वर्यां तेषामक्लिष्टकर्मणाम् ।
वनं यियासतां विप्रास्तस्थुर्भिक्षाभुजोऽग्रतः ॥ ००१ ॥

तानुवाच ततो राजा कुन्तीपुत्रो युधिष्ठिरः ॥ ००१ ॥

वयं हि हृतसर्वस्वा हृतराज्या हृतश्रियः ।
फलमूलामिषाहारा वनं यास्याम दुःखिताः ॥ ००२ ॥

वनं च दोषबहुलं बहुव्यालसरीसृपम् ।
परिक्लेशश्च वो मन्ये ध्रुवं तत्र भविष्यति ॥ ००३ ॥

ब्राह्मणानां परिक्लेशो दैवतान्यपि सादयेत् ।
किं पुनर्मामितो विप्रा निवर्तध्वं यथेष्टतः ॥ ००४ ॥

ब्राह्मणा ऊचुः ॥

गतिर्या भवतां राजंस्तां वयं गन्तुमुद्यताः ।
नार्हथास्मान्परित्यक्तुं भक्तान्सद्धर्मदर्शिनः ॥ ००५ ॥

अनुकम्पां हि भक्तेषु दैवतान्यपि कुर्वते ।
विशेषतो ब्राह्मणेषु सदाचारावलम्बिषु ॥ ००६ ॥

युधिष्ठिर उवाच ॥

ममापि परमा भक्तिर्ब्राह्मणेषु सदा द्विजाः ।
सहायविपरिभ्रंशस्त्वयं सादयतीव माम् ॥ ००७ ॥

आहरेयुर्हि मे येऽपि फलमूलमृगांस्तथा ।
त इमे शोकजैर्दुःखैर्भ्रातरो मे विमोहिताः ॥ ००८ ॥

द्रौपद्या विप्रकर्षेण राज्यापहरणेन च ।
दुःखान्वितानिमान्क्लेशैर्नाहं योक्तुमिहोत्सहे ॥ ००९ ॥

ब्राह्मणा ऊचुः ॥

अस्मत्पोषणजा चिन्ता मा भूत्ते हृदि पार्थिव ।
स्वयमाहृत्य वन्यानि अनुयास्यामहे वयम् ॥ ०१० ॥

अनुध्यानेन जप्येन विधास्यामः शिवं तव ।
कथाभिश्चानुकूलाभिः सह रंस्यामहे वने ॥ ०११ ॥

युधिष्ठिर उवाच ॥

एवमेतन्न संदेहो रमेयं ब्राह्मणैः सह ।
न्यूनभावात्तु पश्यामि प्रत्यादेशमिवात्मनः ॥ ०१२ ॥

कथं द्रक्ष्यामि वः सर्वान्स्वयमाहृतभोजनान् ।

मद्भक्त्या क्लिश्यतोऽनर्हान्धिक्पापान्धृतराष्ट्रजान्  ॥ ०१३  ॥

वैशंपायन उवाच  ॥

इत्युक्त्वा स नृपः शोचन्निषसाद महीतले ।
तमध्यात्मरतिर्विद्वाञ्शौनको नाम वै द्विजः  ॥ ०१४  ॥

योगे सांख्ये च कुशलो राजानमिदमब्रवीत्  ॥ ०१४  ॥

शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम्  ॥ ०१५  ॥

न हि ज्ञानविरुद्धेषु बहुदोषेषु कर्मसु ।
श्रेयोघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः  ॥ ०१६  ॥

अष्टाङ्गां बुद्धिमाहुर्यां सर्वाश्रेयोविघातिनीम् ।
श्रुतिस्मृतिसमायुक्तां सा राजंस्त्वय्यवस्थिता  ॥ ०१७  ॥

अर्थकृच्छ्रेषु दुर्गेषु व्यापत्सु स्वजनस्य च ।
शारीरमानसैर्दुःखैर्न सीदन्ति भवद्विधाः  ॥ ०१८  ॥

श्रूयतां चाभिधास्यामि जनकेन यथा पुरा ।
आत्मव्यवस्थानकरा गीताः श्लोका महात्मना  ॥ ०१९  ॥

मनोदेहसमुत्थाभ्यां दुःखाभ्यामर्दितं जगत् ।
तयोर्व्याससमासाभ्यां शमोपायमिमं शृणु  ॥ ०२०  ॥

व्याधेरनिष्टसंस्पर्शाच्छ्रमादिष्टविवर्जनात् ।
दुःखं चतुर्भिः शारीरं कारणैः संप्रवर्तते  ॥ ०२१  ॥

तदाशुप्रतिकाराच्च सततं चाविचिन्तनात् ।

आधिव्याधिप्रशमनं क्रियायोगद्वयेन तु ॥ ०२२ ॥

मतिमन्तो ह्यतो वैद्याः शमं प्रागेव कुर्वते ।
मानसस्य प्रियाख्यानैः संभोगोपनयैर्नृणाम् ॥ ०२३ ॥

मानसेन हि दुःखेन शरीरमुपतप्यते ।
अयःपिण्डेन तप्तेन कुम्भसंस्थमिवोदकम् ॥ ०२४ ॥

मानसं शमयेत्तस्माज्ज्ञानेनाग्निमिवाम्बुना ।
प्रशान्ते मानसे दुःखे शारीरमुपशाम्यति ॥ ०२५ ॥

मनसो दुःखमूलं तु स्नेह इत्युपलभ्यते ।
स्नेहात्तु सज्जते जन्तुर्दुःखयोगमुपैति च ॥ ०२६ ॥

स्नेहमूलानि दुःखानि स्नेहजानि भयानि च ।
शोकहर्षौ तथायासः सर्वं स्नेहात्प्रवर्तते ॥ ०२७ ॥

स्नेहात्करणरागश्च प्रजज्ञे वैषयस्तथा ।
अश्रेयस्कावुभावेतौ पूर्वस्तत्र गुरुः स्मृतः ॥ ०२८ ॥

कोटराग्निर्यथाशेषं समूलं पादपं दहेत् ।
धर्मार्थिनं तथाल्पोऽपि रागदोषो विनाशयेत् ॥ ०२९ ॥

विप्रयोगे न तु त्यागी दोषदर्शी समागमात् ।
विरागं भजते जन्तुर्निर्वैरो निष्परिग्रहः ॥ ०३० ॥

तस्मात्स्नेहं स्वपक्षेभ्यो मित्रेभ्यो धनसञ्चयात् ।
स्वशरीरसमुत्थं तु ज्ञानेन विनिवर्तयेत् ॥ ०३१ ॥

ज्ञानान्वितेषु मुख्येषु शास्त्रज्ञेषु कृतात्मसु ।
न तेषु सज्जते स्नेहः पद्मपत्रेष्विवोदकम् ॥ ०३२ ॥

रागाभिभूतः पुरुषः कामेन परिकृष्यते ।
इच्छा सञ्जायते तस्य ततस्तृष्णा प्रवर्तते ॥ ०३३ ॥

तृष्णा हि सर्वपापिष्ठा नित्योद्वेगकरी नृणाम् ।
अधर्मबहुला चैव घोरा पापानुबन्धिनी ॥ ०३४ ॥

या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् ॥ ०३५ ॥

अनाद्यन्ता तु सा तृष्णा अन्तर्देहगता नृणाम् ।
विनाशयति संभूता अयोनिज इवानलः ॥ ०३६ ॥

यथैधः स्वसमुत्थेन वह्निना नाशमृच्छति ।
तथाकृतात्मा लोभेन सहजेन विनश्यति ॥ ०३७ ॥

राजतः सलिलादग्नेश्चोरतः स्वजनादपि ।
भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव ॥ ०३८ ॥

यथा ह्यामिषमाकाशे पक्षिभिः श्वापदैर्भुवि ।
भक्ष्यते सलिले मत्स्यैस्तथा सर्वेण वित्तवान् ॥ ०३९ ॥

अर्थ एव हि केषाञ्चिदनर्थो भविता नृणाम् ।
अर्थश्रेयसि चासक्तो न श्रेयो विन्दते नरः ॥ ०४० ॥

तस्मादर्थागमाः सर्वे मनोमोहविवर्धनाः ॥ ०४० ॥

कार्पण्यं दर्पमानौ च भयमुद्वेग एव च ।
अर्थजानि विदुः प्राज्ञा दुःखान्येतानि देहिनाम् ॥ ०४१ ॥

अर्थस्योपार्जने दुःखं पालने च क्षये तथा ।

नाशे दुःखं व्यये दुःखं घ्नन्ति चैवार्थकारणात्  ॥ ०४२  ॥

अर्था दुःखं परित्यक्तुं पालिताश्चापि तेऽसुखाः ।
दुःखेन चाधिगम्यन्ते तेषां नाशं न चिन्तयेत्  ॥ ०४३  ॥

असंतोषपरा मूढाः संतोषं यान्ति पण्डिताः ।
अन्तो नास्ति पिपासायाः संतोषः परमं सुखम्  ॥ ०४४  ॥

तस्मात्संतोषमेवेह धनं पश्यन्ति पण्डिताः ।
अनित्यं यौवनं रूपं जीवितं द्रव्यसञ्चयः  ॥ ०४५  ॥

ऐश्वर्यं प्रियसंवासो गृध्येदेषु न पण्डितः  ॥ ०४५  ॥

त्यजेत सञ्चयांस्तस्मात्तज्जं क्लेशं सहेत कः ।
न हि सञ्चयवान्कश्चिद्दृश्यते निरुपद्रवः  ॥ ०४६  ॥

अतश्च धर्मिभिः पुम्भिरनीहार्थः प्रशस्यते ।
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्  ॥ ०४७  ॥

युधिष्ठिरैवमर्थेषु न स्पृहां कर्तुमर्हसि ।
धर्मेण यदि ते कार्यं विमुक्तेच्छो भवार्थतः  ॥ ०४८  ॥

युधिष्ठिर उवाच  ॥

नार्थोपभोगलिप्सार्थमियमर्थेप्सुता मम ।
भरणार्थं तु विप्राणां ब्रह्मन्काङ्क्षे न लोभतः  ॥ ०४९  ॥

कथं ह्यस्मद्विधो ब्रह्मन्वर्तमानो गृहाश्रमे ।
भरणं पालनं चापि न कुर्यादनुयायिनाम्  ॥ ०५०  ॥

संविभागो हि भूतानां सर्वेषामेव शिष्यते ।

तथैवापचमानेभ्यः प्रदेयं गृहमेधिना ॥ ०५१ ॥

तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता ।
सतामेतानि गेहेषु नोच्छिद्यन्ते कदाचन ॥ ०५२ ॥

देयमार्तस्य शयनं स्थितश्रान्तस्य चासनम् ।
तृषितस्य च पानीयं क्षुधितस्य च भोजनम् ॥ ०५३ ॥

चक्षुर्दद्यान्मनो दद्याद्वाचं दद्याच्च सूनृताम् ।
प्रत्युद्गम्याभिगमनं कुर्यान्न्यायेन चार्चनम् ॥ ०५४ ॥

अग्निहोत्रमनड्वांश्च ज्ञातयोऽतिथिबान्धवाः ।
पुत्रदारभृताश्चैव निर्दहेयुरपूजिताः ॥ ०५५ ॥

नात्मार्थं पाचयेदन्नं न वृथा घातयेत्पशून् ।
न च तत्स्वयमश्नीयाद्विधिवद्यन्न निर्वपेत् ॥ ०५६ ॥

श्वभ्यश्च श्वपचेभ्यश्च वयोभ्यश्चावपेद्भुवि ।
वैश्वदेवं हि नामैतत्सायंप्रातर्विधीयते ॥ ०५७ ॥

विघसाशी भवेत्तस्मान्नित्यं चामृतभोजनः ।
विघसं भृत्यशेषं तु यज्ञशेषं तथामृतम् ॥ ०५८ ॥

एतां यो वर्तते वृत्तिं वर्तमानो गृहाश्रमे ।
तस्य धर्मं परं प्राहुः कथं वा विप्र मन्यसे ॥ ०५९ ॥

शौनक उवाच ॥

अहो बत महत्कष्टं विपरीतमिदं जगत् ।
येनापत्रपते साधुरसाधुस्तेन तुष्यति ॥ ०६० ॥

शिश्नोदरकृतेऽप्राज्ञः करोति विघसं बहु ।
मोहरागसमाक्रान्त इन्द्रियार्थवशानुगः ॥ ०६१ ॥

ह्रियते बुध्यमानोऽपि नरो हारिभिरिन्द्रियैः ।
विमूढसञ्ज्ञो दुष्टाश्वैरुद्भ्रान्तैरिव सारथिः ॥ ०६२ ॥

षडिन्द्रियाणि विषयं समागच्छन्ति वै यदा ।
तदा प्रादुर्भवत्येषां पूर्वसङ्कल्पजं मनः ॥ ०६३ ॥

मनो यस्येन्द्रियग्रामविषयं प्रति चोदितम् ।
तस्यौत्सुक्यं संभवति प्रवृत्तिश्चोपजायते ॥ ०६४ ॥

ततः सङ्कल्पवीर्येण कामेन विषयेषुभिः ।
विद्धः पतति लोभाग्नौ ज्योतिर्लोभात्पतङ्गवत् ॥ ०६५ ॥

ततो विहारैराहारैर्मोहितश्च विशां पते ।
महामोहमुखे मग्नो नात्मानमवबुध्यते ॥ ०६६ ॥

एवं पतति संसारे तासु तास्विह योनिषु ।
अविद्याकर्मतृष्णाभिर्भ्राम्यमाणोऽथ चक्रवत् ॥ ०६७ ॥

ब्रह्मादिषु तृणान्तेषु भूतेषु परिवर्तते ।
जले भुवि तथाकाशे जायमानः पुनः पुनः ॥ ०६८ ॥

अबुधानां गतिस्त्वेषा बुधानामपि मे शृणु ।
ये धर्मे श्रेयसि रता विमोक्षरतयो जनाः ॥ ०६९ ॥

यदिदं वेदवचनं कुरु कर्म त्यजेति च ।
तस्माद्धर्मानिमान्सर्वान्नाभिमानात्समाचरेत् ॥ ०७० ॥

इज्याध्ययनदानानि तपः सत्यं क्षमा दमः ।

अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥ ०७१ ॥

तत्र पूर्वश्चतुर्वर्गः पितृयानपथे स्थितः ।
कर्तव्यमिति यत्कार्यं नाभिमानात्समाचरेत् ॥ ०७२ ॥

उत्तरो देवयानस्तु सद्भिराचरितः सदा ।
अष्टाङ्गेनैव मार्गेण विशुद्धात्मा समाचरेत् ॥ ०७३ ॥

सम्यक्सङ्कल्पसंबन्धात्सम्यक्चेन्द्रियनिग्रहात् ।
सम्यग्व्रतविशेषाच्च सम्यक्च गुरुसेवनात् ॥ ०७४ ॥

सम्यगाहारयोगाच्च सम्यक्चाध्ययनागमात् ।
सम्यक्कर्मोपसंन्यासात्सम्यक्चित्तनिरोधनात् ॥ ०७५ ॥

एवं कर्माणि कुर्वन्ति संसारविजिगीषवः ॥ ०७५ ॥

रागद्वेषविनिर्मुक्ता ऐश्वर्यं देवता गताः ।
रुद्राः साध्यास्तथादित्या वसवोऽथाश्विनावपि ॥ ०७६ ॥

योगैश्वर्येण संयुक्ता धारयन्ति प्रजा इमाः ॥ ०७६ ॥

तथा त्वमपि कौन्तेय शममास्थाय पुष्कलम् ।
तपसा सिद्धिमन्विच्छ योगसिद्धिं च भारत ॥ ०७७ ॥

पितृमातृमयी सिद्धिः प्राप्ता कर्ममयी च ते ।
तपसा सिद्धिमन्विच्छ द्विजानां भरणाय वै ॥ ०७८ ॥

सिद्धा हि यद्यदिच्छन्ति कुर्वते तदनुग्रहात् ।
तस्मात्तपः समास्थाय कुरुष्वात्ममनोरथम् ॥ ०७९ ॥

# अध्याय ००३

वैशंपायन उवाच ॥

शौनकेनैवमुक्तस्तु कुन्तीपुत्रो युधिष्ठिरः ।
पुरोहितमुपागम्य भ्रातृमध्येऽब्रवीदिदम् ॥ ००१ ॥

प्रस्थितं मानुयान्तीमे ब्राह्मणा वेदपारगाः ।
न चास्मि पालने शक्तो बहुदुःखसमन्वितः ॥ ००२ ॥

परित्यक्तुं न शक्नोमि दानशक्तिश्च नास्ति मे ।
कथमत्र मया कार्यं भगवांस्तद्ब्रवीतु मे ॥ ००३ ॥

मुहूर्तमिव स ध्यात्वा धर्मेणान्विष्य तां गतिम् ।
युधिष्ठिरमुवाचेदं धौम्यो धर्मभृतां वरः ॥ ००४ ॥

पुरा सृष्टानि भूतानि पीड्यन्ते क्षुधया भृशम् ।
ततोऽनुकम्पया तेषां सविता स्वपिता इव ॥ ००५ ॥

गत्वोत्तरायणं तेजोरसानुद्धृत्य रश्मिभिः ।
दक्षिणायनमावृत्तो महीं निविशते रविः ॥ ००६ ॥

क्षेत्रभूते ततस्तस्मिन्नोषधीरोषधीपतिः ।
दिवस्तेजः समुद्धृत्य जनयामास वारिणा ॥ ००७ ॥

निषिक्तश्चन्द्रतेजोभिः सूयते भूगतो रविः ।
ओषध्यः षड्रसा मेध्यास्तदन्नं प्राणिनां भुवि ॥ ००८ ॥

एवं भानुमयं ह्यन्नं भूतानां प्राणधारणम् ।

पितैष सर्वभूतानां तस्मात्त्वं शरणं व्रज ॥ ००९ ॥

राजानो हि महात्मानो योनिकर्मविशोधिताः ।
उद्धरन्ति प्रजाः सर्वास्तप आस्थाय पुष्कलम् ॥ ०१० ॥

भीमेन कार्तवीर्येण वैन्येन नहुषेण च ।
तपोयोगसमाधिस्थैरुद्धृता ह्यापदः प्रजाः ॥ ०११ ॥

तथा त्वमपि धर्मात्मन्कर्मणा च विशोधितः ।
तप आस्थाय धर्मेण द्विजातीन्भर भारत ॥ ०१२ ॥

एवमुक्तस्तु धौम्येन तत्कालसदृशं वचः ।
धर्मराजो विशुद्धात्मा तप आतिष्ठदुत्तमम् ॥ ०१३ ॥

पुष्पोपहारैर्बलिभिरर्चयित्वा दिवाकरम् ।
योगमास्थाय धर्मात्मा वायुभक्षो जितेन्द्रियः ॥ ०१४ ॥

गाङ्गेयं वार्युपस्पृष्य प्राणायामेन तस्थिवान् ॥ ०१४ ॥

जनमेजय उवाच ॥

कथं कुरूणामृषभः स तु राजा युधिष्ठिरः ।
विप्रार्थमाराधितवान्सूर्यमद्भुतविक्रमम् ॥ ०१५ ॥

वैशंपायन उवाच ॥

शृणुष्वावहितो राजञ्शुचिर्भूत्वा समाहितः ।
क्षणं च कुरु राजेन्द्र सर्वं वक्ष्याम्यशेषतः ॥ ०१६ ॥

धौम्येन तु यथ प्रोक्तं पार्थाय सुमहात्मने ।
नाम्नामष्टशतं पुण्यं तच्छृणुष्व महामते ॥ ०१७ ॥

सूर्योऽर्यमा भगस्त्वष्टा पूषार्कः सविता रविः ।
गभस्तिमानजः कालो मृत्युर्धाता प्रभाकरः ॥ ०१८ ॥

पृथिव्यापश्च तेजश्च खं वायुश्च परायणम् ।
सोमो बृहस्पतिः शुक्रो बुधोऽङ्गारक एव च ॥ ०१९ ॥

इन्द्रो विवस्वान्दीप्तांशुः शुचिः शौरिः शनैश्चरः ।
ब्रह्मा विष्णुश्च रुद्रश्च स्कन्दो वैश्रवणो यमः ॥ ०२० ॥

वैद्युतो जाठरश्चाग्निरैन्धनस्तेजसां पतिः ।
धर्मध्वजो वेदकर्ता वेदाङ्गो वेदवाहनः ॥ ०२१ ॥

कृतं त्रेता द्वापरश्च कलिः सर्वामराश्रयः ।
कला काष्ठा मुहूर्ताश्च पक्षा मासा ऋतुस्तथा ॥ ०२२ ॥

संवत्सरकरोऽश्वत्थः कालचक्रो विभावसुः ।
पुरुषः शाश्वतो योगी व्यक्ताव्यक्तः सनातनः ॥ ०२३ ॥

लोकाध्यक्षः प्रजाध्यक्षो विश्वकर्मा तमोनुदः ।
वरुणः सागरोंऽशुश्च जीमूतो जीवनोऽरिहा ॥ ०२४ ॥

भूताश्रयो भूतपतिः सर्वभूतनिषेवितः ।
मणिः सुवर्णो भूतादिः कामदः सर्वतोमुखः ॥ ०२५ ॥

जयो विशालो वरदः शीघ्रगः प्राणधारणः ।
धन्वन्तरिर्धूमकेतुरादिदेवोऽदितेः सुतः ॥ ०२६ ॥

द्वादशात्मारविन्दाक्षः पिता माता पितामहः ।
स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपम् ॥ ०२७ ॥

देहकर्ता प्रशान्तात्मा विश्वात्मा विश्वतोमुखः ।
चराचरात्मा सूक्ष्मात्मा मैत्रेण वपुषान्वितः ॥ ०२८ ॥

एतद्वै कीर्तनीयस्य सूर्यस्यैव महात्मनः ।
नाम्नामष्टशतं पुण्यं शक्रेणोक्तं महात्मना ॥ ०२९ ॥

शक्राच्च नारदः प्राप्तो धौम्यश्च तदनन्तरम् ।
धौम्याद्युधिष्ठिरः प्राप्य सर्वान्कामानवाप्तवान् ॥ ०३० ॥

सुरपितृगणयक्षसेवितं ; ह्यसुरनिशाचरसिद्धवन्दितम् ।
वरकनकहुताशनप्रभं ; त्वमपि मनस्यभिधेहि भास्करम् ॥ ०३१ ॥

सूर्योदये यस्तु समाहितः पठे ;त्स पुत्रलाभं धनरत्नसञ्चयान् ।
लभेत जातिस्मरतां सदा नरः ; स्मृतिं च मेधां च स विन्दते पराम् ॥ ०३२ ॥

इमं स्तवं देववरस्य यो नरः ; प्रकीर्तयेच्छुचिसुमनाः समाहितः ।
स मुच्यते शोकदवाग्निसागरा ;ल्लभेत कामान्मनसा यथेप्सितान् ॥ ०३३ ॥

---

# अध्याय ००४

वैशंपायन उवाच ॥

ततो दिवाकरः प्रीतो दर्शयामास पाण्डवम् ।
दीप्यमानः स्ववपुषा ज्वलन्निव हुताशनः ॥ ००१ ॥

यत्तेऽभिलषितं राजन्सर्वमेतदवाप्स्यसि ।
अहमन्नं प्रदास्यामि सप्त पञ्च च ते समाः ॥ ००२ ॥

फलमूलामिषं शाकं संस्कृतं यन्महानसे ।
चतुर्विधं तदन्नाद्यमक्षय्यं ते भविष्यति ॥ ००३ ॥

धनं च विविधं तुभ्यमित्युक्त्वान्तरधीयत ॥ ००३ ॥

लब्ध्वा वरं तु कौन्तेयो जलादुत्तीर्य धर्मवित् ।
जग्राह पादौ धौम्यस्य भ्रातृंश्चास्वजताच्युतः ॥ ००४ ॥

द्रौपद्या सह सङ्गम्य पश्यमानोऽभ्ययात्प्रभुः ।
महानसे तदान्नं तु साधयामास पाण्डवः ॥ ००५ ॥

संस्कृतं प्रसवं याति वन्यमन्नं चतुर्विधम् ।
अक्षय्यं वर्धते चान्नं तेन भोजयते द्विजान् ॥ ००६ ॥

भुक्तवत्सु च विप्रेषु भोजयित्वानुजानपि ।
शेषं विघससञ्ज्ञं तु पश्चाद्भुङ्क्ते युधिष्ठिरः ॥ ००७ ॥

युधिष्ठिरं भोजयित्वा शेषमश्नाति पार्षती ॥ ००७ ॥

एवं दिवाकरात्प्राप्य दिवाकरसमद्युतिः ।
कामान्मनोऽभिलषितान्ब्राह्मणेभ्यो ददौ प्रभुः ॥ ००८ ॥

पुरोहितपुरोगाश्च तिथिनक्षत्रपर्वसु ।
यज्ञियार्थाः प्रवर्तन्ते विधिमन्त्रप्रमाणतः ॥ ००९ ॥

ततः कृतस्वस्त्ययना धौम्येन सह पाण्डवाः ।
द्विजसंघैः परिवृताः प्रययुः काम्यकं वनम् ॥ ०१० ॥

# अध्याय ००५

वैशंपायन उवाच ॥

वनं प्रविष्टेष्वथ पाण्डवेषु ; प्रज्ञाचक्षुस्तप्यमानोऽम्बिकेयः ।
धर्मात्मानं विदुरमगाधबुद्धिं ; सुखासीनो वाक्यमुवाच राजा ॥ ००१ ॥

प्रज्ञा च ते भार्गवस्येव शुद्धा ; धर्मं च त्वं परमं वेत्थ सूक्ष्मम् ।
समश्च त्वं संमतः कौरवाणां ; पथ्यं चैषां मम चैव ब्रवीहि ॥ ००२ ॥

एवं गते विदुर यदद्य कार्यं ; पौराश्चेमे कथमस्मान्भजेरन् ।
ते चाप्यस्मान्नोद्धरेयुः समूला ;न्न कामये तांश्च विनश्यमानान् ॥ ००३ ॥

विदुर उवाच ॥

त्रिवर्गोऽयं धर्ममूलो नरेन्द्र ; राज्यं चेदं धर्ममूलं वदन्ति ।
धर्मे राजन्वर्तमानः स्वशक्त्या ; पुत्रान्सर्वान्पाहि कुन्तीसुतांश्च ॥ ००४ ॥

स वै धर्मो विप्रलुप्तः सभायां ; पापात्मभिः सौबलेयप्रधानैः ।
आहूय कुन्तीसुतमक्षवत्यां ; पराजैषीत्सत्यसंधं सुतस्ते ॥ ००५ ॥

एतस्य ते दुष्प्रणीतस्य राज ;ञ्शेषस्याहं परिपश्याम्युपायम् ।
यथा पुत्रस्तव कौरव्य पापा ;न्मुक्तो लोके प्रतितिष्ठेत साधु ॥ ००६ ॥

तद्वै सर्वं पाण्डुपुत्रा लभन्तां ; यत्तद्राजन्नतिसृष्टं त्वयासीत् ।
एष धर्मः परमो यत्स्वकेन ; राजा तुष्येन्न परस्वेषु गृध्येत् ॥ ००७ ॥

एतत्कार्यं तव सर्वप्रधानं ; तेषां तुष्टिः शकुनेश्चावमानः ।
एवं शेषं यदि पुत्रेषु ते स्या ;देतद्राजंस्त्वरमाणः कुरुष्व ॥ ००८ ॥

अथैतदेवं न करोषि राज ;न्ध्रुवं कुरूणां भविता विनाशः ।

न हि क्रुद्धो भीमसेनोऽर्जुनो वा ; शेषं कुर्याच्छात्रवाणामनीके ॥ ००९ ॥

येषां योद्धा सव्यसाची कृतास्त्रो ; धनुर्येषां गाण्डिवं लोकसारम् ।
येषां भीमो बाहुशाली च योद्धा ; तेषां लोके किं नु न प्राप्यमस्ति ॥ ०१० ॥

उक्तं पूर्वं जातमात्रे सुते ते ; मया यत्ते हितमासीत्तदानीम् ।
पुत्रं त्यजेममहितं कुलस्ये ;त्येतद्राजन्न च तत्त्वं चकर्थ ॥ ०११ ॥

इदानीं ते हितमुक्तं न चेत्त्वं ; कर्तासि राजन्परितप्तासि पश्चात् ॥ ०११ ॥

यद्येतदेवमनुमन्ता सुतस्ते ; संप्रीयमाणः पाण्डवैरेकराज्यम् ।
तापो न ते वै भविता प्रीतियोगा ;त्त्वं चेन्न गृह्णासि सुतं सहायैः ॥ ०१२ ॥

अथापरो भवति हि तं निगृह्य ; पाण्डोः पुत्रं प्रकुरुष्वाधिपत्ये ॥ ०१२ ॥

अजातशत्रुर्हि विमुक्तरागो ; धर्मेणेमां पृथिवीं शास्तु राजन् ।
ततो राजन्पार्थिवाः सर्व एव ; वैश्या इवास्मानुपतिष्ठन्तु सद्यः ॥ ०१३ ॥

दुर्योधनः शकुनिः सूतपुत्रः ; प्रीत्या राजन्पाण्डुपुत्रान्भजन्ताम् ।
दुःशासनो याचतु भीमसेनं ; सभामध्ये द्रुपदस्यात्मजां च ॥ ०१४ ॥

युधिष्ठिरं त्वं परिसान्त्वयस्व ; राज्ये चैनं स्थापयस्वाभिपूज्य ।
त्वया पृष्टः किमहमन्यद्वदेय ;मेतत्कृत्वा कृतकृत्योऽसि राजन् ॥ ०१५ ॥

धृतराष्ट्र उवाच ॥

एतद्वाक्यं विदुर यत्ते सभाया ;मिह प्रोक्तं पाण्डवान्प्राप्य मां च ।
हितं तेषामहितं मामकाना ;मेतत्सर्वं मम नोपैति चेतः ॥ ०१६ ॥

इदं त्विदानीं कुत एव निश्चितं ; तेषामर्थे पाण्डवानां यदात्थ ।
तेनाद्य मन्ये नासि हितो ममेति ; कथं हि पुत्रं पाण्डवार्थे त्यजेयम् ॥ ०१७ ॥

असंशयं तेऽपि ममैव पुत्रा ; दुर्योधनस्तु मम देहात्प्रसूतः ।
स्वं वै देहं परहेतोस्त्यजेति ; को नु ब्रूयात्समतामन्ववेक्षन् ॥ ०१८ ॥

स मा जिह्मं विदुर सर्वं ब्रवीषि ; मानं च तेऽहमधिकं धारयामि ।
यथेच्छकं गच्छ वा तिष्ठ वा त्वं ; सुसान्त्व्यमानाप्यसती स्त्री जहाति ॥ ०१९ ॥

वैशंपायन उवाच ॥

एतावदुक्त्वा धृतराष्ट्रोऽन्वपद्य ;दन्तर्वेश्म सहसोत्थाय राजन् ।
नेदमस्तीत्यथ विदुरो भाषमाणः ; संप्राद्रवद्यत्र पार्था बभूवुः ॥ ०२० ॥

---

# अध्याय ००६

वैशंपायन उवाच ॥

पाण्डवास्तु वने वासमुद्दिश्य भरतर्षभाः ।
प्रययुर्जाह्नवीकूलात्कुरुक्षेत्रं सहानुगाः ॥ ००१ ॥

सरस्वतीदृषद्वत्यौ यमुनां च निषेव्य ते ।
ययुर्वनेनैव वनं सततं पश्चिमां दिशम् ॥ ००२ ॥

ततः सरस्वतीकूले समेषु मरुधन्वसु ।
काम्यकं नाम ददृशुर्वनं मुनिजनप्रियम् ॥ ००३ ॥

तत्र ते न्यवसन्वीरा वने बहुमृगद्विजे ।

अन्वास्यमाना मुनिभिः सान्त्व्यमानाश्च भारत  ॥ ००४  ॥

विदुरस्त्वपि पाण्डूनां तदा दर्शनलालसः ।
जगामैकरथेनैव काम्यकं वनमृद्धिमत्  ॥ ००५  ॥

ततो यात्वा विदुरः काननं त ;च्छीघ्रैरश्वैर्वाहिना स्यन्दनेन ।
ददर्शासीनं धर्मराजं विविक्ते ; सार्धं द्रौपद्या भ्रातृभिर्ब्राह्मणैश्च  ॥ ००६  ॥

ततोऽपश्यद्विदुरं तूर्णमारा ;दभ्यायान्तं सत्यसंधः स राजा ।
अथाब्रवीद्भ्रातरं भीमसेनं ; किं नु क्षत्ता वक्ष्यति नः समेत्य  ॥ ००७  ॥

कच्चिन्नायं वचनात्सौबलस्य ; समाह्वाता देवनायोपयाति ।
कच्चित्क्षुद्रः शकुनिर्नायुधानि ; जेष्यत्यस्मान्पुनरेवाक्षवत्याम्  ॥ ००८  ॥

समाहूतः केनचिदाद्रवेति ; नाहं शक्तो भीमसेनापयातुम् ।
गाण्डीवे वा संशयिते कथं चि ;द्राज्यप्राप्तिः संशयिता भवेन्नः  ॥ ००९  ॥

तत उत्थाय विदुरं पाण्डवेयाः ; प्रत्यगृह्णन्नृपते सर्व एव ।
तैः सत्कृतः स च तानाजमीढो ; यथोचितं पाण्डुपुत्रान्समेयात्  ॥ ०१०  ॥

समाश्वस्तं विदुरं ते नरर्षभा ;स्ततोऽपृच्छन्नागमनाय हेतुम् ।
स चापि तेभ्यो विस्तरतः शशंस ; यथावृत्तो धृतराष्ट्रोऽऽम्बिकेयः  ॥ ०११  ॥

विदुर उवाच  ॥

अवोचन्मां धृतराष्ट्रोऽनुगुप्त ;मजातशत्रो परिगृह्याभिपूज्य ।
एवं गते समतामभ्युपेत्य ; पथ्यं तेषां मम चैव ब्रवीहि  ॥ ०१२  ॥

मयाप्युक्तं यत्क्षमं कौरवाणां ; हितं पथ्यं धृतराष्ट्रस्य चैव ।
तद्वै पथ्यं तन्मनो नाभ्युपैति ; ततश्चाहं क्षममन्यन्न मन्ये  ॥ ०१३  ॥

परं श्रेयः पाण्डवेया मयोक्तं ; न मे तच्च श्रुतवानाम्बिकेयः ।
यथातुरस्येव हि पथ्यमन्नं ; न रोचते स्मास्य तदुच्यमानम् ॥ ०१४ ॥

न श्रेयसे नीयतेऽजातशत्रो ; स्त्री श्रोत्रियस्येव गृहे प्रदुष्टा ।
ब्रुवन्न रुच्यै भरतर्षभस्य ; पतिः कुमार्या इव षष्टिवर्षः ॥ ०१५ ॥

ध्रुवं विनाशो नृप कौरवाणां ; न वै श्रेयो धृतराष्ट्रः परैति ।
यथा पर्णे पुष्करस्येव सिक्तं ; जलं न तिष्ठेत्पथ्यमुक्तं तथास्मिन् ॥ ०१६ ॥

ततः क्रुद्धो धृतराष्ट्रोऽब्रवीन्मां ; यत्र श्रद्धा भारत तत्र याहि ।
नाहं भूयः कामये त्वां सहायं ; महीमिमां पालयितुं पुरं वा ॥ ०१७ ॥

सोऽहं त्यक्तो धृतराष्ट्रेण राजं ;स्त्वां शासितुमुपयातस्त्वरावान् ।
तद्वै सर्वं यन्मयोक्तं सभायां ; तद्धार्यतां यत्प्रवक्ष्यामि भूयः ॥ ०१८ ॥

क्लेशैस्तीव्रैर्युज्यमानः सपत्नैः ; क्षमां कुर्वन्कालमुपासते यः ।
सं वर्धयन्स्तोकमिवाग्निमात्मवा ;न्स वै भुङ्क्ते पृथिवीमेक एव ॥ ०१९ ॥

यस्याविभक्तं वसु राजन्सहायै ;स्तस्य दुःखेऽप्यंशभाजः सहायाः ।
सहायानामेष सङ्ग्रहणेऽभ्युपायः ; सहायाप्तौ पृथिवीप्राप्तिमाहुः ॥ ०२० ॥

सत्यं श्रेष्ठं पाण्डव निष्प्रलापं ; तुल्यं चान्नं सह भोज्यं सहायैः ।
आत्मा चैषामग्रतो नातिवर्ते ;देवंवृत्तिर्वर्धते भूमिपालः ॥ ०२१ ॥

युधिष्ठिर उवाच ॥

एवं करिष्यामि यथा ब्रवीषि ; परां बुद्धिमुपगम्याप्रमत्तः ।
यच्चाप्यन्यद्देशकालोपपन्नं ; तद्वै वाच्यं तत्करिष्यामि कृत्स्नम् ॥ ०२२ ॥

# अध्याय ००७

वैशंपायन उवाच ॥

गते तु विदुरे राजन्नाश्रमं पाण्डवान्प्रति ।
धृतराष्ट्रो महाप्राज्ञः पर्यतप्यत भारत ॥ ००१ ॥

स सभाद्वारमागम्य विदुरस्मारमोहितः ।
समक्षं पार्थिवेन्द्राणां पपाताविष्टचेतनः ॥ ००२ ॥

स तु लब्ध्वा पुनः सञ्ज्ञां समुत्थाय महीतलात् ।
समीपोपस्थितं राजा सञ्जयं वाक्यमब्रवीत् ॥ ००३ ॥

भ्राता मम सुहृच्चैव साक्षाद्धर्म इवापरः ।
तस्य स्मृत्वाद्य सुभृशं हृदयं दीर्यतीव मे ॥ ००४ ॥

तमानयस्व धर्मज्ञं मम भ्रातरमाशु वै ।
इति ब्रुवन्स नृपतिः करुणं पर्यदेवयत् ॥ ००५ ॥

पश्चात्तापाभिसंतप्तो विदुरस्मारकर्शितः ।
भ्रातृस्नेहादिदं राजन्सञ्जयं वाक्यमब्रवीत् ॥ ००६ ॥

गच्छ सञ्जय जानीहि भ्रातरं विदुरं मम ।
यदि जीवति रोषेण मया पापेन निर्धुतः ॥ ००७ ॥

न हि तेन मम भ्रात्रा सुसूक्ष्ममपि किञ्चन ।
व्यलीकं कृतपूर्वं मे प्राज्ञेनामितबुद्धिना ॥ ००८ ॥

स व्यलीकं कथं प्राप्तो मत्तः परमबुद्धिमान् ।
न जह्याज्जीवितं प्राज्ञस्तं गच्छानय सञ्जय ॥ ००९ ॥

तस्य तद्वचनं श्रुत्वा राज्ञस्तमनुमान्य च ।
सञ्जयो बाढमित्युक्त्वा प्राद्रवत्काम्यकं वनम्  ॥ ०१०  ॥

सोऽचिरेण समासाद्य तद्वनं यत्र पाण्डवाः ।
रौरवाजिनसंवीतं ददर्शाथ युधिष्ठिरम्  ॥ ०११  ॥

विदुरेण सहासीनं ब्राह्मणैश्च सहस्रशः ।
भ्रातृभिश्चाभिसङ्गुप्तं देवैरिव शतक्रतुम्  ॥ ०१२  ॥

युधिष्ठिरमथाभ्येत्य पूजयामास सञ्जयः ।
भीमार्जुनयमांश्चापि तदर्हं प्रत्यपद्यत  ॥ ०१३  ॥

राज्ञा पृष्टः स कुशलं सुखासीनश्च सञ्जयः ।
शशंसागमने हेतुमिदं चैवाब्रवीद्वचः  ॥ ०१४  ॥

राजा स्मरति ते क्षत्तर्धृतराष्ट्रोऽम्बिकासुतः ।
तं पश्य गत्वा त्वं क्षिप्रं सञ्जीवय च पार्थिवम्  ॥ ०१५  ॥

सोऽनुमान्य नरश्रेष्ठान्पाण्डवान्कुरुनन्दनान् ।
नियोगाद्राजसिंहस्य गन्तुमर्हसि मानद  ॥ ०१६  ॥

एवमुक्तस्तु विदुरो धीमान्स्वजनवत्सलः ।
युधिष्ठिरस्यानुमते पुनरायाद्गजाह्वयम्  ॥ ०१७  ॥

तमब्रवीन्महाप्राज्ञं धृतराष्ट्रः प्रतापवान् ।
दिष्ट्या प्राप्तोऽसि धर्मज्ञ दिष्ट्या स्मरसि मेऽनघ  ॥ ०१८  ॥

अद्य रात्रौ दिवा चाहं त्वत्कृते भरतर्षभ ।
प्रजागरे पपश्यामि विचित्रं देहमात्मनः  ॥ ०१९  ॥

सोऽङ्कमादाय विदुरं मूर्ध्न्युपाघ्राय चैव ह ।

क्षम्यतामिति चोवाच यदुक्तोऽसि मया रुषा ॥ ०२० ॥

विदुर उवाच ॥

क्षान्तमेव मया राजन्गुरुर्नः परमो भवान् ।
तथा ह्यस्म्यागतः क्षिप्रं त्वद्दर्शनपरायणः ॥ ०२१ ॥

भवन्ति हि नरव्याघ्र पुरुषा धर्मचेतसः ।
दीनाभिपातिनो राजन्नात्र कार्या विचारणा ॥ ०२२ ॥

पाण्डोः सुता यादृशा मे तादृशा मे सुतास्तव ।
दीना इति हि मे बुद्धिरभिपन्नाद्य तान्प्रति ॥ ०२३ ॥

वैशंपायन उवाच ॥

अन्योन्यमनुनीयैवं भ्रातरौ तौ महाद्युती ।
विदुरो धृतराष्ट्रश्च लेभाते परमां मुदम् ॥ ०२४ ॥

---

# अध्याय ००८

वैशंपायन उवाच ॥

श्रुत्वा च विदुरं प्राप्तं राज्ञा च परिसान्त्वितम् ।
धृतराष्ट्रात्मजो राजा पर्यतप्यत दुर्मतिः ॥ ००१ ॥

स सौबलं समानाय्य कर्णदुःशासनावपि ।
अब्रवीद्वचनं राजा प्रविश्याबुद्धिजं तमः ॥ ००२ ॥

एष प्रत्यागतो मन्त्री धृतराष्ट्रस्य संमतः ।
विदुरः पाण्डुपुत्राणां सुहृद्विद्वान्हिते रतः ॥ ००३ ॥

यावदस्य पुनर्बुद्धिं विदुरो नापकर्षति ।
पाण्डवानयने तावन्मन्त्रयध्वं हितं मम ॥ ००४ ॥

अथ पश्याम्यहं पार्थान्प्राप्तानिह कथञ्चन ।
पुनः शोषं गमिष्यामि निरासुर्निरवग्रहः ॥ ००५ ॥

विषमुद्बन्धनं वापि शस्त्रमग्निप्रवेशनम् ।
करिष्ये न हि तानृद्धान्पुनर्द्रष्टुमिहोत्सहे ॥ ००६ ॥

शकुनिरुवाच ॥

किं बालिषां मतिं राजन्नास्थितोऽसि विशां पते ।
गतास्ते समयं कृत्वा नैतदेवं भविष्यति ॥ ००७ ॥

सत्यवाक्ये स्थिताः सर्वे पाण्डवा भरतर्षभ ।
पितुस्ते वचनं तात न ग्रहीष्यन्ति कर्हिचित् ॥ ००८ ॥

अथ वा ते ग्रहीष्यन्ति पुनरेष्यन्ति वा पुरम् ।
निरस्य समयं भूयः पणोऽस्माकं भविष्यति ॥ ००९ ॥

सर्वे भवामो मध्यस्था राज्ञश्छन्दानुवर्तिनः ।
छिद्रं बहु प्रपश्यन्तः पाण्डवानां सुसंवृताः ॥ ०१० ॥

दुःशासन उवाच ॥

एवमेतन्महाप्राज्ञ यथा वदसि मातुल ।
नित्यं हि मे कथयतस्तव बुद्धिर्हि रोचते ॥ ०११ ॥

कर्ण उवाच ॥

काममीक्षामहे सर्वे दुर्योधन तवेप्सितम् ।
ऐकमत्यं हि नो राजन्सर्वेषामेव लक्ष्यते ॥ ०१२ ॥

वैशंपायन उवाच ॥

एवमुक्तस्तु कर्णेन राजा दुर्योधनस्तदा ।
नातिहृष्टमनाः क्षिप्रमभवत्स पराङ्मुखः ॥ ०१३ ॥

उपलभ्य ततः कर्णो विवृत्य नयने शुभे ।
रोषाद्दुःशासनं चैव सौबलेयं च तावुभौ ॥ ०१४ ॥

उवाच परमक्रुद्ध उद्यम्यात्मानमात्मना ।
अहो मम मतं यत्तन्निबोधत नराधिपाः ॥ ०१५ ॥

प्रियं सर्वे चिकीर्षामो राज्ञः किङ्करपाणयः ।
न चास्य शक्नुमः सर्वे प्रिये स्थातुमतन्द्रिताः ॥ ०१६ ॥

वयं तु शस्त्राण्यादाय रथानास्थाय दंशिताः ।
गच्छामः सहिता हन्तुं पाण्डवान्वनगोचरान् ॥ ०१७ ॥

तेषु सर्वेषु शान्तेषु गतेष्वविदितां गतिम् ।
निर्विवादा भविष्यन्ति धार्तराष्ट्रास्तथा वयम् ॥ ०१८ ॥

यावदेव परिद्यूना यावच्छोकपरायणाः ।
यावन्मित्रविहीनाश्च तावच्छक्या मतं मम ॥ ०१९ ॥

तस्य तद्वचनं श्रुत्वा पूजयन्तः पुनः पुनः ।
बाढमित्येव ते सर्वे प्रत्यूचुः सूतजं तदा ॥ ०२० ॥

एवमुक्त्वा तु सङ्क्रुद्धा रथैः सर्वे पृथक्पृथक् ।
निर्ययुः पाण्डवान्हन्तुं संघशः कृतनिश्चयाः ॥ ०२१ ॥

तान्प्रस्थितान्परिज्ञाय कृष्णद्वैपायनस्तदा ।
आजगाम विशुद्धात्मा दृष्ट्वा दिव्येन चक्षुषा ॥ ०२२ ॥

प्रतिषिध्याथ तान्सर्वान्भगवा.ण्ल्लोकपूजितः ।
प्रज्ञाचक्षुषमासीनमुवाचाभ्येत्य सत्वरः ॥ ०२३ ॥

---

# अध्याय ००९

व्यास उवाच ॥

धृतराष्ट्र महाप्राज्ञ निबोध वचनं मम ।
वक्ष्यामि त्वा कौरवाणां सर्वेषां हितमुत्तमम् ॥ ००१ ॥

न मे प्रियं महाबाहो यद्गताः पाण्डवा वनम् ।
निकृत्या निर्जिताश्चैव दुर्योधनवशानुगैः ॥ ००२ ॥

ते स्मरन्तः परिक्लेशान्वर्षे पूर्णे त्रयोदशे ।
विमोक्ष्यन्ति विषं क्रुद्धाः करवेयेषु भारत ॥ ००३ ॥

तदयं किं नु पापात्मा तव पुत्रः सुमन्दधीः ।
पाण्डवान्नित्यसङ्क्रुद्धो राज्यहेतोर्जिघांसति ॥ ००४ ॥

वार्यतां साध्वयं मूढः शमं गच्छतु ते सुतः ।
वनस्थांस्तानयं हन्तुमिच्छन्प्राणैर्विमोक्ष्यते ॥ ००५ ॥

यथाह विदुरः प्राज्ञो यथा भीष्मो यथा वयम् ।
यथा कृपश्च द्रोणश्च तथा साधु विधीयताम्  ॥ ००६  ॥

विग्रहो हि महाप्राज्ञ स्वजनेन विगर्हितः ।
अधर्म्यमयशस्यं च मा राजन्प्रतिपद्यथाः  ॥ ००७  ॥

समीक्षा यादृशी ह्यस्य पाण्डवान्प्रति भारत ।
उपेक्ष्यमाणा सा राजन्महान्तमनयं स्पृशेत्  ॥ ००८  ॥

अथ वायं सुमन्दात्मा वनं गच्छतु ते सुतः ।
पाण्डवैः सहितो राजन्नेक एवासहायवान्  ॥ ००९  ॥

ततः संसर्गजः स्नेहः पुत्रस्य तव पाण्डवैः ।
यदि स्यात्कृतकार्योऽद्य भवेस्त्वं मनुजेश्वर  ॥ ०१०  ॥

अथ वा जायमानस्य यच्छीलमनुजायते ।
श्रूयते तन्महाराज नामृतस्यापसर्पति  ॥ ०११  ॥

कथं वा मन्यते भीष्मो द्रोणो वा विदुरोऽपि वा ।
भवान्वात्र क्षमं कार्यं पुरा चार्थोऽतिवर्तते  ॥ ०१२  ॥

---

# अध्याय ०१०

धृतराष्ट्र उवाच  ॥

भगवन्नाहमप्येतद्रोचये द्यूतसंस्तवम् ।

मन्ये तद्विधिनाक्रम्य कारितोऽस्मीति वै मुने ॥ ००१ ॥

नैतद्रोचयते भीष्मो न द्रोणो विदुरो न च ।
गान्धारी नेच्छति द्यूतं तच्च मोहात्प्रवर्तितम् ॥ ००२ ॥

परित्यक्तुं न शक्नोमि दुर्योधनमचेतनम् ।
पुत्रस्नेहेन भगवञ्जानन्नपि यतव्रत ॥ ००३ ॥

व्यास उवाच ॥

वैचित्रवीर्य नृपते सत्यमाह यथा भवान् ।
दृढं वेद्मि परं पुत्रं परं पुत्रान्न विद्यते ॥ ००४ ॥

इन्द्रोऽप्यश्रुनिपातेन सुरभ्या प्रतिबोधितः ।
अन्यैः समृद्धैरप्यर्थैर्न सुताद्विद्यते परम् ॥ ००५ ॥

अत्र ते वर्तयिष्यामि महदाख्यानमुत्तमम् ।
सुरभ्याश्चैव संवादमिन्द्रस्य च विशां पते ॥ ००६ ॥

त्रिविष्टपगता राजन्सुरभिः प्रारुदत्किल ।
गवां मात पुरा तात तामिन्द्रोऽन्वकृपायत ॥ ००७ ॥

इन्द्र उवाच ॥

किमिदं रोदिषि शुभे कच्चित्क्षेमं दिवौकसाम् ।
मानुषेष्वथ वा गोषु नैतदल्पं भविष्यति ॥ ००८ ॥

सुरभिरुवाच ॥

विनिपातो न वः कश्चिद्दृश्यते त्रिदशाधिप ।
अहं तु पुत्रं शोचामि तेन रोदिमि कौशिक ॥ ००९ ॥

पश्यैनं कर्षकं रौद्रं दुर्बलं मम पुत्रकम् ।
प्रतोदेनाभिनिघ्नन्तं लाङ्गलेन निपीडितम् ॥ ०१० ॥

एतं दृष्ट्वा भृशं श्रन्तं वध्यमानं सुराधिप ।
कृपाविष्टास्मि देवेन्द्र मनश्चोद्विजते मम ॥ ०११ ॥

एकस्तत्र बलोपेतो धुरमुद्वहतेऽधिकाम् ।
अपरोऽल्पबलप्राणः कृशो धमनिसंततः ॥ ०१२ ॥

कृच्छ्रादुद्वहते भारं तं वै शोचामि वासव ॥ ०१२ ॥

वध्यमानः प्रतोदेन तुद्यमानः पुनः पुनः ।
नैव शक्नोति तं भारमुद्वोढुं पश्य वासव ॥ ०१३ ॥

ततोऽहं तस्य दुःखार्ता विरौमि भृशदुःखिता ।
अश्रूण्यावर्तयन्ती च नेत्राभ्यां करुणायती ॥ ०१४ ॥

इन्द्र उवाच ॥

तव पुत्रसहस्रेषु पीड्यमानेषु शोभने ।
किं कृपायितमस्त्यत्र पुत्र एकोऽत्र पीड्यते ॥ ०१५ ॥

सुरभिरुवाच ॥

यदि पुत्रसहस्रं मे सर्वत्र सममेव मे ।
दीनस्य तु सतः शक्र पुत्रस्याभ्यधिका कृपा ॥ ०१६ ॥

व्यास उवाच ॥

तदिन्द्रः सुरभीवाक्यं निशम्य भृशविस्मितः ।

जीवितेनापि कौरव्य मेनेऽभ्यधिकमात्मजम्  ॥ ०१७ ॥

प्रववर्ष च तत्रैव सहसा तोयमुल्बणम् ।
कर्षकस्याचरन्विघ्नं भगवान्पाकशासनः ॥ ०१८ ॥

तद्यथा सुरभिः प्राह सममेवास्तु ते तथा ।
सुतेषु राजन्सर्वेषु दीनेष्वभ्यधिका कृपा ॥ ०१९ ॥

यादृशो मे सुतः पण्डुस्तादृशो मेऽसि पुत्रक ।
विदुरश्च महाप्राज्ञः स्नेहादेतद्ब्रवीम्यहम् ॥ ०२० ॥

चिराय तव पुत्राणां शतमेकश्च पार्थिव ।
पाण्डोः पञ्चैव लक्ष्यन्ते तेऽपि मन्दाः सुदुःखिताः ॥ ०२१ ॥

कथं जीवेयुरत्यन्तं कथं वर्धेयुरित्यपि ।
इति दीनेषु पार्थेषु मनो मे परितप्यते ॥ ०२२ ॥

यदि पार्थिव कौरव्याञ्जीवमानानिहेच्छसि ।
दुर्योधनस्तव सुतः शमं गच्छतु पाण्डवैः ॥ ०२३ ॥

---

# अध्याय ०११

धृतराष्ट्र उवाच ॥

एवमेतन्महाप्राज्ञ यथा वदसि नो मुने ।
अहं चैव विजानामि सर्वे चेमे नराधिपाः ॥ ००१ ॥

भवांस्तु मन्यते साधु यत्कुरूणां सुखोदयम् ।
तदेव विदुरोऽप्याह भीष्मो द्रोणश्च मां मुने ॥ ००२ ॥

यदि त्वहमनुग्राह्यः कौरवेषु दया यदि ।
अनुशाधि दुरात्मानं पुत्रं दुर्योधनं मम ॥ ००३ ॥

व्यास उवाच ॥

अयमायाति वै राजन्मैत्रेयो भगवानृषिः ।
अन्वीय पाण्डवान्भ्रातृनिहैवास्मद्दिदृक्षया ॥ ००४ ॥

एष दुर्योधनं पुत्रं तव राजन्महानृषिः ।
अनुशास्ता यथान्यायं शमायास्य कुलस्य ते ॥ ००५ ॥

ब्रूयाद्यदेष राजेन्द्र तत्कार्यमविशङ्कया ।
अक्रियायां हि कार्यस्य पुत्रं ते शप्स्यते रुषा ॥ ००६ ॥

वैशंपायन उवाच ॥

एवमुक्त्वा ययौ व्यासो मैत्रेयः प्रत्यदृश्यत ।
पूजया प्रतिजग्राह सपुत्रस्तं नराधिपः ॥ ००७ ॥

दत्त्वार्घ्याद्याः क्रियाः सर्वा विश्रान्तं मुनिपुङ्गवम् ।
प्रश्रयेणाब्रवीद्राजा धृतराष्ट्रोऽम्बिकासुतः ॥ ००८ ॥

सुखेनागमनं कच्चिद्भगवन्कुरुजाङ्गले ।
कच्चित्कुशलिनो वीरा भ्रातरः पञ्च पाण्डवाः ॥ ००९ ॥

समये स्थातुमिच्छन्ति कच्चिच्च पुरुषर्षभाः ।
कच्चित्कुरूणां सौभ्रात्रमव्युच्छिन्नं भविष्यति ॥ ०१० ॥

मैत्रेय उवाच ॥

तीर्थयात्रामनुक्रामन्प्राप्तोऽस्मि कुरुजाङ्गलम् ।
यदृच्छया धर्मराजं दृष्टवान्काम्यके वने ॥ ०११ ॥

तं जटाजिनसंवीतं तपोवननिवासिनम् ।
समाजग्मुर्महात्मानं द्रष्टुं मुनिगणाः प्रभो ॥ ०१२ ॥

तत्राश्रौषं महाराज पुत्राणां तव विभ्रमम् ।
अनयं द्यूतरूपेण महापायमुपस्थितम् ॥ ०१३ ॥

ततोऽहं त्वामनुप्राप्तः कौरवाणामवेक्षया ।
सदा ह्यभ्यधिकः स्नेहः प्रीतिश्च त्वयि मे प्रभो ॥ ०१४ ॥

नैतदौपयिकं राजंस्त्वयि भीष्मे च जीवति ।
यदन्योन्येन ते पुत्रा विरुध्यन्ते नराधिप ॥ ०१५ ॥

मेढीभूतः स्वयं राजन्निग्रहे प्रग्रहे भवान् ।
किमर्थमनयं घोरमुत्पतन्तमुपेक्षसे ॥ ०१६ ॥

दस्यूनामिव यद्वृत्तं सभायां कुरुनन्दन ।
तेन न भ्राजसे राजंस्तापसानां समागमे ॥ ०१७ ॥

वैशंपायन उवाच ॥

ततो व्यावृत्य राजानं दुर्योधनममर्षणम् ।
उवाच श्लक्ष्णया वाचा मैत्रेयो भगवानृषिः ॥ ०१८ ॥

दुर्योधन महाबाहो निबोध वदतां वर ।
वचनं मे महाप्राज्ञ ब्रुवतो यद्धितं तव ॥ ०१९ ॥

मा द्रुहः पाण्डवान्राजन्कुरुष्व हितमात्मनः ।
पाण्डवानां कुरूणां च लोकस्य च नरर्षभ ॥ ०२० ॥

ते हि सर्वे नरव्याघ्राः शूरा विक्रान्तयोधिनः ।
सर्वे नागायुतप्राणा वज्रसंहनना दृढाः ॥ ०२१ ॥

सत्यव्रतपराः सर्वे सर्वे पुरुषमानिनः ।
हन्तारो देवशत्रूणां रक्षसां कामरूपिणाम् ॥ ०२२ ॥

हिडिम्बबकमुख्यानां किर्मीरस्य च रक्षसः ॥ ०२२ ॥

इतः प्रच्यवतां रात्रौ यः स तेषां महात्मनाम् ।
आवृत्य मार्गं रौद्रात्मा तस्थौ गिरिरिवाचलः ॥ ०२३ ॥

तं भीमः समरश्लाघी बलेन बलिनां वरः ।
जघान पशुमारेण व्याघ्रः क्षुद्रमृगं यथा ॥ ०२४ ॥

पश्य दिग्विजये राजन्यथा भीमेन पातितः ।
जरासंधो महेष्वासो नागायुतबलो युधि ॥ ०२५ ॥

संबन्धी वासुदेवश्च येषां श्यालश्च पार्षतः ।
कस्तान्युधि समासीत जरामरणवान्नरः ॥ ०२६ ॥

तस्य ते शम एवास्तु पाण्डवैर्भरतर्षभ ।
कुरु मे वचनं राजन्मा मृत्युवशमन्वगाः ॥ ०२७ ॥

एवं तु ब्रुवतस्तस्य मैत्रेयस्य विशां पते ।
ऊरुं गजकराकारं करेणाभिजघान सः ॥ ०२८ ॥

दुर्योधनः स्मितं कृत्वा चरणेनालिखन्महीम् ।
न किञ्चिदुक्त्वा दुर्मेधास्तस्थौ किञ्चिदवाङ्मुखः ॥ ०२९ ॥

तमशुश्रूषमाणं तु विलिखन्तं वसुंधराम् ।
दृष्ट्वा दुर्योधनं राजन्मैत्रेयं कोप आविशत् ॥ ०३० ॥

स कोपवशमापन्नो मैत्रेयो मुनिसत्तमः ।
विधिना संप्रयुक्तश्च शापायास्य मनो दधे ॥ ०३१ ॥

ततः स वार्युपस्पृश्य कोपसंरक्तलोचनः ।
मैत्रेयो धार्तराष्ट्रं तमशपद्दुष्टचेतसम् ॥ ०३२ ॥

यस्मात्त्वं मामनादृत्य नेमां वाचं चिकीर्षसि ।
तस्मादस्याभिमानस्य सद्यः फलमवाप्नुहि ॥ ०३३ ॥

त्वदभिद्रोहसंयुक्तं युद्धमुत्पत्स्यते महत् ।
यत्र भीमो गदापातैस्तवोरुं भेत्स्यते बली ॥ ०३४ ॥

इत्येवमुक्ते वचने धृतराष्ट्रो महीपतिः ।
प्रसादयामास मुनिं नैतदेवं भवेदिति ॥ ०३५ ॥

मैत्रेय उवाच ॥

शमं यास्यति चेत्पुत्रस्तव राजन्यथा तथा ।
शापो न भविता तात विपरीते भविष्यति ॥ ०३६ ॥

वैशंपायन उवाच ॥

स विलक्षस्तु राजेन्द्र दुर्योधनपिता तदा ।
मैत्रेयं प्राह किर्मीरः कथं भीमेन पातितः ॥ ०३७ ॥

मैत्रेय उवाच ॥

नाहं वक्ष्याम्यसूया ते न ते शुश्रूषते सुतः ।
एष ते विदुरः सर्वमाख्यास्यति गते मयि ॥ ०३८ ॥

वैशंपायन उवाच ॥

इत्येवमुक्त्वा मैत्रेयः प्रातिष्ठत यथागतम् ।
किर्मीरवधसंविग्नो बहिर्दुर्योधनोऽगमत् ॥ ०३९ ॥

---

# किर्मीरवधपर्व

## अध्याय ०१२

धृतराष्ट्र उवाच ॥

किर्मीरस्य वधं क्षत्तः श्रोतुमिच्छामि कथ्यताम् ।
रक्षसा भीमसेनस्य कथमासीत्समागमः ॥ ००१ ॥

विदुर उवाच ॥

शृणु भीमस्य कर्मेदमतिमानुषकर्मणः ।
श्रुतपूर्वं मया तेषां कथान्तेषु पुनः पुनः ॥ ००२ ॥

इतः प्रयाता राजेन्द्र पाण्डवा द्यूतनिर्जिताः ।
जग्मुस्त्रिभिरहोरात्रैः काम्यकं नाम तद्वनम् ॥ ००३ ॥

रात्रौ निशीथे स्वाभीले गतेऽर्धसमये नृप ।
प्रचारे पुरुषादानां रक्षसां भीमकर्मणाम् ॥ ००४ ॥

तद्वनं तापसा नित्यं शेषाश्च वनचारिणः ।
दूरात्परिहरन्ति स्म पुरुषादभयात्किल ॥ ००५ ॥

तेषां प्रविशतां तत्र मार्गमावृत्य भारत ।
दीप्ताक्षं भीषणं रक्षः सोल्मुकं प्रत्यदृश्यत ॥ ००६ ॥

बाहू महान्तौ कृत्वा तु तथास्यं च भयानकम् ।
स्थितमावृत्य पन्थानं येन यान्ति कुरूद्वहाः ॥ ००७ ॥

दष्टोष्ठदंष्ट्रं ताम्राक्षं प्रदीप्तोर्ध्वशिरोरुहम् ।
सार्करश्मितडिच्चक्रं सबलाकमिवाम्बुदम् ॥ ००८ ॥

सृजन्तं राक्षसीं मायां महारावविराविणम् ।
मुञ्चन्तं विपुलं नादं सतोयमिव तोयदम् ॥ ००९ ॥

तस्य नादेन संत्रस्ताः पक्षिणः सर्वतोदिशम् ।
विमुक्तनादाः संपेतुः स्थलजा जलजैः सह ॥ ०१० ॥

संप्रद्रुतमृगद्वीपिमहिषर्क्षसमाकुलम् ।
तद्वनं तस्य नादेन संप्रस्थितमिवाभवत् ॥ ०११ ॥

तस्योरुवाताभिहता ताम्रपल्लवबाहवः ।
विदूरजाताश्च लताः समाश्लिष्यन्त पादपान् ॥ ०१२ ॥

तस्मिन्क्षणेऽथ प्रववौ मारुतो भृशदारुणः ।
रजसा संवृतं तेन नष्टर्क्षमभवन्नभः ॥ ०१३ ॥

पञ्चानां पाण्डुपुत्राणामविज्ञातो महारिपुः ।
पञ्चानामिन्द्रियाणां तु शोकवेग इवातुलः ॥ ०१४ ॥

स दृष्ट्वा पाण्डवान्दूरात्कृष्णाजिनसमावृतान् ।
आवृणोत्तद्वनद्वारं मैनाक इव पर्वतः ॥ ०१५ ॥

तं समासाद्य वित्रस्ता कृष्णा कमललोचना ।
अदृष्टपूर्वं संत्रासान्न्यमीलयत लोचने ॥ ०१६ ॥

दुःशासनकरोत्सृष्टविप्रकीर्णशिरोरुहा ।
पञ्चपर्वतमध्यस्था नदीवाकुलतां गता ॥ ०१७ ॥

मोमुह्यमानां तां तत्र जगृहुः पञ्च पाण्डवाः ।
इन्द्रियाणि प्रसक्तानि विषयेषु यथा रतिम् ॥ ०१८ ॥

अथ तां राक्षसीं मायामुत्थितां घोरदर्शनाम् ।
रक्षोघ्नैर्विविधैर्मन्त्रैर्धौम्यः सम्यक्प्रयोजितैः ॥ ०१९ ॥

पश्यतां पाण्डुपुत्राणां नाशयामास वीर्यवान् ॥ ०१९ ॥

स नष्टमायोऽतिबलः क्रोधविस्फारितेक्षणः ।
काममूर्तिधरः क्षुद्रः कालकल्पो व्यदृश्यत ॥ ०२० ॥

तमुवाच ततो राजा दीर्घप्रज्ञो युधिष्ठिरः ।
को भवान्कस्य वा किं ते क्रियतां कार्यमुच्यताम् ॥ ०२१ ॥

प्रत्युवाचाथ तद्रक्षो धर्मराजं युधिष्ठिरम् ।
अहं बकस्य वै भ्राता किर्मीर इति विश्रुतः ॥ ०२२ ॥

वनेऽस्मिन्काम्यके शून्ये निवसामि गतज्वरः ।
युधि निर्जित्य पुरुषानाहारं नित्यमाचरन् ॥ ०२३ ॥

के यूयमिह संप्राप्ता भक्ष्यभूता ममान्तिकम् ।
युधि निर्जित्य वः सर्वान्भक्षयिष्ये गतज्वरः ॥ ०२४ ॥

युधिष्ठिरस्तु तच्छ्रुत्वा वचस्तस्य दुरात्मनः ।
आचचक्षे ततः सर्वं गोत्रनामादि भारत ॥ ०२५ ॥

पाण्डवो धर्मराजोऽहं यदि ते श्रोत्रमागतः ।
सहितो भ्रातृभिः सर्वैर्भीमसेनार्जुनादिभिः ॥ ०२६ ॥

हृतराज्यो वने वासं वस्तुं कृतमतिस्ततः ।
वनमभ्यागतो घोरमिदं तव परिग्रहम् ॥ ०२७ ॥

किर्मीरस्त्वब्रवीदेनं दिष्ट्या देवैरिदं मम ।
उपपादितमद्येह चिरकालान्मनोगतम् ॥ ०२८ ॥

भीमसेनवधार्थं हि नित्यमभ्युद्यतायुधः ।
चरामि पृथिवीं कृत्स्नां नैनमासादयाम्यहम् ॥ ०२९ ॥

सोऽयमासादितो दिष्ट्या भ्रातृहा काङ्क्षितश्चिरम् ।
अनेन हि मम भ्राता बको विनिहतः प्रियः ॥ ०३० ॥

वेत्रकीयगृहे राजन्ब्राह्मणच्छद्मरूपिणा ।
विद्याबलमुपाश्रित्य न ह्यस्त्यस्यौरसं बलम् ॥ ०३१ ॥

हिडिम्बश्च सखा मह्यं दयितो वनगोचरः ।
हतो दुरात्मनानेन स्वसा चास्य हृता पुरा ॥ ०३२ ॥

सोऽयमभ्यागतो मूढो ममेदं गहनं वनम् ।
प्रचारसमयेऽस्माकमर्धरात्रे समास्थिते ॥ ०३३ ॥

अद्यास्य यातयिष्यामि तद्वैरं चिरसंभृतम् ।
तर्पयिष्यामि च बकं रुधिरेणास्य भूरिणा ॥ ०३४ ॥

अद्याहमनृणो भूत्वा भ्रातुः सख्युस्तथैव च ।
शान्तिं लब्धास्मि परमां हत्व राक्षसकण्टकम्  ॥ ०३५  ॥

यदि तेन पुरा मुक्तो भीमसेनो बकेन वै ।
अद्यैनं भक्षयिष्यामि पश्यतस्ते युधिष्ठिर  ॥ ०३६  ॥

एनं हि विपुलप्राणमद्य हत्वा वृकोदरम् ।
संभक्ष्य जरयिष्यामि यथागस्त्यो महासुरम्  ॥ ०३७  ॥

एवमुक्तस्तु धर्मात्मा सत्यसंधो युधिष्ठिरः ।
नैतदस्तीति सक्रोधो भर्त्सयामास राक्षसम्  ॥ ०३८  ॥

ततो भीमो महाबाहुरारुज्य तरसा द्रुम ।
दशव्याममिवोद्विद्धं निष्पत्रमकरोत्तदा  ॥ ०३९  ॥

चकार सज्यं गाण्डीवं वज्रनिष्पेषगौरवम् ।
निमेषान्तरमात्रेण तथैव विजयोऽर्जुनः  ॥ ०४०  ॥

निवार्य भीमो जिष्णुं तु तद्रक्षो घोरदर्शनम् ।
अभिद्रुत्याब्रवीद्वाक्यं तिष्ठ तिष्ठेति भारत  ॥ ०४१  ॥

इत्युक्त्वैनमभिक्रुद्धः कक्ष्यामुत्पीड्य पाण्डवः ।
निष्पिष्य पाणिना पाणिं संदष्टोष्ठपुटो बली  ॥ ०४२  ॥

तमभ्यधावद्वेगेन भीमो वृक्षायुधस्तदा  ॥ ०४२  ॥

यमदण्डप्रतीकाशं ततस्तं तस्य मूर्धनि ।
पातयामास वेगेन कुलिशं मघवानिव  ॥ ०४३  ॥

असंभ्रान्तं तु तद्रक्षः समरे प्रत्यदृश्यत ।
चिक्षेप चोल्मुकं दीप्तमशनिं ज्वलितामिव  ॥ ०४४  ॥

तदुदस्तमलातं तु भीमः प्रहरतां वरः ।
पदा सव्येन चिक्षेप तद्रक्षः पुनराव्रजत् ॥ ०४५ ॥

किर्मीरश्चापि सहसा वृक्षमुत्पाट्य पाण्डवम् ।
दण्डपाणिरिव क्रुद्धः समरे प्रत्ययुध्यत ॥ ०४६ ॥

तद्वृक्षयुद्धमभवन्महीरुहविनाशनम् ।
वालिसुग्रीवयोर्भ्रात्रोर्यथा श्रीकाङ्क्षिणोः पुरा ॥ ०४७ ॥

शीर्षयोः पतिता वृक्षा बिभिदुर्नैकधा तयोः ।
यथैवोत्पलपद्मानि मत्तयोर्द्विपयोस्तथा ॥ ०४८ ॥

मुञ्जवज्जर्जरीभूता बहवस्तत्र पादपाः ।
चीराणीव व्युदस्तानि रेजुस्तत्र महावने ॥ ०४९ ॥

तद्वृक्षयुद्धमभवत्सुमुहूर्तं विशां पते ।
राक्षसानां च मुख्यस्य नराणामुत्तमस्य च ॥ ०५० ॥

ततः शिलां समुत्क्षिप्य भीमस्य युधि तिष्ठतः ।
प्राहिणोद्राक्षसः क्रुद्धो भीमसेनश्चचाल ह ॥ ०५१ ॥

तं शिलाताडनजडं पर्यधावत्स राक्षसः ।
बाहुविक्षिप्तकिरणः स्वर्भानुरिव भास्करम् ॥ ०५२ ॥

तावन्योन्यं समाश्लिष्य प्रकर्षन्तौ परस्परम् ।
उभावपि चकाशेते प्रयुद्धौ वृषभाविव ॥ ०५३ ॥

तयोरासीत्सुतुमुलः संप्रहारः सुदारुणः ।
नखदंष्ट्रायुधवतोर्व्याघ्रयोरिव दृप्तयोः ॥ ०५४ ॥

दुर्योधननिकाराच्च बाहुवीर्याच्च दर्पितः ।
कृष्णानयनदृष्टश्च व्यवर्धत वृकोदरः ॥ ०५५ ॥

अभिपत्याथ बाहुभ्यां प्रत्यगृह्णादमर्षितः ।
मातङ्ग इव मातङ्गं प्रभिन्नकरटामुखः ॥ ०५६ ॥

तं चाप्याथ ततो रक्षः प्रतिजग्राह वीर्यवान् ।
तमाक्षिपद्भीमसेनो बलेन बलिनां वरः ॥ ०५७ ॥

तयोर्भुजविनिष्पेषादुभयोर्बलिनोस्तदा ।
शब्दः समभवद्घोरो वेणुस्फोटसमो युधि ॥ ०५८ ॥

अथैनमाक्षिप्य बलाद्गृह्य मध्ये वृकोदरः ।
धूनयामास वेगेन वायुश्चण्ड इव द्रुमम् ॥ ०५९ ॥

स भीमेन परामृष्टो दुर्बलो बलिना रणे ।
व्यस्पन्दत यथाप्राणं विचकर्ष च पाण्डवम् ॥ ०६० ॥

तत एनं परिश्रान्तमुपलभ्य वृकोदरः ।
योक्त्रयामास बाहुभ्यां पशुं रशनया यथा ॥ ०६१ ॥

विनदन्तं महानादं भिन्नभेरीसमस्वनम् ।
भ्रामयामास सुचिरं विस्फुरन्तमचेतसम् ॥ ०६२ ॥

तं विषीदन्तमाज्ञाय राक्षसं पाण्डुनन्दनः ।
प्रगृह्य तरसा दोर्भ्यां पशुमारममारयत् ॥ ०६३ ॥

आक्रम्य स कटीदेशे जानुना राक्षसाधमम् ।
अपीडयत बाहुभ्यां कण्ठं तस्य वृकोदरः ॥ ०६४ ॥

अथ तं जडसर्वाङ्गं व्यावृत्तनयनोल्बणम् ।

भूतले पातयामास वाक्यं चेदमुवाच ह ॥ ०६५ ॥

हिडिम्बबकयोः पाप न त्वमश्रुप्रमार्जनम् ।
करिष्यसि गतश्चासि यमस्य सदनं प्रति ॥ ०६६ ॥

इत्येवमुक्त्वा पुरुषप्रवीर ;स्तं राक्षसं क्रोधविवृत्तनेत्रः ।
प्रस्रस्तवस्त्राभरणं स्फुरन्त ;मुद्भ्रान्तचित्तं व्यसुमुत्ससर्ज ॥ ०६७ ॥

तस्मिन्हते तोयदतुल्यरूपे ; कृष्णां पुरस्कृत्य नरेन्द्रपुत्राः ।
भीमं प्रशस्याथ गुणैरनेकै ;र्हृष्टास्ततो द्वैतवनाय जग्मुः ॥ ०६८ ॥

एवं विनिहतः संख्ये किर्मीरो मनुजाधिप ।
भीमेन वचनात्तस्य धर्मराजस्य कौरव ॥ ०६९ ॥

ततो निष्कण्टकं कृत्वा वनं तदपराजितः ।
द्रौपद्या सह धर्मज्ञो वसतिं तामुवास ह ॥ ०७० ॥

समाश्वास्य च ते सर्वे द्रौपदीं भरतर्षभाः ।
प्रहृष्टमनसः प्रीत्या प्रशशंसुर्वृकोदरम् ॥ ०७१ ॥

भीमबाहुबलोत्पिष्टे विनष्टे राक्षसे ततः ।
विविशुस्तद्वनं वीराः क्षेमं निहतकण्टकम् ॥ ०७२ ॥

स मया गच्छता मार्गे विनिकीर्णो भयावहः ।
वने महति दुष्टात्मा दृष्टो भीमबलाद्धतः ॥ ०७३ ॥

तत्राश्रौषमहं चैतत्कर्म भीमस्य भारत ।
ब्राह्मणानां कथयतां ये तत्रासन्समागताः ॥ ०७४ ॥

वैशंपायन उवाच ॥

एवं विनिहतं संख्ये किर्मीरं राक्षसोत्तमम् ।
श्रुत्वा ध्यानपरो राजा निशश्वासार्तवत्तदा ॥ ०७५ ॥

---

# कैरातपर्व

## अध्याय ०१३

वैशंपायन उवाच ॥

भोजाः प्रव्रजिताञ्श्रुत्वा वृष्णयश्चान्धकैः सह ।
पाण्डवान्दुःखसंतप्तान्समाजग्मुर्महावने ॥ ००१ ॥

पाञ्चालस्य च दायादा धृष्टकेतुश्च चेदिपः ।
केकयाश्च महावीर्या भ्रातरो लोकविश्रुताः ॥ ००२ ॥

वने तेऽभिययुः पार्थान्क्रोधामर्शसमन्विताः ।
गर्हयन्तो धार्तराष्ट्रान्किं कुर्म इति चाब्रुवन् ॥ ००३ ॥

वासुदेवं पुरस्कृत्य सर्वे ते क्षत्रियर्षभाः ।
परिवार्योपविविशुर्धर्मराजं युधिष्ठिरम् ॥ ००४ ॥

वासुदेव उवाच ॥

दुर्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः ।
दुःशासनचतुर्थानां भूमिः पास्यति शोणितम् ॥ ००५ ॥

ततः सर्वेऽभिषिञ्चामो धर्मराजं युधिष्ठिरम् ।

निकृत्योपचरन्वध्य एष धर्मः सनातनः ॥ ००६ ॥

वैशंपायन उवाच ॥

पार्थानामभिषङ्गेण तथा क्रुद्धं जनार्दनम् ।
अर्जुनः शमयामासा दिधक्षन्तमिव प्रजाः ॥ ००७ ॥

सङ्क्रुद्धं केशवं दृष्ट्वा पूर्वदेहेषु फल्गुनः ।
कीर्तयामास कर्माणि सत्यकीर्तेर्महात्मनः ॥ ००८ ॥

पुरुषस्याप्रमेयस्य सत्यस्यामिततेजसः ।
प्रजापतिपतेर्विष्णोर्लोकनाथस्य धीमतः ॥ ००९ ॥

अर्जुन उवाच ॥

दश वर्षसहस्राणि यत्रसायङ्गृहो मुनिः ।
व्यचरस्त्वं पुरा कृष्ण पर्वते गन्धमादने ॥ ०१० ॥

दश वर्षसहस्राणि दश वर्षशतानि च ।
पुष्करेष्ववसः कृष्ण त्वमपो भक्षयन्पुरा ॥ ०११ ॥

ऊर्ध्वबाहुर्विशालायां बदर्यां मधुसूदन ।
अतिष्ठ एकपादेन वायुभक्षः शतं समाः ॥ ०१२ ॥

अपकृष्टोत्तरासङ्गः कृशो धमनिसंततः ।
आसीः कृष्ण सरस्वत्यां सत्रे द्वादशवार्षिके ॥ ०१३ ॥

प्रभासं चाप्यथासाद्य तीर्थं पुण्यजनोचितम् ।
तथा कृष्ण महातेजा दिव्यं वर्षसहस्रकम् ॥ ०१४ ॥

आतिष्ठस्तप एकेन पादेन नियमे स्थितः ॥ ०१४ ॥

क्षेत्रज्ञः सर्वभूतानामादिरन्तश्च केशव ।
निधानं तपसां कृष्ण यज्ञस्त्वं च सनातनः ॥ ०१५ ॥

निहत्य नरकं भौममाहृत्य मणिकुण्डले ।
प्रथमोत्पादितं कृष्ण मेध्यमश्वमवासृजः ॥ ०१६ ॥

कृत्वा तत्कर्म लोकानामृषभः सर्वलोकजित् ।
अवधीस्त्वं रणे सर्वान्समेतान्दैत्यदानवान् ॥ ०१७ ॥

ततः सर्वेश्वरत्वं च संप्रदाय शचीपतेः ।
मानुषेषु महाबाहो प्रादुर्भूतोऽसि केशव ॥ ०१८ ॥

स त्वं नारायणो भूत्वा हरिरासीः परंतप ।
ब्रह्मा सोमश्च सूर्यश्च धर्मो धाता यमोऽनलः ॥ ०१९ ॥

वायुर्वैश्रवणो रुद्रः कालः खं पृथिवी दिशः ।
अजश्चराचरगुरुः स्रष्टा त्वं पुरुषोत्तम ॥ ०२० ॥

तुरायणादिभिर्देव क्रतुभिर्भूरिदक्षिणैः ।
अयजो भूरितेजा वै कृष्ण चैत्ररथे वने ॥ ०२१ ॥

शतं शतसहस्राणि सुवर्णस्य जनार्दन ।
एकैकस्मिंस्तदा यज्ञे परिपूर्णानि भागशः ॥ ०२२ ॥

अदितेरपि पुत्रत्वमेत्य यादवनन्दन ।
त्वं विष्णुरिति विख्यात इन्द्रादवरजो भुवि ॥ ०२३ ॥

शिशुर्भूत्वा दिवं खं च पृथिवीं च परंतप ।
त्रिभिर्विक्रमणैः कृष्ण क्रान्तवानसि तेजसा ॥ ०२४ ॥

संप्राप्य दिवमाकाशमादित्यसद्ने स्थितः ।
अत्यरोचश्च भूतात्मन्भास्करं स्वेन तेजसा ॥ ०२५ ॥

सादिता मौरवाः पाशा निसुन्दनरकौ हतौ ।
कृतः क्षेमः पुनः पन्थाः पुरं प्राग्ज्योतिषं प्रति ॥ ०२६ ॥

जारूथ्यामाहुतिः क्राथः शिशुपालो जनैः सह ।
भीमसेनश्च शैब्यश्च शतधन्वा च निर्जितः ॥ ०२७ ॥

तथा पर्जन्यघोषेण रथेनादित्यवर्चसा ।
अवाक्षीर्महिषीं भोज्यां रणे निर्जित्य रुक्मिणम् ॥ ०२८ ॥

इन्द्रद्युम्नो हतः कोपाद्यवनश्च कशेरुमान् ।
हतः सौभपतिः शाल्वस्त्वया सौभं च पातितम् ॥ ०२९ ॥

इरावत्यां तथा भोजः कार्तवीर्यसमो युधि ।
गोपतिस्तालकेतुश्च त्वया विनिहतावुभौ ॥ ०३० ॥

तां च भोगवतीं पुण्यामृषिकान्तां जनार्दन ।
द्वारकामात्मसात्कृत्वा समुद्रं गमयिष्यसि ॥ ०३१ ॥

न क्रोधो न च मात्सर्यं नानृतं मधुसूदन ।
त्वयि तिष्ठति दाशार्ह न नृशंस्यं कुतोऽनृजु ॥ ०३२ ॥

आसीनं चित्तमध्ये त्वां दीप्यमानं स्वतेजसा ।
आगम्य ऋषयः सर्वेऽयाचन्ताभयमच्युत ॥ ०३३ ॥

युगान्ते सर्वभूतानि सङ्क्षिप्य मधुसूदन ।
आत्मन्येवात्मसात्कृत्वा जगदास्से परंतप ॥ ०३४ ॥

नैवं पूर्वे नापरे वा करिष्यन्ति कृतानि ते ।

कर्माणि यानि देव त्वं बाल एव महाद्युते ॥ ०३५ ॥

कृतवान्पुण्डरीकाक्ष बलदेवसहायवान् ।
वैराजभवने चापि ब्रह्मणा न्यवसः सह ॥ ०३६ ॥

वैशंपायन उवाच ॥

एवमुक्त्वा तदात्मानमात्मा कृष्णस्य पाण्डवः ।
तूष्णीमासीत्ततः पार्थमित्युवाच जनार्दनः ॥ ०३७ ॥

ममैव त्वं तवैवाहं ये मदीयास्तवैव ते ।
यस्त्वां द्वेष्टि स मां द्वेष्टि यस्त्वामनु स मामनु ॥ ०३८ ॥

नरस्त्वमसि दुर्धर्ष हरिर्नारायणो ह्यहम् ।
लोकाल्लोकमिमं प्राप्तौ नरनारायणावृषी ॥ ०३९ ॥

अनन्यः पार्थ मत्तस्त्वमहं त्वत्तश्च भारत ।
नावयोरन्तरं शक्यं वेदितुं भरतर्षभ ॥ ०४० ॥

तस्मिन्वीरसमावाये संरब्धेष्वथ राजसु ।
धृष्टद्युम्नमुखैर्वीरैर्भ्रातृभिः परिवारिता ॥ ०४१ ॥

पाञ्चाली पुण्डरीकाक्षमासीनं यादवैः सह ।
अभिगम्याब्रवीत्कृष्णा शरण्यं शरणैषिणी ॥ ०४२ ॥

पूर्वे प्रजानिसर्गे त्वामाहुरेकं प्रजापतिम् ।
स्रष्टारं सर्वभूतानामसितो देवलोऽब्रवीत् ॥ ०४३ ॥

विष्णुस्त्वमसि दुर्धर्ष त्वं यज्ञो मधुसूदन ।
यष्टा त्वमसि यष्टव्यो जामदग्न्यो यथाब्रवीत् ॥ ०४४ ॥

ऋषयस्त्वां क्षमामाहुः सत्यं च पुरुषोत्तम ।
सत्याद्यज्ञोऽसि संभूतः कश्यपस्त्वां यथाब्रवीत्  ॥ ०४५  ॥

साध्यानामपि देवानां वसूनामीश्वरेश्वरः ।
लोकभावन लोकेश यथा त्वां नारदोऽब्रवीत्  ॥ ०४६  ॥

दिवं ते शिरसा व्याप्तं पद्भ्यां च पृथिवी विभो ।
जठरं ते इमे लोकाः पुरुषोऽसि सनातनः  ॥ ०४७  ॥

विद्यातपोऽभितप्तानां तपसा भावितात्मनाम् ।
आत्मदर्शनसिद्धानामृषीणामृषिसत्तम  ॥ ०४८  ॥

राजर्षीणां पुण्यकृतामाहवेष्वनिवर्तिनाम् ।
सर्वधर्मोपपन्नानां त्वं गतिः पुरुषोत्तम  ॥ ०४९  ॥

त्वं प्रभुस्त्वं विभुस्त्वं भूरात्मभूस्त्वं सनातनः ।
लोकपालाश्च लोकाश्च नक्षत्राणि दिशो दश  ॥ ०५०  ॥

नभश्चन्द्रश्च सूर्यश्च त्वयि सर्वं प्रतिष्ठितम्  ॥ ०५०  ॥

मर्त्यता चैव भूतानाममरत्वं दिवौकसाम् ।
त्वयि सर्वं महाबाहो लोककार्यं प्रतिष्ठितम्  ॥ ०५१  ॥

सा तेऽहं दुःखमाख्यास्ये प्रणयान्मधुसूदन ।
ईशस्त्वं सर्वभूतानां ये दिव्या ये च मानुषाः  ॥ ०५२  ॥

कथं नु भार्या पार्थानां तव कृष्ण सखी विभो ।
धृष्टद्युम्नस्य भगिनी सभां कृष्येत मादृशी  ॥ ०५३  ॥

स्त्रीधर्मिणी वेपमाना रुधिरेण समुक्षिता ।
एकवस्त्रा विकृष्टास्मि दुःखिता कुरुसंसदि  ॥ ०५४  ॥

राजमध्ये सभायां तु रजसाभिसमीरिताम् ।
दृष्ट्वा च मां धार्तराष्ट्राः प्राहसन्पापचेतसः ॥ ०५५ ॥

दासीभावेन भोक्तुं मामीषुस्ते मधुसूदन ।
जीवत्सु पाण्डुपुत्रेषु पाञ्चालेष्वथ वृष्णिषु ॥ ०५६ ॥

नन्वहं कृष्ण भीष्मस्य धृतराष्ट्रस्य चोभयोः ।
स्नुषा भवामि धर्मेण साहं दासीकृता बलात् ॥ ०५७ ॥

गर्हये पाण्डवांस्त्वेव युधि श्रेष्ठान्महाबलान् ।
ये क्लिश्यमानां प्रेक्षन्ते धर्मपत्नीं यशस्विनीम् ॥ ०५८ ॥

धिग्बलं भीमसेनस्य धिक्पार्थस्य धनुष्मताम् ।
यौ मां विप्रकृतां क्षुद्रैर्मर्षयेतां जनार्दन ॥ ०५९ ॥

शाश्वतोऽयं धर्मपथः सद्भिराचरितः सदा ।
यद्भार्यां परिरक्षन्ति भर्तारोऽल्पबला अपि ॥ ०६० ॥

भार्यायां रक्ष्यमाणायां प्रजा भवति रक्षिता ।
प्रजायां रक्ष्यमाणायामात्मा भवति रक्षितः ॥ ०६१ ॥

आत्मा हि जायते तस्यां तस्माज्जाया भवत्युत ।
भर्ता च भार्यया रक्ष्यः कथं जायान्ममोदरे ॥ ०६२ ॥

नन्विमे शरणं प्राप्तान्न त्यजन्ति कदाचन ।
ते मां शरणमापन्नां नान्वपद्यन्त पाण्डवाः ॥ ०६३ ॥

पञ्चेमे पञ्चभिर्जाताः कुमाराश्चामितौजसः ।
एतेषामप्यवेक्षार्थं त्रातव्यास्मि जनार्दन ॥ ०६४ ॥

प्रतिविन्ध्यो युधिष्ठिरात्सुतसोमो वृकोदरात् ।
अर्जुनाच्छ्रुतकीर्तिस्तु शतानीकस्तु नाकुलिः ॥ ०६५ ॥

कनिष्ठाच्छ्रुतकर्मा तु सर्वे सत्यपराक्रमाः ।
प्रद्युम्नो यादृशः कृष्ण तादृशास्ते महारथाः ॥ ०६६ ॥

नन्विमे धनुषि श्रेष्ठा अजेया युधि शात्रवैः ।
किमर्थं धार्तराष्ट्राणां सहन्ते दुर्बलीयसाम् ॥ ०६७ ॥

अधर्मेण हृतं राज्यं सर्वे दासाः कृतास्तथा ।
सभायां परिकृष्टाहमेकवस्त्रा रजस्वला ॥ ०६८ ॥

नाधिज्यमपि यच्छक्यं कर्तुमन्येन गाण्डिवम् ।
अन्यत्रार्जुनभीमाभ्यां त्वया वा मधुसूदन ॥ ०६९ ॥

धिग्भीमसेनस्य बलं धिक्पार्थस्य च गाण्डिवम् ।
यत्र दुर्योधनः कृष्ण मुहूर्तमपि जीवति ॥ ०७० ॥

य एतानाक्षिपद्राष्ट्रात्सह मात्राविहिंसकान् ।
अधीयानान्पुरा बालान्व्रतस्थान्मधुसूदन ॥ ०७१ ॥

भोजने भीमसेनस्य पापः प्राक्षेपयद्विषम् ।
कालकूटं नवं तीक्ष्णं संभृतं लोमहर्षणम् ॥ ०७२ ॥

तज्जीर्णमविकारेण सहान्नेन जनार्दन ।
सशेषत्वान्महाबाहो भीमस्य पुरुषोत्तम ॥ ०७३ ॥

प्रमाणकोट्यां विश्वस्तं तथा सुप्तं वृकोदरम् ।
बद्ध्वैनं कृष्ण गङ्गायां प्रक्षिप्य पुनराव्रजत् ॥ ०७४ ॥

यदा विबुद्धः कौन्तेयस्तदा संछिद्य बन्धनम् ।

उदतिष्ठन्महाबाहुर्भीमसेनो महाबलः ॥ ०७५ ॥

आशीविषैः कृष्णसर्पैः सुप्तं चैनमदंशयत् ।
सर्वेष्वेवाङ्गदेशेषु न ममार च शत्रुहा ॥ ०७६ ॥

प्रतिबुद्धस्तु कौन्तेयः सर्वान्सर्पानपोथयत् ।
सारथिं चास्य दयितमपहस्तेन जघ्निवान् ॥ ०७७ ॥

पुनः सुप्तानुपाधाक्षीद्बालकान्वारणावते ।
शयानानार्यया सार्धं को नु तत्कर्तुमर्हति ॥ ०७८ ॥

यत्रार्या रुदती भीता पाण्डवानिदमब्रवीत् ।
महद्व्यसनमापन्ना शिखिना परिवारिता ॥ ०७९ ॥

हा हतास्मि कुतो न्वद्य भवेच्छान्तिरिहानलात् ।
अनाथा विनशिष्यामि बालकैः पुत्रकैः सह ॥ ०८० ॥

तत्र भीमो महाबाहुर्वायुवेगपराक्रमः ।
आर्यामाश्वासयामास भ्रातॄंश्चापि वृकोदरः ॥ ०८१ ॥

वैनतेयो यथा पक्षी गरुडः पततां वरः ।
तथैवाभिपतिष्यामि भयं वो नेह विद्यते ॥ ०८२ ॥

आर्यामङ्केन वामेन राजानं दक्षिणेन च ।
अंसयोश्च यमौ कृत्वा पृष्ठे बीभत्सुमेव च ॥ ०८३ ॥

सहसोत्पत्य वेगेन सर्वानादाय वीर्यवान् ।
भ्रातॄनार्यां च बलवान्मोक्षयामास पावकात् ॥ ०८४ ॥

ते रात्रौ प्रस्थिताः सर्वे मात्रा सह यशस्विनः ।
अभ्यगच्छन्महारण्यं हिडिम्बवनमन्तिकात् ॥ ०८५ ॥

श्रान्ताः प्रसुप्तास्तत्रेमे मात्रा सह सुदुःखिताः ।
सुप्तांश्चैनानभ्यगच्छद्धिडिम्बा नाम राक्षसी ॥ ०८६ ॥

भीमस्य पादौ कृत्वा तु स्व उत्सङ्गे ततो बलात् ।
पर्यमर्दत संहृष्टा कल्याणी मृदुपाणिना ॥ ०८७ ॥

तामबुध्यदमेयात्मा बलवान्सत्यविक्रमः ।
पर्यपृच्छच्च तां भीमः किमिहेच्छस्यनिन्दिते ॥ ०८८ ॥

तयोः श्रुत्वा तु कथितमागच्छद्राक्षसाधमः ।
भीमरूपो महानादान्विसृजन्भीमदर्शनः ॥ ०८९ ॥

केन सार्धं कथयसि आनयैनं ममान्तिकम् ।
हिडिम्बे भक्षयिष्यावो न चिरं कर्तुमर्हसि ॥ ०९० ॥

सा कृपासङ्गृहीतेन हृदयेन मनस्विनी ।
नैनमैच्छत्तदाख्यातुमनुक्रोशादनिन्दिता ॥ ०९१ ॥

स नादान्विनदन्घोरान्राक्षसः पुरुषादकः ।
अभ्यद्रवत वेगेन भीमसेनं तदा किल ॥ ०९२ ॥

तमभिद्रुत्य सङ्क्रुद्धो वेगेन महता बली ।
अगृह्णात्पाणिना पाणिं भीमसेनस्य राक्षसः ॥ ०९३ ॥

इन्द्राशनिसमस्पर्शं वज्रसंहननं दृढम् ।
संहत्य भीमसेनाय व्याक्षिपत्सहसा करम् ॥ ०९४ ॥

गृहीतं पाणिना पाणिं भीमसेनोऽथ रक्षसा ।
नामृष्यत महाबाहुस्तत्राक्रुध्यद्वृकोदरः ॥ ०९५ ॥

तत्रासीत्तुमुलं युद्धं भीमसेनहिडिम्बयोः ।
सर्वास्त्रविदुषोर्घोरं वृत्रवासवयोरिव ॥ ०९६ ॥

हत्वा हिडिम्बं भीमोऽथ प्रस्थितो भ्रातृभिः सह ।
हिडिम्बामग्रतः कृत्वा यस्यां जातो घटोत्कचः ॥ ०९७ ॥

ततश्च प्राद्रवन्सर्वे सह मात्रा यशस्विनः ।
एकचक्रामभिमुखाः संवृता ब्राह्मणव्रजैः ॥ ०९८ ॥

प्रस्थाने व्यास एषां च मन्त्री प्रियहितोऽभवत् ।
ततोऽगच्छन्नेकचक्रां पाण्डवाः संशितव्रताः ॥ ०९९ ॥

तत्राप्यासादयामासुर्बकं नाम महाबलम् ।
पुरुषादं प्रतिभयं हिडिम्बेनैव संमितम् ॥ १०० ॥

तं चापि विनिहत्योग्रं भीमः प्रहरतां वरः ।
सहितो भ्रातृभिः सर्वैर्द्रुपदस्य पुरं ययौ ॥ १०१ ॥

लब्धाहमपि तत्रैव वसता सव्यसाचिना ।
यथा त्वया जिता कृष्ण रुक्मिणी भीष्मकात्मजा ॥ १०२ ॥

एवं सुयुद्धे पार्थेन जिताहं मधुसूदन ।
स्वयंवरे महत्कर्म कृत्वा नसुकरं परैः ॥ १०३ ॥

एवं क्लेशैः सुबहुभिः क्लिश्यमानाः सुदुःखिताः ।
निवसामार्यया हीनाः कृष्ण धौम्यपुरःसराः ॥ १०४ ॥

त इमे सिंहविक्रान्ता वीर्येणाभ्यधिकाः परैः ।
विहीनैः परिक्लिश्यन्तीं समुपेक्षन्त मां कथम् ॥ १०५ ॥

एतादृशानि दुःखानि सहन्ते दुर्बलीयसाम् ।

दीर्घकालं प्रदीप्तानि पापानां क्षुद्रकर्मणाम् ॥ १०६ ॥

कुले महति जातास्मि दिव्येन विधिना किल ।
पाण्डवानां प्रिया भार्या स्नुषा पाण्डोर्महात्मनः ॥ १०७ ॥

कचग्रहमनुप्राप्ता सास्मि कृष्ण वरा सती ।
पञ्चानामिन्द्रकल्पानां प्रेक्षतां मधुसूदन ॥ १०८ ॥

इत्युक्त्वा प्रारुदत्कृष्णा मुखं प्रच्छाद्य पाणिना ।
पद्मकोशप्रकाशेन मृदुना मृदुभाषिणी ॥ १०९ ॥

स्तनावपतितौ पीनौ सुजातौ शुभलक्षणौ ।
अभ्यवर्षत पाञ्चाली दुःखजैरश्रुबिन्दुभिः ॥ ११० ॥

चक्षुषी परिमार्जन्ती निःश्वसन्ती पुनः पुनः ।
बाष्पपूर्णेन कण्ठेन क्रुद्धा वचनमब्रवीत् ॥ १११ ॥

नैव मे पतयः सन्ति न पुत्रा मधुसूदन ।
न भ्रातरो न च पिता नैव त्वं न च बान्धवाः ॥ ११२ ॥

ये मां विप्रकृतां क्षुद्रैरुपेक्षध्वं विशोकवत् ।
न हि मे शाम्यते दुःखं कर्णो यत्प्राहसत्तदा ॥ ११३ ॥

अथैनामब्रवीत्कृष्णस्तस्मिन्वीरसमागमे ।
रोदिष्यन्ति स्त्रियो ह्येवं येषां क्रुद्धासि भामिनि ॥ ११४ ॥

बीभत्सुशरसंछन्नाञ्शोणितौघपरिप्लुतान् ।
निहताञ्जीवितं त्यक्त्वा शयानान्वसुधातले ॥ ११५ ॥

यत्समर्थं पाण्डवानां तत्करिष्यामि मा शुचः ।
सत्यं ते प्रतिजानामि राज्ञां राज्ञी भविष्यसि ॥ ११६ ॥

पतेद्द्यौर्हिमवाञ्शीर्येत्पृथिवी शकलीभवेत् ।
शुष्येत्तोयनिधिः कृष्णे न मे मोघं वचो भवेत् ॥ ११७ ॥

धृष्टद्युम्न उवाच ॥

अहं द्रोणं हनिष्यामि शिखण्डी तु पितामहम् ।
दुर्योधनं भीमसेनः कर्णं हन्ता धनञ्जयः ॥ ११८ ॥

रामकृष्णौ व्यपाश्रित्य अजेयाः स्म शुचिस्मिते ।
अपि वृत्रहणा युद्धे किं पुनर्धृतराष्ट्रजैः ॥ ११९ ॥

वैशंपायन उवाच ॥

इत्युक्तेऽभिमुखा वीरा वासुदेवमुपस्थिता ।
तेषां मध्ये महाबाहुः केशवो वाक्यमब्रवीत् ॥ १२० ॥

---

# अध्याय ०१४

वासुदेव उवाच ॥

नेदं कृच्छ्रमनुप्राप्तो भवान्स्याद्वसुधाधिप ।
यद्यहं द्वारकायां स्यां राजन्संनिहितः पुरा ॥ ००१ ॥

आगच्छेयमहं द्यूतमनाहूतोऽपि कौरवैः ।
आम्बिकेयेन दुर्धर्ष राज्ञा दुर्योधनेन च ॥ ००२ ॥

वारयेयमहं द्यूतं बहून्दोषान्प्रदर्शयन् ।

भीष्मद्रोणौ समानाय्य कृपं बाह्लीकमेव च  ॥ ००३  ॥

वैचित्रवीर्यं राजानमलं द्यूतेन कौरव ।
पुत्राणां तव राजेन्द्र त्वन्निमित्तमिति प्रभो  ॥ ००४  ॥

तत्र वक्ष्याम्यहं दोषान्यैर्भवानवरोपितः ।
वीरसेनसुतो यैश्च राज्यात्प्रभ्रंशितः पुरा  ॥ ००५  ॥

अभक्षितविनाशं च देवनेन विशां पते ।
सातत्यं च प्रसङ्गस्य वर्णयेयं यथातथम्  ॥ ००६  ॥

स्त्रियोऽक्षा मृगया पानमेतत्कामसमुत्थितम् ।
व्यसनं चतुष्टयं प्रोक्तं यै राजन्भ्रश्यते श्रियः  ॥ ००७  ॥

तत्र सर्वत्र वक्तव्यं मन्यन्ते शास्त्रकोविदाः ।
विशेषतश्च वक्तव्यं द्यूते पश्यन्ति तद्विदः  ॥ ००८  ॥

एकाह्ना द्रव्यनाशोऽत्र ध्रुवं व्यसनमेव च ।
अभुक्तनाशश्चार्थानां वाक्पारुष्यं च केवलम्  ॥ ००९  ॥

एतच्चान्यच्च कौरव्य प्रसङ्गि कटुकोदयम् ।
द्यूते ब्रूयां महाबाहो समासाद्याम्बिकासुतम्  ॥ ०१०  ॥

एवमुक्तो यदि मया गृह्णीयाद्वचनं मम ।
अनामयं स्याद्धर्मस्य कुरूणां कुरुनन्दन  ॥ ०११  ॥

न चेत्स मम राजेन्द्र गृह्णीयान्मधुरं वचः ।
पथ्यं च भरतश्रेष्ठ निगृह्णीयां बलेन तम्  ॥ ०१२  ॥

अथैनानभिनीयैवं सुहृदो नाम दुर्हृदः ।
सभासदश्च तान्सर्वान्भेदयेयं दुरोदरान्  ॥ ०१३  ॥

असांनिध्यं तु कौरव्य ममानर्तेष्वभूत्तदा ।
येनेदं व्यसनं प्राप्ता भवन्तो द्यूतकारितम्  ॥ ०१४  ॥

सोऽहमेत्य कुरुश्रेष्ठ द्वारकां पाण्डुनन्दन ।
अश्रौषं त्वां व्यसनिनं युयुधानाद्यथातथम्  ॥ ०१५  ॥

श्रुत्वैव चाहं राजेन्द्र परमोद्विग्नमानसः ।
तूर्णमभ्यागतोऽस्मि त्वां द्रष्टुकामो विशां पते  ॥ ०१६  ॥

अहो कृच्छ्रमनुप्राप्ताः सर्वे स्म भरतर्षभ ।
ये वयं त्वां व्यसनिनं पश्यामः सह सोदरैः  ॥ ०१७  ॥

---

# सौभवधोपाख्यानम्

## अध्याय ०१५

युधिष्ठिर उवाच  ॥

असांनिध्यं कथं कृष्ण तवासीद्वृष्णिनन्दन ।
क्व चासीद्विप्रवासस्ते किं वाकार्षीः प्रवासकः  ॥ ००१  ॥

कृष्ण उवाच  ॥

शाल्वस्य नगरं सौभं गतोऽहं भरतर्षभ ।
विनिहन्तुं नरश्रेष्ठ तत्र मे शृणु कारणम्  ॥ ००२  ॥

महातेजा महाबाहुर्यः स राजा महायशाः ।
दमघोषात्मजो वीरः शिशुपालो मया हतः ॥ ००३ ॥

यज्ञे ते भरतश्रेष्ठ राजसूयेऽर्हणां प्रति ।
स रोषवशसंप्राप्तो नामृष्यत दुरात्मवान् ॥ ००४ ॥

श्रुत्वा तं निहतं शाल्वस्तीव्ररोषसमन्वितः ।
उपायाद्द्वारकां शून्यामिहस्थे मयि भारत ॥ ००५ ॥

स तत्र योधितो राजन्बालकैर्वृष्णिपुङ्गवैः ।
आगतः कामगं सौभमारुह्यैव नृशंसकृत् ॥ ००६ ॥

ततो वृष्णिप्रवीरांस्तान्बालान्हत्वा बहूंस्तदा ।
पुरोद्यानानि सर्वाणि भेदयामास दुर्मतिः ॥ ००७ ॥

उक्तवांश्च महाबाहो क्वासौ वृष्णिकुलाधमः ।
वासुदेवः सुमन्दात्मा वसुदेवसुतो गतः ॥ ००८ ॥

तस्य युद्धार्थिनो दर्पं युद्धे नाशयितास्म्यहम् ।
आनर्ताः सत्यमाख्यात तत्र गन्तास्मि यत्र सः ॥ ००९ ॥

तं हत्वा विनिवर्तिष्ये कंसकेशिनिषूदनम् ।
अहत्वा न निवर्तिष्ये सत्येनायुधमालभे ॥ ०१० ॥

क्वासौ क्वासाविति पुनस्तत्र तत्र विधावति ।
मया किल रणे युद्धं काङ्क्षमाणः स सौभराट् ॥ ०११ ॥

अद्य तं पापकर्माणं क्षुद्रं विश्वासघातिनम् ।
शिशुपालवधामर्षाद्गमयिष्ये यमक्षयम् ॥ ०१२ ॥

मम पापस्वभावेन भ्राता येन निपातितः ।

शिशुपालो महीपालस्तं वधिष्ये महीतले ॥ ०१३ ॥

भ्राता बालश्च राजा च न च सङ्ग्राममूर्धनि ।
प्रमत्तश्च हतो वीरस्तं हनिष्ये जनार्दनम् ॥ ०१४ ॥

एवमादि महाराज विलप्य दिवमास्थितः ।
कामगेन स सौभेन क्षिप्त्वा मां कुरुनन्दन ॥ ०१५ ॥

तमश्रौषमहं गत्वा यथा वृत्तः सुदुर्मतिः ।
मयि कौरव्य दुष्टात्मा मार्त्तिकावतको नृपः ॥ ०१६ ॥

ततोऽहमपि कौरव्य रोषव्याकुललोचनः ।
निश्चित्य मनसा राजन्वधायास्य मनो दधे ॥ ०१७ ॥

आनर्तेषु विमर्दं च क्षेपं चात्मनि कौरव ।
प्रवृद्धमवलेपं च तस्य दुष्कृतकर्मणः ॥ ०१८ ॥

ततः सौभवधायाहं प्रतस्थे पृथिवीपते ।
स मया सागरावर्ते दृष्ट आसीत्परीप्सता ॥ ०१९ ॥

ततः प्रध्माप्य जलजं पाञ्चजन्यमहं नृप ।
आहूय शाल्वं समरे युद्धाय समवस्थितः ॥ ०२० ॥

सुमुहूर्तमभूद्युद्धं तत्र मे दानवैः सह ।
वशीभूताश्च मे सर्वे भूतले च निपातिताः ॥ ०२१ ॥

एतत्कार्यं महाबाहो येनाहं नागमं तदा ।
श्रुत्वैव हास्तिनपुरं द्यूतं चाविनयोत्थितम् ॥ ०२२ ॥

# अध्याय ०१६

युधिष्ठिर उवाच ॥

वासुदेव महाबाहो विस्तरेण महामते ।
सौभस्य वधमाचक्ष्व न हि तृप्यामि कथ्यतः ॥ ००१ ॥

वासुदेव उवाच ॥

हतं श्रुत्वा महाबाहो मया श्रौतश्रवं नृपम् ।
उपायाद्भरतश्रेष्ठ शाल्वो द्वारवतीं पुरीम् ॥ ००२ ॥

अरुन्धत्तां सुदुष्टात्मा सर्वतः पाण्डुनन्दन ।
शाल्वो वैहायसं चापि तत्पुरं व्यूह्य विष्ठितः ॥ ००३ ॥

तत्रस्थोऽथ महीपालो योधयामास तां पुरीम् ।
अभिसारेण सर्वेण तत्र युद्धमवर्तत ॥ ००४ ॥

पुरी समन्ताद्विहिता सपताका सतोरणा ।
सचक्रा सहुडा चैव सयन्त्रखनका तथा ॥ ००५ ॥

सोपतल्पप्रतोलीका साट्टाट्टालकगोपुरा ।
सकचग्रहणी चैव सोल्कालातावपोथिका ॥ ००६ ॥

सोष्ट्रिका भरतश्रेष्ठ सभेरीपणवानका ।
समित्तृणकुशा राजन्सशतघ्नीकलाङ्गला ॥ ००७ ॥

सभुशुण्ड्यश्मलगुडा सायुधा सपरश्वधा ।
लोहचर्मवती चापि साग्निः सहुडश्रृङ्गिका ॥ ००८ ॥

शास्त्रदृष्टेन विधिना संयुक्ता भरतर्षभ ।

द्रव्यैरनेकैर्विविधैर्गदसाम्बोद्धवादिभिः ॥ ००९ ॥

पुरुषैः कुरुशार्दूल समर्थैः प्रतिबाधने ।
अभिख्यातकुलैर्वीरैर्दृष्टवीर्यैश्च संयुगे ॥ ०१० ॥

मध्यमेन च गुल्मेन रक्षिता सारसञ्ज्ञिता ।
उत्क्षिप्तगुल्मैश्च तथा हयैश्चैव पदातिभिः ॥ ०११ ॥

आघोषितं च नगरे न पातव्या सुरेति ह ।
प्रमादं परिरक्षद्भिरुग्रसेनोद्धवादिभिः ॥ ०१२ ॥

प्रमत्तेष्वभिघातं हि कुर्याच्छाल्वो नराधिपः ।
इति कृत्वाप्रमत्तास्ते सर्वे वृष्ण्यन्धकाः स्थिताः ॥ ०१३ ॥

आनर्ताश्च तथा सर्वे नटनर्तकगायनाः ।
बहिर्विवासिताः सर्वे रक्षद्भिर्वित्तसञ्चयान् ॥ ०१४ ॥

सङ्क्रमा भेदिताः सर्वे नावश्च प्रतिषेधिताः ।
परिखाश्चापि कौरव्य कीलैः सुनिचिताः कृताः ॥ ०१५ ॥

उदपानाः कुरुश्रेष्ठ तथैवाप्यम्बरीषकाः ।
समन्तात्क्रोशमात्रं च कारिता विषमा च भूः ॥ ०१६ ॥

प्रकृत्या विषमं दुर्गं प्रकृत्या च सुरक्षितम् ।
प्रकृत्या चायुधोपेतं विशेषेण तदानघ ॥ ०१७ ॥

सुरक्षितं सुगुप्तं च सर्वायुधसमन्वितम् ।
तत्पुरं भरतश्रेष्ठ यथेन्द्रभवनं तथा ॥ ०१८ ॥

न चामुद्रोऽभिनिर्याति न चामुद्रः प्रवेश्यते ।
वृष्ण्यन्धकपुरे राजंस्तदा सौभसमागमे ॥ ०१९ ॥

अनु रथ्यासु सर्वासु चत्वरेषु च कौरव ।
बलं बभूव राजेन्द्र प्रभूतगजवाजिमत्  ॥ ०२०  ॥

दत्तवेतनभक्तं च दत्तायुधपरिच्छदम् ।
कृतापदानं च तदा बलमासीन्महाभुज  ॥ ०२१  ॥

न कुप्यवेतनी कश्चिन्न चातिक्रान्तवेतनी ।
नानुग्रहभृतः कश्चिन्न चादृष्टपराक्रमः  ॥ ०२२  ॥

एवं सुविहिता राजन्द्वारका भूरिदक्षिणैः ।
आहुकेन सुगुप्ता च राज्ञा राजीवलोचन  ॥ ०२३  ॥

---

# अध्याय ०१७

वासुदेव उवाच  ॥

तां तूपयात्वा राजेन्द्र शाल्वः सौभपतिस्तदा ।
प्रभूतनरनागेन बलेनोपविवेश ह  ॥ ००१  ॥

समे निविष्टा सा सेना प्रभूतसलिलाशये ।
चतुरङ्गबलोपेता शाल्वराजाभिपालिता  ॥ ००२  ॥

वर्जयित्वा श्मशानानि देवतायतनानि च ।
वल्मीकांश्चैव चैत्यांश्च तन्निविष्टमभूद्बलम्  ॥ ००३  ॥

अनीकानां विभागेन पन्थानः षट्कृताभवन् ।
प्रवणा नव चैवासञ्शाल्वस्य शिबिरे नृप  ॥ ००४  ॥

सर्वायुधसमोपेतं सर्वशस्त्रविशारदम् ।
रथनागाश्वकलिलं पदातिध्वजसङ्कुलम्  ॥ ००५  ॥

तुष्टपुष्टजनोपेतं वीरलक्षणलक्षितम् ।
विचित्रध्वजसंनाहं विचित्ररथकार्मुकम्  ॥ ००६  ॥

संनिवेश्य च कौरव्य द्वारकायां नरर्षभ ।
अभिसारयामास तदा वेगेन पतगेन्द्रवत्  ॥ ००७  ॥

तदापतन्तं संदृश्य बलं शाल्वपतेस्तदा ।
निर्याय योधयामासुः कुमारा वृष्णिनन्दनाः  ॥ ००८  ॥

असहन्तोऽभियानं तच्छाल्वराजस्य कौरव ।
चारुदेष्णश्च साम्बश्च प्रद्युम्नश्च महारथः  ॥ ००९  ॥

ते रथैर्दंशिताः सर्वे विचित्राभरणध्वजाः ।
संसक्ताः शाल्वराजस्य बहुभिर्योधपुङ्गवैः  ॥ ०१०  ॥

गृहीत्वा तु धनुः साम्बः शाल्वस्य सचिवं रणे ।
योधयामास संहृष्टः क्षेमवृद्धिं चमूपतिम्  ॥ ०११  ॥

तस्य बाणमयं वर्षं जाम्बवत्याः सुतो महत् ।
मुमोच भरतश्रेष्ठ यथा वर्षं सहस्रदृक्  ॥ ०१२  ॥

तद्बाणवर्षं तुमुलं विषेहे स चमूपतिः ।
क्षेमवृद्धिर्महाराज हिमवानिव निश्चलः  ॥ ०१३  ॥

ततः साम्बाय राजेन्द्र क्षेमवृद्धिरपि स्म ह ।
मुमोच मायाविहितं शरजालं महत्तरम्  ॥ ०१४  ॥

ततो मायामयं जालं माययैव विदार्य सः ।
साम्बः शरसहस्रेण रथमस्याभ्यवर्षत ॥ ०१५ ॥

ततः स विद्धः साम्बेन क्षेमवृद्धिश्चमूपतिः ।
अपायाज्जवनैरश्वैः साम्बबाणप्रपीडितः ॥ ०१६ ॥

तस्मिन्विप्रद्रुते क्रूरे शाल्वस्याथ चमूपतौ ।
वेगवान्नाम दैतेयः सुतं मेऽभ्यद्रवद्बली ॥ ०१७ ॥

अभिपन्नस्तु राजेन्द्र साम्बो वृष्णिकुलोद्वहः ।
वेगं वेगवतो राजंस्तस्थौ वीरो विधारयन् ॥ ०१८ ॥

स वेगवति कौन्तेय साम्बो वेगवतीं गदाम् ।
चिक्षेप तरसा वीरो व्याविध्य सत्यविक्रमः ॥ ०१९ ॥

तया त्वभिहतो राजन्वेगवानपतद्भुवि ।
वातरुग्ण इव क्षुण्णो जीर्णमूलो वनस्पतिः ॥ ०२० ॥

तस्मिन्निपतिते वीरे गदानुन्ने महासुरे ।
प्रविश्य महतीं सेनां योधयामास मे सुतः ॥ ०२१ ॥

चारुदेष्णेन संसक्तो विविन्ध्यो नाम दानवः ।
महारथः समाज्ञातो महाराज महाधनुः ॥ ०२२ ॥

ततः सुतुमुलं युद्धं चारुदेष्णविविन्ध्ययोः ।
वृत्रवासवयो राजन्यथा पूर्वं तथाभवत् ॥ ०२३ ॥

अन्योन्यस्याभिसङ्क्रुद्धावन्योन्यं जघ्नतुः शरैः ।
विनदन्तौ महाराज सिंहाविव महाबलौ ॥ ०२४ ॥

रौक्मिणेयस्ततो बाणमग्न्यर्कोपमवर्चसम् ।

अभिमन्त्र्य महास्त्रेण संदधे शत्रुनाशनम् ॥ ०२५ ॥

स विविन्ध्याय सक्रोधः समाहूय महारथः ।
चिक्षेप मे सुतो राजन्स गतासुरथापतत् ॥ ०२६ ॥

विविन्ध्यं निहतं दृष्ट्वा तां च विक्षोभितां चमूम् ।
कामगेन स सौभेन शाल्वः पुनरुपागमत् ॥ ०२७ ॥

ततो व्याकुलितं सर्वं द्वारकावासि तद्बलम् ।
दृष्ट्वा शाल्वं महाबाहो सौभस्थं पृथिवीगतम् ॥ ०२८ ॥

ततो निर्याय कौन्तेय व्यवस्थाप्य च तद्बलम् ।
आनर्तानां महाराज प्रद्युम्नो वाक्यमब्रवीत् ॥ ०२९ ॥

सर्वे भवन्तस्तिष्ठन्तु सर्वे पश्यन्तु मां युधि ।
निवारयन्तं सङ्ग्रामे बलात्सौभं सराजकम् ॥ ०३० ॥

अहं सौभपतेः सेनामायसैर्भुजगैरिव ।
धनुर्भुजविनिर्मुक्तैर्नाशयाम्यद्य यादवाः ॥ ०३१ ॥

आश्वसध्वं न भीः कार्या सौभराडद्य नश्यति ।
मयाभिपन्नो दुष्टात्मा ससौभो विनशिष्यति ॥ ०३२ ॥

एवं ब्रुवति संहृष्टे प्रद्युम्ने पाण्डुनन्दन ।
विष्ठितं तद्बलं वीर युयुधे च यथासुखम् ॥ ०३३ ॥

# अध्याय ०१८

वासुदेव उवाच ॥

एवमुक्त्वा रौक्मिणेयो यादवान्भरतर्षभ ।
दंशितैर्हरिभिर्युक्तं रथमास्थाय काञ्चनम् ॥ ००१ ॥

उच्छ्रित्य मकरं केतुं व्यात्ताननमलङ्कृतम् ।
उत्पतद्भिरिवाकाशं तैर्हयैरन्वयात्परान् ॥ ००२ ॥

विक्षिपन्नादयंश्चापि धनुःश्रेष्ठं महाबलः ।
तूणखड्गधरः शूरो बद्धगोधाङ्गुलित्रवान् ॥ ००३ ॥

स विद्युच्चलितं चापं विहरन्वै तलात्तलम् ।
मोहयामास दैतेयान्सर्वान्सौभनिवासिनः ॥ ००४ ॥

नास्य विक्षिपतश्चापं संदधानस्य चासकृत् ।
अन्तरं ददृशे कश्चिन्निघ्नतः शात्रवान्रणे ॥ ००५ ॥

मुखस्य वर्णो न विकल्पतेऽस्य ; चेलुश्च गात्राणि न चापि तस्य ।
सिंहोन्नतं चाप्यभिगर्जतोऽस्य ; शुश्राव लोकोऽद्भुतरूपमग्र्यम् ॥ ००६ ॥

जलेचरः काञ्चनयष्टिसंस्थो ; व्यात्ताननः सर्वतिमिप्रमाथी ।
वित्रासयन्राजति वाहमुख्ये ; शाल्वस्य सेनाप्रमुखे ध्वजाग्र्यः ॥ ००७ ॥

ततः स तूर्णं निष्पत्य प्रद्युम्नः शत्रुकर्शनः ।
शाल्वमेवाभिदुद्राव विधास्यन्कलहं नृप ॥ ००८ ॥

अभियानं तु वीरेण प्रद्युम्नेन महाहवे ।
नामर्षयत सङ्क्रुद्धः शाल्वः कुरुकुलोद्वह ॥ ००९ ॥

स रोषमदमत्तो वै कामगादवरुह्य च ।
प्रद्युम्नं योधयामास शाल्वः परपुरञ्जयः ॥ ०१० ॥

तयोः सुतुमुलं युद्धं शाल्ववृष्णिप्रवीरयोः ।
समेता ददृशुर्लोका बलिवासवयोरिव ॥ ०११ ॥

तस्य मायामयो वीर रथो हेमपरिष्कृतः ।
सध्वजः सपताकश्च सानुकर्षः सतूणवान् ॥ ०१२ ॥

स तं रथवरं श्रीमान्समारुह्य किल प्रभो ।
मुमोच बाणान्कौरव्य प्रद्युम्नाय महाबलः ॥ ०१३ ॥

ततो बाणमयं वर्षं व्यसृजत्तरसा रणे ।
प्रद्युम्नो भुजवेगेन शाल्वं संमोहयन्निव ॥ ०१४ ॥

स तैरभिहतः संख्ये नामर्षयत सौभराट् ।
शरान्दीप्ताग्निसङ्काशान्मुमोच तनये मम ॥ ०१५ ॥

स शाल्वबाणै राजेन्द्र विद्धो रुक्मिणिनन्दनः ।
मुमोच बाणं त्वरितो मर्मभेदिनमाहवे ॥ ०१६ ॥

तस्य वर्म विभिद्याशु स बाणो मत्सुतेरितः ।
बिभेद हृदयं पत्री स पपात मुमोह च ॥ ०१७ ॥

तस्मिन्निपतिते वीरे शाल्वराजे विचेतसि ।
संप्राद्रवन्दानवेन्द्रा दारयन्तो वसुंधराम् ॥ ०१८ ॥

हाहाकृतमभूत्सैन्यं शाल्वस्य पृथिवीपते ।
नष्टसञ्ज्ञे निपतिते तदा सौभपतौ नृप ॥ ०१९ ॥

तत उत्थाय कौरव्य प्रतिलभ्य च चेतनाम् ।

मुमोच बाणं तरसा प्रद्युम्नाय महाबलः ॥ ०२० ॥

तेन विद्धो महाबाहुः प्रद्युम्नः समरे स्थितः ।
जत्रुदेशे भृशं वीरो व्यवासीदद्रथे तदा ॥ ०२१ ॥

तं स विद्ध्वा महाराज शाल्वो रुक्मिणिनन्दनम् ।
ननाद सिंहनादं वै नादेनापूरयन्महीम् ॥ ०२२ ॥

ततो मोहं समापन्ने तनये मम भारत ।
मुमोच बाणांस्त्वरितः पुनरन्यान्दुरासदान् ॥ ०२३ ॥

स तैरभिहतो बाणैर्बहुभिस्तेन मोहितः ।
निश्चेष्टः कौरवश्रेष्ठ प्रद्युम्नोऽभूद्रणाजिरे ॥ ०२४ ॥

---

# अध्याय ०१९

वासुदेव उवाच ॥

शाल्वबाणार्दिते तस्मिन्प्रद्युम्ने बलिनां वरे ।
वृष्णयो भग्नसङ्कल्पा विव्यथुः पृतनागताः ॥ ००१ ॥

हाहाकृतमभूत्सार्वं वृष्ण्यन्धकबलं तदा ।
प्रद्युम्ने पतिते राजन्परे च मुदिताभवन् ॥ ००२ ॥

तं तथा मोहितं दृष्ट्वा सारथिर्जवनैर्हयैः ।
रणादपाहरत्तूर्णं शिक्षितो दारुकिस्ततः ॥ ००३ ॥

नातिदूरापयाते तु रथे रथवरप्रणुत् ।

धनुर्गृहीत्वा यन्तारं लब्धसञ्ज्ञोऽब्रवीदिदम् ॥ ००४ ॥

सौते किं ते व्यवसितं कस्माद्यासि पराङ्मुखः ।
नैष वृष्णिप्रवीराणामाहवे धर्म उच्यते ॥ ००५ ॥

कच्चित्सौते न ते मोहः शाल्वं दृष्ट्वा महाहवे ।
विषादो वा रणं दृष्ट्वा ब्रूहि मे त्वं यथातथम् ॥ ००६ ॥

सूत उवाच ॥

जानार्दने न मे मोहो नापि मे भयमाविशत् ।
अतिभारं तु ते मन्ये शाल्वं केशवनन्दन ॥ ००७ ॥

सोऽपयामि शनैर्वीर बलवानेष पापकृत् ।
मोहितश्च रणे शूरो रक्ष्यः सारथिना रथी ॥ ००८ ॥

आयुष्मंस्त्वं मया नित्यं रक्षितव्यस्त्वयाप्यहम् ।
रक्षितव्यो रथी नित्यमिति कृत्वापयाम्यहम् ॥ ००९ ॥

एकश्चासि महाबाहो बहवश्चापि दानवाः ।
नसमं रौक्मिणेयाहं रणं मत्वापयाम्यहम् ॥ ०१० ॥

वासुदेव उवाच ॥

एवं ब्रुवति सूते तु तदा मकरकेतुमान् ।
उवाच सूतं कौरव्य निवर्तय रथं पुनः ॥ ०११ ॥

दारुकात्मज मैवं त्वं पुनः कार्षीः कथञ्चन ।
व्यपयानं रणात्सौते जीवतो मम कर्हिचित् ॥ ०१२ ॥

न स वृष्णिकुले जातो यो वै त्यजति सङ्गरम् ।

यो वा निपतितं हन्ति तवास्मीति च वादिनम्  ॥ ०१३  ॥

तथा स्त्रियं वै यो हन्ति वृद्धं बालं तथैव च ।
विरथं विप्रकीर्णं च भग्नशस्त्रायुधं तथा  ॥ ०१४  ॥

त्वं च सूतकुले जातो विनीतः सूतकर्मणि ।
धर्मज्ञश्चासि वृष्णीनामाहवेष्वपि दारुके  ॥ ०१५  ॥

स जानंश्चरितं कृत्स्नं वृष्णीनां पृतनामुखे ।
अपयानं पुनः सौते मैवं कार्षीः कथञ्चन  ॥ ०१६  ॥

अपयातं हतं पृष्ठे भीतं रणपलायिनम् ।
गदाग्रजो दुराधर्षः किं मां वक्ष्यति माधवः  ॥ ०१७  ॥

केशवस्याग्रजो वापि नीलवासा मदोत्कटः ।
किं वक्ष्यति महाबाहुर्बलदेवः समागतः  ॥ ०१८  ॥

किं वक्ष्यति शिनेर्नप्ता नरसिंहो महाधनुः ।
अपयातं रणात्सौते साम्बश्च समितिञ्जयः  ॥ ०१९  ॥

चारुदेष्णश्च दुर्धर्षस्तथैव गदसारणौ ।
अक्रूरश्च महाबाहुः किं मां वक्ष्यति सारथे  ॥ ०२०  ॥

शूरं संभावितं सन्तं नित्यं पुरुषमानिनम् ।
स्त्रियश्च वृष्णीवीराणां किं मां वक्ष्यन्ति सङ्गताः  ॥ ०२१  ॥

प्रद्युम्नोऽयमुपायाति भीतस्त्यक्त्वा महाहवम् ।
धिगेनमिति वक्ष्यन्ति न तु वक्ष्यन्ति साध्विति  ॥ ०२२  ॥

धिग्वाचा परिहासोऽपि मम वा मद्विधस्य वा ।
मृत्युनाभ्यधिकः सौते स त्वं मा व्यपयाः पुनः  ॥ ०२३  ॥

भारं हि मयि संन्यस्य यातो मधुनिहा हरिः ।
यज्ञं भरतसिंहस्य पार्थस्यामिततेजसः ॥ ०२४ ॥

कृतवर्मा मया वीरो निर्यास्यन्नेव वारितः ।
शाल्वं निवारयिष्येऽहं तिष्ठ त्वमिति सूतज ॥ ०२५ ॥

स च संभावयन्मां वै निवृत्तो हृदिकात्मजः ।
तं समेत्य रणं त्यक्त्वा किं वक्ष्यामि महारथम् ॥ ०२६ ॥

उपयातं दुराधर्षं शङ्खचक्रगदाधरम् ।
पुरुषं पुण्डरीकाक्षं किं वक्ष्यामि महाभुजम् ॥ ०२७ ॥

सात्यकिं बलदेवं च ये चान्येऽन्धकवृष्णयः ।
मया स्पर्धन्ति सततं किं नु वक्ष्यामि तानहम् ॥ ०२८ ॥

त्यक्त्वा रणमिमं सौते पृष्ठतोऽभ्याहतः शरैः ।
त्वयापनीतो विवशो न जीवेयं कथञ्चन ॥ ०२९ ॥

स निवर्त रथेनाशु पुनर्दारुकनन्दन ।
न चैतदेवं कर्तव्यमथापत्सु कथञ्चन ॥ ०३० ॥

न जीवितमहं सौते बहु मन्ये कदाचन ।
अपयातो रणाद्भीतः पृष्ठतोऽभ्याहतः शरैः ॥ ०३१ ॥

कदा वा सूतपुत्र त्वं जानीषे मां भयार्दितम् ।
अपयातं रणं हित्वा यथा कापुरुषं तथा ॥ ०३२ ॥

न युक्तं भवता त्यक्तुं सङ्ग्रामं दारुकात्मज ।
मयि युद्धार्थिनि भृशं स त्वं याहि यतो रणम् ॥ ०३३ ॥

# अध्याय ०२०

वासुदेव उवाच ॥

एवमुक्तस्तु कौन्तेय सूतपुत्रस्तदा मृधे ।
प्रद्युम्नमब्रवीच्छ्लक्ष्णं मधुरं वाक्यमञ्जसा ॥ ००१ ॥

न मे भयं रौक्मिणेय सङ्ग्रामे यच्छतो हयान् ।
युद्धज्ञश्चास्मि वृष्णीनां नात्र किञ्चिदतोऽन्यथा ॥ ००२ ॥

आयुष्मन्नुपदेशस्तु सारथ्ये वर्ततां स्मृतः ।
सर्वार्थेषु रथी रक्ष्यस्त्वं चापि भृशपीडितः ॥ ००३ ॥

त्वं हि शाल्वप्रयुक्तेन पत्रिणाभिहतो भृशम् ।
कश्मलाभिहतो वीर ततोऽहमपयातवान् ॥ ००४ ॥

स त्वं सात्वतमुख्याद्य लब्धसञ्ज्ञो यदृच्छया ।
पश्य मे हयसंयाने शिक्षां केशवनन्दन ॥ ००५ ॥

दारुकेणाहमुत्पन्नो यथावच्चैव शिक्षितः ।
वीतभीः प्रविशाम्येतां शाल्वस्य महतीं चमूम् ॥ ००६ ॥

एवमुक्त्वा ततो वीर हयान्सञ्चोद्य सङ्गरे ।
रश्मिभिश्च समुद्यम्य जवेनाभ्यपतत्तदा ॥ ००७ ॥

मण्डलानि विचित्राणि यमकानीतराणि च ।
सव्यानि च विचित्राणि दक्षिणानि च सर्वशः ॥ ००८ ॥

प्रतोदेनाहता राजन्रश्मिभिश्च समुद्यताः ।
उत्पतन्त इवाकाशं विबभुस्ते हयोत्तमाः ॥ ००९ ॥

ते हस्तलाघवोपेतं विज्ञाय नृप दारुकिम् ।
दह्यमाना इव तदा पस्पृशुश्चरणैर्महीम् ॥ ०१० ॥

सोऽपसव्यां चमूं तस्य शाल्वस्य भरतर्षभ ।
चकार नातियत्नेन तदद्भुतमिवाभवत् ॥ ०११ ॥

अमृष्यमाणोऽपसव्यं प्रद्युम्नेन स सौभराट् ।
यन्तारमस्य सहसा त्रिभिर्बाणैः समर्पयत् ॥ ०१२ ॥

दारुकस्य सुतस्तं तु बाणवेगमचिन्तयन् ।
भूय एव महाबाहो प्रययौ हयसंमतः ॥ ०१३ ॥

ततो बाणान्बहुविधान्पुनरेव स सौभराट् ।
मुमोच तनये वीरे मम रुक्मिणिनन्दने ॥ ०१४ ॥

तानप्राप्ताञ्शितैर्बाणैश्चिच्छेद परवीरहा ।
रौक्मिणेयः स्मितं कृत्वा दर्शयन्हस्तलाघवम् ॥ ०१५ ॥

छिन्नान्दृष्ट्वा तु तान्बाणान्प्रद्युम्नेन स सौभराट् ।
आसुरीं दारुणीं मायामास्थाय व्यसृजच्छरान् ॥ ०१६ ॥

प्रयुज्यमानमाज्ञाय दैतेयास्त्रं महाबलः ।
ब्रह्मास्त्रेणान्तरा छित्त्वा मुमोचान्यान्पतत्रिणः ॥ ०१७ ॥

ते तदस्त्रं विधूयाशु विव्यधू रुधिराशनाः ।
शिरस्युरसि वक्त्रे च स मुमोह पपात च ॥ ०१८ ॥

तस्मिन्निपतिते क्षुद्रे शाल्वे बाणप्रपीडिते ।

रौक्मिणेयोऽपरं बाणं संदधे शत्रुनाशनम्  ॥ ०१९  ॥

तमर्चितं सर्वदाशार्हपूगै ;राशीर्भिरर्कज्वलनप्रकाशम् ।
दृष्ट्वा शरं ज्यामभिनीयमानं ; बभूव हाहाकृतमन्तरिक्षम्  ॥ ०२०  ॥

ततो देवगणाः सर्वे सेन्द्राः सह धनेश्वराः ।
नारदं प्रेषयामासुः श्वसनं च महाबलम्  ॥ ०२१  ॥

तौ रौक्मिणेयमागम्य वचोऽब्रूतां दिवौकसाम् ।
नैष वध्यस्त्वया वीर शाल्वराजः कथञ्चन  ॥ ०२२  ॥

संहरस्व पुनर्बाणमवध्योऽयं त्वया रणे ।
एतस्य हि शरस्याजौ नावध्योऽस्ति पुमान्कचित्  ॥ ०२३  ॥

मृत्युरस्य महाबाहो रणे देवकिनन्दनः ।
कृष्णः सङ्कल्पितो धात्रा तन्न मिथ्या भवेदिति  ॥ ०२४  ॥

ततः परमसंहृष्टः प्रद्युम्नः शरमुत्तमम् ।
सञ्जहार धनुःश्रेष्ठात्तूणे चैव न्यवेशयत्  ॥ ०२५  ॥

तत उत्थाय राजेन्द्र शाल्वः परमदुर्मनाः ।
व्यपायात्सबलस्तूर्णं प्रद्युम्नशरपीडितः  ॥ ०२६  ॥

स द्वारकां परित्यज्य क्रूरो वृष्णिभिरर्दितः ।
सौभमास्थाय राजेन्द्र दिवमाचक्रमे तदा  ॥ ०२७  ॥

# अध्याय ०२१

वासुदेव उवाच ॥

आनर्तनगरं मुक्तं ततोऽहमगमं तदा ।
महाक्रतौ राजसूये निवृत्ते नृपते तव ॥ ००१ ॥

अपश्यं द्वारकां चाहं महाराज हतत्विषम् ।
निःस्वाध्यायवषट्कारां निर्भूषणवरस्त्रियम् ॥ ००२ ॥

अनभिज्ञेयरूपाणि द्वारकोपवनानि च ।
दृष्ट्वा शङ्कोपपन्नोऽहमपृच्छं हृदिकात्मजम् ॥ ००३ ॥

अस्वस्थनरनारीकमिदं वृष्णिपुरं भृषम् ।
किमिदं नरशार्दूल श्रोतुमिच्छामहे वयम् ॥ ००४ ॥

एवमुक्तस्तु स मया विस्तरेणेदमब्रवीत् ।
रोधं मोक्षं च शाल्वेन हार्दिक्यो राजसत्तम ॥ ००५ ॥

ततोऽहं कौरवश्रेष्ठ श्रुत्वा सर्वमशेषतः ।
विनाशे शाल्वराजस्य तदैवाकरवं मतिम् ॥ ००६ ॥

ततोऽहं भरतश्रेष्ठ समाश्वास्य पुरे जनम् ।
राजानमाहुकं चैव तथैवानकदुन्दुभिम् ॥ ००७ ॥

सर्ववृष्णिप्रवीरांश्च हर्षयन्नब्रुवं तदा ॥ ००७ ॥

अप्रमादः सदा कार्यो नगरे यादवर्षभाः ।
शाल्वराजविनाशाय प्रयातं मां निबोधत ॥ ००८ ॥

नाहत्वा तं निवर्तिष्ये पुरीं द्वारवतीं प्रति ।

सशाल्वं सौभनगरं हत्वा द्रष्टास्मि वः पुनः ॥ ००९ ॥

त्रिसामा हन्यतामेषा दुन्दुभिः शत्रुभीषणी ॥ ००९ ॥

ते मयाश्वासिता वीरा यथावद्भरतर्षभ ।
सर्वे मामब्रुवन्हृष्टाः प्रयाहि जहि शात्रवान् ॥ ०१० ॥

तैः प्रहृष्टात्मभिर्वीरैराशीर्भिरभिनन्दितः ।
वाचयित्वा द्विजश्रेष्ठान्प्रणम्य शिरसाहुकम् ॥ ०११ ॥

सैन्यसुग्रीवयुक्तेन रथेनानादयन्दिशः ।
प्रध्माप्य शङ्खप्रवरं पाञ्चजन्यमहं नृप ॥ ०१२ ॥

प्रयातोऽस्मि नरव्याघ्र बलेन महता वृतः ।
क्लृप्तेन चतुरङ्गेण बलेन जितकाशिना ॥ ०१३ ॥

समतीत्य बहून्देशान्गिरींश्च बहुपादपान् ।
सरांसि सरितश्चैव मार्त्तिकावतमासदम् ॥ ०१४ ॥

तत्राश्रौषं नरव्याघ्र शाल्वं नगरमन्तिकात् ।
प्रयातं सौभमास्थाय तमहं पृष्ठतोऽन्वयाम् ॥ ०१५ ॥

ततः सागरमासाद्य कुक्षौ तस्य महोर्मिणः ।
समुद्रनाभ्यां शाल्वोऽभूत्सौभमास्थाय शत्रुहन् ॥ ०१६ ॥

स समालोक्य दूरान्मां स्मयन्निव युधिष्ठिर ।
आह्वयामास दुष्टात्मा युद्धायैव मुहुर्मुहुः ॥ ०१७ ॥

तस्य शार्ङ्गविनिर्मुक्तैर्बहुभिर्मर्मभेदिभिः ।
पुरं नासाद्यत शरैस्ततो मां रोष आविशत् ॥ ०१८ ॥

स चापि पापप्रकृतिर्दैतेयापसदो नृप ।
मय्यवर्षत दुर्धर्षः शरधाराः सहस्रशः ॥ ०१९ ॥

सैनिकान्मम सूतं च हयांश्च समवाकिरत् ।
अचिन्तयन्तस्तु शरान्वयं युध्याम भारत ॥ ०२० ॥

ततः शतसहस्राणि शराणां नतपर्वणाम् ।
चिक्षिपुः समरे वीरा मयि शाल्वपदानुगाः ॥ ०२१ ॥

ते हयान्मे रथं चैव तदा दारुकमेव च ।
छादयामासुरसुरा बाणैर्मर्मविभेदिभिः ॥ ०२२ ॥

न हया न रथो वीर न यन्ता मम दारुकः ।
अदृश्यन्त शरैश्छन्नास्तथाहं सैनिकाश्च मे ॥ ०२३ ॥

ततोऽहमपि कौरव्य शराणामयुतान्बहून् ।
अभिमन्त्रितानां धनुषा दिव्येन विधिनाक्षिपम् ॥ ०२४ ॥

न तत्र विषयस्त्वासीन्मम सैन्यस्य भारत ।
खे विषक्तं हि तत्सौभं क्रोशमात्र इवाभवत् ॥ ०२५ ॥

ततस्ते प्रेक्षकाः सर्वे रङ्गवाट इव स्थिताः ।
हर्षयामासुरुच्चैर्मां सिंहनादतलस्वनैः ॥ ०२६ ॥

मत्कार्मुकविनिर्मुक्ता दानवानां महारणे ।
अङ्गेषु रुधिराक्तास्ते विविशुः शलभा इव ॥ ०२७ ॥

ततो हलहलाशब्दः सौभमध्ये व्यवर्धत ।
वध्यतां विशिखैस्तीक्ष्णैः पततां च महार्णवे ॥ ०२८ ॥

ते निकृत्तभुजस्कन्धाः कबन्धाकृतिदर्शनाः ।

नदन्तो भैरवान्नादन्निपतन्ति स्म दानवाः ॥ ०२९ ॥

ततो गोक्षीरकुन्देन्दुमृणालरजतप्रभम् ।
जलजं पाञ्चजन्यं वै प्राणेनाहमपूरयम् ॥ ०३० ॥

तान्दृष्ट्वा पतितांस्तत्र शाल्वः सौभपतिस्तदा ।
मायायुद्धेन महता योधयामास मां युधि ॥ ०३१ ॥

ततो हुडहुडाः प्रासाः शक्तिशूलपरश्वधाः ।
पट्टिशाश्च भुशुण्ड्यश्च प्रापतन्ननिशं मयि ॥ ०३२ ॥

तानहं माययैवाशु प्रतिगृह्य व्यनाशयम् ।
तस्यां हतायां मायायां गिरिशृङ्गैरयोधयत् ॥ ०३३ ॥

ततोऽभवत्तम इव प्रभातमिव चाभवत् ।
दुर्दिनं सुदिनं चैव शीतमुष्णं च भारत ॥ ०३४ ॥

एवं मायां विकुर्वाणो योधयामास मां रिपुः ।
विज्ञाय तदहं सर्वं माययैव व्यनाशयम् ॥ ०३५ ॥

यथाकालं तु युद्धेन व्यधमं सर्वतः शरैः ॥ ०३५ ॥

ततो व्योम महाराज शतसूर्यमिवाभवत् ।
शतचन्द्रं च कौन्तेय सहस्रायुततारकम् ॥ ०३६ ॥

ततो नाज्ञायत तदा दिवारात्रं तथा दिशः ।
ततोऽहं मोहमापन्नः प्रज्ञास्त्रं समयोजयम् ॥ ०३७ ॥

ततस्तदस्त्रमस्त्रेण विधूतं शरतूलवत् ॥ ०३७ ॥

तथा तदभवद्युद्धं तुमुलं लोमहर्षणम् ।

लब्धालोकश्च राजेन्द्र पुनः शत्रुमयोधयम्  ॥ ०३८  ॥

---

# अध्याय ०२२

वासुदेव उवाच  ॥

एवं स पुरुषव्याघ्र शाल्वो राज्ञां महारिपुः ।
युध्यमानो मया संख्ये वियदभ्यागमत्पुनः  ॥ ००१  ॥

ततः शतघ्नीश्च महागदाश्च ; दीप्तांश्च शूलान्मुसलानसींश्च ।
चिक्षेप रोषान्मयि मन्दबुद्धिः ; शाल्वो महाराज जयाभिकाङ्क्षी  ॥ ००२  ॥

तानाशुगैरापततोऽहमाशु ; निवार्य तूर्णं खगमान्ख एव ।
द्विधा त्रिधा चाच्छिनमाशु मुक्तैः ;स्ततोऽन्तरिक्षे निनदो बभूव  ॥ ००३  ॥

ततः शतसहस्रेण शराणां नतपर्वणाम् ।
दारुकं वाजिनश्चैव रथं च समवाकिरत्  ॥ ००४  ॥

ततो मामब्रवीद्वीर दारुको विह्वलन्निव ।
स्थातव्यमिति तिष्ठामि शाल्वबाणप्रपीडितः  ॥ ००५  ॥

इति तस्य निशम्याहं सारथेः करुणं वचः ।
अवेक्षमाणो यन्तारमपश्यं शरपीडितम्  ॥ ००६  ॥

न तस्योरसि नो मूर्ध्नि न काये न भुजद्वये ।
अन्तरं पाण्डवश्रेष्ठ पश्यामि नहतं शरैः  ॥ ००७  ॥

स तु बाणवरोत्पीडाद्विस्रवत्यसृगुल्बणम् ।

अभिवृष्टो यथा मेघैर्गिरिर्गैरिकधातुमान्  ॥ ००८  ॥

अभीषुहस्तं तं दृष्ट्वा सीदन्तं सारथिं रणे ।
अस्तम्भयं महाबाहो शाल्वबाणप्रपीडितम्  ॥ ००९  ॥

अथ मां पुरुषः कश्चिद्द्वारकानिलयोऽब्रवीत् ।
त्वरितो रथमभ्येत्य सौहृदादिव भारत  ॥ ०१०  ॥

आहुकस्य वचो वीर तस्यैव परिचारकः ।
विषण्णः सन्नकण्ठो वै तन्निबोध युधिष्ठिर  ॥ ०११  ॥

द्वारकाधिपतिर्वीर आह त्वामाहुको वचः ।
केशवेह विजानीष्व यत्त्वां पितृसखोऽब्रवीत्  ॥ ०१२  ॥

उपयात्वाद्य शाल्वेन द्वारकां वृष्णिनन्दन ।
विषक्ते त्वयि दुर्धर्ष हतः शूरसुतो बलात्  ॥ ०१३  ॥

तदलं साधु युद्धेन निवर्तस्व जनार्दन ।
द्वारकामेव रक्षस्व कार्यमेतन्महत्तव  ॥ ०१४  ॥

इत्यहं तस्य वचनं श्रुत्वा परमदुर्मनाः ।
निश्चयं नाधिगच्छामि कर्तव्यस्येतरस्य वा  ॥ ०१५  ॥

सात्यकिं बलदेवं च प्रद्युम्नं च महारथम् ।
जगर्हे मनसा वीर तच्छ्रुत्वा विप्रियं वचः  ॥ ०१६  ॥

अहं हि द्वारकायाश्च पितुश्च कुरुनन्दन ।
तेषु रक्षां समाधाय प्रयातः सौभपातने  ॥ ०१७  ॥

बलदेवो महाबाहुः कच्चिज्जीवति शत्रुहा ।
सात्यकी रौक्मिणेयश्च चारुदेष्णश्च वीर्यवान्  ॥ ०१८  ॥

साम्बप्रभृतयश्चैवेत्यहमासं सुदुर्मनाः ॥ ०१८ ॥

एतेषु हि नरव्याघ्र जीवत्सु न कथञ्चन ।
शक्यः शूरसुतो हन्तुमपि वज्रभृता स्वयम् ॥ ०१९ ॥

हतः शूरसुतो व्यक्तं व्यक्तं ते च परासवः ।
बलदेवमुखाः सर्वे इति मे निश्चिता मतिः ॥ ०२० ॥

सोऽहं सर्वविनाशं तं चिन्तयानो मुहुर्मुहुः ।
सुविह्वलो महाराज पुनः शाल्वमयोधयम् ॥ ०२१ ॥

ततोऽपश्यं महाराज प्रपतन्तमहं तदा ।
सौभाच्छूरसुतं वीर ततो मां मोह आविशत् ॥ ०२२ ॥

तस्य रूपं प्रपततः पितुर्मम नराधिप ।
ययातेः क्षीणपुण्यस्य स्वर्गादिव महीतलम् ॥ ०२३ ॥

विशीर्णगलितोष्णीषः प्रकीर्णाम्बरमूर्धजः ।
प्रपतन्दृश्यते ह स्म क्षीणपुण्य इव ग्रहः ॥ ०२४ ॥

ततः शार्ङ्गं धनुःश्रेष्ठं करात्प्रपतितं मम ।
मोहात्सन्नश्च कौन्तेय रथोपस्थ उपाविशम् ॥ ०२५ ॥

ततो हाहाकृतं सर्वं सैन्यं मे गतचेतनम् ।
मां दृष्ट्वा रथनीडस्थं गतासुमिव भारत ॥ ०२६ ॥

प्रसार्य बाहू पततः प्रसार्य चरणावपि ।
रूपं पितुरपश्यं तच्छकुनेः पततो यथा ॥ ०२७ ॥

तं पतन्तं महाबाहो शूलपट्टिशपाणयः ।

अभिघ्नन्तो भृशं वीरा मम चेतो व्यकम्पयन्  ॥ ०२८  ॥

ततो मुहूर्तात्प्रतिलभ्य सञ्ज्ञा ;महं तदा वीर महाविमर्दे ।
न तत्र सौभं न रिपुं न शाल्वं ; पश्यामि वृद्धं पितरं न चापि  ॥ ०२९  ॥

ततो ममासीन्मनसि मायेयमिति निश्चितम् ।
प्रबुद्धोऽस्मि ततो भूयः शतशो विकिरञ्शरान्  ॥ ०३०  ॥

---

# अध्याय ०२३

वासुदेव उवाच  ॥

ततोऽहं भरतश्रेष्ठ प्रगृह्य रुचिरं धनुः ।
शरैरपातयं सौभाच्छिरांसि विबुधद्विषाम्  ॥ ००१  ॥

शरांश्चाशीविषाकारानूर्ध्वगांस्तिग्मतेजसः ।
अप्रैषं शाल्वराजाय शार्ङ्गमुक्तान्सुवाससः  ॥ ००२  ॥

ततो नादृश्यत तदा सौभं कुरुकुलोद्वह ।
अन्तर्हितं माययाभूत्ततोऽहं विस्मितोऽभवम्  ॥ ००३  ॥

अथ दानवसंघास्ते विकृताननमूर्धजाः ।
उदक्रोशन्महाराज विष्ठिते मयि भारत  ॥ ००४  ॥

ततोऽस्त्रं शब्दसाहं वै त्वरमाणो महाहवे ।
अयोजयं तद्वधाय ततः शब्द उपारमत्  ॥ ००५  ॥

हतास्ते दानवाः सर्वे यैः स शब्द उदीरितः ।

शरैरादित्यसङ्काशैर्ज्वलितैः शब्दसाधनैः ॥ ००६ ॥

तस्मिन्नुपरते शब्दे पुनरेवान्यतोऽभवत् ।
शब्दोऽपरो महाराज तत्रापि प्राहरं शरान् ॥ ००७ ॥

एवं दश दिशः सर्वास्तिर्यगूर्ध्वं च भारत ।
नादयामासुरसुरास्ते चापि निहता मया ॥ ००८ ॥

ततः प्राग्ज्योतिषं गत्वा पुनरेव व्यदृश्यत ।
सौभं कामगमं वीर मोहयन्मम चक्षुषी ॥ ००९ ॥

ततो लोकान्तकरणो दानवो वानराकृतिः ।
शिलावर्षेण सहसा महता मां समावृणोत् ॥ ०१० ॥

सोऽहं पर्वतवर्षेण वध्यमानः समन्ततः ।
वल्मीक इव राजेन्द्र पर्वतोपचितोऽभवम् ॥ ०११ ॥

ततोऽहं पर्वतचितः सहयः सहसारथिः ।
अप्रख्यातिमियां राजन्सध्वजः पर्वतैश्चितः ॥ ०१२ ॥

ततो वृष्णिप्रवीरा ये ममासन्सैनिकास्तदा ।
ते भयार्ता दिशः सर्वाः सहसा विप्रदुद्रुवुः ॥ ०१३ ॥

ततो हाहाकृतं सर्वमभूत्किल विशां पते ।
द्यौश्च भूमिश्च खं चैवादृश्यमाने तथा मयि ॥ ०१४ ॥

ततो विषण्णमनसो मम राजन्सुहृज्जनाः ।
रुरुदुश्चुक्रुशुश्चैव दुःखशोकसमन्विताः ॥ ०१५ ॥

द्विषतां च प्रहर्षोऽभूदार्तिश्चाद्विषतामपि ।
एवं विजितवान्वीर पश्चादश्रौषमच्युत ॥ ०१६ ॥

ततोऽहमस्त्रं दयितं सर्वपाषाणभेदनम् ।
वज्रमुद्यम्य तान्सर्वान्पर्वतान्समशातयम् ॥ ०१७ ॥

ततः पर्वतभारार्ता मन्दप्राणविचेष्टिताः ।
हया मम महाराज वेपमाना इवाभवन् ॥ ०१८ ॥

मेघजालमिवाकाशे विदार्याभ्युदितं रविम् ।
दृष्ट्वा मां बान्धवाः सर्वे हर्षमाहारयन्पुनः ॥ ०१९ ॥

ततो मामब्रवीत्सूतः प्राञ्जलिः प्रणतो नृप ।
साधु संपश्य वार्ष्णेय शाल्वं सौभपतिं स्थितम् ॥ ०२० ॥

अलं कृष्णावमन्यैनं साधु यत्नं समाचर ।
मार्दवं सखितां चैव शाल्वादद्य व्यपाहर ॥ ०२१ ॥

जहि शाल्वं महाबाहो मैनं जीवय केशव ।
सर्वैः पराक्रमैर्वीर वध्यः शत्रुरमित्रहन् ॥ ०२२ ॥

न शत्रुरवमन्तव्यो दुर्बलोऽपि बलीयसा ।
योऽपि स्यात्पीठगः कश्चित्किं पुनः समरे स्थितः ॥ ०२३ ॥

स त्वं पुरुषशार्दूल सर्वयत्नैरिमं प्रभो ।
जहि वृष्णिकुलश्रेष्ठ मा त्वां कालोऽत्यगात्पुनः ॥ ०२४ ॥

नैष मार्दवसाध्यो वै मतो नापि सखा तव ।
येन त्वं योधितो वीर द्वारका चावमर्दिता ॥ ०२५ ॥

एवमादि तु कौन्तेय श्रुत्वाहं सारथेर्वचः ।
तत्त्वमेतदिति ज्ञात्वा युद्धे मतिमधारयम् ॥ ०२६ ॥

वधाय शाल्वराजस्य सौभस्य च निपातने ।
दारुकं चाब्रुवं वीर मुहूर्तं स्थीयतामिति ॥ ०२७ ॥

ततोऽप्रतिहतं दिव्यमभेद्यमतिवीर्यवत् ।
आग्नेयमस्त्रं दयितं सर्वसाहं महाप्रभम् ॥ ०२८ ॥

यक्षाणां राक्षसानां च दानवानां च संयुगे ।
राज्ञां च प्रतिलोमानां भस्मान्तकरणं महत् ॥ ०२९ ॥

क्षुरान्तममलं चक्रं कालान्तकयमोपमम् ।
अभिमन्त्र्याहमतुलं द्विषतां च निबर्हणम् ॥ ०३० ॥

जहि सौभं स्ववीर्येण ये चात्र रिपवो मम ।
इत्युक्त्वा भुजवीर्येण तस्मै प्राहिणवं रुषा ॥ ०३१ ॥

रूपं सुदर्शनस्यासीदाकाशे पततस्तदा ।
द्वितीयस्येव सूर्यस्य युगान्ते परिविष्यतः ॥ ०३२ ॥

तत्समासाद्य नगरं सौभं व्यपगतत्विषम् ।
मध्येन पाटयामास क्रकचो दार्विवोच्छ्रितम् ॥ ०३३ ॥

द्विधा कृतं ततः सौभं सुदर्शनबलाद्धतम् ।
महेश्वरशरोद्धूतं पपात त्रिपुरं यथा ॥ ०३४ ॥

तस्मिन्निपतिते सौभे चक्रमागात्करं मम ।
पुनश्चोद्धूय वेगेन शाल्वायेत्यहमब्रुवम् ॥ ०३५ ॥

ततः शाल्वं गदां गुर्वीमाविध्यन्तं महाहवे ।
द्विधा चकार सहसा प्रजज्वाल च तेजसा ॥ ०३६ ॥

तस्मिन्निपतिते वीरे दानवास्त्रस्तचेतसः ।

हाहाभूता दिशो जग्मुरर्दिता मम सायकैः ॥ ०३७ ॥

ततोऽहं समवस्थाप्य रथं सौभसमीपतः ।
शङ्खं प्रध्माप्य हर्षेण सुहृदः पर्यहर्षयम् ॥ ०३८ ॥

तन्मेरुशिखराकारं विध्वस्ताट्टालगोपुरम् ।
दह्यमानमभिप्रेक्ष्य स्त्रियस्ताः संप्रदुद्रुवुः ॥ ०३९ ॥

एवं निहत्य समरे शाल्वं सौभं निपात्य च ।
आनर्तान्पुनरागम्य सुहृदां प्रीतिमावहम् ॥ ०४० ॥

एतस्मात्कारणाद्राजन्नागमं नागसाह्वयम् ।
यद्यगां परवीरघ्न न हि जीवेत्सुयोधनः ॥ ०४१ ॥

वैशंपायन उवाच ॥

एवमुक्त्वा महाबाहुः कौरवं पुरुषोत्तमः ।
आमन्त्र्य प्रययौ धीमान्पाण्डवान्मधुसूदनः ॥ ०४२ ॥

अभिवाद्य महाबाहुर्धर्मराजं युधिष्ठिरम् ।
राज्ञा मूर्धन्युपाघ्रातो भीमेन च महाभुजः ॥ ०४३ ॥

सुभद्रामभिमन्युं च रथमारोप्य काञ्चनम् ।
आरुरोह रथं कृष्णः पाण्डवैरभिपूजितः ॥ ०४४ ॥

सैन्यसुग्रीवयुक्तेन रथेनादित्यवर्चसा ।
द्वारकां प्रययौ कृष्णः समाश्वास्य युधिष्ठिरम् ॥ ०४५ ॥

ततः प्रयाते दाशार्हे धृष्टद्युम्नोऽपि पार्षतः ।
द्रौपदेयानुपादाय प्रययौ स्वपुरं तदा ॥ ०४६ ॥

धृष्टकेतुः स्वसारं च समादायाथ चेदिराट् ।
जगाम पाण्डवान्दृष्ट्वा रम्यां शुक्तिमतीं पुरीम् ॥ ०४७ ॥

केकयाश्चाप्यनुज्ञाताः कौन्तेयेनामितौजसा ।
आमन्त्र्य पाण्डवान्सर्वान्प्रययुस्तेऽपि भारत ॥ ०४८ ॥

ब्राह्मणाश्च विशश्चैव तथा विषयवासिनः ।
विसृज्यमानाः सुभृशं न त्यजन्ति स्म पाण्डवान् ॥ ०४९ ॥

समवायः स राजेन्द्र सुमहाद्भुतदर्शनः ।
आसीन्महात्मनां तेषां काम्यके भरतर्षभ ॥ ०५० ॥

युधिष्ठिरस्तु विप्रांस्ताननुमान्य महामनाः ।
शशास पुरुषान्काले रथान्योजयतेति ह ॥ ०५१ ॥

---

# अध्याय ०२४

वैशंपायन उवाच ॥

तस्मिन्दशार्हाधिपतौ प्रयाते ; युधिष्ठिरो भीमसेनार्जुनौ च ।
यमौ च कृष्णा च पुरोहितश्च ; रथान्महार्हान्परमाश्वयुक्तान् ॥ ००१ ॥

आस्थाय वीराः सहिता वनाय ; प्रतस्थिरे भूतपतिप्रकाशाः ।
हिरण्यनिष्कान्वसनानि गाश्च ; प्रदाय शिक्षाक्षरमन्त्रविद्भ्यः ॥ ००२ ॥

प्रेष्याः पुरो विंशतिरात्तशस्त्रा ; धनूंषि वर्माणि शरांश्च पीतान् ।
मौर्वीश्च यन्त्राणि च सायकांश्च ; सर्वे समादाय जघन्यमीयुः ॥ ००३ ॥

ततस्तु वासांसि च राजपुत्र्या ; धात्र्यश्च दास्यश्च विभूषणं च ।
तदिन्द्रसेनस्त्वरितं प्रगृह्य ; जघन्यमेवोपययौ रथेन ॥ ००४ ॥

ततः कुरुश्रेष्ठमुपेत्य पौराः ; प्रदक्षिणं चक्रुरदीनसत्त्वाः ।
तं ब्राह्मणाश्चाभ्यवदन्प्रसन्ना ; मुख्याश्च सर्वे कुरुजाङ्गलानाम् ॥ ००५ ॥

स चापि तानभ्यवदत्प्रसन्नः ; सहैव तैर्भ्रातृभिर्धर्मराजः ।
तस्थौ च तत्राधिपतिर्महात्मा ; दृष्ट्वा जनौघं कुरुजाङ्गलानाम् ॥ ००६ ॥

पितेव पुत्रेषु स तेषु भावं ; चक्रे कुरूणामृषभो महात्मा ।
ते चापि तस्मिन्भरतप्रबर्हे ; तदा बभूवुः पितरीव पुत्राः ॥ ००७ ॥

ततः समासाद्य महाजनौघाः ; कुरुप्रवीरं परिवार्य तस्थुः ।
हा नाथ हा धर्म इति ब्रुवन्तो ; ह्रिया च सर्वेऽश्रुमुखा बभूवुः ॥ ००८ ॥

वरः कुरूणामधिपः प्रजानां ; पितेव पुत्रानपहाय चास्मान् ।
पौरानिमाञ्जानपदांश्च सर्वा ;न्हित्वा प्रयातः क्व नु धर्मराजः ॥ ००९ ॥

धिग्धार्तराष्ट्रं सुनृशंसबुद्धिं ; ससौबलं पापमतिं च कर्णम् ।
अनर्थमिच्छन्ति नरेन्द्र पापा ; ये धर्मनित्यस्य सतस्तवोग्राः ॥ ०१० ॥

स्वयं निवेश्याप्रतिमं महात्मा ; पुरं महद्देवपुरप्रकाशम् ।
शतक्रतुप्रस्थममोघकर्मा ; हित्वा प्रयातः क्व नु धर्मराजः ॥ ०११ ॥

चकार यामप्रतिमां महात्मा ; सभां मयो देवसभाप्रकाशाम् ।
तां देवगुप्तामिव देवमायां ; हित्वा प्रयातः क्व नु धर्मराजः ॥ ०१२ ॥

तान्धर्मकामार्थविदुत्तमौजा ; बीभत्सुरुच्चैः सहितानुवाच ।
आदास्यते वासमिमं निरुष्य ; वनेषु राजा द्विषतां यशांसि ॥ ०१३ ॥

द्विजातिमुख्याः सहिताः पृथक्क ; भवद्भिरासाद्य तपस्विनश्च ।
प्रसाद्य धर्मार्थविदश्च वाच्या ; यथार्थसिद्धिः परमा भवेन्नः ॥ ०१४ ॥

इत्येवमुक्ते वचनेऽर्जुनेन ; ते ब्राह्मणाः सर्ववर्णाश्च राजन् ।
मुदाभ्यनन्दन्सहिताश्च चक्रुः ; प्रदक्षिणं धर्मभृतां वरिष्ठम् ॥ ०१५ ॥

आमन्त्र्य पार्थं च वृकोदरं च ; धनञ्जयं याज्ञसेनीं यमौ च ।
प्रतस्थिरे राष्ट्रमपेतहर्षा ; युधिष्ठिरेणानुमता यथास्वम् ॥ ०१६ ॥

---

# अध्याय ०२५

वैशंपायन उवाच ॥

ततस्तेषु प्रयातेषु कौन्तेयः सत्यसङ्गरः ।
अभ्यभाषत धर्मात्मा भ्रातृन्सर्वान्युधिष्ठिरः ॥ ००१ ॥

द्वादशेमाः समास्माभिर्वस्तव्यं निर्जने वने ।
समीक्षध्वं महारण्ये देशं बहुमृगद्विजम् ॥ ००२ ॥

बहुपुष्पफलं रम्यं शिवं पुण्यजनोचितम् ।
यत्रेमाः शरदः सर्वाः सुखं प्रतिवसेमहि ॥ ००३ ॥

एवमुक्ते प्रत्युवाच धर्मराजं धनञ्जयः ।
गुरुवन्मानवगुरुं मानयित्वा मनस्विनम् ॥ ००४ ॥

अर्जुन उवाच ॥

भवानेव महर्षीणां वृद्धानां पर्युपासिता ।
अज्ञातं मानुषे लोके भवतो नास्ति किञ्चन ॥ ००५ ॥

त्वया ह्युपासिता नित्यं ब्राह्मणा भरतर्षभ ।
द्वैपायनप्रभृतयो नारदश्च महातपाः ॥ ००६ ॥

यः सर्वलोकद्वाराणि नित्यं सञ्चरते वशी ।
देवलोकाद्ब्रह्मलोकं गन्धर्वाप्सरसामपि ॥ ००७ ॥

सर्वा गतीर्विजानासि ब्राह्मणानां न संशयः ।
प्रभावांश्चैव वेत्थ त्वं सर्वेषामेव पार्थिव ॥ ००८ ॥

त्वमेव राजञ्जानासि श्रेयःकारणमेव च ।
यत्रेच्छसि महाराज निवासं तत्र कुर्महे ॥ ००९ ॥

इदं द्वैतवनं नाम सरः पुण्यजनोचितम् ।
बहुपुष्पफलं रम्यं नानाद्विजनिषेवितम् ॥ ०१० ॥

अत्रेमा द्वादश समा विहरेमेति रोचये ।
यदि तेऽनुमतं राजन्किं वान्यन्मन्यते भवान् ॥ ०११ ॥

युधिष्ठिर उवाच ॥

ममाप्येतन्मतं पार्थ त्वया यत्समुदाहृतम् ।
गच्छाम पुण्यं विख्यातं महद्द्वैतवनं सरः ॥ ०१२ ॥

वैशंपायन उवाच ॥

ततस्ते प्रययुः सर्वे पाण्डवा धर्मचारिणः ।
ब्राह्मणैर्बहुभिः सार्धं पुण्यं द्वैतवनं सरः ॥ ०१३ ॥

ब्राह्मणाः साग्निहोत्राश्च तथैव च निरग्नयः ।
स्वाध्यायिनो भिक्षवश्च सजपा वनवासिनः ॥ ०१४ ॥

बहवो ब्राह्मणास्तत्र परिवव्रुर्युधिष्ठिरम् ।
तपस्विनः सत्यशीलाः शतशः संशितव्रताः ॥ ०१५ ॥

ते यात्वा पाण्डवास्तत्र बहुभिर्ब्राह्मणैः सह ।
पुण्यं द्वैतवनं रम्यं विविशुर्भरतर्षभाः ॥ ०१६ ॥

तच्छालतालाम्रमधूकनीप ; कदम्बसर्जार्जुनकर्णिकारैः ।
तपात्यये पुष्पधरैरुपेतं ; महावनं राष्ट्रपतिर्ददर्श ॥ ०१७ ॥

महाद्रुमाणां शिखरेषु तस्थु ;र्मनोरमां वाचमुदीरयन्तः ।
मयूरदात्यूहचकोरसंघा ;स्तस्मिन्वने काननकोकिलाश्च ॥ ०१८ ॥

करेणुयूथैः सह यूथपानां ; मदोत्कटानामचलप्रभाणाम् ।
महान्ति यूथानि महाद्विपानां ; तस्मिन्वने राष्ट्रपतिर्ददर्श ॥ ०१९ ॥

मनोरमां भोगवतीमुपेत्य ; धृतात्मनां चीरजटाधराणाम् ।
तस्मिन्वने धर्मभृतां निवासे ; ददर्श सिद्धर्षिगणाननेकान् ॥ ०२० ॥

ततः स यानादवरुह्य राजा ; सभ्रातृकः सजनः काननं तत् ।
विवेश धर्मात्मवतां वरिष्ठ ;स्त्रिविष्टपं शक्र इवामितौजाः ॥ ०२१ ॥

तं सत्यसंधं सहिताभिपेतु ;र्दिदृक्षवश्चारणसिद्धसंघाः ।
वनौकसश्चापि नरेन्द्रसिंहं ; मनस्विनं संपरिवार्य तस्थुः ॥ ०२२ ॥

स तत्र सिद्धानभिवाद्य सर्वा ;न्प्रत्यर्चितो राजवद्देववच्च ।
विवेश सर्वैः सहितो द्विजाग्र्यैः ; कृताञ्जलिर्धर्मभृतां वरिष्ठः ॥ ०२३ ॥

स पुण्यशीलः पितृवन्महात्मा ; तपस्विभिर्धर्मपरैरुपेत्य ।

प्रत्यर्चितः पुष्पधरस्य मूले ; महाद्रुमस्योपविवेश राजा ॥ ०२४ ॥

भीमश्च कृष्णा च धनञ्जयश्च ; यमौ च ते चानुचरा नरेन्द्रम् ।
विमुच्य वाहानवरुह्य सर्वे ; तत्रोपतस्थुर्भरतप्रबर्हाः ॥ ०२५ ॥

लतावतानावनतः स पाण्डवै ;र्महाद्रुमः पञ्चभिरुग्रधन्विभिः ।
बभौ निवासोपगतैर्महात्मभि ;र्महागिरिर्वारणयूथपैरिव ॥ ०२६ ॥

---

# अध्याय ०२६

वैशंपायन उवाच ॥

तत्काननं प्राप्य नरेन्द्रपुत्राः ; सुखोचिता वासमुपेत्य कृच्छ्रम् ।
विजह्रुरिन्द्रप्रतिमाः शिवेषु ; सरस्वतीशालवनेषु तेषु ॥ ००१ ॥

यतींश्च सर्वान्स मुनींश्च राजा ; तस्मिन्वने मूलफलैरुदग्रैः ।
द्विजातिमुख्यानृषभः कुरूणां ; संतर्पयामास महानुभावः ॥ ००२ ॥

इष्टीश्च पित्र्याणि तथाग्रियाणि ; महावने वसतां पाण्डवानाम् ।
पुरोहितः सर्वसमृद्धतेजा ;श्चकार धौम्यः पितृवत्कुरूणाम् ॥ ००३ ॥

अपेत्य राष्ट्राद्वसतां तु तेषा ;मृषिः पुराणोऽतिथिराजगाम ।
तमाश्रमं तीव्रसमृद्धतेजा ; मार्कण्डेयः श्रीमतां पाण्डवानाम् ॥ ००४ ॥

स सर्वविद्द्रौपदीं प्रेक्ष्य कृष्णां ; युधिष्ठिरं भीमसेनार्जुनौ च ।
संस्मृत्य रामं मनसा महात्मा ; तपस्विमध्येऽस्मयतामितौजाः ॥ ००५ ॥

तं धर्मराजो विमना इवाब्रवी ;त्सर्वे ह्रिया सन्ति तपस्विनोऽमी ।
भवानिदं किं स्मयतीव हृष्ट ;स्तपस्विनां पश्यतां मामुदीक्ष्य ॥ ००६ ॥

मार्कण्डेय उवाच ॥

न तात हृष्यामि न च स्मयामि ; प्रहर्षजो मां भजते न दर्पः ।
तवापदं त्वद्य समीक्ष्य रामं ; सत्यव्रतं दाशरथिं स्मरामि ॥ ००७ ॥

स चापि राजा सह लक्ष्मणेन ; वने निवासं पितुरेव शासनात् ।
धन्वी चरन्पार्थ पुरा मयैव ; दृष्टो गिरेर्ऋष्यमूकस्य सानौ ॥ ००८ ॥

सहस्रनेत्रप्रतिमो महात्मा ; मयस्य जेत नमुचेश्च हन्ता ।
पितुर्निदेशादनघः स्वधर्मं ; वने वासं दाशरथिश्चकार ॥ ००९ ॥

स चापि शक्रस्य समप्रभावो ; महानुभावः समरेष्वजेयः ।
विहाय भोगानचरद्वनेषु ; नेशे बलस्येति चरेदधर्मम् ॥ ०१० ॥

नृपाश्च नाभागभगीरथादयो ; महीमिमां सागरान्तां विजित्य ।
सत्येन तेऽप्यजयंस्तात लोका ;न्नेशे बलस्येति चरेदधर्मम् ॥ ०११ ॥

अलर्कमाहुर्नरवर्य सन्तं ; सत्यव्रतं काशिकरूषराजम् ।
विहाय राष्ट्राणि वसूनि चैव ; नेशे बलस्येति चरेदधर्मम् ॥ ०१२ ॥

धात्रा विधिर्यो विहितः पुराण ;स्तं पूजयन्तो नरवर्य सन्तः ।
सप्तर्षयः पार्थ दिवि प्रभान्ति ; नेशे बलस्येति चरेदधर्मम् ॥ ०१३ ॥

महाबलान्पर्वतकूटमात्रा ;न्विषाणिनः पश्य गजान्नरेन्द्र ।
स्थितान्निदेशे नरवर्य धातु ;र्नेशे बलस्येति चरेदधर्मम् ॥ ०१४ ॥

सर्वाणि भूतानि नरेन्द्र पश्य ; यथा यथावद्विहितं विधात्रा ।
स्वयोनितस्तत्कुरुते प्रभावा ;न्नेशे बलस्येति चरेदधर्मम् ॥ ०१५ ॥

सत्येन धर्मेण यथार्हवृत्त्या ; ह्रिया तथा सर्वभूतान्यतीत्य ।
यशश्च तेजश्च तवापि दीप्तं ; विभावसोर्भास्करस्येव पार्थ ॥ ०१६ ॥

यथाप्रतिज्ञं च महानुभाव ; कृच्छ्रं वने वासमिमं निरुष्य ।
ततः श्रियं तेजसा स्वेन दीप्ता ;मादास्यसे पार्थिव कौरवेभ्यः ॥ ०१७ ॥

वैशंपायन उवाच ॥

तमेवमुक्त्वा वचनं महर्षि ;स्तपस्विमध्ये सहितं सुहृद्भिः ।
आमन्त्र्य धौम्यं सहितांश्च पार्थां ;स्ततः प्रतस्थे दिशमुत्तरां सः ॥ ०१८ ॥

---

# अध्याय ०२७

वैशंपायन उवाच ॥

वसत्स्वथ द्वैतवने पाण्डवेषु महात्मसु ।
अनुकीर्णं महारण्यं ब्राह्मणैः समपद्यत ॥ ००१ ॥

ईर्यमाणेन सततं ब्रह्मघोषेण सर्वतः ।
ब्रह्मलोकसमं पुण्यमासीद्द्वैतवनं सरः ॥ ००२ ॥

यजुषामृचां च साम्नां च गद्यानां चैव सर्वशः ।
आसीदुच्चार्यमाणानां निस्वनो हृदयङ्गमः ॥ ००३ ॥

ज्याघोषः पाण्डवेयानां ब्रह्मघोषश्च धीमताम् ।
संसृष्टं ब्रह्मणा क्षत्रं भूय एव व्यरोचत ॥ ००४ ॥

अथाब्रवीद्बको दाल्भ्यो धर्मराजं युधिष्ठिरम् ।
संध्यां कौन्तेयमासीनमृषिभिः परिवारितम्  ॥ ००५  ॥

पश्य द्वैतवने पार्थ ब्राह्मणानां तपस्विनाम् ।
होमवेलां कुरुश्रेष्ठ संप्रज्वलितपावकाम्  ॥ ००६  ॥

चरन्ति धर्मं पुण्येऽस्मिंस्त्वया गुप्ता धृतव्रताः ।
भृगवोऽङ्गिरसश्चैव वासिष्ठाः काश्यपैः सह  ॥ ००७  ॥

आगस्त्याश्च महाभागा आत्रेयाश्चोत्तमव्रताः ।
सर्वस्य जगतः श्रेष्ठा ब्राह्मणाः सङ्गतास्त्वया  ॥ ००८  ॥

इदं तु वचनं पार्थ शृण्वेकाग्रमना मम ।
भ्रातृभिः सह कौन्तेय यत्त्वां वक्ष्यामि कौरव  ॥ ००९  ॥

ब्रह्म क्षत्रेण संसृष्टं क्षत्रं च ब्रह्मणा सह ।
उदीर्णौ दहतः शत्रून्वनानीवाग्निमारुतौ  ॥ ०१०  ॥

नाब्राह्मणस्तात चिरं बुभूषे ;दिच्छन्निमं लोकममुं च जेतुम् ।
विनीतधर्मार्थमपेतमोहं ; लब्ध्वा द्विजं नुदति नृपः सपत्नान्  ॥ ०११  ॥

चरन्नैःश्रेयसं धर्मं प्रजापालनकारितम् ।
नाध्यगच्छद्बलिर्लोके तीर्थमन्यत्र वै द्विजात्  ॥ ०१२  ॥

अनूनमासीदसुरस्य कामै ;र्वैरोचनेः श्रीरपि चाक्षयासीत् ।
लब्ध्वा महीं ब्राह्मणसंप्रयोगा ;त्तेष्वाचरन्दुष्टमतो व्यनश्यत्  ॥ ०१३  ॥

नाब्राह्मणं भूमिरियं सभूति ;र्वर्णं द्वितीयं भजते चिराय ।
समुद्रनेमिर्नमते तु तस्मै ; यं ब्राह्मणः शास्ति नयैर्विनीतः  ॥ ०१४  ॥

कुञ्जरस्येव सङ्ग्रामेऽपरिगृह्याङ्कुशग्रहम् ।
ब्राह्मणैर्विप्रहीणस्य क्षत्रस्य क्षीयते बलम् ॥ ०१५ ॥

ब्रह्मण्यनुपमा दृष्टिः क्षात्रमप्रतिमं बलम् ।
तौ यदा चरतः सार्धमथ लोकः प्रसीदति ॥ ०१६ ॥

यथा हि सुमहानग्निः कक्षं दहति सानिलः ।
तथा दहति राजन्यो ब्राह्मणेन समं रिपून् ॥ ०१७ ॥

ब्राह्मणेभ्योऽथ मेधावी बुद्धिपर्येषणं चरेत् ।
अलब्धस्य च लाभाय लब्धस्य च विवृद्धये ॥ ०१८ ॥

अलब्धलाभाय च लब्धवृद्धये ; यथार्हतीर्थप्रतिपादनाय ।
यशस्विनं वेदविदं विपश्चितं ; बहुश्रुतं ब्राह्मणमेव वासय ॥ ०१९ ॥

ब्राह्मणेषूत्तमा वृत्तिस्तव नित्यं युधिष्ठिर ।
तेन ते सर्वलोकेषु दीप्यते प्रथितं यशः ॥ ०२० ॥

ततस्ते ब्राह्मणाः सर्वे बकं दाल्भ्यमपूजयन् ।
युधिष्ठिरे स्तूयमाने भूयः सुमनसोऽभवन् ॥ ०२१ ॥

द्वैपायनो नारदश्च जामदग्न्यः पृथुश्रवाः ।
इन्द्रद्युम्नो भालुकिश्च कृतचेताः सहस्रपात् ॥ ०२२ ॥

कर्णश्रवाश्च मुञ्जश्च लवणाश्वश्च काश्यपः ।
हारीतः स्थूणकर्णश्च अग्निवेश्योऽथ शौनकः ॥ ०२३ ॥

ऋतवाक्च सुवाक्चैव बृहदश्व ऋतावसुः ।
ऊर्ध्वरेता वृषामित्रः सुहोत्रो होत्रवाहनः ॥ ०२४ ॥

एते चान्ये च बहवो ब्राह्मणाः संशितव्रताः ।

अजातशत्रुमानर्चुः पुरंदरमिवर्षयः ॥ ०२५ ॥

---

# अध्याय ०२८

वैशंपायन उवाच ॥

ततो वनगताः पार्थाः सायाह्ने सह कृष्णया ।
उपविष्टाः कथाश्चक्रुर्दुःखशोकपरायणाः ॥ ००१ ॥

प्रिया च दर्शनीया च पण्डिता च पतिव्रता ।
ततः कृष्णा धर्मराजमिदं वचनमब्रवीत् ॥ ००२ ॥

न नूनं तस्य पापस्य दुःखमस्मासु किञ्चन ।
विद्यते धार्तराष्ट्रस्य नृशंसस्य दुरात्मनः ॥ ००३ ॥

यस्त्वां राजन्मया सार्धमजिनैः प्रतिवासितम् ।
भ्रातृभिश्च तथा सर्वैर्नाभ्यभाषत किञ्चन ॥ ००४ ॥

वनं प्रस्थाप्य दुष्टात्मा नान्वतप्यत दुर्मतिः ॥ ००४ ॥

आयसं हृदयं नूनं तस्य दुष्कृतकर्मणः ।
यस्त्वां धर्मपरं श्रेष्ठं रूक्षाण्यश्रावयत्तदा ॥ ००५ ॥

सुखोचितमदुःखार्हं दुरात्मा ससुहृद्गणः ।
ईदृशं दुःखमानीय मोदते पापपूरुषः ॥ ००६ ॥

चतुर्णामेव पापानामश्रु वै नापतत्तदा ।

त्वयि भारत निष्क्रान्ते वनायाजिनवाससि ॥ ००७ ॥

दुर्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः ।
दुर्भ्रातुस्तस्य चोग्रस्य तथा दुःशासनस्य च ॥ ००८ ॥

इतरेषां तु सर्वेषां कुरूणां कुरुसत्तम ।
दुःखेनाभिपरीतानां नेत्रेभ्यः प्रापतज्जलम् ॥ ००९ ॥

इदं च शयनं दृष्ट्वा यच्चासीत्ते पुरातनम् ।
शोचामि त्वां महाराज दुःखानर्हं सुखोचितम् ॥ ०१० ॥

दान्तं यच्च सभामध्ये आसनं रत्नभूषितम् ।
दृष्ट्वा कुशबृसीं चेमां शोको मां रुन्धयत्ययम् ॥ ०११ ॥

यदपश्यं सभायां त्वां राजभिः परिवारितम् ।
तच्च राजन्नपश्यन्त्याः का शान्तिर्हृदयस्य मे ॥ ०१२ ॥

या त्वाहं चन्दनादिग्धमपश्यं सूर्यवर्चसम् ।
सा त्वा पङ्कमलादिग्धं दृष्ट्वा मुह्यामि भारत ॥ ०१३ ॥

या वै त्वा कौशिकैर्वस्त्रैः शुभ्रैर्बहुधनैः पुरा ।
दृष्टवत्यस्मि राजेन्द्र सा त्वां पश्यामि चीरिणम् ॥ ०१४ ॥

यच्च तद्रुक्मपात्रीभिर्ब्राह्मणेभ्यः सहस्रशः ।
ह्रियते ते गृहादन्नं संस्कृतं सार्वकामिकम् ॥ ०१५ ॥

यतीनामगृहाणां ते तथैव गृहमेधिनाम् ।
दीयते भोजनं राजन्नतीव गुणवत्प्रभो ॥ ०१६ ॥

तच्च राजन्नपश्यन्त्याः का शान्तिर्हृदयस्य मे ॥ ०१६ ॥

यांस्ते भ्रातृन्महाराज युवानो मृष्टकुण्डलाः ।
अभोजयन्त मृष्टान्नैः सूदाः परमसंस्कृतैः ॥ ०१७ ॥

सर्वांस्तानद्य पश्यामि वने वन्येन जीवतः ।
अदुःखार्हान्मनुष्येन्द्र नोपशाम्यति मे मनः ॥ ०१८ ॥

भीमसेनमिमं चापि दुःखितं वनवासिनम् ।
ध्यायन्तं किं न मन्युस्ते प्राप्ते काले विवर्धते ॥ ०१९ ॥

भीमसेनं हि कर्माणि स्वयं कुर्वाणमच्युत ।
सुखार्हं दुःखितं दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ ०२० ॥

सत्कृतं विविधैर्यानैर्वस्त्रैरुच्चावचैस्तथा ।
तं ते वनगतं दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ ०२१ ॥

कुरूनपि हि यः सर्वान्हन्तुमुत्सहते प्रभुः ।
त्वत्प्रसादं प्रतीक्षंस्तु सहतेऽयं वृकोदरः ॥ ०२२ ॥

योऽर्जुनेनार्जुनस्तुल्यो द्विबाहुर्बहुबाहुना ।
शरातिसर्गे शीघ्रत्वात्कालान्तकयमोपमः ॥ ०२३ ॥

यस्य शस्त्रप्रतापेन प्रणताः सर्वपार्थिवाः ।
यज्ञे तव महाराज ब्राह्मणानुपतस्थिरे ॥ ०२४ ॥

तमिमं पुरुषव्याघ्रं पूजितं देवदानवैः ।
ध्यायन्तमर्जुनं दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ ०२५ ॥

दृष्ट्वा वनगतं पार्थमदुःखार्हं सुखोचितम् ।
न च ते वर्धते मन्युस्तेन मुह्यामि भारत ॥ ०२६ ॥

यो देवांश्च मनुष्यांश्च सर्पांश्चैकरथोऽजयत् ।

तं ते वनगतं दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ ०२७ ॥

यो यानैरद्भुताकारैर्हयैर्नागैश्च संवृतः ।
प्रसह्य वित्तान्यादत्त पार्थिवेभ्यः परंतपः ॥ ०२८ ॥

क्षिपत्येकेन वेगेन पञ्च बाणशतानि यः ।
तं ते वनगतं दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ ०२९ ॥

श्यामं बृहन्तं तरुणं चर्मिणामुत्तमं रणे ।
नकुलं ते वने दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ ०३० ॥

दर्शनीयं च शूरं च माद्रीपुत्रं युधिष्ठिर ।
सहदेवं वने दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ ०३१ ॥

द्रुपदस्य कुले जातां स्नुषां पाण्डोर्महात्मनः ।
मां ते वनगतां दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ ०३२ ॥

नूनं च तव नैवास्ति मन्युर्भरतसत्तम ।
यत्ते भ्रातॄंश्च मां चैव दृष्ट्वा न व्यथते मनः ॥ ०३३ ॥

न निर्मन्युः क्षत्रियोऽस्ति लोके निर्वचनं स्मृतम् ।
तदद्य त्वयि पश्यामि क्षत्रिये विपरीतवत् ॥ ०३४ ॥

यो न दर्शयते तेजः क्षत्रियः काल आगते ।
सर्वभूतानि तं पार्थ सदा परिभवन्त्युत ॥ ०३५ ॥

तत्त्वया न क्षमा कार्या शत्रून्प्रति कथञ्चन ।
तेजसैव हि ते शक्या निहन्तुं नात्र संशयः ॥ ०३६ ॥

तथैव यः क्षमाकाले क्षत्रियो नोपशाम्यति ।
अप्रियः सर्वभूतानां सोऽमुत्रेह च नश्यति ॥ ०३७ ॥

# अध्याय ०२९

द्रौपद्युवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रह्लादस्य च संवादं बलेर्वैरोचनस्य च ॥ ००१ ॥

असुरेन्द्रं महाप्राज्ञं धर्माणामागतागमम् ।
बलिः पप्रच्छ दैत्येन्द्रं प्रह्लादं पितरं पितुः ॥ ००२ ॥

क्षमा स्विच्छ्रेयसी तात उताहो तेज इत्युत ।
एतन्मे संशयं तात यथावद्ब्रूहि पृच्छते ॥ ००३ ॥

श्रेयो यदत्र धर्मज्ञ ब्रूहि मे तदसंशयम् ।
करिष्यामि हि तत्सर्वं यथावदनुशासनम् ॥ ००४ ॥

तस्मै प्रोवाच तत्सर्वमेवं पृष्टः पितामहः ।
सर्वनिश्चयवित्प्राज्ञः संशयं परिपृच्छते ॥ ००५ ॥

प्रह्लाद उवाच ॥

न श्रेयः सततं तेजो न नित्यं श्रेयसी क्षमा ।
इति तात विजानीहि द्वयमेतदसंशयम् ॥ ००६ ॥

यो नित्यं क्षमते तात बहून्दोषान्स विन्दति ।
भृत्याः परिभवन्त्येनमुदासीनास्तथैव च ॥ ००७ ॥

सर्वभूतानि चाप्यस्य न नमन्ते कदाचन ।
तस्मान्नित्यं क्षमा तात पण्डितैरपवादिता ॥ ००८ ॥

अवज्ञाय हि तं भृत्या भजन्ते बहुदोषताम् ।
आदातुं चास्य वित्तानि प्रार्थयन्तेऽल्पचेतसः ॥ ००९ ॥

यानं वस्त्राण्यलङ्काराञ्शयनान्यासनानि च ।
भोजनान्यथ पानानि सर्वोपकरणानि च ॥ ०१० ॥

आददीरन्नधिकृता यथाकाममचेतसः ।
प्रदिष्टानि च देयानि न दद्युर्भर्तृशासनात् ॥ ०११ ॥

न चैनं भर्तृपूजाभिः पूजयन्ति कदाचन ।
अवज्ञानं हि लोकेऽस्मिन्मरणादपि गर्हितम् ॥ ०१२ ॥

क्षमिणं तादृशं तात ब्रुवन्ति कटुकान्यपि ।
प्रेष्याः पुत्राश्च भृत्याश्च तथोदासीनवृत्तयः ॥ ०१३ ॥

अप्यस्य दारानिच्छन्ति परिभूय क्षमावतः ।
दाराश्चास्य प्रवर्तन्ते यथाकाममचेतसः ॥ ०१४ ॥

तथा च नित्यमुदिता यदि स्वल्पमपीश्वरात् ।
दण्डमर्हन्ति दुष्यन्ति दुष्टाश्चाप्यपकुर्वते ॥ ०१५ ॥

एते चान्ये च बहवो नित्यं दोषाः क्षमावताम् ।
अथ वैरोचने दोषानिमान्विद्ध्यक्षमावताम् ॥ ०१६ ॥

अस्थाने यदि वा स्थाने सततं रजसावृतः ।
क्रुद्धो दण्डान्प्रणयति विविधान्स्वेन तेजसा ॥ ०१७ ॥

मित्रैः सह विरोधं च प्राप्नुते तेजसावृतः ।

प्राप्नोति द्वेष्यतां चैव लोकात्स्वजनतस्तथा ॥ ०१८ ॥

सोऽवमानादर्थहानिमुपालम्भमनादरम् ।
संतापद्वेषलोभांश्च शत्रूंश्च लभते नरः ॥ ०१९ ॥

क्रोधाद्दण्डान्मनुष्येषु विविधान्पुरुषो नयन् ।
भ्रश्यते शीघ्रमैश्वर्यात्प्राणेभ्यः स्वजनादपि ॥ ०२० ॥

योऽपकर्तॄंश्च कर्तॄंश्च तेजसैवोपगच्छति ।
तस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव ॥ ०२१ ॥

यस्मादुद्विजते लोकः कथं तस्य भवो भवेत् ।
अन्तरं ह्यस्य दृष्ट्वैव लोको विकुरुते ध्रुवम् ॥ ०२२ ॥

तस्मान्नात्युत्सृजेत्तेजो न च नित्यं मृदुर्भवेत् ॥ ०२२ ॥

काले मृदुर्यो भवति काले भवति दारुणः ।
स वै सुखमवाप्नोति लोकेऽमुष्मिन्निहैव च ॥ ०२३ ॥

क्षमाकालांस्तु वक्ष्यामि शृणु मे विस्तरेण तान् ।
ये ते नित्यमसंत्याज्या यथा प्राहुर्मनीषिणः ॥ ०२४ ॥

पूर्वोपकारी यस्तु स्यादपराधेऽगरीयसि ।
उपकारेण तत्तस्य क्षन्तव्यमपराधिनः ॥ ०२५ ॥

अबुद्धिमाश्रितानां च क्षन्तव्यमपराधिनाम् ।
न हि सर्वत्र पाण्डित्यं सुलभं पुरुषेण वै ॥ ०२६ ॥

अथ चेद्बुद्धिजं कृत्वा ब्रूयुस्ते तदबुद्धिजम् ।
पापान्स्वल्पेऽपि तान्हन्यादपराधे तथानृजून् ॥ ०२७ ॥

सर्वस्यैकोऽपराधस्ते क्षन्तव्यः प्राणिनो भवेत् ।
द्वितीये सति वध्यस्तु स्वल्पेऽप्यपकृते भवेत् ॥ ०२८ ॥

अजानता भवेत्कश्चिदपराधः कृतो यदि ।
क्षन्तव्यमेव तस्याहुः सुपरीक्ष्य परीक्षया ॥ ०२९ ॥

मृदुना मार्दवं हन्ति मृदुना हन्ति दारुणम् ।
नासाध्यं मृदुना किञ्चित्तस्मात्तीक्ष्णतरो मृदुः ॥ ०३० ॥

देशकालौ तु संप्रेक्ष्य बलाबलमथात्मनः ।
नादेशकाले किञ्चित्स्याद्देशः कालः प्रतीक्ष्यते ॥ ०३१ ॥

तथा लोकभयाच्चैव क्षन्तव्यमपराधिनः ॥ ०३१ ॥

एत एवंविधाः कालाः क्षमायाः परिकीर्तिताः ।
अतोऽन्यथानुवर्तत्सु तेजसः काल उच्यते ॥ ०३२ ॥

द्रौपद्युवाच ॥

तदहं तेजसः कालं तव मन्ये नराधिप ।
धार्तराष्ट्रेषु लुब्धेषु सततं चापकारिषु ॥ ०३३ ॥

न हि कश्चित्क्षमाकालो विद्यतेऽद्य कुरून्प्रति ।
तेजसश्चागते काले तेज उत्स्रष्टुमर्हसि ॥ ०३४ ॥

मृदुर्भवत्यवज्ञातस्तीक्ष्णादुद्विजते जनः ।
काले प्राप्ते द्वयं ह्येतद्यो वेद स महीपतिः ॥ ०३५ ॥

# अध्याय ०३०

युधिष्ठिर उवाच ॥

क्रोधो हन्ता मनुष्याणां क्रोधो भावयिता पुनः ।
इति विद्धि महाप्राज्ञे क्रोधमूलौ भवाभवौ ॥ ००१ ॥

यो हि संहरते क्रोधं भावस्तस्य सुशोभने ।
यः पुनः पुरुषः क्रोधं नित्यं न सहते शुभे ॥ ००२ ॥

तस्याभावाय भवति क्रोधः परमदारुणः ॥ ००२ ॥

क्रोधमूलो विनाशो हि प्रजानामिह दृश्यते ।
तत्कथं मादृशः क्रोधमुत्सृजेल्लोकनाशनम् ॥ ००३ ॥

क्रुद्धः पापं नरः कुर्यात्क्रुद्धो हन्याद्गुरूनपि ।
क्रुद्धः परुषया वाचा श्रेयसोऽप्यवमन्यते ॥ ००४ ॥

वाच्यावाच्ये हि कुपितो न प्रजानाति कर्हिचित् ।
नाकार्यमस्ति क्रुद्धस्य नावाच्यं विद्यते तथा ॥ ००५ ॥

हिंस्यात्क्रोधादवध्यांश्च वध्यान्संपूजयेदपि ।
आत्मानमपि च क्रुद्धः प्रेषयेद्यमसादनम् ॥ ००६ ॥

एतान्दोषान्प्रपश्यद्भिर्जितः क्रोधो मनीषिभिः ।
इच्छद्भिः परमं श्रेय इह चामुत्र चोत्तमम् ॥ ००७ ॥

तं क्रोधं वर्जितं धीरैः कथमस्मद्विधश्चरेत् ।
एतद्द्रौपदि संधाय न मे मन्युः प्रवर्धते ॥ ००८ ॥

आत्मानं च परं चैव त्रायते महतो भयात् ।

क्रुध्यन्तमप्रतिक्रुध्यन्द्वयोरेष चिकित्सकः ॥ ००९ ॥

मूढो यदि क्लिश्यमानः क्रुध्यतेऽशक्तिमान्नरः ।
बलीयसां मनुष्याणां त्यजत्यात्मानमन्ततः ॥ ०१० ॥

तस्यात्मानं संत्यजतो लोका नश्यन्त्यनात्मनः ।
तस्माद्द्रौपद्यशक्तस्य मन्योर्नियमनं स्मृतम् ॥ ०११ ॥

विद्वांस्तथैव यः शक्तः क्लिश्यमानो न कुप्यति ।
स नाशयित्वा क्लेष्टारं परलोके च नन्दति ॥ ०१२ ॥

तस्माद्बलवता चैव दुर्बलेन च नित्यदा ।
क्षन्तव्यं पुरुषेणाहुरापत्स्वपि विजानता ॥ ०१३ ॥

मन्योर्हि विजयं कृष्णे प्रशंसन्तीह साधवः ।
क्षमावतो जयो नित्यं साधोरिह सतां मतम् ॥ ०१४ ॥

सत्यं चानृततः श्रेयो नृशंसाच्चानृशंसता ।
तमेवं बहुदोषं तु क्रोधं साधुविवर्जितम् ॥ ०१५ ॥

मादृशः प्रसृजेत्कस्मात्सुयोधनवधादपि ॥ ०१५ ॥

तेजस्वीति यमाहुर्वै पण्डिता दीर्घदर्शिनः ।
न क्रोधोऽभ्यन्तरस्तस्य भवतीति विनिश्चितम् ॥ ०१६ ॥

यस्तु क्रोधं समुत्पन्नं प्रज्ञया प्रतिबाधते ।
तेजस्विनं तं विद्वांसो मन्यन्ते तत्त्वदर्शिनः ॥ ०१७ ॥

क्रुद्धो हि कार्यं सुश्रोणि न यथावत्प्रपश्यति ।
न कार्यं न च मर्यादां नरः क्रुद्धोऽनुपश्यति ॥ ०१८ ॥

हन्त्यवध्यानपि क्रुद्धो गुरून्रूक्षैस्तुदत्यपि ।
तस्मात्तेजसि कर्तव्ये क्रोधो दूरात्प्रतिष्ठितः ॥ ०१९ ॥

दाक्ष्यं ह्यमर्षः शौर्यं च शीघ्रत्वमिति तेजसः ।
गुणाः क्रोधाभिभूतेन न शक्याः प्राप्तुमञ्जसा ॥ ०२० ॥

क्रोधं त्यक्त्वा तु पुरुषः सम्यक्तेजोऽभिपद्यते ।
कालयुक्तं महाप्राज्ञे क्रुद्धैस्तेजः सुदुःसहम् ॥ ०२१ ॥

क्रोधस्त्वपण्डितैः शश्वत्तेज इत्यभिधीयते ।
रजस्तल्लोकनाशाय विहितं मानुषान्प्रति ॥ ०२२ ॥

तस्माच्छश्वत्त्यजेत्क्रोधं पुरुषः सम्यगाचरन् ।
श्रेयान्स्वधर्मानपगो न क्रुद्ध इति निश्चितम् ॥ ०२३ ॥

यदि सर्वमबुद्धीनामतिक्रान्तममेधसाम् ।
अतिक्रमो मद्विधस्य कथं स्वित्स्यादनिन्दिते ॥ ०२४ ॥

यदि न स्युर्मनुष्येषु क्षमिणः पृथिवीसमाः ।
न स्यात्संधिर्मनुष्याणां क्रोधमूलो हि विग्रहः ॥ ०२५ ॥

अभिषक्तो ह्यभिषजेदाहन्याद्गुरुणा हतः ।
एवं विनाशो भूतानामधर्मः प्रथितो भवेत् ॥ ०२६ ॥

आक्रुष्टः पुरुषः सर्वः प्रत्याक्रोशेदनन्तरम् ।
प्रतिहन्याद्धतश्चैव तथा हिंस्याच्च हिंसितः ॥ ०२७ ॥

हन्युर्हि पितरः पुत्रान्पुत्राश्चापि तथा पितॄन् ।
हन्युश्च पतयो भार्याः पतीन्भार्यास्तथैव च ॥ ०२८ ॥

एवं सङ्कुपिते लोके जन्म कृष्णे न विद्यते ।

प्रजानां संधिमूलं हि जन्म विद्धि शुभानने ॥ ०२९ ॥

ताः क्षीयेरन्प्रजाः सर्वाः क्षिप्रं द्रौपदि तादृशे ।
तस्मान्मन्युर्विनाशाय प्रजानामभवाय च ॥ ०३० ॥

यस्मात्तु लोके दृश्यन्ते क्षमिणः पृथिवीसमाः ।
तस्माज्जन्म च भूतानां भवश्च प्रतिपद्यते ॥ ०३१ ॥

क्षन्तव्यं पुरुषेणेह सर्वास्वापत्सु शोभने ।
क्षमा भवो हि भूतानां जन्म चैव प्रकीर्तितम् ॥ ०३२ ॥

आक्रुष्टस्ताडितः क्रुद्धः क्षमते यो बलीयसा ।
यश्च नित्यं जितक्रोधो विद्वानुत्तमपूरुषः ॥ ०३३ ॥

प्रभाववानपि नरस्तस्य लोकाः सनातनाः ।
क्रोधनस्त्वल्पविज्ञानः प्रेत्य चेह च नश्यति ॥ ०३४ ॥

अत्राप्युदाहरन्तीमा गाथा नित्यं क्षमावताम् ।
गीताः क्षमावता कृष्णे काश्यपेन महात्मना ॥ ०३५ ॥

क्षमा धर्मः क्षमा यज्ञः क्षमा वेदाः क्षमा श्रुतम् ।
यस्तामेवं विजानाति स सर्वं क्षन्तुमर्हति ॥ ०३६ ॥

क्षमा ब्रह्म क्षमा सत्यं क्षमा भूतं च भावि च ।
क्षमा तपः क्षमा शौचं क्षमया चोद्धृतं जगत् ॥ ०३७ ॥

अति ब्रह्मविदां लोकानति चापि तपस्विनाम् ।
अति यज्ञविदां चैव क्षमिणः प्राप्नुवन्ति तान् ॥ ०३८ ॥

क्षमा तेजस्विनां तेजः क्षमा ब्रह्म तपस्विनाम् ।
क्षमा सत्यं सत्यवतां क्षमा दानं क्षमा यशः ॥ ०३९ ॥

तां क्षमामीदृशीं कृष्णे कथमस्मद्विधस्त्यजेत् ।
यस्यां ब्रह्म च सत्यं च यज्ञा लोकाश्च विष्ठिताः ॥ ०४० ॥

भुज्यन्ते यज्वनां लोकाः क्षमिणामपरे तथा ॥ ०४० ॥

क्षन्तव्यमेव सततं पुरुषेण विजानता ।
यदा हि क्षमते सर्वं ब्रह्म संपद्यते तदा ॥ ०४१ ॥

क्षमावतामयं लोकः परश्चैव क्षमावताम् ।
इह संमानमृच्छन्ति परत्र च शुभां गतिम् ॥ ०४२ ॥

येषां मन्युर्मनुष्याणां क्षमया निहतः सदा ।
तेषां परतरे लोकास्तस्मात्क्षान्तिः परा मता ॥ ०४३ ॥

इति गीताः काश्यपेन गाथा नित्यं क्षमावताम् ।
श्रुत्वा गाथाः क्षमायास्त्वं तुष्य द्रौपदि मा क्रुधः ॥ ०४४ ॥

पितामहः शांतनवः शमं संपूजयिष्यति ।
आचार्यौ विदुरः क्षत्ता शममेव वदिष्यतः ॥ ०४५ ॥

कृपश्च सञ्जयश्चैव शममेव वदिष्यतः ॥ ०४५ ॥

सोमदत्तो युयुत्सुश्च द्रोणपुत्रस्तथैव च ।
पितामहश्च नो व्यासः शमं वदति नित्यशः ॥ ०४६ ॥

एतैर्हि राजा नियतं चोद्यमानः शमं प्रति ।
राज्यं दातेति मे बुद्धिर्न चेल्लोभान्नशिष्यति ॥ ०४७ ॥

कालोऽयं दारुणः प्राप्तो भरतानामभूतये ।
निश्चितं मे सदैवैतत्पुरस्तादपि भामिनि ॥ ०४८ ॥

सुयोधनो नार्हतीति क्षमामेवं न विन्दति ।
अर्हस्तस्याहमित्येव तस्मान्मां विन्दते क्षमा ॥ ०४९ ॥

एतदात्मवतां वृत्तमेष धर्मः सनातनः ।
क्षमा चैवानृशंस्यं च तत्कर्तास्म्यहमञ्जसा ॥ ०५० ॥

---

# अध्याय ०३१

द्रौपद्युवाच ॥

नमो धात्रे विधात्रे च यौ मोहं चक्रतुस्तव ।
पितृपैतामहे वृत्ते वोढव्ये तेऽन्यथा मतिः ॥ ००१ ॥

नेह धर्मानृशंस्याभ्यां न क्षान्त्या नार्जवेन च ।
पुरुषः श्रियमाप्नोति न घृणित्वेन कर्हिचित् ॥ ००२ ॥

त्वां चेद्व्यसनमभ्यागादिदं भारत दुःसहम् ।
यत्त्वं नार्हसि नापीमे भ्रातरस्ते महौजसः ॥ ००३ ॥

न हि तेऽध्यगमज्जातु तदानीं नाद्य भारत ।
धर्मात्प्रियतरं किञ्चिदपि चेज्जीवितादिह ॥ ००४ ॥

धर्मार्थमेव ते राज्यं धर्मार्थं जीवितं च ते ।
ब्राह्मणा गुरवश्चैव जानन्त्यपि च देवताः ॥ ००५ ॥

भीमसेनार्जुनौ चैव माद्रेयौ च मया सह ।

त्यजेस्त्वमिति मे बुद्धिर्न तु धर्मं परित्यजेः ॥ ००६ ॥

राजानं धर्मगोप्तारं धर्मो रक्षति रक्षितः ।
इति मे श्रुतमार्याणां त्वां तु मन्ये न रक्षति ॥ ००७ ॥

अनन्या हि नरव्याघ्र नित्यदा धर्ममेव ते ।
बुद्धिः सततमन्वेति छायेव पुरुषं निजा ॥ ००८ ॥

नावमंस्था हि सदृशान्नावरांश्श्रेयसः कुतः ।
अवाप्य पृथिवीं कृत्स्नां न ते श्रृङ्गमवर्धत ॥ ००९ ॥

स्वाहाकारैः स्वधाभिश्च पूजाभिरपि च द्विजान् ।
दैवतानि पितृंश्चैव सततं पार्थ सेवसे ॥ ०१० ॥

ब्राह्मणाः सर्वकामैस्ते सततं पार्थ तर्पिताः ।
यतयो मोक्षिणश्चैव गृहस्थाश्चैव भारत ॥ ०११ ॥

आरण्यकेभ्यो लौहानि भाजनानि प्रयच्छसि ।
नादेयं ब्राह्मणेभ्यस्ते गृहे किञ्चन विद्यते ॥ ०१२ ॥

यदिदं वैश्वदेवान्ते सायंप्रातः प्रदीयते ।
तद्दत्त्वातिथिभृत्येभ्यो राजञ्शेषेण जीवसि ॥ ०१३ ॥

इष्टयः पशुबन्धाश्च काम्यनैमित्तिकाश्च ये ।
वर्तन्ते पाकयज्ञाश्च यज्ञकर्म च नित्यदा ॥ ०१४ ॥

अस्मिन्नपि महारण्ये विजने दस्युसेविते ।
राष्ट्रादपेत्य वसतो धार्मस्ते नावसीदति ॥ ०१५ ॥

अश्वमेधो राजसूयः पुण्डरीकोऽथ गोसवः ।
एतैरपि महायज्ञैरिष्टं ते भूरिदक्षिणैः ॥ ०१६ ॥

राजन्परीतया बुद्ध्या विषमेऽक्षपराजये ।
राज्यं वसून्यायुधानि भ्रातॄन्मां चासि निर्जितः ॥ ०१७ ॥

ऋजोर्मृदोर्वदान्यस्य ह्रीमतः सत्यवादिनः ।
कथमक्षव्यसनजा बुद्धिरापतिता तव ॥ ०१८ ॥

अतीव मोहमायाति मनश्च परिदूयते ।
निशाम्य ते दुःखमिदमिमां चापदमीदृशीम् ॥ ०१९ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
ईश्वरस्य वशे लोकस्तिष्ठते नात्मनो यथा ॥ ०२० ॥

धातैव खलु भूतानां सुखदुःखे प्रियाप्रिये ।
दधाति सर्वमीशानः पुरस्ताच्छुक्रमुच्चरन् ॥ ०२१ ॥

यथा दारुमयी योषा नरवीर समाहिता ।
ईरयत्यङ्गमङ्गानि तथा राजन्निमाः प्रजाः ॥ ०२२ ॥

आकाश इव भूतानि व्याप्य सर्वाणि भारत ।
ईश्वरो विदधातीह कल्याणं यच्च पापकम् ॥ ०२३ ॥

शकुनिस्तन्तुबद्धो वा नियतोऽयमनीश्वरः ।
ईश्वरस्य वशे तिष्ठन्नान्येषां नात्मनः प्रभुः ॥ ०२४ ॥

मणिः सूत्र इव प्रोतो नस्योत इव गोवृषः ।
धातुरादेशमन्वेति तन्मयो हि तदर्पणः ॥ ०२५ ॥

नात्माधीनो मनुष्योऽयं कालं भवति कञ्चन ।
स्रोतसो मध्यमापन्नः कूलाद्वृक्ष इव च्युतः ॥ ०२६ ॥

अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत्स्वर्गं नरकमेव च ॥ ०२७ ॥

यथा वायोस्तृणाग्राणि वशं यान्ति बलीयसः ।
धातुरेवं वशं यान्ति सर्वभूतानि भारत ॥ ०२८ ॥

आर्यकर्मणि युञ्जानः पापे वा पुनरीश्वरः ।
व्याप्य भूतानि चरते न चायमिति लक्ष्यते ॥ ०२९ ॥

हेतुमात्रमिदं धातुः शरीरं क्षेत्रसञ्ज्ञितम् ।
येन कारयते कर्म शुभाशुभफलं विभुः ॥ ०३० ॥

पश्य मायाप्रभावोऽयमीश्वरेण यथा कृतः ।
यो हन्ति भूतैर्भूतानि मोहयित्वात्ममायया ॥ ०३१ ॥

अन्यथा परिदृष्टानि मुनिभिर्वेददर्शिभिः ।
अन्यथा परिवर्तन्ते वेगा इव नभस्वतः ॥ ०३२ ॥

अन्यथैव हि मन्यन्ते पुरुषास्तानि तानि च ।
अन्यथैव प्रभुस्तानि करोति विकरोति च ॥ ०३३ ॥

यथा काष्ठेन वा काष्ठमश्मानं चाश्मना पुनः ।
अयसा चाप्ययश्छिन्द्यान्निर्विचेष्टमचेतनम् ॥ ०३४ ॥

एवं स भगवान्देवः स्वयम्भूः प्रपितामहः ।
हिनस्ति भूतैर्भूतानि छद्म कृत्वा युधिष्ठिर ॥ ०३५ ॥

संप्रयोज्य वियोज्यायं कामकारकरः प्रभुः ।
क्रीडते भगवन्भूतैर्बालः क्रीडनकैरिव ॥ ०३६ ॥

न मातृपितृवद्राजन्धाता भूतेषु वर्तते ।

रोषादिव प्रवृत्तोऽयं यथायमितरो जनः ॥ ०३७ ॥

आर्याञ्शीलवतो दृष्ट्वा ह्रीमतो वृत्तिकर्शितान् ।
अनार्यान्सुखिनश्चैव विह्वलामीव चिन्तया ॥ ०३८ ॥

तवेमामापदं दृष्ट्वा समृद्धिं च सुयोधने ।
धातारं गर्हये पार्थ विषमं योऽनुपश्यति ॥ ०३९ ॥

आर्यशास्त्रातिगे क्रूरे लुब्धे धर्मापचायिनि ।
धार्तराष्ट्रे श्रियं दत्त्वा धाता किं फलमश्नुते ॥ ०४० ॥

कर्म चेत्कृतमन्वेति कर्तारं नान्यमृच्छति ।
कर्मणा तेन पापेन लिप्यते नूनमीश्वरः ॥ ०४१ ॥

अथ कर्म कृतं पापं न चेत्कर्तारमृच्छति ।
कारणं बलमेवेह जनाञ्शोचामि दुर्बलान् ॥ ०४२ ॥

---

# अध्याय ०३२

युधिष्ठिर उवाच ॥

वल्गु चित्रपदं श्लक्ष्णं याज्ञसेनि त्वया वचः ।
उक्तं तच्छ्रुतमस्माभिर्नास्तिक्यं तु प्रभाषसे ॥ ००१ ॥

नाहं धर्मफलान्वेषी राजपुत्रि चराम्युत ।
ददामि देयमित्येव यजे यष्टव्यमित्युत ॥ ००२ ॥

अस्तु वात्र फलं मा वा कर्तव्यं पुरुषेण यत् ।
गृहानावसता कृष्णे यथाशक्ति करोमि तत्  ॥ ००३  ॥

धर्मं चरामि सुश्रोणि न धर्मफलकारणात् ।
आगमाननतिक्रम्य सतां वृत्तमवेक्ष्य च  ॥ ००४  ॥

धर्म एव मनः कृष्णे स्वभावाच्चैव मे धृतम्  ॥ ००४  ॥

न धर्मफलमाप्नोति यो धर्मं दोग्धुमिच्छति ।
यश्चैनं शङ्कते कृत्वा नास्तिक्यात्पापचेतनः  ॥ ००५  ॥

अतिवादान्मदाच्चैव मा धर्ममतिशङ्किथाः ।
धर्मातिशङ्की पुरुषस्तिर्यग्गतिपरायणः  ॥ ००६  ॥

धर्मो यस्यातिशङ्क्यः स्यादार्षं वा दुर्बलात्मनः ।
वेदाच्छूद्र इवापेयात्स लोकादजरामरात्  ॥ ००७  ॥

वेदाध्यायी धर्मपरः कुले जातो यशस्विनि ।
स्थविरेषु स योक्तव्यो राजभिर्धर्मचारिभिः  ॥ ००८  ॥

पापीयान्हि स शूद्रेभ्यस्तस्करेभ्यो विशेषतः ।
शास्त्रातिगो मन्दबुद्धिर्यो धर्ममतिशङ्कते  ॥ ००९  ॥

प्रत्यक्षं हि त्वया दृष्ट ऋषिर्गच्छन्महातपाः ।
मार्कण्डेयोऽप्रमेयात्मा धर्मेण चिरजीविताम्  ॥ ०१०  ॥

व्यासो वसिष्ठो मैत्रेयो नारदो लोमशः शुकः ।
अन्ये च ऋषयः सिद्धा धर्मेणैव सुचेतसः  ॥ ०११  ॥

प्रत्यक्षं पश्यसि ह्येतान्दिव्ययोगसमन्वितान् ।
शापानुग्रहणे शक्तान्देवैरपि गरीयसः  ॥ ०१२  ॥

एते हि धर्ममेवादौ वर्णयन्ति सदा मम ।
कर्तव्यममरप्रख्याः प्रत्यक्षागमबुद्धयः ॥ ०१३ ॥

अतो नार्हसि कल्याणि धातारं धर्ममेव च ।
रजोमूढेन मनसा क्षेप्तुं शङ्कितुमेव च ॥ ०१४ ॥

धर्मातिशङ्की नान्यस्मिन्प्रमाणमधिगच्छति ।
आत्मप्रमाण उन्नद्धः श्रेयसो ह्यवमन्यकः ॥ ०१५ ॥

इन्द्रियप्रीतिसंबद्धं यदिदं लोकसाक्षिकम् ।
एतावान्मन्यते बालो मोहमन्यत्र गच्छति ॥ ०१६ ॥

प्रायश्चित्तं न तस्यास्ति यो धर्ममतिशङ्कते ।
ध्यायन्स कृपणः पापो न लोकान्प्रतिपद्यते ॥ ०१७ ॥

प्रमाणान्यतिवृत्तो हि वेदशास्त्रार्थनिन्दकः ।
कामलोभानुगो मूढो नरकं प्रतिपद्यते ॥ ०१८ ॥

यस्तु नित्यं कृतमतिर्धर्ममेवाभिपद्यते ।
अशङ्कमानः कल्याणि सोऽमुत्रानन्त्यमश्नुते ॥ ०१९ ॥

आर्षं प्रमाणमुत्क्रम्य धर्मानपरिपालयन् ।
सर्वशास्त्रातिगो मूढः शं जन्मसु न विन्दति ॥ ०२० ॥

शिष्टैराचरितं धर्मं कृष्णे मा स्मातिशङ्किथाः ।
पुराणमृषिभिः प्रोक्तं सर्वज्ञैः सर्वदर्शिभिः ॥ ०२१ ॥

धर्म एव प्लवो नान्यः स्वर्गं द्रौपदि गच्छताम् ।
सैव नौः सागरस्येव वणिजः पारमृच्छतः ॥ ०२२ ॥

अफालो यदि धर्मः स्याच्चरितो धर्मचारिभिः ।
अप्रतिष्ठे तमस्येतज्जगन्मज्जेदनिन्दिते ॥ ०२३ ॥

निर्वाणं नाधिगच्छेयुर्जीवेयुः पशुजीविकाम् ।
विघातेनैव युज्येयुर्न चार्थं किञ्चिदाप्नुयुः ॥ ०२४ ॥

तपश्च ब्रह्मचर्यं च यज्ञः स्वाध्याय एव च ।
दानमार्जवमेतानि यदि स्युरफलानि वै ॥ ०२५ ॥

नाचरिष्यन्परे धर्मं परे परतरे च ये ।
विप्रलम्भोऽयमत्यन्तं यदि स्युरफलाः क्रियाः ॥ ०२६ ॥

ऋषयश्चैव देवाश्च गन्धर्वासुरराक्षसाः ।
ईश्वराः कस्य हेतोस्ते चरेयुर्धर्ममादृताः ॥ ०२७ ॥

फलदं त्विह विज्ञाय धातारं श्रेयसि ध्रुवे ।
धर्मं ते ह्याचरन्कृष्णे तद्धि धर्मसनातनम् ॥ ०२८ ॥

स चायं सफलो धर्मो न धर्मोऽफल उच्यते ।
दृश्यन्तेऽपि हि विद्यानां फलानि तपसां तथा ॥ ०२९ ॥

त्वय्येतद्वै विजानीहि जन्म कृष्णे यथा श्रुतम् ।
वेत्थ चापि यथा जातो धृष्टद्युम्नः प्रतापवान् ॥ ०३० ॥

एतावदेव पर्याप्तमुपमानं शुचिस्मिते ।
कर्मणां फलमस्तीति धीरोऽल्पेनापि तुष्यति ॥ ०३१ ॥

बहुनापि ह्यविद्वांसो नैव तुष्यन्त्यबुद्धयः ।
तेषां न धर्मजं किञ्चित्प्रेत्य शर्मास्ति कर्म वा ॥ ०३२ ॥

कर्मणामुत पुण्यानां पापानां च फलोदयः ।

प्रभवश्चाप्ययश्चैव देवगुह्यानि भामिनि ॥ ०३३ ॥

नैतानि वेद यः कश्चिन्मुह्यन्त्यत्र प्रजा इमाः ।
रक्ष्याण्येतानि देवानां गूढमाया हि देवताः ॥ ०३४ ॥

कृशाङ्गाः सुव्रताश्चैव तपसा दग्धकिल्बिषाः ।
प्रसन्नैर्मानसैर्युक्ताः पश्यन्त्येतानि वै द्विजाः ॥ ०३५ ॥

न फलादर्शनाद्धर्मः शङ्कितव्यो न देवताः ।
यष्टव्यं चाप्रमत्तेन दातव्यं चानसूयता ॥ ०३६ ॥

कर्मणां फलमस्तीति तथैतद्धर्म शाश्वतम् ।
ब्रह्मा प्रोवाच पुत्राणां यदृषिर्वेद कश्यपः ॥ ०३७ ॥

तस्मात्ते संशयः कृष्णे नीहार इव नश्यतु ।
व्यवस्य सर्वमस्तीति नास्तिक्यं भावमुत्सृज ॥ ०३८ ॥

ईश्वरं चापि भूतानां धातारं मा विचिक्षिपः ।
शिक्षस्वैनं नमस्वैनं मा ते भूद्बुद्धिरीदृशी ॥ ०३९ ॥

यस्य प्रसादात्तद्भक्तो मर्त्यो गच्छत्यमर्त्यताम् ।
उत्तमं दैवतं कृष्णे मातिवोचः कथञ्चन ॥ ०४० ॥

---

# अध्याय ०३३

द्रौपद्युवाच ॥

नावमन्ये न गर्हे च धर्मं पार्थ कथञ्चन ।

ईश्वरं कुत एवाहमवमंस्ये प्रजापतिम्  ॥ ००१  ॥

आर्ताहं प्रलपामीदमिति मां विद्धि भारत ।
भूयश्च विलपिष्यामि सुमनास्तन्निबोध मे  ॥ ००२  ॥

कर्म खल्विह कर्तव्यं जातेनामित्रकर्शन ।
अकर्माणो हि जीवन्ति स्थावरा नेतरे जनाः  ॥ ००३  ॥

आ मातृस्तनपानाच्च यावच्छय्योपसर्पणम् ।
जङ्गमाः कर्मणा वृत्तिमाप्नुवन्ति युधिष्ठिर  ॥ ००४  ॥

जङ्गमेषु विशेषेण मनुष्या भरतर्षभ ।
इच्छन्ति कर्मणा वृत्तिमवाप्तुं प्रेत्य चेह च  ॥ ००५  ॥

उत्थानमभिजानन्ति सर्वभूतानि भारत ।
प्रत्यक्षं फलमश्नन्ति कर्मणां लोकसाक्षिकम्  ॥ ००६  ॥

पश्यामि स्वं समुत्थानमुपजीवन्ति जन्तवः ।
अपि धाता विधाता च यथायमुदके बकः  ॥ ००७  ॥

स्वकर्म कुरु मा ग्लासीः कर्मणा भव दंशितः ।
कृत्यं हि योऽभिजानाति सहस्रे नास्ति सोऽस्ति वा  ॥ ००८  ॥

तस्य चापि भवेत्कार्यं विवृद्धौ रक्षणे तथा ।
भक्ष्यमाणो ह्यनावापः क्षीयते हिमवानपि  ॥ ००९  ॥

उत्सीदेरन्प्रजाः सर्वा न कुर्युः कर्म चेद्यदि ।
अपि चाप्यफलं कर्म पश्यामः कुर्वतो जनान्  ॥ ०१०  ॥

नान्यथा ह्यभिजानन्ति वृत्तिं लोके कथञ्चन  ॥ ०१०  ॥

यश्च दिष्टपरो लोके यश्चायं हठवादकः ।
उभावपसदावेतौ कर्मबुद्धिः प्रशस्यते ॥ ०११ ॥

यो हि दिष्टमुपासीनो निर्विचेष्टः सुखं स्वपेत् ।
अवसीदेत्सुदुर्बुद्धिरामो घट इवाम्भसि ॥ ०१२ ॥

तथैव हठबुद्धिर्यः शक्तः कर्मण्यकर्मकृत् ।
आसीत न चिरं जीवेदनाथ इव दुर्बलः ॥ ०१३ ॥

अकस्मादपि यः कश्चिदर्थं प्राप्नोति पूरुषः ।
तं हठेनेति मन्यन्ते स हि यत्नो न कस्यचित् ॥ ०१४ ॥

यच्चापि किञ्चित्पुरुषो दिष्टं नाम लभत्युत ।
दैवेन विधिना पार्थ तद्दैवमिति निश्चितम् ॥ ०१५ ॥

यत्स्वयं कर्मणा किञ्चित्फलमाप्नोति पूरुषः ।
प्रत्यक्षं चक्षुषा दृष्टं तत्पौरुषमिति स्मृतम् ॥ ०१६ ॥

स्वभावतः प्रवृत्तोऽन्यः प्राप्नोत्यर्थानकारणात् ।
तत्स्वभावात्मकं विद्धि फलं पुरुषसत्तम ॥ ०१७ ॥

एवं हठाच्च दैवाच्च स्वभावात्कर्मणस्तथा ।
यानि प्राप्नोति पुरुषस्तत्फलं पूर्वकर्मणः ॥ ०१८ ॥

धातापि हि स्वकर्मैव तैस्तैर्हेतुभिरीश्वरः ।
विदधाति विभज्येह फलं पूर्वकृतं नृणाम् ॥ ०१९ ॥

यद्ध्ययं पुरुषः किञ्चित्कुरुते वै शुभाशुभम् ।
तद्धातृविहितं विद्धि पूर्वकर्मफलोदयम् ॥ ०२० ॥

कारणं तस्य देहोऽयं धातुः कर्मणि कर्मणि ।

स यथा प्रेरयत्येनं तथायं कुरुतेऽवशः ॥ ०२१ ॥

तेषु तेषु हि कृत्येषु विनियोक्ता महेश्वरः ।
सर्वभूतानि कौन्तेय कारयत्यवशान्यपि ॥ ०२२ ॥

मनसार्थान्विनिश्चित्य पश्चात्प्राप्नोति कर्मणा ।
बुद्धिपूर्वं स्वयं धीरः पुरुषस्तत्र कारणम् ॥ ०२३ ॥

संख्यातुं नैव शक्यानि कर्माणि पुरुषर्षभ ।
अगारनगराणां हि सिद्धिः पुरुषहैतुकी ॥ ०२४ ॥

तिले तैलं गवि क्षीरं काष्ठे पावकमन्ततः ।
धिया धीरो विजानीयादुपायं चास्य सिद्धये ॥ ०२५ ॥

ततः प्रवर्तते पश्चात्करणेष्वस्य सिद्धये ।
तां सिद्धिमुपजीवन्ति कर्मणामिह जन्तवः ॥ ०२६ ॥

कुशलेन कृतं कर्म कर्त्रा साधु विनिश्चितम् ।
इदं त्वकुशलेनेति विशेषादुपलभ्यते ॥ ०२७ ॥

इष्टापूर्तफलं न स्यान्न शिष्यो न गुरुर्भवेत् ।
पुरुषः कर्मसाध्येषु स्याच्चेदयमकारणम् ॥ ०२८ ॥

कर्तृत्वादेव पुरुषः कर्मसिद्धौ प्रशस्यते ।
असिद्धौ निन्द्यते चापि कर्मनाशः कथं त्विह ॥ ०२९ ॥

सर्वमेव हठेनैके दिष्टेनैके वदन्त्युत ।
पुरुषप्रयत्नजं केचित्त्रैधमेतन्निरुच्यते ॥ ०३० ॥

न चैवैतावता कार्यं मन्यन्त इति चापरे ।
अस्ति सर्वमदृश्यं तु दिष्टं चैव तथा हठः ॥ ०३१ ॥

दृश्यते हि हठाच्चैव दिष्टाच्चार्थस्य संततिः ॥ ०३१ ॥

किञ्चिद्दैवाद्धठात्किञ्चित्किञ्चिदेव स्वकर्मतः ।
पुरुषः फलमाप्नोति चतुर्थं नात्र कारणम् ॥ ०३२ ॥

कुशलाः प्रतिजानन्ति ये तत्त्वविदुषो जनाः ॥ ०३२ ॥

तथैव धाता भूतानामिष्टानिष्टफलप्रदः ।
यदि न स्यान्न भूतानां कृपणो नाम कश्चन ॥ ०३३ ॥

यं यमर्थमभिप्रेप्सुः कुरुते कर्म पूरुषः ।
तत्तत्सफलमेव स्याद्यदि न स्यात्पुराकृतम् ॥ ०३४ ॥

त्रिद्वारामर्थसिद्धिं तु नानुपश्यन्ति ये नराः ।
तथैवानर्थसिद्धिं च यथा लोकास्तथैव ते ॥ ०३५ ॥

कर्तव्यं त्वेव कर्मेति मनोरेष विनिश्चयः ।
एकान्तेन ह्यनीहोऽयं पराभवति पूरुषः ॥ ०३६ ॥

कुर्वतो हि भवत्येव प्रायेणेह युधिष्ठिर ।
एकान्तफलसिद्धिं तु न विन्दत्यलसः क्वचित् ॥ ०३७ ॥

असंभवे त्वस्य हेतुः प्रायश्चित्तं तु लक्ष्यते ।
कृते कर्मणि राजेन्द्र तथानृण्यमवाप्यते ॥ ०३८ ॥

अलक्ष्मीराविशत्येनं शयानमलसं नरम् ।
निःसंशयं फलं लब्ध्वा दक्षो भूतिमुपाश्नुते ॥ ०३९ ॥

अनर्थं संशयावस्थं वृण्वते मुक्तसंशयाः ।
धीरा नराः कर्मरता न तु निःसंशयं क्वचित् ॥ ०४० ॥

एकान्तेन ह्यनर्थोऽयं वर्ततेऽस्मासु सांप्रतम् ।
न तु निःसंशयं न स्यात्त्वयि कर्मण्यवस्थिते ॥ ०४१ ॥

अथ वा सिद्धिरेव स्यान्महिमा तु तथैव ते ।
वृकोदरस्य बीभत्सोर्भ्रात्रोश्च यमयोरपि ॥ ०४२ ॥

अन्येषां कर्म सफलमस्माकमपि वा पुनः ।
विप्रकर्षेण बुध्येत कृतकर्मा यथा फलम् ॥ ०४३ ॥

पृथिवीं लाङ्गलेनैव भित्त्वा बीजं वपत्युत ।
आस्तेऽथ कर्षकस्तूष्णीं पर्जन्यस्तत्र कारणम् ॥ ०४४ ॥

वृष्टिश्चेन्नानुगृह्णीयादनेनास्तत्र कर्षकः ।
यदन्यः पुरुषः कुर्यात्कृतं तत्सकलं मया ॥ ०४५ ॥

तच्चेदफलमस्माकं नापराधोऽस्ति नः क्वचित् ।
इति धीरोऽन्ववेक्ष्यैव नात्मानं तत्र गर्हयेत् ॥ ०४६ ॥

कुर्वतो नार्थसिद्धिर्मे भवतीति ह भारत ।
निर्वेदो नात्र गन्तव्यो द्वावेतौ ह्यस्य कर्मणः ॥ ०४७ ॥

सिद्धिर्वाप्यथ वासिद्धिरप्रवृत्तिरतोऽन्यथा ॥ ०४७ ॥

बहूनां समवाये हि भावानां कर्म सिध्यति ।
गुणाभावे फलं न्यूनं भवत्यफलमेव वा ॥ ०४८ ॥

अनारम्भे तु न फलं न गुणो दृश्यतेऽच्युत ॥ ०४८ ॥

देशकालावुपायांश्च मङ्गलं स्वस्ति वृद्धये ।
युनक्ति मेधया धीरो यथाशक्ति यथाबलम् ॥ ०४९ ॥

अप्रमत्तेन तत्कार्यमुपदेष्टा पराक्रमः ।
भूयिष्ठं कर्मयोगेषु सर्व एव पराक्रमः ॥ ०५० ॥

यं तु धीरोऽन्ववेक्षेत श्रेयांसं बहुभिर्गुणैः ।
साम्नैवार्थं ततो लिप्सेत्कर्म चास्मै प्रयोजयेत् ॥ ०५१ ॥

व्यसनं वास्य काङ्क्षेत विनाशं वा युधिष्ठिर ।
अपि सिन्धोर्गिरेर्वापि किं पुनर्मर्त्यधर्मिणः ॥ ०५२ ॥

उत्थानयुक्तः सततं परेषामन्तरैषणे ।
आनृण्यमाप्नोति नरः परस्यात्मन एव च ॥ ०५३ ॥

न चैवात्मावमन्तव्यः पुरुषेण कदाचन ।
न ह्यात्मपरिभूतस्य भूतिर्भवति भारत ॥ ०५४ ॥

एवं संस्थितिका सिद्धिरियं लोकस्य भारत ।
चित्रा सिद्धिगतिः प्रोक्ता कालावस्थाविभागतः ॥ ०५५ ॥

ब्राह्मणं मे पिता पूर्वं वासयामास पण्डितम् ।
सोऽस्मा अर्थमिमं प्राह पित्रे मे भरतर्षभ ॥ ०५६ ॥

नीतिं बृहस्पतिप्रोक्तां भ्रातॄन्मेऽग्राहयत्पुरा ।
तेषां साङ्कथ्यमश्रौषमहमेतत्तदा गृहे ॥ ०५७ ॥

स मां राजन्कर्मवतीमागतामाह सान्त्वयन् ।
शुश्रूषमाणामासीनां पितुरङ्के युधिष्ठिर ॥ ०५८ ॥

# अध्याय ०३४

वैशंपायन उवाच ॥

याज्ञसेन्या वचः श्रुत्वा भीमसेनोऽत्यमर्षणः ।
निःश्वसन्नुपसङ्गम्य क्रुद्धो राजानमब्रवीत् ॥ ००१ ॥

राज्यस्य पदवीं धर्म्यां व्रज सत्पुरुषोचिताम् ।
धर्मकामार्थहीनानां किं नो वस्तुं तपोवने ॥ ००२ ॥

नैव धर्मेण तद्राज्यं नार्जवेन न चौजसा ।
अक्षकूटमधिष्ठाय हृतं दुर्योधनेन नः ॥ ००३ ॥

गोमायुनेव सिंहानां दुर्बलेन बलीयसाम् ।
आमिषं विघसाशेन तद्वद्राज्यं हि नो हृतम् ॥ ००४ ॥

धर्मलेशप्रतिच्छन्नः प्रभवं धर्मकामयोः ।
अर्थमुत्सृज्य किं राजन्दुर्गेषु परितप्यसे ॥ ००५ ॥

भवतोऽनुविधानेन राज्यं नः पश्यतां हृतम् ।
अहार्यमपि शक्रेण गुप्तं गाण्डीवधन्वना ॥ ००६ ॥

कुणीनामिव बिल्वानि पङ्गूनामिव धेनवः ।
हृतमैश्वर्यमस्माकं जीवतां भवतः कृते ॥ ००७ ॥

भवतः प्रियमित्येवं महद्व्यसनमीदृशम् ।
धर्मकामे प्रतीतस्य प्रतिपन्नाः स्म भारत ॥ ००८ ॥

कर्शयामः स्वमित्राणि नन्दयामश्च शात्रवान् ।
आत्मानं भवतः शास्त्रे नियम्य भरतर्षभ ॥ ००९ ॥

यद्वयं न तदैवैतान्धार्तराष्ट्रान्निहन्महि ।
भवतः शास्त्रमादाय तन्नस्तपति दुष्कृतम् ॥ ०१० ॥

अथैनामन्ववेक्षस्व मृगचर्यामिवात्मनः ।
अवीराचरितां राजन्न बलस्थैर्निषेविताम् ॥ ०११ ॥

यां न कृष्णो न बीभत्सुर्नाभिमन्युर्न सृञ्जयः ।
न चाहमभिनन्दामि न च माद्रीसुतावुभौ ॥ ०१२ ॥

भवान्धर्मो धर्म इति सततं व्रतकर्शितः ।
कच्चिद्राजन्न निर्वेदादापन्नः क्लीबजीविकाम् ॥ ०१३ ॥

दुर्मनुष्या हि निर्वेदमफलं सर्वघातिनम् ।
अशक्ताः श्रियमाहर्तुमात्मनः कुर्वते प्रियम् ॥ ०१४ ॥

स भवान्दृष्टिमाञ्शक्तः पश्यन्नात्मनि पौरुषम् ।
आनृशंस्यपरो राजन्नानर्थमवबुध्यसे ॥ ०१५ ॥

अस्मानमी धार्तराष्ट्राः क्षममाणानलं सतः ।
अशक्तानेव मन्यन्ते तद्दुःखं नाहवे वधः ॥ ०१६ ॥

तत्र चेद्युध्यमानानामजिह्ममनिवर्तिनाम् ।
सर्वशो हि वधः श्रेयान्प्रेत्य लोका.ण्ल्लभेमहि ॥ ०१७ ॥

अथ वा वयमेवैतान्निहत्य भरतर्षभ ।
आददीमहि गां सर्वां तथापि श्रेय एव नः ॥ ०१८ ॥

सर्वथा कार्यमेतन्नः स्वधर्ममनुतिष्ठताम् ।
काङ्क्षतां विपुलां कीर्तिं वैरं प्रतिचिकीर्षताम् ॥ ०१९ ॥

आत्मार्थं युध्यमानानां विदिते कृत्यलक्षणे ।

अन्यैरपहृते राज्ये प्रशंसैव न गर्हणा ॥ ०२० ॥

कर्शनार्थो हि यो धर्मो मित्राणामात्मनस्तथा ।
व्यसनं नाम तद्राजन्न स धर्मः कुधर्म तत् ॥ ०२१ ॥

सर्वथा धर्मनित्यं तु पुरुषं धर्मदुर्बलम् ।
जहतस्तात धर्मार्थौ प्रेतं दुःखसुखे यथा ॥ ०२२ ॥

यस्य धर्मो हि धर्मार्थं क्लेशभाङ्न स पण्डितः ।
न स धर्मस्य वेदार्थं सूर्यस्यान्धः प्रभामिव ॥ ०२३ ॥

यस्य चार्थार्थमेवार्थः स च नार्थस्य कोविदः ।
रक्षते भृतकोऽरण्यं यथा स्यात्ताद्दगेव सः ॥ ०२४ ॥

अतिवेलं हि योऽर्थार्थी नेतरावनुतिष्ठति ।
स वध्यः सर्वभूतानां ब्रह्महेव जुगुप्सितः ॥ ०२५ ॥

सततं यश्च कामार्थी नेतरावनुतिष्ठति ।
मित्राणि तस्य नश्यन्ति धर्मार्थाभ्यां च हीयते ॥ ०२६ ॥

तस्य धर्मार्थहीनस्य कामान्ते निधनं ध्रुवम् ।
कामतो रममाणस्य मीनस्येवाम्भसः क्षये ॥ ०२७ ॥

तस्माद्धर्मार्थयोर्नित्यं न प्रमाद्यन्ति पण्डिताः ।
प्रकृतिः सा हि कामस्य पावकस्यारणिर्यथा ॥ ०२८ ॥

सर्वथा धर्ममूलोऽर्थो धर्मश्चार्थपरिग्रहः ।
इतरेतरयोनी तौ विद्धि मेघोदधी यथा ॥ ०२९ ॥

द्रव्यार्थस्पर्शसंयोगे या प्रीतिरुपजायते ।
स कामश्चित्तसङ्कल्पः शरीरं नास्य विद्यते ॥ ०३० ॥

अर्थार्थी पुरुषो राजन्बृहन्तं धर्ममृच्छति ।
अर्थमृच्छति कामार्थी न कामादन्यमृच्छती ॥ ०३१ ॥

न हि कामेन कामोऽन्यः साध्यते फलमेव तत् ।
उपयोगात्फलस्येव काष्ठाद्भस्मेव पण्डितः ॥ ०३२ ॥

इमाञ्शकुनिकान्राजन्हन्ति वैतंसिको यथा ।
एतद्रूपमधर्मस्य भूतेषु च विहिंसताम् ॥ ०३३ ॥

कामाल्लोभाच्च धर्मस्य प्रवृत्तिं यो न पश्यति ।
स वध्यः सर्वभूतानां प्रेत्य चेह च दुर्मतिः ॥ ०३४ ॥

व्यक्तं ते विदितो राजन्नर्थो द्रव्यपरिग्रहः ।
प्रकृतिं चापि वेत्थास्य विकृतिं चापि भूयसीम् ॥ ०३५ ॥

तस्य नाशं विनाशं वा जरया मरणेन वा ।
अनर्थमिति मन्यन्ते सोऽयमस्मासु वर्तते ॥ ०३६ ॥

इन्द्रियाणां च पञ्चानां मनसो हृदयस्य च ।
विषये वर्तमानानां या प्रीतिरुपजायते ॥ ०३७ ॥

स काम इति मे बुद्धिः कर्मणां फलमुत्तमम् ॥ ०३७ ॥

एवमेव पृथग्दृष्ट्वा धर्मार्थौ काममेव च ।
न धर्मपर एव स्यान्न चार्थपरमो नरः ॥ ०३८ ॥

न कामपरमो वा स्यात्सर्वान्सेवेत सर्वदा ॥ ०३८ ॥

धर्मं पूर्वं धनं मध्ये जघन्ये काममाचरेत् ।
अहन्यनुचरेदेवमेष शास्त्रकृतो विधिः ॥ ०३९ ॥

कामं पूर्वं धनं मध्ये जघन्ये धर्ममाचरेत् ।
वयस्यनुचरेदेवमेष शास्त्रकृतो विधिः ॥ ०४० ॥

धर्मं चार्थं च कामं च यथावद्वदतां वर ।
विभज्य काले कालज्ञः सर्वान्सेवेत पण्डितः ॥ ०४१ ॥

मोक्षो वा परमं श्रेय एष राजन्सुखार्थिनाम् ।
प्राप्तिर्वा बुद्धिमास्थाय सोपायं कुरुनन्दन ॥ ०४२ ॥

तद्वाशु क्रियतां राजन्प्राप्तिर्वाप्यधिगम्यताम् ।
जीवितं ह्यातुरस्येव दुःखमन्तरवर्तिनः ॥ ०४३ ॥

विदितश्चैव ते धर्मः सततं चरितश्च ते ।
जानते त्वयि शंसन्ति सुहृदः कर्मचोदनाम् ॥ ०४४ ॥

दानं यज्ञः सतां पूजा वेदधारणमार्जवम् ।
एष धर्मः परो राजन्फलवान्प्रेत्य चेह च ॥ ०४५ ॥

एष नार्थविहीनेन शक्यो राजन्निषेवितुम् ।
अखिलाः पुरुषव्याघ्र गुणाः स्युर्यद्यपीतरे ॥ ०४६ ॥

धर्ममूलं जगद्राजन्नान्यद्धर्माद्विशिष्यते ।
धर्मश्चार्थेन महता शक्यो राजन्निषेवितुम् ॥ ०४७ ॥

न चार्थो भैक्षचर्येण नापि क्लैब्येन कर्हिचित् ।
वेत्तुं शक्यः सदा राजन्केवलं धर्मबुद्धिना ॥ ०४८ ॥

प्रतिषिद्धा हि ते याञ्चा यया सिध्यति वै द्विजः ।
तेजसैवार्थलिप्सायां यतस्व पुरुषर्षभ ॥ ०४९ ॥

भैक्षचर्या न विहिता न च विड्शूद्रजीविका ।
क्षत्रियस्य विशेषेण धर्मस्तु बलमौरसम्  ॥ ०५० ॥

उदारमेव विद्वांसो धर्मं प्राहुर्मनीषिणः ।
उदारं प्रतिपद्यस्व नावरे स्थातुमर्हसि  ॥ ०५१ ॥

अनुबुध्यस्व राजेन्द्र वेत्थ धर्मान्सनातनान् ।
क्रूरकर्माभिजातोऽसि यस्मादुद्विजते जनः  ॥ ०५२ ॥

प्रजापालनसंभूतं फलं तव न गर्हितम् ।
एष ते विहितो राजन्धात्रा धर्मः सनातनः  ॥ ०५३ ॥

तस्माद्विचलितः पार्थ लोके हास्यं गमिष्यसि ।
स्वधर्माद्धि मनुष्याणां चलनं न प्रशस्यते  ॥ ०५४ ॥

स क्षात्रं हृदयं कृत्वा त्यक्त्वेदं शिथिलं मनः ।
वीर्यमास्थाय कौन्तेय धुरमुद्वह धुर्यवत्  ॥ ०५५ ॥

न हि केवलधर्मात्मा पृथिवीं जातु कश्चन ।
पार्थिवो व्यजयद्राजन्न भूतिं न पुनः श्रियम्  ॥ ०५६ ॥

जिह्वां दत्त्वा बहूनां हि क्षुद्राणां लुब्धचेतसाम् ।
निकृत्या लभते राज्यमाहारमिव शल्यकः  ॥ ०५७ ॥

भ्रातरः पूर्वजाताश्च सुसमृद्धाश्च सर्वशः ।
निकृत्या निर्जिता देवैरसुराः पाण्डवर्षभ  ॥ ०५८ ॥

एवं बलवतः सर्वमिति बुद्ध्वा महीपते ।
जहि शत्रून्महाबाहो परां निकृतिमास्थितः  ॥ ०५९ ॥

न ह्यर्जुनसमः कश्चिद्युधि योद्धा धनुर्धरः ।

भविता वा पुमान्कश्चिन्मत्समो वा गदाधरः ॥ ०६० ॥

सत्त्वेन कुरुते युद्धं राजन्सुबलवानपि ।
न प्रमाणेन नोत्साहात्सत्त्वस्थो भव पाण्डव ॥ ०६१ ॥

सत्त्वं हि मूलमर्थस्य वितथं यदतोऽन्यथा ।
न तु प्रसक्तं भवति वृक्षच्छायेव हैमनी ॥ ०६२ ॥

अर्थत्यागो हि कार्यः स्यादर्थं श्रेयांसमिच्छता ।
बीजौपम्येन कौन्तेय मा ते भूदत्र संशयः ॥ ०६३ ॥

अर्थेन तु समोऽनर्थो यत्र लभ्येत नोदयः ।
न तत्र विपणः कार्यः खरकण्डूयितं हि तत् ॥ ०६४ ॥

एवमेव मनुष्येन्द्र धर्मं त्यक्त्वाल्पकं नरः ।
बृहन्तं धर्ममाप्नोति स बुद्ध इति निश्चितः ॥ ०६५ ॥

अमित्रं मित्रसंपन्नं मित्रैर्भिन्दन्ति पण्डिताः ।
भिन्नैर्मित्रैः परित्यक्तं दुर्बलं कुरुते वशे ॥ ०६६ ॥

सत्त्वेन कुरुते युद्धं राजन्सुबलवानपि ।
नोद्यमेन न होत्राभिः सर्वाः स्वीकुरुते प्रजाः ॥ ०६७ ॥

सर्वथा संहतैरेव दुर्बलैर्बलवानपि ।
अमित्रः शक्यते हन्तुं मधुहा भ्रमरैरिव ॥ ०६८ ॥

यथा राजन्प्रजाः सर्वाः सूर्यः पाति गभस्तिभिः ।
अत्ति चैव तथैव त्वं सवितुः सदृशो भव ॥ ०६९ ॥

एतद्ध्यपि तपो राजन्पुराणमिति नः श्रुतम् ।
विधिना पालनं भूमेर्यत्कृतं नः पितामहैः ॥ ०७० ॥

अपेयात्किल भाः सूर्याल्लक्ष्मीश्चन्द्रमसस्तथा ।
इति लोको व्यवसितो दृष्ट्वेमां भवतो व्यथाम्  ॥ ०७१  ॥

भवतश्च प्रशंसाभिर्निन्दाभिरितरस्य च ।
कथायुक्ताः परिषदः पृथग्राजन्समागताः  ॥ ०७२  ॥

इदमभ्यधिकं राजन्ब्राह्मणा गुरवश्च ते ।
समेताः कथयन्तीह मुदिताः सत्यसंधताम्  ॥ ०७३  ॥

यन्न मोहान्न कार्पण्यान्न लोभान्न भयादपि ।
अनृतं किञ्चिदुक्तं ते न कामान्नार्थकारणात्  ॥ ०७४  ॥

यदेनः कुरुते किञ्चिद्राजा भूमिमवाप्नुवन् ।
सर्वं तन्नुदते पश्चाद्यज्ञैर्विपुलदक्षिणैः  ॥ ०७५  ॥

ब्राह्मणेभ्यो ददद्ग्रामान्गाश्च राजन्सहस्रशः ।
मुच्यते सर्वपापेभ्यस्तमोभ्य इव चन्द्रमाः  ॥ ०७६  ॥

पौरजानपदाः सर्वे प्रायशः कुरुनन्दन ।
सवृद्धबालाः सहिताः शंसन्ति त्वां युधिष्ठिर  ॥ ०७७  ॥

श्वदृतौ क्षीरमासक्तं ब्रह्म वा वृषले यथा ।
सत्यं स्तेने बलं नार्यां राज्यं दुर्योधने तथा  ॥ ०७८  ॥

इति निर्वचनं लोके चिरं चरति भारत ।
अपि चैतत्स्त्रियो बालाः स्वाध्यायमिव कुर्वते  ॥ ०७९  ॥

स भवान्रथमास्थाय सर्वोपकरणान्वितम् ।
त्वरमाणोऽभिनिर्यातु चिरमर्थोपपादकम्  ॥ ०८०  ॥

वाचयित्वा द्विजश्रेष्ठानद्यैव गजसाह्वयम् ।
अस्त्रविद्भिः परिवृतो भ्रातृभिर्दृढधन्विभिः ॥ ०८१ ॥

आशीविषसमैर्वीरैर्मरुद्भिरिव वृत्रहा ॥ ०८१ ॥

अमित्रांस्तेजसा मृद्नन्नसुरेभ्य इवारिहा ।
श्रियमादत्स्व कौन्तेय धार्तराष्ट्रान्महाबल ॥ ०८२ ॥

न हि गाण्डीवमुक्तानां शराणां गार्ध्रवाससाम् ।
स्पर्शमाशीविषाभानां मर्त्यः कश्चन संसहेत् ॥ ०८३ ॥

न स वीरो न मातङ्गो न सदश्वोऽस्ति भारत ।
यः सहेत गदावेगं मम क्रुद्धस्य संयुगे ॥ ०८४ ॥

सृञ्जयैः सह कैकेयैर्वृष्णीनामृषभेण च ।
कथं स्विद्युधि कौन्तेय राज्यं न प्राप्नुयामहे ॥ ०८५ ॥

---

# अध्याय ०३५

युधिष्ठिर उवाच ॥

असंशयं भारत सत्यमेत ;द्यन्मा तुदन्वाक्यशल्यैः क्षिणोषि ।
न त्वा विगर्हे प्रतिकूलमेत ;न्ममानयाद्धि व्यसनं व आगात् ॥ ००१ ॥

अहं ह्यक्षानन्वपद्यं जिहीर्ष ;न्राज्यं सराष्ट्रं धृतराष्ट्रस्य पुत्रात् ।
तन्मा शठः कितवः प्रत्यदेवी ;त्सुयोधनार्थं सुबलस्य पुत्रः ॥ ००२ ॥

महामायः शकुनिः पार्वतीयः ; सदा सभायां प्रवपन्नक्षपूगान् ।

अमायिनं मायया प्रत्यदेवी ;त्ततोऽपश्यं वृजिनं भीमसेन ॥ ००३ ॥

अक्षान्हि दृष्ट्वा शकुनेर्यथाव ;त्कामानुलोमानयुजो युजश्च ।
शक्यं नियन्तुमभविष्यदात्मा ; मन्युस्तु हन्ति पुरुषस्य धैर्यम् ॥ ००४ ॥

यन्तुं नात्मा शक्यते पौरुषेण ; मानेन वीर्येण च तात नद्धः ।
न ते वाचं भीमसेनाभ्यसूये ; मन्ये तथा तद्भवितव्यमासीत् ॥ ००५ ॥

स नो राजा धृतराष्ट्रस्य पुत्रो ; न्यपातयद्व्यसने राज्यमिच्छन् ।
दास्यं च नोऽगमयद्भीमसेन ; यत्राभवच्छरणं द्रौपदी नः ॥ ००६ ॥

त्वं चापि तद्वेत्थ धनञ्जयश्च ; पुनर्द्यूतायागतानां सभां नः ।
यन्माब्रवीद्धृतराष्ट्रस्य पुत्र ; एकग्लहार्थं भरतानां समक्षम् ॥ ००७ ॥

वने समा द्वादश राजपुत्र ; यथाकामं विदितमजातशत्रो ।
अथापरं चाविदितं चरेथाः ; सर्वैः सह भ्रातृभिश्छद्मगूढः ॥ ००८ ॥

त्वां चेच्छ्रुत्वा तात तथा चरन्त ;मवभोत्स्यन्ते भारतानां चराः स्म ।
अन्यांश्चरेथास्तावतोऽब्दांस्ततस्त्वं ; निश्चित्य तत्प्रतिजानीहि पार्थ ॥ ००९ ॥

चरैश्चेन्नोऽविदितः कालमेतं ; युक्तो राजन्मोहयित्वा मदीयान् ।
ब्रवीमि सत्यं कुरुसंसदीह ; तवैव ता भारत पञ्च नद्यः ॥ ०१० ॥

वयं चैवं भ्रातरः सर्व एव ; त्वया जिताः कालमपास्य भोगान् ।
वसेम इत्याह पुरा स राजा ; मध्ये कुरूणां स मयोक्तस्तथेति ॥ ०११ ॥

तत्र द्यूतमभवन्नो जघन्यं ; तस्मिञ्जिताः प्रव्रजिताश्च सर्वे ।
इत्थं च देशाननुसञ्चरामो ; वनानि कृच्छ्राणि च कृच्छ्ररूपाः ॥ ०१२ ॥

सुयोधनश्चापि न शान्तिमिच्छ ;न्भूयः स मन्योर्वशमन्वगच्छत् ।
उद्योजयामास कुरूंश्च सर्वा ;न्ये चास्य केचिद्वशमन्वगच्छन् ॥ ०१३ ॥

तं संधिमास्थाय सतां सकाशे ; को नाम जह्यादिह राज्यहेतोः ।
आर्यस्य मन्ये मरणाद्गरीयो ; यद्धर्ममुत्क्रम्य महीं प्रशिष्यात् ॥ ०१४ ॥

तदैव चेद्वीरकर्माकरिष्यो ; यदा द्यूते परिघं पर्यमृक्षः ।
बाहू दिधक्षन्वारितः फल्गुनेन ; किं दुष्कृतं भीम तदाभविष्यत् ॥ ०१५ ॥

प्रागेव चैवं समयक्रियायाः ; किं नाब्रवीः पौरुषमाविदानः ।
प्राप्तं तु कालं त्वभिपद्य पश्चा ;त्किं मामिदानीमतिवेलमात्थ ॥ ०१६ ॥

भूयोऽपि दुःखं मम भीमसेन ; दूये विषस्येव रसं विदित्वा ।
यद्याज्ञसेनीं परिकृष्यमाणां ; संदृश्य तत्क्षान्तमिति स्म भीम ॥ ०१७ ॥

न त्वद्य शक्यं भरतप्रवीर ; कृत्वा यदुक्तं कुरुवीरमध्ये ।
कालं प्रतीक्षस्व सुखोदयस्य ; पक्तिं फलानामिव बीजवापः ॥ ०१८ ॥

यदा हि पूर्वं निकृतो निकृत्या ; वैरं सपुष्पं सफलं विदित्वा ।
महागुणं हरति हि पौरुषेण ; तदा वीरो जीवति जीवलोके ॥ ०१९ ॥

श्रियं च लोके लभते समग्रां ; मन्ये चास्मै शत्रवः संनमन्ते ।
मित्राणि चैनमतिरागाद्भजन्ते ; देवा इवेन्द्रमनुजीवन्ति चैनम् ॥ ०२० ॥

मम प्रतिज्ञां च निबोध सत्यां ; वृणे धर्मममृताज्जीविताच्च ।
राज्यं च पुत्राश्च यशो धनं च ; सर्वं न सत्यस्य कलामुपैति ॥ ०२१ ॥

---

# अध्याय ०३६

भीमसेन उवाच ॥

संधिं कृत्वैव कालेन अन्तकेन पतत्रिणा ।
अनन्तेनाप्रमेयेन स्रोतसा सर्वहारिणा ॥ ००१ ॥

प्रत्यक्षं मन्यसे कालं मर्त्यः सन्कालबन्धनः ।
फेनधर्मा महाराज फलधर्मा तथैव च ॥ ००२ ॥

निमेषादपि कौन्तेय यस्यायुरपचीयते ।
सूच्येवाञ्जनचूर्णस्य किमिति प्रतिपालयेत् ॥ ००३ ॥

यो नूनममितायुः स्यादथ वापि प्रमाणवित् ।
स कालं वै प्रतीक्षेत सर्वप्रत्यक्षदर्शिवान् ॥ ००४ ॥

प्रतीक्षमाणान्कालो नः समा राजंस्त्रयोदश ।
आयुषोऽपचयं कृत्वा मरणायोपनेष्यति ॥ ००५ ॥

शरीरिणां हि मरणं शरीरे नित्यमाश्रितम् ।
प्रागेव मरणात्तस्माद्राज्यायैव घटामहे ॥ ००६ ॥

यो न याति प्रसंख्यानमस्पष्टो भूमिवर्धनः ।
अयातयित्वा वैराणि सोऽवसीदति गौरिव ॥ ००७ ॥

यो न यातयते वैरमल्पसत्त्वोद्यमः पुमान् ।
अफलं तस्य जन्माहं मन्ये दुर्जातजायिनः ॥ ००८ ॥

हैरण्यौ भवतो बाहू श्रुतिर्भवति पार्थिव ।
हत्वा द्विषन्तं सङ्ग्रामे भुक्त्वा बाह्वर्जितं वसु ॥ ००९ ॥

हत्वा चेत्पुरुषो राजन्निकर्तारमरिंदम ।
अह्नाय नरकं गच्छेत्स्वर्गेणास्य स संमितः ॥ ०१० ॥

अमर्षजो हि संतापः पावकाद्दीप्तिमत्तरः ।
येनाहमभिसंतप्तो न नक्तं न दिवा शये ॥ ०११ ॥

अयं च पार्थो बीभत्सुर्वरिष्ठो ज्याविकर्षणे ।
आस्ते परमसंतप्तो नूनं सिंह इवाशये ॥ ०१२ ॥

योऽयमेकोऽभिमनुते सर्वा.ण्ल्लोके धनुर्भृतः ।
सोऽयमात्मजमूष्माणं महाहस्तीव यच्छति ॥ ०१३ ॥

नकुलः सहदेवश्च वृद्धा माता च वीरसूः ।
तवैव प्रियमिच्छन्त आसते जडमूकवत् ॥ ०१४ ॥

सर्वे ते प्रियमिच्छन्ति बान्धवाः सह सृञ्जयैः ।
अहमेकोऽभिसंतप्तो माता च प्रतिविन्ध्यतः ॥ ०१५ ॥

प्रियमेव तु सर्वेषां यद्ब्रवीम्युत किञ्चन ।
सर्वे ही व्यसनं प्राप्ताः सर्वे युद्धाभिनन्दिनः ॥ ०१६ ॥

नेतः पापीयसी काचिदापद्राजन्भविष्यति ।
यन्नो नीचैरल्पबलै राज्यमाच्छिद्य भुज्यते ॥ ०१७ ॥

शीलदोषाद्घृणाविष्ट आनृशंस्यात्परंतप ।
क्लेशांस्तितिक्षसे राजन्नान्यः कश्चित्प्रशंसति ॥ ०१८ ॥

घृणी ब्राह्मणरूपोऽसि कथं क्षत्रे अजायथाः ।
अस्यां हि योनौ जायन्ते प्रायशः क्रूरबुद्धयः ॥ ०१९ ॥

अश्रौषीस्त्वं राजधर्मान्यथा वै मनुरब्रवीत् ।
क्रूरान्निकृतिसंयुक्तान्विहितानशमात्मकान् ॥ ०२० ॥

कर्तव्ये पुरुषव्याघ्र किमास्से पीठसर्पवत् ।

बुद्ध्या वीर्येण संयुक्तः श्रुतेनाभिजनेन च ॥ ०२१ ॥

तृणानां मुष्टिनैकेन हिमवन्तं तु पर्वतम् ।
छन्नमिच्छसि कौन्तेय योऽस्मान्संवर्तुमिच्छसि ॥ ०२२ ॥

अज्ञातचर्या गूढेन पृथिव्यां विश्रुतेन च ।
दिवीव पार्थ सूर्येण न शक्या चरितुं त्वया ॥ ०२३ ॥

बृहच्छाल इवानूपे शाखापुष्पपलाशवान् ।
हस्ती श्वेत इवाज्ञातः कथं जिष्णुश्चरिष्यति ॥ ०२४ ॥

इमौ च सिंहसङ्काशौ भ्रातरौ सहितौ शिशू ।
नकुलः सहदेवश्च कथं पार्थ चरिष्यतः ॥ ०२५ ॥

पुण्यकीर्ती राजपुत्री द्रौपदी वीरसूरियम् ।
विश्रुता कथमज्ञाता कृष्णा पार्थ चरिष्यति ॥ ०२६ ॥

मां चापि राजञ्जानन्ति आकुमारमिमाः प्रजाः ।
अज्ञातचर्यां पश्यामि मेरोरिव निगूहनम् ॥ ०२७ ॥

तथैव बहवोऽस्माभी राष्ट्रेभ्यो विप्रवासिताः ।
राजानो राजपुत्राश्च धृतराष्ट्रमनुव्रताः ॥ ०२८ ॥

न हि तेऽप्युपशाम्यन्ति निकृतानां निराकृताः ।
अवश्यं तैर्निकर्तव्यमस्माकं तत्प्रियैषिभिः ॥ ०२९ ॥

तेऽप्यस्मासु प्रयुञ्जीरन्प्रच्छन्नान्सुबहूञ्जनान् ।
आचक्षीरंश्च नो ज्ञात्वा तन्नः स्यात्सुमहद्भयम् ॥ ०३० ॥

अस्माभिरुषिताः सम्यग्वने मासास्त्रयोदश ।
परिमाणेन तान्पश्य तावतः परिवत्सरान् ॥ ०३१ ॥

अस्ति मासः प्रतिनिधिर्यथा प्राहुर्मनीषिणः ।
पूतिकानिव सोमस्य तथेदं क्रियतामिति ॥ ०३२ ॥

अथ वानडुहे राजन्साधवे साधुवाहिने ।
सौहित्यदानादेकस्मादेनसः प्रतिमुच्यते ॥ ०३३ ॥

तस्माच्छत्रुवधे राजन्क्रियतां निश्चयस्त्वया ।
क्षत्रियस्य तु सर्वस्य नान्यो धर्मोऽस्ति संयुगात् ॥ ०३४ ॥

---

# अध्याय ०३७

वैशंपायन उवाच ॥

भीमसेनवचः श्रुत्वा कुन्तीपुत्रो युधिष्ठिरः ।
निःश्वस्य पुरुषव्याघ्रः संप्रदध्यौ परंतपः ॥ ००१ ॥

स मुहूर्तमिव ध्यात्वा विनिश्चित्येतिकृत्यताम् ।
भीमसेनमिदं वाक्यमपदान्तरमब्रवीत् ॥ ००२ ॥

एवमेतन्महाबाहो यथा वदसि भारत ।
इदमन्यत्समाधत्स्व वाक्यं मे वाक्यकोविद ॥ ००३ ॥

महापापानि कर्माणि यानि केवलसाहसात् ।
आरभ्यन्ते भीमसेन व्यथन्ते तानि भारत ॥ ००४ ॥

सुमन्त्रिते सुविक्रान्ते सुकृते सुविचारिते ।

सिध्यन्त्यर्था महाबाहो दैवं चात्र प्रदक्षिणम्  ॥ ००५  ॥

त्वं तु केवलचापल्याद्बलदर्पोच्छ्रितः स्वयम् ।
आरब्धव्यमिदं कर्म मन्यसे शृणु तत्र मे  ॥ ००६  ॥

भूरिश्रवाः शलश्चैव जलसंधश्च वीर्यवान् ।
भीष्मो द्रोणश्च कर्णश्च द्रोणपुत्रश्च वीर्यवान्  ॥ ००७  ॥

धार्तराष्ट्रा दुराधर्षा दुर्योधनपुरोगमाः ।
सर्व एव कृतास्त्राश्च सततं चाततायिनः  ॥ ००८  ॥

राजानः पार्थिवाश्चैव येऽस्माभिरुपतापिताः ।
संश्रिताः कौरवं पक्षं जातस्नेहाश्च सांप्रतम्  ॥ ००९  ॥

दुर्योधनहिते युक्ता न तथास्मासु भारत ।
पूर्णकोशा बलोपेताः प्रयतिष्यन्ति रक्षणे  ॥ ०१०  ॥

सर्वे कौरवसैन्यस्य सपुत्रामात्यसैनिकाः ।
संविभक्ता हि मात्राभिर्भोगैरपि च सर्वशः  ॥ ०११  ॥

दुर्योधनेन ते वीरा मानिताश्च विशेषतः ।
प्राणांस्त्यक्ष्यन्ति सङ्ग्रामे इति मे निश्चिता मतिः  ॥ ०१२  ॥

समा यद्यपि भीष्मस्य वृत्तिरस्मासु तेषु च ।
द्रोणस्य च महाबाहो कृपस्य च महात्मनः  ॥ ०१३  ॥

अवश्यं राजपिण्डस्तैर्निर्वेश्य इति मे मतिः ।
तस्मात्त्यक्ष्यन्ति सङ्ग्रामे प्राणानपि सुदुस्त्यजान्  ॥ ०१४  ॥

सर्वे दिव्यास्त्रविद्वांसः सर्वे धर्मपरायणाः ।
अजेयाश्चेति मे बुद्धिरपि देवैः सवासवैः  ॥ ०१५  ॥

अमर्षी नित्यसंहृष्टस्तत्र कर्णो महारथः ।
सर्वास्त्रविदनाधृष्य अभेद्यकवचावृतः ॥ ०१६ ॥

अनिर्जित्य रणे सर्वानेतान्पुरुषसत्तमान् ।
अशक्यो ह्यसहायेन हन्तुं दुर्योधनस्त्वया ॥ ०१७ ॥

न निद्रामधिगच्छामि चिन्तयानो वृकोदर ।
अति सर्वान्धनुर्ग्राहान्सूतपुत्रस्य लाघवम् ॥ ०१८ ॥

एतद्वचनमाज्ञाय भीमसेनोऽत्यमर्षणः ।
बभूव विमनास्त्रस्तो न चैवोवाच किञ्चन ॥ ०१९ ॥

तयोः संवदतोरेवं तदा पाण्डवयोर्द्वयोः ।
आजगाम महायोगी व्यासः सत्यवतीसुतः ॥ ०२० ॥

सोऽभिगम्य यथान्यायं पाण्डवैः प्रतिपूजितः ।
युधिष्ठिरमिदं वाक्यमुवाच वदतां वरः ॥ ०२१ ॥

युधिष्ठिर महाबाहो वेद्मि ते हृदि मानसम् ।
मनीषया ततः क्षिप्रमागतोऽस्मि नरर्षभ ॥ ०२२ ॥

भीष्माद्द्रोणात्कृपात्कर्णाद्द्रोणपुत्राच्च भारत ।
यत्ते भयममित्रघ्न हृदि संपरिवर्तते ॥ ०२३ ॥

तत्तेऽहं नाशयिष्यामि विधिदृष्टेन हेतुना ।
तच्छ्रुत्वा धृतिमास्थाय कर्मणा प्रतिपादय ॥ ०२४ ॥

तत एकान्तमुन्नीय पाराशर्यो युधिष्ठिरम् ।
अब्रवीदुपपन्नार्थमिदं वाक्यविशारदः ॥ ०२५ ॥

श्रेयसस्ते परः कालः प्राप्तो भरतसत्तम ।
येनाभिभविता शत्रूञ्रणे पार्थो धनञ्जयः ॥ ०२६ ॥

गृहाणेमां मया प्रोक्तां सिद्धिं मूर्तिमतीमिव ।
विद्यां प्रतिस्मृतिं नाम प्रपन्नाय ब्रवीमि ते ॥ ०२७ ॥

यामवाप्य महाबाहुरर्जुनः साधयिष्यति ॥ ०२७ ॥

अस्त्रहेतोर्महेन्द्रं च रुद्रं चैवाभिगच्छतु ।
वरुणं च धनेशं च धर्मराजं च पाण्डव ॥ ०२८ ॥

शक्तो ह्येष सुरान्द्रष्टुं तपसा विक्रमेण च ॥ ०२८ ॥

ऋषिरेष महातेजा नारायणसहायवान् ।
पुराणः शाश्वतो देवो विष्णोरंशः सनातनः ॥ ०२९ ॥

अस्त्राणीन्द्राच्च रुद्राच्च लोकपालेभ्य एव च ।
समादाय महाबाहुर्महत्कर्म करिष्यति ॥ ०३० ॥

वनादस्माच्च कौन्तेय वनमन्यद्विचिन्त्यताम् ।
निवासार्थाय यद्युक्तं भवेद्वः पृथिवीपते ॥ ०३१ ॥

एकत्र चिरवासो हि न प्रीतिजननो भवेत् ।
तापसानां च शान्तानां भवेदुद्वेगकारकः ॥ ०३२ ॥

मृगाणामुपयोगश्च वीरुदोषधिसङ्क्षयः ।
बिभर्षि हि बहून्विप्रान्वेदवेदाङ्गपारगान् ॥ ०३३ ॥

एवमुक्त्वा प्रपन्नाय शुचये भगवान्प्रभुः ।
प्रोवाच योगतत्त्वज्ञो योगविद्यामनुत्तमाम् ॥ ०३४ ॥

धर्मराज्ञे तदा धीमान्व्यासः सत्यवतीसुतः ।
अनुज्ञाय च कौन्तेयं तत्रैवान्तरधीयत ॥ ०३५ ॥

युधिष्ठिरस्तु धर्मात्मा तद्ब्रह्म मनसा यतः ।
धारयामास मेधावी काले काले समभ्यसन् ॥ ०३६ ॥

स व्यासवाक्यमुदितो वनाद्द्वैतवनात्ततः ।
ययौ सरस्वतीतीरे काम्यकं नाम काननम् ॥ ०३७ ॥

तमन्वयुर्महाराज शिक्षाक्षरविदस्तथा ।
ब्राह्मणास्तपसा युक्ता देवेन्द्रमृषयो यथा ॥ ०३८ ॥

ततः काम्यकमासाद्य पुनस्ते भरतर्षभाः ।
न्यविशन्त महात्मानः सामात्याः सपदानुगाः ॥ ०३९ ॥

तत्र ते न्यवसन्राजन्कञ्चित्कालं मनस्विनः ।
धनुर्वेदपरा वीराः शृण्वाना वेदमुत्तमम् ॥ ०४० ॥

चरन्तो मृगयां नित्यं शुद्धैर्बाणैर्मृगार्थिनः ।
पितृदैवतविप्रेभ्यो निर्वपन्तो यथाविधि ॥ ०४१ ॥

---

# अध्याय ०३८

वैशंपायन उवाच ॥

कस्यचित्त्वथ कालस्य धर्मराजो युधिष्ठिरः ।
संस्मृत्य मुनिसंदेशमिदं वचनमब्रवीत् ॥ ००१ ॥

विविक्ते विदितप्रज्ञमर्जुनं भरतर्षभम् ।
सान्त्वपूर्वं स्मितं कृत्वा पाणिना परिसंस्पृशन्  ॥ ००२  ॥

स मुहूर्तमिव ध्यात्वा वनवासमरिंदमः ।
धनञ्जयं धर्मराजो रहसीदमुवाच ह  ॥ ००३  ॥

भीष्मे द्रोणे कृपे कर्णे द्रोणपुत्रे च भारत ।
धनुर्वेदश्चतुष्पाद एतेष्वद्य प्रतिष्ठितः  ॥ ००४  ॥

ब्राह्मं दैवमासुरं च सप्रयोगचिकित्सितम् ।
सर्वास्त्राणां प्रयोगं च तेऽभिजानन्ति कृत्स्नशः  ॥ ००५  ॥

ते सर्वे धृतराष्ट्रस्य पुत्रेण परिसान्त्विताः ।
संविभक्ताश्च तुष्टाश्च गुरुवत्तेषु वर्तते  ॥ ००६  ॥

सर्वयोधेषु चैवास्य सदा वृत्तिरनुत्तमा ।
शक्तिं न हापयिष्यन्ति ते काले प्रतिपूजिताः  ॥ ००७  ॥

अद्य चेयं मही कृत्स्ना दुर्योधनवशानुगा ।
त्वयि व्यपाश्रयोऽस्माकं त्वयि भारः समाहितः  ॥ ००८  ॥

तत्र कृत्यं प्रपश्यामि प्राप्तकालमरिंदम  ॥ ००८  ॥

कृष्णद्वैपायनात्तात गृहीतोपनिषन्मया ।
तया प्रयुक्तया सम्यग्जगत्सर्वं प्रकाशते  ॥ ००९  ॥

तेन त्वं ब्रह्मणा तात संयुक्तः सुसमाहितः  ॥ ००९  ॥

देवतानां यथाकालं प्रसादं प्रतिपालय ।
तपसा योजयात्मानमुग्रेण भरतर्षभ  ॥ ०१०  ॥

धनुष्मान्कवची खड्गी मुनिः सारसमन्वितः ।
न कस्यचिद्ददन्मार्गं गच्छ तातोत्तरां दिशम् ॥ ०११ ॥

इन्द्रे ह्यस्त्राणि दिव्यानि समस्तानि धनञ्जय ॥ ०११ ॥

वृत्राद्भीतैस्तदा देवैर्बलमिन्द्रे समर्पितम् ।
तान्येकस्थानि सर्वाणि ततस्त्वं प्रतिपत्स्यसे ॥ ०१२ ॥

शक्रमेव प्रपद्यस्व स तेऽस्त्राणि प्रदास्यति ।
दीक्षितोऽद्यैव गच्छ त्वं द्रष्टुं देवं पुरंदरम् ॥ ०१३ ॥

एवमुक्त्वा धर्मराजस्तमध्यापयत प्रभुः ।
दीक्षितं विधिना तेन यतवाक्कायमानसम् ॥ ०१४ ॥

अनुजज्ञे ततो वीरं भ्राता भ्रातरमग्रजः ॥ ०१४ ॥

निदेशाद्धर्मराजस्य द्रष्टुं देवं पुरंदरम् ।
धनुर्गाण्डीवमादाय तथाक्षय्यौ महेषुधी ॥ ०१५ ॥

कवची सतलत्राणो बद्धगोधाङ्गुलित्रवान् ।
हुत्वाग्निं ब्राह्मणान्निष्कैः स्वस्ति वाच्य महाभुजः ॥ ०१६ ॥

प्रातिष्ठत महाबाहुः प्रगृहीतशरासनः ।
वधाय धार्तराष्ट्राणां निःश्वस्योर्ध्वमुदीक्ष्य च ॥ ०१७ ॥

तं दृष्ट्वा तत्र कौन्तेयं प्रगृहीतशरासनम् ।
अब्रुवन्ब्राह्मणाः सिद्धा भूतान्यन्तर्हितानि च ॥ ०१८ ॥

क्षिप्रं प्राप्नुहि कौन्तेय मनसा यद्यदिच्छसि ॥ ०१८ ॥

तं सिंहमिव गच्छन्तं शालस्कन्धोरुमर्जुनम् ।

मनांस्यादाय सर्वेषां कृष्णा वचनमब्रवीत्  ॥ ०१९  ॥

यत्ते कुन्ती महाबाहो जातस्यैच्छद्धनञ्जय ।
तत्तेऽस्तु सर्वं कौन्तेय यथा च स्वयमिच्छसि  ॥ ०२०  ॥

मास्माकं क्षत्रियकुले जन्म कश्चिदवाप्नुयात् ।
ब्राह्मणेभ्यो नमो नित्यं येषां युद्धे न जीविका  ॥ ०२१  ॥

नूनं ते भ्रातरः सर्वे त्वत्कथाभिः प्रजागरे ।
रंस्यन्ते वीरकर्माणि कीर्तयन्तः पुनः पुनः  ॥ ०२२  ॥

नैव नः पार्थ भोगेषु न धने नोत जीविते ।
तुष्टिर्बुद्धिर्भवित्री वा त्वयि दीर्घप्रवासिनि  ॥ ०२३  ॥

त्वयि नः पार्थ सर्वेषां सुखदुःखे समाहिते ।
जीवितं मरणं चैव राज्यमैश्वर्यमेव च  ॥ ०२४  ॥

आपृष्टो मेऽसि कौन्तेय स्वस्ति प्राप्नुहि पाण्डव  ॥ ०२४  ॥

नमो धात्रे विधात्रे च स्वस्ति गच्छ ह्यनामयम् ।
स्वस्ति तेऽस्त्वान्तरिक्षेभ्यः पार्थिवेभ्यश्च भारत  ॥ ०२५  ॥

दिव्येभ्यश्चैव भूतेभ्यो ये चान्ये परिपन्थिनः  ॥ ०२५  ॥

ततः प्रदक्षिणं कृत्वा भ्रातॄन्धौम्यं च पाण्डवः ।
प्रातिष्ठत महाबाहुः प्रगृह्य रुचिरं धनुः  ॥ ०२६  ॥

तस्य मार्गादपाक्रामन्सर्वभूतानि गच्छतः ।
युक्तस्यैन्द्रेण योगेन पराक्रान्तस्य शुष्मिणः  ॥ ०२७  ॥

सोऽगच्छत्पर्वतं पुण्यमेकाह्नैव महामनाः ।

मनोजवगतिर्भूत्वा योगयुक्तो यथानिलः ॥ ०२८ ॥

हिमवन्तमतिक्रम्य गन्धमादनमेव च ।
अत्यक्रामत्स दुर्गाणि दिवारात्रमतन्द्रितः ॥ ०२९ ॥

इन्द्रकीलं समासाद्य ततोऽतिष्ठद्धनञ्जयः ।
अन्तरिक्षे हि शुश्राव तिष्ठेति स वचस्तदा ॥ ०३० ॥

ततोऽपश्यत्सव्यसाची वृक्षमूले तपस्विनम् ।
ब्राह्म्या श्रिया दीप्यमानं पिङ्गलं जटिलं कृशम् ॥ ०३१ ॥

सोऽब्रवीदर्जुनं तत्र स्थितं दृष्ट्वा महातपाः ।
कस्त्वं तातेह संप्राप्तो धनुष्मान्कवची शरी ॥ ०३२ ॥

निबद्धासितलत्राणः क्षत्रधर्ममनुव्रतः ॥ ०३२ ॥

नेह शस्त्रेण कर्तव्यं शान्तानामयमालयः ।
विनीतक्रोधहर्षाणां ब्राह्मणानां तपस्विनाम् ॥ ०३३ ॥

नेहास्ति धनुषा कार्यं न सङ्ग्रामेण कर्हिचित् ।
निक्षिपैतद्धनुस्तात प्राप्तोऽसि परमां गतिम् ॥ ०३४ ॥

इत्यनन्तौजसं वीरं यथा चान्यं पृथग्जनम् ।
तथा वाचमथाभीक्ष्णं ब्राह्मणोऽर्जुनमब्रवीत् ॥ ०३५ ॥

न चैनं चालयामास धैर्यात्सुदृढनिश्चयम् ॥ ०३५ ॥

तमुवाच ततः प्रीतः स द्विजः प्रहसन्निव ।
वरं वृणीष्व भद्रं ते शक्रोऽहमरिसूदन ॥ ०३६ ॥

एवमुक्तः प्रत्युवाच सहस्राक्षं धनञ्जयः ।

प्राञ्जलिः प्रणतो भूत्वा शूरः कुरुकुलोद्वहः ॥ ०३७ ॥

ईप्सितो ह्येष मे कामो वरं चैनं प्रयच्छ मे ।
त्वत्तोऽद्य भगवन्नस्त्रं कृत्स्नमिच्छामि वेदितुम् ॥ ०३८ ॥

प्रत्युवाच महेन्द्रस्तं प्रीतात्मा प्रहसन्निव ।
इह प्राप्तस्य किं कार्यमस्त्रैस्तव धनञ्जय ॥ ०३९ ॥

कामान्वृणीष्व लोकांश्च प्राप्तोऽसि परमां गतिम् ॥ ०३९ ॥

एवमुक्तः प्रत्युवाच सहस्राक्षं धनञ्जयः ।
न लोकान्न पुनः कामान्न देवत्वं कुतः सुखम् ॥ ०४० ॥

न च सर्वामरैश्वर्यं कामये त्रिदशाधिप ।
भ्रातॄंस्तान्विपिने त्यक्त्वा वैरमप्रतियात्य च ॥ ०४१ ॥

अकीर्तिं सर्वलोकेषु गच्छेयं शाश्वतीः समाः ॥ ०४१ ॥

एवमुक्तः प्रत्युवाच वृत्रहा पाण्डुनन्दनम् ।
सान्त्वयञ्श्लक्ष्णया वाचा सर्वलोकनमस्कृतः ॥ ०४२ ॥

यदा द्रक्ष्यसि भूतेशं त्र्यक्षं शूलधरं शिवम् ।
तदा दातास्मि ते तात दिव्यान्यस्त्राणि सर्वशः ॥ ०४३ ॥

क्रियतां दर्शने यत्नो देवस्य परमेष्ठिनः ।
दर्शनात्तस्य कौन्तेय संसिद्धः स्वर्गमेष्यसि ॥ ०४४ ॥

इत्युक्त्वा फल्गुनं शक्रो जगामादर्शनं ततः ।
अर्जुनोऽप्यथ तत्रैव तस्थौ योगसमन्वितः ॥ ०४५ ॥

# अध्याय ०३९

जनमेजय उवाच ॥

भगवञ्श्रोतुमिच्छामि पार्थस्याक्लिष्टकर्मणः ।
विस्तरेण कथामेतां यथास्त्राण्युपलब्धवान् ॥ ००१ ॥

कथं स पुरुषव्याघ्रो दीर्घबाहुर्धनञ्जयः ।
वनं प्रविष्टस्तेजस्वी निर्मनुष्यमभीतवत् ॥ ००२ ॥

किं च तेन कृतं तत्र वसता ब्रह्मवित्तम ।
कथं च भगवान्स्थाणुर्देवराजश्च तोषितः ॥ ००३ ॥

एतदिच्छाम्यहं श्रोतुं त्वत्प्रसादाद्द्विजोत्तम ।
त्वं हि सर्वज्ञ दिव्यं च मानुषं चैव वेत्थ ह ॥ ००४ ॥

अत्यद्भुतं महाप्राज्ञ रोमहर्षणमर्जुनः ।
भवेन सह सङ्ग्रामं चकाराप्रतिमं किल ॥ ००५ ॥

पुरा प्रहरतां श्रेष्ठः सङ्ग्रामेष्वपराजितः ॥ ००५ ॥

यच्छ्रुत्वा नरसिंहानां दैन्यहर्षातिविस्मयात् ।
शूराणामपि पार्थानां हृदयानि चकम्पिरे ॥ ००६ ॥

यद्यच्च कृतवानन्यत्पार्थस्तदखिलं वद ।
न ह्यस्य निन्दितं जिष्णोः सुसूक्ष्ममपि लक्षये ॥ ००७ ॥

चरितं तस्य शूरस्य तन्मे सर्वं प्रकीर्तय ॥ ००७ ॥

वैशंपायन उवाच ॥

कथयिष्यामि ते तात कथामेतां महात्मनः ।
दिव्यां कौरवशार्दूल महतीमद्भुतोपमाम् ॥ ००८ ॥

गात्रसंस्पर्शसंबन्धं त्र्यम्बकेण सहानघ ।
पार्थस्य देवदेवेन श्रृणु सम्यक्समागमम् ॥ ००९ ॥

युधिष्ठिरनियोगात्स जगामामितविक्रमः ।
शक्रं सुरेश्वरं द्रष्टुं देवदेवं च शङ्करम् ॥ ०१० ॥

दिव्यं तद्धनुरादाय खड्गं च पुरुषर्षभः ।
महाबलो महाबाहुरर्जुनः कार्यसिद्धये ॥ ०११ ॥

दिशं ह्युदीचीं कौरव्यो हिमवच्छिखरं प्रति ॥ ०११ ॥

ऐन्द्रिः स्थिरमना राजन्सर्वलोकमहारथः ।
त्वरया परया युक्तस्तपसे धृतनिश्चयः ॥ ०१२ ॥

वनं कण्टकितं घोरमेक एवान्वपद्यत ॥ ०१२ ॥

नानापुष्पफलोपेतं नानापक्षिनिषेवितम् ।
नानामृगगणाकीर्णं सिद्धचारणसेवितम् ॥ ०१३ ॥

ततः प्रयाते कौन्तेये वनं मानुषवर्जितम् ।
शङ्खानां पटहानां च शब्दः समभवद्दिवि ॥ ०१४ ॥

पुष्पवर्षं च सुमहन्निपपात महीतले ।
मेघजालं च विततं छादयामास सर्वतः ॥ ०१५ ॥

अतीत्य वनदुर्गाणि संनिकर्षे महागिरेः ।
शुशुभे हिमवत्पृष्ठे वसमानोऽर्जुनस्तदा ॥ ०१६ ॥

तत्रापश्यद्द्रुमान्फुल्लान्विहगैर्वल्गु नादितान् ।
नदीश्च बहुलावर्ता नीलवैडूर्यसंनिभाः ॥ ०१७ ॥

हंसकारण्डवोद्गीताः सारसाभिरुतास्तथा ।
पुंस्कोकिलरुताश्चैव क्रौञ्चबर्हिणनादिताः ॥ ०१८ ॥

मनोहरवनोपेतास्तस्मिन्नतिरथोऽर्जुनः ।
पुण्यशीतामलजलाः पश्यन्प्रीतमनाभवत् ॥ ०१९ ॥

रमणीये वनोद्देशे रममाणोऽर्जुनस्तदा ।
तपस्युग्रे वर्तमान उग्रतेजा महामनाः ॥ ०२० ॥

दर्भचीरं निवस्याथ दण्डाजिनविभूषितः ।
पूर्णे पूर्णे त्रिरात्रे तु मासमेकं फलाशनः ॥ ०२१ ॥

द्विगुणेनैव कालेन द्वितीयं मासमत्यगात् ॥ ०२१ ॥

तृतीयमपि मासं स पक्षेणाहारमाचरन् ।
शीर्णं च पतितं भूमौ पर्णं समुपयुक्तवान् ॥ ०२२ ॥

चतुर्थे त्वथ संप्राप्ते मासि पूर्णे ततः परम् ।
वायुभक्षो महाबाहुरभवत्पाण्डुनन्दनः ॥ ०२३ ॥

ऊर्ध्वबाहुर्निरालम्बः पादाङ्गुष्ठाग्रविष्ठितः ॥ ०२३ ॥

सदोपस्पर्शनाच्चास्य बभूवुरमितौजसः ।
विद्युदम्भोरुहनिभा जटास्तस्य महात्मनः ॥ ०२४ ॥

ततो महर्षयः सर्वे जग्मुर्देवं पिनाकिनम् ।
शितिकण्ठं महाभागं प्रणिपत्य प्रसाद्य च ॥ ०२५ ॥

सर्वे निवेदयामासुः कर्म तत्फल्गुनस्य ह ॥ ०२५ ॥

एष पार्थो महातेजा हिमवत्पृष्ठमाश्रितः ।
उग्रे तपसि दुष्पारे स्थितो धूमाययन्दिशः ॥ ०२६ ॥

तस्य देवेश न वयं विद्मः सर्वे चिकीर्षितम् ।
संतापयति नः सर्वानसौ साधु निवार्यताम् ॥ ०२७ ॥

महेश्वर उवाच ॥

शीघ्रं गच्छत संहृष्टा यथागतमतन्द्रिताः ।
अहमस्य विजानामि सङ्कल्पं मनसि स्थितम् ॥ ०२८ ॥

नास्य स्वर्गस्पृहा काचिन्नैश्वर्यस्य न चायुषः ।
यत्त्वस्य काङ्क्षितं सर्वं तत्करिष्येऽहमद्य वै ॥ ०२९ ॥

वैशंपायन उवाच ॥

ते श्रुत्व शर्ववचनमृषयः सत्यवादिनः ।
प्रहृष्टमनसो जग्मुर्यथास्वं पुनराश्रमान् ॥ ०३० ॥

---

# अध्याय ०४०

वैशंपायन उवाच ॥

गतेषु तेषु सर्वेषु तपस्विषु महात्मसु ।
पिनाकपाणिर्भगवान्सर्वपापहरो हरः ॥ ००१ ॥

कैरातं वेषमास्थाय काञ्चनद्रुमसंनिभम् ।
विभ्राजमानो वपुषा गिरिर्मेरुरिवापरः ॥ ००२ ॥

श्रीमद्धनुरुपादाय शरांश्चाशीविषोपमान् ।
निष्पपात महार्चिष्मान्दहन्कक्षमिवानलः ॥ ००३ ॥

देव्या सहोमया श्रीमान्समानव्रतवेषया ।
नानावेषधरैर्हृष्टैर्भूतैरनुगतस्तदा ॥ ००४ ॥

किरातवेषप्रच्छन्नः स्त्रीभिश्चानु सहस्रशः ।
अशोभत तदा राजन्स देवोऽतीव भारत ॥ ००५ ॥

क्षणेन तद्वनं सर्वं निःशब्दमभवत्तदा ।
नादः प्रस्रवणानां च पक्षिणां चाप्युपारमत् ॥ ००६ ॥

स संनिकर्षमागम्य पार्थस्याक्लिष्टकर्मणः ।
मूकं नाम दितेः पुत्रं ददर्शाद्भुतदर्शनम् ॥ ००७ ॥

वाराहं रूपमास्थाय तर्कयन्तमिवार्जुनम् ।
हन्तुं परमदुष्टात्मा तमुवाचाथ फल्गुनः ॥ ००८ ॥

गाण्डीवं धनुरादाय शरांश्चाशीविषोपमान् ।
सज्यं धनुर्वरं कृत्वा ज्याघोषेण निनादयन् ॥ ००९ ॥

यन्मां प्रार्थयसे हन्तुमनागसमिहागतम् ।
तस्मात्त्वां पूर्वमेवाहं नेष्यामि यमसादनम् ॥ ०१० ॥

तं दृष्ट्वा प्रहरिष्यन्तं फल्गुनं दृढधन्विनम् ।

किरातरूपी सहसा वारयामास शङ्करः ॥ ०११ ॥

मयैष प्रार्थितः पूर्वं नीलमेघसमप्रभः ।
अनादृत्यैव तद्वाक्यं प्रजहाराथ फल्गुनः ॥ ०१२ ॥

किरातश्च समं तस्मिन्नेकलक्ष्ये महाद्युतिः ।
प्रमुमोचाशनिप्रख्यं शरमग्निशिखोपमम् ॥ ०१३ ॥

तौ मुक्तौ सायकौ ताभ्यां समं तत्र निपेततुः ।
मूकस्य गात्रे विस्तीर्णे शैलसंहनने तदा ॥ ०१४ ॥

यथाशनिविनिष्पेषो वज्रस्येव च पर्वते ।
तथा तयोः संनिपातः शरयोरभवत्तदा ॥ ०१५ ॥

स विद्धो बहुभिर्बाणैर्दीप्तास्यैः पन्नगैरिव ।
ममार राक्षसं रूपं भूयः कृत्वा विभीषणम् ॥ ०१६ ॥

ददर्शाथ ततो जिष्णुः पुरुषं काञ्चनप्रभम् ।
किरातवेषप्रच्छन्नं स्त्रीसहायममित्रहा ॥ ०१७ ॥

तमब्रवीत्प्रीतमनाः कौन्तेयः प्रहसन्निव ॥ ०१७ ॥

को भवानटते शून्ये वने स्त्रीगणसंवृतः ।
न त्वमस्मिन्वने घोरे बिभेषि कनकप्रभ ॥ ०१८ ॥

किमर्थं च त्वया विद्धो मृगोऽयं मत्परिग्रहः ।
मयाभिपन्नः पूर्वं हि राक्षसोऽयमिहागतः ॥ ०१९ ॥

कामात्परिभवाद्वापि न मे जीवन्विमोक्ष्यसे ।
न ह्येष मृगयाधर्मो यस्त्वयाद्य कृतो मयि ॥ ०२० ॥

तेन त्वां भ्रंशयिष्यामि जीवितात्पर्वताश्रय ॥ ०२० ॥

इत्युक्तः पाण्डवेयेन किरातः प्रहसन्निव ।
उवाच श्लक्ष्णया वाचा पाण्डवं सव्यसाचिनम् ॥ ०२१ ॥

ममैवायं लक्ष्यभूतः पूर्वमेव परिग्रहः ।
ममैव च प्रहारेण जीविताद्व्यवरोपितः ॥ ०२२ ॥

दोषान्स्वान्नार्हसेऽन्यस्मै वक्तुं स्वबलदर्पितः ।
अभिषक्तोऽस्मि मन्दात्मन्न मे जीवन्विमोक्ष्यसे ॥ ०२३ ॥

स्थिरो भवस्व मोक्ष्यामि सायकानशनीनिव ।
घटस्व परया शक्त्या मुञ्च त्वमपि सायकान् ॥ ०२४ ॥

ततस्तौ तत्र संरब्धौ गर्जमानौ मुहुर्मुहुः ।
शरैराशीविषाकारैस्ततक्षाते परस्परम् ॥ ०२५ ॥

ततोऽर्जुनः शरवर्षं किराते समवासृजत् ।
तत्प्रसन्नेन मनसा प्रतिजग्राह शङ्करः ॥ ०२६ ॥

मुहूर्तं शरवर्षं तत्प्रतिगृह्य पिनाकधृक् ।
अक्षतेन शरीरेण तस्थौ गिरिरिवाचलः ॥ ०२७ ॥

स दृष्ट्वा बाणवर्षं तन्मोघीभूतं धनञ्जयः ।
परमं विस्मयं चक्रे साधु साध्विति चाब्रवीत् ॥ ०२८ ॥

अहोऽयं सुकुमाराङ्गो हिमवच्छिखरालयः ।
गाण्डीवमुक्तान्नाराचान्प्रतिगृह्णात्यविह्वलः ॥ ०२९ ॥

कोऽयं देवो भवेत्साक्षाद्रुद्रो यक्षः सुरेश्वरः ।
विद्यते हि गिरिश्रेष्ठे त्रिदशानां समागमः ॥ ०३० ॥

न हि मद्बाणजालानामुत्सृष्टानां सहस्रशः ।
शक्तोऽन्यः सहितुं वेगमृते देवं पिनाकिनम् ॥ ०३१ ॥

देवो वा यदि वा यक्षो रुद्रादन्यो व्यवस्थितः ।
अहमेनं शरैस्तीक्ष्णैर्नयामि यमसादनम् ॥ ०३२ ॥

ततो हृष्टमना जिष्णुर्नाराचान्मर्मभेदिनः ।
व्यसृजच्छतधा राजन्मयूखानिव भास्करः ॥ ०३३ ॥

तान्प्रसन्नेन मनसा भगवा.ण्ल्लोकभावनः ।
शूलपाणिः प्रत्यगृह्णाच्छिलावर्षमिवाचलः ॥ ०३४ ॥

क्षणेन क्षीणबाणोऽथ संवृत्तः फल्गुनस्तदा ।
वित्रासं च जगामाथ तं दृष्ट्वा शरसङ्क्षयम् ॥ ०३५ ॥

चिन्तयामास जिष्णुस्तु भगवन्तं हुताशनम् ।
पुरस्तादक्षयौ दत्तौ तूणौ येनास्य खाण्डवे ॥ ०३६ ॥

किं नु मोक्ष्यामि धनुषा यन्मे बाणाः क्षयं गताः ।
अयं च पुरुषः कोऽपि बाणान्ग्रसति सर्वशः ॥ ०३७ ॥

अहमेनं धनुष्कोट्या शूलाग्रेणेव कुञ्जरम् ।
नयामि दण्डधारस्य यमस्य सदनं प्रति ॥ ०३८ ॥

संप्रायुध्यद्धनुष्कोट्या कौन्तेयः परवीरहा ।
तदप्यस्य धनुर्दिव्यं जग्रास गिरिगोचरः ॥ ०३९ ॥

ततोऽर्जुनो ग्रस्तधनुः खड्गपाणिरतिष्ठत ।
युद्धस्यान्तमभीप्सन्वै वेगेनाभिजगाम तम् ॥ ०४० ॥

तस्य मूर्ध्नि शितं खड्गमसक्तं पर्वतेष्वपि ।
मुमोच भुजवीर्येण विक्रम्य कुरुनन्दनः ॥ ०४१ ॥

तस्य मूर्धानमासाद्य पफालासिवरो हि सः ॥ ०४१ ॥

ततो वृक्षैः शिलाभिश्च योधयामास फल्गुनः ।
यथा वृक्षान्महाकायः प्रत्यगृह्णादथो शिलाः ॥ ०४२ ॥

किरातरूपी भगवांस्ततः पार्थो महाबलः ।
मुष्टिभिर्वज्रसंस्पर्शैर्धूममुत्पादयन्मुखे ॥ ०४३ ॥

प्रजहार दुराधर्षे किरातसमरूपिणि ॥ ०४३ ॥

ततः शक्राशनिसमैर्मुष्टिभिर्भृशदारुणैः ।
किरातरूपी भगवानर्दयामास फल्गुनम् ॥ ०४४ ॥

ततश्चटचटाशब्दः सुघोरः समजायत ।
पाण्डवस्य च मुष्टीनां किरातस्य च युध्यतः ॥ ०४५ ॥

सुमुहूर्तं महद्युद्धमासीत्तल्लोमहर्षणम् ।
भुजप्रहारसंयुक्तं वृत्रवासवयोरिव ॥ ०४६ ॥

जहाराथ ततो जिष्णुः किरातमुरसा बली ।
पाण्डवं च विचेष्टन्तं किरातोऽप्यहनद्बलात् ॥ ०४७ ॥

तयोर्भुजविनिष्पेषात्संघर्षेणोरसोस्तथा ।
समजायत गात्रेषु पावकोऽङ्गारधूमवान् ॥ ०४८ ॥

तत एनं महादेवः पीड्य गात्रैः सुपीडितम् ।
तेजसा व्याक्रमद्रोषाच्चेतस्तस्य विमोहयन् ॥ ०४९ ॥

ततो निपीडितैर्गात्रैः पिण्डीकृत इवाबभौ ।
फल्गुनो गात्रसंरुद्धो देवदेवेन भारत ॥ ०५० ॥

निरुच्छ्वासोऽभवच्चैव संनिरुद्धो महात्मना ।
ततः पपात संमूढस्ततः प्रीतोऽभवद्भवः ॥ ०५१ ॥

भगवानुवाच ॥

भो भो फल्गुन तुष्टोऽस्मि कर्मणाप्रतिमेन ते ।
शौर्येणानेन धृत्या च क्षत्रियो नास्ति ते समः ॥ ०५२ ॥

समं तेजश्च वीर्यं च ममाद्य तव चानघ ।
प्रीतस्तेऽहं महाबाहो पश्य मां पुरुषर्षभ ॥ ०५३ ॥

ददानि ते विशालाक्ष चक्षुः पूर्वऋषिर्भवान् ।
विजेष्यसि रणे शत्रूनपि सर्वान्दिवौकसः ॥ ०५४ ॥

वैशंपायन उवाच ॥

ततो देवं महादेवं गिरिशं शूलपाणिनम् ।
ददर्श फल्गुनस्तत्र सह देव्या महाद्युतिम् ॥ ०५५ ॥

स जानुभ्यां महीं गत्वा शिरसा प्रणिपत्य च ।
प्रसादयामास हरं पार्थः परपुरञ्जयः ॥ ०५६ ॥

अर्जुन उवाच ॥

कपर्दिन्सर्वभूतेश भगनेत्रनिपातन ।
व्यतिक्रमं मे भगवन्क्षन्तुमर्हसि शङ्कर ॥ ०५७ ॥

भवगद्दर्शनाकाङ्क्षी प्राप्तोऽस्मीमं महागिरिम् ।

दयितं तव देवेश तापसालयमुत्तमम्  ॥ ०५८  ॥

प्रसादये त्वां भगवन्सर्वभूतनमस्कृत ।
न मे स्यादपराधोऽयं महादेवातिसाहसात्  ॥ ०५९  ॥

कृतो मया यदज्ञानाद्विमर्दोऽयं त्वया सह ।
शरणं संप्रपन्नाय तत्क्षमस्वाद्य शङ्कर  ॥ ०६०  ॥

वैशंपायन उवाच  ॥

तमुवाच महातेजाः प्रहस्य वृषभध्वजः ।
प्रगृह्य रुचिरं बाहुं क्षान्तमित्येव फल्गुनम्  ॥ ०६१  ॥

---

# अध्याय ०४१

भगवानुवाच  ॥

नरस्त्वं पूर्वदेहे वै नारायणसहायवान् ।
बदर्यां तप्तवानुग्रं तपो वर्षायुतान्बहून्  ॥ ००१  ॥

त्वयि वा परमं तेजो विष्णौ वा पुरुषोत्तमे ।
युवाभ्यां पुरुषाग्र्याभ्यां तेजसा धार्यते जगत्  ॥ ००२  ॥

शक्राभिषेके सुमहद्धनुर्जलदनिस्वनम् ।
प्रगृह्य दानवाः शस्तास्त्वया कृष्णेन च प्रभो  ॥ ००३  ॥

एतत्तदेव गाण्डीवं तव पार्थ करोचितम् ।
मायामास्थाय यद्ग्रस्तं मया पुरुषसत्तम  ॥ ००४  ॥

तूणौ चाप्यक्षयौ भूयस्तव पार्थ यथोचितौ ॥ ००४ ॥

प्रीतिमानस्मि वै पार्थ तव सत्यपराक्रम ।
गृहाण वरमस्मत्तः काङ्क्षितं यन्नरर्षभ ॥ ००५ ॥

न त्वया सदृशः कश्चित्पुमान्मर्त्येषु मानद ।
दिवि वा विद्यते क्षत्रं त्वत्प्रधानमरिंदम ॥ ००६ ॥

अर्जुन उवाच ॥

भगवन्ददासि चेन्मह्यं कामं प्रीत्या वृषध्वज ।
कामये दिव्यमस्त्रं तद्घोरं पाशुपतं प्रभो ॥ ००७ ॥

यत्तद्ब्रह्मशिरो नाम रौद्रं भीमपराक्रमम् ।
युगान्ते दारुणे प्राप्ते कृत्स्नं संहरते जगत् ॥ ००८ ॥

दहेयं येन सङ्ग्रामे दानवान्राक्षसांस्तथा ।
भूतानि च पिशाचांश्च गन्धर्वानथ पन्नगान् ॥ ००९ ॥

यतः शूलसहस्राणि गदाश्चोग्रप्रदर्शनाः ।
शराश्चाशीविषाकाराः संभवन्त्यनुमन्त्रिताः ॥ ०१० ॥

युध्येयं येन भीष्मेण द्रोणेन च कृपेण च ।
सूतपुत्रेण च रणे नित्यं कटुकभाषिणा ॥ ०११ ॥

एष मे प्रथमः कामो भगवन्भगनेत्रहन् ।
त्वत्प्रसादाद्विनिर्वृत्तः समर्थः स्यामहं यथा ॥ ०१२ ॥

भगवानुवाच ॥

ददानि तेऽस्त्रं दयितमहं पाशुपतं महत् ।

समर्थो धारणे मोक्षे संहारे चापि पाण्डव ॥ ०१३ ॥

नैतद्वेद महेन्द्रोऽपि न यमो न च यक्षराट् ।
वरुणो वाथ वा वायुः कुतो वेत्स्यन्ति मानवाः ॥ ०१४ ॥

न त्वेतत्सहसा पार्थ मोक्तव्यं पुरुषे क्वचित् ।
जगद्विनिर्दहेत्सर्वमल्पतेजसि पातितम् ॥ ०१५ ॥

अवध्यो नाम नास्त्यस्य त्रैलोक्ये सचराचरे ।
मनसा चक्षुषा वाचा धनुषा च निपात्यते ॥ ०१६ ॥

वैशंपायन उवाच ॥

तच्छ्रुत्वा त्वरितः पार्थः शुचिर्भूत्वा समाहितः ।
उपसङ्गृह्य विश्वेशमधीष्वेति च सोऽब्रवीत् ॥ ०१७ ॥

ततस्त्वध्यापयामास सरहस्य निवर्तनम् ।
तदस्त्रं पाण्डवश्रेष्ठं मूर्तिमन्तमिवान्तकम् ॥ ०१८ ॥

उपतस्थे महात्मानं यथा त्र्यक्षमुमापतिम् ।
प्रतिजग्राह तच्चापि प्रीतिमानर्जुनस्तदा ॥ ०१९ ॥

ततश्चचाल पृथिवी सपर्वतवनद्रुमा ।
ससागरवनोद्देशा सग्रामनगराकरा ॥ ०२० ॥

शङ्खदुन्दुभिघोषाश्च भेरीणां च सहस्रशः ।
तस्मिन्मुहूर्ते संप्राप्ते निर्घातश्च महानभूत् ॥ ०२१ ॥

अथास्त्रं जाज्वलद्घोरं पाण्डवस्यामितौजसः ।
मूर्तिमद्विष्ठितं पार्श्वे ददृशुर्देवदानवाः ॥ ०२२ ॥

स्पृष्टस्य च त्र्यम्बकेन फल्गुनस्यामितौजसः ।
यत्किञ्चिदशुभं देहे तत्सर्वं नाशमेयिवत् ॥ ०२३ ॥

स्वर्गं गच्छेत्यनुज्ञातस्त्र्यम्बकेन तदार्जुनः ।
प्रणम्य शिरसा पार्थः प्राञ्जलिर्देवमैक्षत ॥ ०२४ ॥

ततः प्रभुस्त्रिदिवनिवासिनां वशी ; महामतिर्गिरिश उमापतिः शिवः ।
धनुर्महद्दितिजपिशाचसूदनं ; ददौ भवः पुरुषवराय गाण्डिवम् ॥ ०२५ ॥

ततः शुभं गिरिवरमीश्वरस्तदा ; सहोमया सिततटसानुकन्दरम् ।
विहाय तं पतगमहर्षिसेवितं ; जगाम खं पुरुषवरस्य पश्यतः ॥ ०२६ ॥

---

# अध्याय ०४२

वैशंपायन उवाच ॥

तस्य संपश्यतस्त्वेव पिनाकी वृषभध्वजः ।
जगामादर्शनं भानुर्लोकस्येवास्तमेयिवान् ॥ ००१ ॥

ततोऽर्जुनः परं चक्रे विस्मयं परवीरहा ।
मया साक्षान्महादेवो दृष्ट इत्येव भारत ॥ ००२ ॥

धन्योऽस्म्यनुगृहीतोऽस्मि यन्मया त्र्यम्बको हरः ।
पिनाकी वरदो रूपी दृष्टः स्पृष्टश्च पाणिना ॥ ००३ ॥

कृतार्थं चावगच्छामि परमात्मानमात्मना ।
शत्रूंश्च विजितान्सर्वान्निर्वृत्तं च प्रयोजनम् ॥ ००४ ॥

ततो वैडूर्यवर्णाभो भासयन्सर्वतो दिशः ।
यादोगणवृतः श्रीमानाजगाम जलेश्वरः ॥ ००५ ॥

नागैर्नदैर्नदीभिश्च दैत्यैः साध्यैश्च दैवतैः ।
वरुणो यादसां भर्ता वशी तं देशमागमत् ॥ ००६ ॥

अथ जाम्बूनदवपुर्विमानेन महार्चिषा ।
कुबेरः समनुप्राप्तो यक्षैरनुगतः प्रभुः ॥ ००७ ॥

विद्योतयन्निवाकाशमद्भुतोपमदर्शनः ।
धनानामीश्वरः श्रीमानर्जुनं द्रष्टुमागतः ॥ ००८ ॥

तथा लोकान्तकृच्छ्रीमान्यमः साक्षात्प्रतापवान् ।
मूर्त्यमूर्तिधरैः सार्धं पितृभिर्लोकभावनैः ॥ ००९ ॥

दण्डपाणिरचिन्त्यात्मा सर्वभूतविनाशकृत् ।
वैवस्वतो धर्मराजो विमानेनावभासयन् ॥ ०१० ॥

त्री.ण्ल्लोकान्गुह्यकांश्चैव गन्धर्वांश्च सपन्नगान् ।
द्वितीय इव मार्तण्डो युगान्ते समुपस्थिते ॥ ०११ ॥

भानुमन्ति विचित्राणि शिखराणि महागिरेः ।
समास्थायार्जुनं तत्र ददृशुस्तपसान्वितम् ॥ ०१२ ॥

ततो मुहूर्ताद्भगवानैरावतशिरोगतः ।
आजगाम सहेन्द्राण्या शक्रः सुरगणैर्वृतः ॥ ०१३ ॥

पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
शुशुभे तारकाराजः सितमभ्रमिवास्थितः ॥ ०१४ ॥

संस्तूयमानो गन्धर्वैर्ऋषिभिश्च तपोधनैः ।
श्रृङ्गं गिरेः समासाद्य तस्थौ सूर्य इवोदितः ॥ ०१५ ॥

अथ मेघस्वनो धीमान्व्याजहार शुभां गिरम् ।
यमः परमधर्मज्ञो दक्षिणां दिशमास्थितः ॥ ०१६ ॥

अर्जुनार्जुन पश्यास्मा.ण्लोकपालान्समागतान् ।
दृष्टिं ते वितरामोऽद्य भवानर्हो हि दर्शनम् ॥ ०१७ ॥

पूर्वर्षिरमितात्मा त्वं नरो नाम महाबलः ।
नियोगाद्ब्रह्मणस्तात मर्त्यतां समुपागतः ॥ ०१८ ॥

त्वं वासवसमुद्भूतो महावीर्यपराक्रमः ॥ ०१८ ॥

क्षत्रं चाग्निसमस्पर्शं भारद्वाजेन रक्षितम् ।
दानवाश्च महावीर्या ये मनुष्यत्वमागताः ॥ ०१९ ॥

निवातकवचाश्चैव संसाध्याः कुरुनन्दन ॥ ०१९ ॥

पितुर्ममांशो देवस्य सर्वलोकप्रतापिनः ।
कर्णः स सुमहावीर्यस्त्वया वध्यो धनञ्जय ॥ ०२० ॥

अंशाश्च क्षितिसंप्राप्ता देवगन्धर्वरक्षसाम् ।
तया निपातिता युद्धे स्वकर्मफलनिर्जिताम् ॥ ०२१ ॥

गतिं प्राप्स्यन्ति कौन्तेय यथास्वमरिकर्शन ॥ ०२१ ॥

अक्षया तव कीर्तिश्च लोके स्थास्यति फल्गुन ।
त्वया साक्षान्महादेवस्तोषितो हि महामृधे ॥ ०२२ ॥

लघ्वी वसुमती चापि कर्तव्या विष्णुना सह ॥ ०२२ ॥

गृहाणास्त्रं महाबाहो दण्डमप्रतिवारणम् ।
अनेनास्त्रेण सुमहत्त्वं हि कर्म करिष्यसि ॥ ०२३ ॥

प्रतिजग्राह तत्पार्थो विधिवत्कुरुनन्दनः ।
समन्त्रं सोपचारं च समोक्षं सनिवर्तनम् ॥ ०२४ ॥

ततो जलधरश्यामो वरुणो यादसां पतिः ।
पश्चिमां दिशमास्थाय गिरमुच्चारयन्प्रभुः ॥ ०२५ ॥

पार्थ क्षत्रियमुख्यस्त्वं क्षत्रधर्मे व्यवस्थितः ।
पश्य मां पृथुताम्राक्ष वरुणोऽस्मि जलेश्वरः ॥ ०२६ ॥

मया समुद्यतान्पाशान्वारुणाननिवारणान् ।
प्रतिगृह्णीष्व कौन्तेय सरहस्यनिवर्तनान् ॥ ०२७ ॥

एभिस्तदा मया वीर सङ्ग्रामे तारकामये ।
दैतेयानां सहस्राणि संयतानि महात्मनाम् ॥ ०२८ ॥

तस्मादिमान्महासत्त्व मत्प्रसादात्समुत्थितान् ।
गृहाण न हि ते मुच्येदन्तकोऽप्याततायिनः ॥ ०२९ ॥

अनेन त्वं यदास्त्रेण सङ्ग्रामे विचरिष्यसि ।
तदा निःक्षत्रिया भूमिर्भविष्यति न संशयः ॥ ०३० ॥

ततः कैलासनिलयो धनाध्यक्षोऽभ्यभाषत ।
दत्तेष्वस्त्रेषु दिव्येषु वरुणेन यमेन च ॥ ०३१ ॥

सव्यसाचिन्महाबाहो पूर्वदेव सनातन ।
सहास्माभिर्भवाञ्श्रान्तः पुराकल्पेषु नित्यशः ॥ ०३२ ॥

मत्तोऽपि त्वं गृहाणास्त्रमन्तर्धानं प्रियं मम ।
ओजस्तेजोद्युतिहरं प्रस्वापनमरातिहन् ॥ ०३३ ॥

ततोऽर्जुनो महाबाहुर्विधिवत्कुरुनन्दनः ।
कौबेरमपि जग्राह दिव्यमस्त्रं महाबलः ॥ ०३४ ॥

ततोऽब्रवीद्देवराजः पार्थमक्लिष्टकारिणम् ।
सान्त्वयञ्श्लक्ष्णया वाचा मेघदुन्दुभिनिस्वनः ॥ ०३५ ॥

कुन्तीमातर्महाबाहो त्वमीशानः पुरातनः ।
परां सिद्धिमनुप्राप्तः साक्षाद्देवगतिं गतः ॥ ०३६ ॥

देवकार्यं हि सुमहत्त्वया कार्यमरिंदम ।
आरोढव्यस्त्वया स्वर्गः सज्जीभव महाद्युते ॥ ०३७ ॥

रथो मातलिसंयुक्त आगन्ता त्वत्कृते महीम् ।
तत्र तेऽहं प्रदास्यामि दिव्यान्यस्त्राणि कौरव ॥ ०३८ ॥

तान्दृष्ट्वा लोकपालांस्तु समेतान्गिरिमूर्धनि ।
जगाम विस्मयं धीमान्कुन्तीपुत्रो धनञ्जयः ॥ ०३९ ॥

ततोऽर्जुनो महातेजा लोकपालान्समागतान् ।
पूजयामास विधिवद्वाग्भिरद्भिः फलैरपि ॥ ०४० ॥

ततः प्रतिययुर्देवाः प्रतिपूज्य धनञ्जयम् ।
यथागतेन विबुधाः सर्वे काममनोजवाः ॥ ०४१ ॥

ततोऽर्जुनो मुदं लेभे लब्धास्त्रः पुरुषर्षभः ।
कृतार्थमिव चात्मानं स मेने पूर्णमानसः ॥ ०४२ ॥

# इन्द्रलोकाभिगमनपर्व

## अध्याय ०४३

वैशंपायन उवाच ॥

गतेषु लोकपालेषु पार्थः शत्रुनिबर्हणः ।
चिन्तयामास राजेन्द्र देवराजरथागमम् ॥ ००१ ॥

ततश्चिन्तयमानस्य गुडाकेशस्य धीमतः ।
रथो मातलिसंयुक्त आजगाम महाप्रभः ॥ ००२ ॥

नभो वितिमिरं कुर्वञ्जलदान्पाटयन्निव ।
दिशः संपूरयन्नादैर्महामेघरवोपमैः ॥ ००३ ॥

असयः शक्तयो भीमा गदाश्चोग्रप्रदर्शनाः ।
दिव्यप्रभावाः प्रासाश्च विद्युतश्च महाप्रभाः ॥ ००४ ॥

तथैवाशनयस्तत्र चक्रयुक्ता हुडागुडाः ।
वायुस्फोटाः सनिर्घाता बर्हिमेघनिभस्वनाः ॥ ००५ ॥

तत्र नागा महाकाया ज्वलितास्याः सुदारुणाः ।
सिताभ्रकूटप्रतिमाः संहताश्च यथोपलाः ॥ ००६ ॥

दश वाजिसहस्राणि हरीणां वातरंहसाम् ।
वहन्ति यं नेत्रमुषं दिव्यं मायामयं रथम् ॥ ००७ ॥

तत्रापश्यन्महानीलं वैजयन्तं महाप्रभम् ।
ध्वजमिन्दीवरश्यामं वंशं कनकभूषणम्  ॥ ००८  ॥

तस्मिन्रथे स्थितं सूतं तप्तहेमविभूषितम् ।
दृष्ट्वा पार्थो महाबाहुर्देवमेवान्वतर्कयत्  ॥ ००९  ॥

तथा तर्कयतस्तस्य फल्गुनस्याथ मातलिः ।
संनतः प्रश्रितो भूत्वा वाक्यमर्जुनमब्रवीत्  ॥ ०१०  ॥

भो भो शक्रात्मज श्रीमाञ्शक्रस्त्वां द्रष्टुमिच्छति ।
आरोहतु भवाञ्शीघ्रं रथमिन्द्रस्य संमतम्  ॥ ०११  ॥

आह माममरश्रेष्ठः पिता तव शतक्रतुः ।
कुन्तीसुतमिह प्राप्तं पश्यन्तु त्रिदशालयाः  ॥ ०१२  ॥

एष शक्रः परिवृतो देवैरृषिगणैस्तथा ।
गन्धर्वैरप्सरोभिश्च त्वां दिदृक्षुः प्रतीक्षते  ॥ ०१३  ॥

अस्माल्लोकाद्देवलोकं पाकशासनशासनात् ।
आरोह त्वं मया सार्धं लब्धास्त्रः पुनरेष्यसि  ॥ ०१४  ॥

अर्जुन उवाच  ॥

मातले गच्छ शीघ्रं त्वमारोहस्व रथोत्तमम् ।
राजसूयाश्वमेधानां शतैरपि सुदुर्लभम्  ॥ ०१५  ॥

पार्थिवैः सुमहाभागैर्यज्वभिर्भूरिदक्षिणैः ।
दैवतैर्वा समारोढुं दानवैर्वा रथोत्तमम्  ॥ ०१६  ॥

नातप्ततपसा शक्य एष दिव्यो महारथः ।
द्रष्टुं वाप्यथ वा स्प्रष्टुमारोढुं कुत एव तु  ॥ ०१७  ॥

त्वयि प्रतिष्ठिते साधो रथस्थे स्थिरवाजिनि ।
पश्चादहमथारोक्ष्ये सुकृती सत्पथं यथा ॥ ०१८ ॥

वैशंपायन उवाच ॥

तस्य तद्वचनं श्रुत्वा मातलिः शक्रसारथिः ।
आरुरोह रथं शीघ्रं हयान्येमे च रश्मिभिः ॥ ०१९ ॥

ततोऽर्जुनो हृष्टमना गङ्गायामाप्लुतः शुचिः ।
जजाप जप्यं कौन्तेयो विधिवत्कुरुनन्दनः ॥ ०२० ॥

ततः पितॄन्यथान्यायं तर्पयित्वा यथाविधि ।
मन्दरं शैलराजं तमाप्रष्टुमुपचक्रमे ॥ ०२१ ॥

साधूनां धर्मशीलानां मुनीनां पुण्यकर्मणाम् ।
त्वं सदा संश्रयः शैल स्वर्गमार्गाभिकाङ्क्षिणाम् ॥ ०२२ ॥

त्वत्प्रसादात्सदा शैल ब्राह्मणाः क्षत्रिया विशः ।
स्वर्गं प्राप्ताश्चरन्ति स्म देवैः सह गतव्यथाः ॥ ०२३ ॥

अद्रिराज महाशैल मुनिसंश्रय तीर्थवन् ।
गच्छाम्यामन्त्रयामि त्वां सुखमस्म्युषितस्त्वयि ॥ ०२४ ॥

तव सानूनि कुञ्जाश्च नद्यः प्रस्रवणानि च ।
तीर्थानि च सुपुण्यानि मया दृष्टान्यनेकशः ॥ ०२५ ॥

एवमुक्त्वार्जुनः शैलमामन्त्र्य परवीरहा ।
आरुरोह रथं दिव्यं द्योतयन्निव भास्करः ॥ ०२६ ॥

स तेनादित्यरूपेण दिव्येनाद्भुतकर्मणा ।

ऊर्ध्वमाचक्रमे धीमान्प्रहृष्टः कुरुनन्दनः ॥ ०२७ ॥

सोऽदर्शनपथं यात्वा मर्त्यानां भूमिचारिणाम् ।
ददर्शाद्भुतरूपाणि विमानानि सहस्रशः ॥ ०२८ ॥

न तत्र सूर्यः सोमो वा द्योतते न च पावकः ।
स्वयैव प्रभया तत्र द्योतन्ते पुण्यलब्धया ॥ ०२९ ॥

तारारूपाणि यानीह दृश्यन्ते द्युतिमन्ति वै ।
दीपवद्विप्रकृष्टत्वादणूनि सुमहान्त्यपि ॥ ०३० ॥

तानि तत्र प्रभास्वन्ति रूपवन्ति च पाण्डवः ।
ददर्श स्वेषु धिष्ण्येषु दीप्तिमन्ति स्वयार्चिषा ॥ ०३१ ॥

तत्र राजर्षयः सिद्धा वीराश्च निहता युधि ।
तपसा च जितस्वर्गाः संपेतुः शतसंघशः ॥ ०३२ ॥

गन्धर्वाणां सहस्राणि सूर्यज्वलनतेजसाम् ।
गुह्यकानामृषीणां च तथैवाप्सरसां गणाः ॥ ०३३ ॥

लोकानात्मप्रभान्पश्यन्फल्गुनो विस्मयान्वितः ।
पप्रच्छ मातलिं प्रीत्या स चाप्येनमुवाच ह ॥ ०३४ ॥

एते सुकृतिनः पार्थ स्वेषु धिष्ण्येष्ववस्थिताः ।
यान्दृष्टवानसि विभो तारारूपाणि भूतले ॥ ०३५ ॥

ततोऽपश्यत्स्थितं द्वारि सितं वैजयिनं गजम् ।
ऐरावतं चतुर्दन्तं कैलासमिव शृङ्गिणम् ॥ ०३६ ॥

स सिद्धमार्गमाक्रम्य कुरुपाण्डवसत्तमः ।
व्यरोचत यथा पूर्वं मान्धाता पार्थिवोत्तमः ॥ ०३७ ॥

अतिचक्राम लोकान्स राज्ञां राजीवलोचनः ।
ततो ददर्श शक्रस्य पुरींताममरावतीम् ॥ ०३८ ॥

---

# अध्याय ०४४

वैशंपायन उवाच ॥

स ददर्श पुरीं रम्यां सिद्धचारणसेविताम् ।
सर्वर्तुकुसुमैः पुण्यैः पादपैरुपशोभिताम् ॥ ००१ ॥

तत्र सौगन्धिकानां स द्रुमाणां पुण्यगन्धिनाम् ।
उपवीज्यमानो मिश्रेण वायुना पुण्यगन्धिना ॥ ००२ ॥

नन्दनं च वनं दिव्यमप्सरोगणसेवितम् ।
ददर्श दिव्यकुसुमैराह्वयद्भिरिव द्रुमैः ॥ ००३ ॥

नातप्ततपसा शक्यो द्रष्टुं नानाहिताग्निना ।
स लोकः पुण्यकर्तॄणां नापि युद्धपराङ्मुखैः ॥ ००४ ॥

नायज्वभिर्नानृतकैर्न वेदश्रुतिवर्जितैः ।
नानाप्लुताङ्गैस्तीर्थेषु यज्ञदानबहिष्कृतैः ॥ ००५ ॥

नापि यज्ञहनैः क्षुद्रैर्द्रष्टुं शक्यः कथञ्चन ।
पानपैर्गुरुतल्पैश्च मांसादैर्वा दुरात्मभिः ॥ ००६ ॥

स तद्दिव्यं वनं पश्यन्दिव्यगीतनिनादितम् ।

प्रविवेश महाबाहुः शक्रस्य दयितां पुरीम् ॥ ००७ ॥

तत्र देवविमानानि कामगानि सहस्रशः ।
संस्थितान्यभियातानि ददर्शायुतशस्तदा ॥ ००८ ॥

संस्तूयमानो गन्धर्वैरप्सरोभिश्च पाण्डवः ।
पुष्पगन्धवहैः पुण्यैर्वायुभिश्चानुवीजितः ॥ ००९ ॥

ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
हृष्टाः संपूजयामासुः पार्थमक्लिष्टकारिणम् ॥ ०१० ॥

आशीर्वादैः स्तूयमानो दिव्यवादित्रनिस्वनैः ।
प्रतिपेदे महाबाहुः शङ्खदुन्दुभिनादितम् ॥ ०११ ॥

नक्षत्रमार्गं विपुलं सुरवीथीति विश्रुतम् ।
इन्द्राज्ञया ययौ पार्थः स्तूयमानः समन्ततः ॥ ०१२ ॥

तत्र साध्यास्तथा विश्वे मरुतोऽथाश्विनावपि ।
आदित्या वसवो रुद्रास्तथा ब्रह्मर्षयोऽमलाः ॥ ०१३ ॥

राजर्षयश्च बहवो दिलीपप्रमुखा नृपाः ।
तुम्बुरुर्नारदश्चैव गन्धर्वौ च हहाहुहू ॥ ०१४ ॥

तान्सर्वान्स समागम्य विधिवत्कुरुनन्दनः ।
ततोऽपश्यद्देवराजं शतक्रतुमरिंदमम् ॥ ०१५ ॥

ततः पार्थो महाबाहुरवतीर्य रथोत्तमात् ।
ददर्श साक्षाद्देवेन्द्रं पितरं पाकशासनम् ॥ ०१६ ॥

पाण्डुरेणातपत्रेण हेमदण्डेन चारुणा ।
दिव्यगन्धाधिवासेन व्यजनेन विधूयता ॥ ०१७ ॥

विश्वावसुप्रभृतिभिर्गन्धर्वैः स्तुतिवन्दनैः ।
स्तूयमानं द्विजाग्र्यैश्च ऋग्यजुःसामसंस्तवैः ॥ ०१८ ॥

ततोऽभिगम्य कौन्तेयः शिरसाभ्यनमद्बली ।
स चैनमनुवृत्ताभ्यां भुजाभ्यां प्रत्यगृह्णत ॥ ०१९ ॥

ततः शक्रासने पुण्ये देवराजर्षिपूजिते ।
शक्रः पाणौ गृहीत्वैनमुपावेशयदन्तिके ॥ ०२० ॥

मूर्ध्नि चैनमुपाघ्राय देवेन्द्रः परवीरहा ।
अङ्कमारोपयामास प्रश्रयावनतं तदा ॥ ०२१ ॥

सहस्राक्षनियोगात्स पार्थः शक्रासनं तदा ।
अध्यक्रामदमेयात्मा द्वितीय इव वासवः ॥ ०२२ ॥

ततः प्रेम्णा वृत्रशत्रुरर्जुनस्य शुभं मुखम् ।
पस्पर्श पुण्यगन्धेन करेण परिसान्त्वयन् ॥ ०२३ ॥

परिमार्जमानः शनकैर्बाहू चास्यायतौ शुभौ ।
ज्याशरक्षेपकठिनौ स्तम्भाविव हिरण्मयौ ॥ ०२४ ॥

वज्रग्रहणचिह्नेन करेण बलसूदनः ।
मुहुर्मुहुर्वज्रधरो बाहू संस्फालयञ्शनैः ॥ ०२५ ॥

स्मयन्निव गुडाकेशं प्रेक्षमाणः सहस्रदृक् ।
हर्षेणोत्फुल्लनयनो न चातृप्यत वृत्रहा ॥ ०२६ ॥

एकासनोपविष्टौ तौ शोभयां चक्रतुः सभाम् ।
सूर्याचन्द्रमसौ व्योम्नि चतुर्दश्यामिवोदितौ ॥ ०२७ ॥

तत्र स्म गाथा गायन्ति साम्ना परमवल्गुना ।
गन्धर्वास्तुम्बुरुश्रेष्ठाः कुशला गीतसामसु ॥ ०२८ ॥

घृताची मेनका रम्भा पूर्वचित्तिः स्वयंप्रभा ।
उर्वशी मिश्रकेशी च डुण्डुर्गौरी वरूथिनी ॥ ०२९ ॥

गोपाली सहजन्या च कुम्भयोनिः प्रजागरा ।
चित्रसेना चित्रलेखा सहा च मधुरस्वरा ॥ ०३० ॥

एताश्चान्याश्च ननृतुस्तत्र तत्र वराङ्गनाः ।
चित्तप्रमथने युक्ताः सिद्धानां पद्मलोचनाः ॥ ०३१ ॥

महाकटितटश्रोण्यः कम्पमानैः पयोधरैः ।
कटाक्षहावमाधुर्यैश्चेतोबुद्धिमनोहराः ॥ ०३२ ॥

---

# अध्याय ०४५

वैशंपायन उवाच ॥

ततो देवाः सगन्धर्वाः समादायार्घ्यमुत्तमम् ।
शक्रस्य मतमाज्ञाय पार्थमानर्चुरञ्जसा ॥ ००१ ॥

पाद्यमाचमनीयं च प्रतिग्राह्य नृपात्मजम् ।
प्रवेशयामासुरथो पुरंदरनिवेशनम् ॥ ००२ ॥

एवं संपूजितो जिष्णुरुवास भवने पितुः ।
उपशिक्षन्महास्त्राणि ससंहाराणि पाण्डवः ॥ ००३ ॥

शक्रस्य हस्ताद्दयितं वज्रमस्त्रं दुरुत्सहम् ।
अशनीश्च महानादा मेघबर्हिणलक्षणाः ॥ ००४ ॥

गृहीतास्त्रस्तु कौन्तेयो भ्रातॄन्सस्मार पाण्डवः ।
पुरंदरनियोगाच्च पञ्चाब्दमवसत्सुखी ॥ ००५ ॥

ततः शक्रोऽब्रवीत्पार्थं कृतास्त्रं काल आगते ।
नृत्तं गीतं च कौन्तेय चित्रसेनादवाप्नुहि ॥ ००६ ॥

वादित्रं देवविहितं नृलोके यन्न विद्यते ।
तदर्जयस्व कौन्तेय श्रेयो वै ते भविष्यति ॥ ००७ ॥

सखायं प्रददौ चास्य चित्रसेनं पुरंदरः ।
स तेन सह सङ्गम्य रेमे पार्थो निरामयः ॥ ००८ ॥

कदाचिदटमानस्तु महर्षिरुत लोमशः ।
जगाम शक्रभवनं पुरंदरदिदृक्षया ॥ ००९ ॥

स समेत्य नमस्कृत्य देवराजं महामुनिः ।
ददर्शार्धासनगतं पाण्डवं वासवस्य ह ॥ ०१० ॥

ततः शक्राभ्यनुज्ञात आसने विष्टरोत्तरे ।
निषसाद द्विजश्रेष्ठः पूज्यमानो महर्षिभिः ॥ ०११ ॥

तस्य दृष्ट्वाभवद्बुद्धिः पार्थमिन्द्रासने स्थितम् ।
कथं नु क्षत्रियः पार्थः शक्रासनमवाप्तवान् ॥ ०१२ ॥

किं त्वस्य सुकृतं कर्म लोका वा के विनिर्जिताः ।
य एवमुपसंप्राप्तः स्थानं देवनमस्कृतम् ॥ ०१३ ॥

तस्य विज्ञाय सङ्कल्पं शक्रो वृत्रनिषूदनः ।

लोमशं प्रहसन्वाक्यमिदमाह शचीपतिः ॥ ०१४ ॥

ब्रह्मर्षे श्रूयतां यत्ते मनसैतद्विवक्षितम् ।
नायं केवलमर्त्यो वै क्षत्रियत्वमुपागतः ॥ ०१५ ॥

महर्षे मम पुत्रोऽयं कुन्त्यां जातो महाभुजः ।
अस्त्रहेतोरिह प्राप्तः कस्माच्चित्कारणान्तरात् ॥ ०१६ ॥

अहो नैनं भवान्वेत्ति पुराणमृषिसत्तमम् ।
शृणु मे वदतो ब्रह्मन्योऽयं यच्चास्य कारणम् ॥ ०१७ ॥

नरनारायणौ यौ तौ पुराणावृषिसत्तमौ ।
ताविमावभिजानीहि हृषीकेशधनञ्जयौ ॥ ०१८ ॥

यन्न शक्यं सुरैर्द्रष्टुमृषिभिर्वा महात्मभिः ।
तदाश्रमपदं पुण्यं बदरी नाम विश्रुतम् ॥ ०१९ ॥

स निवासोऽभवद्विप्र विष्णोर्जिष्णोस्तथैव च ।
यतः प्रववृते गङ्गा सिद्धचारणसेविता ॥ ०२० ॥

तौ मन्नियोगाद्ब्रह्मर्षे क्षितौ जातौ महाद्युती ।
भूमेर्भारावतरणं महावीर्यौ करिष्यतः ॥ ०२१ ॥

उद्वृत्ता ह्यसुराः केचिन्निवातकवचा इति ।
विप्रियेषु स्थितास्माकं वरदानेन मोहिताः ॥ ०२२ ॥

तर्कयन्ते सुरान्हन्तुं बलदर्पसमन्विताः ।
देवान्न गणयन्ते च तथा दत्तवरा हि ते ॥ ०२३ ॥

पातालवासिनो रौद्रा दनोः पुत्रा महाबलाः ।
सर्वे देवनिकाया हि नालं योधयितुं स्म तान् ॥ ०२४ ॥

योऽसौ भूमिगतः श्रीमान्विष्णुर्मधुनिषूदनः ।
कपिलो नाम देवोऽसौ भगवानजितो हरिः ॥ ०२५ ॥

येन पूर्वं महात्मानः खनमाना रसातलम् ।
दर्शनादेव निहताः सगरस्यात्मजा विभो ॥ ०२६ ॥

तेन कार्यं महत्कार्यमस्माकं द्विजसत्तम ।
पार्थेन च महायुद्धे समेताभ्यामसंशयम् ॥ ०२७ ॥

अयं तेषां समस्तानां शक्तः प्रतिसमासने ।
तान्निहत्य रणे शूरः पुनर्यास्यति मानुषान् ॥ ०२८ ॥

भवांश्चास्मन्नियोगेन यातु तावन्महीतलम् ।
काम्यके द्रक्ष्यसे वीरं निवसन्तं युधिष्ठिरम् ॥ ०२९ ॥

स वाच्यो मम संदेशाद्धर्मात्मा सत्यसङ्गरः ।
नोत्कण्ठा फल्गुने कार्या कृतास्त्रः शीघ्रमेष्यति ॥ ०३० ॥

नाशुद्धबाहुवीर्येण नाकृतास्त्रेण वा रणे ।
भीष्मद्रोणादयो युद्धे शक्याः प्रतिसमासितुम् ॥ ०३१ ॥

गृहीतास्त्रो गुडाकेशो महाबाहुर्महामनाः ।
नृत्तवादित्रगीतानां दिव्यानां पारमेयिवान् ॥ ०३२ ॥

भवानपि विविक्तानि तीर्थानि मनुजेश्वर ।
भ्रातृभिः सहितः सर्वैर्द्रष्टुमर्हत्यरिंदम ॥ ०३३ ॥

तीर्थेष्वाप्लुत्य पुण्येषु विपाप्मा विगतज्वरः ।
राज्यं भोक्ष्यसि राजेन्द्र सुखी विगतकल्मषः ॥ ०३४ ॥

भवांश्चैनं द्विजश्रेष्ठ पर्यटन्तं महीतले ।
त्रातुमर्हति विप्राग्र्य तपोबलसमन्वितः ॥ ०३५ ॥

गिरिदुर्गेषु हि सदा देशेषु विषमेषु च ।
वसन्ति राक्षसा रौद्रास्तेभ्यो रक्षेत्सदा भवान् ॥ ०३६ ॥

स तथेति प्रतिज्ञाय लोमशः सुमहातपाः ।
काम्यकं वनमुद्दिश्य समुपायान्महीतलम् ॥ ०३७ ॥

ददर्श तत्र कौन्तेयं धर्मराजमरिंदमम् ।
तापसैर्भ्रातृभिश्चैव सर्वतः परिवारितम् ॥ ०३८ ॥

---

# अध्याय ०४६

जनमेजय उवाच ॥

अत्यद्भुतमिदं कर्म पार्थस्यामिततेजसः ।
धृतराष्ट्रो महातेजाः श्रुत्वा विप्र किमब्रवीत् ॥ ००१ ॥

वैशंपायन उवाच ॥

शक्रलोकगतं पार्थं श्रुत्वा राजाम्बिकासुतः ।
द्वैपायनादृषिश्रेष्ठात्सञ्जयं वाक्यमब्रवीत् ॥ ००२ ॥

श्रुतं मे सूत कार्त्स्न्येन कर्म पार्थस्य धीमतः ।
कच्चित्तवापि विदितं यथातथ्येन सारथे ॥ ००३ ॥

प्रमत्तो ग्राम्यधर्मेषु मन्दात्मा पापनिश्चयः ।

मम पुत्रः सुदुर्बुद्धिः पृथिवीं घातयिष्यति ॥ ००४ ॥

यस्य नित्यमृता वाचः स्वैरेष्वपि महात्मनः ।
त्रैलोक्यमपि तस्य स्याद्योद्धा यस्य धनञ्जयः ॥ ००५ ॥

अस्यतः कर्णिनाराचांस्तीक्ष्णाग्रांश्च शिलाशितान् ।
कोऽर्जुनस्याग्रतस्तिष्ठेदपि मृत्युर्जरातिगः ॥ ००६ ॥

मम पुत्रा दुरात्मानः सर्वे मृत्युवशं गताः ।
येषां युद्धं दुराधर्षैः पाण्डवैः प्रत्युपस्थितम् ॥ ००७ ॥

तस्यैव च न पश्यामि युधि गाण्डीवधन्वनः ।
अनिशं चिन्तयानोऽपि य एनमुदियाद्रथी ॥ ००८ ॥

द्रोणकर्णौ प्रतीयातां यदि भीष्मोऽपि वा रणे ।
महान्स्यात्संशयो लोके न तु पश्यामि नो जयम् ॥ ००९ ॥

घृणी कर्णः प्रमादी च आचार्यः स्थविरो गुरुः ।
अमर्षी बलवान्पार्थः संरम्भी दृढविक्रमः ॥ ०१० ॥

भवेत्सुतुमुलं युद्धं सर्वशोऽप्यपराजितम् ।
सर्वे ह्यस्त्रविदः शूराः सर्वे प्राप्ता महद्यशः ॥ ०११ ॥

अपि सर्वेश्वरत्वं हि न वाञ्छेरन्पराजिताः ।
वधे नूनं भवेच्छान्तिस्तेषां वा फल्गुनस्य वा ॥ ०१२ ॥

न तु हन्तार्जुनस्यास्ति जेता वास्य न विद्यते ।
मन्युस्तस्य कथं शाम्येन्मन्दान्प्रति समुत्थितः ॥ ०१३ ॥

त्रिदशेशसमो वीरः खाण्डवेऽग्निमतर्पयत् ।
जिगाय पार्थिवान्सर्वान्राजसूये महाक्रतौ ॥ ०१४ ॥

शेषं कुर्याद्गिरेर्वज्रं निपतन्मूर्ध्नि सञ्जय ।
न तु कुर्युः शराः शेषमस्तास्तात किरीटिना ॥ ०१५ ॥

यथा हि किरणा भानोस्तपन्तीह चराचरम् ।
तथा पार्थभुजोत्सृष्टाः शरास्तप्स्यन्ति मे सुतान् ॥ ०१६ ॥

अपि वा रथघोषेण भयार्ता सव्यसाचिनः ।
प्रतिभाति विदीर्णेव सर्वतो भारती चमूः ॥ ०१७ ॥

यदुद्वपन्प्रवपंश्चैव बाणा ;न्स्थाताततायी समरे किरीटी ।
सृष्टोऽन्तकः सर्वहरो विधात्रा ; भवेद्यथा तद्वदपारणीयः ॥ ०१८ ॥

सञ्जय उवाच ॥

यदेतत्कथितं राजंस्त्वया दुर्योधनं प्रति ।
सर्वमेतद्यथात्थ त्वं नैतन्मिथ्या महीपते ॥ ०१९ ॥

मन्युना हि समाविष्टाः पाण्डवास्तेऽमितौजसः ।
दृष्ट्वा कृष्णां सभां नीतां धर्मपत्नीं यशस्विनीम् ॥ ०२० ॥

दुःशासनस्य ता वाचः श्रुत्वा ते दारुणोदयाः ।
कर्णस्य च महाराज न स्वप्स्यन्तीति मे मतिः ॥ ०२१ ॥

श्रुतं हि ते महाराज यथा पार्थेन संयुगे ।
एकादशतनुः स्थाणुर्धनुषा परितोषितः ॥ ०२२ ॥

कैरातं वेषमास्थाय योधयामास फल्गुनम् ।
जिज्ञासुः सर्वदेवेशः कपर्दी भगवान्स्वयम् ॥ ०२३ ॥

तत्रैनं लोकपालास्ते दर्शयामासुरर्जुनम् ।

अस्त्रहेतोः पराक्रान्तं तपसा कौरवर्षभम् ॥ ०२४ ॥

नैतदुत्सहतेऽन्यो हि लब्धुमन्यत्र फल्गुनात् ।
साक्षाद्दर्शनमेतेषामीश्वराणां नरो भुवि ॥ ०२५ ॥

महेश्वरेण यो राजन्न जीर्णो ग्रस्तमूर्तिमान् ।
कस्तमुत्सहते वीरं युद्धे जरयितुं पुमान् ॥ ०२६ ॥

आसादितमिदं घोरं तुमुलं लोमहर्षणम् ।
द्रौपदीं परिकर्षद्भिः कोपयद्भिश्च पाण्डवान् ॥ ०२७ ॥

यत्र विस्फुरमाणोष्ठो भीमः प्राह वचो महत् ।
दृष्ट्वा दुर्योधनेनोरू द्रौपद्या दर्शितावुभौ ॥ ०२८ ॥

ऊरू भेत्स्यामि ते पाप गदया वज्रकल्पया ।
त्रयोदशानां वर्षाणामन्ते दुर्द्यूतदेविनः ॥ ०२९ ॥

सर्वे प्रहरतां श्रेष्ठाः सर्वे चामिततेजसः ।
सर्वे सर्वास्त्रविद्वांसो देवैरपि सुदुर्जयाः ॥ ०३० ॥

मन्ये मन्युसमुद्धूताः पुत्राणां तव संयुगे ।
अन्तं पार्थाः करिष्यन्ति वीर्यामर्षसमन्विताः ॥ ०३१ ॥

धृतराष्ट्र उवाच ॥

किं कृतं सूत कर्णेन वदता परुषं वचः ।
पर्याप्तं वैरमेतावद्यत्कृष्णा सा सभां गता ॥ ०३२ ॥

अपीदानीं मम सुतास्तिष्ठेरन्मन्दचेतसः ।
येषां भ्राता गुरुर्ज्येष्ठो विनये नावतिष्ठते ॥ ०३३ ॥

ममापि वचनं सूत न शुश्रूषति मन्दभाक् ।
दृष्ट्वा मां चक्षुषा हीनं निर्विचेष्टमचेतनम्  ॥ ०३४  ॥

ये चास्य सचिवा मन्दाः कर्णसौबलकादयः ।
तेऽप्यस्य भूयसो दोषान्वर्धयन्ति विचेतसः  ॥ ०३५  ॥

स्वैरमुक्ता अपि शराः पार्थेनामिततेजसा ।
निर्दहेयुर्मम सुतान्किं पुनर्मन्युनेरिताः  ॥ ०३६  ॥

पार्थबाहुबलोत्सृष्टा महाचापविनिःसृताः ।
दिव्यास्त्रमन्त्रमुदिताः सादयेयुः सुरानपि  ॥ ०३७  ॥

यस्य मन्त्री च गोप्ता च सुहृच्चैव जनार्दनः ।
हरिस्त्रैलोक्यनाथः स किं नु तस्य न निर्जितम्  ॥ ०३८  ॥

इदं च सुमहच्चित्रमर्जुनस्येह सञ्जय ।
महादेवेन बाहुभ्यां यत्समेत इति श्रुतिः  ॥ ०३९  ॥

प्रत्यक्षं सर्वलोकस्य खाण्डवे यत्कृतं पुरा ।
फल्गुनेन सहायार्थे वह्नेर्दामोदरेण च  ॥ ०४०  ॥

सर्वथा नास्ति मे पुत्रः सामात्यः सहबान्धवः ।
क्रुद्धे पार्थे च भीमे च वासुदेवे च सात्वते  ॥ ०४१  ॥

---

# अध्याय ०४७

जनमेजय उवाच  ॥

यदिदं शोचितं राज्ञा धृतराष्ट्रेण वै मुने ।
प्रव्राज्य पाण्डवान्वीरान्सर्वमेतन्निरर्थकम्  ॥ ००१  ॥

कथं हि राजा पुत्रं स्वमुपेक्षेताल्पचेतसम् ।
दुर्योधनं पाण्डुपुत्रान्कोपयानं महारथान्  ॥ ००२  ॥

किमासीत्पाण्डुपुत्राणां वने भोजनमुच्यताम् ।
वानेयमथ वा कृष्टमेतदाख्यातु मे भवान्  ॥ ००३  ॥

वैशंपायन उवाच  ॥

वानेयं च मृगांश्चैव शुद्धैर्बाणैर्निपातितान् ।
ब्राह्मणानां निवेद्याग्रमभुञ्जन्पुरुषर्षभाः  ॥ ००४  ॥

तांस्तु शूरान्महेष्वासांस्तदा निवसतो वने ।
अन्वयुर्ब्राह्मणा राजन्साग्नयोऽनग्नयस्तथा  ॥ ००५  ॥

ब्राह्मणानां सहस्राणि स्नातकानां महात्मनाम् ।
दश मोक्षविदां तद्वद्यान्बिभर्ति युधिष्ठिरः  ॥ ००६  ॥

रुरून्कृष्णमृगांश्चैव मेध्यांश्चान्यान्वनेचरान् ।
बाणैरुन्मथ्य विधिवद्ब्राह्मणेभ्यो न्यवेदयत्  ॥ ००७  ॥

न तत्र कश्चिद्दुर्वर्णो व्याधितो वाप्यदृश्यत ।
कृशो वा दुर्बलो वापि दीनो भीतोऽपि वा नरः  ॥ ००८  ॥

पुत्रानिव प्रियाञ्ज्ञातीन्भ्रातॄनिव सहोदरान् ।
पुपोष कौरवश्रेष्ठो धर्मराजो युधिष्ठिरः  ॥ ००९  ॥

पतींश्च द्रौपदी सर्वान्द्विजांश्चैव यशस्विनी ।

मातेव भोजयित्वाग्रे शिष्टमाहारयत्तदा ॥ ०१० ॥

प्राचीं राजा दक्षिणां भीमसेनो ; यमौ प्रतीचीमथ वाप्युदीचीम् ।
धनुर्धरा मांसहेतोर्मृगाणां ; क्षयं चक्रुर्नित्यमेवोपगम्य ॥ ०११ ॥

तथा तेषां वसतां काम्यके वै ; विहीनानामर्जुनेनोत्सुकानाम् ।
पञ्चैव वर्षाणि तदा व्यतीयु ;रधीयतां जपतां जुह्वतां च ॥ ०१२ ॥

---

# अध्याय ०४८

वैशंपायन उवाच ॥

सुदीर्घमुष्णं निःश्वस्य धृतराष्ट्रोऽम्बिकासुतः ।
अब्रवीत्सञ्जयं सूतमामन्त्र्य भरतर्षभ ॥ ००१ ॥

देवपुत्रौ महाभागौ देवराजसमद्युती ।
नकुलः सहदेवश्च पाण्डवौ युद्धदुर्मदौ ॥ ००२ ॥

दृढायुधौ दूरपातौ युद्धे च कृतनिश्चयौ ।
शीघ्रहस्तौ दृढक्रोधौ नित्ययुक्तौ तरस्विनौ ॥ ००३ ॥

भीमार्जुनौ पुरोधाय यदा तौ रणमूर्धनि ।
स्थास्येते सिंहविक्रान्तावश्विनाविव दुःसहौ ॥ ००४ ॥

न शेषमिह पश्यामि तदा सैन्यस्य सञ्जय ॥ ००४ ॥

तौ ह्यप्रतिरथौ युद्धे देवपुत्रौ महारथौ ।

द्रौपद्यास्तं परिक्लेशं न क्षंस्येते त्वमर्षिणौ ॥ ००५ ॥

वृष्णयो वा महेष्वासा पाञ्चाला वा महौजसः ।
युधि सत्याभिसंधेन वासुदेवेन रक्षिताः ॥ ००६ ॥

प्रधक्ष्यन्ति रणे पार्थाः पुत्राणां मम वाहिनीम् ॥ ००६ ॥

रामकृष्णप्रणीतानां वृष्णीनां सूतनन्दन ।
न शक्यः सहितुं वेगः पर्वतैरपि संयुगे ॥ ००७ ॥

तेषां मध्ये महेष्वासो भीमो भीमपराक्रमः ।
शैक्यया वीरघातिन्या गदया विचरिष्यति ॥ ००८ ॥

तथा गाण्डीवनिर्घोषं विस्फूर्जितमिवाशनेः ।
गदावेगं च भीमस्य नालं सोढुं नराधिपाः ॥ ००९ ॥

ततोऽहं सुहृदां वाचो दुर्योधनवशानुगः ।
स्मरणीयाः स्मरिष्यामि मया या न कृताः पुरा ॥ ०१० ॥

सञ्जय उवाच ॥

व्यतिक्रमोऽयं सुमहांस्त्वया राजन्नुपेक्षितः ।
समर्थेनापि यन्मोहात्पुत्रस्ते न निवारितः ॥ ०११ ॥

श्रुत्वा हि निर्जितान्द्यूते पाण्डवान्मधुसूदनः ।
त्वरितः काम्यके पार्थान्समभावयदच्युतः ॥ ०१२ ॥

द्रुपदस्य तथा पुत्रा धृष्टद्युम्नपुरोगमाः ।
विराटो धृष्टकेतुश्च केकयाश्च महारथाः ॥ ०१३ ॥

तैश्च यत्कथितं तत्र दृष्ट्वा पार्थान्पराजितान् ।

चारेण विदितं सर्वं तन्मया वेदितं च ते ॥ ०१४ ॥

समागम्य वृतस्तत्र पाण्डवैर्मधुसूदनः ।
सारथ्ये फल्गुनस्याजौ तथेत्याह च तान्हरिः ॥ ०१५ ॥

अमर्षितो हि कृष्णोऽपि दृष्ट्वा पार्थांस्तथागतान् ।
कृष्णाजिनोत्तरासङ्गानब्रवीच्च युधिष्ठिरम् ॥ ०१६ ॥

या सा समृद्धिः पार्थानामिन्द्रप्रस्थे बभूव ह ।
राजसूये मया दृष्टा नृपैरन्यैः सुदुर्लभा ॥ ०१७ ॥

यत्र सर्वान्महीपालाञ्शस्त्रतेजोभयार्दितान् ।
सवङ्गाङ्गान्सपौण्ड्रोड्रान्सचोलद्रविडान्धकान् ॥ ०१८ ॥

सागरानूपगांश्चैव ये च पत्तनवासिनः ।
सिंहलान्बर्बरान्म्लेच्छान्ये च जाङ्गलवासिनः ॥ ०१९ ॥

पश्चिमानि च राज्यानि शतशः सागरान्तिकान् ।
पह्लवान्दरदान्सर्वान्किरातान्यवनाञ्शकान् ॥ ०२० ॥

हारहूणांश्च चीनांश्च तुखारान्सैन्धवांस्तथा ।
जागुडान्रमठान्मुण्डान्स्त्रीराज्यानथ तङ्गणान् ॥ ०२१ ॥

एते चान्ये च बहवो ये च ते भरतर्षभ ।
आगतानहमद्राक्षं यज्ञे ते परिवेषकान् ॥ ०२२ ॥

सा ते समृद्धिर्यैरात्ता चपला प्रतिसारिणी ।
आदाय जीवितं तेषामाहरिष्यामि तामहम् ॥ ०२३ ॥

रामेण सह कौरव्य भीमार्जुनयमैस्तथा ।
अक्रूरगदसाम्बैश्च प्रद्युम्नेनाहुकेन च ॥ ०२४ ॥

धृष्टद्युम्नेन वीरेण शिशुपालात्मजेन च ॥ ०२४ ॥

दुर्योधनं रणे हत्वा सद्यः कर्णं च भारत ।
दुःशासनं सौबलेयं यश्चान्यः प्रतियोत्स्यते ॥ ०२५ ॥

ततस्त्वं हास्तिनपुरे भ्रातृभिः सहितो वसन् ।
धार्तराष्ट्रीं श्रियं प्राप्य प्रशाधि पृथिवीमिमाम् ॥ ०२६ ॥

अथैनमब्रवीद्राजा तस्मिन्वीरसमागमे ।
शृण्वत्सु तेषु सर्वेषु धृष्टद्युम्नमुखेषु च ॥ ०२७ ॥

प्रतिगृह्णामि ते वाचं सत्यामेतां जनार्दन ।
अमित्रान्मे महाबाहो सानुबन्धान्हनिष्यसि ॥ ०२८ ॥

वर्षात्त्रयोदशादूर्ध्वं सत्यं मां कुरु केशव ।
प्रतिज्ञातो वने वासो राजमध्ये मया ह्ययम् ॥ ०२९ ॥

तद्धर्मराजवचनं प्रतिश्रुत्य सभासदः ।
धृष्टद्युम्नपुरोगास्ते शमयामासुरञ्जसा ॥ ०३० ॥

केशवं मधुरैर्वाक्यैः कालयुक्तैरमर्षितम् ॥ ०३० ॥

पाञ्चालीं चाहुरक्लिष्टां वासुदेवस्य शृण्वतः ।
दुर्योधनस्तव क्रोधाद्देवि त्यक्ष्यति जीवितम् ॥ ०३१ ॥

प्रतिजानीम ते सत्यं मा शुचो वरवर्णिनि ॥ ०३१ ॥

ये स्म ते कुपितां कृष्णे दृष्ट्वा त्वां प्राहसंस्तदा ।
मांसानि तेषां खादन्तो हसिष्यन्ति मृगद्विजाः ॥ ०३२ ॥

पास्यन्ति रुधिरं तेषां गृध्रा गोमायवस्तथा ।
उत्तमाङ्गानि कर्षन्तो यैस्त्वं कृष्टा सभातले ॥ ०३३ ॥

तेषां द्रक्ष्यसि पाञ्चालि गात्राणि पृथिवीतले ।
क्रव्यादैः कृष्यमाणानि भक्ष्यमाणानि चासकृत् ॥ ०३४ ॥

परिक्लिष्टासि यैस्तत्र यैश्चापि समुपेक्षिता ।
तेषामुत्कृत्तशिरसां भूमिः पास्यति शोणितम् ॥ ०३५ ॥

एवं बहुविधा वाचस्तदोचुः पुरुषर्षभाः ।
सर्वे तेजस्विनः शूराः सर्वे चाहतलक्षणाः ॥ ०३६ ॥

ते धर्मराजेन वृता वर्षादूर्ध्वं त्रयोदशात् ।
पुरस्कृत्योपयास्यन्ति वासुदेवं महारथाः ॥ ०३७ ॥

रामश्च कृष्णश्च धनञ्जयश्च ; प्रद्युम्नसाम्बौ युयुधानभीमौ ।
माद्रीसुतौ केकयराजपुत्राः ; पाञ्चालपुत्राः सह धर्मराज्ञा ॥ ०३८ ॥

एतान्सर्वा.ण्ल्लोकवीरानजेया ;न्महात्मनः सानुबन्धान्ससैन्यान् ।
को जीवितार्थी समरे प्रत्युदीया ;त्क्रुद्धान्सिंहान्केसरिणो यथैव ॥ ०३९ ॥

धृतराष्ट्र उवाच ॥

यन्माब्रवीद्विदुरो द्यूतकाले ; त्वं पाण्डवाञ्जेष्यसि चेन्नरेन्द्र ।
ध्रुवं कुरूणामयमन्तकालो ; महाभयो भविता शोणितौघः ॥ ०४० ॥

मन्ये तथा तद्भवितेति सूत ; यथा क्षत्ता प्राह वचः पुरा माम् ।
असंशयं भविता युद्धमेत ;द्गते काले पाण्डवानां यथोक्तम् ॥ ०४१ ॥

# अध्याय ०४९

जनमेजय उवाच ॥

अस्त्रहेतोर्गते पार्थे शक्रलोकं महात्मनि ।
युधिष्ठिरप्रभृतयः किमकुर्वन्त पाण्डवाः ॥ ००१ ॥

वैशंपायन उवाच ॥

अस्त्रहेतोर्गते पार्थे शक्रलोकं महात्मनि ।
न्यवसन्कृष्णया सार्धं काम्यके पुरुषर्षभाः ॥ ००२ ॥

ततः कदाचिदेकान्ते विविक्त इव शाद्वले ।
दुःखार्ता भरतश्रेष्ठा निषेदुः सह कृष्णया ॥ ००३ ॥

धनञ्जयं शोचमानाः साश्रुकण्ठाः सुदुःखिताः ॥ ००३ ॥

तद्वियोगाद्धि तान्सर्वाञ्शोकः समभिपुप्लुवे ।
धनञ्जयवियोगाच्च राज्यनाशाच्च दुःखिताः ॥ ००४ ॥

अथ भीमो महाबाहुर्युधिष्ठिरमभाषत ।
निदेशात्ते महाराज गतोऽसौ पुरुषर्षभः ॥ ००५ ॥

अर्जुनः पाण्डुपुत्राणां यस्मिन्प्राणाः प्रतिष्ठिताः ॥ ००५ ॥

यस्मिन्विनष्टे पाञ्चालाः सह पुत्रैस्तथा वयम् ।
सात्यकिर्वासुदेवश्च विनश्येयुरसंशयम् ॥ ००६ ॥

योऽसौ गच्छति तेजस्वी बहून्क्लेशानचिन्तयन् ।
भवन्नियोगाद्बीभत्सुस्ततो दुःखतरं नु किम् ॥ ००७ ॥

यस्य बाहू समाश्रित्य वयं सर्वे महात्मनः ।
मन्यामहे जितानाजौ परान्प्राप्तां च मेदिनीम् ॥ ००८ ॥

यस्य प्रभावान्न मया सभामध्ये धनुष्मतः ।
नीता लोकममुं सर्वे धार्तराष्ट्राः ससौबलाः ॥ ००९ ॥

ते वयं बाहुबलिनः क्रोधमुत्थितमात्मनः ।
सहामहे भवन्मूलं वासुदेवेन पालिताः ॥ ०१० ॥

वयं हि सह कृष्णेन हत्वा कर्णमुखान्परान् ।
स्वबाहुविजितां कृत्स्नां प्रशासेम वसुंधराम् ॥ ०११ ॥

भवतो द्यूतदोषेण सर्वे वयमुपप्लुताः ।
अहीनपौरुषा राजन्बलिभिर्बलवत्तमाः ॥ ०१२ ॥

क्षात्रं धर्मं महाराज समवेक्षितुमर्हसि ।
न हि धर्मो महाराज क्षत्रियस्य वनाश्रयः ॥ ०१३ ॥

राज्यमेव परं धर्मं क्षत्रियस्य विदुर्बुधाः ॥ ०१३ ॥

स क्षत्रधर्मविद्राजन्मा धर्म्यान्नीनशः पथः ।
प्राग्द्वादश समा राजन्धार्तराष्ट्रान्निहन्महि ॥ ०१४ ॥

निवर्त्य च वनात्पार्थमानाय्य च जनार्दनम् ।
व्यूढानीकान्महाराज जवेनैव महाहवे ॥ ०१५ ॥

धार्तराष्ट्रानमुं लोकं गमयामि विशां पते ॥ ०१५ ॥

सर्वानहं हनिष्यामि धार्तराष्ट्रान्ससौबलान् ।
दुर्योधनं च कर्णं च यो वान्यः प्रतियोत्स्यते ॥ ०१६ ॥

मया प्रशमिते पश्चात्त्वमेष्यसि वनात्पुनः ।
एवं कृते न ते दोषो भविष्यति विशां पते ॥ ०१७ ॥

यज्ञैश्च विविधैस्तात कृतं पापमरिंदम ।
अवधूय महाराज गच्छेम स्वर्गमुत्तमम् ॥ ०१८ ॥

एवमेतद्भवेद्राजन्यदि राजा न बालिशः ।
अस्माकं दीर्घसूत्रः स्याद्भवान्धर्मपरायणः ॥ ०१९ ॥

निकृत्या निकृतिप्रज्ञा हन्तव्या इति निश्चयः ।
न हि नैकृतिकं हत्वा निकृत्या पापमुच्यते ॥ ०२० ॥

तथा भारत धर्मेषु धर्मज्ञैरिह दृश्यते ।
अहोरात्रं महाराज तुल्यं संवत्सरेण हि ॥ ०२१ ॥

तथैव वेदवचनं श्रूयते नित्यदा विभो ।
संवत्सरो महाराज पूर्णो भवति कृच्छ्रतः ॥ ०२२ ॥

यदि वेदाः प्रमाणं ते दिवसादूर्ध्वमच्युत ।
त्रयोदश समाः कालो ज्ञायतां परिनिष्ठितः ॥ ०२३ ॥

कालो दुर्योधनं हन्तुं सानुबन्धमरिंदम ।
एकाग्रां पृथिवीं सर्वां पुरा राजन्करोति सः ॥ ०२४ ॥

एवं ब्रुवाणं भीमं तु धर्मराजो युधिष्ठिरः ।
उवाच सान्त्वयन्राजा मूर्ध्न्युपाघ्राय पाण्डवम् ॥ ०२५ ॥

असंशयं महाबाहो हनिष्यसि सुयोधनम् ।
वर्षात्त्रयोदशादूर्ध्वं सह गाण्डीवधन्वना ॥ ०२६ ॥

यच्च मा भाषसे पार्थ प्राप्तः काल इति प्रभो ।

अनृतं नोत्सहे वक्तुं न ह्येतन्मयि विद्यते ॥ ०२७ ॥

अन्तरेणापि कौन्तेय निकृतिं पापनिश्चयम् ।
हन्ता त्वमसि दुर्धर्ष सानुबन्धं सुयोधनम् ॥ ०२८ ॥

एवं ब्रुवति भीमं तु धर्मराजे युधिष्ठिरे ।
आजगाम महाभागो बृहदश्वो महानृषिः ॥ ०२९ ॥

तमभिप्रेक्ष्य धर्मात्मा संप्राप्तं धर्मचारिणम् ।
शास्त्रवन्मधुपर्केण पूजयामास धर्मराट् ॥ ०३० ॥

आश्वस्तं चैनमासीनमुपासीनो युधिष्ठिरः ।
अभिप्रेक्ष्य महाबाहुः कृपणं बह्वभाषत ॥ ०३१ ॥

अक्षद्यूतेन भगवन्धनं राज्यं च मे हृतम् ।
आहूय निकृतिप्रज्ञैः कितवैरक्षकोविदैः ॥ ०३२ ॥

अनक्षज्ञस्य हि सतो निकृत्या पापनिश्चयैः ।
भार्या च मे सभां नीता प्राणेभ्योऽपि गरीयसी ॥ ०३३ ॥

अस्ति राजा मया कश्चिदल्पभाग्यतरो भुवि ।
भवता दृष्टपूर्वो वा श्रुतपूर्वोऽपि वा भवेत् ॥ ०३४ ॥

न मत्तो दुःखिततरः पुमानस्तीति मे मतिः ॥ ०३४ ॥

बृहदश्व उवाच ॥

यद्ब्रवीषि महाराज न मत्तो विद्यते क्वचित् ।
अल्पभाग्यतरः कश्चित्पुमानस्तीति पाण्डव ॥ ०३५ ॥

अत्र ते कथयिष्यामि यदि शुश्रूषसेऽनघ ।

यस्त्वत्तो दुःखिततरो राजासीत्पृथिवीपते ॥ ०३६ ॥

वैशंपायन उवाच ॥

अथैनमब्रवीद्राजा ब्रवीतु भगवानिति ।
इमामवस्थां संप्राप्तं श्रोतुमिच्छामि पार्थिवम् ॥ ०३७ ॥

बृहदश्व उवाच ॥

शृणु राजन्नवहितः सह भ्रातृभिरच्युत ।
यस्त्वत्तो दुःखिततरो राजासीत्पृथिवीपते ॥ ०३८ ॥

निषधेषु महीपालो वीरसेन इति स्म ह ।
तस्य पुत्रोऽभवन्नाम्ना नलो धर्मार्थदर्शिवान् ॥ ०३९ ॥

स निकृत्या जितो राजा पुष्करेणेति नः श्रुतम् ।
वनवासमदुःखार्हो भार्यया न्यवसत्सह ॥ ०४० ॥

न तस्याश्वो न च रथो न भ्राता न च बान्धवाः ।
वने निवसतो राजञ्शिष्यन्ते स्म कदाचन ॥ ०४१ ॥

भवान्हि संवृतो वीरैर्भ्रातृभिर्देवसंमितैः ।
ब्रह्मकल्पैर्द्विजाग्र्यैश्च तस्मान्नार्हसि शोचितुम् ॥ ०४२ ॥

युधिष्ठिर उवाच ॥

विस्तरेणाहमिच्छामि नलस्य सुमहात्मनः ।
चरितं वदतां श्रेष्ठ तन्ममाख्यातुमर्हसि ॥ ०४३ ॥

# नलोपाख्यानम्

## अध्याय ०५०

बृहदश्व उवाच ॥

आसीद्राजा नलो नाम वीरसेनसुतो बली ।
उपपन्नो गुणैरिष्टै रूपवानश्वकोविदः ॥ ००१ ॥

अतिष्ठन्मनुजेन्द्राणां मूर्ध्नि देवपतिर्यथा ।
उपर्युपरि सर्वेषामादित्य इव तेजसा ॥ ००२ ॥

ब्रह्मण्यो वेदविच्छूरो निषधेषु महीपतिः ।
अक्षप्रियः सत्यवादी महानक्षौहिणीपतिः ॥ ००३ ॥

ईप्सितो वरनारीणामुदारः संयतेन्द्रियः ।
रक्षिता धन्विनां श्रेष्ठः साक्षादिव मनुः स्वयम् ॥ ००४ ॥

तथैवासीद्विदर्भेषु भीमो भीमपराक्रमः ।
शूरः सर्वगुणैर्युक्तः प्रजाकामः स चाप्रजः ॥ ००५ ॥

स प्रजार्थे परं यत्नमकरोत्सुसमाहितः ।
तमभ्यगच्छद्ब्रह्मर्षिर्दमनो नाम भारत ॥ ००६ ॥

तं स भीमः प्रजाकामस्तोषयामास धर्मवित् ।
महिष्या सह राजेन्द्र सत्कारेण सुवर्चसम् ॥ ००७ ॥

तस्मै प्रसन्नो दमनः सभार्याय वरं ददौ ।
कन्यारत्नं कुमारांश्च त्रीनुदारान्महायशाः ॥ ००८ ॥

दमयन्तीं दमं दान्तं दमनं च सुवर्चसम् ।
उपपन्नान्गुणैः सर्वैर्भीमान्भीमपराक्रमान् ॥ ००९ ॥

दमयन्ती तु रूपेण तेजसा यशसा श्रिया ।
सौभाग्येन च लोकेषु यशः प्राप सुमध्यमा ॥ ०१० ॥

अथ तां वयसि प्राप्ते दासीनां समलङ्कृतम् ।
शतं सखीनां च तथा पर्युपास्ते शचीमिव ॥ ०११ ॥

तत्र स्म भ्राजते भैमी सर्वाभरणभूषिता ।
सखीमध्येऽनवद्याङ्गी विद्युत्सौदामिनी यथा ॥ ०१२ ॥

अतीव रूपसंपन्ना श्रीरिवायतलोचना ॥ ०१२ ॥

न देवेषु न यक्षेषु तादृग्रूपवती क्वचित् ।
मानुषेष्वपि चान्येषु दृष्टपूर्वा न च श्रुता ॥ ०१३ ॥

चित्तप्रमाथिनी बाला देवानामपि सुन्दरी ॥ ०१३ ॥

नलश्च नरशार्दूलो रूपेणाप्रतिमो भुवि ।
कन्दर्प इव रूपेण मूर्तिमानभवत्स्वयम् ॥ ०१४ ॥

तस्याः समीपे तु नलं प्रशशंसुः कुतूहलात् ।
नैषधस्य समीपे तु दमयन्तीं पुनः पुनः ॥ ०१५ ॥

तयोरदृष्टकामोऽभूच्छृण्वतोः सततं गुणान् ।
अन्योन्यं प्रति कौन्तेय स व्यवर्धत हृच्छयः ॥ ०१६ ॥

अशक्नुवन्नलः कामं तदा धारयितुं हृदा ।
अन्तःपुरसमीपस्थे वन आस्ते रहोगतः ॥ ०१७ ॥

स ददर्श तदा हंसाञ्जातरूपपरिच्छदान् ।
वने विचरतां तेषामेकं जग्राह पक्षिणम् ॥ ०१८ ॥

ततोऽन्तरिक्षगो वाचं व्याजहार तदा नलम् ।
न हन्तव्योऽस्मि ते राजन्करिष्यामि हि ते प्रियम् ॥ ०१९ ॥

दमयन्तीसकाशे त्वां कथयिष्यामि नैषध ।
यथा त्वदन्यं पुरुषं न सा मंस्यति कर्हिचित् ॥ ०२० ॥

एवमुक्तस्ततो हंसमुत्ससर्ज महीपतिः ।
ते तु हंसाः समुत्पत्य विदर्भानगमंस्ततः ॥ ०२१ ॥

विदर्भनगरीं गत्वा दमयन्त्यास्तदान्तिके ।
निपेतुस्ते गरुत्मन्तः सा ददर्शाथ तान्खगान् ॥ ०२२ ॥

सा तानद्भुतरूपान्वै दृष्ट्वा सखिगणावृता ।
हृष्टा ग्रहीतुं खगमांस्त्वरमाणोपचक्रमे ॥ ०२३ ॥

अथ हंसा विससृपुः सर्वतः प्रमदावने ।
एकैकशस्ततः कन्यास्तान्हंसान्समुपाद्रवन् ॥ ०२४ ॥

दमयन्ती तु यं हंसं समुपाधावदन्तिके ।
स मानुषीं गिरं कृत्वा दमयन्तीमथाब्रवीत् ॥ ०२५ ॥

दमयन्ति नलो नाम निषधेषु महीपतिः ।
अश्विनोः सदृशो रूपे न समास्तस्य मानुषाः ॥ ०२६ ॥

तस्य वै यदि भार्या त्वं भवेथा वरवर्णिनि ।
सफलं ते भवेज्जन्म रूपं चेदं सुमध्यमे ॥ ०२७ ॥

वयं हि देवगन्धर्वमनुष्योरगराक्षसान् ।

दृष्टवन्तो न चास्माभिर्दृष्टपूर्वस्तथाविधः ॥ ०२८ ॥

त्वं चापि रत्नं नारीणां नरेषु च नलो वरः ।
विशिष्टाया विशिष्टेन सङ्गमो गुणवान्भवेत् ॥ ०२९ ॥

एवमुक्ता तु हंसेन दमयन्ती विशां पते ।
अब्रवीत्तत्र तं हंसं तमप्येवं नलं वद ॥ ०३० ॥

तथेत्युक्त्वाण्डजः कन्यां वैदर्भस्य विशां पते ।
पुनरागम्य निषधान्नले सर्वं न्यवेदयत् ॥ ०३१ ॥

---

# अध्याय ०५१

बृहदश्व उवाच ॥

दमयन्ती तु तच्छ्रुत्वा वचो हंसस्य भारत ।
तदा प्रभृति नस्वस्था नलं प्रति बभूव सा ॥ ००१ ॥

ततश्चिन्तापरा दीना विवर्णवदना कृशा ।
बभूव दमयन्ती तु निःश्वासपरमा तदा ॥ ००२ ॥

ऊर्ध्वदृष्टिर्ध्यानपरा बभूवोन्मत्तदर्शना ।
न शय्यासनभोगेषु रतिं विन्दति कर्हिचित् ॥ ००३ ॥

न नक्तं न दिवा शेते हा हेति वदती मुहुः ।
तामस्वस्थां तदाकारां सख्यस्ता जज्ञुरिङ्गितैः ॥ ००४ ॥

ततो विदर्भपतये दमयन्त्याः सखीगणः ।
न्यवेदयत नस्वस्थां दमयन्तीं नरेश्वर ॥ ००५ ॥

तच्छ्रुत्वा नृपतिर्भीमो दमयन्तीसखीगणात् ।
चिन्तयामास तत्कार्यं सुमहत्स्वां सुतां प्रति ॥ ००६ ॥

स समीक्ष्य महीपालः स्वां सुतां प्राप्तयौवनाम् ।
अपश्यदात्मनः कार्यं दमयन्त्याः स्वयंवरम् ॥ ००७ ॥

स संनिपातयामास महीपालान्विशां पते ।
अनुभूयतामयं वीराः स्वयंवर इति प्रभो ॥ ००८ ॥

श्रुत्वा तु पार्थिवाः सर्वे दमयन्त्याः स्वयंवरम् ।
अभिजग्मुस्तदा भीमं राजानो भीमशासनात् ॥ ००९ ॥

हस्त्यश्वरथघोषेण नादयन्तो वसुंधराम् ।
विचित्रमाल्याभरणैर्बलैर्दृश्यैः स्वलङ्कृतैः ॥ ०१० ॥

एतस्मिन्नेव काले तु पुराणावृषिसत्तमौ ।
अटमानौ महात्मानाविन्द्रलोकमितो गतौ ॥ ०११ ॥

नारदः पर्वतश्चैव महात्मानौ महाव्रतौ ।
देवराजस्य भवनं विविशाते सुपूजितौ ॥ ०१२ ॥

तावर्चित्वा सहस्राक्षस्ततः कुशलमव्ययम् ।
पप्रच्छानामयं चापि तयोः सर्वगतं विभुः ॥ ०१३ ॥

नारद उवाच ॥

आवयोः कुशलं देव सर्वत्रगतमीश्वर ।
लोके च मघवन्कृत्स्ने नृपाः कुशलिनो विभो ॥ ०१४ ॥

बृहदश्व उवाच ॥

नारदस्य वचः श्रुत्वा पप्रच्छ बलवृत्रहा ।
धर्मज्ञाः पृथिवीपालास्त्यक्तजीवितयोधिनः ॥ ०१५ ॥

शस्त्रेण निधनं काले ये गच्छन्त्यपराङ्मुखाः ।
अयं लोकोऽक्षयस्तेषां यथैव मम कामधुक् ॥ ०१६ ॥

क्व नु ते क्षत्रियाः शूरा न हि पश्यामि तानहम् ।
आगच्छतो महीपालानतिथीन्दयितान्मम ॥ ०१७ ॥

एवमुक्तस्तु शक्रेण नारदः प्रत्यभाषत ।
शृणु मे भगवन्येन न दृश्यन्ते महीक्षितः ॥ ०१८ ॥

विदर्भराजदुहिता दमयन्तीति विश्रुता ।
रूपेण समतिक्रान्ता पृथिव्यां सर्वयोषितः ॥ ०१९ ॥

तस्याः स्वयंवरः शक्र भविता नचिरादिव ।
तत्र गच्छन्ति राजानो राजपुत्राश्च सर्वशः ॥ ०२० ॥

तां रत्नभूतां लोकस्य प्रार्थयन्तो महीक्षितः ।
काङ्क्षन्ति स्म विशेषेण बलवृत्रनिषूदन ॥ ०२१ ॥

एतस्मिन्कथ्यमाने तु लोकपालाश्च साग्निकाः ।
आजग्मुर्देवराजस्य समीपममरोत्तमाः ॥ ०२२ ॥

ततस्तच्छुश्रुवुः सर्वे नारदस्य वचो महत् ।
श्रुत्वा चैवाब्रुवन्हृष्टा गच्छामो वयमप्युत ॥ ०२३ ॥

ततः सर्वे महाराज सगणाः सहवाहनाः ।

विदर्भानभितो जग्मुर्यत्र सर्वे महीक्षितः ॥ ०२४ ॥

नलोऽपि राजा कौन्तेय श्रुत्वा राज्ञां समागमम् ।
अभ्यगच्छददीनात्मा दमयन्तीमनुव्रतः ॥ ०२५ ॥

अथ देवाः पथि नलं ददृशुर्भूतले स्थितम् ।
साक्षादिव स्थितं मूर्त्या मन्मथं रूपसंपदा ॥ ०२६ ॥

तं दृष्ट्वा लोकपालास्ते भ्राजमानं यथा रविम् ।
तस्थुर्विगतसङ्कल्पा विस्मिता रूपसंपदा ॥ ०२७ ॥

ततोऽन्तरिक्षे विष्टभ्य विमानानि दिवौकसः ।
अब्रुवन्नैषधं राजन्नवतीर्य नभस्तलात् ॥ ०२८ ॥

भो भो नैषध राजेन्द्र नल सत्यव्रतो भवान् ।
अस्माकं कुरु साहाय्यं दूतो भव नरोत्तम ॥ ०२९ ॥

---

# अध्याय ०५२

बृहदश्व उवाच ॥

तेभ्यः प्रतिज्ञाय नलः करिष्य इति भारत ।
अथैनान्परिपप्रच्छ कृताञ्जलिरवस्थितः ॥ ००१ ॥

के वै भवन्तः कश्चासौ यस्याहं दूत ईप्सितः ।
किं च तत्र मया कार्यं कथयध्वं यथातथम् ॥ ००२ ॥

एवमुक्ते नैषधेन मघवान्प्रत्यभाषत ।
अमरान्वै निबोधास्मान्दमयन्त्यर्थमागतान् ॥ ००३ ॥

अहमिन्द्रोऽयमग्निश्च तथैवायमपांपतिः ।
शरीरान्तकरो नृणां यमोऽयमपि पार्थिव ॥ ००४ ॥

स वै त्वमागतानस्मान्दमयन्त्यै निवेदय ।
लोकपालाः सहेन्द्रास्त्वां समायान्ति दिदृक्षवः ॥ ००५ ॥

प्राप्तुमिच्छन्ति देवास्त्वां शक्रोऽग्निर्वरुणो यमः ।
तेषामन्यतमं देवं पतित्वे वरयस्व ह ॥ ००६ ॥

एवमुक्तः स शक्रेण नलः प्राञ्जलिरब्रवीत् ।
एकार्थसमवेतं मां न प्रेषयितुमर्हथ ॥ ००७ ॥

देवा ऊचुः ॥

करिष्य इति संश्रुत्य पूर्वमस्मासु नैषध ।
न करिष्यसि कस्मात्त्वं व्रज नैषध माचिरम् ॥ ००८ ॥

बृहदश्व उवाच ॥

एवमुक्तः स देवैस्तैर्नैषधः पुनरब्रवीत् ।
सुरक्षितानि वेश्मानि प्रवेष्टुं कथमुत्सहे ॥ ००९ ॥

प्रवेक्ष्यसीति तं शक्रः पुनरेवाभ्यभाषत ।
जगाम स तथेत्युक्त्वा दमयन्त्या निवेशनम् ॥ ०१० ॥

ददर्श तत्र वैदर्भीं सखीगणसमावृताम् ।
देदीप्यमानां वपुषा श्रिया च वरवर्णिनीम् ॥ ०११ ॥

अतीव सुकुमाराङ्गीं तनुमध्यां सुलोचनाम् ।
आक्षिपन्तीमिव च भाः शशिनः स्वेन तेजसा ॥ ०१२ ॥

तस्य दृष्ट्वैव ववृधे कामस्तां चारुहासिनीम् ।
सत्यं चिकीर्षमाणस्तु धारयामास हृच्छयम् ॥ ०१३ ॥

ततस्ता नैषधं दृष्ट्वा संभ्रान्ताः परमाङ्गनाः ।
आसनेभ्यः समुत्पेतुस्तेजसा तस्य धर्षिताः ॥ ०१४ ॥

प्रशशंसुश्च सुप्रीता नलं ता विस्मयान्विताः ।
न चैनमभ्यभाषन्त मनोभिस्त्वभ्यचिन्तयन् ॥ ०१५ ॥

अहो रूपमहो कान्तिरहो धैर्यं महात्मनः ।
कोऽयं देवो नु यक्षो नु गन्धर्वो नु भविष्यति ॥ ०१६ ॥

न त्वेनं शक्नुवन्ति स्म व्याहर्तुमपि किञ्चन ।
तेजसा धर्षिताः सर्वा लज्जावत्यो वराङ्गनाः ॥ ०१७ ॥

अथैनं स्मयमानेव स्मितपूर्वाभिभाषिणी ।
दमयन्ती नलं वीरमभ्यभाषत विस्मिता ॥ ०१८ ॥

कस्त्वं सर्वानवद्याङ्ग मम हृच्छयवर्धन ।
प्राप्तोऽस्यमरवद्वीर ज्ञातुमिच्छामि तेऽनघ ॥ ०१९ ॥

कथमागमनं चेह कथं चासि न लक्षितः ।
सुरक्षितं हि मे वेश्म राजा चैवोग्रशासनः ॥ ०२० ॥

एवमुक्तस्तु वैदर्भ्या नलस्तां प्रत्युवाच ह ।
नलं मां विद्धि कल्याणि देवदूतमिहागतम् ॥ ०२१ ॥

देवास्त्वां प्राप्तुमिच्छन्ति शक्रोऽग्निर्वरुणो यमः ।

तेषामन्यतमं देवं पतिं वरय शोभने ॥ ०२२ ॥

तेषामेव प्रभावेन प्रविष्टोऽहमलक्षितः ।
प्रविशन्तं हि मां कश्चिन्नापश्यन्नाप्यवारयत् ॥ ०२३ ॥

एतदर्थमहं भद्रे प्रेषितः सुरसत्तमैः ।
एतच्छ्रुत्वा शुभे बुद्धिं प्रकुरुष्व यथेच्छसि ॥ ०२४ ॥

---

# अध्याय ०५३

बृहदश्व उवाच ॥

सा नमस्कृत्य देवेभ्यः प्रहस्य नलमब्रवीत् ।
प्रणयस्व यथाश्रद्धं राजन्किं करवाणि ते ॥ ००१ ॥

अहं चैव हि यच्चान्यन्ममास्ति वसु किञ्चन ।
सर्वं तत्तव विश्रब्धं कुरु प्रणयमीश्वर ॥ ००२ ॥

हंसानां वचनं यत्तत्तन्मां दहति पार्थिव ।
त्वत्कृते हि मया वीर राजानः संनिपातिताः ॥ ००३ ॥

यदि चेद्भजमानां मां प्रत्याख्यास्यसि मानद ।
विषमग्निं जलं रज्जुमास्थास्ये तव कारणात् ॥ ००४ ॥

एवमुक्तस्तु वैदर्भ्या नलस्तां प्रत्युवाच ह ।
तिष्ठत्सु लोकपालेषु कथं मानुषमिच्छसि ॥ ००५ ॥

येषामहं लोककृतामीश्वराणां महात्मनाम् ।

न पादरजसा तुल्यो मनस्ते तेषु वर्तताम् ॥ ००६ ॥

विप्रियं ह्याचरन्मर्त्यो देवानां मृत्युमृच्छति ।
त्राहि मामनवद्याङ्गि वरयस्व सुरोत्तमान् ॥ ००७ ॥

ततो बाष्पकलां वाचं दमयन्ती शुचिस्मिता ।
प्रव्याहरन्ती शनकैर्नलं राजानमब्रवीत् ॥ ००८ ॥

अस्त्युपायो मया दृष्टो निरपायो नरेश्वर ।
येन दोषो न भविता तव राजन्कथञ्चन ॥ ००९ ॥

त्वं चैव हि नरश्रेष्ठ देवाश्चाग्निपुरोगमाः ।
आयान्तु सहिताः सर्वे मम यत्र स्वयंवरः ॥ ०१० ॥

ततोऽहं लोकपालानां संनिधौ त्वां नरेश्वर ।
वरयिष्ये नरव्याघ्र नैवं दोषो भविष्यति ॥ ०११ ॥

एवमुक्तस्तु वैदर्भ्या नलो राजा विशां पते ।
आजगाम पुनस्तत्र यत्र देवाः समागताः ॥ ०१२ ॥

तमपश्यंस्तथायान्तं लोकपालाः सहेश्वराः ।
दृष्ट्वा चैनं ततोऽपृच्छन्वृत्तान्तं सर्वमेव तत् ॥ ०१३ ॥

देवा ऊचुः ॥

कच्चिद्दृष्टा त्वया राजन्दमयन्ती शुचिस्मिता ।
किमब्रवीच्च नः सर्वान्वद भूमिपतेऽनघ ॥ ०१४ ॥

नल उवाच ॥

भवद्भिरहमादिष्टो दमयन्त्या निवेशनम् ।

प्रविष्टः सुमहाकक्ष्यं दण्डिभिः स्थविरैर्वृतम्  ॥ ०१५  ॥

प्रविशन्तं च मां तत्र न कश्चिद्दृष्टवान्नरः ।
ऋते तां पार्थिवसुतां भवतामेव तेजसा  ॥ ०१६  ॥

सख्यश्चास्या मया दृष्टास्ताभिश्चाप्युपलक्षितः ।
विस्मिताश्चाभवन्दृष्ट्वा सर्वा मां विबुधेश्वराः  ॥ ०१७  ॥

वर्ण्यमानेषु च मया भवत्सु रुचिरानना ।
मामेव गतसङ्कल्पा वृणीते सुरसत्तमाः  ॥ ०१८  ॥

अब्रवीच्चैव मां बाला आयान्तु सहिताः सुराः ।
त्वया सह नरश्रेष्ठ मम यत्र स्वयंवरः  ॥ ०१९  ॥

तेषामहं संनिधौ त्वां वरयिष्ये नरोत्तम ।
एवं तव महाबाहो दोषो न भवितेति ह  ॥ ०२०  ॥

एतावदेव विबुधा यथावृत्तमुदाहृतम् ।
मयाशेषं प्रमाणं तु भवन्तस्त्रिदशेश्वराः  ॥ ०२१  ॥

---

# अध्याय ०५४

बृहदश्व उवाच  ॥

अथ काले शुभे प्राप्ते तिथौ पुण्ये क्षणे तथा ।
आजुहाव महीपालान्भीमो राजा स्वयंवरे  ॥ ००१  ॥

तच्छ्रुत्वा पृथिवीपालाः सर्वे हृच्छयपीडिताः ।

त्वरिताः समुपाजग्मुर्दमयन्तीमभीप्सवः ॥ ००२ ॥

कनकस्तम्भरुचिरं तोरणेन विराजितम् ।
विविशुस्ते महारङ्गं नृपाः सिंहा इवाचलम् ॥ ००३ ॥

तत्रासनेषु विविधेष्वासीनाः पृथिवीक्षितः ।
सुरभिस्रग्धराः सर्वे सुमृष्टमणिकुण्डलाः ॥ ००४ ॥

तां राजसमितिं पूर्णां नागैर्भोगवतीमिव ।
संपूर्णां पुरुषव्याघ्रैर्व्याघ्रैर्गिरिगुहामिव ॥ ००५ ॥

तत्र स्म पीना दृश्यन्ते बाहवः परिघोपमाः ।
आकारवन्तः सुश्लक्ष्णाः पञ्चशीर्षा इवोरगाः ॥ ००६ ॥

सुकेशान्तानि चारूणि सुनासानि शुभानि च ।
मुखानि राज्ञां शोभन्ते नक्षत्राणि यथा दिवि ॥ ००७ ॥

दमयन्ती ततो रङ्गं प्रविवेश शुभानना ।
मुष्णन्ती प्रभया राज्ञां चक्षूंषि च मनांसि च ॥ ००८ ॥

तस्या गात्रेषु पतिता तेषां दृष्टिर्महात्मनाम् ।
तत्र तत्रैव सक्ताभून्न चचाल च पश्यताम् ॥ ००९ ॥

ततः सङ्कीर्त्यमानेषु राज्ञां नामसु भारत ।
ददर्श भैमी पुरुषान्पञ्च तुल्याकृतीनिव ॥ ०१० ॥

तान्समीक्ष्य ततः सर्वान्निर्विशेषाकृतीन्स्थितान् ।
संदेहादथ वैदर्भी नाभ्यजानान्नलं नृपम् ॥ ०११ ॥

यं यं हि ददृशे तेषां तं तं मेने नलं नृपम् ॥ ०११ ॥

सा चिन्तयन्ती बुद्ध्याथ तर्कयामास भामिनी ।
कथं नु देवाञ्जानीयां कथं विद्यां नलं नृपम् ॥ ०१२ ॥

एवं सञ्चिन्तयन्ती सा वैदर्भी भृशदुःखिता ।
श्रुतानि देवलिङ्गानि चिन्तयामास भारत ॥ ०१३ ॥

देवानां यानि लिङ्गानि स्थविरेभ्यः श्रुतानि मे ।
तानीह तिष्ठतां भूमावेकस्यापि न लक्षये ॥ ०१४ ॥

सा विनिश्चित्य बहुधा विचार्य च पुनः पुनः ।
शरणं प्रति देवानां प्राप्तकालममन्यत ॥ ०१५ ॥

वाचा च मनसा चैव नमस्कारं प्रयुज्य सा ।
देवेभ्यः प्राञ्जलिर्भूत्वा वेपमानेदमब्रवीत् ॥ ०१६ ॥

हंसानां वचनं श्रुत्वा यथा मे नैषधो वृतः ।
पतित्वे तेन सत्येन देवास्तं प्रदिशन्तु मे ॥ ०१७ ॥

वाचा च मनसा चैव यथा नाभिचराम्यहम् ।
तेन सत्येन विबुधास्तमेव प्रदिशन्तु मे ॥ ०१८ ॥

यथा देवैः स मे भर्ता विहितो निषधाधिपः ।
तेन सत्येन मे देवास्तमेव प्रदिशन्तु मे ॥ ०१९ ॥

स्वं चैव रूपं पुष्यन्तु लोकपालाः सहेश्वराः ।
यथाहमभिजानीयां पुण्यश्लोकं नराधिपम् ॥ ०२० ॥

निशम्य दमयन्त्यास्तत्करुणं परिदेवितम् ।
निश्चयं परमं तथ्यमनुरागं च नैषधे ॥ ०२१ ॥

मनोविशुद्धिं बुद्धिं च भक्तिं रागं च भारत ।

यथोक्तं चक्रिरे देवाः सामर्थ्यं लिङ्गधारणे ॥ ०२२ ॥

सापश्यद्विबुधान्सर्वानस्वेदान्स्तब्धलोचनान् ।
हृषितस्रग्रजोहीनान्स्थितानस्पृशतः क्षितिम् ॥ ०२३ ॥

छायाद्वितीयो म्लानस्रग्रजःस्वेदसमन्वितः ।
भूमिष्ठो नैषधश्चैव निमेषेण च सूचितः ॥ ०२४ ॥

सा समीक्ष्य ततो देवान्पुण्यश्लोकं च भारत ।
नैषधं वरयामास भैमी धर्मेण भारत ॥ ०२५ ॥

विलज्जमाना वस्त्रान्ते जग्राहायतलोचना ।
स्कन्धदेशेऽसृजच्चास्य स्रजं परमशोभनाम् ॥ ०२६ ॥

वरयामास चैवैनं पतित्वे वरवर्णिनी ॥ ०२६ ॥

ततो हा हेति सहसा शब्दो मुक्तो नराधिपैः ।
देवैर्महर्षिभिश्चैव साधु साध्विति भारत ॥ ०२७ ॥

विस्मितैरीरितः शब्दः प्रशंसद्भिर्नलं नृपम् ॥ ०२७ ॥

वृते तु नैषधे भैम्या लोकपाला महौजसः ।
प्रहृष्टमनसः सर्वे नलायाष्टौ वरान्ददुः ॥ ०२८ ॥

प्रत्यक्षदर्शनं यज्ञे गतिं चानुत्तमां शुभाम् ।
नैषधाय ददौ शक्रः प्रीयमाणः शचीपतिः ॥ ०२९ ॥

अग्निरात्मभवं प्रादाद्यत्र वाञ्छति नैषधः ।
लोकानात्मप्रभांश्चैव ददौ तस्मै हुताशनः ॥ ०३० ॥

यमस्त्वन्नरसं प्रादाद्धर्मे च परमां स्थितिम् ।

अपांपतिरपां भावं यत्र वाञ्छति नैषधः ॥ ०३१ ॥

स्रजं चोत्तमगन्धाढ्यां सर्वे च मिथुनं ददुः ।
वरानेवं प्रदायास्य देवास्ते त्रिदिवं गताः ॥ ०३२ ॥

पार्थिवाश्चानुभूयास्या विवाहं विस्मयान्विताः ।
दमयन्त्याः प्रमुदिताः प्रतिजग्मुर्यथागतम् ॥ ०३३ ॥

अवाप्य नारीरत्नं तत्पुण्यश्लोकोऽपि पार्थिवः ।
रेमे सह तया राजा शच्येव बलवृत्रहा ॥ ०३४ ॥

अतीव मुदितो राजा भ्राजमानोंऽशुमानिव ।
अरञ्जयत्प्रजा वीरो धर्मेण परिपालयन् ॥ ०३५ ॥

ईजे चाप्यश्वमेधेन ययातिरिव नाहुषः ।
अन्यैश्च क्रतुभिर्धीमान्बहुभिश्चाप्तदक्षिणैः ॥ ०३६ ॥

पुनश्च रमणीयेषु वनेषूपवनेषु च ।
दमयन्त्या सह नलो विजहारामरोपमः ॥ ०३७ ॥

एवं स यजमानश्च विहरंश्च नराधिपः ।
ररक्ष वसुसंपूर्णां वसुधां वसुधाधिपः ॥ ०३८ ॥

---

# अध्याय ०५५

बृहदश्व उवाच ॥

वृते तु नैषधे भैम्या लोकपाला महौजसः ।

यान्तो ददृशुरायान्तं द्वापरं कलिना सह ॥ ००१ ॥

अथाब्रवीत्कलिं शक्रः संप्रेक्ष्य बलवृत्रहा ।
द्वापरेण सहायेन कले ब्रूहि क्व यास्यसि ॥ ००२ ॥

ततोऽब्रवीत्कलिः शक्रं दमयन्त्याः स्वयंवरम् ।
गत्वाहं वरयिष्ये तां मनो हि मम तद्गतम् ॥ ००३ ॥

तमब्रवीत्प्रहस्येन्द्रो निर्वृत्तः स स्वयंवरः ।
वृतस्तया नलो राजा पतिरस्मत्समीपतः ॥ ००४ ॥

एवमुक्तस्तु शक्रेण कलिः कोपसमन्वितः ।
देवानामन्त्र्य तान्सर्वानुवाचेदं वचस्तदा ॥ ००५ ॥

देवानां मानुषं मध्ये यत्सा पतिमविन्दत ।
ननु तस्या भवेन्न्याय्यं विपुलं दण्डधारणम् ॥ ००६ ॥

एवमुक्ते तु कलिना प्रत्यूचुस्ते दिवौकसः ।
अस्माभिः समनुज्ञातो दमयन्त्या नलो वृतः ॥ ००७ ॥

कश्च सर्वगुणोपेतं नाश्रयेत नलं नृपम् ।
यो वेद धर्मानखिलान्यथावच्चरितव्रतः ॥ ००८ ॥

यस्मिन्सत्यं धृतिर्दानं तपः शौचं दमः शमः ।
ध्रुवाणि पुरुषव्याघ्रे लोकपालसमे नृपे ॥ ००९ ॥

आत्मानं स शपेन्मूढो हन्याच्चात्मानमात्मना ।
एवङ्गुणं नलं यो वै कामयेच्छपितुं कले ॥ ०१० ॥

कृच्छ्रे स नरके मज्जेदगाधे विपुलेऽप्लवे ।
एवमुक्त्वा कलिं देवा द्वापरं च दिवं ययुः ॥ ०११ ॥

ततो गतेषु देवेषु कलिर्द्वापरमब्रवीत् ।
संहर्तुं नोत्सहे कोपं नले वत्स्यामि द्वापर ॥ ०१२ ॥

भ्रंशयिष्यामि तं राज्यान्न भैम्या सह रंस्यते ।
त्वमप्यक्षान्समाविश्य कर्तुं साहाय्यमर्हसि ॥ ०१३ ॥

---

# अध्याय ०५६

बृहदश्व उवाच ॥

एवं स समयं कृत्वा द्वापरेण कलिः सह ।
आजगाम ततस्तत्र यत्र राजा स नैषधः ॥ ००१ ॥

स नित्यमन्तरप्रेक्षी निषधेष्ववसच्चिरम् ।
अथास्य द्वादशे वर्षे ददर्श कलिरन्तरम् ॥ ००२ ॥

कृत्वा मूत्रमुपस्पृश्य संध्यामास्ते स्म नैषधः ।
अकृत्वा पादयोः शौचं तत्रैनं कलिराविशत् ॥ ००३ ॥

स समाविश्य तु नलं समीपं पुष्करस्य ह ।
गत्वा पुष्करमाहेदमेहि दीव्य नलेन वै ॥ ००४ ॥

अक्षद्यूते नलं जेता भवान्हि सहितो मया ।
निषधान्प्रतिपद्यस्व जित्वा राजन्नलं नृपम् ॥ ००५ ॥

एवमुक्तस्तु कलिना पुष्करो नलमभ्ययात् ।
कलिश्चैव वृषो भूत्वा गवां पुष्करमभ्ययात् ॥ ००६ ॥

आसाद्य तु नलं वीरं पुष्करः परवीरहा ।
दीव्यावेत्यब्रवीद्भ्राता वृषेणेति मुहुर्मुहुः ॥ ००७ ॥

न चक्षमे ततो राजा समाह्वानं महामनाः ।
वैदर्भ्याः प्रेक्षमाणायाः पणकालममन्यत ॥ ००८ ॥

हिरण्यस्य सुवर्णस्य यानयुग्यस्य वाससाम् ।
आविष्टः कलिना द्यूते जीयते स्म नलस्तदा ॥ ००९ ॥

तमक्षमदसंमत्तं सुहृदां न तु कश्चन ।
निवारणेऽभवच्छक्तो दीव्यमानमचेतसम् ॥ ०१० ॥

ततः पौरजनः सर्वो मन्त्रिभिः सह भारत ।
राजानं द्रष्टुमागच्छन्निवारयितुमातुरम् ॥ ०११ ॥

ततः सूत उपागम्य दमयन्त्यै न्यवेदयत् ।
एष पौरजनः सर्वो द्वारि तिष्ठति कार्यवान् ॥ ०१२ ॥

निवेद्यतां नैषधाय सर्वाः प्रकृतयः स्थिताः ।
अमृष्यमाणा व्यसनं राज्ञो धर्मार्थदर्शिनः ॥ ०१३ ॥

ततः सा बाष्पकलया वाचा दुःखेन कर्शिता ।
उवाच नैषधं भैमी शोकोपहतचेतना ॥ ०१४ ॥

राजन्पौरजनो द्वारि त्वां दिदृक्षुरवस्थितः ।
मन्त्रिभिः सहितः सर्वै राजभक्तिपुरस्कृतः ॥ ०१५ ॥

तं द्रष्टुमर्हसीत्येवं पुनः पुनरभाषत ॥ ०१५ ॥

तां तथा रुचिरापाङ्गीं विलपन्तीं सुमध्यमाम् ।

आविष्टः कलिना राजा नाभ्यभाषत किञ्चन ॥ ०१६ ॥

ततस्ते मन्त्रिणः सर्वे ते चैव पुरवासिनः ।
नायमस्तीति दुःखार्ता व्रीडिता जग्मुरालयान् ॥ ०१७ ॥

तथा तदभवद्द्यूतं पुष्करस्य नलस्य च ।
युधिष्ठिर बहून्मासान्पुण्यश्लोकस्त्वजीयत ॥ ०१८ ॥

---

# अध्याय ०५७

बृहदश्व उवाच ॥

दमयन्ती ततो दृष्ट्वा पुण्यश्लोकं नराधिपम् ।
उन्मत्तवदनुन्मत्ता देवने गतचेतसम् ॥ ००१ ॥

भयशोकसमाविष्टा राजन्भीमसुता ततः ।
चिन्तयामास तत्कार्यं सुमहत्पार्थिवं प्रति ॥ ००२ ॥

सा शङ्कमाना तत्पापं चिकीर्षन्ती च तत्प्रियम् ।
नलं च हृतसर्वस्वमुपलभ्येदमब्रवीत् ॥ ००३ ॥

बृहत्सेने व्रजामात्यानानाय्य नलशासनात् ।
आचक्ष्व यद्धृतं द्रव्यमवशिष्टं च यद्वसु ॥ ००४ ॥

ततस्ते मन्त्रिणः सर्वे विज्ञाय नलशासनम् ।
अपि नो भागधेयं स्यादित्युक्त्वा पुनराव्रजन् ॥ ००५ ॥

तास्तु सर्वाः प्रकृतयो द्वितीयं समुपस्थिताः ।

न्यवेदयद्ध्रीमसुता न च तत्प्रत्यनन्दत ॥ ००६ ॥

वाक्यमप्रतिनन्दन्तं भर्तारमभिवीक्ष्य सा ।
दमयन्ती पुनर्वेश्म व्रीडिता प्रविवेश ह ॥ ००७ ॥

निशम्य सततं चाक्षान्पुण्यश्लोकपराङ्मुखान् ।
नलं च हृतसर्वस्वं धात्रीं पुनरुवाच ह ॥ ००८ ॥

बृहत्सेने पुनर्गच्छ वार्ष्णेयं नलशासनात् ।
सूतमानय कल्याणि महत्कार्यमुपस्थितम् ॥ ००९ ॥

बृहत्सेना तु तच्छ्रुत्वा दमयन्त्याः प्रभाषितम् ।
वार्ष्णेयमानयामास पुरुषैराप्तकारिभिः ॥ ०१० ॥

वार्ष्णेयं तु ततो भैमी सान्त्वयञ्श्लक्ष्णया गिरा ।
उवाच देशकालज्ञा प्राप्तकालमनिन्दिता ॥ ०११ ॥

जानीषे त्वं यथा राजा सम्यग्वृत्तः सदा त्वयि ।
तस्य त्वं विषमस्थस्य साहाय्यं कर्तुमर्हसि ॥ ०१२ ॥

यथा यथा हि नृपतिः पुष्करेणेह जीयते ।
तथा तथास्य द्यूते वै रागो भूयोऽभिवर्धते ॥ ०१३ ॥

यथा च पुष्करस्याक्षा वर्तन्ते वशवर्तिनः ।
तथा विपर्ययश्चापि नलस्याक्षेषु दृश्यते ॥ ०१४ ॥

सुहृत्स्वजनवाक्यानि यथावन्न शृणोति च ।
नूनं मन्ये न शेषोऽस्ति नैषधस्य महात्मनः ॥ ०१५ ॥

यत्र मे वचनं राजा नाभिनन्दति मोहितः ।
शरणं त्वां प्रपन्नास्मि सारथे कुरु मद्वचः ॥ ०१६ ॥

न हि मे शुध्यते भावः कदाचिद्विनशेदिति ॥ ०१६ ॥

नलस्य दयितानश्वान्योजयित्वा महाजवान् ।
इदमारोप्य मिथुनं कुण्डिनं यातुमर्हसि ॥ ०१७ ॥

मम ज्ञातिषु निक्षिप्य दारकौ स्यन्दनं तथा ।
अश्वांश्चैतान्यथाकामं वस वान्यत्र गच्छ वा ॥ ०१८ ॥

दमयन्त्यास्तु तद्वाक्यं वार्ष्णेयो नलसारथिः ।
न्यवेदयदशेषेण नलामात्येषु मुख्यशः ॥ ०१९ ॥

तैः समेत्य विनिश्चित्य सोऽनुज्ञातो महीपते ।
ययौ मिथुनमारोप्य विदर्भांस्तेन वाहिना ॥ ०२० ॥

हयांस्तत्र विनिक्षिप्य सूतो रथवरं च तम् ।
इन्द्रसेनां च तां कन्यामिन्द्रसेनं च बालकम् ॥ ०२१ ॥

आमन्त्र्य भीमं राजानमार्तः शोचन्नलं नृपम् ।
अटमानस्ततोऽयोध्यां जगाम नगरीं तदा ॥ ०२२ ॥

ऋतुपर्णं स राजानमुपतस्थे सुदुःखितः ।
भृतिं चोपययौ तस्य सारथ्येन महीपते ॥ ०२३ ॥

---

# अध्याय ०५८

बृहदश्व उवाच ॥

ततस्तु याते वार्ष्णेये पुण्यश्लोकस्य दीव्यतः ।
पुष्करेण हृतं राज्यं यच्चान्यद्वसु किञ्चन ॥ ००१ ॥

हृतराज्यं नलं राजन्प्रहसन्पुष्करोऽब्रवीत् ।
द्यूतं प्रवर्ततां भूयः प्रतिपाणोऽस्ति कस्तव ॥ ००२ ॥

शिष्टा ते दमयन्त्येका सर्वमन्यद्धृतं मया ।
दमयन्त्याः पणः साधु वर्ततां यदि मन्यसे ॥ ००३ ॥

पुष्करेणैवमुक्तस्य पुण्यश्लोकस्य मन्युना ।
व्यदीर्यतेव हृदयं न चैनं किञ्चिदब्रवीत् ॥ ००४ ॥

ततः पुष्करमालोक्य नलः परममन्युमान् ।
उत्सृज्य सर्वगात्रेभ्यो भूषणानि महायशाः ॥ ००५ ॥

एकवासा असंवीतः सुहृच्छोकविवर्धनः ।
निश्चक्राम तदा राजा त्यक्त्वा सुविपुलां श्रियम् ॥ ००६ ॥

दमयन्त्येकवस्त्रा तं गच्छन्तं पृष्ठतोऽन्वियात् ।
स तया बाह्यतः सार्धं त्रिरात्रं नैषधोऽवसत् ॥ ००७ ॥

पुष्करस्तु महाराज घोषयामास वै पुरे ।
नले यः सम्यगातिष्ठेत्स गच्छेद्वध्यतां मम ॥ ००८ ॥

पुष्करस्य तु वाक्येन तस्य विद्वेषणेन च ।
पौरा न तस्मिन्सत्कारं कृतवन्तो युधिष्ठिर ॥ ००९ ॥

स तथा नगराभ्याशे सत्कारार्हो न सत्कृतः ।
त्रिरात्रमुषितो राजा जलमात्रेण वर्तयन् ॥ ०१० ॥

क्षुधा संपीड्यमानस्तु नलो बहुतिथेऽहनि ।

अपश्यच्छकुनान्कांश्चिद्धिरण्यसदृशच्छदान् ॥ ०११ ॥

स चिन्तयामास तदा निषधाधिपतिर्बली ।
अस्ति भक्षो ममाद्यायं वसु चेदं भविष्यति ॥ ०१२ ॥

ततस्तानन्तरीयेण वाससा समवास्तृणोत् ।
तस्यान्तरीयमादाय जग्मुः सर्वे विहायसा ॥ ०१३ ॥

उत्पतन्तः खगास्ते तु वाक्यमाहुस्तदा नलम् ।
दृष्ट्वा दिग्वाससं भूमौ स्थितं दीनमधोमुखम् ॥ ०१४ ॥

वयमक्षाः सुदुर्बुद्धे तव वासो जिहीर्षवः ।
आगता न हि नः प्रीतिः सवाससि गते त्वयि ॥ ०१५ ॥

तान्समीक्ष्य गतानक्षानात्मानं च विवाससम् ।
पुण्यश्लोकस्ततो राजा दमयन्तीमथाब्रवीत् ॥ ०१६ ॥

येषां प्रकोपादैश्वर्यात्प्रच्युतोऽहमनिन्दिते ।
प्राणयात्रां न विन्दे च दुःखितः क्षुधयार्दितः ॥ ०१७ ॥

येषां कृते न सत्कारमकुर्वन्मयि नैषधाः ।
त इमे शकुना भूत्वा वासोऽप्यपहरन्ति मे ॥ ०१८ ॥

वैषम्यं परमं प्राप्तो दुःखितो गतचेतनः ।
भर्ता तेऽहं निबोधेदं वचनं हितमात्मनः ॥ ०१९ ॥

एते गच्छन्ति बहवः पन्थानो दक्षिणापथम् ।
अवन्तीमृक्षवन्तं च समतिक्रम्य पर्वतम् ॥ ०२० ॥

एष विन्ध्यो महाशैलः पयोष्णी च समुद्रगा ।
आश्रमाश्च महर्षीणाममी पुष्पफलान्विताः ॥ ०२१ ॥

एष पन्था विदर्भाणामयं गच्छति कोसलान् ।
अतः परं च देशोऽयं दक्षिणे दक्षिणापथः ॥ ०२२ ॥

ततः सा बाष्पकलया वाचा दुःखेन कर्शिता ।
उवाच दमयन्ती तं नैषधं करुणं वचः ॥ ०२३ ॥

उद्वेपते मे हृदयं सीदन्त्यङ्गानि सर्वशः ।
तव पार्थिव सङ्कल्पं चिन्तयन्त्याः पुनः पुनः ॥ ०२४ ॥

हृतराज्यं हृतधनं विवस्त्रं क्षुच्छ्रमान्वितम् ।
कथमुत्सृज्य गच्छेयमहं त्वां विजने वने ॥ ०२५ ॥

श्रान्तस्य ते क्षुधार्तस्य चिन्तयानस्य तत्सुखम् ।
वने घोरे महाराज नाशयिष्यामि ते क्लमम् ॥ ०२६ ॥

न च भार्यासमं किञ्चिद्विद्यते भिषजां मतम् ।
औषधं सर्वदुःखेषु सत्यमेतद्ब्रवीमि ते ॥ ०२७ ॥

नल उवाच ॥

एवमेतद्यथात्थ त्वं दमयन्ति सुमध्यमे ।
नास्ति भार्यासमं मित्रं नरस्यार्तस्य भेषजम् ॥ ०२८ ॥

न चाहं त्यक्तुकामस्त्वां किमर्थं भीरु शङ्कसे ।
त्यजेयमहमात्मानं न त्वेव त्वामनिन्दिते ॥ ०२९ ॥

दमयन्त्युवाच ॥

यदि मां त्वं महाराज न विहातुमिहेच्छसि ।
तत्किमर्थं विदर्भाणां पन्थाः समुपदिश्यते ॥ ०३० ॥

अवैमि चाहं नृपते न त्वं मां त्यक्तुमर्हसि ।
चेतसा त्वपकृष्टेन मां त्यजेथा महापते ॥ ०३१ ॥

पन्थानं हि ममाभीक्ष्णमाख्यासि नरसत्तम ।
अतोनिमित्तं शोकं मे वर्धयस्यमरप्रभ ॥ ०३२ ॥

यदि चायमभिप्रायस्तव राजन्व्रजेदिति ।
सहितावेव गच्छावो विदर्भान्यदि मन्यसे ॥ ०३३ ॥

विदर्भराजस्तत्र त्वां पूजयिष्यति मानद ।
तेन त्वं पूजितो राजन्सुखं वत्स्यसि नो गृहे ॥ ०३४ ॥

---

# अध्याय ०५९

नल उवाच ॥

यथा राज्यं पितुस्ते तत्तथा मम न संशयः ।
न तु तत्र गमिष्यामि विषमस्थः कथञ्चन ॥ ००१ ॥

कथं समृद्धो गत्वाहं तव हर्षविवर्धनः ।
परिद्यूनो गमिष्यामि तव शोकविवर्धनः ॥ ००२ ॥

बृहदश्व उवाच ॥

इति ब्रुवन्नलो राजा दमयन्तीं पुनः पुनः ।
सान्त्वयामास कल्याणीं वाससोऽर्धेन संवृताम् ॥ ००३ ॥

तावेकवस्त्रसंवीतावटमानावितस्ततः ।
क्षुत्पिपासापरिश्रान्तौ सभां काञ्चिदुपेयतुः ॥ ००४ ॥

तां सभामुपसंप्राप्य तदा स निषधाधिपः ।
वैदर्भ्या सहितो राजा निषसाद महीतले ॥ ००५ ॥

स वै विवस्त्रो मलिनो विकचः पांसुगुण्ठितः ।
दमयन्त्या सह श्रान्तः सुष्वाप धरणीतले ॥ ००६ ॥

दमयन्त्यपि कल्याणी निद्रयापहृता ततः ।
सहसा दुःखमासाद्य सुकुमारी तपस्विनी ॥ ००७ ॥

सुप्तायां दमयन्त्यां तु नलो राजा विशां पते ।
शोकोन्मथितचित्तात्मा न स्म शेते यथा पुरा ॥ ००८ ॥

स तद्राज्यापहरणं सुहृत्त्यागं च सर्वशः ।
वने च तं परिध्वंसं प्रेक्ष्य चिन्तामुपेयिवान् ॥ ००९ ॥

किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः ।
किं नु मे मरणं श्रेयः परित्यागो जनस्य वा ॥ ०१० ॥

मामियं ह्यनुरक्तेदं दुःखमाप्नोति मत्कृते ।
मद्विहीना त्वियं गच्छेत्कदाचित्स्वजनं प्रति ॥ ०११ ॥

मया निःसंशयं दुःखमियं प्राप्स्यत्यनुत्तमा ।
उत्सर्गे संशयः स्यात्तु विन्देतापि सुखं क्वचित् ॥ ०१२ ॥

स विनिश्चित्य बहुधा विचार्य च पुनः पुनः ।
उत्सर्गेऽमन्यत श्रेयो दमयन्त्या नराधिपः ॥ ०१३ ॥

सोऽवस्त्रतामात्मनश्च तस्याश्चाप्येकवस्त्रताम् ।

चिन्तयित्वाध्यगाद्राजा वस्त्रार्धस्यावकर्तनम् ॥ ०१४ ॥

कथं वासो विकर्तेयं न च बुध्येत मे प्रिया ।
चिन्त्यैवं नैषधो राजा सभां पर्यचरत्तदा ॥ ०१५ ॥

परिधावन्नथ नल इतश्चेतश्च भारत ।
आससाद सभोद्देशे विकोशं खड्गमुत्तमम् ॥ ०१६ ॥

तेनार्धं वाससश्छित्त्वा निवस्य च परंतपः ।
सुप्तामुत्सृज्य वैदर्भीं प्राद्रवद्गतचेतनः ॥ ०१७ ॥

ततो निबद्धहृदयः पुनरागम्य तां सभाम् ।
दमयन्तीं तथा दृष्ट्वा रुरोद निषधाधिपः ॥ ०१८ ॥

यां न वायुर्न चादित्यः पुरा पश्यति मे प्रियाम् ।
सेयमद्य सभामध्ये शेते भूमावनाथवत् ॥ ०१९ ॥

इयं वस्त्रावकर्तेन संवीता चारुहासिनी ।
उन्मत्तेव वरारोहा कथं बुद्ध्वा भविष्यति ॥ ०२० ॥

कथमेका सती भैमी मया विरहिता शुभा ।
चरिष्यति वने घोरे मृगव्यालनिषेविते ॥ ०२१ ॥

गत्वा गत्वा नलो राजा पुनरेति सभां मुहुः ।
आकृष्यमाणः कलिना सौहृदेनापकृष्यते ॥ ०२२ ॥

द्विधेव हृदयं तस्य दुःखितस्याभवत्तदा ।
दोलेव मुहुरायाति याति चैव सभां मुहुः ॥ ०२३ ॥

सोऽपकृष्टस्तु कलिना मोहितः प्राद्रवन्नलः ।
सुप्तामुत्सृज्य तां भार्यां विलप्य करुणं बहु ॥ ०२४ ॥

नष्टात्मा कलिना स्पृष्टस्तत्तद्विगणयन्नृपः ।
जगामैव वने शून्ये भार्यामुत्सृज्य दुःखितः ॥ ०२५ ॥

---

# अध्याय ०६०

बृहदश्व उवाच ॥

अपक्रान्ते नले राजन्दमयन्ती गतक्लमा ।
अबुध्यत वरारोहा संत्रस्ता विजने वने ॥ ००१ ॥

सापश्यमाना भर्तारं दुःखशोकसमन्विता ।
प्राक्रोशदुच्चैः संत्रस्ता महाराजेति नैषधम् ॥ ००२ ॥

हा नाथ हा महाराज हा स्वामिन्किं जहासि माम् ।
हा हतास्मि विनष्टास्मि भीतास्मि विजने वने ॥ ००३ ॥

ननु नाम महाराज धर्मज्ञः सत्यवागसि ।
कथमुक्त्वा तथासत्यं सुप्तामुत्सृज्य मां गतः ॥ ००४ ॥

कथमुत्सृज्य गन्तासि वश्यां भार्यामनुव्रताम् ।
विशेषतोऽनपकृते परेणापकृते सति ॥ ००५ ॥

शक्ष्यसे ता गिरः सत्याः कर्तुं मयि नरेश्वर ।
यास्त्वया लोकपालानां संनिधौ कथिताः पुरा ॥ ००६ ॥

पर्याप्तः परिहासोऽयमेतावान्पुरुषर्षभ ।
भीताहमस्मि दुर्धर्ष दर्शयात्मानमीश्वर ॥ ००७ ॥

दृश्यसे दृश्यसे राजन्नेष तिष्ठसि नैषध ।
आवार्य गुल्मैरात्मानं किं मां न प्रतिभाषसे ॥ ००८ ॥

नृशंसं बत राजेन्द्र यन्मामेवङ्गतामिह ।
विलपन्तीं समालिङ्ग्य नाश्वासयसि पार्थिव ॥ ००९ ॥

न शोचाम्यहमात्मानं न चान्यदपि किञ्चन ।
कथं नु भवितास्येक इति त्वां नृप शोचिमि ॥ ०१० ॥

कथं नु राजंस्तृषितः क्षुधितः श्रमकर्शितः ।
सायाह्ने वृक्षमूलेषु मामपश्यन्भविष्यसि ॥ ०११ ॥

ततः सा तीव्रशोकार्ता प्रदीप्तेव च मन्युना ।
इतश्चेतश्च रुदती पर्यधावत दुःखिता ॥ ०१२ ॥

मुहुरुत्पतते बाला मुहुः पतति विह्वला ।
मुहुरालीयते भीता मुहुः क्रोशति रोदिति ॥ ०१३ ॥

सा तीव्रशोकसंतप्ता मुहुर्निःश्वस्य विह्वला ।
उवाच भैमी निष्क्रम्य रोदमाना पतिव्रता ॥ ०१४ ॥

यस्याभिशापाद्दुःखार्तो दुःखं विन्दति नैषधः ।
तस्य भूतस्य तद्दुःखाद्दुःखमभ्यधिकं भवेत् ॥ ०१५ ॥

अपापचेतसं पापो य एवं कृतवान्नलम् ।
तस्माद्दुःखतरं प्राप्य जीवत्वसुखजीविकाम् ॥ ०१६ ॥

एवं तु विलपन्ती सा राज्ञो भार्या महात्मनः ।
अन्वेषति स्म भर्तारं वने श्वापदसेविते ॥ ०१७ ॥

उन्मत्तवद्भीमसुता विलपन्ती ततस्ततः ।
हा हा राजन्निति मुहुरितश्चेतश्च धावति ॥ ०१८ ॥

तां शुष्यमाणामत्यर्थं कुररीमिव वाशतीम् ।
करुणं बहु शोचन्तीं विलपन्तीं मुहुर्मुहुः ॥ ०१९ ॥

सहसाभ्यागतां भैमीमभ्याशपरिवर्तिनीम् ।
जग्राहाजगरो ग्राहो महाकायः क्षुधान्वितः ॥ ०२० ॥

सा ग्रस्यमाना ग्राहेण शोकेन च पराजिता ।
नात्मानं शोचति तथा यथा शोचति नैषधम् ॥ ०२१ ॥

हा नाथ मामिह वने ग्रस्यमानामनाथवत् ।
ग्राहेणानेन विपिने किमर्थं नाभिधावसि ॥ ०२२ ॥

कथं भविष्यसि पुनर्मामनुस्मृत्य नैषध ।
पापान्मुक्तः पुनर्लब्ध्वा बुद्धिं चेतो धनानि च ॥ ०२३ ॥

श्रान्तस्य ते क्षुधार्तस्य परिग्लानस्य नैषध ।
कः श्रमं राजशार्दूल नाशयिष्यति मानद ॥ ०२४ ॥

तामकस्मान्मृगव्याधो विचरन्गहने वने ।
आक्रन्दतीमुपश्रुत्य जवेनाभिससार ह ॥ ०२५ ॥

तां स दृष्ट्वा तथा ग्रस्तामुरगेणायतेक्षणाम् ।
त्वरमाणो मृगव्याधः समभिक्रम्य वेगितः ॥ ०२६ ॥

मुखतः पातयामास शस्त्रेण निशितेन ह ।
निर्विचेष्टं भुजङ्गं तं विशस्य मृगजीवनः ॥ ०२७ ॥

मोक्षयित्वा च तां व्याधः प्रक्षाल्य सलिलेन च ।

समाश्वास्य कृताहारामथ पप्रच्छ भारत ॥ ०२८ ॥

कस्य त्वं मृगशावाक्षि कथं चाभ्यागता वनम् ।
कथं चेदं महत्कृच्छ्रं प्राप्तवत्यसि भामिनि ॥ ०२९ ॥

दमयन्ती तथा तेन पृच्छ्यमाना विशां पते ।
सर्वमेतद्यथावृत्तमाचचक्षेऽस्य भारत ॥ ०३० ॥

तामर्धवस्त्रसंवीतां पीनश्रोणिपयोधराम् ।
सुकुमारानवद्याङ्गीं पूर्णचन्द्रनिभाननाम् ॥ ०३१ ॥

अरालपक्ष्मनयनां तथा मधुरभाषिणीम् ।
लक्षयित्वा मृगव्याधः कामस्य वशमेयिवान् ॥ ०३२ ॥

तामथ श्लक्ष्णया वाचा लुब्धको मृदुपुर्वया ।
सान्त्वयामास कामार्तस्तदबुध्यत भामिनी ॥ ०३३ ॥

दमयन्ती तु तं दुष्टमुपलभ्य पतिव्रता ।
तीव्ररोषसमाविष्टा प्रजज्वालेव मन्युना ॥ ०३४ ॥

स तु पापमतिः क्षुद्रः प्रधर्षयितुमातुरः ।
दुर्धर्षां तर्कयामास दीप्तामग्निशिखामिव ॥ ०३५ ॥

दमयन्ती तु दुःखार्ता पतिराज्यविनाकृता ।
अतीतवाक्पथे काले शशापैनं रुषा किल ॥ ०३६ ॥

यथाहं नैषधादन्यं मनसापि न चिन्तये ।
तथायं पततां क्षुद्रः परासुर्मृगजीवनः ॥ ०३७ ॥

उक्तमात्रे तु वचने तया स मृगजीवनः ।
व्यसुः पपात मेदिन्यामग्निदग्ध इव द्रुमः ॥ ०३८ ॥

# अध्याय ०६१

बृहदश्व उवाच ॥

सा निहत्य मृगव्याधं प्रतस्थे कमलेक्षणा ।
वनं प्रतिभयं शून्यं झिल्लिकागणनादितम् ॥ ००१ ॥

सिंहव्याघ्रवराहर्क्षरुरुद्वीपिनिषेवितम् ।
नानापक्षिगणाकीर्णं म्लेच्छतस्करसेवितम् ॥ ००२ ॥

शालवेणुधवाश्वत्थतिन्दुकेङ्गुदकिंशुकैः ।
अर्जुनारिष्टसंछन्नं चन्दनैश्च सशाल्मलैः ॥ ००३ ॥

जम्ब्वाम्रलोध्रखदिरशाकवेत्रसमाकुलम् ।
काश्मर्यामलकप्लक्षकदम्बोदुम्बरावृतम् ॥ ००४ ॥

बदरीबिल्वसंछन्नं न्यग्रोधैश्च समाकुलम् ।
प्रियालतालखर्जूरहरीतकबिभीतकैः ॥ ००५ ॥

नानाधातुशतैर्नद्धान्विविधानपि चाचलान् ।
निकुञ्जान्पक्षिसंघुष्टान्दरीश्चाद्भुतदर्शनाः ॥ ००६ ॥

नदीः सरांसि वापीश्च विविधांश्च मृगद्विजान् ॥ ००६ ॥

सा बहून्भीमरूपांश्च पिशाचोरगराक्षसान् ।
पल्वलानि तडागानि गिरिकूटानि सर्वशः ॥ ००७ ॥

सरितः सागरांश्चैव ददर्शाद्भुतदर्शनान् ॥ ००७ ॥

यूथशो ददृशे चात्र विदर्भाधिपनन्दिनी ।
महिषान्वराहान्गोमायूनृक्षवानरपन्नगान् ॥ ००८ ॥

तेजसा यशसा स्थित्या श्रिया च परया युता ।
वैदर्भी विचरत्येका नलमन्वेषती तदा ॥ ००९ ॥

नाबिभ्यत्सा नृपसुता भैमी तत्राथ कस्यचित् ।
दारुणामटवीं प्राप्य भर्तृव्यसनकर्शिता ॥ ०१० ॥

विदर्भतनया राजन्विललाप सुदुःखिता ।
भर्तृशोकपरीताङ्गी शिलातलसमाश्रिता ॥ ०११ ॥

दमयन्त्युवाच ॥

सिंहोरस्क महाबाहो निषधानां जनाधिप ।
क्व नु राजन्गतोऽसीह त्यक्त्वा मां निर्जने वने ॥ ०१२ ॥

अश्वमेधादिभिर्वीर क्रतुभिः स्वाप्तदक्षिणैः ।
कथमिष्ट्वा नरव्याघ्र मयि मिथ्या प्रवर्तसे ॥ ०१३ ॥

यत्त्वयोक्तं नरव्याघ्र मत्समक्षं महाद्युते ।
कर्तुमर्हसि कल्याण तदृतं पार्थिवर्षभ ॥ ०१४ ॥

यथोक्तं विहगैर्हंसैः समीपे तव भूमिप ।
मत्सकाशे च तैरुक्तं तदवेक्षितुमर्हसि ॥ ०१५ ॥

चत्वार एकतो वेदाः साङ्गोपाङ्गाः सविस्तराः ।
स्वधीता मानवश्रेष्ठ सत्यमेकं किलैकतः ॥ ०१६ ॥

तस्मादर्हसि शत्रुघ्न सत्यं कर्तुं नरेश्वर ।
उक्तवानसि यद्वीर मत्सकाशे पुरा वचः ॥ ०१७ ॥

हा वीर ननु नामाहमिष्टा किल तवानघ ।
अस्यामटव्यां घोरायां किं मां न प्रतिभाषसे ॥ ०१८ ॥

भर्त्सयत्येष मां रौद्रो व्यात्तास्यो दारुणाकृतिः ।
अरण्यराड्क्षुधाविष्टः किं मां न त्रातुमर्हसि ॥ ०१९ ॥

न मे त्वदन्या सुभगे प्रिया इत्यब्रवीस्तदा ।
तामृतां कुरु कल्याण पुरोक्तां भारतीं नृप ॥ ०२० ॥

उन्मत्तां विलपन्तीं मां भार्यामिष्टां नराधिप ।
ईप्सितामीप्सितो नाथ किं मां न प्रतिभाषसे ॥ ०२१ ॥

कृशां दीनां विवर्णां च मलिनां वसुधाधिप ।
वस्त्रार्धप्रावृतामेकां विलपन्तीमनाथवत् ॥ ०२२ ॥

यूथभ्रष्टामिवैकां मां हरिणीं पृथुलोचन ।
न मानयसि मानार्ह रुदतीमरिकर्शन ॥ ०२३ ॥

महाराज महारण्ये मामिहैकाकिनीं सतीम् ।
आभाषमाणां स्वां पत्नीं किं मां न प्रतिभाषसे ॥ ०२४ ॥

कुलशीलोपसंपन्नं चारुसर्वाङ्गशोभनम् ।
नाद्य त्वामनुपश्यामि गिरावस्मिन्नरोत्तम ॥ ०२५ ॥

वने चास्मिन्महाघोरे सिंहव्याघ्रनिषेविते ॥ ०२५ ॥

शयानमुपविष्टं वा स्थितं वा निषधाधिप ।

प्रस्थितं वा नरश्रेष्ठ मम शोकविवर्धन ॥ ०२६ ॥

कं नु पृच्छामि दुःखार्ता त्वदर्थे शोककर्शिता ।
कच्चिद्दृष्टस्त्वयारण्ये सङ्गत्येह नलो नृपः ॥ ०२७ ॥

को नु मे कथयेदद्य वनेऽस्मिन्विष्ठितं नलम् ।
अभिरूपं महात्मानं परव्यूहविनाशनम् ॥ ०२८ ॥

यमन्वेषसि राजानं नलं पद्मनिभेक्षणम् ।
अयं स इति कस्याद्य श्रोष्यामि मधुरां गिरम् ॥ ०२९ ॥

अरण्यराडयं श्रीमांश्चतुर्दंष्ट्रो महाहनुः ।
शार्दूलोऽभिमुखः प्रैति पृच्छाम्येनमशङ्किता ॥ ०३० ॥

भवान्मृगाणामधिपस्त्वमस्मिन्कानने प्रभुः ।
विदर्भराजतनयां दमयन्तीति विद्धि माम् ॥ ०३१ ॥

निषधाधिपतेर्भार्यां नलस्यामित्रघातिनः ।
पतिमन्वेषतीमेकां कृपणां शोककर्शिताम् ॥ ०३२ ॥

आश्वासय मृगेन्द्रेह यदि दृष्टस्त्वया नलः ॥ ०३२ ॥

अथ वारण्यनृपते नलं यदि न शंससि ।
मामदस्व मृगश्रेष्ठ विशोकां कुरु दुःखिताम् ॥ ०३३ ॥

श्रुत्वारण्ये विलपितं ममैष मृगराड्वयम् ।
यात्येतां मृष्टसलिलामापगां सागरङ्गमाम् ॥ ०३४ ॥

इमं शिलोच्चयं पुण्यं शृङ्गैर्बहुभिरुच्छ्रितैः ।
विराजद्भिर्दिवस्पृग्भिर्नैकवर्णैर्मनोरमैः ॥ ०३५ ॥

नानाधातुसमाकीर्णं विविधोपलभूषितम् ।
अस्यारण्यस्य महतः केतुभूतमिवोच्छ्रितम्  ॥ ०३६  ॥

सिंहशार्दूलमातङ्गवराहर्क्षमृगायुतम् ।
पतत्रिभिर्बहुविधैः समन्तादनुनादितम्  ॥ ०३७  ॥

किंशुकाशोकबकुलपुंनागैरुपशोभितम् ।
सरिद्भिः सविहङ्गाभिः शिखरैश्चोपशोभितम्  ॥ ०३८  ॥

गिरिराजमिमं तावत्पृच्छामि नृपतिं प्रति  ॥ ०३८  ॥

भगवन्नचलश्रेष्ठ दिव्यदर्शन विश्रुत ।
शरण्य बहुकल्याण नमस्तेऽस्तु महीधर  ॥ ०३९  ॥

प्रणमे त्वाभिगम्याहं राजपुत्रीं निबोध माम् ।
राज्ञः स्नुषां राजभार्यां दमयन्तीति विश्रुताम्  ॥ ०४०  ॥

राजा विदर्भाधिपतिः पिता मम महारथः ।
भीमो नाम क्षितिपतिश्चातुर्वर्ण्यस्य रक्षिता  ॥ ०४१  ॥

राजसूयाश्वमेधानां क्रतूनां दक्षिणावताम् ।
आहर्ता पार्थिवश्रेष्ठः पृथुचार्वञ्चितेक्षणः  ॥ ०४२  ॥

ब्रह्मण्यः साधुवृत्तश्च सत्यवागनसूयकः ।
शीलवान्सुसमाचारः पृथुश्रीर्धर्मविच्छुचिः  ॥ ०४३  ॥

सम्यग्गोप्ता विदर्भाणां निर्जितारिगणः प्रभुः ।
तस्य मां विद्धि तनयां भगवंस्त्वामुपस्थिताम्  ॥ ०४४  ॥

निषधेषु महाशैल श्वशुरो मे नृपोत्तमः ।
सुगृहीतनामा विख्यातो वीरसेन इति स्म ह  ॥ ०४५  ॥

तस्य राज्ञः सुतो वीरः श्रीमान्सत्यपराक्रमः ।
क्रमप्राप्तं पितुः स्वं यो राज्यं समनुशास्ति ह ॥ ०४६ ॥

नलो नामारिदमनः पुण्यश्लोक इति श्रुतः ।
ब्रह्मण्यो वेदविद्वाग्मी पुण्यकृत्सोमपोऽग्निचित् ॥ ०४७ ॥

यष्टा दाता च योद्धा च सम्यक्चैव प्रशासिता ।
तस्य मामचलश्रेष्ठ विद्धि भार्यामिहागताम् ॥ ०४८ ॥

त्यक्तश्रियं भर्तृहीनामनाथां व्यसनान्विताम् ।
अन्वेषमाणां भर्तारं तं वै नरवरोत्तमम् ॥ ०४९ ॥

खमुल्लिखद्भिरेतैर्हि त्वया शृङ्गशतैर्नृपः ।
कच्चिद्दृष्टोऽचलश्रेष्ठ वनेऽस्मिन्दारुणे नलः ॥ ०५० ॥

गजेन्द्रविक्रमो धीमान्दीर्घबाहुरमर्षणः ।
विक्रान्तः सत्यवाग्धीरो भर्ता मम महायशाः ॥ ०५१ ॥

निषधानामधिपतिः कच्चिद्दृष्टस्त्वया नलः ॥ ०५१ ॥

किं मां विलपतीमेकां पर्वतश्रेष्ठ दुःखिताम् ।
गिरा नाश्वासयस्यद्य स्वां सुतामिव दुःखिताम् ॥ ०५२ ॥

वीर विक्रान्त धर्मज्ञ सत्यसंध महीपते ।
यद्यस्यस्मिन्वने राजन्दर्शयात्मानमात्मना ॥ ०५३ ॥

कदा नु स्निग्धगम्भीरां जीमूतस्वनसंनिभाम् ।
श्रोष्यामि नैषधस्याहं वाचंताममृतोपमाम् ॥ ०५४ ॥

वैदर्भीत्येव कथितां शुभां राज्ञो महात्मनः ।

आम्नायसारिणीमृद्धां मम शोकनिबर्हिणीम्  ॥ ०५५  ॥

इति सा तं गिरिश्रेष्ठमुक्त्वा पार्थिवनन्दिनी ।
दमयन्ती ततो भूयो जगाम दिशमुत्तराम्  ॥ ०५६  ॥

सा गत्वा त्रीनहोरात्रान्ददर्श परमाङ्गना ।
तापसारण्यमतुलं दिव्यकाननदर्शनम्  ॥ ०५७  ॥

वसिष्ठभृग्वत्रिसमैस्तापसैरुपशोभितम् ।
नियतैः संयताहारैर्दमशौचसमन्वितैः  ॥ ०५८  ॥

अब्भक्षैर्वायुभक्षैश्च पत्राहारैस्तथैव च ।
जितेन्द्रियैर्महाभागैः स्वर्गमार्गदिदृक्षुभिः  ॥ ०५९  ॥

वल्कलाजिनसंवीतैर्मुनिभिः संयतेन्द्रियैः ।
तापसाध्युषितं रम्यं ददर्शाश्रममण्डलम्  ॥ ०६०  ॥

सा दृष्ट्वैवाश्रमपदं नानामृगनिषेवितम् ।
शाखामृगगणैश्चैव तापसैश्च समन्वितम्  ॥ ०६१  ॥

सुभ्रूः सुकेशी सुश्रोणी सुकुचा सुद्विजानना ।
वर्चस्विनी सुप्रतिष्ठा स्वञ्चितोद्यतगामिनी  ॥ ०६२  ॥

सा विवेशाश्रमपदं वीरसेनसुतप्रिया ।
योषिद्रत्नं महाभागा दमयन्ती मनस्विनी  ॥ ०६३  ॥

साभिवाद्य तपोवृद्धान्विनयावनता स्थिता ।
स्वागतं त इति प्रोक्ता तैः सर्वैस्तापसैश्च सा  ॥ ०६४  ॥

पूजां चास्या यथान्यायं कृत्वा तत्र तपोधनाः ।
आस्यतामित्यथोचुस्ते ब्रूहि किं करवामहे  ॥ ०६५  ॥

तानुवाच वरारोहा कच्चिद्भगवतामिह ।
तपस्यग्निषु धर्मेषु मृगपक्षिषु चानघाः ॥ ०६६ ॥

कुशलं वो महाभागाः स्वधर्मचरणेषु च ॥ ०६६ ॥

तैरुक्ता कुशलं भद्रे सर्वत्रेति यशस्विनी ।
ब्रूहि सर्वानवद्याङ्गि का त्वं किं च चिकीर्षसि ॥ ०६७ ॥

दृष्ट्वैव ते परं रूपं द्युतिं च परमामिह ।
विस्मयो नः समुत्पन्नः समाश्वसिहि मा शुचः ॥ ०६८ ॥

अस्यारण्यस्य महती देवता वा महीभृतः ।
अस्या नु नद्याः कल्याणि वद सत्यमनिन्दिते ॥ ०६९ ॥

साब्रवीत्तानृषीन्नाहमरण्यस्यास्य देवता ।
न चाप्यस्य गिरेर्विप्रा न नद्या देवताप्यहम् ॥ ०७० ॥

मानुषीं मां विजानीत यूयं सर्वे तपोधनाः ।
विस्तरेणाभिधास्यामि तन्मे शृणुत सर्वशः ॥ ०७१ ॥

विदर्भेषु महीपालो भीमो नाम महाद्युतिः ।
तस्य मां तनयां सर्वे जानीत द्विजसत्तमाः ॥ ०७२ ॥

निषधाधिपतिर्धीमान्नलो नाम महायशाः ।
वीरः सङ्ग्रामजिद्विद्वान्मम भर्ता विशां पतिः ॥ ०७३ ॥

देवताभ्यर्चनपरो द्विजातिजनवत्सलः ।
गोप्ता निषधवंशस्य महाभागो महाद्युतिः ॥ ०७४ ॥

सत्यवाग्धर्मवित्प्राज्ञः सत्यसंधोऽरिमर्दनः ।

ब्रह्मण्यो दैवतपरः श्रीमान्परपुरञ्जयः ॥ ०७५ ॥

नलो नाम नृपश्रेष्ठो देवराजसमद्युतिः ।
मम भर्ता विशालाक्षः पूर्णेन्दुवदनोऽरिहा ॥ ०७६ ॥

आहर्ता क्रतुमुख्यानां वेदवेदाङ्गपारगः ।
सपत्नानां मृधे हन्ता रविसोमसमप्रभः ॥ ०७७ ॥

स कैश्चिन्निकृतिप्रज्ञैरकल्याणैर्नराधमैः ।
आहूय पृथिवीपालः सत्यधर्मपरायणः ॥ ०७८ ॥

देवने कुशलैर्जिह्मैर्जितो राज्यं वसूनि च ॥ ०७८ ॥

तस्य मामवगच्छध्वं भार्यां राजर्षभस्य वै ।
दमयन्तीति विख्यातां भर्तृदर्शनलालसाम् ॥ ०७९ ॥

सा वनानि गिरींश्चैव सरांसि सरितस्तथा ।
पल्वलानि च रम्याणि तथारण्यानि सर्वशः ॥ ०८० ॥

अन्वेषमाणा भर्तारं नलं रणविशारदम् ।
महात्मानं कृतास्त्रं च विचरामीह दुःखिता ॥ ०८१ ॥

कच्चिद्भगवतां पुण्यं तपोवनमिदं नृपः ।
भवेत्प्राप्तो नलो नाम निषधानां जनाधिपः ॥ ०८२ ॥

यत्कृतेऽहमिदं विप्राः प्रपन्ना भृशदारुणम् ।
वनं प्रतिभयं घोरं शार्दूलमृगसेवितम् ॥ ०८३ ॥

यदि कैश्चिदहोरात्रैर्न द्रक्ष्यामि नलं नृपम् ।
आत्मानं श्रेयसा योक्ष्ये देहस्यास्य विमोचनात् ॥ ०८४ ॥

को नु मे जीवितेनार्थस्तमृते पुरुषर्षभम् ।
कथं भविष्याम्यद्याहं भर्तृशोकाभिपीडिता ॥ ०८५ ॥

एवं विलपतीमेकामरण्ये भीमनन्दिनीम् ।
दमयन्तीमथोचुस्ते तापसाः सत्यवादिनः ॥ ०८६ ॥

उदर्कस्तव कल्याणि कल्याणो भविता शुभे ।
वयं पश्याम तपसा क्षिप्रं द्रक्ष्यसि नैषधम् ॥ ०८७ ॥

निषधानामधिपतिं नलं रिपुनिघातिनम् ।
भैमि धर्मभृतां श्रेष्ठं द्रक्ष्यसे विगतज्वरम् ॥ ०८८ ॥

विमुक्तं सर्वपापेभ्यः सर्वरत्नसमन्वितम् ।
तदेव नगरश्रेष्ठं प्रशासन्तमरिंदमम् ॥ ०८९ ॥

द्विषतां भयकर्तारं सुहृदां शोकनाशनम् ।
पतिं द्रक्ष्यसि कल्याणि कल्याणाभिजनं नृपम् ॥ ०९० ॥

एवमुक्त्वा नलस्येष्टां महिषीं पार्थिवात्मजाम् ।
अन्तर्हितास्तापसास्ते साग्निहोत्राश्रमास्तदा ॥ ०९१ ॥

सा दृष्ट्वा महदाश्चर्यं विस्मिता अभवत्तदा ।
दमयन्त्यनवद्याङ्गी वीरसेननृपस्नुषा ॥ ०९२ ॥

किं नु स्वप्नो मया दृष्टः कोऽयं विधिरिहाभवत् ।
क्व नु ते तापसाः सर्वे क्व तदाश्रममण्डलम् ॥ ०९३ ॥

क्व सा पुण्यजला रम्या नानाद्विजनिषेविता ।
नदी ते च नगा हृद्याः फलपुष्पोपशोभिताः ॥ ०९४ ॥

ध्यात्वा चिरं भीमसुता दमयन्ती शुचिस्मिता ।

भर्तृशोकपरा दीना विवर्णवदनाभवत् ॥ ०९५ ॥

सा गत्वाथापरां भूमिं बाष्पसंदिग्धया गिरा ।
विललापाश्रुपूर्णाक्षी दृष्ट्वाशोकतरुं ततः ॥ ०९६ ॥

उपगम्य तरुश्रेष्ठमशोकं पुष्पितं तदा ।
पल्लवापीडितं हृद्यं विहङ्गैरनुनादितम् ॥ ०९७ ॥

अहो बतायमगमः श्रीमानस्मिन्वनान्तरे ।
आपीडैर्बहुभिर्भाति श्रीमान्द्रमिडराडिव ॥ ०९८ ॥

विशोकां कुरु मां क्षिप्रमशोक प्रियदर्शन ।
वीतशोकभयाबाधं कच्चित्त्वं दृष्टवान्नृपम् ॥ ०९९ ॥

नलं नामारिदमनं दमयन्त्याः प्रियं पतिम् ।
निषधानामधिपतिं दृष्टवानसि मे प्रियम् ॥ १०० ॥

एकवस्त्रार्धसंवीतं सुकुमारतनुत्वचम् ।
व्यसनेनार्दितं वीरमरण्यमिदमागतम् ॥ १०१ ॥

यथा विशोका गच्छेयमशोकनग तत्कुरु ।
सत्यनामा भवाशोक मम शोकविनाशनात् ॥ १०२ ॥

एवं साशोकवृक्षं तमार्ता त्रिः परिगम्य ह ।
जगाम दारुणतरं देशं भैमी वराङ्गना ॥ १०३ ॥

सा ददर्श नगान्नैकान्नैकाश्च सरितस्तथा ।
नैकांश्च पर्वतान्रम्यान्नैकांश्च मृगपक्षिणः ॥ १०४ ॥

कन्दरांश्च नितम्बांश्च नदांश्चाद्भुतदर्शनान् ।
ददर्श सा भीमसुता पतिमन्वेषती तदा ॥ १०५ ॥

गत्वा प्रकृष्टमध्वानं दमयन्ती शुचिस्मिता ।
ददर्शाथ महासार्थं हस्त्यश्वरथसङ्कुलम्  ॥ १०६  ॥

उत्तरन्तं नदीं रम्यां प्रसन्नसलिलां शुभाम् ।
सुशीततोयां विस्तीर्णां ह्रदिनीं वेतसैर्वृताम्  ॥ १०७  ॥

प्रोद्घुष्टां क्रौञ्चकुररैश्चक्रवाकोपकूजिताम् ।
कूर्मग्राहझषाकीर्णां पुलिनद्वीपशोभिताम्  ॥ १०८  ॥

सा दृष्ट्वैव महासार्थं नलपत्नी यशस्विनी ।
उपसर्प्य वरारोहा जनमध्यं विवेश ह  ॥ १०९  ॥

उन्मत्तरूपा शोकार्ता तथा वस्त्रार्धसंवृता ।
कृशा विवर्णा मलिना पांसुध्वस्तशिरोरुहा  ॥ ११०  ॥

तां दृष्ट्वा तत्र मनुजाः केचिद्भीताः प्रदुद्रुवुः ।
केचिच्चिन्तापरास्तस्थुः केचित्तत्र विचुक्रुशुः  ॥ १११  ॥

प्रहसन्ति स्म तां केचिदभ्यसूयन्त चापरे ।
चक्रुस्तस्यां दयां केचित्पप्रच्छुश्चापि भारत  ॥ ११२  ॥

कासि कस्यासि कल्याणि किं वा मृगयसे वने ।
त्वां दृष्ट्वा व्यथिताः स्मेह कच्चित्त्वमसि मानुषी  ॥ ११३  ॥

वद सत्यं वनस्यास्य पर्वतस्याथ वा दिशः ।
देवता त्वं हि कल्याणि त्वां वयं शरणं गताः  ॥ ११४  ॥

यक्षी वा राक्षसी वा त्वमुताहोऽसि वराङ्गना ।
सर्वथा कुरु नः स्वस्ति रक्षस्वास्माननिन्दिते  ॥ ११५  ॥

यथायं सर्वथा सार्थः क्षेमी शीघ्रमितो व्रजेत् ।
तथा विधत्स्व कल्याणि त्वां वयं शरणं गताः ॥ ११६ ॥

तथोक्ता तेन सार्थेन दमयन्ती नृपात्मजा ।
प्रत्युवाच ततः साध्वी भर्तृव्यसनदुःखिता ॥ ११७ ॥

सार्थवाहं च सार्थं च जना ये चात्र केचन ॥ ११७ ॥

यूनः स्थविरबालाश्च सार्थस्य च पुरोगमाः ।
मानुषीं मां विजानीत मनुजाधिपतेः सुताम् ॥ ११८ ॥

नृपस्नुषां राजभार्यां भर्तृदर्शनलालसाम् ॥ ११८ ॥

विदर्भराण्मम पिता भर्ता राजा च नैषधः ।
नलो नाम महाभागस्तं मार्गाम्यपराजितम् ॥ ११९ ॥

यदि जानीत नृपतिं क्षिप्रं शंसत मे प्रियम् ।
नलं पार्थिवशार्दूलममित्रगणसूदनम् ॥ १२० ॥

तामुवाचानवद्याङ्गीं सार्थस्य महतः प्रभुः ।
सार्थवाहः शुचिर्नाम श‍ृणु कल्याणि मद्वचः ॥ १२१ ॥

अहं सार्थस्य नेता वै सार्थवाहः शुचिस्मिते ।
मनुष्यं नलनामानं न पश्यामि यशस्विनि ॥ १२२ ॥

कुञ्जरद्वीपिमहिषशार्दूलर्क्षमृगानपि ।
पश्याम्यस्मिन्वने कष्टे अमनुष्यनिषेविते ॥ १२३ ॥

तथा नो यक्षराडद्य मणिभद्रः प्रसीदतु ॥ १२३ ॥

साब्रवीद्वणिजः सर्वान्सार्थवाहं च तं ततः ।

क्व नु यास्यसि सार्थोऽयमेतदाख्यातुमर्हथ ॥ १२४ ॥

सार्थवाह उवाच ॥

सार्थोऽयं चेदिराजस्य सुबाहोः सत्यवादिनः ।
क्षिप्रं जनपदं गन्ता लाभाय मनुजात्मजे ॥ १२५ ॥

---

# अध्याय ०६२

बृहदश्व उवाच ॥

सा तच्छ्रुत्वानवद्याङ्गी सार्थवाहवचस्तदा ।
अगच्छत्तेन वै सार्धं भर्तृदर्शनलालसा ॥ ००१ ॥

अथ काले बहुतिथे वने महति दारुणे ।
तडागं सर्वतोभद्रं पद्मसौगन्धिकं महत् ॥ ००२ ॥

ददृशुर्वणिजो रम्यं प्रभूतयवसेन्धनम् ।
बहुमूलफलोपेतं नानापक्षिगणैर्वृतम् ॥ ००३ ॥

तं दृष्ट्वा मृष्टसलिलं मनोहरसुखावहम् ।
सुपरिश्रान्तवाहास्ते निवेशाय मनो दधुः ॥ ००४ ॥

संमते सार्थवाहस्य विविशुर्वनमुत्तमम् ।
उवास सार्थः सुमहान्वेलामासाद्य पश्चिमाम् ॥ ००५ ॥

अथार्धरात्रसमये निःशब्दस्तिमिते तदा ।

सुप्ते सार्थे परिश्रान्ते हस्तियूथमुपागमत् ॥ ००६ ॥

पानीयार्थं गिरिनदीं मदप्रस्रवणाविलाम् ॥ ००६ ॥

मार्गं संरुध्य संसुप्तं पद्मिन्याः सार्थमुत्तमम् ।
सुप्तं ममर्द सहसा चेष्टमानं महीतले ॥ ००७ ॥

हाहारवं प्रमुञ्चन्तः सार्थिकाः शरणार्थिनः ।
वनगुल्मांश्च धावन्तो निद्रान्धा महतो भयात् ॥ ००८ ॥

केचिद्दन्तैः करैः केचित्केचित्पद्भ्यां हता नराः ॥ ००८ ॥

गोखरोष्ट्राश्वबहुलं पदातिजनसङ्कुलम् ।
भयार्तं धावमानं तत्परस्परहतं तदा ॥ ००९ ॥

घोरान्नादान्विमुञ्चन्तो निपेतुर्धरणीतले ।
वृक्षेष्वासज्य संभग्नाः पतिता विषमेषु च ॥ ०१० ॥

तथा तन्निहतं सर्वं समृद्धं सार्थमण्डलम् ॥ ०१० ॥

अथापरेद्युः संप्राप्ते हतशिष्टा जनास्तदा ।
वनगुल्माद्विनिष्क्रम्य शोचन्तो वैशसं कृतम् ॥ ०११ ॥

भ्रातरं पितरं पुत्रं सखायं च जनाधिप ॥ ०११ ॥

अशोचत्तत्र वैदर्भी किं नु मे दुष्कृतं कृतम् ।
योऽपि मे निर्जनेऽरण्ये संप्राप्तोऽयं जनार्णवः ॥ ०१२ ॥

हतोऽयं हस्तियूथेन मन्दभाग्यान्ममैव तु ॥ ०१२ ॥

प्राप्तव्यं सुचिरं दुःखं मया नूनमसंशयम् ।

नाप्राप्तकालो म्रियते श्रुतं वृद्धानुशासनम्  ॥ ०१३  ॥

यन्नाहमद्य मृदिता हस्तियूथेन दुःखिता ।
न ह्यदैवकृतं किञ्चिन्नराणामिह विद्यते  ॥ ०१४  ॥

न च मे बालभावेऽपि किञ्चिद्व्यपकृतं कृतम् ।
कर्मणा मनसा वाचा यदिदं दुःखमागतम्  ॥ ०१५  ॥

मन्ये स्वयंवरकृते लोकपालाः समागताः ।
प्रत्याख्याता मया तत्र नलस्यार्थाय देवताः  ॥ ०१६  ॥

नूनं तेषां प्रभावेन वियोगं प्राप्तवत्यहम्  ॥ ०१६  ॥

एवमादीनि दुःखानि सा विलप्य वराङ्गना ।
हतशिष्टैः सह तदा ब्राह्मणैर्वेदपारगैः  ॥ ०१७  ॥

अगच्छद्राजशार्दूल दुःखशोकपरायणा  ॥ ०१७  ॥

गच्छन्ती सा चिरात्कालात्पुरमासादयन्महत् ।
सायाह्ने चेदिराजस्य सुबाहोः सत्यवादिनः  ॥ ०१८  ॥

वस्त्रार्धकर्तसंवीता प्रविवेश पुरोत्तमम्  ॥ ०१८  ॥

तां विवर्णां कृशां दीनां मुक्तकेशीममार्जनाम् ।
उन्मत्तामिव गच्छन्तीं ददृशुः पुरवासिनः  ॥ ०१९  ॥

प्रविशन्तीं तु तां दृष्ट्वा चेदिराजपुरीं तदा ।
अनुजग्मुस्ततो बाला ग्रामिपुत्राः कुतूहलात्  ॥ ०२०  ॥

सा तैः परिवृतागच्छत्समीपं राजवेश्मनः ।
तां प्रासादगतापश्यद्राजमाता जनैर्वृताम्  ॥ ०२१  ॥

सा जनं वारयित्वा तं प्रासादतलमुत्तमम् ।
आरोप्य विस्मिता राजन्दमयन्तीमपृच्छत ॥ ०२२ ॥

एवमप्यसुखाविष्टा बिभर्षि परमं वपुः ।
भासि विद्युदिवाभ्रेषु शंस मे कासि कस्य वा ॥ ०२३ ॥

न हि ते मानुषं रूपं भूषणैरपि वर्जितम् ।
असहाया नरेभ्यश्च नोद्विजस्यमरप्रभे ॥ ०२४ ॥

तच्छ्रुत्वा वचनं तस्या भैमी वचनमब्रवीत् ।
मानुषीं मां विजानीहि भर्तारं समनुव्रताम् ॥ ०२५ ॥

सैरन्ध्रीं जातिसंपन्नां भुजिष्यां कामवासिनीम् ।
फलमूलाशनामेकां यत्रसायंप्रतिश्रयाम् ॥ ०२६ ॥

असंख्येयगुणो भर्ता मां च नित्यमनुव्रतः ।
भर्तारमपि तं वीरं छायेवानपगा सदा ॥ ०२७ ॥

तस्य दैवात्प्रसङ्गोऽभूदतिमात्रं स्म देवने ।
द्यूते स निर्जितश्चैव वनमेकोऽभ्युपेयिवान् ॥ ०२८ ॥

तमेकवसनं वीरमुन्मत्तमिव विह्वलम् ।
आश्वासयन्ती भर्तारमहमन्वगमं वनम् ॥ ०२९ ॥

स कदाचिद्वने वीरः कस्मिंश्चित्कारणान्तरे ।
क्षुत्परीतः सुविमनास्तदप्येकं व्यसर्जयत् ॥ ०३० ॥

तमेकवसनं नग्नमुन्मत्तं गतचेतसम् ।
अनुव्रजन्ती बहुला न स्वपामि निशाः सदा ॥ ०३१ ॥

ततो बहुतिथे काले सुप्तामुत्सृज्य मां क्वचित् ।
वाससोऽर्धं परिच्छिद्य त्यक्तवान्मामनागसम् ॥ ०३२ ॥

तं मार्गमाणा भर्तारं दह्यमाना दिनक्षपाः ।
न विन्दाम्यमरप्रख्यं प्रियं प्राणधनेश्वरम् ॥ ०३३ ॥

तामश्रुपरिपूर्णाक्षीं विलपन्तीं तथा बहु ।
राजमाताब्रवीदार्तां भैमीमार्ततरा स्वयम् ॥ ०३४ ॥

वसस्व मयि कल्याणि प्रीतिर्मे त्वयि वर्तते ।
मृगयिष्यन्ति ते भद्रे भर्तारं पुरुषा मम ॥ ०३५ ॥

अथ वा स्वयमागच्छेत्परिधावन्नितस्ततः ।
इहैव वसती भद्रे भर्तारमुपलप्स्यसे ॥ ०३६ ॥

राजमातुर्वचः श्रुत्वा दमयन्ती वचोऽब्रवीत् ।
समयेनोत्सहे वस्तुं त्वयि वीरप्रजायिनि ॥ ०३७ ॥

उच्छिष्टं नैव भुञ्जीयां न कुर्यां पादधावनम् ।
न चाहं पुरुषानन्यान्संभाषेयं कथञ्चन ॥ ०३८ ॥

प्रार्थयेद्यदि मां कश्चिद्दण्ड्यस्ते स पुमान्भवेत् ।
भर्तुरन्वेषणार्थं तु पश्येयं ब्राह्मणानहम् ॥ ०३९ ॥

यद्येवमिह कर्तव्यं वसाम्यहमसंशयम् ।
अतोऽन्यथा न मे वासो वर्तते हृदये क्वचित् ॥ ०४० ॥

तां प्रहृष्टेन मनसा राजमातेदमब्रवीत् ।
सर्वमेतत्करिष्यामि दिष्ट्या ते व्रतमीदृशम् ॥ ०४१ ॥

एवमुक्त्वा ततो भैमीं राजमाता विशां पते ।

उवाचेदं दुहितरं सुनन्दां नाम भारत ॥ ०४२ ॥

सैरन्ध्रीमभिजानीष्व सुनन्दे देवरूपिणीम् ।
एतया सह मोदस्व निरुद्विग्नमनाः स्वयम् ॥ ०४३ ॥

---

# अध्याय ०६३

बृहदश्व उवाच ॥

उत्सृज्य दमयन्तीं तु नलो राजा विशां पते ।
ददर्श दावं दह्यन्तं महान्तं गहने वने ॥ ००१ ॥

तत्र शुश्राव मध्येऽग्नौ शब्दं भूतस्य कस्यचित् ।
अभिधाव नलेत्युच्चैः पुण्यश्लोकेति चासकृत् ॥ ००२ ॥

मा भैरिति नलश्चोक्त्वा मध्यमग्नेः प्रविश्य तम् ।
ददर्श नागराजानं शयानं कुण्डलीकृतम् ॥ ००३ ॥

स नागः प्राञ्जलिर्भूत्वा वेपमानो नलं तदा ।
उवाच विद्धि मां राजन्नागं कर्कोटकं नृप ॥ ००४ ॥

मया प्रलब्धो ब्रह्मर्षिरनागाः सुमहातपाः ।
तेन मन्युपरीतेन शप्तोऽस्मि मनुजाधिप ॥ ००५ ॥

तस्य शापान्न शक्नोमि पदाद्विचलितुं पदम् ।
उपदेक्ष्यामि ते श्रेयस्त्रातुमर्हति मां भवान् ॥ ००६ ॥

सखा च ते भविष्यामि मत्समो नास्ति पन्नगः ।

लघुश्च ते भविष्यामि शीघ्रमादाय गच्छ माम्  ॥ ००७  ॥

एवमुक्त्वा स नागेन्द्रो बभूवाङ्गुष्ठमात्रकः ।
तं गृहीत्वा नलः प्रायादुद्देशं दाववर्जितम्  ॥ ००८  ॥

आकाशदेशमासाद्य विमुक्तं कृष्णवर्त्मना ।
उत्स्रष्टुकामं तं नागः पुनः कर्कोटकोऽब्रवीत्  ॥ ००९  ॥

पदानि गणयन्गच्छ स्वानि नैषध कानिचित् ।
तत्र तेऽहं महाराज श्रेयो धास्यामि यत्परम्  ॥ ०१०  ॥

ततः संख्यातुमारब्धमदशद्दशमे पदे ।
तस्य दष्टस्य तद्रूपं क्षिप्रमन्तरधीयत  ॥ ०११  ॥

स दृष्ट्वा विस्मितस्तस्थावात्मानं विकृतं नलः ।
स्वरूपधारिणं नागं ददर्श च महीपतिः  ॥ ०१२  ॥

ततः कर्कोटको नागः सान्त्वयन्नलमब्रवीत् ।
मया तेऽन्तर्हितं रूपं न त्वा विद्युर्जना इति  ॥ ०१३  ॥

यत्कृते चासि विकृतो दुःखेन महता नल ।
विषेण स मदीयेन त्वयि दुःखं निवत्स्यति  ॥ ०१४  ॥

विषेण संवृतैर्गात्रैर्यावत्त्वां न विमोक्ष्यति ।
तावत्त्वयि महाराज दुःखं वै स निवत्स्यति  ॥ ०१५  ॥

अनागा येन निकृतस्त्वमनर्हो जनाधिप ।
क्रोधादसूययित्वा तं रक्षा मे भवतः कृता  ॥ ०१६  ॥

न ते भयं नरव्याघ्र दंष्ट्रिभ्यः शत्रुतोऽपि वा ।
ब्रह्मविद्भ्यश्च भविता मत्प्रसादान्नराधिप  ॥ ०१७  ॥

राजन्विषनिमित्ता च न ते पीडा भविष्यति ।
सङ्ग्रामेषु च राजेन्द्र शश्वज्जयमवाप्स्यसि ॥ ०१८ ॥

गच्छ राजन्नितः सूतो बाहुकोऽहमिति ब्रुवन् ।
समीपमृतुपर्णस्य स हि वेदाक्षनैपुणम् ॥ ०१९ ॥

अयोध्यां नगरीं रम्यामद्यैव निषधेश्वर ॥ ०१९ ॥

स तेऽक्षहृदयं दाता राजाश्वहृदयेन वै ।
इक्ष्वाकुकुलजः श्रीमान्मित्रं चैव भविष्यति ॥ ०२० ॥

भविष्यसि यदाक्षज्ञः श्रेयसा योक्ष्यसे तदा ।
समेष्यसि च दारैस्त्वं मा स्म शोके मनः कृथाः ॥ ०२१ ॥

राज्येन तनयाभ्यां च सत्यमेतद्ब्रवीमि ते ॥ ०२१ ॥

स्वरूपं च यदा द्रष्टुमिच्छेथास्त्वं नराधिप ।
संस्मर्तव्यस्तदा तेऽहं वासश्चेदं निवासयेः ॥ ०२२ ॥

अनेन वाससाच्छन्नः स्वरूपं प्रतिपत्स्यसे ।
इत्युक्त्वा प्रददावस्मै दिव्यं वासोयुगं तदा ॥ ०२३ ॥

एवं नलं समादिश्य वासो दत्त्वा च कौरव ।
नागराजस्ततो राजंस्तत्रैवान्तरधीयत ॥ ०२४ ॥

# अध्याय ०६४

बृहदश्व उवाच ॥

तस्मिन्नन्तर्हिते नागे प्रययौ नैषधो नलः ।
ऋतुपर्णस्य नगरं प्राविशद्दशमेऽहनि ॥ ००१ ॥

स राजानमुपातिष्ठद्बाहुकोऽहमिति ब्रुवन् ।
अश्वानां वाहने युक्तः पृथिव्यां नास्ति मत्समः ॥ ००२ ॥

अर्थकृच्छ्रेषु चैवाहं प्रष्टव्यो नैपुणेषु च ।
अन्नसंस्कारमपि च जानाम्यन्यैर्विशेषतः ॥ ००३ ॥

यानि शिल्पानि लोकेऽस्मिन्यच्चाप्यन्यत्सुदुष्करम् ।
सर्वं यतिष्ये तत्कर्तुमृतुपर्ण भरस्व माम् ॥ ००४ ॥

ऋतुपर्ण उवाच ॥

वस बाहुक भद्रं ते सर्वमेतत्करिष्यसि ।
शीघ्रयाने सदा बुद्धिर्धीयते मे विशेषतः ॥ ००५ ॥

स त्वमातिष्ठ योगं तं येन शीघ्रा हया मम ।
भवेयुरश्वाध्यक्षोऽसि वेतनं ते शतं शताः ॥ ००६ ॥

त्वामुपस्थास्यतश्चेमौ नित्यं वार्ष्णेयजीवलौ ।
एताभ्यां रंस्यसे सार्धं वस वै मयि बाहुक ॥ ००७ ॥

बृहदश्व उवाच ॥

एवमुक्तो नलस्तेन न्यवसत्तत्र पूजितः ।
ऋतुपर्णस्य नगरे सहवार्ष्णेयजीवलः ॥ ००८ ॥

स तत्र निवसन्राजा वैदर्भीमनुचिन्तयन् ।
सायं सायं सदा चेमं श्लोकमेकं जगाद ह ॥ ००९ ॥

क्व नु सा क्षुत्पिपासार्ता श्रान्ता शेते तपस्विनी ।
स्मरन्ती तस्य मन्दस्य कं वा साद्योपतिष्ठति ॥ ०१० ॥

एवं ब्रुवन्तं राजानं निशायां जीवलोऽब्रवीत् ।
कामेनां शोचसे नित्यं श्रोतुमिच्छामि बाहुक ॥ ०११ ॥

तमुवाच नलो राजा मन्दप्रज्ञस्य कस्यचित् ।
आसीद्बहुमता नारी तस्या दृढतरं च सः ॥ ०१२ ॥

स वै केनचिदर्थेन तया मन्दो व्ययुज्यत ।
विप्रयुक्तश्च मन्दात्मा भ्रमत्यसुखपीडितः ॥ ०१३ ॥

दह्यमानः स शोकेन दिवारात्रमतन्द्रितः ।
निशाकाले स्मरंस्तस्याः श्लोकमेकं स्म गायति ॥ ०१४ ॥

स वै भ्रमन्महीं सर्वां क्वचिदासाद्य किञ्चन ।
वसत्यनर्हस्तद्दुःखं भूय एवानुसंस्मरन् ॥ ०१५ ॥

सा तु तं पुरुषं नारी कृच्छ्रेऽप्यनुगता वने ।
त्यक्ता तेनाल्पपुण्येन दुष्करं यदि जीवति ॥ ०१६ ॥

एका बालानभिज्ञा च मार्गाणामतथोचिता ।
क्षुत्पिपासापरीता च दुष्करं यदि जीवति ॥ ०१७ ॥

श्वापदाचरिते नित्यं वने महति दारुणे ।
त्यक्ता तेनाल्पपुण्येन मन्दप्रज्ञेन मारिष ॥ ०१८ ॥

इत्येवं नैषधो राजा दमयन्तीमनुस्मरन् ।

अज्ञातवासमवसद्राज्ञस्तस्य निवेशने ॥ ०१९ ॥

---

# अध्याय ०६५

बृहदश्व उवाच ॥

हृतराज्ये नले भीमः सभार्ये प्रेष्यतां गते ।
द्विजान्प्रस्थापयामास नलदर्शनकाङ्क्षया ॥ ००१ ॥

संदिदेश च तान्भीमो वसु दत्त्वा च पुष्कलम् ।
मृगयध्वं नलं चैव दमयन्तीं च मे सुताम् ॥ ००२ ॥

अस्मिन्कर्मणि निष्पन्ने विज्ञाते निषधाधिपे ।
गवां सहस्रं दास्यामि यो वस्तावानयिष्यति ॥ ००३ ॥

अग्रहारं च दास्यामि ग्रामं नगरसंमितम् ॥ ००३ ॥

न चेच्छक्याविहानेतुं दमयन्ती नलोऽपि वा ।
ज्ञातमात्रेऽपि दास्यामि गवां दशशतं धनम् ॥ ००४ ॥

इत्युक्तास्ते ययुर्हृष्टा ब्राह्मणाः सर्वतोदिशम् ।
पुरराष्ट्राणि चिन्वन्तो नैषधं सह भार्यया ॥ ००५ ॥

ततश्चेदिपुरीं रम्यां सुदेवो नाम वै द्विजः ।
विचिन्वानोऽथ वैदर्भीमपश्यद्राजवेश्मनि ॥ ००६ ॥

पुण्याहवाचने राज्ञः सुनन्दासहितां स्थिताम् ॥ ००६ ॥

मन्दप्रख्यायमानेन रूपेणाप्रतिमेन ताम् ।
पिनद्धां धूमजालेन प्रभामिव विभावसोः ॥ ००७ ॥

तां समीक्ष्य विशालाक्षीमधिकं मलिनां कृशाम् ।
तर्कयामास भैमीति कारणैरुपपादयन् ॥ ००८ ॥

सुदेव उवाच ॥

यथेयं मे पुरा दृष्टा तथारूपेयमङ्गना ।
कृतार्थोऽस्म्यद्य दृष्ट्वेमां लोककान्तामिव श्रियम् ॥ ००९ ॥

पूर्णचन्द्राननां श्यामां चारुवृत्तपयोधराम् ।
कुर्वन्तीं प्रभया देवीं सर्वा वितिमिरा दिशः ॥ ०१० ॥

चारुपद्मपलाशाक्षीं मन्मथस्य रतीमिव ।
इष्टां सर्वस्य जगतः पूर्णचन्द्रप्रभामिव ॥ ०११ ॥

विदर्भसरसस्तस्माद्दैवदोषादिवोद्धृताम् ।
मलपङ्कानुलिप्ताङ्गीं मृणालीमिव तां भृशम् ॥ ०१२ ॥

पौर्णमासीमिव निशां राहुग्रस्तनिशाकराम् ।
पतिशोकाकुलां दीनां शुष्कस्रोतां नदीमिव ॥ ०१३ ॥

विध्वस्तपर्णकमलां वित्रासितविहङ्गमाम् ।
हस्तिहस्तपरिक्लिष्टां व्याकुलामिव पद्मिनीम् ॥ ०१४ ॥

सुकुमारीं सुजाताङ्गीं रत्नगर्भगृहोचिताम् ।
दह्यमानामिवोष्णेन मृणालीमचिरोद्धृताम् ॥ ०१५ ॥

रूपौदार्यगुणोपेतां मण्डनार्हाममण्डिताम् ।
चन्द्रलेखामिव नवां व्योम्नि नीलाभ्रसंवृताम् ॥ ०१६ ॥

कामभोगैः प्रियैर्हीनां हीनां बन्धुजनेन च ।
देहं धारयतीं दीनां भर्तृदर्शनकाङ्क्षया ॥ ०१७ ॥

भर्ता नाम परं नार्या भूषणं भूषणैर्विना ।
एषा विरहिता तेन शोभनापि न शोभते ॥ ०१८ ॥

दुष्करं कुरुतेऽत्यर्थं हीनो यदनया नलः ।
धारयत्यात्मनो देहं न शोकेनावसीदति ॥ ०१९ ॥

इमामसितकेशान्तां शतपत्रायतेक्षणाम् ।
सुखार्हां दुःखितां दृष्ट्वा ममापि व्यथते मनः ॥ ०२० ॥

कदा नु खलु दुःखस्य पारं यास्यति वै शुभा ।
भर्तुः समागमात्साध्वी रोहिणी शशिनो यथा ॥ ०२१ ॥

अस्या नूनं पुनर्लाभान्नैषधः प्रीतिमेष्यति ।
राजा राज्यपरिभ्रष्टः पुनर्लब्ध्वेव मेदिनीम् ॥ ०२२ ॥

तुल्यशीलवयोयुक्तां तुल्याभिजनसंयुताम् ।
नैषधोऽर्हति वैदर्भीं तं चेयमसितेक्षणा ॥ ०२३ ॥

युक्तं तस्याप्रमेयस्य वीर्यसत्त्ववतो मया ।
समाश्वासयितुं भार्यां पतिदर्शनलालसाम् ॥ ०२४ ॥

अयमाश्वासयाम्येनां पूर्णचन्द्रनिभाननाम् ।
अदृष्टपूर्वां दुःखस्य दुःखार्तां ध्यानतत्पराम् ॥ ०२५ ॥

बृहदश्व उवाच ॥

एवं विमृश्य विविधैः कारणैर्लक्षणैश्च ताम् ।

उपगम्य ततो भैमीं सुदेवो ब्राह्मणोऽब्रवीत् ॥ ०२६ ॥

अहं सुदेवो वैदर्भि भ्रातुस्ते दयितः सखा ।
भीमस्य वचनाद्राज्ञस्त्वामन्वेष्टुमिहागतः ॥ ०२७ ॥

कुशली ते पिता राज्ञि जनित्री भ्रातरश्च ते ।
आयुष्मन्तौ कुशलिनौ तत्रस्थौ दारकौ च ते ॥ ०२८ ॥

त्वत्कृते बन्धुवर्गाश्च गतसत्त्वा इवासते ॥ ०२८ ॥

अभिज्ञाय सुदेवं तु दमयन्ती युधिष्ठिर ।
पर्यपृच्छत्ततः सर्वान्क्रमेण सुहृदः स्वकान् ॥ ०२९ ॥

रुरोद च भृशं राजन्वैदर्भी शोककर्शिता ।
दृष्ट्वा सुदेवं सहसा भ्रातुरिष्टं द्विजोत्तमम् ॥ ०३० ॥

ततो रुदन्तीं तां दृष्ट्वा सुनन्दा शोककर्शिताम् ।
सुदेवेन सहैकान्ते कथयन्तीं च भारत ॥ ०३१ ॥

जनित्र्यै प्रेषयामास सैरन्ध्री रुदते भृशम् ।
ब्राह्मणेन समागम्य तां वेद यदि मन्यसे ॥ ०३२ ॥

अथ चेदिपतेर्माता राज्ञश्चान्तःपुरात्तदा ।
जगाम यत्र सा बाला ब्राह्मणेन सहाभवत् ॥ ०३३ ॥

ततः सुदेवमानाय्य राजमाता विशां पते ।
पप्रच्छ भार्या कस्येयं सुता वा कस्य भामिनी ॥ ०३४ ॥

कथं च नष्टा ज्ञातिभ्यो भर्तुर्वा वामलोचना ।
त्वया च विदिता विप्र कथमेवङ्गता सती ॥ ०३५ ॥

एतदिच्छाम्यहं त्वत्तो ज्ञातुं सर्वमशेषतः ।
तत्त्वेन हि ममाचक्ष्व पृच्छन्त्या देवरूपिणीम्  ॥ ०३६  ॥

एवमुक्तस्तया राजन्सुदेवो द्विजसत्तमः ।
सुखोपविष्ट आचष्ट दमयन्त्या यथातथम्  ॥ ०३७  ॥

---

# अध्याय ०६६

सुदेव उवाच  ॥

विदर्भराजो धर्मात्मा भीमो भीमपराक्रमः ।
सुतेयं तस्य कल्याणी दमयन्तीति विश्रुता  ॥ ००१  ॥

राजा तु नैषधो नाम वीरसेनसुतो नलः ।
भार्येयं तस्य कल्याणी पुण्यश्लोकस्य धीमतः  ॥ ००२  ॥

स वै द्यूते जितो भ्रात्रा हृतराज्यो महीपतिः ।
दमयन्त्या गतः सार्धं न प्रज्ञायत कर्हिचित्  ॥ ००३  ॥

ते वयं दमयन्त्यर्थे चरामः पृथिवीमिमाम् ।
सेयमासादिता बाला तव पुत्रनिवेशने  ॥ ००४  ॥

अस्या रूपेण सदृशी मानुषी नेह विद्यते ।
अस्याश्चैव भ्रुवोर्मध्ये सहजः पिप्लुरुत्तमः  ॥ ००५  ॥

श्यामायाः पद्मसङ्काशो लक्षितोऽन्तर्हितो मया  ॥ ००५  ॥

मलेन संवृतो ह्यस्यास्तन्वभ्रेणेव चन्द्रमाः ।

चिह्नभूतो विभूत्यर्थमयं धात्रा विनिर्मितः ॥ ००६ ॥

प्रतिपत्कलुषेवेन्दोर्लेखा नाति विराजते ।
न चास्या नश्यते रूपं वपुर्मलसमाचितम् ॥ ००७ ॥

असंस्कृतमपि व्यक्तं भाति काञ्चनसंनिभम् ॥ ००७ ॥

अनेन वपुषा बाला पिप्लुनानेन चैव ह ।
लक्षितेयं मया देवी पिहितोऽग्निरिवोष्मणा ॥ ००८ ॥

बृहदश्व उवाच ॥

तच्छ्रुत्वा वचनं तस्य सुदेवस्य विशां पते ।
सुनन्दा शोधयामास पिप्लुप्रच्छादनं मलम् ॥ ००९ ॥

स मलेनापकृष्टेन पिप्लुस्तस्या व्यरोचत ।
दमयन्त्यास्तदा व्यभ्रे नभसीव निशाकरः ॥ ०१० ॥

पिप्लुं दृष्ट्वा सुनन्दा च राजमाता च भारत ।
रुदन्त्यौ तां परिष्वज्य मुहूर्तमिव तस्थतुः ॥ ०११ ॥

उत्सृज्य बाष्पं शनकै राजमातेदमब्रवीत् ॥ ०११ ॥

भगिन्या दुहिता मेऽसि पिप्लुनानेन सूचिता ।
अहं च तव माता च राजन्यस्य महात्मनः ॥ ०१२ ॥

सुते दशार्णाधिपतेः सुदाम्नश्चारुदर्शने ॥ ०१२ ॥

भीमस्य राज्ञः सा दत्ता वीरबाहोरहं पुनः ।
त्वं तु जाता मया दृष्टा दशार्णेषु पितुर्गृहे ॥ ०१३ ॥

यथैव ते पितुर्गेहं तथेदमपि भामिनि ।
यथैव हि ममैश्वर्यं दमयन्ति तथा तव ॥ ०१४ ॥

तां प्रहृष्टेन मनसा दमयन्ती विशां पते ।
अभिवाद्य मातुर्भगिनीमिदं वचनमब्रवीत् ॥ ०१५ ॥

अज्ञायमानापि सती सुखमस्म्युषितेह वै ।
सर्वकामैः सुविहिता रक्ष्यमाणा सदा त्वया ॥ ०१६ ॥

सुखात्सुखतरो वासो भविष्यति न संशयः ।
चिरविप्रोषितां मातर्मामनुज्ञातुमर्हसि ॥ ०१७ ॥

दारकौ च हि मे नीतौ वसतस्तत्र बालकौ ।
पित्रा विहीनौ शोकार्तौ मया चैव कथं नु तौ ॥ ०१८ ॥

यदि चापि प्रियं किञ्चिन्मयि कर्तुमिहेच्छसि ।
विदर्भान्यातुमिच्छामि शीघ्रं मे यानमादिश ॥ ०१९ ॥

बाढमित्येव तामुक्त्वा हृष्टा मातृष्वसा नृप ।
गुप्तां बलेन महता पुत्रस्यानुमते ततः ॥ ०२० ॥

प्रस्थापयद्राजमाता श्रीमता नरवाहिना ।
यानेन भरतश्रेष्ठ स्वन्नपानपरिच्छदाम् ॥ ०२१ ॥

ततः सा नचिरादेव विदर्भानगमच्छुभा ।
तां तु बन्धुजनः सर्वः प्रहृष्टः प्रत्यपूजयत् ॥ ०२२ ॥

सर्वान्कुशलिनो दृष्ट्वा बान्धवान्दारकौ च तौ ।
मातरं पितरं चैव सर्वं चैव सखीजनम् ॥ ०२३ ॥

देवताः पूजयामास ब्राह्मणांश्च यशस्विनी ।

विधिना परेण कल्याणी दमयन्ती विशां पते ॥ ०२४ ॥

अतर्पयत्सुदेवं च गोसहस्रेण पार्थिवः ।
प्रीतो दृष्ट्वैव तनयां ग्रामेण द्रविणेन च ॥ ०२५ ॥

सा व्युष्टा रजनीं तत्र पितुर्वेश्मनि भामिनी ।
विश्रान्ता मातरं राजन्निदं वचनमब्रवीत् ॥ ०२६ ॥

---

# अध्याय ०६७

दमयन्त्युवाच ॥

मां चेदिच्छसि जीवन्तीं मातः सत्यं ब्रवीमि ते ।
नरवीरस्य वै तस्य नलस्यानयने यत ॥ ००१ ॥

बृहदश्व उवाच ॥

दमयन्त्या तथोक्ता तु सा देवी भृशदुःखिता ।
बाष्पेण पिहिता राजन्नोत्तरं किञ्चिदब्रवीत् ॥ ००२ ॥

तदवस्थां तु तां दृष्ट्वा सर्वमन्तःपुरं तदा ।
हाहाभूतमतीवासीद्भृशं च प्ररुरोद ह ॥ ००३ ॥

ततो भीमं महाराज भार्या वचनमब्रवीत् ।
दमयन्ती तव सुता भर्तारमनुशोचति ॥ ००४ ॥

अपकृष्य च लज्जां मां स्वयमुक्तवती नृप ।
प्रयतन्तु तव प्रेष्याः पुण्यश्लोकस्य दर्शने ॥ ००५ ॥

तया प्रचोदितो राजा ब्राह्मणान्वशवर्तिनः ।
प्रास्थापयद्दिशः सर्वा यतध्वं नलदर्शने ॥ ००६ ॥

ततो विदर्भाधिपतेर्नियोगाद्ब्राह्मणर्षभाः ।
दमयन्तीमथो दृष्ट्वा प्रस्थिताः स्मेत्यथाब्रुवन् ॥ ००७ ॥

अथ तानब्रवीद्भैमी सर्वराष्ट्रेष्विदं वचः ।
ब्रुवध्वं जनसंसत्सु तत्र तत्र पुनः पुनः ॥ ००८ ॥

क्व नु त्वं कितव छित्त्वा वस्त्रार्धं प्रस्थितो मम ।
उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय ॥ ००९ ॥

सा वै यथा समादिष्टा तत्रास्ते त्वत्प्रतीक्षिणी ।
दह्यमाना भृशं बाला वस्त्रार्धेनाभिसंवृता ॥ ०१० ॥

तस्या रुदन्त्याः सततं तेन शोकेन पार्थिव ।
प्रसादं कुरु वै वीर प्रतिवाक्यं ददस्व च ॥ ०११ ॥

एतदन्यच्च वक्तव्यं कृपां कुर्याद्यथा मयि ।
वायुना धूयमानो हि वनं दहति पावकः ॥ ०१२ ॥

भर्तव्या रक्षणीया च पत्नी हि पतिना सदा ।
तन्नष्टमुभयं कस्माद्धर्मज्ञस्य सतस्तव ॥ ०१३ ॥

ख्यातः प्राज्ञः कुलीनश्च सानुक्रोशश्च त्वं सदा ।
संवृत्तो निरनुक्रोशः शङ्के मद्भाग्यसङ्क्षयात् ॥ ०१४ ॥

स कुरुष्व महेष्वास दयां मयि नरर्षभ ।
आनृशंस्यं परो धर्मस्त्वत्त एव हि मे श्रुतम् ॥ ०१५ ॥

एवं ब्रुवाणान्यदि वः प्रतिब्रूयाद्धि कश्चन ।
स नरः सर्वथा ज्ञेयः कश्चासौ क्व च वर्तते ॥ ०१६ ॥

यच्च वो वचनं श्रुत्वा ब्रूयात्प्रतिवचो नरः ।
तदादाय वचः क्षिप्रं ममावेद्यं द्विजोत्तमाः ॥ ०१७ ॥

यथा च वो न जानीयाच्चरतो भीमशासनात् ।
पुनरागमनं चैव तथा कार्यमतन्द्रितैः ॥ ०१८ ॥

यदि वासौ समृद्धः स्याद्यदि वाप्यधनो भवेत् ।
यदि वाप्यर्थकामः स्याज्ज्ञेयमस्य चिकीर्षितम् ॥ ०१९ ॥

एवमुक्तास्त्वगच्छंस्ते ब्राह्मणाः सर्वतोदिशम् ।
नलं मृगयितुं राजंस्तथा व्यसनिनं तदा ॥ ०२० ॥

ते पुराणि सराष्ट्राणि ग्रामान्घोषांस्तथाश्रमान् ।
अन्वेषन्तो नलं राजन्नाधिजग्मुर्द्विजातयः ॥ ०२१ ॥

तच्च वाक्यं तथा सर्वे तत्र तत्र विशां पते ।
श्रावयां चक्रिरे विप्रा दमयन्त्या यथेरितम् ॥ ०२२ ॥

---

# अध्याय ०६८

बृहदश्व उवाच ॥

अथ दीर्घस्य कालस्य पर्णादो नाम वै द्विजः ।
प्रत्येत्य नगरं भैमीमिदं वचनमब्रवीत् ॥ ००१ ॥

नैषधं मृगयानेन दमयन्ति दिवानिशम् ।
अयोध्यां नगरीं गत्वा भाङ्गस्वरिरुपस्थितः ॥ ००२ ॥

श्रावितश्च मया वाक्यं त्वदीयं स महाजने ।
ऋतुपर्णो महाभागो यथोक्तं वरवर्णिनि ॥ ००३ ॥

तच्छ्रुत्वा नाब्रवीत्किञ्चिदृतुपर्णो नराधिपः ।
न च पारिषदः कश्चिद्भाष्यमाणो मयासकृत् ॥ ००४ ॥

अनुज्ञातं तु मां राज्ञा विजने कश्चिदब्रवीत् ।
ऋतुपर्णस्य पुरुषो बाहुको नाम नामतः ॥ ००५ ॥

सूतस्तस्य नरेन्द्रस्य विरूपो ह्रस्वबाहुकः ।
शीघ्रयाने सुकुशलो मृष्टकर्ता च भोजने ॥ ००६ ॥

स विनिःश्वस्य बहुशो रुदित्वा च मुहुर्मुहुः ।
कुशलं चैव मां पृष्ट्वा पश्चादिदमभाषत ॥ ००७ ॥

वैषम्यमपि संप्राप्ता गोपायन्ति कुलस्त्रियः ।
आत्मानमात्मना सत्यो जितस्वर्गा न संशयः ॥ ००८ ॥

रहिता भर्तृभिश्चैव न क्रुध्यन्ति कदाचन ॥ ००८ ॥

विषमस्थेन मूढेन परिभ्रष्टसुखेन च ।
यत्सा तेन परित्यक्ता तत्र न क्रोद्धुमर्हति ॥ ००९ ॥

प्राणयात्रां परिप्रेप्सोः शकुनैर्हृतवाससः ।
आधिभिर्दह्यमानस्य श्यामा न क्रोद्धुमर्हति ॥ ०१० ॥

सत्कृतासत्कृता वापि पतिं दृष्ट्वा तथागतम् ।
भ्रष्टराज्यं श्रिया हीनं श्यामा न क्रोद्धुमर्हति ॥ ०११ ॥

तस्य तद्वचनं श्रुत्वा त्वरितोऽहमिहागतः ।
श्रुत्वा प्रमाणं भवती राज्ञश्चैव निवेदय ॥ ०१२ ॥

एतच्छ्रुत्वाश्रुपूर्णाक्षी पर्णादस्य विशां पते ।
दमयन्ती रहोऽभ्येत्य मातरं प्रत्यभाषत ॥ ०१३ ॥

अयमर्थो न संवेद्यो भीमे मातः कथञ्चन ।
त्वत्संनिधौ समादेक्ष्ये सुदेवं द्विजसत्तमम् ॥ ०१४ ॥

यथा न नृपतिर्भीमः प्रतिपद्येत मे मतम् ।
तथा त्वया प्रयत्तव्यं मम चेत्प्रियमिच्छसि ॥ ०१५ ॥

यथा चाहं समानीता सुदेवेनाशु बान्धवान् ।
तेनैव मङ्गलेनाशु सुदेवो यातु माचिरम् ॥ ०१६ ॥

समानेतुं नलं मातरयोध्यां नगरीमितः ॥ ०१६ ॥

विश्रान्तं च ततः पश्चात्पर्णादं द्विजसत्तमम् ।
अर्चयामास वैदर्भी धनेनातीव भामिनी ॥ ०१७ ॥

नले चेहागते विप्र भूयो दास्यामि ते वसु ।
त्वया हि मे बहु कृतं यथा नान्यः करिष्यति ॥ ०१८ ॥

यद्भर्त्राहं समेष्यामि शीघ्रमेव द्विजोत्तम ॥ ०१८ ॥

एवमुक्तोऽर्चयित्वा तामाशीर्वादैः सुमङ्गलैः ।
गृहानुपययौ चापि कृतार्थः स महामनाः ॥ ०१९ ॥

ततश्चानाय्य तं विप्रं दमयन्ती युधिष्ठिर ।
अब्रवीत्संनिधौ मातुर्दुःखशोकसमन्विता ॥ ०२० ॥

गत्वा सुदेव नगरीमयोध्यावासिनं नृपम् ।
ऋतुपर्णं वचो ब्रूहि पतिमन्यं चिकीर्षती ॥ ०२१ ॥

आस्थास्यति पुनर्भैमी दमयन्ती स्वयंवरम् ॥ ०२१ ॥

तत्र गच्छन्ति राजानो राजपुत्राश्च सर्वशः ।
यथा च गणितः कालः श्वोभूते स भविष्यति ॥ ०२२ ॥

यदि संभावनीयं ते गच्छ शीघ्रमरिंदम ।
सूर्योदये द्वितीयं सा भर्तारं वरयिष्यति ॥ ०२३ ॥

न हि स ज्ञायते वीरो नलो जीवन्मृतोऽपि वा ॥ ०२३ ॥

एवं तया यथोक्तं वै गत्वा राजानमब्रवीत् ।
ऋतुपर्णं महाराज सुदेवो ब्राह्मणस्तदा ॥ ०२४ ॥

---

# अध्याय ०६९

बृहदश्व उवाच ॥

श्रुत्वा वचः सुदेवस्य ऋतुपर्णो नराधिपः ।
सान्त्वयञ्श्लक्ष्णया वाचा बाहुकं प्रत्यभाषत ॥ ००१ ॥

विदर्भान्यातुमिच्छामि दमदन्त्याः स्वयंवरम् ।
एकाह्ना हयतत्त्वज्ञ मन्यसे यदि बाहुक ॥ ००२ ॥

एवमुक्तस्य कौन्तेय तेन राज्ञा नलस्य ह ।

व्यदीर्यत मनो दुःखात्प्रदध्यौ च महामनाः ॥ ००३ ॥

दमयन्ती भवेदेतत्कुर्याद्दुःखेन मोहिता ।
अस्मदर्थे भवेद्वायमुपायश्चिन्तितो महान् ॥ ००४ ॥

नृशंसं बत वैदर्भी कर्तुकामा तपस्विनी ।
मया क्षुद्रेण निकृता पापेनाकृतबुद्धिना ॥ ००५ ॥

स्त्रीस्वभावश्चलो लोके मम दोषश्च दारुणः ।
स्यादेवमपि कुर्यात्सा विवशा गतसौहृदा ॥ ००६ ॥

मम शोकेन संविग्ना नैराश्यात्तनुमध्यमा ॥ ००६ ॥

न चैवं कर्हिचित्कुर्यात्सापत्या च विशेषतः ।
यदत्र तथ्यं पथ्यं च गत्वा वेत्स्यामि निश्चयम् ॥ ००७ ॥

ऋतुपर्णस्य वै काममात्मार्थं च करोम्यहम् ॥ ००७ ॥

इति निश्चित्य मनसा बाहुको दीनमानसः ।
कृताञ्जलिरुवाचेदमृतुपर्णं नराधिपम् ॥ ००८ ॥

प्रतिजानामि ते सत्यं गमिष्यसि नराधिप ।
एकाह्ना पुरुषव्याघ्र विदर्भनगरीं नृप ॥ ००९ ॥

ततः परीक्षामश्वानां चक्रे राजन्स बाहुकः ।
अश्वशालामुपागम्य भाङ्गस्वरिनृपाज्ञया ॥ ०१० ॥

स त्वर्यमाणो बहुश ऋतुपर्णेन बाहुकः ।
अध्यगच्छत्कृशानश्वान्समर्थानध्वनि क्षमान् ॥ ०११ ॥

तेजोबलसमायुक्तान्कुलशीलसमन्वितान् ।

वर्जिता.ण्ल्लक्षणैर्हीनैः पृथुप्रोथान्महाहनून् ॥ ०१२ ॥

शुद्धान्दशभिरावर्तैः सिन्धुजान्वातरंहसः ॥ ०१२ ॥

दृष्ट्वा तानब्रवीद्राजा किञ्चित्कोपसमन्वितः ।
किमिदं प्रार्थितं कर्तुं प्रलब्धव्या हि ते वयम् ॥ ०१३ ॥

कथमल्पबलप्राणा वक्ष्यन्तीमे हया मम ।
महानध्वा च तुरगैर्गन्तव्यः कथमीदृशैः ॥ ०१४ ॥

बाहुक उवाच ॥

एते हया गमिष्यन्ति विदर्भान्नात्र संशयः ।
अथान्यान्मन्यसे राजन्ब्रूहि कान्योजयामि ते ॥ ०१५ ॥

ऋतुपर्ण उवाच ॥

त्वमेव हयतत्त्वज्ञः कुशलश्चासि बाहुक ।
यान्मन्यसे समर्थांस्त्वं क्षिप्रं तानेव योजय ॥ ०१६ ॥

बृहदश्व उवाच ॥

ततः सदश्वांश्चतुरः कुलशीलसमन्वितान् ।
योजयामास कुशलो जवयुक्तान्रथे नरः ॥ ०१७ ॥

ततो युक्तं रथं राजा समारोहत्त्वरान्वितः ।
अथ पर्यपतन्भूमौ जानुभिस्ते हयोत्तमाः ॥ ०१८ ॥

ततो नरवरः श्रीमान्नलो राजा विशां पते ।
सान्त्वयामास तानश्वांस्तेजोबलसमन्वितान् ॥ ०१९ ॥

रश्मिभिश्च समुद्यम्य नलो यातुमियेष सः ।
सूतमारोप्य वार्ष्णेयं जवमास्थाय वै परम्  ॥ ०२०  ॥

ते चोद्यमाना विधिना बाहुकेन हयोत्तमाः ।
समुत्पेतुरिवाकाशं रथिनं मोहयन्निव  ॥ ०२१  ॥

तथा तु दृष्ट्वा तानश्वान्वहतो वातरंहसः ।
अयोध्याधिपतिर्धीमान्विस्मयं परमं ययौ  ॥ ०२२  ॥

रथघोषं तु तं श्रुत्वा हयसङ्ग्रहणं च तत् ।
वार्ष्णेयश्चिन्तयामास बाहुकस्य हयज्ञताम्  ॥ ०२३  ॥

किं नु स्यान्मातलिरयं देवराजस्य सारथिः ।
तथा हि लक्षणं वीरे बाहुके दृश्यते महत्  ॥ ०२४  ॥

शालिहोत्रोऽथ किं नु स्याद्धयानां कुलतत्त्ववित् ।
मानुषं समनुप्राप्तो वपुः परमशोभनम्  ॥ ०२५  ॥

उताहो स्विद्भवेद्राजा नलः परपुरञ्जयः ।
सोऽयं नृपतिरायात इत्येवं समचिन्तयत्  ॥ ०२६  ॥

अथ वा यां नलो वेद विद्यां तामेव बाहुकः ।
तुल्यं हि लक्षये ज्ञानं बाहुकस्य नलस्य च  ॥ ०२७  ॥

अपि चेदं वयस्तुल्यमस्य मन्ये नलस्य च ।
नायं नलो महावीर्यस्तद्विद्यस्तु भविष्यति  ॥ ०२८  ॥

प्रच्छन्ना हि महात्मानश्चरन्ति पृथिवीमिमाम् ।
दैवेन विधिना युक्ताः शास्त्रोक्तैश्च विरूपणैः  ॥ ०२९  ॥

भवेत्तु मतिभेदो मे गात्रवैरूप्यतां प्रति ।

प्रमाणात्परिहीनस्तु भवेदिति हि मे मतिः ॥ ०३० ॥

वयःप्रमाणं तत्तुल्यं रूपेण तु विपर्ययः ।
नलं सर्वगुणैर्युक्तं मन्ये बाहुकमन्ततः ॥ ०३१ ॥

एवं विचार्य बहुशो वार्ष्णेयः पर्यचिन्तयत् ।
हृदयेन महाराज पुण्यश्लोकस्य सारथिः ॥ ०३२ ॥

ऋतुपर्णस्तु राजेन्द्र बाहुकस्य हयज्ञताम् ।
चिन्तयन्मुमुदे राजा सहवार्ष्णेयसारथिः ॥ ०३३ ॥

बलं वीर्यं तथोत्साहं हयसङ्ग्रहणं च तत् ।
परं यत्नं च संप्रेक्ष्य परां मुदमवाप ह ॥ ०३४ ॥

---

# अध्याय ०७०

बृहदश्व उवाच ॥

स नदीः पर्वतांश्चैव वनानि च सरांसि च ।
अचिरेणातिचक्राम खेचरः खे चरन्निव ॥ ००१ ॥

तथा प्रयाते तु रथे तदा भाङ्गस्वरिर्नृपः ।
उत्तरीयमथापश्यद्भ्रष्टं परपुरञ्जयः ॥ ००२ ॥

ततः स त्वरमाणस्तु पटे निपतिते तदा ।
ग्रहीष्यामीति तं राजा नलमाह महामनाः ॥ ००३ ॥

निगृह्णीष्व महाबुद्धे हयानेतान्महाजवान् ।

वार्ष्णेयो यावदेतं मे पटमानयतामिति ॥ ००४ ॥

नलस्तं प्रत्युवाचाथ दूरे भ्रष्टः पटस्तव ।
योजनं समतिक्रान्तो न स शक्यस्त्वया पुनः ॥ ००५ ॥

एवमुक्ते नलेनाथ तदा भाङ्गस्वरिर्नृपः ।
आससाद वने राजन्फलवन्तं बिभीतकम् ॥ ००६ ॥

तं दृष्ट्वा बाहुकं राजा त्वरमाणोऽभ्यभाषत ।
ममापि सूत पश्य त्वं संख्याने परमं बलम् ॥ ००७ ॥

सर्वः सर्वं न जानाति सर्वज्ञो नास्ति कश्चन ।
नैकत्र परिनिष्ठास्ति ज्ञानस्य पुरुषे क्वचित् ॥ ००८ ॥

वृक्षेऽस्मिन्यानि पर्णानि फलान्यपि च बाहुक ।
पतितानि च यान्यत्र तत्रैकमधिकं शतम् ॥ ००९ ॥

एकपत्राधिकं पत्रं फलमेकं च बाहुक ॥ ००९ ॥

पञ्च कोट्योऽथ पत्राणां द्वयोरपि च शाखयोः ।
प्रचिनुह्यस्य शाखे द्वे याश्चाप्यन्याः प्रशाखिकाः ॥ ०१० ॥

आभ्यां फलसहस्रे द्वे पञ्चोनं शतमेव च ॥ ०१० ॥

ततो रथादवप्लुत्य राजानं बाहुकोऽब्रवीत् ।
परोक्षमिव मे राजन्कत्थसे शत्रुकर्शन ॥ ०११ ॥

अथ ते गणिते राजन्विद्यते न परोक्षता ।
प्रत्यक्षं ते महाराज गणयिष्ये बिभीतकम् ॥ ०१२ ॥

अहं हि नाभिजानामि भवेदेवं न वेति च ।

संख्यास्यामि फलान्यस्य पश्यतस्ते जनाधिप ॥ ०१३ ॥

मुहूर्तमिव वार्ष्णेयो रश्मीन्यच्छतु वाजिनाम् ॥ ०१३ ॥

तमब्रवीन्नृपः सूतं नायं कालो विलम्बितुम् ।
बाहुकस्त्वब्रवीदेनं परं यत्नं समास्थितः ॥ ०१४ ॥

प्रतीक्षस्व मुहूर्तं त्वमथ वा त्वरते भवान् ।
एष याति शिवः पन्था याहि वार्ष्णेयसारथिः ॥ ०१५ ॥

अब्रवीदृतुपर्णस्तं सान्त्वयन्कुरुनन्दन ।
त्वमेव यन्ता नान्योऽस्ति पृथिव्यामपि बाहुक ॥ ०१६ ॥

त्वत्कृते यातुमिच्छामि विदर्भान्हयकोविद ।
शरणं त्वां प्रपन्नोऽस्मि न विघ्नं कर्तुमर्हसि ॥ ०१७ ॥

कामं च ते करिष्यामि यन्मां वक्ष्यसि बाहुक ।
विदर्भान्यदि यात्वाद्य सूर्यं दर्शयितासि मे ॥ ०१८ ॥

अथाब्रवीद्बाहुकस्तं संख्यायेमं बिभीतकम् ।
ततो विदर्भान्यास्यामि कुरुष्वेदं वचो मम ॥ ०१९ ॥

अकाम इव तं राजा गणयस्वेत्युवाच ह ।
सोऽवतीर्य रथात्तूर्णं शातयामास तं द्रुमम् ॥ ०२० ॥

ततः स विस्मयाविष्टो राजानमिदमब्रवीत् ।
गणयित्वा यथोक्तानि तावन्त्येव फलानि च ॥ ०२१ ॥

अत्यद्भुतमिदं राजन्दृष्टवानस्मि ते बलम् ।
श्रोतुमिच्छामि तां विद्यां यथैतज्ज्ञायते नृप ॥ ०२२ ॥

तमुवाच ततो राजा त्वरितो गमने तदा ।
विद्ध्यक्षहृदयज्ञं मां संख्याने च विशारदम् ॥ ०२३ ॥

बाहुकस्तमुवाचाथ देहि विद्यामिमां मम ।
मत्तोऽपि चाश्वहृदयं गृहाण पुरुषर्षभ ॥ ०२४ ॥

ऋतुपर्णस्ततो राजा बाहुकं कार्यगौरवात् ।
हयज्ञानस्य लोभाच्च तथेत्येवाब्रवीद्वचः ॥ ०२५ ॥

यथेष्टं त्वं गृहाणेदमक्षाणां हृदयं परम् ।
निक्षेपो मेऽश्वहृदयं त्वयि तिष्ठतु बाहुक ॥ ०२६ ॥

एवमुक्त्वा ददौ विद्यामृतुपर्णो नलाय वै ॥ ०२६ ॥

तस्याक्षहृदयज्ञस्य शरीरान्निःसृतः कलिः ।
कर्कोटकविषं तीक्ष्णं मुखात्सततमुद्वमन् ॥ ०२७ ॥

कलेस्तस्य तदार्तस्य शापाग्निः स विनिःसृतः ।
स तेन कर्शितो राजा दीर्घकालमनात्मवान् ॥ ०२८ ॥

ततो विषविमुक्तात्मा स्वरूपमकरोत्कलिः ।
तं शप्तुमैच्छत्कुपितो निषधाधिपतिर्नलः ॥ ०२९ ॥

तमुवाच कलिर्भीतो वेपमानः कृताञ्जलिः ।
कोपं संयच्छ नृपते कीर्तिं दास्यामि ते पराम् ॥ ०३० ॥

इन्द्रसेनस्य जननी कुपिता माशपत्पुरा ।
यदा त्वया परित्यक्ता ततोऽहं भृशपीडितः ॥ ०३१ ॥

अवसं त्वयि राजेन्द्र सुदुःखमपराजित ।
विषेण नागराजस्य दह्यमानो दिवानिशम् ॥ ०३२ ॥

ये च त्वां मनुजा लोके कीर्तयिष्यन्त्यतन्द्रिताः ।
मत्प्रसूतं भयं तेषां न कदाचिद्भविष्यति ॥ ०३३ ॥

एवमुक्तो नलो राजा न्ययच्छत्कोपमात्मनः ।
ततो भीतः कलिः क्षिप्रं प्रविवेश बिभीतकम् ॥ ०३४ ॥

कलिस्त्वन्येन नादृश्यत्कथयन्नैषधेन वै ॥ ०३४ ॥

ततो गतज्वरो राजा नैषधः परवीरहा ।
संप्रनष्टे कलौ राजन्संख्यायाथ फलान्युत ॥ ०३५ ॥

मुदा परमया युक्तस्तेजसा च परेण ह ।
रथमारुह्य तेजस्वी प्रययौ जवनैर्हयैः ॥ ०३६ ॥

बिभीतकश्चाप्रशस्तः संवृत्तः कलिसंश्रयात् ॥ ०३६ ॥

हयोत्तमानुत्पततो द्विजानिव पुनः पुनः ।
नलः सञ्चोदयामास प्रहृष्टेनान्तरात्मना ॥ ०३७ ॥

विदर्भाभिमुखो राजा प्रययौ स महामनाः ।
नले तु समतिक्रान्ते कलिरप्यगमद्गृहान् ॥ ०३८ ॥

ततो गतज्वरो राजा नलोऽभूत्पृथिवीपते ।
विमुक्तः कलिना राजन्रूपमात्रवियोजितः ॥ ०३९ ॥

# अध्याय ०७१

बृहदश्व उवाच ॥

ततो विदर्भान्संप्राप्तं सायाह्ने सत्यविक्रमम् ।
ऋतुपर्णं जना राज्ञे भीमाय प्रत्यवेदयन् ॥ ००१ ॥

स भीमवचनाद्राजा कुण्डिनं प्राविशत्पुरम् ।
नादयन्रथघोषेण सर्वाः सोपदिशो दश ॥ ००२ ॥

ततस्तं रथनिर्घोषं नलाश्वास्तत्र शुश्रुवुः ।
श्रुत्वा च समहृष्यन्त पुरेव नलसंनिधौ ॥ ००३ ॥

दमयन्ती च शुश्राव रथघोषं नलस्य तम् ।
यथा मेघस्य नदतो गम्भीरं जलदागमे ॥ ००४ ॥

नलेन सङ्गृहीतेषु पुरेव नलवाजिषु ।
सदृशं रथनिर्घोषं मेने भैमी तथा हयाः ॥ ००५ ॥

प्रासादस्थाश्च शिखिनः शालास्थाश्चैव वारणाः ।
हयाश्च शुश्रुवुस्तत्र रथघोषं महीपतेः ॥ ००६ ॥

ते श्रुत्वा रथनिर्घोषं वारणाः शिखिनस्तथा ।
प्रणेदुरुन्मुखा राजन्मेघोदयमिवेक्ष्य ह ॥ ००७ ॥

दमयन्त्युवाच ॥

यथासौ रथनिर्घोषः पूरयन्निव मेदिनीम् ।
मम ह्लादयते चेतो नल एष महीपतिः ॥ ००८ ॥

अद्य चन्द्राभवक्त्रं तं न पश्यामि नलं यदि ।

असंख्येयगुणं वीरं विनशिष्याम्यसंशयम् ॥ ००९ ॥

यदि वै तस्य वीरस्य बाह्वोर्नाद्याहमन्तरम् ।
प्रविशामि सुखस्पर्शं विनशिष्याम्यसंशयम् ॥ ०१० ॥

यदि मां मेघनिर्घोषो नोपगच्छति नैषधः ।
अद्य चामीकरप्रख्यो विनशिष्याम्यसंशयम् ॥ ०११ ॥

यदि मां सिंहविक्रान्तो मत्तवारणवारणः ।
नाभिगच्छति राजेन्द्रो विनशिष्याम्यसंशयम् ॥ ०१२ ॥

न स्मराम्यनृतं किञ्चिन्न स्मराम्यनुपाकृतम् ।
न च पर्युषितं वाक्यं स्वैरेष्वपि महात्मनः ॥ ०१३ ॥

प्रभुः क्षमावान्वीरश्च मृदुर्दान्तो जितेन्द्रियः ।
रहोऽनीचानुवर्ती च क्लीबवन्मम नैषधः ॥ ०१४ ॥

गुणांस्तस्य स्मरन्त्या मे तत्पराया दिवानिशम् ।
हृदयं दीर्यत इदं शोकात्प्रियविनाकृतम् ॥ ०१५ ॥

बृहदश्व उवाच ॥

एवं विलपमाना सा नष्टसञ्ज्ञेव भारत ।
आरुरोह महद्वेश्म पुण्यश्लोकदिदृक्षया ॥ ०१६ ॥

ततो मध्यमकक्षायां ददर्श रथमास्थितम् ।
ऋतुपर्णं महीपालं सहवार्ष्णेयबाहुकम् ॥ ०१७ ॥

ततोऽवतीर्य वार्ष्णेयो बाहुकश्च रथोत्तमात् ।
हयांस्तानवमुच्याथ स्थापयामासतू रथम् ॥ ०१८ ॥

सोऽवतीर्य रथोपस्थादृतुपर्णो नराधिपः ।
उपतस्थे महाराज भीमं भीमपराक्रमम् ॥ ०१९ ॥

तं भीमः प्रतिजग्राह पूजया परया ततः ।
अकस्मात्सहसा प्राप्तं स्त्रीमन्त्रं न स्म विन्दति ॥ ०२० ॥

किं कार्यं स्वागतं तेऽस्तु राज्ञा पृष्टश्च भारत ।
नाभिजज्ञे स नृपतिर्दुहित्रर्थे समागतम् ॥ ०२१ ॥

ऋतुपर्णोऽपि राजा स धीमान्सत्यपराक्रमः ।
राजानं राजपुत्रं वा न स्म पश्यति कञ्चन ॥ ०२२ ॥

नैव स्वयंवरकथां न च विप्रसमागमम् ॥ ०२२ ॥

ततो विगणयन्राजा मनसा कोसलाधिपः ।
आगतोऽस्मीत्युवाचैनं भवन्तमभिवादकः ॥ ०२३ ॥

राजापि च स्मयन्भीमो मनसाभिविचिन्तयत् ।
अधिकं योजनशतं तस्यागमनकारणम् ॥ ०२४ ॥

ग्रामान्बहूनतिक्रम्य नाध्यगच्छद्यथातथम् ।
अल्पकार्यं विनिर्दिष्टं तस्यागमनकारणम् ॥ ०२५ ॥

नैतदेवं स नृपतिस्तं सत्कृत्य व्यसर्जयत् ।
विश्राम्यतामिति वदन्क्लान्तोऽसीति पुनः पुनः ॥ ०२६ ॥

स सत्कृतः प्रहृष्टात्मा प्रीतः प्रीतेन पार्थिवः ।
राजप्रेष्यैरनुगतो दिष्टं वेश्म समाविशत् ॥ ०२७ ॥

ऋतुपर्णे गते राजन्वार्ष्णेयसहिते नृपे ।
बाहुको रथमास्थाय रथशालामुपागमत् ॥ ०२८ ॥

स मोचयित्वा तानश्वान्परिचार्य च शास्त्रतः ।
स्वयं चैतान्समाश्वास्य रथोपस्थ उपाविशत्  ॥ ०२९  ॥

दमयन्ती तु शोकार्ता दृष्ट्वा भाङ्गस्वरिं नृपम् ।
सूतपुत्रं च वार्ष्णेयं बाहुकं च तथाविधम्  ॥ ०३०  ॥

चिन्तयामास वैदर्भी कस्यैष रथनिस्वनः ।
नलस्येव महानासीन्न च पश्यामि नैषधम्  ॥ ०३१  ॥

वार्ष्णेयेन भवेन्नूनं विद्या सैवोपशिक्षिता ।
तेनास्य रथनिर्घोषो नलस्येव महानभूत्  ॥ ०३२  ॥

आहो स्विदृतुपर्णोऽपि यथा राजा नलस्तथा ।
ततोऽयं रथनिर्घोषो नैषधस्येव लक्ष्यते  ॥ ०३३  ॥

एवं वितर्कयित्वा तु दमयन्ती विशां पते ।
दूतीं प्रस्थापयामास नैषधान्वेषणे नृप  ॥ ०३४  ॥

---

# अध्याय ०७२

दमयन्त्युवाच  ॥

गच्छ केशिनि जानीहि क एष रथवाहकः ।
उपविष्टो रथोपस्थे विकृतो ह्रस्वबाहुकः  ॥ ००१  ॥

अभ्येत्य कुशलं भद्रे मृदुपूर्वं समाहिता ।
पृच्छेथाः पुरुषं ह्येनं यथातत्त्वमनिन्दिते  ॥ ००२  ॥

अत्र मे महती शङ्का भवेदेष नलो नृपः ।
तथा च मे मनस्तुष्टिर्हृदयस्य च निर्वृतिः ॥ ००३ ॥

ब्रूयाश्चैनं कथान्ते त्वं पर्णादवचनं यथा ।
प्रतिवाक्यं च सुश्रोणि बुध्येथास्त्वमनिन्दिते ॥ ००४ ॥

बृहदश्व उवाच ॥

एवं समाहिता गत्वा दूती बाहुकमब्रवीत् ।
दमयन्त्यपि कल्याणी प्रासादस्थान्ववैक्षत ॥ ००५ ॥

केशिन्युवाच ॥

स्वागतं ते मनुष्येन्द्र कुशलं ते ब्रवीम्यहम् ।
दमयन्त्या वचः साधु निबोध पुरुषर्षभ ॥ ००६ ॥

कदा वै प्रस्थिता यूयं किमर्थमिह चागताः ।
तत्त्वं ब्रूहि यथान्यायं वैदर्भी श्रोतुमिच्छति ॥ ००७ ॥

बाहुक उवाच ॥

श्रुतः स्वयंवरो राज्ञा कौसल्येन यशस्विना ।
द्वितीयो दमयन्त्या वै श्वोभूत इति भामिनि ॥ ००८ ॥

श्रुत्वा तं प्रस्थितो राजा शतयोजनयायिभिः ।
हयैर्वातजवैर्मुख्यैरहमस्य च सारथिः ॥ ००९ ॥

केशिन्युवाच ॥

अथ योऽसौ तृतीयो वः स कुतः कस्य वा पुनः ।

त्वं च कस्य कथं चेदं त्वयि कर्म समाहितम् ॥ ०१० ॥

बाहुक उवाच ॥

पुण्यश्लोकस्य वै सूतो वार्ष्णेय इति विश्रुतः ।
स नले विद्रुते भद्रे भाङ्गस्वरिमुपस्थितः ॥ ०११ ॥

अहमप्यश्वकुशलः सूदत्वे च सुनिष्ठितः ।
ऋतुपर्णेन सारथ्ये भोजने च वृतः स्वयम् ॥ ०१२ ॥

केशिन्युवाच ॥

अथ जानाति वार्ष्णेयः क्व नु राजा नलो गतः ।
कथञ्चित्त्वयि वैतेन कथितं स्यात्तु बाहुक ॥ ०१३ ॥

बाहुक उवाच ॥

इहैव पुत्रौ निक्षिप्य नलस्याशुभकर्मणः ।
गतस्ततो यथाकामं नैष जानाति नैषधम् ॥ ०१४ ॥

न चान्यः पुरुषः कश्चिन्नलं वेत्ति यशस्विनि ।
गूढश्चरति लोकेऽस्मिन्नष्टरूपो महीपतिः ॥ ०१५ ॥

आत्मैव हि नलं वेत्ति या चास्य तदनन्तरा ।
न हि वै तानि लिङ्गानि नलं शंसन्ति कर्हिचित् ॥ ०१६ ॥

केशिन्युवाच ॥

योऽसावयोध्यां प्रथमं गतवान्ब्राह्मणस्तदा ।
इमानि नारीवाक्यानि कथयानः पुनः पुनः ॥ ०१७ ॥

क्व नु त्वं कितव छित्त्वा वस्त्रार्धं प्रस्थितो मम ।
उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय ॥ ०१८ ॥

सा वै यथा समादिष्टा तत्रास्ते त्वत्प्रतीक्षिणी ।
दह्यमाना दिवारात्रं वस्त्रार्धेनाभिसंवृता ॥ ०१९ ॥

तस्या रुदन्त्याः सततं तेन दुःखेन पार्थिव ।
प्रसादं कुरु वै वीर प्रतिवाक्यं प्रयच्छ च ॥ ०२० ॥

तस्यास्तत्प्रियमाख्यानं प्रब्रवीहि महामते ।
तदेव वाक्यं वैदर्भी श्रोतुमिच्छत्यनिन्दिता ॥ ०२१ ॥

एतच्छ्रुत्वा प्रतिवचस्तस्य दत्तं त्वया किल ।
यत्पुरा तत्पुनस्त्वत्तो वैदर्भी श्रोतुमिच्छति ॥ ०२२ ॥

बृहदश्व उवाच ॥

एवमुक्तस्य केशिन्या नलस्य कुरुनन्दन ।
हृदयं व्यथितं चासीदश्रुपूर्णे च लोचने ॥ ०२३ ॥

स निगृह्यात्मनो दुःखं दह्यमानो महीपतिः ।
बाष्पसंदिग्धया वाचा पुनरेवेदमब्रवीत् ॥ ०२४ ॥

वैषम्यमपि संप्राप्ता गोपायन्ति कुलस्त्रियः ।
आत्मानमात्मना सत्यो जितस्वर्गा न संशयः ॥ ०२५ ॥

रहिता भर्तृभिश्चैव न क्रुध्यन्ति कदाचन ।
प्राणांश्चारित्रकवचा धारयन्तीह सत्स्त्रियः ॥ ०२६ ॥

प्राणयात्रां परिप्रेप्सोः शकुनैर्हृतवाससः ।
आधिभिर्दह्यमानस्य श्यामा न क्रोद्धुमर्हति ॥ ०२७ ॥

सत्कृतासत्कृता वापि पतिं दृष्ट्वा तथागतम् ।
भ्रष्टराज्यं श्रिया हीनं क्षुधितं व्यसनाप्लुतम्  ॥ ०२८  ॥

एवं ब्रुवाणस्तद्वाक्यं नलः परमदुःखितः ।
न बाष्पमशकत्सोढुं प्ररुरोद च भारत  ॥ ०२९  ॥

ततः सा केशिनी गत्वा दमयन्त्यै न्यवेदयत् ।
तत्सर्वं कथितं चैव विकारं चैव तस्य तम्  ॥ ०३०  ॥

---

# अध्याय ०७३

बृहदश्व उवाच  ॥

दमयन्ती तु तच्छ्रुत्वा भृशं शोकपरायणा ।
शङ्कमाना नलं तं वै केशिनीमिदमब्रवीत्  ॥ ००१  ॥

गच्छ केशिनि भूयस्त्वं परीक्षां कुरु बाहुके ।
आब्रुवाणा समीपस्था चरितान्यस्य लक्षय  ॥ ००२  ॥

यदा च किञ्चित्कुर्यात्स कारणं तत्र भामिनि ।
तत्र सञ्चेष्टमानस्य संलक्ष्यं ते विचेष्टितम्  ॥ ००३  ॥

न चास्य प्रतिबन्धेन देयोऽग्निरपि भामिनि ।
याचते न जलं देयं सम्यगत्वरमाणया  ॥ ००४  ॥

एतत्सर्वं समीक्ष्य त्वं चरितं मे निवेदय ।
यच्चान्यदपि पश्येथास्तच्चाख्येयं त्वया मम  ॥ ००५  ॥

दमयन्त्यैवमुक्ता सा जगामाथाशु केशिनी ।
निशाम्य च हयज्ञस्य लिङ्गानि पुनरागमत् ॥ ००६ ॥

सा तत्सर्वं यथावृत्तं दमयन्त्यै न्यवेदयत् ।
निमित्तं यत्तदा दृष्टं बाहुके दिव्यमानुषम् ॥ ००७ ॥

केशिन्युवाच ॥

दृढं शुच्युपचारोऽसौ न मया मानुषः क्वचित् ।
दृष्टपूर्वः श्रुतो वापि दमयन्ति तथाविधः ॥ ००८ ॥

ह्रस्वमासाद्य सञ्चारं नासौ विनमते क्वचित् ।
तं तु दृष्ट्वा यथासङ्गमुत्सर्पति यथासुखम् ॥ ००९ ॥

सङ्कटेऽप्यस्य सुमहद्विवरं जायतेऽधिकम् ॥ ००९ ॥

ऋतुपर्णस्य चार्थाय भोजनीयमनेकशः ।
प्रेषितं तत्र राज्ञा च मांसं सुबहु पाशवम् ॥ ०१० ॥

तस्य प्रक्षालनार्थाय कुम्भस्तत्रोपकल्पितः ।
स तेनावेक्षितः कुम्भः पूर्ण एवाभवत्तदा ॥ ०११ ॥

ततः प्रक्षालनं कृत्वा समधिश्रित्य बाहुकः ।
तृणमुष्टिं समादाय आविध्यैनं समादधत् ॥ ०१२ ॥

अथ प्रज्वलितस्तत्र सहसा हव्यवाहनः ।
तदद्भुततमं दृष्ट्वा विस्मिताहमिहागता ॥ ०१३ ॥

अन्यच्च तस्मिन्सुमहदाश्चर्यं लक्षितं मया ।
यदग्निमपि संस्पृश्य नैव दह्यत्यसौ शुभे ॥ ०१४ ॥

छन्देन चोदकं तस्य वहत्यावर्जितं द्रुतम् ।
अतीव चान्यत्सुमहदाश्चर्यं दृष्टवत्यहम्  ॥ ०१५  ॥

यत्स पुष्पाण्युपादाय हस्ताभ्यां ममृदे शनैः ।
मृद्यमानानि पाणिभ्यां तेन पुष्पाणि तान्यथ  ॥ ०१६  ॥

भूय एव सुगन्धीनि हृषितानि भवन्ति च ।
एतान्यद्भुतकल्पानि दृष्ट्वाहं द्रुतमागता  ॥ ०१७  ॥

बृहदश्व उवाच  ॥

दमयन्ती तु तच्छ्रुत्वा पुण्यश्लोकस्य चेष्टितम् ।
अमन्यत नलं प्राप्तं कर्मचेष्टाभिसूचितम्  ॥ ०१८  ॥

सा शङ्कमाना भर्तारं नलं बाहुकरूपिणम् ।
केशिनीं श्लक्ष्णया वाचा रुदती पुनरब्रवीत्  ॥ ०१९  ॥

पुनर्गच्छ प्रमत्तस्य बाहुकस्योपसंस्कृतम् ।
महानसाच्छृतं मांसं समादायैहि भामिनि  ॥ ०२०  ॥

सा गत्वा बाहुके व्यग्रे तन्मांसमपकृष्य च ।
अत्युष्णमेव त्वरिता तत्क्षणं प्रियकारिणी  ॥ ०२१  ॥

दमयन्त्यै ततः प्रादात्केशिनी कुरुनन्दन  ॥ ०२१  ॥

सोचिता नलसिद्धस्य मांसस्य बहुशः पुरा ।
प्राश्य मत्वा नलं सूदं प्राक्रोशद्भृशदुःखिता  ॥ ०२२  ॥

वैक्लव्यं च परं गत्वा प्रक्षाल्य च मुखं ततः ।
मिथुनं प्रेषयामास केशिन्या सह भारत  ॥ ०२३  ॥

इन्द्रसेनां सह भ्रात्रा समभिज्ञाय बाहुकः ।
अभिद्रुत्य ततो राजा परिष्वज्याङ्कमानयत् ॥ ०२४ ॥

बाहुकस्तु समासाद्य सुतौ सुरसुतोपमौ ।
भृशं दुःखपरीतात्मा सस्वरं प्ररुदोद ह ॥ ०२५ ॥

नैषधो दर्शयित्वा तु विकारमसकृत्तदा ।
उत्सृज्य सहसा पुत्रौ केशिनीमिदमब्रवीत् ॥ ०२६ ॥

इदं सुसदृशं भद्रे मिथुनं मम पुत्रयोः ।
ततो दृष्ट्वैव सहसा बाष्पमुत्सृष्टवानहम् ॥ ०२७ ॥

बहुशः संपतन्तीं त्वां जनः शङ्केत दोषतः ।
वयं च देशातिथयो गच्छ भद्रे नमोऽस्तु ते ॥ ०२८ ॥

---

# अध्याय ०७४

बृहदश्व उवाच ॥

सर्वं विकारं दृष्ट्वा तु पुण्यश्लोकस्य धीमतः ।
आगत्य केशिनी क्षिप्रं दमयन्त्यै न्यवेदयत् ॥ ००१ ॥

दमयन्ती ततो भूयः प्रेषयामास केशिनीम् ।
मातुः सकाशं दुःखार्ता नलशङ्कासमुत्सुका ॥ ००२ ॥

परीक्षितो मे बहुशो बाहुको नलशङ्कया ।
रूपे मे संशयस्त्वेकः स्वयमिच्छामि वेदितुम् ॥ ००३ ॥

स वा प्रवेश्यतां मातर्मां वानुज्ञातुमर्हसि ।
विदितं वाथ वाज्ञातं पितुर्मे संविधीयताम् ॥ ००४ ॥

एवमुक्ता तु वैदर्भ्या सा देवी भीममब्रवीत् ।
दुहितुस्तमभिप्रायमन्वजानाच्च पार्थिवः ॥ ००५ ॥

सा वै पित्राभ्यनुज्ञाता मात्रा च भरतर्षभ ।
नलं प्रवेशयामास यत्र तस्याः प्रतिश्रयः ॥ ००६ ॥

तं तु दृष्ट्वा तथायुक्तं दमयन्ती नलं तदा ।
तीव्रशोकसमाविष्टा बभूव वरवर्णिनी ॥ ००७ ॥

ततः काषायवसना जटिला मलपङ्किनी ।
दमयन्ती महाराज बाहुकं वाक्यमब्रवीत् ॥ ००८ ॥

दृष्टपूर्वस्त्वया कश्चिद्धर्मज्ञो नाम बाहुक ।
सुप्तामुत्सृज्य विपिने गतो यः पुरुषः स्त्रियम् ॥ ००९ ॥

अनागसं प्रियां भार्यां विजने श्रममोहिताम् ।
अपहाय तु को गच्छेत्पुण्यश्लोकमृते नलम् ॥ ०१० ॥

किं नु तस्य मया कार्यमपराद्धं महीपतेः ।
यो मामुत्सृज्य विपिने गतवान्निद्रया हृताम् ॥ ०११ ॥

साक्षाद्देवानपाहाय वृतो यः स मया पुरा ।
अनुव्रतां साभिकामां पुत्रिणीं त्यक्तवान्कथम् ॥ ०१२ ॥

अग्नौ पाणिगृहीतां च हंसानां वचने स्थिताम् ।
भरिष्यामीति सत्यं च प्रतिश्रुत्य क्व तद्गतम् ॥ ०१३ ॥

दमयन्त्या ब्रुवन्त्यास्तु सर्वमेतदरिंदम ।
शोकजं वारि नेत्राभ्यामसुखं प्रास्रवद्बहु ॥ ०१४ ॥

अतीव कृष्णताराभ्यां रक्तान्ताभ्यां जलं तु तत् ।
परिस्रवन्नलो दृष्ट्वा शोकार्त इदमब्रवीत् ॥ ०१५ ॥

मम राज्यं प्रनष्टं यन्नाहं तत्कृतवान्स्वयम् ।
कलिना तत्कृतं भीरु यच्च त्वामहमत्यजम् ॥ ०१६ ॥

त्वया तु धर्मभृच्छ्रेष्ठे शापेनाभिहतः पुरा ।
वनस्थया दुःखितया शोचन्त्या मां विवाससम् ॥ ०१७ ॥

स मच्छरीरे त्वच्छापाद्दह्यमानोऽवसत्कलिः ।
त्वच्छापदग्धः सततं सोऽग्नाविव समाहितः ॥ ०१८ ॥

मम च व्यवसायेन तपसा चैव निर्जितः ।
दुःखस्यान्तेन चानेन भवितव्यं हि नौ शुभे ॥ ०१९ ॥

विमुच्य मां गतः पापः स ततोऽहमिहागतः ।
त्वदर्थं विपुलश्रोणि न हि मेऽन्यत्प्रयोजनम् ॥ ०२० ॥

कथं नु नारी भर्तारमनुरक्तमनुव्रतम् ।
उत्सृज्य वरयेदन्यं यथा त्वं भीरु कर्हिचित् ॥ ०२१ ॥

दूताश्चरन्ति पृथिवीं कृत्स्नां नृपतिशासनात् ।
भैमी किल स्म भर्तारं द्वितीयं वरयिष्यति ॥ ०२२ ॥

स्वैरवृत्ता यथाकाममनुरूपमिवात्मनः ।
श्रुत्वैव चैवं त्वरितो भाङ्गस्वरिरुपस्थितः ॥ ०२३ ॥

दमयन्ती तु तच्छ्रुत्वा नलस्य परिदेवितम् ।

प्राञ्जलिर्वेपमाना च भीता वचनमब्रवीत्  ॥ ०२४  ॥

---

# अध्याय ०७५

दमयन्त्युवाच  ॥

न मामर्हसि कल्याण पापेन परिशङ्कितुम् ।
मया हि देवानुत्सृज्य वृतस्त्वं निषधाधिप  ॥ ००१  ॥

तवाभिगमनार्थं तु सर्वतो ब्राह्मणा गताः ।
वाक्यानि मम गाथाभिर्गायमाना दिशो दश  ॥ ००२  ॥

ततस्त्वां ब्राह्मणो विद्वान्पर्णादो नाम पार्थिव ।
अभ्यगच्छत्कोसलायामृतुपर्णनिवेशने  ॥ ००३  ॥

तेन वाक्ये हृते सम्यक्प्रतिवाक्ये तथाहृते ।
उपायोऽयं मया दृष्टो नैषधानयने तव  ॥ ००४  ॥

त्वामृते न हि लोकेऽन्य एकाह्ना पृथिवीपते ।
समर्थो योजनशतं गन्तुमश्वैर्नराधिप  ॥ ००५  ॥

तथा चेमौ महीपाल भजेऽहं चरणौ तव ।
यथा नासत्कृतं किञ्चिन्मनसापि चराम्यहम्  ॥ ००६  ॥

अयं चरति लोकेऽस्मिन्भूतसाक्षी सदागतिः ।
एष मुञ्चतु मे प्राणान्यदि पापं चराम्यहम्  ॥ ००७  ॥

तथा चरति तिग्मांशुः परेण भुवनं सदा ।

स विमुञ्चतु मे प्राणान्यदि पापं चराम्यहम् ॥ ००८ ॥

चन्द्रमाः सर्वभूतानामन्तश्चरति साक्षिवत् ।
स विमुञ्चतु मे प्राणान्यदि पापं चराम्यहम् ॥ ००९ ॥

एते देवास्त्रयः कृत्स्नं त्रैलोक्यं धारयन्ति वै ।
विब्रुवन्तु यथासत्यमेते वाद्य त्यजन्तु माम् ॥ ०१० ॥

एवमुक्ते ततो वायुरन्तरिक्षादभाषत ।
नैषा कृतवती पापं नल सत्यं ब्रवीमि ते ॥ ०११ ॥

राजञ्शीलनिधिः स्फीतो दमयन्त्या सुरक्षितः ।
साक्षिणो रक्षिणश्चास्या वयं त्रीन्परिवत्सरान् ॥ ०१२ ॥

उपायो विहितश्चायं त्वदर्थमतुलोऽनया ।
न ह्येकाह्ना शतं गन्ता त्वदृतेऽन्यः पुमानिह ॥ ०१३ ॥

उपपन्ना त्वया भैमी त्वं च भैम्या महीपते ।
नात्र शङ्का त्वया कार्या सङ्गच्छ सह भार्यया ॥ ०१४ ॥

तथा ब्रुवति वायौ तु पुष्पवृष्टिः पपात ह ।
देवदुन्दुभयो नेदुर्ववौ च पवनः शिवः ॥ ०१५ ॥

तदद्भुततमं दृष्ट्वा नलो राजाथ भारत ।
दमयन्त्यां विशङ्कां तां व्यपाकर्षदरिंदमः ॥ ०१६ ॥

ततस्तद्वस्त्रमरजः प्रावृणोद्वसुधाधिपः ।
संस्मृत्य नागराजानं ततो लेभे वपुः स्वकम् ॥ ०१७ ॥

स्वरूपिणं तु भर्तारं दृष्ट्वा भीमसुता तदा ।
प्राक्रोशदुच्चैरालिङ्ग्य पुण्यश्लोकमनिन्दिता ॥ ०१८ ॥

भैमीमपि नलो राजा भ्राजमानो यथा पुरा ।
सस्वजे स्वसुतौ चापि यथावत्प्रत्यनन्दत ॥ ०१९ ॥

ततः स्वोरसि विन्यस्य वक्त्रं तस्य शुभानना ।
परीता तेन दुःखेन निशश्वासायतेक्षणा ॥ ०२० ॥

तथैव मलदिग्धाङ्गी परिष्वज्य शुचिस्मिता ।
सुचिरं पुरुषव्याघ्रं तस्थौ साश्रुपरिप्लुता ॥ ०२१ ॥

ततः सर्वं यथावृत्तं दमयन्त्या नलस्य च ।
भीमायाकथयत्प्रीत्या वैदर्भ्या जननी नृप ॥ ०२२ ॥

ततोऽब्रवीन्महाराजः कृतशौचमहं नलम् ।
दमयन्त्या सहोपेतं काल्यं द्रष्टा सुखोषितम् ॥ ०२३ ॥

ततस्तौ सहितौ रात्रिं कथयन्तौ पुरातनम् ।
वने विचरितं सर्वमूषतुर्मुदितौ नृप ॥ ०२४ ॥

स चतुर्थे ततो वर्षे सङ्गम्य सह भार्यया ।
सर्वकामैः सुसिद्धार्थो लब्धवान्परमां मुदम् ॥ ०२५ ॥

दमयन्त्यपि भर्तारमवाप्याप्यायिता भृशम् ।
अर्धसञ्जातसस्येव तोयं प्राप्य वसुंधरा ॥ ०२६ ॥

सैवं समेत्य व्यपनीततन्द्री ; शान्तज्वरा हर्षविवृद्धसत्त्वा ।
रराज भैमी समवाप्तकामा ; शीतांशुना रात्रिरिवोदितेन ॥ ०२७ ॥

---

# अध्याय ०७६

बृहदश्व उवाच ॥

अथ तां व्युषितो रात्रिं नलो राजा स्वलङ्कृतः ।
वैदर्भ्या सहितः काल्यं ददर्श वसुधाधिपम् ॥ ००१ ॥

ततोऽभिवादयामास प्रयतः श्वशुरं नलः ।
तस्यानु दमयन्ती च ववन्दे पितरं शुभा ॥ ००२ ॥

तं भीमः प्रतिजग्राह पुत्रवत्परया मुदा ।
यथार्हं पूजयित्वा तु समाश्वासयत प्रभुः ॥ ००३ ॥

नलेन सहितां तत्र दमयन्तीं पतिव्रताम् ॥ ००३ ॥

तामर्हणां नलो राजा प्रतिगृह्य यथाविधि ।
परिचर्यां स्वकां तस्मै यथावत्प्रत्यवेदयत् ॥ ००४ ॥

ततो बभूव नगरे सुमहान्हर्षनिस्वनः ।
जनस्य संप्रहृष्टस्य नलं दृष्ट्वा तथागतम् ॥ ००५ ॥

अशोभयच्च नगरं पताकाध्वजमालिनम् ।
सिक्तसंमृष्टपुष्पाढ्या राजमार्गाः कृतास्तदा ॥ ००६ ॥

द्वारि द्वारि च पौराणां पुष्पभङ्गः प्रकल्पितः ।
अर्चितानि च सर्वाणि देवतायतनानि च ॥ ००७ ॥

ऋतुपर्णोऽपि शुश्राव बाहुकच्छद्मिनं नलम् ।
दमयन्त्या समायुक्तं जहृषे च नराधिपः ॥ ००८ ॥

तमानाय्य नलो राजा क्षमयामास पार्थिवम् ।

स च तं क्षमयामास हेतुभिर्बुद्धिसंमतः ॥ ००९ ॥

स सत्कृतो महीपालो नैषधं विस्मयान्वितः ।
दिष्ट्या समेतो दारैः स्वैर्भवानित्यभ्यनन्दत ॥ ०१० ॥

कच्चित्तु नापराधं ते कृतवानस्मि नैषध ।
अज्ञातवासं वसतो मद्गृहे निषधाधिप ॥ ०११ ॥

यदि वा बुद्धिपूर्वाणि यद्यबुद्धानि कानिचित् ।
मया कृतान्यकार्याणि तानि मे क्षन्तुमर्हसि ॥ ०१२ ॥

नल उवाच ॥

न मेऽपराधं कृतवांस्त्वं स्वल्पमपि पार्थिव ।
कृतेऽपि च न मे कोपः क्षन्तव्यं हि मया तव ॥ ०१३ ॥

पूर्वं ह्यसि सखा मेऽसि संबन्धी च नराधिप ।
अत ऊर्ध्वं तु भूयस्त्वं प्रीतिमाहर्तुमर्हसि ॥ ०१४ ॥

सर्वकामैः सुविहितः सुखमस्म्युषितस्त्वयि ।
न तथा स्वगृहे राजन्यथा तव गृहे सदा ॥ ०१५ ॥

इदं चैव हयज्ञानं त्वदीयं मयि तिष्ठति ।
तदुपाकर्तुमिच्छामि मन्यसे यदि पार्थिव ॥ ०१६ ॥

बृहदश्व उवाच ॥

एवमुक्त्वा ददौ विद्यामृतुपर्णाय नैषधः ।
स च तां प्रतिजग्राह विधिदृष्टेन कर्मणा ॥ ०१७ ॥

ततो गृह्याश्वहृदयं तदा भाङ्गस्वरिर्नृपः ।

सूतमन्यमुपादाय ययौ स्वपुरमेव हि ॥ ०१८ ॥

ऋतुपर्णे प्रतिगते नलो राजा विशां पते ।
नगरे कुण्डिने कालं नातिदीर्घमिवावसत् ॥ ०१९ ॥

---

# अध्याय ०७७

बृहदश्व उवाच ॥

स मासमुष्य कौन्तेय भीममामन्त्र्य नैषधः ।
पुरादल्पपरीवारो जगाम निषधान्प्रति ॥ ००१ ॥

रथेनैकेन शुभ्रेण दन्तिभिः परिषोडशैः ।
पञ्चाशद्भिर्हयैश्चैव षड्शतैश्च पदातिभिः ॥ ००२ ॥

स कम्पयन्निव महीं त्वरमाणो महीपतिः ।
प्रविवेशातिसंरब्धस्तरसैव महामनाः ॥ ००३ ॥

ततः पुष्करमासाद्य वीरसेनसुतो नलः ।
उवाच दीव्याव पुनर्बहु वित्तं मयार्जितम् ॥ ००४ ॥

दमयन्ती च यच्चान्यन्मया वसु समर्जितम् ।
एष वै मम संन्यासस्तव राज्यं तु पुष्कर ॥ ००५ ॥

पुनः प्रवर्ततां द्यूतमिति मे निश्चिता मतिः ।
एकपाणेन भद्रं ते प्राणयोश्च पणावहे ॥ ००६ ॥

जित्वा परस्वमाहृत्य राज्यं वा यदि वा वसु ।

प्रतिपाणः प्रदातव्यः परं हि धनमुच्यते ॥ ००७ ॥

न चेद्वाञ्छसि तद्यूतं युद्धद्यूतं प्रवर्तताम् ।
द्वैरथेनास्तु वै शान्तिस्तव वा मम वा नृप ॥ ००८ ॥

वंशभोज्यमिदं राज्यं मार्गितव्यं यथा तथा ।
येन तेनाप्युपायेन वृद्धानामिति शासनम् ॥ ००९ ॥

द्वयोरेकतरे बुद्धिः क्रियतामद्य पुष्कर ।
कैतवेनाक्षवत्यां वा युद्धे वा नम्यतां धनुः ॥ ०१० ॥

नैषधेनैवमुक्तस्तु पुष्करः प्रहसन्निव ।
ध्रुवमात्मजयं मत्वा प्रत्याह पृथिवीपतिम् ॥ ०११ ॥

दिष्ट्या त्वयार्जितं वित्तं प्रतिपाणाय नैषध ।
दिष्ट्या च दुष्कृतं कर्म दमयन्त्याः क्षयं गतम् ॥ ०१२ ॥

दिष्ट्या च ध्रियसे राजन्सदारोऽरिनिबर्हण ॥ ०१२ ॥

धनेनानेन वैदर्भी जितेन समलङ्कृता ।
मामुपस्थास्यति व्यक्तं दिवि शक्रमिवाप्सराः ॥ ०१३ ॥

नित्यशो हि स्मरामि त्वां प्रतीक्षामि च नैषध ।
देवने च मम प्रीतिर्न भवत्यसुहृद्गणैः ॥ ०१४ ॥

जित्वा त्वद्य वरारोहां दमयन्तीमनिन्दिताम् ।
कृतकृत्यो भविष्यामि सा हि मे नित्यशो हृदि ॥ ०१५ ॥

श्रुत्वा तु तस्य ता वाचो बह्वबद्धप्रलापिनः ।
इयेष स शिरश्छेत्तुं खड्गेन कुपितो नलः ॥ ०१६ ॥

स्मयंस्तु रोषताम्राक्षस्तमुवाच ततो नृपः ।
पणावः किं व्याहरसे जित्वा वै व्याहरिष्यसि ॥ ०१७ ॥

ततः प्रावर्तत द्यूतं पुष्करस्य नलस्य च ।
एकपाणेन भद्रं ते नलेन स पराजितः ॥ ०१८ ॥

सरत्नकोशनिचयः प्राणेन पणितोऽपि च ॥ ०१८ ॥

जित्वा च पुष्करं राजा प्रहसन्निदमब्रवीत् ।
मम सर्वमिदं राज्यमव्यग्रं हतकण्टकम् ॥ ०१९ ॥

वैदर्भी न त्वया शक्या राजापसद वीक्षितुम् ।
तस्यास्त्वं सपरीवारो मूढ दासत्वमागतः ॥ ०२० ॥

न तत्त्वया कृतं कर्म येनाहं निर्जितः पुरा ।
कलिना तत्कृतं कर्म त्वं तु मूढ न बुध्यसे ॥ ०२१ ॥

नाहं परकृतं दोषं त्वय्याधास्ये कथञ्चन ॥ ०२१ ॥

यथासुखं त्वं जीवस्व प्राणानभ्युत्सृजामि ते ।
तथैव च मम प्रीतिस्त्वयि वीर न संशयः ॥ ०२२ ॥

सौभ्रात्रं चैव मे त्वत्तो न कदाचित्प्रहास्यति ।
पुष्कर त्वं हि मे भ्राता सञ्जीवस्व शतं समाः ॥ ०२३ ॥

एवं नलः सान्त्वयित्वा भ्रातरं सत्यविक्रमः ।
स्वपुरं प्रेषयामास परिष्वज्य पुनः पुनः ॥ ०२४ ॥

सान्त्वितो नैषधेनैवं पुष्करः प्रत्युवाच तम् ।
पुण्यश्लोकं तदा राजन्नभिवाद्य कृताञ्जलिः ॥ ०२५ ॥

कीर्तिरस्तु तवाक्षय्या जीव वर्षायुतं सुखी ।
यो मे वितरसि प्राणानधिष्ठानं च पार्थिव ॥ ०२६ ॥

स तथा सत्कृतो राज्ञा मासमुष्य तदा नृपः ।
प्रययौ स्वपुरं हृष्टः पुष्करः स्वजनावृतः ॥ ०२७ ॥

महत्या सेनया राजन्विनीतैः परिचारकैः ।
भ्राजमान इवादित्यो वपुषा पुरुषर्षभ ॥ ०२८ ॥

प्रस्थाप्य पुष्करं राजा वित्तवन्तमनामयम् ।
प्रविवेश पुरं श्रीमानत्यर्थमुपशोभितम् ॥ ०२९ ॥

प्रविश्य सान्त्वयामास पौरांश्च निषधाधिपः ॥ ०२९ ॥

---

# अध्याय ०७८

बृहदश्व उवाच ॥

प्रशान्ते तु पुरे हृष्टे संप्रवृत्ते महोत्सवे ।
महत्या सेनया राजा दमयन्तीमुपानयत् ॥ ००१ ॥

दमयन्तीमपि पिता सत्कृत्य परवीरहा ।
प्रस्थापयदमेयात्मा भीमो भीमपराक्रमः ॥ ००२ ॥

आगतायां तु वैदर्भ्यां सपुत्रायां नलो नृपः ।
वर्तयामास मुदितो देवराडिव नन्दने ॥ ००३ ॥

तथा प्रकाशतां यातो जम्बूद्वीपेऽथ राजसु ।
पुनः स्वे चावसद्राज्ये प्रत्याहृत्य महायशाः ॥ ००४ ॥

ईजे च विविधैर्यज्ञैर्विधिवत्स्वाप्तदक्षिणैः ।
तथा त्वमपि राजेन्द्र ससुहृद्वक्ष्यसेऽचिरात् ॥ ००५ ॥

दुःखमेतादृशं प्राप्तो नलः परपुरञ्जयः ।
देवनेन नरश्रेष्ठ सभार्यो भरतर्षभ ॥ ००६ ॥

एकाकिनैव सुमहन्नलेन पृथिवीपते ।
दुःखमासादितं घोरं प्राप्तश्चाभ्युदयः पुनः ॥ ००७ ॥

त्वं पुनर्भ्रातृसहितः कृष्णया चैव पाण्डव ।
रमसेऽस्मिन्महारण्ये धर्ममेवानुचिन्तयन् ॥ ००८ ॥

ब्राह्मणैश्च महाभागैर्वेदवेदाङ्गपारगैः ।
नित्यमन्वास्यसे राजंस्तत्र का परिदेवना ॥ ००९ ॥

इतिहासमिमं चापि कलिनाशनमुच्यते ।
शक्यमाश्वासितुं श्रुत्वा त्वद्विधेन विशां पते ॥ ०१० ॥

अस्थिरत्वं च सञ्चिन्त्य पुरुषार्थस्य नित्यदा ।
तस्याये च व्यये चैव समाश्वसिहि मा शुचः ॥ ०११ ॥

ये चेदं कथयिष्यन्ति नलस्य चरितं महत् ।
श्रोष्यन्ति चाप्यभीक्ष्णं वै नालक्ष्मीस्तान्भजिष्यति ॥ ०१२ ॥

अर्थास्तस्योपपत्स्यन्ते धन्यतां च गमिष्यति ॥ ०१२ ॥

इतिहासमिमं श्रुत्वा पुराणं शश्वदुत्तमम् ।
पुत्रान्पौत्रान्पशूंश्चैव वेत्स्यते नृषु चाग्र्यताम् ॥ ०१३ ॥

अरोगः प्रीतिमांश्चैव भविष्यति न संशयः ॥ ०१३ ॥

भयं पश्यसि यच्च त्वमाह्वयिष्यति मां पुनः ।
अक्षज्ञ इति तत्तेऽहं नाशयिष्यामि पार्थिव ॥ ०१४ ॥

वेदाक्षहृदयं कृत्स्नमहं सत्यपराक्रम ।
उपपद्यस्व कौन्तेय प्रसन्नोऽहं ब्रवीमि ते ॥ ०१५ ॥

वैशंपायन उवाच ॥

ततो हृष्टमना राजा बृहदश्वमुवाच ह ।
भगवन्नक्षहृदयं ज्ञातुमिच्छामि तत्त्वतः ॥ ०१६ ॥

ततोऽक्षहृदयं प्रादात्पाण्डवाय महात्मने ।
दत्त्वा चाश्वशिरोऽगच्छदुपस्प्रष्टुं महातपाः ॥ ०१७ ॥

बृहदश्वे गते पार्थमश्रौषीत्सव्यसाचिनम् ।
वर्तमानं तपस्युग्रे वायुभक्षं मनीषिणम् ॥ ०१८ ॥

ब्राह्मणेभ्यस्तपस्विभ्यः संपतद्भ्यस्ततस्ततः ।
तीर्थशैलवरेभ्यश्च समेतेभ्यो दृढव्रतः ॥ ०१९ ॥

इति पार्थो महाबाहुर्दुरापं तप आस्थितः ।
न तथा दृष्टपूर्वोऽन्यः कश्चिदुग्रतपा इति ॥ ०२० ॥

यथा धनञ्जयः पार्थस्तपस्वी नियतव्रतः ।
मुनिरेकचरः श्रीमान्धर्मो विग्रहवानिव ॥ ०२१ ॥

तं श्रुत्वा पाण्डवो राजंस्तप्यमानं महावने ।
अन्वशोचत कौन्तेयः प्रियं वै भ्रातरं जयम् ॥ ०२२ ॥

दह्यमानेन तु हृदा शरणार्थी महावने ।
ब्राह्मणान्विविधज्ञानान्पर्यपृच्छद्युधिष्ठिरः ॥ ०२३ ॥

---

# अध्याय ०७९

जनमेजय उवाच ॥

भगवन्काम्यकात्पार्थे गते मे प्रपितामहे ।
पाण्डवाः किमकुर्वन्त तमृते सव्यसाचिनम् ॥ ००१ ॥

स हि तेषां महेष्वासो गतिरासीदनीकजित् ।
आदित्यानां यथा विष्णुस्तथैव प्रतिभाति मे ॥ ००२ ॥

तेनेन्द्रसमवीर्येण सङ्ग्रामेष्वनिवर्तिना ।
विनाभूता वने वीराः कथमासन्पितामहाः ॥ ००३ ॥

वैशंपायन उवाच ॥

गते तु काम्यकात्तात पाण्डवे सव्यसाचिनि ।
बभूवुः कौरवेयास्ते दुःखशोकपरायणाः ॥ ००४ ॥

आक्षिप्तसूत्रा मणयश्छिन्नपक्षा इव द्विजाः ।
अप्रीतमनसः सर्वे बभूवुरथ पाण्डवाः ॥ ००५ ॥

वनं च तदभूत्तेन हीनमक्लिष्टकर्मणा ।
कुबेरेण यथा हीनं वनं चैत्ररथं तथा ॥ ००६ ॥

तमृते पुरुषव्याघ्रं पाण्डवा जनमेजय ।
मुदमप्राप्नुवन्तो वै काम्यके न्यवसंस्तदा ॥ ००७ ॥

ब्राह्मणार्थे पराक्रान्ताः शुद्धैर्बाणैर्महारथाः ।
निघ्नन्तो भरतश्रेष्ठ मेध्यान्बहुविधान्मृगान् ॥ ००८ ॥

नित्यं हि पुरुषव्याघ्रा वन्याहारमरिंदमाः ।
विप्रसृत्य समाहृत्य ब्राह्मणेभ्यो न्यवेदयन् ॥ ००९ ॥

एवं ते न्यवसंस्तत्र सोत्कण्ठाः पुरुषर्षभाः ।
अहृष्टमनसः सर्वे गते राजन्धनञ्जये ॥ ०१० ॥

अथ विप्रोषितं वीरं पाञ्चाली मध्यमं पतिम् ।
स्मरन्ती पाण्डवश्रेष्ठमिदं वचनमब्रवीत् ॥ ०११ ॥

योऽर्जुनेनार्जुनस्तुल्यो द्विबाहुर्बहुबाहुना ।
तमृते पाण्डवश्रेष्ठं वनं न प्रतिभाति मे ॥ ०१२ ॥

शून्यामिव च पश्यामि तत्र तत्र महीमिमाम् ॥ ०१२ ॥

बह्वाश्चर्यमिदं चापि वनं कुसुमितद्रुमम् ।
न तथा रमणीयं मे तमृते सव्यसाचिनम् ॥ ०१३ ॥

नीलाम्बुदसमप्रख्यं मत्तमातङ्गविक्रमम् ।
तमृते पुण्डरीकाक्षं काम्यकं नातिभाति मे ॥ ०१४ ॥

यस्य स्म धनुषो घोषः श्रूयतेऽशनिनिस्वनः ।
न लभे शर्म तं राजन्स्मरन्ती सव्यसाचिनम् ॥ ०१५ ॥

तथा लालप्यमानां तां निशम्य परवीरहा ।
भीमसेनो महाराज द्रौपदीमिदमब्रवीत् ॥ ०१६ ॥

मनःप्रीतिकरं भद्रे यद्ब्रवीषि सुमध्यमे ।
तन्मे प्रीणाति हृदयममृतप्राशनोपमम् ॥ ०१७ ॥

यस्य दीर्घौ समौ पीनौ भुजौ परिघसंनिभौ ।
मौर्वीकृतकिणौ वृत्तौ खड्गायुधगदाधरौ ॥ ०१८ ॥

निष्काङ्गदकृतापीडौ पञ्चशीर्षाविवोरगौ ।
तमृते पुरुषव्याघ्रं नष्टसूर्यमिदं वनम् ॥ ०१९ ॥

यमाश्रित्य महाबाहुं पाञ्चालाः कुरवस्तथा ।
सुराणामपि यत्तानां पृतनासु न बिभ्यति ॥ ०२० ॥

यस्य बाहू समाश्रित्य वयं सर्वे महात्मनः ।
मन्यामहे जितानाजौ परान्प्राप्तां च मेदिनीम् ॥ ०२१ ॥

तमृते फल्गुनं वीरं न लभे काम्यके धृतिम् ।
शून्यामिव च पश्यामि तत्र तत्र महीमिमाम् ॥ ०२२ ॥

नकुल उवाच ॥

य उदीचीं दिशं गत्वा जित्वा युधि महाबलान् ।
गन्धर्वमुख्याञ्शतशो हया.ण्ल्लेभे स वासविः ॥ ०२३ ॥

राजंस्तित्तिरिकल्माषाञ्श्रीमाननिलरंहसः ।
प्रादाद्भ्रात्रे प्रियः प्रेम्णा राजसूये महाक्रतौ ॥ ०२४ ॥

तमृते भीमधन्वानं भीमादवरजं वने ।
कामये काम्यके वासं नेदानीममरोपमम् ॥ ०२५ ॥

सहदेव उवाच ॥

यो धनानि च कन्याश्च युधि जित्वा महारथान् ।
आजहार पुरा राज्ञे राजसूये महाक्रतौ ॥ ०२६ ॥

यः समेतान्मृधे जित्वा यादवानमितद्युतिः ।
सुभद्रामाजहारैको वासुदेवस्य संमते ॥ ०२७ ॥

तस्य जिष्णोर्बृसीं दृष्ट्वा शून्यामुपनिवेशने ।
हृदयं मे महाराज न शाम्यति कदाचन ॥ ०२८ ॥

वनादस्माद्विवासं तु रोचयेऽहमरिंदम ।
न हि नस्तमृते वीरं रमणीयमिदं वनम् ॥ ०२९ ॥

---

# तीर्थयात्रापर्व

## अध्याय ०८०

वैशंपायन उवाच ॥

धनञ्जयोत्सुकास्ते तु वने तस्मिन्महारथाः ।
न्यवसन्त महाभागा द्रौपद्या सह पाण्डवाः ॥ ००१ ॥

अथापश्यन्महात्मानं देवर्षिं तत्र नारदम् ।
दीप्यमानं श्रिया ब्राह्म्या दीप्ताग्निसमतेजसम् ॥ ००२ ॥

स तैः परिवृतः श्रीमान्भ्रातृभिः कुरुसत्तमः ।
विबभावतिदीप्तौजा देवैरिव शतक्रतुः ॥ ००३ ॥

यथा च वेदान्सावित्री याज्ञसेनी तथा सती ।
न जहौ धर्मतः पार्थान्मेरुमर्कप्रभा यथा ॥ ००४ ॥

प्रतिगृह्य तु तां पूजां नारदो भगवानृषिः ।
आश्वासयद्धर्मसुतं युक्तरूपमिवानघ ॥ ००५ ॥

उवाच च महात्मानं धर्मराजं युधिष्ठिरम् ।
ब्रूहि धर्मभृतां श्रेष्ठ केनार्थः किं ददामि ते ॥ ००६ ॥

अथ धर्मसुतो राजा प्रणम्य भ्रातृभिः सह ।
उवाच प्राञ्जलिर्वाक्यं नारदं देवसंमितम् ॥ ००७ ॥

त्वयि तुष्टे महाभाग सर्वलोकाभिपूजिते ।
कृतमित्येव मन्येऽहं प्रसादात्तव सुव्रत ॥ ००८ ॥

यदि त्वहमनुग्राह्यो भ्रातृभिः सहितोऽनघ ।
संदेहं मे मुनिश्रेष्ठ हृदिस्थं छेत्तुमर्हसि ॥ ००९ ॥

प्रदक्षिणं यः कुरुते पृथिवीं तीर्थतत्परः ।
किं फलं तस्य कार्त्स्न्येन तद्ब्रह्मन्वक्तुमर्हसि ॥ ०१० ॥

नारद उवाच ॥

शृणु राजन्नवहितो यथा भीष्मेण भारत ।
पुलस्त्यस्य सकाशाद्वै सर्वमेतदुपश्रुतम् ॥ ०११ ॥

पुरा भागीरथीतीरे भीष्मो धर्मभृतां वरः ।
पित्र्यं व्रतं समास्थाय न्यवसन्मुनिवत्तदा ॥ ०१२ ॥

शुभे देशे महाराज पुण्ये देवर्षिसेविते ।

गङ्गाद्वारे महातेजा देवगन्धर्वसेविते ॥ ०१३ ॥

स पितॄंस्तर्पयामास देवांश्च परमद्युतिः ।
ऋषींश्च तोषयामास विधिदृष्टेन कर्मणा ॥ ०१४ ॥

कस्यचित्त्वथ कालस्य जपन्नेव महातपाः ।
ददर्शाद्भुतसङ्काशं पुलस्त्यमृषिसत्तमम् ॥ ०१५ ॥

स तं दृष्ट्वोग्रतपसं दीप्यमानमिव श्रिया ।
प्रहर्षमतुलं लेभे विस्मयं च परं ययौ ॥ ०१६ ॥

उपस्थितं महाराज पूजयामास भारत ।
भीष्मो धर्मभृतां श्रेष्ठो विधिदृष्टेन कर्मणा ॥ ०१७ ॥

शिरसा चार्घ्यमादाय शुचिः प्रयतमानसः ।
नाम सङ्कीर्तयामास तस्मिन्ब्रह्मर्षिसत्तमे ॥ ०१८ ॥

भीष्मोऽहमस्मि भद्रं ते दासोऽस्मि तव सुव्रत ।
तव संदर्शनादेव मुक्तोऽहं सर्वकिल्बिषैः ॥ ०१९ ॥

एवमुक्त्वा महाराज भीष्मो धर्मभृतां वरः ।
वाग्यतः प्राञ्जलिर्भूत्वा तूष्णीमासीद्युधिष्ठिर ॥ ०२० ॥

तं दृष्ट्वा नियमेनाथ स्वाध्यायाम्नायकर्शितम् ।
भीष्मं कुरुकुलश्रेष्ठं मुनिः प्रीतमनाभवत् ॥ ०२१ ॥

पुलस्त्य उवाच ॥

अनेन तव धर्मज्ञ प्रश्रयेण दमेन च ।
सत्येन च महाभाग तुष्टोऽस्मि तव सर्वशः ॥ ०२२ ॥

यस्येदृशस्ते धर्मोऽयं पितृभक्त्याश्रितोऽनघ ।
तेन पश्यसि मां पुत्र प्रीतिश्चापि मम त्वयि ॥ ०२३ ॥

अमोघदर्शी भीष्माहं ब्रूहि किं करवाणि ते ।
यद्वक्ष्यसि कुरुश्रेष्ठ तस्य दातास्मि तेऽनघ ॥ ०२४ ॥

भीष्म उवाच ॥

प्रीते त्वयि महाभाग सर्वलोकाभिपूजिते ।
कृतमित्येव मन्येऽहं यदहं दृष्टवान्प्रभुम् ॥ ०२५ ॥

यदि त्वहमनुग्राह्यस्तव धर्मभृतां वर ।
वक्ष्यामि हृत्स्थं संदेहं तन्मे त्वं वक्तुमर्हसि ॥ ०२६ ॥

अस्ति मे भगवन्कश्चित्तीर्थेभ्यो धर्मसंशयः ।
तमहं श्रोतुमिच्छामि पृथक्सङ्कीर्तितं त्वया ॥ ०२७ ॥

प्रदक्षिणं यः पृथिवीं करोत्यमितविक्रम ।
किं फलं तस्य विप्रर्षे तन्मे ब्रूहि तपोधन ॥ ०२८ ॥

पुलस्त्य उवाच ॥

हन्त तेऽहं प्रवक्ष्यामि यदृषीणां परायणम् ।
तदेकाग्रमनास्तात शृणु तीर्थेषु यत्फलम् ॥ ०२९ ॥

यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥ ०३० ॥

प्रतिग्रहादुपावृत्तः संतुष्टो नियतः शुचिः ।
अहङ्कारनिवृत्तश्च स तीर्थफलमश्नुते ॥ ०३१ ॥

अकल्कको निरारम्भो लघ्वाहारो जितेन्द्रियः ।
विमुक्तः सर्वदोषैर्यः स तीर्थफलमश्नुते ॥ ०३२ ॥

अक्रोधनश्च राजेन्द्र सत्यशीलो दृढव्रतः ।
आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते ॥ ०३३ ॥

ऋषिभिः क्रतवः प्रोक्ता वेदेष्विह यथाक्रमम् ।
फलं चैव यथातत्त्वं प्रेत्य चेह च सर्वशः ॥ ०३४ ॥

न ते शक्या दरिद्रेण यज्ञाः प्राप्तुं महीपते ।
बहूपकरणा यज्ञा नानासंभारविस्तराः ॥ ०३५ ॥

प्राप्यन्ते पार्थिवैरेते समृद्धैर्वा नरैः क्वचित् ।
नार्थन्यूनोपकरणैरेकात्मभिरसंहतैः ॥ ०३६ ॥

यो दरिद्रैरपि विधिः शक्यः प्राप्तुं नरेश्वर ।
तुल्यो यज्ञफलैः पुण्यैस्तं निबोध युधां वर ॥ ०३७ ॥

ऋषीणां परमं गुह्यमिदं भरतसत्तम ।
तीर्थाभिगमनं पुण्यं यज्ञैरपि विशिष्यते ॥ ०३८ ॥

अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च ।
अदत्त्वा काञ्चनं गाश्च दरिद्रो नाम जायते ॥ ०३९ ॥

अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः ।
न तत्फलमवाप्नोति तीर्थाभिगमनेन यत् ॥ ०४० ॥

नृलोके देवदेवस्य तीर्थं त्रैलोक्यविश्रुतम् ।
पुष्करं नाम विख्यातं महाभागः समाविशेत् ॥ ०४१ ॥

दश कोटिसहस्राणि तीर्थानां वै महीपते ।

सांनिध्यं पुष्करे येषां त्रिसंध्यं कुरुनन्दन ॥ ०४२ ॥

आदित्या वसवो रुद्राः साध्याश्च समरुद्गणाः ।
गन्धर्वाप्सरसश्चैव नित्यं संनिहिता विभो ॥ ०४३ ॥

यत्र देवास्तपस्तप्त्वा दैत्या ब्रह्मर्षयस्तथा ।
दिव्ययोगा महाराज पुण्येन महतान्विताः ॥ ०४४ ॥

मनसाप्यभिकामस्य पुष्कराणि मनस्विनः ।
पूयन्ते सर्वपापानि नाकपृष्ठे च पूज्यते ॥ ०४५ ॥

तस्मिंस्तीर्थे महाभाग नित्यमेव पितामहः ।
उवास परमप्रीतो देवदानवसंमतः ॥ ०४६ ॥

पुष्करेषु महाभाग देवाः सर्षिपुरोगमाः ।
सिद्धिं समभिसंप्राप्ताः पुण्येन महतान्विताः ॥ ०४७ ॥

तत्राभिषेकं यः कुर्यात्पितृदेवार्चने रतः ।
अश्वमेधं दशगुणं प्रवदन्ति मनीषिणः ॥ ०४८ ॥

अप्येकं भोजयेद्विप्रं पुष्करारण्यमाश्रितः ।
तेनासौ कर्मणा भीष्म प्रेत्य चेह च मोदते ॥ ०४९ ॥

शाकमूलफलैर्वापि येन वर्तयते स्वयम् ।
तद्वै दद्याद्ब्राह्मणाय श्रद्धावाननसूयकः ॥ ०५० ॥

तेनैव प्राप्नुयात्प्राज्ञो हयमेधफलं नरः ॥ ०५० ॥

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा राजसत्तम ।
न वियोनिं व्रजन्त्येते स्नातास्तीर्थे महात्मनः ॥ ०५१ ॥

कार्त्तिक्यां तु विशेषेण योऽभिगच्छेत पुष्करम् ।
फलं तत्राक्षयं तस्य वर्धते भरतर्षभ ॥ ०५२ ॥

सायं प्रातः स्मरेद्यस्तु पुष्कराणि कृताञ्जलिः ।
उपस्पृष्टं भवेत्तेन सर्वतीर्थेषु भारत ॥ ०५३ ॥

प्राप्नुयाच्च नरो लोकान्ब्रह्मणः सदनेऽक्षयान् ॥ ०५३ ॥

जन्मप्रभृति यत्पापं स्त्रियो वा पुरुषस्य वा ।
पुष्करे स्नातमात्रस्य सर्वमेव प्रणश्यति ॥ ०५४ ॥

यथा सुराणां सर्वेषामादिस्तु मधुसूदनः ।
तथैव पुष्करं राजंस्तीर्थानामादिरुच्यते ॥ ०५५ ॥

उष्य द्वादश वर्षाणि पुष्करे नियतः शुचिः ।
क्रतून्सर्वानवाप्नोति ब्रह्मलोकं च गच्छति ॥ ०५६ ॥

यस्तु वर्षशतं पूर्णमग्निहोत्रमुपासते ।
कार्त्तिकीं वा वसेदेकां पुष्करे सममेव तत् ॥ ०५७ ॥

दुष्करं पुष्करं गन्तुं दुष्करं पुष्करे तपः ।
दुष्करं पुष्करे दानं वस्तुं चैव सुदुष्करम् ॥ ०५८ ॥

उष्य द्वादशरात्रं तु नियतो नियताशनः ।
प्रदक्षिणमुपावृत्तो जम्बूमार्गं समाविशेत् ॥ ०५९ ॥

जम्बूमार्गं समाविश्य देवर्षिपितृसेवितम् ।
अश्वमेधमवाप्नोति विष्णुलोकं च गच्छति ॥ ०६० ॥

तत्रोष्य रजनीः पञ्च षष्ठकालक्षमी नरः ।
न दुर्गतिमवाप्नोति सिद्धिं प्राप्नोति चोत्तमाम् ॥ ०६१ ॥

जम्बूमार्गादुपावृत्तो गच्छेत्तण्डुलिकाश्रमम् ।
न दुर्गतिमवाप्नोति स्वर्गलोके च पूज्यते ॥ ०६२ ॥

अगस्त्यसर आसाद्य पितृदेवार्चने रतः ।
त्रिरात्रोपोषितो राजन्नग्निष्टोमफलं लभेत् ॥ ०६३ ॥

शाकवृत्तिः फलैर्वापि कौमारं विन्दते पदम् ।
कण्वाश्रमं समासाद्य श्रीजुष्टं लोकपूजितम् ॥ ०६४ ॥

धर्मारण्यं हि तत्पुण्यमाद्यं च भरतर्षभ ।
यत्र प्रविष्टमात्रो वै पापेभ्यो विप्रमुच्यते ॥ ०६५ ॥

अर्चयित्वा पितृन्देवान्नियतो नियताशनः ।
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥ ०६६ ॥

प्रदक्षिणं ततः कृत्वा ययातिपतनं व्रजेत् ।
हयमेधस्य यज्ञस्य फलं प्राप्नोति तत्र वै ॥ ०६७ ॥

महाकालं ततो गच्छेन्नियतो नियताशनः ।
कोटितीर्थमुपस्पृश्य हयमेधफलं लभेत् ॥ ०६८ ॥

ततो गच्छेत धर्मज्ञ पुण्यस्थानमुमापतेः ।
नाम्ना भद्रवटं नाम त्रिषु लोकेषु विश्रुतम् ॥ ०६९ ॥

तत्राभिगम्य चेशानं गोसहस्रफलं लभेत् ।
महादेवप्रसादाच्च गाणपत्यमवाप्नुयात् ॥ ०७० ॥

नर्मदामथ चासाद्य नदीं त्रैलोक्यविश्रुताम् ।
तर्पयित्वा पितृन्देवानग्निष्टोमफलं लभेत् ॥ ०७१ ॥

दक्षिणं सिन्धुमासाद्य ब्रह्मचारी जितेन्द्रियः ।
अग्निष्टोममवाप्नोति विमानं चाधिरोहति ॥ ०७२ ॥

चर्मण्वतीं समासाद्य नियतो नियताशनः ।
रन्तिदेवाभ्यनुज्ञातो अग्निष्टोमफलं लभेत् ॥ ०७३ ॥

ततो गच्छेत धर्मज्ञ हिमवत्सुतमर्बुदम् ।
पृथिव्यां यत्र वै छिद्रं पूर्वमासीद्युधिष्ठिर ॥ ०७४ ॥

तत्राश्रमो वसिष्ठस्य त्रिषु लोकेषु विश्रुतः ।
तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् ॥ ०७५ ॥

पिङ्गातीर्थमुपस्पृश्य ब्रह्मचारी जितेन्द्रियः ।
कपिलानां नरव्याघ्र शतस्य फलमश्नुते ॥ ०७६ ॥

ततो गच्छेत धर्मज्ञ प्रभासं लोकविश्रुतम् ।
यत्र संनिहितो नित्यं स्वयमेव हुताशनः ॥ ०७७ ॥

देवतानां मुखं वीर अनलोऽनिलसारथिः ॥ ०७७ ॥

तस्मिंस्तीर्थवरे स्नात्वा शुचिः प्रयतमानसः ।
अग्निष्टोमातिरात्राभ्यां फलं प्राप्नोति मानवः ॥ ०७८ ॥

ततो गत्वा सरस्वत्याः सागरस्य च सङ्गमे ।
गोसहस्रफलं प्राप्य स्वर्गलोके महीयते ॥ ०७९ ॥

दीप्यमानोऽग्निवन्नित्यं प्रभया भरतर्षभ ॥ ०७९ ॥

त्रिरात्रमुषितस्तत्र तर्पयेत्पितृदेवताः ।
प्रभासते यथा सोमो अश्वमेधं च विन्दति ॥ ०८० ॥

वरदानं ततो गच्छेत्तीर्थं भरतसत्तम ।
विष्णोर्दुर्वाससा यत्र वरो दत्तो युधिष्ठिर ॥ ०८१ ॥

वरदाने नरः स्नात्वा गोसहस्रफलं लभेत् ।
ततो द्वारवतीं गच्छेन्नियतो नियताशनः ॥ ०८२ ॥

पिण्डारके नरः स्नात्वा लभेद्बहु सुवर्णकम् ॥ ०८२ ॥

तस्मिंस्तीर्थे महाभाग पद्मलक्षणलक्षिताः ।
अद्यापि मुद्रा दृश्यन्ते तदद्भुतमरिंदम ॥ ०८३ ॥

त्रिशूलाङ्कानि पद्मानि दृश्यन्ते कुरुनन्दन ।
महादेवस्य सांनिध्यं तत्रैव भरतर्षभ ॥ ०८४ ॥

सागरस्य च सिन्धोश्च सङ्गमं प्राप्य भारत ।
तीर्थे सलिलराजस्य स्नात्वा प्रयतमानसः ॥ ०८५ ॥

तर्पयित्वा पितॄन्देवानृषींश्च भरतर्षभ ।
प्राप्नोति वारुणं लोकं दीप्यमानः स्वतेजसा ॥ ०८६ ॥

शङ्कुकर्णेश्वरं देवमर्चयित्वा युधिष्ठिर ।
अश्वमेधं दशगुणं प्रवदन्ति मनीषिणः ॥ ०८७ ॥

प्रदक्षिणमुपावृत्य गच्छेत भरतर्षभ ।
तीर्थं कुरुवरश्रेष्ठ त्रिषु लोकेषु विश्रुतम् ॥ ०८८ ॥

दमीति नाम्ना विख्यातं सर्वपापप्रमोचनम् ॥ ०८८ ॥

यत्र ब्रह्मादयो देवा उपासन्ते महेश्वरम् ।
तत्र स्नात्वार्चयित्वा च रुद्रं देवगणैर्वृतम् ॥ ०८९ ॥

जन्मप्रभृति पापानि कृतानि नुदते नरः ॥ ०८९ ॥

दृमी चात्र नरश्रेष्ठ सर्वदेवैरभिष्टुता ।
तत्र स्नात्वा नरव्याघ्र हयमेधमवाप्नुयात् ॥ ०९० ॥

जित्वा यत्र महाप्राज्ञ विष्णुना प्रभविष्णुना ।
पुरा शौचं कृतं राजन्हत्वा दैवतकण्टकान् ॥ ०९१ ॥

ततो गच्छेत धर्मज्ञ वसोर्धारामभिष्टुताम् ।
गमनादेव तस्यां हि हयमेधमवाप्नुयात् ॥ ०९२ ॥

स्नात्वा कुरुवरश्रेष्ठ प्रयतात्मा तु मानवः ।
तर्प्य देवान्पितॄंश्चैव विष्णुलोके महीयते ॥ ०९३ ॥

तीर्थं चात्र परं पुण्यं वसूनां भरतर्षभ ।
तत्र स्नात्वा च पीत्वा च वसूनां संमतो भवेत् ॥ ०९४ ॥

सिन्धूत्तममिति ख्यातं सर्वपापप्रणाशनम् ।
तत्र स्नात्वा नरश्रेष्ठ लभेद्बहु सुवर्णकम् ॥ ०९५ ॥

ब्रह्मतुङ्गं समासाद्य शुचिः प्रयतमानसः ।
ब्रह्मलोकमवाप्नोति सुकृती विरजा नरः ॥ ०९६ ॥

कुमारिकाणां शक्रस्य तीर्थं सिद्धनिषेवितम् ।
तत्र स्नात्वा नरः क्षिप्रं शक्रलोकमवाप्नुयात् ॥ ०९७ ॥

रेणुकायाश्च तत्रैव तीर्थं देवनिषेवितम् ।
तत्र स्नात्वा भवेद्विप्रो विमलश्चन्द्रमा यथा ॥ ०९८ ॥

अथ पञ्चनदं गत्वा नियतो नियताशनः ।
पञ्च यज्ञानवाप्नोति क्रमशो येऽनुकीर्तिताः ॥ ०९९ ॥

ततो गच्छेत धर्मज्ञ भीमायाः स्थानमुत्तमम् ।
तत्र स्नात्वा तु योन्यां वै नरो भरतसत्तम ॥ १०० ॥

देव्याः पुत्रो भवेद्राजंस्तप्तकुण्डलविग्रहः ।
गवां शतसहस्रस्य फलं चैवाप्नुयान्महत् ॥ १०१ ॥

गिरिमुञ्जं समासाद्य त्रिषु लोकेषु विश्रुतम् ।
पितामहं नमस्कृत्य गोसहस्रफलं लभेत् ॥ १०२ ॥

ततो गच्छेत धर्मज्ञ विमलं तीर्थमुत्तमम् ।
अद्यापि यत्र दृश्यन्ते मत्स्याः सौवर्णराजताः ॥ १०३ ॥

तत्र स्नात्वा नरश्रेष्ठ वाजपेयमवाप्नुयात् ।
सर्वपापविशुद्धात्मा गच्छेच्च परमां गतिम् ॥ १०४ ॥

ततो गच्छेत मलदां त्रिषु लोकेषु विश्रुताम् ।
पश्चिमायां तु संध्यायामुपस्पृश्य यथाविधि ॥ १०५ ॥

चरुं नरेन्द्र सप्तार्चेर्यथाशक्ति निवेदयेत् ।
पितॄणामक्षयं दानं प्रवदन्ति मनीषिणः ॥ १०६ ॥

गवां शतसहस्रेण राजसूयशतेन च ।
अश्वमेधसहस्रेण श्रेयान्सप्तार्चिषश्चरुः ॥ १०७ ॥

ततो निवृत्तो राजेन्द्र वस्त्रापदमथाविशेत् ।
अभिगम्य महादेवमश्वमेधफलं लभेत् ॥ १०८ ॥

मणिमन्तं समासाद्य ब्रह्मचारी समाहितः ।
एकरात्रोषितो राजन्नग्निष्टोमफलं लभेत् ॥ १०९ ॥

अथ गच्छेत राजेन्द्र देविकां लोकविश्रुताम् ।
प्रसूतिर्यत्र विप्राणां श्रूयते भरतर्षभ ॥ ११० ॥

त्रिशूलपाणेः स्थानं च त्रिषु लोकेषु विश्रुतम् ।
देविकायां नरः स्नात्वा समभ्यर्च्य महेश्वरम् ॥ १११ ॥

यथाशक्ति चरुं तत्र निवेद्य भरतर्षभ ।
सर्वकामसमृद्धस्य यज्ञस्य लभते फलम् ॥ ११२ ॥

कामाख्यं तत्र रुद्रस्य तीर्थं देवर्षिसेवितम् ।
तत्र स्नात्वा नरः क्षिप्रं सिद्धिमाप्नोति भारत ॥ ११३ ॥

यजनं याजनं गत्वा तथैव ब्रह्मवालुकाम् ।
पुष्पन्यास उपस्पृश्य न शोचेन्मरणं ततः ॥ ११४ ॥

अर्धयोजनविस्तारां पञ्चयोजनमायताम् ।
एतावद्देविकामाहुः पुण्यां देवर्षिसेविताम् ॥ ११५ ॥

ततो गच्छेत धर्मज्ञ दीर्घसत्रं यथाक्रमम् ।
यत्र ब्रह्मादयो देवाः सिद्धाश्च परमर्षयः ॥ ११६ ॥

दीर्घसत्रमुपासन्ते दक्षिणाभिर्यतव्रताः ॥ ११६ ॥

गमनादेव राजेन्द्र दीर्घसत्रमरिंदम ।
राजसूयाश्वमेधाभ्यां फलं प्राप्नोति मानवः ॥ ११७ ॥

ततो विनशनं गच्छेन्नियतो नियताशनः ।
गच्छत्यन्तर्हिता यत्र मरुपृष्ठे सरस्वती ॥ ११८ ॥

चमसे च शिवोद्भेदे नागोद्भेदे च दृश्यते ॥ ११८ ॥

स्नात्वा च चमसोद्भेदे अग्निष्टोमफलं लभेत् ।
शिवोद्भेदे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ ११९ ॥

नागोद्भेदे नरः स्नात्वा नागलोकमवाप्नुयात् ।
शशयानं च राजेन्द्र तीर्थमासाद्य दुर्लभम् ॥ १२० ॥

शशरूपप्रतिच्छन्नाः पुष्करा यत्र भारत ॥ १२० ॥

सरस्वत्यां महाराज अनु संवत्सरं हि ते ।
स्नायन्ते भरतश्रेष्ठ वृत्तां वै कार्त्तिकीं सदा ॥ १२१ ॥

तत्र स्नात्वा नरव्याघ्र द्योतते शशिवत्सदा ।
गोसहस्रफलं चैव प्राप्नुयाद्भरतर्षभ ॥ १२२ ॥

कुमारकोटिमासाद्य नियतः कुरुनन्दन ।
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः ॥ १२३ ॥

गवामयमवाप्नोति कुलं चैव समुद्धरेत् ॥ १२३ ॥

ततो गच्छेत धर्मज्ञ रुद्रकोटिं समाहितः ।
पुरा यत्र महाराज ऋषिकोटिः समाहिता ॥ १२४ ॥

प्रहर्षेण च संविष्टा देवदर्शनकाङ्क्षया ॥ १२४ ॥

अहं पूर्वमहं पूर्वं द्रक्ष्यामि वृषभध्वजम् ।
एवं संप्रस्थिता राजन्नृषयः किल भारत ॥ १२५ ॥

ततो योगेष्वरेणापि योगमास्थाय भूपते ।
तेषां मन्युप्रणाशार्थमृषीणां भावितात्मनाम् ॥ १२६ ॥

सृष्टा कोटिस्तु रुद्राणामृषीणामग्रतः स्थिता ।

मया पूर्वतरं दृष्ट इति ते मेनिरे पृथक् ॥ १२७ ॥

तेषां तुष्टो महादेव ऋषीणामुग्रतेजसाम् ।
भक्त्या परमया राजन्वरं तेषां प्रदिष्टवान् ॥ १२८ ॥

अद्य प्रभृति युष्माकं धर्मवृद्धिर्भविष्यति ॥ १२८ ॥

तत्र स्नात्वा नरव्याघ्र रुद्रकोट्यां नरः शुचिः ।
अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् ॥ १२९ ॥

ततो गच्छेत राजेन्द्र सङ्गमं लोकविश्रुतम् ।
सरस्वत्या महापुण्यमुपासन्ते जनार्दनम् ॥ १३० ॥

यत्र ब्रह्मादयो देवा ऋषयः सिद्धचारणाः ।
अभिगच्छन्ति राजेन्द्र चैत्रशुक्लचतुर्दशीम् ॥ १३१ ॥

तत्र स्नात्वा नरव्याघ्र विन्देद्बहु सुवर्णकम् ।
सर्वपापविशुद्धात्मा ब्रह्मलोकं च गच्छति ॥ १३२ ॥

ऋषीणां यत्र सत्राणि समाप्तानि नराधिप ।
सत्रावसानमासाद्य गोसहस्रफलं लभेत् ॥ १३३ ॥

---

# अध्याय ०८१

पुलस्त्य उवाच ॥

ततो गच्छेत राजेन्द्र कुरुक्षेत्रमभिष्टुतम् ।

पापेभ्यो विप्रमुच्यन्ते तद्गताः सर्वजन्तवः ॥ ००१ ॥

कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् ।
य एवं सततं ब्रूयात्सोऽपि पापैः प्रमुच्यते ॥ ००२ ॥

तत्र मासं वसेद्वीर सरस्वत्यां युधिष्ठिर ।
यत्र ब्रह्मादयो देवा ऋषयः सिद्धचारणाः ॥ ००३ ॥

गन्धर्वाप्सरसो यक्षाः पन्नगाश्च महीपते ।
ब्रह्मक्षेत्रं महापुण्यमभिगच्छन्ति भारत ॥ ००४ ॥

मनसाप्यभिकामस्य कुरुक्षेत्रं युधिष्ठिर ।
पापानि विप्रणश्यन्ति ब्रह्मलोकं च गच्छति ॥ ००५ ॥

गत्वा हि श्रद्धया युक्तः कुरुक्षेत्रं कुरूद्वह ।
राजसूयाश्वमेधाभ्यां फलं प्राप्नोति मानवः ॥ ००६ ॥

ततो मचक्रुकं राजन्द्वारपालं महाबलम् ।
यक्षं समभिवाद्यैव गोसहस्रफलं लभेत् ॥ ००७ ॥

ततो गच्छेत धर्मज्ञ विष्णोः स्थानमनुत्तमम् ।
सततं नाम राजेन्द्र यत्र संनिहितो हरिः ॥ ००८ ॥

तत्र स्नात्वार्चयित्वा च त्रिलोकप्रभवं हरिम् ।
अश्वमेधमवाप्नोति विष्णुलोकं च गच्छति ॥ ००९ ॥

ततः पारिप्लवं गच्छेत्तीर्थं त्रैलोक्यविश्रुतम् ।
अग्निष्टोमातिरात्राभ्यां फलं प्राप्नोति मानवः ॥ ०१० ॥

पृथिव्यास्तीर्थमासाद्य गोसहस्रफलं लभेत् ।
ततः शालूकिनीं गत्वा तीर्थसेवी नराधिप ॥ ०११ ॥

दशाश्वमेधिके स्नात्वा तदेव लभते फलम्  ॥ ०११  ॥

सर्पदर्वीं समासाद्य नागानां तीर्थमुत्तमम् ।
अग्निष्टोममवाप्नोति नागलोकं च विन्दति  ॥ ०१२  ॥

ततो गच्छेत धर्मज्ञ द्वारपालं तरन्तुकम् ।
तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत्  ॥ ०१३  ॥

ततः पञ्चनदं गत्वा नियतो नियताशनः ।
कोटितीर्थमुपस्पृश्य हयमेधफलं लभेत्  ॥ ०१४  ॥

अश्विनोस्तीर्थमासाद्य रूपवानभिजायते  ॥ ०१४  ॥

ततो गच्छेत धर्मज्ञ वाराहं तीर्थमुत्तमम् ।
विष्णुर्वाराहरूपेण पूर्वं यत्र स्थितोऽभवत्  ॥ ०१५  ॥

तत्र स्नात्वा नरव्याघ्र अग्निष्टोमफलं लभेत्  ॥ ०१५  ॥

ततो जयन्त्या राजेन्द्र सोमतीर्थं समाविशेत् ।
स्नात्वा फलमवाप्नोति राजसूयस्य मानवः  ॥ ०१६  ॥

एकहंसे नरः स्नात्वा गोसहस्रफलं लभेत् ।
कृतशौचं समासाद्य तीर्थसेवी कुरूद्वह  ॥ ०१७  ॥

पुण्डरीकमवाप्नोति कृतशौचो भवेन्नरः  ॥ ०१७  ॥

ततो मुञ्जवटं नाम महादेवस्य धीमतः ।
तत्रोष्य रजनीमेकां गाणपत्यमवाप्नुयात्  ॥ ०१८  ॥

तत्रैव च महाराज यक्षी लोकपरिश्रुता ।

तां चाभिगम्य राजेन्द्र पुण्या.ण्ल्लोकानवाप्नुयात्  ॥ ०१९  ॥

कुरुक्षेत्रस्य तद्वारं विश्रुतं भरतर्षभ ।
प्रदक्षिणमुपावृत्य तीर्थसेवी समाहितः  ॥ ०२०  ॥

संमिते पुष्कराणां च स्नात्वार्च्य पितृदेवताः ।
जामदग्न्येन रामेण आहृते वै महात्मना  ॥ ०२१  ॥

कृतकृत्यो भवेद्राजन्नश्वमेधं च विन्दति  ॥ ०२१  ॥

ततो रामह्रदान्गच्छेत्तीर्थसेवी नराधिप ।
यत्र रामेण राजेन्द्र तरसा दीप्ततेजसा  ॥ ०२२  ॥

क्षत्रमुत्साद्य वीर्येण ह्रदाः पञ्च निवेशिताः  ॥ ०२२  ॥

पूरयित्वा नरव्याघ्र रुधिरेणेति नः श्रुतम् ।
पितरस्तर्पिताः सर्वे तथैव च पितामहाः  ॥ ०२३  ॥

ततस्ते पितरः प्रीता राममूचुर्महीपते  ॥ ०२३  ॥

राम राम महाभाग प्रीताः स्म तव भार्गव ।
अनया पितृभक्त्या च विक्रमेण च ते विभो  ॥ ०२४  ॥

वरं वृणीष्व भद्रं ते किमिच्छसि महाद्युते  ॥ ०२४  ॥

एवमुक्तः स राजेन्द्र रामः प्रहरतां वरः ।
अब्रवीत्प्राञ्जलिर्वाक्यं पितॄन्स गगने स्थितान्  ॥ ०२५  ॥

भवन्तो यदि मे प्रीता यद्यनुग्राह्यता मयि ।
पितृप्रसादादिच्छेयं तपसाप्यायनं पुनः  ॥ ०२६  ॥

यच्च रोषाभिभूतेन क्षत्रमुत्सादितं मया ।
ततश्च पापान्मुच्येयं युष्माकं तेजसा ह्यहम् ॥ ०२७ ॥

ह्रदाश्च तीर्थभूता मे भवेयुर्भुवि विश्रुताः ॥ ०२७ ॥

एतच्छ्रुत्वा शुभं वाक्यं रामस्य पितरस्तदा ।
प्रत्यूचुः परमप्रीता रामं हर्षसमन्विताः ॥ ०२८ ॥

तपस्ते वर्धतां भूयः पितृभक्त्या विशेषतः ।
यच्च रोषाभिभूतेन क्षत्रमुत्सादितं त्वया ॥ ०२९ ॥

ततश्च पापान्मुक्तस्त्वं कर्मभिस्ते च पातिताः ।
ह्रदाश्च तव तीर्थत्वं गमिष्यन्ति न संशयः ॥ ०३० ॥

ह्रदेष्वेतेषु यः स्नात्वा पितॄन्संतर्पयिष्यति ।
पितरस्तस्य वै प्रीता दास्यन्ति भुवि दुर्लभम् ॥ ०३१ ॥

ईप्सितं मनसः कामं स्वर्गलोकं च शाश्वतम् ॥ ०३१ ॥

एवं दत्त्वा वरान्राजन्रामस्य पितरस्तदा ।
आमन्त्र्य भार्गवं प्रीतास्तत्रैवान्तर्दधुस्तदा ॥ ०३२ ॥

एवं रामह्रदाः पुण्या भार्गवस्य महात्मनः ।
स्नात्वा ह्रदेषु रामस्य ब्रह्मचारी शुभव्रतः ॥ ०३३ ॥

राममभ्यर्च्य राजेन्द्र लभेद्बहु सुवर्णकम् ॥ ०३३ ॥

वंशमूलकमासाद्य तीर्थसेवी कुरूद्वह ।
स्ववंशमुद्धरेद्राजन्स्नात्वा वै वंशमूलके ॥ ०३४ ॥

कायशोधनमासाद्य तीर्थं भरतसत्तम ।

शरीरशुद्धिः स्नातस्य तस्मिंस्तीर्थे न संशयः ॥ ०३५ ॥

शुद्धदेहश्च संयाति शुभा.ण्ल्लोकाननुत्तमान् ॥ ०३५ ॥

ततो गच्छेत राजेन्द्र तीर्थं त्रैलोक्यविश्रुतम् ।
लोका यत्रोद्धृताः पूर्वं विष्णुना प्रभविष्णुना ॥ ०३६ ॥

लोकोद्धारं समासाद्य तीर्थं त्रैलोक्यविश्रुतम् ।
स्नात्वा तीर्थवरे राज.ण्ल्लोकानुद्धरते स्वकान् ॥ ०३७ ॥

श्रीतीर्थं च समासाद्य विन्दते श्रियमुत्तमाम् ॥ ०३७ ॥

कपिलातीर्थमासाद्य ब्रह्मचारी समाहितः ।
तत्र स्नात्वार्चयित्वा च दैवतानि पितृंस्तथा ॥ ०३८ ॥

कपिलानां सहस्रस्य फलं विन्दति मानवः ॥ ०३८ ॥

सूर्यतीर्थं समासाद्य स्नात्वा नियतमानसः ।
अर्चयित्वा पितृन्देवानुपवासपरायणः ॥ ०३९ ॥

अग्निष्टोममवाप्नोति सूर्यलोकं च गच्छति ॥ ०३९ ॥

गवांभवनमासाद्य तीर्थसेवी यथाक्रमम् ।
तत्राभिषेकं कुर्वाणो गोसहस्रफलं लभेत् ॥ ०४० ॥

शङ्खिनीं तत्र आसाद्य तीर्थसेवी कुरूद्वह ।
देव्यास्तीर्थे नरः स्नात्वा लभते रूपमुत्तमम् ॥ ०४१ ॥

ततो गच्छेत राजेन्द्र द्वारपालमरन्तुकम् ।
तस्य तीर्थं सरस्वत्यां यक्षेन्द्रस्य महात्मनः ॥ ०४२ ॥

तत्र स्नात्वा नरो राजन्नग्निष्टोमफलं लभेत्  ॥ ०४२  ॥

ततो गच्छेत धर्मज्ञ ब्रह्मावर्तं नराधिप ।
ब्रह्मावर्ते नरः स्नात्वा ब्रह्मलोकमवाप्नुयात्  ॥ ०४३  ॥

ततो गच्छेत धर्मज्ञ सुतीर्थकमनुत्तमम् ।
यत्र संनिहिता नित्यं पितरो दैवतैः सह  ॥ ०४४  ॥

तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः ।
अश्वमेधमवाप्नोति पितृलोकं च गच्छति  ॥ ०४५  ॥

ततोऽम्बुवश्यं धर्मज्ञ समासाद्य यथाक्रमम् ।
कोशेश्वरस्य तीर्थेषु स्नात्वा भरतसत्तम  ॥ ०४६  ॥

सर्वव्याधिविनिर्मुक्तो ब्रह्मलोके महीयते  ॥ ०४६  ॥

मातृतीर्थं च तत्रैव यत्र स्नातस्य भारत ।
प्रजा विवर्धते राजन्ननन्तां चाश्नुते श्रियम्  ॥ ०४७  ॥

ततः शीतवनं गच्छेन्नियतो नियताशनः ।
तीर्थं तत्र महाराज महदन्यत्र दुर्लभम्  ॥ ०४८  ॥

पुनाति दर्शनादेव दण्डेनैकं नराधिप ।
केशानभ्युक्ष्य वै तस्मिन्पूतो भवति भारत  ॥ ०४९  ॥

तीर्थं तत्र महाराज श्वानलोमापहं स्मृतम् ।
यत्र विप्रा नरव्याघ्र विद्वांसस्तीर्थतत्पराः  ॥ ०५०  ॥

श्वानलोमापनयने तीर्थे भरतसत्तम ।
प्राणायामैर्निर्हरन्ति श्वलोमानि द्विजोत्तमाः  ॥ ०५१  ॥

पूतात्मानश्च राजेन्द्र प्रयान्ति परमां गतिम् ।
दशाश्वमेधिकं चैव तस्मिंस्तीर्थे महीपते ॥ ०५२ ॥

तत्र स्नात्वा नरव्याघ्र गच्छेत परमां गतिम् ॥ ०५२ ॥

ततो गच्छेत राजेन्द्र मानुषं लोकविश्रुतम् ।
यत्र कृष्णमृगा राजन्व्याधेन परिपीडिताः ॥ ०५३ ॥

अवगाह्य तस्मिन्सरसि मानुषत्वमुपागताः ॥ ०५३ ॥

तस्मिंस्तीर्थे नरः स्नात्वा ब्रह्मचारी जितेन्द्रियः ।
सर्वपापविशुद्धात्मा स्वर्गलोके महीयते ॥ ०५४ ॥

मानुषस्य तु पूर्वेण क्रोशमात्रे महीपते ।
आपगा नाम विख्याता नदी सिद्धनिषेविता ॥ ०५५ ॥

श्यामाकभोजनं तत्र यः प्रयच्छति मानवः ।
देवान्पितॄंश्च उद्दिश्य तस्य धर्मफलं महत् ॥ ०५६ ॥

एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता ॥ ०५६ ॥

तत्र स्नात्वार्चयित्वा च दैवतानि पितॄंस्तथा ।
उषित्वा रजनीमेकामग्निष्टोमफलं लभेत् ॥ ०५७ ॥

ततो गच्छेत राजेन्द्र ब्रह्मणः स्थानमुत्तमम् ।
ब्रह्मोदुम्बरमित्येव प्रकाशं भुवि भारत ॥ ०५८ ॥

तत्र सप्तर्षिकुण्डेषु स्नातस्य कुरुपुङ्गव ।
केदारे चैव राजेन्द्र कपिष्ठलमहात्मनः ॥ ०५९ ॥

ब्रह्माणमभिगम्याथ शुचिः प्रयतमानसः ।

सर्वपापविशुद्धात्मा ब्रह्मलोकं प्रपद्यते ॥ ०६० ॥

कपिष्ठलस्य केदारं समासाद्य सुदुर्लभम् ।
अन्तर्धानमवाप्नोति तपसा दग्धकिल्बिषः ॥ ०६१ ॥

ततो गच्छेत राजेन्द्र सरकं लोकविश्रुतम् ।
कृष्णपक्षे चतुर्दश्यामभिगम्य वृषध्वजम् ॥ ०६२ ॥

लभते सर्वकामान्हि स्वर्गलोकं च गच्छति ॥ ०६२ ॥

तिस्रः कोट्यस्तु तीर्थानां सरके कुरुनन्दन ।
रुद्रकोटिस्तथा कूपे ह्रदेषु च महीपते ॥ ०६३ ॥

इलास्पदं च तत्रैव तीर्थं भरतसत्तम ॥ ०६३ ॥

तत्र स्नात्वार्चयित्वा च पितृन्देवांश्च भारत ।
न दुर्गतिमवाप्नोति वाजपेयं च विन्दति ॥ ०६४ ॥

किंदाने च नरः स्नात्वा किञ्जप्ये च महीपते ।
अप्रमेयमवाप्नोति दानं जप्यं च भारत ॥ ०६५ ॥

कलश्यां चाप्युपस्पृश्य श्रद्दधानो जितेन्द्रियः ।
अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ०६६ ॥

सरकस्य तु पूर्वेण नारदस्य महात्मनः ।
तीर्थं कुरुवरश्रेष्ठ अनाजन्मेति विश्रुतम् ॥ ०६७ ॥

तत्र तीर्थे नरः स्नात्वा प्राणांश्चोत्सृज्य भारत ।
नारदेनाभ्यनुज्ञातो लोकान्प्राप्नोति दुर्लभान् ॥ ०६८ ॥

शुक्लपक्षे दशम्यां तु पुण्डरीकं समाविशेत् ।

तत्र स्नात्वा नरो राजन्पुण्डरीकफलं लभेत् ॥ ०६९ ॥

ततस्त्रिविष्टपं गच्छेत्त्रिषु लोकेषु विश्रुतम् ।
तत्र वैतरणी पुण्या नदी पापप्रमोचनी ॥ ०७० ॥

तत्र स्नात्वार्चयित्वा च शूलपाणिं वृषध्वजम् ।
सर्वपापविशुद्धात्मा गच्छेत परमां गतिम् ॥ ०७१ ॥

ततो गच्छेत राजेन्द्र फलकीवनमुत्तमम् ।
यत्र देवाः सदा राजन्फलकीवनमाश्रिताः ॥ ०७२ ॥

तपश्चरन्ति विपुलं बहुवर्षसहस्रकम् ॥ ०७२ ॥

दृषद्वत्यां नरः स्नात्वा तर्पयित्वा च देवताः ।
अग्निष्टोमातिरात्राभ्यां फलं विन्दति भारत ॥ ०७३ ॥

तीर्थे च सर्वदेवानां स्नात्वा भरतसत्तम ।
गोसहस्रस्य राजेन्द्र फलं प्राप्नोति मानवः ॥ ०७४ ॥

पाणिखाते नरः स्नात्वा तर्पयित्वा च देवताः ।
राजसूयमवाप्नोति ऋषिलोकं च गच्छति ॥ ०७५ ॥

ततो गच्छेत राजेन्द्र मिश्रकं तीर्थमुत्तमम् ।
तत्र तीर्थानि राजेन्द्र मिश्रितानि महात्मना ॥ ०७६ ॥

व्यासेन नृपशार्दूल द्विजार्थमिति नः श्रुतम् ।
सर्वतीर्थेषु स स्नाति मिश्रके स्नाति यो नरः ॥ ०७७ ॥

ततो व्यासवनं गच्छेन्नियतो नियताशनः ।
मनोजवे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ ०७८ ॥

गत्वा मधुवटीं चापि देव्यास्तीर्थं नरः शुचिः ।
तत्र स्नात्वार्चयेद्देवान्पितॄंश्च प्रयतः शुचिः ॥ ०७९ ॥

स देव्या समनुज्ञातो गोसहस्रफलं लभेत् ॥ ०७९ ॥

कौशिक्याः सङ्गमे यस्तु दृषद्वत्याश्च भारत ।
स्नाति वै नियताहारः सर्वपापैः प्रमुच्यते ॥ ०८० ॥

ततो व्यासस्थली नाम यत्र व्यासेन धीमता ।
पुत्रशोकाभितप्तेन देहत्यागार्थनिश्चयः ॥ ०८१ ॥

कृतो देवैश्च राजेन्द्र पुनरुत्थापितस्तदा ।
अभिगम्य स्थलीं तस्य गोसहस्रफलं लभेत् ॥ ०८२ ॥

किंदत्तं कूपमासाद्य तिलप्रस्थं प्रदाय च ।
गच्छेत परमां सिद्धिमृणैर्मुक्तः कुरूद्वह ॥ ०८३ ॥

अहश्च सुदिनं चैव द्वे तीर्थे च सुदुर्लभे ।
तयोः स्नात्वा नरव्याघ्र सूर्यलोकमवाप्नुयात् ॥ ०८४ ॥

मृगधूमं ततो गच्छेत्त्रिषु लोकेषु विश्रुतम् ।
तत्र गङ्गाह्रदे स्नात्वा समभ्यर्च्य च मानवः ॥ ०८५ ॥

शूलपाणिं महादेवमश्वमेधफलं लभेत् ॥ ०८५ ॥

देवतीर्थे नरः स्नात्वा गोसहस्रफलं लभेत् ।
अथ वामनकं गच्छेत्त्रिषु लोकेषु विश्रुतम् ॥ ०८६ ॥

तत्र विष्णुपदे स्नात्वा अर्चयित्वा च वामनम् ।
सर्वपापविशुद्धात्मा विष्णुलोकमवाप्नुयात् ॥ ०८७ ॥

कुलंपुने नरः स्नात्वा पुनाति स्वकुलं नरः ।
पवनस्य ह्रदं गत्वा मरुतां तीर्थमुत्तमम्  ॥ ०८८  ॥

तत्र स्नात्वा नरव्याघ्र वायुलोके महीयते  ॥ ०८८  ॥

अमराणां ह्रदे स्नात्वा अमरेषु नराधिप ।
अमराणां प्रभावेन स्वर्गलोके महीयते  ॥ ०८९  ॥

शालिहोत्रस्य राजेन्द्र शालिशूर्पे यथाविधि ।
स्नात्वा नरवरश्रेष्ठ गोसहस्रफलं लभेत्  ॥ ०९०  ॥

श्रीकुञ्जं च सरस्वत्यां तीर्थं भरतसत्तम ।
तत्र स्नात्वा नरो राजन्नग्निष्टोमफलं लभेत्  ॥ ०९१  ॥

ततो नैमिषकुञ्जं च समासाद्य कुरूद्वह ।
ऋषयः किल राजेन्द्र नैमिषेयास्तपोधनाः  ॥ ०९२  ॥

तीर्थयात्रां पुरस्कृत्य कुरुक्षेत्रं गताः पुरा  ॥ ०९२  ॥

ततः कुञ्जः सरस्वत्यां कृतो भरतसत्तम ।
ऋषीणामवकाशः स्याद्यथा तुष्टिकरो महान्  ॥ ०९३  ॥

तस्मिन्कुञ्जे नरः स्नात्वा गोसहस्रफलं लभेत् ।
कन्यातीर्थे नरः स्नात्वा अग्निष्टोमफलं लभेत्  ॥ ०९४  ॥

ततो गच्छेन्नरव्याघ्र ब्रह्मणः स्थानमुत्तमम् ।
तत्र वर्णावरः स्नात्वा ब्राह्मण्यं लभते नरः  ॥ ०९५  ॥

ब्राह्मणश्च विशुद्धात्मा गच्छेत परमां गतिम्  ॥ ०९५  ॥

ततो गच्छेन्नरश्रेष्ठ सोमतीर्थमनुत्तमम् ।

तत्र स्नात्वा नरो राजन्सोमलोकमवाप्नुयात् ॥ ०९६ ॥

सप्तसारस्वतं तीर्थं ततो गच्छेन्नराधिप ।
यत्र मङ्कणकः सिद्धो महर्षिर्लोकविश्रुतः ॥ ०९७ ॥

पुरा मङ्कणको राजन्कुशाग्रेणेति नः श्रुतम् ।
क्षतः किल करे राजंस्तस्य शाकरसोऽस्रवत् ॥ ०९८ ॥

स वै शाकरसं दृष्ट्वा हर्षाविष्टो महातपाः ।
प्रनृत्तः किल विप्रर्षिर्विस्मयोत्फुल्ललोचनः ॥ ०९९ ॥

ततस्तस्मिन्प्रनृत्ते वै स्थावरं जङ्गमं च यत् ।
प्रनृत्तमुभयं वीर तेजसा तस्य मोहितम् ॥ १०० ॥

ब्रह्मादिभिः सुरै राजन्नृषिभिश्च तपोधनैः ।
विज्ञप्तो वै महादेव ऋषेरर्थे नराधिप ॥ १०१ ॥

नायं नृत्येद्यथा देव तथा त्वं कर्तुमर्हसि ॥ १०१ ॥

ततः प्रनृत्तमासाद्य हर्षाविष्टेन चेतसा ।
सुराणां हितकामार्थमृषिं देवोऽभ्यभाषत ॥ १०२ ॥

अहो महर्षे धर्मज्ञ किमर्थं नृत्यते भवान् ।
हर्षस्थानं किमर्थं वा तवाद्य मुनिपुङ्गव ॥ १०३ ॥

ऋषिरुवाच ॥

किं न पश्यसि मे देव कराच्छाकरसं स्रुतम् ।
यं दृष्ट्वाहं प्रनृत्तो वै हर्षेण महतान्वितः ॥ १०४ ॥

पुलस्त्य उवाच ॥

तं प्रहस्याब्रवीद्देवो मुनिं रागेण मोहितम् ।
अहं वै विस्मयं विप्र न गच्छामीति पश्य माम्  ॥ १०५  ॥

एवमुक्त्वा नरश्रेष्ठ महादेवेन धीमता ।
अङ्गुल्यग्रेण राजेन्द्र स्वाङ्गुष्ठस्ताडितोऽनघ  ॥ १०६  ॥

ततो भस्म क्षताद्राजन्निर्गतं हिमसंनिभम् ।
तद्दृष्ट्वा व्रीडितो राजन्स मुनिः पादयोर्गतः  ॥ १०७  ॥

नान्यं देवमहं मन्ये रुद्रात्परतरं महत् ।
सुरासुरस्य जगतो गतिस्त्वमसि शूलधृक्  ॥ १०८  ॥

त्वया सृष्टमिदं विश्वं त्रैलोक्यं सचराचरम् ।
त्वामेव भगवन्सर्वे प्रविशन्ति युगक्षये  ॥ १०९  ॥

देवैरपि न शक्यस्त्वं परिज्ञातुं कुतो मया ।
त्वयि सर्वे च दृश्यन्ते सुरा ब्रह्मादयोऽनघ  ॥ ११०  ॥

सर्वस्त्वमसि लोकानां कर्ता कारयिता च ह ।
त्वत्प्रसादात्सुराः सर्वे मोदन्तीहाकुतोभयाः  ॥ १११  ॥

एवं स्तुत्वा महादेवं स ऋषिः प्रणतोऽभवत्  ॥ १११  ॥

ऋषिरुवाच  ॥

त्वत्प्रसादान्महादेव तपो मे न क्षरेत वै ।
पुलस्त्य उवाच  ॥

ततो देवः प्रहृष्टात्मा ब्रह्मर्षिमिदमब्रवीत् ।
तपस्ते वर्धतां विप्र मत्प्रसादात्सहस्रधा  ॥ ११३  ॥

आश्रमे चेह वत्स्यामि त्वया सार्धं महामुने ।
सप्तसारस्वते स्नात्वा अर्चयिष्यन्ति ये तु माम्  ॥ ११४  ॥

न तेषां दुर्लभं किञ्चिदिह लोके परत्र च ।
सारस्वतं च ते लोकं गमिष्यन्ति न संशयः  ॥ ११५  ॥

ततस्त्वौशनसं गच्छेत्त्रिषु लोकेषु विश्रुतम् ।
यत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः  ॥ ११६  ॥

कार्त्तिकेयश्च भगवांस्त्रिसंध्यं किल भारत ।
सांनिध्यमकरोत्तत्र भार्गवप्रियकाम्यया  ॥ ११७  ॥

कपालमोचनं तीर्थं सर्वपापप्रमोचनम् ।
तत्र स्नात्वा नरव्याघ्र सर्वपापैः प्रमुच्यते  ॥ ११८  ॥

अग्नितीर्थं ततो गच्छेत्तत्र स्नात्वा नरर्षभ ।
अग्निलोकमवाप्नोति कुलं चैव समुद्धरेत्  ॥ ११९  ॥

विश्वामित्रस्य तत्रैव तीर्थं भरतसत्तम ।
तत्र स्नात्वा महाराज ब्राह्मण्यमभिजायते  ॥ १२०  ॥

ब्रह्मयोनिं समासाद्य शुचिः प्रयतमानसः ।
तत्र स्नात्वा नरव्याघ्र ब्रह्मलोकं प्रपद्यते  ॥ १२१  ॥

पुनात्यासप्तमं चैव कुलं नास्त्यत्र संशयः  ॥ १२१  ॥

ततो गच्छेत राजेन्द्र तीर्थं त्रैलोक्यविश्रुतम् ।
पृथूदकमिति ख्यातं कार्त्तिकेयस्य वै नृप  ॥ १२२  ॥

तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः  ॥ १२२  ॥

अज्ञानाज्ज्ञानतो वापि स्त्रिया वा पुरुषेण वा ।
यत्किञ्चिदशुभं कर्म कृतं मानुषबुद्धिना ॥ १२३ ॥

तत्सर्वं नश्यते तस्य स्नातमात्रस्य भारत ।
अश्वमेधफलं चापि स्वर्गलोकं च गच्छति ॥ १२४ ॥

पुण्यमाहुः कुरुक्षेत्रं कुरुक्षेत्रात्सरस्वतीम् ।
सरस्वत्याश्च तीर्थानि तीर्थेभ्यश्च पृथूदकम् ॥ १२५ ॥

उत्तमे सर्वतीर्थानां यस्त्यजेदात्मनस्तनुम् ।
पृथूदके जप्यपरो नैनं श्वोमरणं तपेत् ॥ १२६ ॥

गीतं सनत्कुमारेण व्यासेन च महात्मना ।
वेदे च नियतं राजनभिगच्छेत्पृथूदकम् ॥ १२७ ॥

पृथूदकात्पुण्यतमं नान्यत्तीर्थं नरोत्तम ।
एतन्मेध्यं पवित्रं च पावनं च न संशयः ॥ १२८ ॥

तत्र स्नात्वा दिवं यान्ति अपि पापकृतो जनाः ।
पृथूदके नरश्रेष्ठ प्राहुरेवं मनीषिणः ॥ १२९ ॥

मधुस्रवं च तत्रैव तीर्थं भरतसत्तम ।
तत्र स्नात्वा नरो राजन्गोसहस्रफलं लभेत् ॥ १३० ॥

ततो गच्छेन्नरश्रेष्ठ तीर्थं देव्या यथाक्रमम् ।
सरस्वत्यारुणायाश्च सङ्गमं लोकविश्रुतम् ॥ १३१ ॥

त्रिरात्रोपोषितः स्नात्वा मुच्यते ब्रह्महत्यया ।
अग्निष्टोमातिरात्राभ्यां फलं विन्दति मानवः ॥ १३२ ॥

आसप्तमं कुलं चैव पुनाति भरतर्षभ ।
अवतीर्णं च तत्रैव तीर्थं कुरुकुलोद्वह ॥ १३३ ॥

विप्राणामनुकम्पार्थं दर्भिणा निर्मितं पुरा ॥ १३३ ॥

व्रतोपनयनाभ्यां वा उपवासेन वा द्विजः ।
क्रियामन्त्रैश्च संयुक्तो ब्राह्मणः स्यान्न संशयः ॥ १३४ ॥

क्रियामन्त्रविहीनोऽपि तत्र स्नात्वा नरर्षभ ।
चीर्णव्रतो भवेद्विप्रो दृष्टमेतत्पुरातने ॥ १३५ ॥

समुद्राश्चापि चत्वारः समानीताश्च दर्भिणा ।
येषु स्नातो नरव्याघ्र न दुर्गतिमवाप्नुयात् ॥ १३६ ॥

फलानि गोसहस्राणां चतुर्णां विन्दते च सः ॥ १३६ ॥

ततो गच्छेत राजेन्द्र तीर्थं शतसहस्रकम् ।
साहस्रकं च तत्रैव द्वे तीर्थे लोकविश्रुते ॥ १३७ ॥

उभयोर्हि नरः स्नात्वा गोसहस्रफलं लभेत् ।
दानं वाप्युपवासो वा सहस्रगुणितं भवेत् ॥ १३८ ॥

ततो गच्छेत राजेन्द्र रेणुकातीर्थमुत्तमम् ।
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः ॥ १३९ ॥

स्रवपापविशुद्धात्मा अग्निष्टोमफलं लभेत् ॥ १३९ ॥

विमोचनमुपस्पृश्य जितमन्युर्जितेन्द्रियः ।
प्रतिग्रहकृतैर्दोषैः सर्वैः स परिमुच्यते ॥ १४० ॥

ततः पञ्चवटं गत्वा ब्रह्मचारी जितेन्द्रियः ।

पुण्येन महता युक्तः सतां लोके महीयते ॥ १४१ ॥

यत्र योगेश्वरः स्थाणुः स्वयमेव वृषध्वजः ।
तमर्चयित्वा देवेशं गमनादेव सिध्यति ॥ १४२ ॥

औजसं वरुणं तीर्थं दीप्यते स्वेन तेजसा ।
यत्र ब्रह्मादिभिर्देवैरृषिभिश्च तपोधनैः ॥ १४३ ॥

सेनापत्येन देवानामभिषिक्तो गुहस्तदा ॥ १४३ ॥

औजसस्य तु पूर्वेण कुरुतीर्थं कुरूद्वह ।
कुरुतीर्थे नरः स्नात्वा ब्रह्मचारी जितेन्द्रियः ॥ १४४ ॥

सर्वपापविशुद्धात्मा कुरुलोकं प्रपद्यते ॥ १४४ ॥

स्वर्गद्वारं ततो गच्छेन्नियतो नियताशनः ।
स्वर्गलोकमवाप्नोति ब्रह्मलोकं च गच्छति ॥ १४५ ॥

ततो गच्छेदनरकं तीर्थसेवी नराधिप ।
तत्र स्नात्वा नरो राजन्न दुर्गतिमवाप्नुयात् ॥ १४६ ॥

तत्र ब्रह्मा स्वयं नित्यं देवैः सह महीपते ।
अन्वास्यते नरश्रेष्ठ नारायणपुरोगमैः ॥ १४७ ॥

सांनिध्यं चैव राजेन्द्र रुद्रपत्न्याः कुरूद्वह ।
अभिगम्य च तां देवीं न दुर्गतिमवाप्नुयात् ॥ १४८ ॥

तत्रैव च महाराज विश्वेश्वरमुमापतिम् ।
अभिगम्य महादेवं मुच्यते सर्वकिल्बिषैः ॥ १४९ ॥

नारायणं चाभिगम्य पद्मनाभमरिंदमम् ।

शोभमानो महाराज विष्णुलोकं प्रपद्यते ॥ १५० ॥

तीर्थे तु सर्वदेवानां स्नातः स पुरुषर्षभ ।
सर्वदुःखैः परित्यक्तो द्योतते शशिवत्सदा ॥ १५१ ॥

ततः स्वस्तिपुरं गच्छेत्तीर्थसेवी नराधिप ।
पावनं तीर्थमासाद्य तर्पयेत्पितृदेवताः ॥ १५२ ॥

अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ १५२ ॥

गङ्गाहृदश्च तत्रैव कूपश्च भरतर्षभ ।
तिस्रः कोट्यस्तु तीर्थानां तस्मिन्कूपे महीपते ॥ १५३ ॥

तत्र स्नात्वा नरो राजन्स्वर्गलोकं प्रपद्यते ॥ १५३ ॥

आपगायां नरः स्नात्वा अर्चयित्वा महेश्वरम् ।
गाणपत्यमवाप्नोति कुलं चोद्धरते स्वकम् ॥ १५४ ॥

ततः स्थाणुवटं गच्छेत्त्रिषु लोकेषु विश्रुतम् ।
तत्र स्नात्वा स्थितो रात्रिं रुद्रलोकमवाप्नुयात् ॥ १५५ ॥

बदरीपाचनं गच्छेद्वसिष्ठस्याश्रमं ततः ।
बदरं भक्षयेत्तत्र त्रिरात्रोपोषितो नरः ॥ १५६ ॥

सम्यग्द्वादश वर्षाणि बदरान्भक्षयेत्तु यः ।
त्रिरात्रोपोषितश्चैव भवेत्तुल्यो नराधिप ॥ १५७ ॥

इन्द्रमार्गं समासाद्य तीर्थसेवी नराधिप ।
अहोरात्रोपवासेन शक्रलोके महीयते ॥ १५८ ॥

एकरात्रं समासाद्य एकरात्रोषितो नरः ।

नियतः सत्यवादी च ब्रह्मलोके महीयते ॥ १५९ ॥

ततो गच्छेत धर्मज्ञ तीर्थं त्रैलोक्यविश्रुतम् ।
आदित्यस्याश्रमो यत्र तेजोराशेर्महात्मनः ॥ १६० ॥

तस्मिंस्तीर्थे नरः स्नात्वा पूजयित्वा विभावसुम् ।
आदित्यलोकं व्रजति कुलं चैव समुद्धरेत् ॥ १६१ ॥

सोमतीर्थे नरः स्नात्वा तीर्थसेवी कुरूद्वह ।
सोमलोकमवाप्नोति नरो नास्त्यत्र संशयः ॥ १६२ ॥

ततो गच्छेत धर्मज्ञ दधीचस्य महात्मनः ।
तीर्थं पुण्यतमं राजन्पावनं लोकविश्रुतम् ॥ १६३ ॥

यत्र सारस्वतो राजन्सोऽङ्गिरास्तपसो निधिः ।
तस्मिंस्तीर्थे नरः स्नात्वा वाजपेयफलं लभेत् ॥ १६४ ॥

सारस्वतीं गतिं चैव लभते नात्र संशयः ॥ १६४ ॥

ततः कन्याश्रमं गच्छेन्नियतो ब्रह्मचर्यवान् ।
त्रिरात्रोपोषितो राजन्नुपवासपरायणः ॥ १६५ ॥

लभेत्कन्याशतं दिव्यं ब्रह्मलोकं च गच्छति ॥ १६५ ॥

ततो गच्छेत धर्मज्ञ तीर्थं संनिहितीमपि ।
यत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः ॥ १६६ ॥

मासि मासि समायान्ति पुण्येन महतान्विताः ॥ १६६ ॥

संनिहित्यामुपस्पृश्य राहुग्रस्ते दिवाकरे ।
अश्वमेधशतं तेन इष्टं भवति शाश्वतम् ॥ १६७ ॥

पृथिव्यां यानि तीर्थानि अन्तरिक्षचराणि च ।
नद्यो नदास्तडागाश्च सर्वप्रस्रवणानि च  ॥ १६८  ॥

उदपानाश्च वप्राश्च पुण्यान्यायतनानि च ।
मासि मासि समायान्ति संनिहित्यां न संशयः  ॥ १६९  ॥

यत्किञ्चिद्दुष्कृतं कर्म स्त्रिया वा पुरुषस्य वा ।
स्नातमात्रस्य तत्सर्वं नश्यते नात्र संशयः  ॥ १७०  ॥

पद्मवर्णेन यानेन ब्रह्मलोकं स गच्छति  ॥ १७०  ॥

अभिवाद्य ततो यक्षं द्वारपालमरन्तुकम् ।
कोटिरूपमुपस्पृश्य लभेद्बहु सुवर्णकम्  ॥ १७१  ॥

गङ्गाह्रदश्च तत्रैव तीर्थं भरतसत्तम ।
तत्र स्नातस्तु धर्मज्ञ ब्रह्मचारी समाहितः  ॥ १७२  ॥

राजसूयाश्वमेधाभ्यां फलं विन्दति शाश्वतम्  ॥ १७२  ॥

पृथिव्यां नैमिषं पुण्यमन्तरिक्षे च पुष्करम् ।
त्रयाणामपि लोकानां कुरुक्षेत्रं विशिष्यते  ॥ १७३  ॥

पांसवोऽपि कुरुक्षेत्रे वायुना समुदीरिताः ।
अपि दुष्कृतकर्माणं नयन्ति परमां गतिम्  ॥ १७४  ॥

दक्षिणेन सरस्वत्या उत्तरेण दृषद्वतीम् ।
ये वसन्ति कुरुक्षेत्रे ते वसन्ति त्रिविष्टपे  ॥ १७५  ॥

कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् ।
अप्येकां वाचमुत्सृज्य सर्वपापैः प्रमुच्यते  ॥ १७६  ॥

ब्रह्मवेदी कुरुक्षेत्रं पुण्यं ब्रह्मर्षिसेवितम् ।
तदावसन्ति ये राजन्न ते शोच्याः कथञ्चन ॥ १७७ ॥

तरन्तुकारन्तुकयोर्यदन्तरं ; रामह्रदानां च मचक्रुकस्य ।
एतत्कुरुक्षेत्रसमन्तपञ्चकं ; पितामहस्योत्तरवेदिरुच्यते ॥ १७८ ॥

---

## अध्याय ०८२

पुलस्त्य उवाच ॥

ततो गच्छेत धर्मज्ञ धर्मतीर्थं पुरातनम् ।
तत्र स्नात्वा नरो राजन्धर्मशीलः समाहितः ॥ ००१ ॥

आसप्तमं कुलं राजन्पुनीते नात्र संशयः ॥ ००१ ॥

ततो गच्छेत धर्मज्ञ कारापतनमुत्तमम् ।
अग्निष्टोममवाप्नोति मुनिलोकं च गच्छति ॥ ००२ ॥

सौगन्धिकं वनं राजंस्ततो गच्छेत मानवः ।
यत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः ॥ ००३ ॥

सिद्धचारणगन्धर्वाः किंनराः समहोरगाः ।
तद्वनं प्रविशन्नेव सर्वपापैः प्रमुच्यते ॥ ००४ ॥

ततो हि सा सरिच्छ्रेष्ठा नदीनामुत्तमा नदी ।
प्लक्षाद्देवी स्रुता राजन्महापुण्या सरस्वती ॥ ००५ ॥

तत्राभिषेकं कुर्वीत वल्मीकान्निःसृते जले ।
अर्चयित्वा पितॄन्देवानश्वमेधफलं लभेत् ॥ ००६ ॥

ईशानाध्युषितं नाम तत्र तीर्थं सुदुर्लभम् ।
षट्सु शम्यानिपातेषु वल्मीकादिति निश्चयः ॥ ००७ ॥

कपिलानां सहस्रं च वाजिमेधं च विन्दति ।
तत्र स्नात्वा नरव्याघ्र दृष्टमेतत्पुरातने ॥ ००८ ॥

सुगन्धां शतकुम्भां च पञ्चयज्ञां च भारत ।
अभिगम्य नरश्रेष्ठ स्वर्गलोके महीयते ॥ ००९ ॥

त्रिशूलखातं तत्रैव तीर्थमासाद्य भारत ।
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः ॥ ०१० ॥

गाणपत्यं स लभते देहं त्यक्त्वा न संशयः ॥ ०१० ॥

ततो गच्छेत राजेन्द्र देव्याः स्थानं सुदुर्लभम् ।
शाकंभरीति विख्याता त्रिषु लोकेषु विश्रुता ॥ ०११ ॥

दिव्यं वर्षसहस्रं हि शाकेन किल सुव्रत ।
आहारं सा कृतवती मासि मासि नराधिप ॥ ०१२ ॥

ऋषयोऽभ्यागतास्तत्र देव्या भक्त्या तपोधनाः ।
आतिथ्यं च कृतं तेषां शाकेन किल भारत ॥ ०१३ ॥

ततः शाकम्भरीत्येव नाम तस्याः प्रतिष्ठितम् ॥ ०१३ ॥

शाकंभरीं समासाद्य ब्रह्मचारी समाहितः ।
त्रिरात्रमुषितः शाकं भक्षयेन्नियतः शुचिः ॥ ०१४ ॥

शाकाहारस्य यत्सम्यग्वर्षैर्द्वादशभिः फलम् ।
तत्फलं तस्य भवति देव्याश्छन्देन भारत ॥ ०१५ ॥

ततो गच्छेत्सुवर्णाक्षं त्रिषु लोकेषु विश्रुतम् ।
यत्र विष्णुः प्रसादार्थं रुद्रमाराधयत्पुरा ॥ ०१६ ॥

वरांश्च सुबहू.ण्ल्लेभे दैवतेषु सुदुर्लभान् ।
उक्तश्च त्रिपुरघ्नेन परितुष्टेन भारत ॥ ०१७ ॥

अपि चास्मत्प्रियतरो लोके कृष्ण भविष्यसि ।
त्वन्मुखं च जगत्कृत्स्नं भविष्यति न संशयः ॥ ०१८ ॥

तत्राभिगम्य राजेन्द्र पूजयित्वा वृषध्वजम् ।
अश्वमेधमवाप्नोति गाणपत्यं च विन्दति ॥ ०१९ ॥

धूमावतीं ततो गच्छेत्त्रिरत्रोपोषितो नरः ।
मनसा प्रार्थितान्कामा.ण्ल्लभते नात्र संशयः ॥ ०२० ॥

देव्यास्तु दक्षिणार्धेन रथावर्तो नराधिप ।
तत्रारोहेत धर्मज्ञ श्रद्दधानो जितेन्द्रियः ॥ ०२१ ॥

महादेवप्रसादाद्धि गच्छेत परमां गतिम् ॥ ०२१ ॥

प्रदक्षिणमुपावृत्य गच्छेत भरतर्षभ ।
धारां नाम महाप्राज्ञ सर्वपापप्रणाशिनीम् ॥ ०२२ ॥

तत्र स्नात्वा नरव्याघ्र न शोचति नराधिप ॥ ०२२ ॥

ततो गच्छेत धर्मज्ञ नमस्कृत्य महागिरिम् ।
स्वर्गद्वारेण यत्तुल्यं गङ्गाद्वारं न संशयः ॥ ०२३ ॥

तत्राभिषेकं कुर्वीत कोटितीर्थे समाहितः ।
पुण्डरीकमवाप्नोति कुलं चैव समुद्धरेत् ॥ ०२४ ॥

सप्तगङ्गे त्रिगङ्गे च शक्रावर्ते च तर्पयन् ।
देवान्पितॄंश्च विधिवत्पुण्यलोके महीयते ॥ ०२५ ॥

ततः कनखले स्नात्वा त्रिरात्रोपोषितो नरः ।
अश्वमेधमवाप्नोति स्वर्गलोकं च गच्छति ॥ ०२६ ॥

कपिलावटं च गच्छेत तीर्थसेवी नराधिप ।
उष्यैकां रजनीं तत्र गोसहस्रफलं लभेत् ॥ ०२७ ॥

नागराजस्य राजेन्द्र कपिलस्य महात्मनाः ।
तीर्थं कुरुवरश्रेष्ठ सर्वलोकेषु विश्रुतम् ॥ ०२८ ॥

तत्राभिषेकं कुर्वीत नागतीर्थे नराधिप ।
कपिलानां सहस्रस्य फलं प्राप्नोति मानवः ॥ ०२९ ॥

ततो ललितिकां गच्छेच्छंतनोस्तीर्थमुत्तमम् ।
तत्र स्नात्वा नरो राजन्न दुर्गतिमवाप्नुयात् ॥ ०३० ॥

गङ्गासङ्गमयोश्चैव स्नाति यः सङ्गमे नरः ।
दशाश्वमेधानाप्नोति कुलं चैव समुद्धरेत् ॥ ०३१ ॥

ततो गच्छेत राजेन्द्र सुगन्धां लोकविश्रुताम् ।
सर्वपापविशुद्धात्मा ब्रह्मलोके महीयते ॥ ०३२ ॥

रुद्रावर्तं ततो गच्छेत्तीर्थसेवी नराधिप ।
तत्र स्नात्वा नरो राजन्स्वर्गलोके महीयते ॥ ०३३ ॥

गङ्गायाश्च नरश्रेष्ठ सरस्वत्याश्च सङ्गमे ।

स्नातोऽश्वमेधमाप्नोति स्वर्गलोकं च गच्छति ॥ ०३४ ॥

भद्रकर्णेश्वरं गत्वा देवमर्च्य यथाविधि ।
न दुर्गतिमवाप्नोति स्वर्गलोकं च गच्छति ॥ ०३५ ॥

ततः कुब्जाम्रकं गच्छेत्तीर्थसेवी यथाक्रमम् ।
गोसहस्रमवाप्नोति स्वर्गलोकं च गच्छति ॥ ०३६ ॥

अरुन्धतीवटं गच्छेत्तीर्थसेवी नराधिप ।
सामुद्रकमुपस्पृश्य त्रिरात्रोपोषितो नरः ॥ ०३७ ॥

गोसहस्रफलं विन्देत्कुलं चैव समुद्धरेत् ॥ ०३७ ॥

ब्रह्मावर्तं ततो गच्छेद्ब्रह्मचारी समाहितः ।
अश्वमेधमवाप्नोति स्वर्गलोकं च गच्छति ॥ ०३८ ॥

यमुनाप्रभवं गत्वा उपस्पृश्य च यामुने ।
अश्वमेधफलं लब्ध्वा स्वर्गलोके महीयते ॥ ०३९ ॥

दर्वीसङ्क्रमणं प्राप्य तीर्थं त्रैलोक्यविश्रुतम् ।
अश्वमेधमवाप्नोति स्वर्गलोकं च गच्छति ॥ ०४० ॥

सिन्धोश्च प्रभवं गत्वा सिद्धगन्धर्वसेवितम् ।
तत्रोष्य रजनीः पञ्च विन्द्याद्बहु सुवर्णकम् ॥ ०४१ ॥

अथ वेदीं समासाद्य नरः परमदुर्गमाम् ।
अश्वमेधमवाप्नोति गच्छेच्चौशनसीं गतिम् ॥ ०४२ ॥

ऋषिकुल्यां समासाद्य वासिष्ठं चैव भारत ।
वासिष्ठं समतिक्रम्य सर्वे वर्णा द्विजातयः ॥ ०४३ ॥

ऋषिकुल्यां नरः स्नात्वा ऋषिलोकं प्रपद्यते ।
यदि तत्र वसेन्मासं शाकाहारो नराधिप ॥ ०४४ ॥

भृगुतुङ्गं समासाद्य वाजिमेधफलं लभेत् ।
गत्वा वीरप्रमोक्षं च सर्वपापैः प्रमुच्यते ॥ ०४५ ॥

कृत्तिकामघयोश्चैव तीर्थमासाद्य भारत ।
अग्निष्टोमातिरात्राभ्यां फलं प्राप्नोति पुण्यकृत् ॥ ०४६ ॥

ततः संध्यां समासाद्य विद्यातीर्थमनुत्तमम् ।
उपस्पृश्य च विद्यानां सर्वासां पारगो भवेत् ॥ ०४७ ॥

महाश्रमे वसेद्रात्रिं सर्वपापप्रमोचने ।
एककालं निराहारो लोकानावसते शुभान् ॥ ०४८ ॥

षष्ठकालोपवासेन मासमुष्य महालये ।
सर्वपापविशुद्धात्मा विन्द्याद्बहु सुवर्णकम् ॥ ०४९ ॥

अथ वेतसिकां गत्वा पितामहनिषेविताम् ।
अश्वमेधमवाप्नोति गच्छेच्चौशनसीं गतिम् ॥ ०५० ॥

अथ सुन्दरिकातीर्थं प्राप्य सिद्धनिषेवितम् ।
रूपस्य भागी भवति दृष्टमेतत्पुरातने ॥ ०५१ ॥

ततो वै ब्राह्मणीं गत्वा ब्रह्मचारी जितेन्द्रियः ।
पद्मवर्णेन यानेन ब्रह्मलोकं प्रपद्यते ॥ ०५२ ॥

ततश्च नैमिषं गच्छेत्पुण्यं सिद्धनिषेवितम् ।
तत्र नित्यं निवसति ब्रह्मा देवगणैर्वृतः ॥ ०५३ ॥

नैमिषं प्रार्थयानस्य पापस्यार्धं प्रणश्यति ।

प्रविष्टमात्रस्तु नरः सर्वपापैः प्रमुच्यते ॥ ०५४ ॥

तत्र मासं वसेद्धीरो नैमिषे तीर्थतत्परः ।
पृथिव्यां यानि तीर्थानि नैमिषे तानि भारत ॥ ०५५ ॥

अभिषेककृतस्तत्र नियतो नियताशनः ।
गवामयस्य यज्ञस्य फलं प्राप्नोति भारत ॥ ०५६ ॥

पुनात्यासप्तमं चैव कुलं भरतसत्तम ॥ ०५६ ॥

यस्त्यजेन्नैमिषे प्राणानुपवासपरायणः ।
स मोदेत्स्वर्गलोकस्थ एवमाहुर्मनीषिणः ॥ ०५७ ॥

नित्यं पुण्यं च मेध्यं च नैमिषं नृपसत्तम ॥ ०५७ ॥

गङ्गोद्भेदं समासाद्य त्रिरात्रोपोषितो नरः ।
वाजपेयमवाप्नोति ब्रह्मभूतश्च जायते ॥ ०५८ ॥

सरस्वतीं समासाद्य तर्पयेत्पितृदेवताः ।
सारस्वतेषु लोकेषु मोदते नात्र संशयः ॥ ०५९ ॥

ततश्च बाहुदां गच्छेद्ब्रह्मचारी समाहितः ।
देवसत्रस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ०६० ॥

ततश्चीरवतीं गच्छेत्पुण्यां पुण्यतमैर्वृताम् ।
पितृदेवार्चनरतो वाजपेयमवाप्नुयात् ॥ ०६१ ॥

विमलाशोकमासाद्य विराजति यथा शशी ।
तत्रोष्य रजनीमेकां स्वर्गलोके महीयते ॥ ०६२ ॥

गोप्रतारं ततो गच्छेत्सरय्वास्तीर्थमुत्तमम् ।

यत्र रामो गतः स्वर्गं सभृत्यबलवाहनः  ॥ ०६३  ॥

देहं त्यक्त्वा दिवं यातस्तस्य तीर्थस्य तेजसा ।
रामस्य च प्रसादेन व्यवसायाच्च भारत  ॥ ०६४  ॥

तस्मिंस्तीर्थे नरः स्नात्वा गोप्रतारे नराधिप ।
सर्वपापविशुद्धात्मा स्वर्गलोके महीयते  ॥ ०६५  ॥

रामतीर्थे नरः स्नात्वा गोमत्यां कुरुनन्दन ।
अश्वमेधमवाप्नोति पुनाति च कुलं नरः  ॥ ०६६  ॥

शतसाहस्रिकं तत्र तीर्थं भरतसत्तम ।
तत्रोपस्पर्शनं कृत्वा नियतो नियताशनः  ॥ ०६७  ॥

गोसहस्रफलं पुण्यं प्राप्नोति भरतर्षभ  ॥ ०६७  ॥

ततो गच्छेत राजेन्द्र भर्तृस्थानमनुत्तमम् ।
कोटितीर्थे नरः स्नात्वा अर्चयित्वा गुहं नृप  ॥ ०६८  ॥

गोसहस्रफलं विन्देत्तेजस्वी च भवेन्नरः  ॥ ०६८  ॥

ततो वाराणसीं गत्वा अर्चयित्वा वृषध्वजम् ।
कपिलाह्रदे नरः स्नात्वा राजसूयफलं लभेत्  ॥ ०६९  ॥

मार्कण्डेयस्य राजेन्द्र तीर्थमासाद्य दुर्लभम् ।
गोमतीगङ्गयोश्चैव सङ्गमे लोकविश्रुते  ॥ ०७०  ॥

अग्निष्टोममवाप्नोति कुलं चैव समुद्धरेत्  ॥ ०७०  ॥

ततो गयां समासाद्य ब्रह्मचारी जितेन्द्रियः ।
अश्वमेधमवाप्नोति गमनादेव भारत  ॥ ०७१  ॥

तत्राक्षयवटो नाम त्रिषु लोकेषु विश्रुतः ।
पितॄणां तत्र वै दत्तमक्षयं भवति प्रभो ॥ ०७२ ॥

महानद्यामुपस्पृश्य तर्पयेत्पितृदेवताः ।
अक्षयान्प्राप्नुयाल्लोकान्कुलं चैव समुद्धरेत् ॥ ०७३ ॥

ततो ब्रह्मसरो गच्छेद्धर्मारण्योपशोभितम् ।
पौण्डरीकमवाप्नोति प्रभातामेव शर्वरीम् ॥ ०७४ ॥

तस्मिन्सरसि राजेन्द्र ब्रह्मणो यूप उच्छ्रितः ।
यूपं प्रदक्षिणं कृत्वा वाजपेयफलं लभेत् ॥ ०७५ ॥

ततो गच्छेत राजेन्द्र धेनुकां लोकविश्रुताम् ।
एकरात्रोषितो राजन्प्रयच्छेत्तिलधेनुकाम् ॥ ०७६ ॥

सर्वपापविशुद्धात्मा सोमलोकं व्रजेद्ध्रुवम् ॥ ०७६ ॥

तत्र चिह्नं महाराज अद्यापि हि न संशयः ।
कपिला सह वत्सेन पर्वते विचरत्युत ॥ ०७७ ॥

सवत्सायाः पदानि स्म दृश्यन्तेऽद्यापि भारत ॥ ०७७ ॥

तेषूपस्पृश्य राजेन्द्र पदेषु नृपसत्तम ।
यत्किञ्चिदशुभं कर्म तत्प्रणश्यति भारत ॥ ०७८ ॥

ततो गृध्रवटं गच्छेत्स्थानं देवस्य धीमतः ।
स्नायीत भस्मना तत्र अभिगम्य वृषध्वजम् ॥ ०७९ ॥

ब्राह्मणेन भवेच्चीर्णं व्रतं द्वादशवार्षिकम् ।
इतरेषां तु वर्णानां सर्वपापं प्रणश्यति ॥ ०८० ॥

गच्छेत तत उद्यन्तं पर्वतं गीतनादितम् ।
सावित्रं तु पदं तत्र दृश्यते भरतर्षभ ॥ ०८१ ॥

तत्र संध्यामुपासीत ब्राह्मणः संशितव्रतः ।
उपास्ता च भवेत्संध्या तेन द्वादशवार्षिकी ॥ ०८२ ॥

योनिद्वारं च तत्रैव विश्रुतं भरतर्षभ ।
तत्राभिगम्य मुच्येत पुरुषो योनिसङ्करात् ॥ ०८३ ॥

कृष्णशुक्लावुभौ पक्षौ गयायां यो वसेन्नरः ।
पुनात्यासप्तमं राजन्कुलं नास्त्यत्र संशयः ॥ ०८४ ॥

एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥ ०८५ ॥

ततः फल्गुं व्रजेद्राजंस्तीर्थसेवी नराधिप ।
अश्वमेधमवाप्नोति सिद्धिं च महतीं व्रजेत् ॥ ०८६ ॥

ततो गच्छेत राजेन्द्र धर्मपृष्ठं समाहितः ।
यत्र धर्मो महाराज नित्यमास्ते युधिष्ठिर ॥ ०८७ ॥

अभिगम्य ततस्तत्र वाजिमेधफलं लभेत् ॥ ०८७ ॥

ततो गच्छेत राजेन्द्र ब्रह्मणस्तीर्थमुत्तमम् ।
तत्रार्चयित्वा राजेन्द्र ब्रह्माणममितौजसम् ॥ ०८८ ॥

राजसूयाश्वमेधाभ्यां फलं प्राप्नोति मानवः ॥ ०८८ ॥

ततो राजगृहं गच्छेत्तीर्थसेवी नराधिप ।
उपस्पृश्य तपोदेषु काक्षीवानिव मोदते ॥ ०८९ ॥

यक्षिण्या नैत्यकं तत्र प्राश्नीत पुरुषः शुचिः ।
यक्षिण्यास्तु प्रसादेन मुच्यते भ्रूणहत्यया ॥ ०९० ॥

मणिनागं ततो गत्वा गोसहस्रफलं लभेत् ।
नैत्यकं भुञ्जते यस्तु मणिनागस्य मानवः ॥ ०९१ ॥

दष्टस्याशीविषेणापि न तस्य क्रमते विषम् ।
तत्रोष्य रजनीमेकां सर्वपापैः प्रमुच्यते ॥ ०९२ ॥

ततो गच्छेत ब्रह्मर्षेर्गौतमस्य वनं नृप ।
अहल्याया ह्रदे स्नात्वा व्रजेत परमां गतिम् ॥ ०९३ ॥

अभिगम्य श्रियं राजन्विन्दते श्रियमुत्तमाम् ॥ ०९३ ॥

तत्रोदपानो धर्मज्ञ त्रिषु लोकेषु विश्रुतः ।
तत्राभिषेकं कृत्वा तु वाजिमेधमवाप्नुयात् ॥ ०९४ ॥

जनकस्य तु राजर्षेः कूपस्त्रिदशपूजितः ।
तत्राभिषेकं कृत्वा तु विष्णुलोकमवाप्नुयात् ॥ ०९५ ॥

ततो विनशनं गच्छेत्सर्वपापप्रमोचनम् ।
वाजपेयमवाप्नोति सोमलोकं च गच्छति ॥ ०९६ ॥

गण्डकीं तु समासाद्य सर्वतीर्थजलोद्भवाम् ।
वाजपेयमवाप्नोति सूर्यलोकं च गच्छति ॥ ०९७ ॥

ततोऽधिवंश्यं धर्मज्ञ समाविश्य तपोवनम् ।
गुह्यकेषु महाराज मोदते नात्र संशयः ॥ ०९८ ॥

कम्पनां तु समासाद्य नदीं सिद्धनिषेविताम् ।

पुण्डरीकमवाप्नोति सूर्यलोकं च गच्छति ॥ ०९९ ॥

ततो विशालामासाद्य नदीं त्रैलोक्यविश्रुताम् ।
अग्निष्टोममवाप्नोति स्वर्गलोकं च गच्छति ॥ १०० ॥

अथ माहेश्वरीं धारां समासाद्य नराधिप ।
अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् ॥ १०१ ॥

दिवौकसां पुष्करिणीं समासाद्य नरः शुचिः ।
न दुर्गतिमवाप्नोति वाजपेयं च विन्दति ॥ १०२ ॥

महेश्वरपदं गच्छेद्ब्रह्मचारी समाहितः ।
महेश्वरपदे स्नात्वा वाजिमेधफलं लभेत् ॥ १०३ ॥

तत्र कोटिस्तु तीर्थानां विश्रुता भरतर्षभ ।
कूर्मरूपेण राजेन्द्र असुरेण दुरात्मना ॥ १०४ ॥

ह्रियमाणाहृता राजन्विष्णुना प्रभविष्णुना ॥ १०४ ॥

तत्राभिषेकं कुर्वाणस्तीर्थकोट्यां युधिष्ठिर ।
पुण्डरीकमवाप्नोति विष्णुलोकं च गच्छति ॥ १०५ ॥

ततो गच्छेत राजेन्द्र स्थानं नारायणस्य तु ।
सदा संनिहितो यत्र हरिर्वसति भारत ॥ १०६ ॥

शालग्राम इति ख्यातो विष्णोरद्भुतकर्मणः ॥ १०६ ॥

अभिगम्य त्रिलोकेशं वरदं विष्णुमव्ययम् ।
अश्वमेधमवाप्नोति विष्णुलोकं च गच्छति ॥ १०७ ॥

तत्रोदपानो धर्मज्ञ सर्वपापप्रमोचनः ।

समुद्रास्तत्र चत्वारः कूपे संनिहिताः सदा ॥ १०८ ॥

तत्रोपस्पृश्य राजेन्द्र न दुर्गतिमवाप्नुयात् ॥ १०८ ॥

अभिगम्य महादेवं वरदं विष्णुमव्ययम् ।
विराजति यथा सोम ऋणैर्मुक्तो युधिष्ठिर ॥ १०९ ॥

जातिस्मर उपस्पृश्य शुचिः प्रयतमानसः ।
जातिस्मरत्वं प्राप्नोति स्नात्वा तत्र न संशयः ॥ ११० ॥

वटेश्वरपुरं गत्वा अर्चयित्वा तु केशवम् ।
ईप्सिता.ण्ल्लभते कामानुपवासान्न संशयः ॥ १११ ॥

ततस्तु वामनं गत्वा सर्वपापप्रमोचनम् ।
अभिवाद्य हरिं देवं न दुर्गतिमवाप्नुयात् ॥ ११२ ॥

भरतस्याश्रमं गत्वा सर्वपापप्रमोचनम् ।
कौशिकीं तत्र सेवेत महापातकनाशिनीम् ॥ ११३ ॥

राजसूयस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ११३ ॥

ततो गच्छेत धर्मज्ञ चम्पकारण्यमुत्तमम् ।
तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् ॥ ११४ ॥

अथ ज्येष्ठिलमासाद्य तीर्थं परमसंमतम् ।
उपोष्य रजनीमेकामग्निष्टोमफलं लभेत् ॥ ११५ ॥

तत्र विश्वेश्वरं दृष्ट्वा देव्या सह महाद्युतिम् ।
मित्रावरुणयोर्लोकानाप्नोति पुरुषर्षभ ॥ ११६ ॥

कन्यासंवेद्यमासाद्य नियतो नियताशनः ।

मनोः प्रजापतेर्लोकानाप्नोति भरतर्षभ ॥ ११७ ॥

कन्यायां ये प्रयच्छन्ति पानमन्नं च भारत ।
तदक्षयमिति प्राहुर्ऋषयः संशितव्रताः ॥ ११८ ॥

निश्चीरां च समासाद्य त्रिषु लोकेषु विश्रुताम् ।
अश्वमेधमवाप्नोति विष्णुलोकं च गच्छति ॥ ११९ ॥

ये तु दानं प्रयच्छन्ति निश्चीरासङ्गमे नराः ।
ते यान्ति नरशार्दूल ब्रह्मलोकं न संशयः ॥ १२० ॥

तत्राश्रमो वसिष्ठस्य त्रिषु लोकेषु विश्रुतः ।
तत्राभिषेकं कुर्वाणो वाजपेयमवाप्नुयात् ॥ १२१ ॥

देवकूटं समासाद्य ब्रह्मर्षिगणसेवितम् ।
अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् ॥ १२२ ॥

ततो गच्छेत राजेन्द्र कौशिकस्य मुनेर्ह्रदम् ।
यत्र सिद्धिं परां प्राप्तो विश्वामित्रोऽथ कौशिकः ॥ १२३ ॥

तत्र मासं वसेद्वीर कौशिक्यां भरतर्षभ ।
अश्वमेधस्य यत्पुण्यं तन्मासेनाधिगच्छति ॥ १२४ ॥

सर्वतीर्थवरे चैव यो वसेत महाह्रदे ।
न दुर्गतिमवाप्नोति विन्देद्बहु सुवर्णकम् ॥ १२५ ॥

कुमारमभिगत्वा च वीराश्रमनिवासिनम् ।
अश्वमेधमवाप्नोति नरो नास्त्यत्र संशयः ॥ १२६ ॥

अग्निधारां समासाद्य त्रिषु लोकेषु विश्रुताम् ।
अग्निष्टोममवाप्नोति न च स्वर्गान्निवर्तते ॥ १२७ ॥

पितामहसरो गत्वा शैलराजप्रतिष्ठितम् ।
तत्राभिषेकं कुर्वाणो अग्निष्टोमफलं लभेत् ॥ १२८ ॥

पितामहस्य सरसः प्रस्रुता लोकपावनी ।
कुमारधारा तत्रैव त्रिषु लोकेषु विश्रुता ॥ १२९ ॥

यत्र स्नात्वा कृतार्थोऽस्मीत्यात्मानमवगच्छति ।
षष्ठकालोपवासेन मुच्यते ब्रह्महत्यया ॥ १३० ॥

शिखरं वै महादेव्या गौर्यास्त्रैलोक्यविश्रुतम् ।
समारुह्य नरः श्राद्धः स्तनकुण्डेषु संविशेत् ॥ १३१ ॥

तत्राभिषेकं कुर्वाणः पितृदेवार्चने रतः ।
हयमेधमवाप्नोति शक्रलोकं च गच्छति ॥ १३२ ॥

ताम्रारुणं समासाद्य ब्रह्मचारी समाहितः ।
अश्वमेधमवाप्नोति शक्रलोकं च गच्छति ॥ १३३ ॥

नन्दिन्यां च समासाद्य कूपं त्रिदशसेवितम् ।
नरमेधस्य यत्पुण्यं तत्प्राप्नोति कुरूद्वह ॥ १३४ ॥

कालिकासङ्गमे स्नात्वा कौशिक्यारुणयोर्यतः ।
त्रिरात्रोपोषितो विद्वान्सर्वपापैः प्रमुच्यते ॥ १३५ ॥

उर्वशीतीर्थमासाद्य ततः सोमाश्रमं बुधः ।
कुम्भकर्णाश्रमे स्नात्वा पूज्यते भुवि मानवः ॥ १३६ ॥

स्नात्वा कोकामुखे पुण्ये ब्रह्मचारी यतव्रतः ।
जातिस्मरत्वं प्राप्नोति दृष्टमेतत्पुरातने ॥ १३७ ॥

सकृन्नन्दां समासाद्य कृतात्मा भवति द्विजः ।
सर्वपापविशुद्धात्मा शक्रलोकं च गच्छति ॥ १३८ ॥

ऋषभद्वीपमासाद्य सेव्यं क्रौञ्चनिषूदनम् ।
सरस्वत्यामुपस्पृश्य विमानस्थो विराजते ॥ १३९ ॥

औद्दालकं महाराज तीर्थं मुनिनिषेवितम् ।
तत्राभिषेकं कुर्वीत सर्वपापैः प्रमुच्यते ॥ १४० ॥

धर्मतीर्थं समासाद्य पुण्यं ब्रह्मर्षिसेवितम् ।
वाजपेयमवाप्नोति नरो नास्त्यत्र संशयः ॥ १४१ ॥

तथा चम्पां समासाद्य भागीरथ्यां कृतोदकः ।
दण्डार्कमभिगम्यैव गोसहस्रफलं लभेत् ॥ १४२ ॥

लवेडिकां ततो गच्छेत्पुण्यां पुण्योपसेविताम् ।
वाजपेयमवाप्नोति विमानस्थश्च पूज्यते ॥ १४३ ॥

---

# अध्याय ०८३

पुलस्त्य उवाच ॥

अथ संध्यां समासाद्य संवेद्यं तीर्थमुत्तमम् ।
उपस्पृश्य नरो विद्वान्भवेन्नास्त्यत्र संशयः ॥ ००१ ॥

रामस्य च प्रसादेन तीर्थं राजन्कृतं पुरा ।
तल्लोहित्यं समासाद्य विन्द्याद्बहु सुवर्णकम् ॥ ००२ ॥

करतोयां समासाद्य त्रिरात्रोपोषितो नरः ।
अश्वमेधमवाप्नोति कृते पैतामहे विधौ ॥ ००३ ॥

गङ्गायास्त्वथ राजेन्द्र सागरस्य च सङ्गमे ।
अश्वमेधं दशगुणं प्रवदन्ति मनीषिणः ॥ ००४ ॥

गङ्गायास्त्वपरं द्वीपं प्राप्य यः स्नाति भारत ।
त्रिरात्रोपोषितो राजन्सर्वकामानवाप्नुयात् ॥ ००५ ॥

ततो वैतरणीं गत्वा नदीं पापप्रमोचनीम् ।
विरजं तीर्थमासाद्य विराजति यथा शशी ॥ ००६ ॥

प्रभवेच्च कुले पुण्ये सर्वपापं व्यपोहति ।
गोसहस्रफलं लब्ध्वा पुनाति च कुलं नरः ॥ ००७ ॥

शोणस्य ज्योतिरथ्याश्च सङ्गमे निवसञ्शुचिः ।
तर्पयित्वा पितॄन्देवानग्निष्टोमफलं लभेत् ॥ ००८ ॥

शोणस्य नर्मदायाश्च प्रभवे कुरुनन्दन ।
वंशगुल्म उपस्पृश्य वाजिमेधफलं लभेत् ॥ ००९ ॥

ऋषभं तीर्थमासाद्य कोशलायां नराधिप ।
वाजपेयमवाप्नोति त्रिरात्रोपोषितो नरः ॥ ०१० ॥

कोशलायां समासाद्य कालतीर्थ उपस्पृशेत् ।
वृशभैकादशफलं लभते नात्र संशयः ॥ ०११ ॥

पुष्पवत्यामुपस्पृश्य त्रिरात्रोपोषितो नरः ।
गोसहस्रफलं विन्द्यात्कुलं चैव समुद्धरेत् ॥ ०१२ ॥

ततो बदरिकातीर्थे स्नात्वा प्रयतमानसः ।

दीर्घमायुरवाप्नोति स्वर्गलोकं च गच्छति ॥ ०१३ ॥

ततो महेन्द्रमासाद्य जामदग्न्यनिषेवितम् ।
रामतीर्थे नरः स्नात्वा वाजिमेधफलं लभेत् ॥ ०१४ ॥

मतङ्गस्य तु केदारस्तत्रैव कुरुनन्दन ।
तत्र स्नात्वा नरो राजन्गोसहस्रफलं लभेत् ॥ ०१५ ॥

श्रीपर्वतं समासाद्य नदीतीर उपस्पृशेत् ।
अश्वमेधमवाप्नोति स्वर्गलोकं च गच्छति ॥ ०१६ ॥

श्रीपर्वते महादेवो देव्या सह महाद्युतिः ।
न्यवसत्परमप्रीतो ब्रह्मा च त्रिदशैर्वृतः ॥ ०१७ ॥

तत्र देवह्रदे स्नात्वा शुचिः प्रयतमानसः ।
अश्वमेधमवाप्नोति परां सिद्धिं च गच्छति ॥ ०१८ ॥

ऋषभं पर्वतं गत्वा पाण्ड्येषु सुरपूजितम् ।
वाजपेयमवाप्नोति नाकपृष्ठे च मोदते ॥ ०१९ ॥

ततो गच्छेत कावेरीं वृतामप्सरसां गणैः ।
तत्र स्नात्वा नरो राजन्गोसहस्रफलं लभेत् ॥ ०२० ॥

ततस्तीरे समुद्रस्य कन्यातीर्थ उपस्पृशेत् ।
तत्रोपस्पृश्य राजेन्द्र सर्वपापैः प्रमुच्यते ॥ ०२१ ॥

अथ गोकर्णमासाद्य त्रिषु लोकेषु विश्रुतम् ।
समुद्रमध्ये राजेन्द्र सर्वलोकनमस्कृतम् ॥ ०२२ ॥

यत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः ।
भूतयक्षपिशाचाश्च किंनराः समहोरगाः ॥ ०२३ ॥

सिद्धचारणगन्धर्वा मानुषाः पन्नगास्तथा ।
सरितः सागराः शैला उपासन्त उमापतिम्  ॥ ०२४  ॥

तत्रेशानं समभ्यर्च्य त्रिरात्रोपोषितो नरः ।
दशाश्वमेधमाप्नोति गाणपत्यं च विन्दति  ॥ ०२५  ॥

उष्य द्वादशरात्रं तु कृतात्मा भवते नरः  ॥ ०२५  ॥

तत एव तु गायत्र्याः स्थानं त्रैलोक्यविश्रुतम् ।
त्रिरात्रमुषितस्तत्र गोसहस्रफलं लभेत्  ॥ ०२६  ॥

निदर्शनं च प्रत्यक्षं ब्राह्मणानां नराधिप ।
गायत्रीं पठते यस्तु योनिसङ्करजस्तथा  ॥ ०२७  ॥

गाथा वा गीतिका वापि तस्य संपद्यते नृप  ॥ ०२७  ॥

संवर्तस्य तु विप्रर्षेर्वापीमासाद्य दुर्लभाम् ।
रूपस्य भागी भवति सुभगश्चैव जायते  ॥ ०२८  ॥

ततो वेण्णां समासाद्य तर्पयेत्पितृदेवताः ।
मयूरहंससंयुक्तं विमानं लभते नरः  ॥ ०२९  ॥

ततो गोदावरीं प्राप्य नित्यं सिद्धनिषेविताम् ।
गवामयमवाप्नोति वासुकेर्लोकमाप्नुयात्  ॥ ०३०  ॥

वेण्णायाः सङ्गमे स्नात्वा वाजपेयफलं लभेत् ।
वरदासङ्गमे स्नात्वा गोसहस्रफलं लभेत्  ॥ ०३१  ॥

ब्रह्मस्थानं समासाद्य त्रिरात्रमुषितो नरः ।
गोसहस्रफलं विन्देत्स्वर्गलोकं च गच्छति  ॥ ०३२  ॥

कुशप्लवनमासाद्य ब्रह्मचारी समाहितः ।
त्रिरात्रमुषितः स्नात्वा अश्वमेधफलं लभेत् ॥ ०३३ ॥

ततो देवह्रदे रम्ये कृष्णवेण्णाजलोद्भवे ।
जातिमात्रह्रदे चैव तथा कन्याश्रमे नृप ॥ ०३४ ॥

यत्र क्रतुशतैरिष्ट्वा देवराजो दिवं गतः ।
अग्निष्टोमशतं विन्देद्गमनादेव भारत ॥ ०३५ ॥

सर्वदेवह्रदे स्नात्वा गोसहस्रफलं लभेत् ।
जातिमात्रह्रदे स्नात्वा भवेज्जातिस्मरो नरः ॥ ०३६ ॥

ततोऽवाप्य महापुण्यां पयोष्णीं सरितां वराम् ।
पितृदेवार्चनरतो गोसहस्रफलं लभेत् ॥ ०३७ ॥

दण्डकारण्यमासाद्य महाराज उपस्पृशेत् ।
गोसहस्रफलं तत्र स्नातमात्रस्य भारत ॥ ०३८ ॥

शरभङ्गाश्रमं गत्वा शुकस्य च महात्मनः ।
न दुर्गतिमवाप्नोति पुनाति च कुलं नरः ॥ ०३९ ॥

ततः शूर्पारकं गच्छेज्जामदग्न्यनिषेवितम् ।
रामतीर्थे नरः स्नात्वा विन्द्याद्बहु सुवर्णकम् ॥ ०४० ॥

सप्तगोदावरे स्नात्वा नियतो नियताशनः ।
महत्पुण्यमवाप्नोति देवलोकं च गच्छति ॥ ०४१ ॥

ततो देवपथं गच्छेन्नियतो नियताशनः ।
देवसत्रस्य यत्पुण्यं तदवाप्नोति मानवः ॥ ०४२ ॥

तुङ्गकारण्यमासाद्य ब्रह्मचारी जितेन्द्रियः ।
वेदानध्यापयत्तत्र ऋषिः सारस्वतः पुरा ॥ ०४३ ॥

तत्र वेदान्प्रनष्टांस्तु मुनेरङ्गिरसः सुतः ।
उपविष्टो महर्षीणामुत्तरीयेषु भारत ॥ ०४४ ॥

ओङ्कारेण यथान्यायं सम्यगुच्चारितेन च ।
येन यत्पूर्वमभ्यस्तं तत्तस्य समुपस्थितम् ॥ ०४५ ॥

ऋषयस्तत्र देवाश्च वरुणोऽग्निः प्रजापतिः ।
हरिर्नारायणो देवो महादेवस्तथैव च ॥ ०४६ ॥

पितामहश्च भगवान्देवैः सह महाद्युतिः ।
भृगुं नियोजयामास याजनार्थे महाद्युतिम् ॥ ०४७ ॥

ततः स चक्रे भगवानृषीणां विधिवत्तदा ।
सर्वेषां पुनराधानं विधिदृष्टेन कर्मणा ॥ ०४८ ॥

आज्यभागेन वै तत्र तर्पितास्तु यथाविधि ।
देवास्त्रिभुवणं याता ऋषयश्च यथासुखम् ॥ ०४९ ॥

तदरण्यं प्रविष्टस्य तुङ्गकं राजसत्तम ।
पापं प्रणश्यते सर्वं स्त्रियो वा पुरुषस्य वा ॥ ०५० ॥

तत्र मासं वसेद्धीरो नियतो नियताशनः ।
ब्रह्मलोकं व्रजेद्राजन्पुनीते च कुलं नरः ॥ ०५१ ॥

मेधाविकं समासाद्य पितृन्देवांश्च तर्पयेत् ।
अग्निष्टोममवाप्नोति स्मृतिं मेधां च विन्दति ॥ ०५२ ॥

ततः कालञ्जरं गत्वा पर्वतं लोकविश्रुतम् ।

तत्र देवह्रदे स्नात्वा गोसहस्रफलं लभेत्  ॥ ०५३  ॥

आत्मानं साधयेत्तत्र गिरौ कालञ्जरे नृप ।
स्वर्गलोके महीयेत नरो नास्त्यत्र संशयः  ॥ ०५४  ॥

ततो गिरिवरश्रेष्ठे चित्रकूटे विशां पते ।
मन्दाकिनीं समासाद्य नदीं पापप्रमोचनीम्  ॥ ०५५  ॥

तत्राभिषेकं कुर्वाणः पितृदेवार्चने रतः ।
अश्वमेधमवाप्नोति गतिं च परमां व्रजेत्  ॥ ०५६  ॥

ततो गच्छेत राजेन्द्र भर्तृस्थानमनुत्तमम् ।
यत्र देवो महासेनो नित्यं संनिहितो नृपः  ॥ ०५७  ॥

पुमांस्तत्र नरश्रेष्ठ गमनादेव सिध्यति ।
कोटितीर्थे नरः स्नात्वा गोसहस्रफलं लभेत्  ॥ ०५८  ॥

प्रदक्षिणमुपावृत्य ज्येष्ठस्थानं व्रजेन्नरः ।
अभिगम्य महादेवं विराजति यथा शशी  ॥ ०५९  ॥

तत्र कूपो महाराज विश्रुतो भरतर्षभ ।
समुद्रास्तत्र चत्वारो निवसन्ति युधिष्ठिर  ॥ ०६०  ॥

तत्रोपस्पृश्य राजेन्द्र कृत्वा चापि प्रदक्षिणम् ।
नियतात्मा नरः पूतो गच्छेत परमां गतिम्  ॥ ०६१  ॥

ततो गच्छेत्कुरुश्रेष्ठ शृङ्गवेरपुरं महत् ।
यत्र तीर्णो महाराज रामो दाशरथिः पुरा  ॥ ०६२  ॥

गङ्गायां तु नरः स्नात्वा ब्रह्मचारी समाहितः ।
विधूतपाप्मा भवति वाजपेयं च विन्दति  ॥ ०६३  ॥

अभिगम्य महादेवमभ्यर्च्य च नराधिप ।
प्रदक्षिणमुपावृत्य गाणपत्यमवाप्नुयात् ॥ ०६४ ॥

ततो गच्छेत राजेन्द्र प्रयागमृषिसंस्तुतम् ।
यत्र ब्रह्मादयो देवा दिशश्च सदिगीश्वराः ॥ ०६५ ॥

लोकपालाश्च साध्याश्च नैरृताः पितरस्तथा ।
सनत्कुमारप्रमुखास्तथैव परमर्षयः ॥ ०६६ ॥

अङ्गिरःप्रमुखाश्चैव तथा ब्रह्मर्षयोऽपरे ।
तथा नागाः सुपर्णाश्च सिद्धाश्चक्रचरास्तथा ॥ ०६७ ॥

सरितः सागराश्चैव गन्धर्वाप्सरसस्तथा ।
हरिश्च भगवानास्ते प्रजापतिपुरस्कृतः ॥ ०६८ ॥

तत्र त्रीण्यग्निकुण्डानि येषां मध्ये च जाह्नवी ।
प्रयागादभिनिष्क्रान्ता सर्वतीर्थपुरस्कृता ॥ ०६९ ॥

तपनस्य सुता तत्र त्रिषु लोकेषु विश्रुता ।
यमुना गङ्गया सार्धं सङ्गता लोकपावनी ॥ ०७० ॥

गङ्गायमुनयोर्मध्यं पृथिव्या जघनं स्मृतम् ।
प्रयागं जघनस्यान्तमुपस्थमृषयो विदुः ॥ ०७१ ॥

प्रयागं सप्रतिष्ठानं कम्बलाश्वतरौ तथा ।
तीर्थं भोगवती चैव वेदी प्रोक्ता प्रजापतेः ॥ ०७२ ॥

तत्र वेदाश्च यज्ञाश्च मूर्तिमन्तो युधिष्ठिर ।
प्रजापतिमुपासन्ते ऋषयश्च महाव्रताः ॥ ०७३ ॥

यजन्ते क्रतुभिर्देवास्तथा चक्रचरा नृप ॥ ०७३ ॥

ततः पुण्यतमं नास्ति त्रिषु लोकेषु भारत ।
प्रयागः सर्वतीर्थेभ्यः प्रभवत्यधिकं विभो ॥ ०७४ ॥

श्रवणात्तस्य तीर्थस्य नामसङ्कीर्तनादपि ।
मृत्तिकालम्भनाद्वापि नरः पापात्प्रमुच्यते ॥ ०७५ ॥

तत्राभिषेकं यः कुर्यात्सङ्गमे संशितव्रतः ।
पुण्यं स फलमाप्नोति राजसूयाश्वमेधयोः ॥ ०७६ ॥

एषा यजनभूमिर्हि देवानामपि सत्कृता ।
तत्र दत्तं सूक्ष्ममपि महद्भवति भारत ॥ ०७७ ॥

न वेदवचनात्तात न लोकवचनादपि ।
मतिरुत्क्रमणीया ते प्रयागमरणं प्रति ॥ ०७८ ॥

दश तीर्थसहस्राणि षष्टिकोट्यस्तथापराः ।
येषां सांनिध्यमत्रैव कीर्तितं कुरुनन्दन ॥ ०७९ ॥

चातुर्वेदे च यत्पुण्यं सत्यवादिषु चैव यत् ।
स्नात एव तदाप्नोति गङ्गायमुनसङ्गमे ॥ ०८० ॥

तत्र भोगवती नाम वासुकेस्तीर्थमुत्तमम् ।
तत्राभिषेकं यः कुर्यात्सोऽश्वमेधमवाप्नुयात् ॥ ०८१ ॥

तत्र हंसप्रपतनं तीर्थं त्रैलोक्यविश्रुतम् ।
दशाश्वमेधिकं चैव गङ्गायां कुरुनन्दन ॥ ०८२ ॥

यत्र गङ्गा महाराज स देशस्तत्तपोवनम् ।
सिद्धक्षेत्रं तु तज्ज्ञेयं गङ्गातीरसमाश्रितम् ॥ ०८३ ॥

इदं सत्यं द्विजातीनां साधूनामात्मजस्य च ।
सुहृदां च जपेत्कर्णे शिष्यस्यानुगतस्य च ॥ ०८४ ॥

इदं धर्म्यमिदं पुण्यमिदं मेध्यमिदं सुखम् ।
इदं स्वर्ग्यमिदं रम्यमिदं पावनमुत्तमम् ॥ ०८५ ॥

महर्षीणामिदं गुह्यं सर्वपापप्रमोचनम् ।
अधीत्य द्विजमध्ये च निर्मलत्वमवाप्नुयात् ॥ ०८६ ॥

यश्चेदं श्रृणुयान्नित्यं तीर्थपुण्यं सदा शुचिः ।
जातीः स स्मरते बह्वीर्नाकपृष्ठे च मोदते ॥ ०८७ ॥

गम्यान्यपि च तीर्थानि कीर्तितान्यगमानि च ।
मनसा तानि गच्छेत सर्वतीर्थसमीक्षया ॥ ०८८ ॥

एतानि वसुभिः साध्यैरादित्यैर्मरुदश्विभिः ।
ऋषिभिर्देवकल्पैश्च श्रितानि सुकृतैषिभिः ॥ ०८९ ॥

एवं त्वमपि कौरव्य विधिनानेन सुव्रत ।
व्रज तीर्थानि नियतः पुण्यं पुण्येन वर्धते ॥ ०९० ॥

भावितैः कारणैः पूर्वमास्तिक्याच्छ्रुतिदर्शनात् ।
प्राप्यन्ते तानि तीर्थानि सद्भिः शिष्टानुदर्शिभिः ॥ ०९१ ॥

नाव्रतो नाकृतात्मा च नाशुचिर्न च तस्करः ।
स्नाति तीर्थेषु कौरव्य न च वक्रमतिर्नरः ॥ ०९२ ॥

त्वया तु सम्यग्वृत्तेन नित्यं धर्मार्थदर्शिना ।
पितरस्तारितास्तात सर्वे च प्रपितामहाः ॥ ०९३ ॥

पितामहपुरोगाश्च देवाः सर्षिगणा नृप ।
तव धर्मेण धर्मज्ञ नित्यमेवाभितोषिताः ॥ ०९४ ॥

अवाप्स्यसि च लोकान्वै वसूनां वासवोपम ।
कीर्तिं च महतीं भीष्म प्राप्स्यसे भुवि शाश्वतीम् ॥ ०९५ ॥

नारद उवाच ॥

एवमुक्त्वाभ्यनुज्ञाप्य पुलस्त्यो भगवानृषिः ।
प्रीतः प्रीतेन मनसा तत्रैवान्तरधीयत ॥ ०९६ ॥

भीष्मश्च कुरुशार्दूल शास्त्रतत्त्वार्थदर्शिवान् ।
पुलस्त्यवचनाच्चैव पृथिवीमनुचक्रमे ॥ ०९७ ॥

अनेन विधिना यस्तु पृथिवीं सञ्चरिष्यति ।
अश्वमेधशतस्याग्र्यं फलं प्रेत्य स भोक्ष्यते ॥ ०९८ ॥

अतश्चाष्टगुणं पार्थ प्राप्स्यसे धर्ममुत्तमम् ।
नेता च त्वमृषीन्यस्मात्तेन तेऽष्टगुणं फलम् ॥ ०९९ ॥

रक्षोगणावकीर्णानि तीर्थान्येतानि भारत ।
न गतिर्विद्यतेऽन्यस्य त्वामृते कुरुनन्दन ॥ १०० ॥

इदं देवर्षिचरितं सर्वतीर्थार्थसंश्रितम् ।
यः पठेत्कल्यमुत्थाय सर्वपापैः प्रमुच्यते ॥ १०१ ॥

ऋषिमुख्याः सदा यत्र वाल्मीकिस्त्वथ काश्यपः ।
आत्रेयस्त्वथ कौण्डिन्यो विश्वामित्रोऽथ गौतमः ॥ १०२ ॥

असितो देवलश्चैव मार्कण्डेयोऽथ गालवः ।
भरद्वाजो वसिष्ठश्च मुनिरुद्दालकस्तथा ॥ १०३ ॥

शौनकः सह पुत्रेण व्यासश्च जपतां वरः ।
दुर्वासाश्च मुनिश्रेष्ठो गालवश्च महातपाः ॥ १०४ ॥

एते ऋषिवराः सर्वे त्वत्प्रतीक्षास्तपोधनाः ।
एभिः सह महाराज तीर्थान्येतान्यनुव्रज ॥ १०५ ॥

एष वै लोमशो नाम देवर्षिरमितद्युतिः ।
समेष्यति त्वया चैव तेन सार्धमनुव्रज ॥ १०६ ॥

मया च सह धर्मज्ञ तीर्थान्येतान्यनुव्रज ।
प्राप्स्यसे महतीं कीर्तिं यथा राजा महाभिषः ॥ १०७ ॥

यथा ययातिर्धर्मात्मा यथा राजा पुरूरवाः ।
तथा त्वं कुरुशार्दूल स्वेन धर्मेण शोभसे ॥ १०८ ॥

यथा भगीरथो राजा यथा रामश्च विश्रुतः ।
तथा त्वं सर्वराजभ्यो भ्राजसे रश्मिवानिव ॥ १०९ ॥

यथा मनुर्यथेक्ष्वाकुर्यथा पूरुर्महायशाः ।
यथा वैन्यो महातेजास्तथा त्वमपि विश्रुतः ॥ ११० ॥

यथा च वृत्रहा सर्वान्सपत्नान्निर्दहत्पुरा ।
तथा शत्रुक्षयं कृत्वा प्रजास्त्वं पालयिष्यसि ॥ १११ ॥

स्वधर्मविजितामुर्वीं प्राप्य राजीवलोचन ।
ख्यातिं यास्यसि धर्मेण कार्तवीर्यार्जुनो यथा ॥ ११२ ॥

वैशंपायन उवाच ॥

एवमाश्वास्य राजानं नारदो भगवानृषिः ।

अनुज्ञाप्य महात्मानं तत्रैवान्तरधीयत ॥ ११३ ॥

युधिष्ठिरोऽपि धर्मात्मा तमेवार्थं विचिन्तयन् ।
तीर्थयात्राश्रयं पुण्यमृषीणां प्रत्यवेदयत् ॥ ११४ ॥

---

# अध्याय ०८४

वैशंपायन उवाच ॥

भ्रातॄणां मतमाज्ञाय नारदस्य च धीमतः ।
पितामहसमं धौम्यं प्राह राजा युधिष्ठिरः ॥ ००१ ॥

मया स पुरुषव्याघ्रो जिष्णुः सत्यपराक्रमः ।
अस्त्रहेतोर्महाबाहुरमितात्मा विवासितः ॥ ००२ ॥

स हि वीरोऽनुरक्तश्च समर्थश्च तपोधन ।
कृती च भृशमप्यस्त्रे वासुदेव इव प्रभुः ॥ ००३ ॥

अहं ह्येतावुभौ ब्रह्मन्कृष्णावरिनिघातिनौ ।
अभिजानामि विक्रान्तौ तथा व्यासः प्रतापवान् ॥ ००४ ॥

त्रियुगौ पुण्डरीकाक्षौ वासुदेवधनञ्जयौ ॥ ००४ ॥

नारदोऽपि तथा वेद सोऽप्यशंसत्सदा मम ।
तथाहमपि जानामि नरनारायणावृषी ॥ ००५ ॥

शक्तोऽयमित्यतो मत्वा मया संप्रेषितोऽर्जुनः ।

इन्द्रादनवरः शक्तः सुरसूनुः सुराधिपम् ॥ ००६ ॥

द्रष्टुमस्त्राणि चादातुमिन्द्रादिति विवासितः ॥ ००६ ॥

भीष्मद्रोणावतिरथौ कृपो द्रौणिश्च दुर्जयः ।
धृतराष्ट्रस्य पुत्रेण वृता युधि महाबलाः ॥ ००७ ॥

सर्वे वेदविदः शूराः सर्वेऽस्त्रकुशलास्तथा ॥ ००७ ॥

योद्धुकामश्च पार्थेन सततं यो महाबलः ।
स च दिव्यास्त्रवित्कर्णः सूतपुत्रो महारथः ॥ ००८ ॥

सोऽश्ववेगानिलबलः शरार्चिस्तलनिस्वनः ।
रजोधूमोऽस्त्रसंतापो धार्तराष्ट्रानिलोद्धतः ॥ ००९ ॥

निसृष्ट इव कालेन युगान्तज्वलनो यथा ।
मम सैन्यमयं कक्षं प्रधक्ष्यति न संशयः ॥ ०१० ॥

तं स कृष्णानिलोद्धूतो दिव्यास्त्रजलदो महान् ।
श्वेतवाजिबलाकाभृद्गाण्डीवेन्द्रायुधोज्ज्वलः ॥ ०११ ॥

सततं शरधाराभिः प्रदीप्तं कर्णपावकम् ।
उदीर्णोऽर्जुनमेघोऽयं शमयिष्यति संयुगे ॥ ०१२ ॥

स साक्षादेव सर्वाणि शक्रात्परपुरञ्जयः ।
दिव्यान्यस्त्राणि बीभत्सुस्तत्त्वतः प्रतिपत्स्यते ॥ ०१३ ॥

अलं स तेषां सर्वेषामिति मे धीयते मतिः ।
नास्ति त्वतिक्रिया तस्य रणेऽरीणां प्रतिक्रिया ॥ ०१४ ॥

तं वयं पाण्डवं सर्वे गृहीतास्त्रं धनञ्जयम् ।

द्रष्टारो न हि बीभत्सुर्भारमुद्यम्य सीदति ॥ ०१५ ॥

वयं तु तमृते वीरं वनेऽस्मिन्द्विपदां वर ।
अवधानं न गच्छामः काम्यके सह कृष्णया ॥ ०१६ ॥

भवानन्यद्वनं साधु बह्वन्नं फलवच्छुचि ।
आख्यातु रमणीयं च सेवितं पुण्यकर्मभिः ॥ ०१७ ॥

यत्र कञ्चिद्वयं कालं वसन्तः सत्यविक्रमम् ।
प्रतीक्षामोऽर्जुनं वीरं वर्षकामा इवाम्बुदम् ॥ ०१८ ॥

विविधानाश्रमान्कांश्चिद्द्विजातिभ्यः परिश्रुतान् ।
सरांसि सरितश्चैव रमणीयांश्च पर्वतान् ॥ ०१९ ॥

आचक्ष्व न हि नो ब्रह्मन्रोचते तमृतेऽर्जुनम् ।
वनेऽस्मिन्काम्यके वासो गच्छामोऽन्यां दिशं प्रति ॥ ०२० ॥

---

# अध्याय ०८५

वैशंपायन उवाच ॥

तान्सर्वानुत्सुकान्दृष्ट्वा पाण्डवान्दीनचेतसः ।
आश्वासयंस्तदा धौम्यो बृहस्पतिसमोऽब्रवीत् ॥ ००१ ॥

ब्राह्मणानुमतान्पुण्यानाश्रमान्भरतर्षभ ।
दिशस्तीर्थानि शैलांश्च शृणु मे गदतो नृप ॥ ००२ ॥

पूर्वं प्राचीं दिशं राजन्राजर्षिगणसेविताम् ।
रम्यां ते कीर्तयिष्यामि युधिष्ठिर यथास्मृति ॥ ००३ ॥

तस्यां देवर्षिजुष्टायां नैमिषं नाम भारत ।
यत्र तीर्थानि देवानां सुपुण्यानि पृथक्पृथक् ॥ ००४ ॥

यत्र सा गोमती पुण्या रम्या देवर्षिसेविता ।
यज्ञभूमिश्च देवानां शामित्रं च विवस्वतः ॥ ००५ ॥

तस्यां गिरिवरः पुण्यो गयो राजर्षिसत्कृतः ।
शिवं ब्रह्मसरो यत्र सेवितं त्रिदशर्षिभिः ॥ ००६ ॥

यदर्थं पुरुषव्याघ्र कीर्तयन्ति पुरातनाः ।
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ॥ ००७ ॥

महानदी च तत्रैव तथा गयशिरोऽनघ ।
यत्रासौ कीर्त्यते विप्रैरक्षय्यकरणो वटः ॥ ००८ ॥

यत्र दत्तं पितृभ्योऽन्नमक्षय्यं भवति प्रभो ॥ ००८ ॥

सा च पुण्यजला यत्र फल्गुनामा महानदी ।
बहुमूलफला चापि कौशिकी भरतर्षभ ॥ ००९ ॥

विश्वामित्रोऽभ्यगाद्यत्र ब्राह्मणत्वं तपोधनः ॥ ००९ ॥

गङ्गा यत्र नदी पुण्या यस्यास्तीरे भगीरथः ।
अयजत्तात बहुभिः क्रतुभिर्भूरिदक्षिणैः ॥ ०१० ॥

पाञ्चालेषु च कौरव्य कथयन्त्युत्पलावतम् ।
विश्वामित्रोऽयजद्यत्र शक्रेण सह कौशिकः ॥ ०११ ॥

यत्रानुवंशं भगवाञ्जामदग्न्यस्तथा जगौ ॥ ०११ ॥

विश्वामित्रस्य तां दृष्ट्वा विभूतिमतिमानुषीम् ।
कन्यकुब्जेऽपिबत्सोममिन्द्रेण सह कौशिकः ॥ ०१२ ॥

ततः क्षत्रादपाक्रामद्ब्राह्मणोऽस्मीति चाब्रवीत् ॥ ०१२ ॥

पवित्रमृषिभिर्जुष्टं पुण्यं पावनमुत्तमम् ।
गङ्गायमुनयोर्वीर सङ्गमं लोकविश्रुतम् ॥ ०१३ ॥

यत्रायजत भूतात्मा पूर्वमेव पितामहः ।
प्रयागमिति विख्यातं तस्माद्भरतसत्तम ॥ ०१४ ॥

अगस्त्यस्य च राजेन्द्र तत्राश्रमवरो महान् ।
हिरण्यबिन्दुः कथितो गिरौ कालञ्जरे नृप ॥ ०१५ ॥

अत्यन्यान्पर्वतान्राजन्पुण्यो गिरिवरः शिवः ।
महेन्द्रो नाम कौरव्य भार्गवस्य महात्मनः ॥ ०१६ ॥

अयजद्यत्र कौन्तेय पूर्वमेव पितामहः ।
यत्र भागीरथी पुण्या सदस्यासीद्युधिष्ठिर ॥ ०१७ ॥

यत्रासौ ब्रह्मशालेति पुण्या ख्याता विशां पते ।
धूतपाप्मभिराकीर्णा पुण्यं तस्याश्च दर्शनम् ॥ ०१८ ॥

पवित्रो मङ्गलीयश्च ख्यातो लोके सनातनः ।
केदारश्च मतङ्गस्य महानाश्रम उत्तमः ॥ ०१९ ॥

कुण्डोदः पर्वतो रम्यो बहुमूलफलोदकः ।
नैषधस्तृषितो यत्र जलं शर्म च लब्धवान् ॥ ०२० ॥

यत्र देववनं रम्यं तापसैरुपशोभितम् ।
बाहुदा च नदी यत्र नन्दा च गिरिमूर्धनि ॥ ०२१ ॥

तीर्थानि सरितः शैलाः पुण्यान्यायतनानि च ।
प्राच्यां दिशि महाराज कीर्तितानि मया तव ॥ ०२२ ॥

तिसृष्वन्यासु पुण्यानि दिक्षु तीर्थानि मे शृणु ।
सरितः पर्वतांश्चैव पुण्यान्यायतनानि च ॥ ०२३ ॥

---

# अध्याय ०८६

धौम्य उवाच ॥

दक्षिणस्यां तु पुण्यानि शृणु तीर्थानि भारत ।
विस्तरेण यथाबुद्धि कीर्त्यमानानि भारत ॥ ००१ ॥

यस्यामाख्यायते पुण्या दिशि गोदावरी नदी ।
बह्वारामा बहुजला तापसाचरिता शुभा ॥ ००२ ॥

वेण्णा भीमरथी चोभे नद्यौ पापभयापहे ।
मृगद्विजसमाकीर्णे तापसालयभूषिते ॥ ००३ ॥

राजर्षेस्तत्र च सरिन्नृगस्य भरतर्षभ ।
रम्यतीर्था बहुजला पयोष्णी द्विजसेविता ॥ ००४ ॥

अपि चात्र महायोगी मार्कण्डेयो महातपाः ।
अनुवंश्यां जगौ गाथां नृगस्य धरणीपतेः ॥ ००५ ॥

नृगस्य यजमानस्य प्रत्यक्षमिति नः श्रुतम् ।
अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ॥ ००६ ॥

माठरस्य वनं पुण्यं बहुमूलफलं शिवम् ।
यूपश्च भरतश्रेष्ठ वरुणस्रोतसे गिरौ ॥ ००७ ॥

प्रवेण्युत्तरपार्श्वे तु पुण्ये कण्वाश्रमे तथा ।
तापसानामरण्यानि कीर्तितानि यथाश्रुति ॥ ००८ ॥

वेदी शूर्पारके तात जमदग्नेर्महात्मनः ।
रम्या पाषाणतीर्था च पुरश्चन्द्रा च भारत ॥ ००९ ॥

अशोकतीर्थं मर्त्येषु कौन्तेय बहुलाश्रमम् ।
अगस्त्यतीर्थं पाण्ड्येषु वारुणं च युधिष्ठिर ॥ ०१० ॥

कुमार्यः कथिताः पुण्याः पाण्ड्येष्वेव नरर्षभ ।
ताम्रपर्णीं तु कौन्तेय कीर्तयिष्यामि तां श‍ृणु ॥ ०११ ॥

यत्र देवैस्तपस्तप्तं महदिच्छद्भिराश्रमे ।
गोकर्णमिति विख्यातं त्रिषु लोकेषु भारत ॥ ०१२ ॥

शीततोयो बहुजलः पुण्यस्तात शिवश्च सः ।
ह्रदः परमदुष्प्रापो मानुषैरकृतात्मभिः ॥ ०१३ ॥

तत्रैव तृणसोमाग्नेः संपन्नफलमूलवान् ।
आश्रमोऽगस्त्यशिष्यस्य पुण्यो देवसभे गिरौ ॥ ०१४ ॥

वैडूर्यपर्वतस्तत्र श्रीमान्मणिमयः शिवः ।
अगस्त्यस्याश्रमश्चैव बहुमूलफलोदकः ॥ ०१५ ॥

सुराष्ट्रेष्वपि वक्ष्यामि पुण्यान्यायतनानि च ।
आश्रमान्सरितः शैलान्सरांसि च नराधिप ॥ ०१६ ॥

चमसोन्मज्जनं विप्रास्तत्रापि कथयन्त्युत ।
प्रभासं चोदधौ तीर्थं त्रिदशानां युधिष्ठिर ॥ ०१७ ॥

तत्र पिण्डारकं नाम तापसाचरितं शुभम् ।
उज्जयन्तश्च शिखरी क्षिप्रं सिद्धिकरो महान् ॥ ०१८ ॥

तत्र देवर्षिवर्येण नारदेनानुकीर्तितः ।
पुराणः श्रूयते श्लोकस्तं निबोध युधिष्ठिर ॥ ०१९ ॥

पुण्ये गिरौ सुराष्ट्रेषु मृगपक्षिनिषेविते ।
उज्जयन्ते स्म तप्ताङ्गो नाकपृष्ठे महीयते ॥ ०२० ॥

पुण्या द्वारवती तत्र यत्रास्ते मधुसूदनः ।
साक्षाद्देवः पुराणोऽसौ स हि धर्मः सनातनः ॥ ०२१ ॥

ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः ।
ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् ॥ ०२२ ॥

पवित्राणां हि गोविन्दः पवित्रं परमुच्यते ।
पुण्यानामपि पुण्योऽसौ मङ्गलानां च मङ्गलम् ॥ ०२३ ॥

त्रैलोक्यं पुण्डरीकाक्षो देवदेवः सनातनः ।
आस्ते हरिरचिन्त्यात्मा तत्रैव मधुसूदनः ॥ ०२४ ॥

# अध्याय ०८७

धौम्य उवाच ॥

अवन्तिषु प्रतीच्यां वै कीर्तयिष्यामि ते दिशि ।
यानि तत्र पवित्राणि पुण्यान्यायतनानि च ॥ ००१ ॥

प्रियङ्ग्वाम्रवनोपेता वानीरवनमालिनी ।
प्रत्यक्स्रोता नदी पुण्या नर्मदा तत्र भारत ॥ ००२ ॥

निकेतः ख्यायते पुण्यो यत्र विश्रवसो मुनेः ।
जज्ञे धनपतिर्यत्र कुबेरो नरवाहनः ॥ ००३ ॥

वैडूर्यशिखरो नाम पुण्यो गिरिवरः शुभः ।
दिव्यपुष्पफलास्तत्र पादपा हरितच्छदाः ॥ ००४ ॥

तस्य शैलस्य शिखरे सरस्तत्र च धीमतः ।
प्रफुल्लनलिनं राजन्देवगन्धर्वसेवितम् ॥ ००५ ॥

बह्वाश्चर्यं महाराज दृश्यते तत्र पर्वते ।
पुण्ये स्वर्गोपमे दिव्ये नित्यं देवर्षिसेविते ॥ ००६ ॥

ह्रदिनी पुण्यतीर्था च राजर्षेस्तत्र वै सरित् ।
विश्वामित्रनदी पारा पुण्या परपुरञ्जय ॥ ००७ ॥

यस्यास्तीरे सतां मध्ये ययातिर्नहुषात्मजः ।
पपात स पुनर्लोका.ण्ल्लेभे धर्मान्सनातनान् ॥ ००८ ॥

तत्र पुण्यह्रदस्तात मैनाकश्चैव पर्वतः ।
बहुमूलफलो वीर असितो नाम पर्वतः ॥ ००९ ॥

आश्रमः कक्षसेनस्य पुण्यस्तत्र युधिष्ठिर ।
च्यवनस्याश्रमश्चैव ख्यातः सर्वत्र पाण्डव ॥ ०१० ॥

तत्राल्पेनैव सिध्यन्ति मानवास्तपसा विभो ॥ ०१० ॥

जम्बूमार्गो महाराज ऋषीणां भावितात्मनाम् ।
आश्रमः शाम्यतां श्रेष्ठ मृगद्विजगणायुतः ॥ ०११ ॥

ततः पुण्यतमा राजन्सततं तापसायुता ।
केतुमाला च मेध्या च गङ्गारण्यं च भूमिप ॥ ०१२ ॥

ख्यातं च सैन्धवारण्यं पुण्यं द्विजनिषेवितम् ॥ ०१२ ॥

पितामहसरः पुण्यं पुष्करं नाम भारत ।
वैखानसानां सिद्धानामृषीणामाश्रमः प्रियः ॥ ०१३ ॥

अप्यत्र संस्तवार्थाय प्रजापतिरथो जगौ ।
पुष्करेषु कुरुश्रेष्ठ गाथां सुकृतिनां वर ॥ ०१४ ॥

मनसाप्यभिकामस्य पुष्कराणि मनस्विनः ।
पापाणि विप्रणश्यन्ति नाकपृष्ठे च मोदते ॥ ०१५ ॥

---

# अध्याय ०८८

धौम्य उवाच ॥

उदीच्यां राजशार्दूल दिशि पुण्यानि यानि वै ।
तानि ते कीर्तयिष्यामि पुण्यान्यायतनानि च ॥ ००१ ॥

सरस्वती पुण्यवहा ह्रदिनी वनमालिनी ।
समुद्रगा महावेगा यमुना यत्र पाण्डव ॥ ००२ ॥

तत्र पुण्यतमं तीर्थं प्लक्षावतरणं शिवम् ।
यत्र सारस्वतैरिष्ट्वा गच्छन्त्यवभृथं द्विजाः ॥ ००३ ॥

पुण्यं चाख्यायते दिव्यं शिवमग्निशिरोऽनघ ।
सहदेवोऽयजद्यत्र शम्याक्षेपेण भारत ॥ ००४ ॥

एतस्मिन्नेव चार्थेयमिन्द्रगीता युधिष्ठिर ।
गाथा चरति लोकेऽस्मिन्गीयमाना द्विजातिभिः ॥ ००५ ॥

अग्नयः सहदेवेन ये चिता यमुनामनु ।
शतं शतसहस्राणि सहस्रशतदक्षिणाः ॥ ००६ ॥

तत्रैव भरतो राजा चक्रवर्ती महायशाः ।
विंशतिं सप्त चाष्टौ च हयमेधानुपाहरत् ॥ ००७ ॥

कामकृद्यो द्विजातीनां श्रुतस्तात मया पुरा ।
अत्यन्तमाश्रमः पुण्यः सरकस्तस्य विश्रुतः ॥ ००८ ॥

सरस्वती नदी सद्भिः सततं पार्थ पूजिता ।
वालखिल्यैर्महाराज यत्रेष्टमृषिभिः पुरा ॥ ००९ ॥

दृषद्वती पुण्यतमा तत्र ख्याता युधिष्ठिर ।
तत्र वैवर्ण्यवर्णौ च सुपुण्यौ मनुजाधिप ॥ ०१० ॥

वेदज्ञौ वेदविदितौ विद्यावेदविदावुभौ ।
यजन्तौ क्रतुभिर्नित्यं पुण्यैर्भरतसत्तम ॥ ०११ ॥

समेत्य बहुशो देवाः सेन्द्राः सवरुणाः पुरा ।
विशाखयूपेऽतप्यन्त तस्मात्पुण्यतमः स वै ॥ ०१२ ॥

ऋषिर्महान्महाभागो जमदग्निर्महायशाः ।
पलाशकेषु पुण्येषु रम्येष्वयजताभिभूः ॥ ०१३ ॥

यत्र सर्वाः सरिच्छ्रेष्ठाः साक्षात्तमृषिसत्तमम् ।
स्वं स्वं तोयमुपादाय परिवार्योपतस्थिरे ॥ ०१४ ॥

अपि चात्र महाराज स्वयं विश्वावसुर्जगौ ।
इमं श्लोकं तदा वीर प्रेक्ष्य वीर्यं महात्मनः ॥ ०१५ ॥

यजमानस्य वै देवाञ्जमदग्नेर्महात्मनः ।
आगम्य सरितः सर्वा मधुना समतर्पयन् ॥ ०१६ ॥

गन्धर्वयक्षरक्षोभिरप्सरोभिश्च शोभितम् ।
किरातकिंनरावासं शैलं शिखरिणां वरम् ॥ ०१७ ॥

बिभेद तरसा गङ्गा गङ्गाद्वारे युधिष्ठिर ।
पुण्यं तत्ख्यायते राजन्ब्रह्मर्षिगणसेवितम् ॥ ०१८ ॥

सनत्कुमारः कौरव्य पुण्यं कनखलं तथा ।
पर्वतश्च पुरुर्नाम यत्र जातः पुरूरवाः ॥ ०१९ ॥

भृगुर्यत्र तपस्तेपे महर्षिगणसेवितः ।
स राजन्नाश्रमः ख्यातो भृगुतुङ्गो महागिरिः ॥ ०२० ॥

यच्च भूतं भविष्यच्च भवच्च पुरुषर्षभ ।
नारायणः प्रभुर्विष्णुः शाश्वतः पुरुषोत्तमः ॥ ०२१ ॥

तस्यातियशसः पुण्यां विशालां बदरीमनु ।

आश्रमः ख्यायते पुण्यस्त्रिषु लोकेषु विश्रुतः  ॥ ०२२  ॥

उष्णतोयवहा गङ्ग शीततोयवहापरा ।
सुवर्णसिकता राजन्विशालां बदरीमनु  ॥ ०२३  ॥

ऋषयो यत्र देवाश्च महाभागा महौजसः ।
प्राप्य नित्यं नमस्यन्ति देवं नारायणं विभुम्  ॥ ०२४  ॥

यत्र नारायणो देवः परमात्मा सनातनः ।
तत्र कृत्स्नं जगत्पार्थ तीर्थान्यायतनानि च  ॥ ०२५  ॥

तत्पुण्यं तत्परं ब्रह्म तत्तीर्थं तत्तपोवनम् ।
तत्र देवर्षयः सिद्धाः सर्वे चैव तपोधनाः  ॥ ०२६  ॥

आदिदेवो महायोगी यत्रास्ते मधुसूदनः ।
पुण्यानामपि तत्पुण्यं तत्र ते संशयोऽस्तु मा  ॥ ०२७  ॥

एतानि राजन्पुण्यानि पृथिव्यां पृथिवीपते ।
कीर्तितानि नरश्रेष्ठ तीर्थान्यायतनानि च  ॥ ०२८  ॥

एतानि वसुभिः साध्यैरादित्यैर्मरुदश्विभिः ।
ऋषिभिर्ब्रह्मकल्पैश्च सेवितानि महात्मभिः  ॥ ०२९  ॥

चरनेतानि कौन्तेय सहितो ब्राह्मणर्षभैः ।
भ्रातृभिश्च महाभागैरुत्कण्ठां विजहिष्यसि  ॥ ०३०  ॥

# अध्याय ०८९

वैशंपायन उवाच ॥

एवं संभाषमाणे तु धौम्ये कौरवनन्दन ।
लोमशः सुमहातेजा ऋषिस्तत्राजगाम ह ॥ ००१ ॥

तं पाण्डवाग्रजो राजा सगणो ब्राह्मणाश्च ते ।
उदतिष्ठन्महाभागं दिवि शक्रमिवामराः ॥ ००२ ॥

तमभ्यर्च्य यथान्यायं धर्मराजो युधिष्ठिरः ।
पप्रच्छागमने हेतुमटने च प्रयोजनम् ॥ ००३ ॥

स पृष्टः पाण्डुपुत्रेण प्रीयमाणो महामनाः ।
उवाच श्लक्ष्णया वाचा हर्षयन्निव पाण्डवान् ॥ ००४ ॥

सञ्चरन्नस्मि कौन्तेय सर्वलोकान्यदृच्छया ।
गतः शक्रस्य सदनं तत्रापश्यं सुरेश्वरम् ॥ ००५ ॥

तव च भ्रातरं वीरमपश्यं सव्यसाचिनम् ।
शक्रस्यार्धासनगतं तत्र मे विस्मयो महान् ॥ ००६ ॥

आसीत्पुरुषशार्दूल दृष्ट्वा पार्थं तथागतम् ॥ ००६ ॥

आह मां तत्र देवेशो गच्छ पाण्डुसुतानिति ।
सोऽहमभ्यागतः क्षिप्रं दिदृक्षुस्त्वां सहानुजम् ॥ ००७ ॥

वचनात्पुरुहूतस्य पार्थस्य च महात्मनः ।
आख्यास्ये ते प्रियं तात महत्पाण्डवनन्दन ॥ ००८ ॥

भ्रातृभिः सहितो राजन्कृष्णया चैव तच्छृणु ।

यत्त्वयोक्तो महाबाहुरस्त्रार्थं पाण्डवर्षभ ॥ ००९ ॥

तदस्त्रमाप्तं पार्थेन रुद्रादप्रतिमं महत् ।
यत्तद्ब्रह्मशिरो नाम तपसा रुद्रमागतम् ॥ ०१० ॥

अमृतादुत्थितं रौद्रं तल्लब्धं सव्यसाचिना ।
तत्समन्त्रं ससंहारं सप्रायश्चित्तमङ्गलम् ॥ ०११ ॥

वज्रं चान्यानि चास्त्राणि दण्डादीनि युधिष्ठिर ।
यमात्कुबेराद्वरुणादिन्द्राच्च कुरुनन्दन ॥ ०१२ ॥

अस्त्राण्यधीतवान्पार्थो दिव्यान्यमितविक्रमः ॥ ०१२ ॥

विश्वावसोश्च तनयाद्गीतं नृत्तं च साम च ।
वादित्रं च यथान्यायं प्रत्यविन्दद्यथाविधि ॥ ०१३ ॥

एवं कृतास्त्रः कौन्तेयो गान्धर्वं वेदमाप्तवान् ।
सुखं वसति बीभत्सुरनुजस्यानुजस्तव ॥ ०१४ ॥

यदर्थं मां सुरश्रेष्ठ इदं वचनमब्रवीत् ।
तच्च ते कथयिष्यामि युधिष्ठिर निबोध मे ॥ ०१५ ॥

भवान्मनुष्यलोकाय गमिष्यति न संशयः ।
ब्रूयाद्युधिष्ठिरं तत्र वचनान्मे द्विजोत्तम ॥ ०१६ ॥

आगमिष्यति ते भ्राता कृतास्त्रः क्षिप्रमर्जुनः ।
सुरकार्यं महत्कृत्वा यदाशक्यं दिवौकसैः ॥ ०१७ ॥

तपसा तु त्वमात्मानं भ्रातृभिः सह योजय ।
तपसो हि परं नास्ति तपसा विन्दते महत् ॥ ०१८ ॥

अहं च कर्णं जानामि यथावद्भरतर्षभ ।
न स पार्थस्य सङ्ग्रामे कलामर्हति षोडशीम् ॥ ०१९ ॥

यच्चापि ते भयं तस्मान्मनसिस्थमरिंदम ।
तच्चाप्यपहरिष्यामि सव्यसाचाविहागते ॥ ०२० ॥

यच्च ते मानसं वीर तीर्थयात्रामिमां प्रति ।
तच्च ते लोमशः सर्वं कथयिष्यत्यसंशयम् ॥ ०२१ ॥

यच्च किञ्चित्तपोयुक्तं फलं तीर्थेषु भारत ।
महर्षिरेष यद्ब्रूयात्तच्छ्रद्धेयमनन्यथा ॥ ०२२ ॥

---

# अध्याय ०९०

लोमश उवाच ॥

धनञ्जयेन चाप्युक्तं यत्तच्छृणु युधिष्ठिर ।
युधिष्ठिरं भ्रातरं मे योजयेर्धर्म्यया श्रिया ॥ ००१ ॥

त्वं हि धर्मान्परान्वेत्थ तपांसि च तपोधन ।
श्रीमतां चापि जानासि राज्ञां धर्मं सनातनम् ॥ ००२ ॥

स भवान्यत्परं वेद पावनं पुरुषान्प्रति ।
तेन संयोजयेथास्त्वं तीर्थपुण्येन पाण्डवम् ॥ ००३ ॥

यथा तीर्थानि गच्छेत गाश्च दद्यात्स पार्थिवः ।
तथा सर्वात्मना कार्यमिति मां विजयोऽब्रवीत् ॥ ००४ ॥

भवता चानुगुप्तोऽसौ चरेत्तीर्थानि सर्वशः ।
रक्षोभ्यो रक्षितव्यश्च दुर्गेषु विषमेषु च ॥ ००५ ॥

दधीच इव देवेन्द्रं यथा चाप्यङ्गिरा रविम् ।
तथा रक्षस्व कौन्तेयं राक्षसेभ्यो द्विजोत्तम ॥ ००६ ॥

यातुधाना हि बहवो राक्षसाः पर्वतोपमाः ।
त्वयाभिगुप्तान्कौन्तेयान्नातिवर्तेयुरन्तिकात् ॥ ००७ ॥

सोऽहमिन्द्रस्य वचनान्नियोगादर्जुनस्य च ।
रक्षमाणो भयेभ्यस्त्वां चरिष्यामि त्वया सह ॥ ००८ ॥

द्विस्तीर्थानि मया पूर्वं दृष्टानि कुरुनन्दन ।
इदं तृतीयं द्रक्ष्यामि तान्येव भवता सह ॥ ००९ ॥

इयं राजर्षिभिर्याता पुण्यकृद्भिर्युधिष्ठिर ।
मन्वादिभिर्महाराज तीर्थयात्रा भयापहा ॥ ०१० ॥

नानृजुर्नाकृतात्मा च नावैद्यो न च पापकृत् ।
स्नाति तीर्थेषु कौरव्य न च वक्रमतिर्नरः ॥ ०११ ॥

त्वं तु धर्ममतिर्नित्यं धर्मज्ञः सत्यसङ्गरः ।
विमुक्तः सर्वपापेभ्यो भूय एव भविष्यसि ॥ ०१२ ॥

यथा भगीरथो राजा राजानश्च गयादयः ।
यथा ययातिः कौन्तेय तथा त्वमपि पाण्डव ॥ ०१३ ॥

युधिष्ठिर उवाच ॥

न हर्षात्संप्रपश्यामि वाक्यस्यास्योत्तरं क्वचित् ।
स्मरेद्धि देवराजो यं किं नामाभ्यधिकं ततः ॥ ०१४ ॥

भवता सङ्गमो यस्य भ्राता यस्य धनञ्जयः ।
वासवः स्मरते यस्य को नामाभ्यधिकस्ततः ॥ ०१५ ॥

यच्च मां भगवानाह तीर्थानां दर्शनं प्रति ।
धौम्यस्य वचनादेषा बुद्धिः पूर्वं कृतैव मे ॥ ०१६ ॥

तद्यदा मन्यसे ब्रह्मन्गमनं तीर्थदर्शने ।
तदैव गन्तास्मि दृढमेष मे निश्चयः परः ॥ ०१७ ॥

वैशंपायन उवाच ॥

गमने कृतबुद्धिं तं पाण्डवं लोमशोऽब्रवीत् ।
लघुर्भव महाराज लघुः स्वैरं गमिष्यसि ॥ ०१८ ॥

युधिष्ठिर उवाच ॥

बिक्षाभुजो निवर्तन्तां ब्राह्मणा यतयश्च ये ।
ये चाप्यनुगताः पौरा राजभक्तिपुरस्कृताः ॥ ०१९ ॥

धृतराष्ट्रं महाराजमभिगच्छन्तु चैव ते ।
स दास्यति यथाकालमुचिता यस्य या भृतिः ॥ ०२० ॥

स चेद्यथोचितां वृत्तिं न दद्यान्मनुजेश्वरः ।
अस्मत्प्रियहितार्थाय पाञ्चाल्यो वः प्रदास्यति ॥ ०२१ ॥

वैशंपायन उवाच ॥

ततो भूयिष्ठशः पौरा गुरुभारसमाहिताः ।
विप्राश्च यतयो युक्ता जग्मुर्नागपुरं प्रति ॥ ०२२ ॥

तान्सर्वान्धर्मराजस्य प्रेम्णा राजाम्बिकासुतः ।
प्रतिजग्राह विधिवद्धनैश्च समतर्पयत् ॥ ०२३ ॥

ततः कुन्तीसुतो राजा लघुभिर्ब्राह्मणैः सह ।
लोमशेन च सुप्रीतस्त्रिरात्रं काम्यकेऽवसत् ॥ ०२४ ॥

---

# अध्याय ०९१

वैशंपायन उवाच ॥

ततः प्रयान्तं कौन्तेयं ब्राह्मणा वनवासिनः ।
अभिगम्य तदा राजन्निदं वचनमब्रुवन् ॥ ००१ ॥

राजंस्तीर्थानि गन्तासि पुण्यानि भ्रातृभिः सह ।
देवर्षिणा च सहितो लोमशेन महात्मना ॥ ००२ ॥

अस्मानपि महाराज नेतुमर्हसि पाण्डव ।
अस्माभिर्हि न शक्यानि त्वदृते तानि कौरव ॥ ००३ ॥

श्वापदैरुपसृष्टानि दुर्गाणि विषमाणि च ।
अगम्यानि नरैरल्पैस्तीर्थानि मनुजेश्वर ॥ ००४ ॥

भवन्तो भ्रातरः शूरा धनुर्धरवराः सदा ।
भवद्भिः पालिताः शूरैर्गच्छेम वयमप्युत ॥ ००५ ॥

भवत्प्रसादाद्धि वयं प्राप्नुयाम फलं शुभम् ।
तीर्थानां पृथिवीपाल व्रतानां च विशां पते ॥ ००६ ॥

तव वीर्यपरित्राताः शुद्धास्तीर्थपरिप्लुताः ।
भवेम धूतपाप्मानस्तीर्थसंदर्शनान्नृप ॥ ००७ ॥

भवानपि नरेन्द्रस्य कार्तवीर्यस्य भारत ।
अष्टकस्य च राजर्षेर्लोमपादस्य चैव ह ॥ ००८ ॥

भरतस्य च वीरस्य सार्वभौमस्य पार्थिव ।
ध्रुवं प्राप्स्यसि दुष्प्रापा.ण्ल्लोकांस्तीर्थपरिप्लुतः ॥ ००९ ॥

प्रभासादीनि तीर्थानि महेन्द्रादींश्च पर्वतान् ।
गङ्गाद्याः सरितश्चैव प्लक्षादींश्च वनस्पतीन् ॥ ०१० ॥

त्वया सह महीपाल द्रष्टुमिच्छामहे वयम् ॥ ०१० ॥

यदि ते ब्राह्मणेष्वस्ति काचित्प्रीतिर्जनाधिप ।
कुरु क्षिप्रं वचोऽस्माकं ततः श्रेयोऽभिपत्स्यसे ॥ ०११ ॥

तीर्थानि हि महाबाहो तपोविघ्नकरैः सदा ।
अनुकीर्णानि रक्षोभिस्तेभ्यो नस्त्रातुमर्हसि ॥ ०१२ ॥

तीर्थान्युक्तानि धौम्येन नारदेन च धीमता ।
यान्युवाच च देवर्षिर्लोमशः सुमहातपाः ॥ ०१३ ॥

विधिवत्तानि सर्वाणि पर्यटस्व नराधिप ।
धूतपाप्मा सहास्माभिर्लोमशेन च पालितः ॥ ०१४ ॥

स तथा पूज्यमानस्तैर्हर्षादश्रुपरिप्लुतः ।
भीमसेनादिभिर्वीरैर्भ्रातृभिः परिवारितः ॥ ०१५ ॥

बाढमित्यब्रवीत्सर्वांस्तानृषीन्पाण्डवर्षभः ॥ ०१५ ॥

लोमशं समनुज्ञाप्य धौम्यं चैव पुरोहितम् ।
ततः स पाण्डवश्रेष्ठो भ्रातृभिः सहितो वशी ॥ ०१६ ॥

द्रौपद्या चानवद्याङ्ग्या गमनाय मनो दधे ॥ ०१६ ॥

अथ व्यासो महाभागस्तथा नारदपर्वतौ ।
काम्यके पाण्डवं द्रष्टुं समाजग्मुर्मनीषिणः ॥ ०१७ ॥

तेषां युधिष्ठिरो राजा पूजां चक्रे यथाविधि ।
सत्कृतास्ते महाभागा युधिष्ठिरमथाब्रुवन् ॥ ०१८ ॥

युधिष्ठिर यमौ भीम मनसा कुरुतार्जवम् ।
मनसा कृतशौचा वै शुद्धास्तीर्थानि गच्छत ॥ ०१९ ॥

शरीरनियमं ह्याहुर्ब्राह्मणा मानुषं व्रतम् ।
मनोविशुद्धां बुद्धिं च दैवमाहुर्व्रतं द्विजाः ॥ ०२० ॥

मनो ह्यदुष्टं शूराणां पर्याप्तं वै नराधिप ।
मैत्रीं बुद्धिं समास्थाय शुद्धास्तीर्थानि गच्छत ॥ ०२१ ॥

ते यूयं मानसैः शुद्धाः शरीरनियमव्रतैः ।
दैवं व्रतं समास्थाय यथोक्तं फलमाप्स्यथ ॥ ०२२ ॥

ते तथेति प्रतिज्ञाय कृष्णया सह पाण्डवाः ।
कृतस्वस्त्ययनाः सर्वे मुनिभिर्दिव्यमानुषैः ॥ ०२३ ॥

लोमशस्योपसङ्गृह्य पादौ द्वैपायनस्य च ।
नारदस्य च राजेन्द्र देवर्षेः पर्वतस्य च ॥ ०२४ ॥

धौम्येन सहिता वीरास्तथान्यैर्वनवासिभिः ।

मार्गशीर्ष्यामतीतायां पुष्येण प्रययुस्ततः ॥ ०२५ ॥

कठिनानि समादाय चीराजिनजटाधराः ।
अभेद्यैः कवचैर्युक्तास्तीर्थान्यन्वचरंस्तदा ॥ ०२६ ॥

इन्द्रसेनादिभिर्भृत्यै रथैः परिचतुर्दशैः ।
महानसव्यापृतैश्च तथान्यैः परिचारकैः ॥ ०२७ ॥

सायुधा बद्धनिस्त्रिंशास्तूणवन्तः समार्गणाः ।
प्राङ्मुखाः प्रययुर्वीराः पाण्डवा जनमेजय ॥ ०२८ ॥

---

# अध्याय ०९२

युधिष्ठिर उवाच ॥

न वै निर्गुणमात्मानं मन्ये देवर्षिसत्तम ।
तथास्मि दुःखसंतप्तो यथा नान्यो महीपतिः ॥ ००१ ॥

परांश्च निर्गुणान्मन्ये न च धर्मरतानपि ।
ते च लोमश लोकेऽस्मिन्नृध्यन्ते केन केतुना ॥ ००२ ॥

लोमश उवाच ॥

नात्र दुःखं त्वया राजन्कार्यं पार्थ कथञ्चन ।
यदधर्मेण वर्धेरन्नधर्मरुचयो जनाः ॥ ००३ ॥

वर्धत्यधर्मेण नरस्ततो भद्राणि पश्यति ।
ततः सपत्नाञ्जयति समूलस्तु विनश्यति ॥ ००४ ॥

मया हि दृष्टा दैतेया दानवाश्च महीपते ।
वर्धमाना ह्यधर्मेण क्षयं चोपगताः पुनः ॥ ००५ ॥

पुरा देवयुगे चैव दृष्टं सर्वं मया विभो ।
अरोचयन्सुरा धर्मं धर्मं तत्यजिरेऽसुराः ॥ ००६ ॥

तीर्थानि देवा विविशुर्नाविशन्भारतासुराः ।
तानधर्मकृतो दर्पः पूर्वमेव समाविशत् ॥ ००७ ॥

दर्पान्मानः समभवन्मानात्क्रोधो व्यजायत ।
क्रोधादह्रीस्ततोऽलज्जा वृत्तं तेषां ततोऽनशत् ॥ ००८ ॥

तानलज्जान्गतह्रीकान्हीनवृत्तान्वृथाव्रतान् ।
क्षमा लक्ष्मीश्च धर्मश्च नचिरात्प्रजहुस्ततः ॥ ००९ ॥

लक्ष्मीस्तु देवानगमदलक्ष्मीरसुरान्नृप ॥ ००९ ॥

तानलक्ष्मीसमाविष्टान्दर्पोपहतचेतसः ।
दैतेयान्दानवांश्चैव कलिरप्याविशत्ततः ॥ ०१० ॥

तानलक्ष्मीसमाविष्टान्दानवान्कलिना तथा ।
दर्पाभिभूतान्कौन्तेय क्रियाहीनानचेतसः ॥ ०११ ॥

मानाभिभूतानचिराद्विनाशः प्रत्यपद्यत ।
निर्यशस्यास्ततो दैत्याः कृत्स्नशो विलयं गताः ॥ ०१२ ॥

देवास्तु सागरांश्चैव सरितश्च सरांसि च ।
अभ्यगच्छन्धर्मशीलाः पुण्यान्यायतनानि च ॥ ०१३ ॥

तपोभिः क्रतुभिर्दानैराशीर्वादैश्च पाण्डव ।

प्रजहुः सर्वपापानि श्रेयश्च प्रतिपेदिरे ॥ ०१४ ॥

एवं हि दानवन्तश्च क्रियावन्तश्च सर्वशः ।
तीर्थान्यगच्छन्विबुधास्तेनापुर्भूतिमुत्तमाम् ॥ ०१५ ॥

तथा त्वमपि राजेन्द्र स्नात्वा तीर्थेषु सानुजः ।
पुनर्वेत्स्यसि तां लक्ष्मीमेष पन्थाः सनातनः ॥ ०१६ ॥

यथैव हि नृगो राजा शिबिरौशीनरो यथा ।
भगीरथो वसुमना गयः पूरुः पुरूरवाः ॥ ०१७ ॥

चरमाणास्तपो नित्यं स्पर्शनादम्भसश्च ते ।
तीर्थाभिगमनात्पूता दर्शनाच्च महात्मनाम् ॥ ०१८ ॥

अलभन्त यशः पुण्यं धनानि च विशां पते ।
तथा त्वमपि राजेन्द्र लब्धासि विपुलां श्रियम् ॥ ०१९ ॥

यथा चेक्ष्वाकुरचरत्सपुत्रजनबान्धवः ।
मुचुकुन्दोऽथ मान्धाता मरुत्तश्च महीपतिः ॥ ०२० ॥

कीर्तिं पुण्यामविन्दन्त यथा देवास्तपोबलात् ।
देवर्षयश्च कार्त्स्न्येन तथा त्वमपि वेत्स्यसे ॥ ०२१ ॥

धार्तराष्ट्रास्तु दर्पेण मोहेन च वशीकृताः ।
नचिराद्विनशिष्यन्ति दैत्या इव न संशयः ॥ ०२२ ॥

# अगस्त्योपाख्यानम्

## अध्याय ०९३

वैशंपायन उवाच ॥

ते तथा सहिता वीरा वसन्तस्तत्र तत्र ह ।
क्रमेण पृथिवीपाल नैमिषारण्यमागताः ॥ ००१ ॥

ततस्तीर्थेषु पुण्येषु गोमत्याः पाण्डवा नृप ।
कृताभिषेकाः प्रददुर्गाश्च वित्तं च भारत ॥ ००२ ॥

तत्र देवान्पितृन्विप्रांस्तर्पयित्वा पुनः पुनः ।
कन्यातीर्थेऽश्वतीर्थे च गवां तीर्थे च कौरवाः ॥ ००३ ॥

वालकोट्यां वृषप्रस्थे गिरावुष्य च पाण्डवाः ।
बाहुदायां महीपाल चक्रुः सर्वेऽभिषेचनम् ॥ ००४ ॥

प्रयागे देवयजने देवानां पृथिवीपते ।
ऊषुराप्लुत्य गात्राणि तपश्चातस्थुरुत्तमम् ॥ ००५ ॥

गङ्गायमुनयोश्चैव सङ्गमे सत्यसङ्गराः ।
विपाप्मानो महात्मानो विप्रेभ्यः प्रददुर्वसु ॥ ००६ ॥

तपस्विजनजुष्टां च ततो वेदीं प्रजापतेः ।
जग्मुः पाण्डुसुता राजन्ब्राह्मणैः सह भारत ॥ ००७ ॥

तत्र ते न्यवसन्वीरास्तपश्चातस्थुरुत्तमम् ।
संतर्पयन्तः सततं वन्येन हविषा द्विजान् ॥ ००८ ॥

ततो महीधरं जग्मुर्धर्मज्ञेनाभिसत्कृतम् ।
राजर्षिणा पुण्यकृता गयेनानुपमद्युते ॥ ००९ ॥

सरो गयशिरो यत्र पुण्या चैव महानदी ।
ऋषिजुष्टं सुपुण्यं तत्तीर्थं ब्रह्मसरोत्तमम् ॥ ०१० ॥

अगस्त्यो भगवान्यत्र गतो वैवस्वतं प्रति ।
उवास च स्वयं यत्र धर्मो राजन्सनातनः ॥ ०११ ॥

सर्वासां सरितां चैव समुद्भेदो विशां पते ।
यत्र संनिहितो नित्यं महादेवः पिनाकधृक् ॥ ०१२ ॥

तत्र ते पाण्डवा वीराश्चातुर्मास्यैस्तदेजिरे ।
ऋषियज्ञेन महता यत्राक्षयवटो महान् ॥ ०१३ ॥

ब्राह्मणास्तत्र शतशः समाजग्मुस्तपोधनाः ।
चातुर्मास्येनायजन्त आर्षेण विधिना तदा ॥ ०१४ ॥

तत्र विद्यातपोनित्या ब्राह्मणा वेदपारगाः ।
कथाः प्रचक्रिरे पुण्याः सदसिस्था महात्मनाम् ॥ ०१५ ॥

तत्र विद्याव्रतस्नातः कौमारं व्रतमास्थितः ।
शमठोऽकथयद्राजन्नामूर्तरयसं गयम् ॥ ०१६ ॥

अमूर्तरयसः पुत्रो गयो राजर्षिसत्तमः ।
पुण्यानि यस्य कर्माणि तानि मे शृणु भारत ॥ ०१७ ॥

यस्य यज्ञो बभूवेह बह्वन्नो बहुदक्षिणः ।
यत्रान्नपर्वता राजञ्शतशोऽथ सहस्रशः ॥ ०१८ ॥

घृतकुल्याश्च दध्नश्च नद्यो बहुशतास्तथा ।

व्यञ्जनानां प्रवाहाश्च महार्हाणां सहस्रशः ॥ ०१९ ॥

अहन्यहनि चाप्येतद्याचतां संप्रदीयते ।
अन्यत्तु ब्राह्मणा राजन्भुञ्जतेऽन्नं सुसंस्कृतम् ॥ ०२० ॥

तत्र वै दक्षिणाकाले ब्रह्मघोषो दिवं गतः ।
न स्म प्रज्ञायते किञ्चिद्ब्रह्मशब्देन भारत ॥ ०२१ ॥

पुण्येन चरता राजन्भूर्दिशः खं नभस्तथा ।
आपूर्णमासीच्छब्देन तदप्यासीन्महाद्भुतम् ॥ ०२२ ॥

तत्र स्म गाथा गायन्ति मनुष्या भरतर्षभ ।
अन्नपानैः शुभैस्तृप्ता देशे देशे सुवर्चसः ॥ ०२३ ॥

गयस्य यज्ञे के त्वद्य प्राणिनो भोक्तुमीप्सवः ।
यत्र भोजनशिष्टस्य पर्वताः पञ्चविंशतिः ॥ ०२४ ॥

न स्म पूर्वे जनाश्चक्रुर्न करिष्यन्ति चापरे ।
गयो यदकरोद्यज्ञे राजर्षिरमितद्युतिः ॥ ०२५ ॥

कथं नु देवा हविषा गयेन परितर्पिताः ।
पुनः शक्ष्यन्त्युपादातुमन्यैर्दत्तानि कानिचित् ॥ ०२६ ॥

एवंविधाः सुबहवस्तस्य यज्ञे महात्मनः ।
बभूवुरस्य सरसः समीपे कुरुनन्दन ॥ ०२७ ॥

# अध्याय ०९४

वैशंपायन उवाच ॥

ततः संप्रस्थितो राजा कौन्तेयो भूरिदक्षिणः ।
अगस्त्याश्रममासाद्य दुर्जयायामुवास ह ॥ ००१ ॥

तत्र वै लोमशं राजा पप्रच्छ वदतां वरः ।
अगस्त्येनेह वातापिः किमर्थमुपशामितः ॥ ००२ ॥

आसीद्वा किंप्रभावश्च स दैत्यो मानवान्तकः ।
किमर्थं चोद्गतो मन्युरगस्त्यस्य महात्मनः ॥ ००३ ॥

लोमश उवाच ॥

इल्वलो नाम दैतेय आसीत्कौरवनन्दन ।
मणिमत्यां पुरि पुरा वातापिस्तस्य चानुजः ॥ ००४ ॥

स ब्राह्मणं तपोयुक्तमुवाच दितिनन्दनः ।
पुत्रं मे भगवानेकमिन्द्रतुल्यं प्रयच्छतु ॥ ००५ ॥

तस्मै स ब्राह्मणो नादात्पुत्रं वासवसंमितम् ।
चुक्रोध सोऽसुरस्तस्य ब्राह्मणस्य ततो भृशम् ॥ ००६ ॥

समाह्वयति यं वाचा गतं वैवस्वतक्षयम् ।
स पुनर्देहमास्थाय जीवन्स्म प्रतिदृश्यते ॥ ००७ ॥

ततो वातापिमसुरं छागं कृत्वा सुसंस्कृतम् ।
तं ब्राह्मणं भोजयित्वा पुनरेव समाह्वयत् ॥ ००८ ॥

तस्य पार्श्वं विनिर्भिद्य ब्राह्मणस्य महासुरः ।
वातापिः प्रहसन्राजन्निश्चक्राम विशां पते ॥ ००९ ॥

एवं स ब्राह्मणान्राजन्भोजयित्वा पुनः पुनः ।
हिंसयामास दैतेय इल्वलो दुष्टचेतनः ॥ ०१० ॥

अगस्त्यश्चापि भगवानेतस्मिन्काल एव तु ।
पितॄन्ददर्श गर्ते वै लम्बमानानधोमुखान् ॥ ०११ ॥

सोऽपृच्छल्लम्बमानांस्तान्भवन्त इह किंपराः ।
संतानहेतोरिति ते तमूचुर्ब्रह्मवादिनः ॥ ०१२ ॥

ते तस्मै कथयामासुर्वयं ते पितरः स्वकाः ।
गर्तमेतमनुप्राप्ता लम्बामः प्रसवार्थिनः ॥ ०१३ ॥

यदि नो जनयेथास्त्वमगस्त्यापत्यमुत्तमम् ।
स्यान्नोऽस्मान्निरयान्मोक्षस्त्वं च पुत्राप्नुया गतिम् ॥ ०१४ ॥

स तानुवाच तेजस्वी सत्यधर्मपरायणः ।
करिष्ये पितरः कामं व्येतु वो मानसो ज्वरः ॥ ०१५ ॥

ततः प्रसवसंतानं चिन्तयन्भगवानृषिः ।
आत्मनः प्रसवस्यार्थे नापश्यत्सदृशीं स्त्रियम् ॥ ०१६ ॥

स तस्य तस्य सत्त्वस्य तत्तदङ्गमनुत्तमम् ।
संभृत्य तत्समैरङ्गैर्निर्ममे स्त्रियमुत्तमाम् ॥ ०१७ ॥

स तां विदर्भराजाय पुत्रकामाय ताम्यते ।
निर्मितामात्मनोऽर्थाय मुनिः प्रादान्महातपाः ॥ ०१८ ॥

सा तत्र जज्ञे सुभगा विद्युत्सौदामिनी यथा ।
विभ्राजमाना वपुसा व्यवर्धत शुभानना ॥ ०१९ ॥

जातमात्रां च तां दृष्ट्वा वैदर्भः पृथिवीपतिः ।
प्रहर्षेण द्विजातिभ्यो न्यवेदयत भारत ॥ ०२० ॥

अभ्यनन्दन्त तां सर्वे ब्राह्मणा वसुधाधिप ।
लोपामुद्रेति तस्याश्च चक्रिरे नाम ते द्विजाः ॥ ०२१ ॥

ववृधे सा महाराज बिभ्रती रूपमुत्तमम् ।
अप्स्विवोत्पलिनी शीघ्रमग्नेरिव शिखा शुभा ॥ ०२२ ॥

तां यौवनस्थां राजेन्द्र शतं कन्याः स्वलङ्कृताः ।
दाशीशतं च कल्याणीमुपतस्थुर्वशानुगाः ॥ ०२३ ॥

सा स्म दासीशतवृता मध्ये कन्याशतस्य च ।
आस्ते तेजस्विनी कन्या रोहिणीव दिवि प्रभो ॥ ०२४ ॥

यौवनस्थामपि च तां शीलाचारसमन्विताम् ।
न वव्रे पुरुषः कश्चिद्भयात्तस्य महात्मनः ॥ ०२५ ॥

सा तु सत्यवती कन्या रूपेणाप्सरसोऽप्यति ।
तोषयामास पितरं शीलेन स्वजनं तथा ॥ ०२६ ॥

वैदर्भीं तु तथायुक्तां युवतीं प्रेक्ष्य वै पिता ।
मनसा चिन्तयामास कस्मै दद्यां सुतामिति ॥ ०२७ ॥

---

# अध्याय ०९५

लोमश उवाच ॥

यदा त्वमन्यतागस्त्यो गार्हस्थ्ये तां क्षमामिति ।
तदाभिगम्य प्रोवाच वैदर्भं पृथिवीपतिम्  ॥ ००१  ॥

राजन्निवेशे बुद्धिर्मे वर्तते पुत्रकारणात् ।
वरये त्वां महीपाल लोपामुद्रां प्रयच्छ मे  ॥ ००२  ॥

एवमुक्तः स मुनिना महीपालो विचेतनः ।
प्रत्याख्यानाय चाशक्तः प्रदातुमपि नैच्छत  ॥ ००३  ॥

ततः स भार्यामभ्येत्य प्रोवाच पृथिवीपतिः ।
महर्षिर्वीर्यवानेष क्रुद्धः शापाग्निना दहेत्  ॥ ००४  ॥

तं तथा दुःखितं दृष्ट्वा सभार्यं पृथिवीपतिम् ।
लोपामुद्राभिगम्येदं काले वचनमब्रवीत्  ॥ ००५  ॥

न मत्कृते महीपाल पीडामभ्येतुमर्हसि ।
प्रयच्छ मामगस्त्याय त्राह्यात्मानं मया पितः  ॥ ००६  ॥

दुहितुर्वचनाद्राजा सोऽगस्त्याय महात्मने ।
लोपामुद्रां ततः प्रादाद्विधिपूर्वं विशां पते  ॥ ००७  ॥

प्राप्य भार्यामगस्त्यस्तु लोपामुद्रामभाषत ।
महार्हाण्युत्सृजैतानि वासांस्याभरणानि च  ॥ ००८  ॥

ततः सा दर्शनीयानि महार्हाणि तनूनि च ।
समुत्ससर्ज रम्भोरूर्वसनान्यायतेक्षणा  ॥ ००९  ॥

ततश्चीराणि जग्राह वल्कलान्यजिनानि च ।
समानव्रतचर्या च बभूवायतलोचना  ॥ ०१०  ॥

गङ्गाद्वारमथागम्य भगवानृषिसत्तमः ।

उग्रमातिष्ठत तपः सह पत्न्यानुकूलया ॥ ०११ ॥

सा प्रीत्या बहुमानाच्च पतिं पर्यचरत्तदा ।
अगस्त्यश्च परां प्रीतिं भार्यायामकरोत्प्रभुः ॥ ०१२ ॥

ततो बहुतिथे काले लोपामुद्रां विशां पते ।
तपसा द्योतितां स्नातां ददर्श भगवानृषिः ॥ ०१३ ॥

स तस्याः परिचारेण शौचेन च दमेन च ।
श्रिया रूपेण च प्रीतो मैथुनायाजुहाव ताम् ॥ ०१४ ॥

ततः सा प्राञ्जलिर्भूत्वा लज्जमानेव भामिनी ।
तदा सप्रणयं वाक्यं भगवन्तमथाब्रवीत् ॥ ०१५ ॥

असंशयं प्रजाहेतोर्भार्यां पतिरविन्दत ।
या तु त्वयि मम प्रीतिस्तामृषे कर्तुमर्हसि ॥ ०१६ ॥

यथा पितुर्गृहे विप्र प्रासादे शयनं मम ।
तथाविधे त्वं शयने मामुपैतुमिहार्हसि ॥ ०१७ ॥

इच्छामि त्वां स्रग्विणं च भूषणैश्च विभूषितम् ।
उपसर्तुं यथाकामं दिव्याभरणभूषिता ॥ ०१८ ॥

अगस्त्य उवाच ॥

न वै धनानि विद्यन्ते लोपामुद्रे तथा मम ।
यथाविधानि कल्याणि पितुस्तव सुमध्यमे ॥ ०१९ ॥

लोपामुद्रोवाच ॥

ईशोऽसि तपसा सर्वं समाहर्तुमिहेश्वर ।

क्षणेन जीवलोके यद्वसु किञ्चन विद्यते ॥ ०२० ॥

अगस्त्य उवाच ॥

एवमेतद्यथात्थ त्वं तपोव्ययकरं तु मे ।
यथा तु मे न नश्येत तपस्तन्मां प्रचोदय ॥ ०२१ ॥

लोपामुद्रोवाच ॥

अल्पावशिष्टः कालोऽयमृतौ मम तपोधन ।
न चान्यथाहमिच्छामि त्वामुपैतुं कथञ्चन ॥ ०२२ ॥

न चापि धर्ममिच्छामि विलोप्तुं ते तपोधन ।
एतत्तु मे यथाकामं संपादयितुमर्हसि ॥ ०२३ ॥

अगस्त्य उवाच ॥

यद्येष कामः सुभगे तव बुद्ध्या विनिश्चितः ।
हन्त गच्छाम्यहं भद्रे चर काममिह स्थिता ॥ ०२४ ॥

---

# अध्याय ०९६

लोमश उवाच ॥

ततो जगाम कौरव्य सोऽगस्त्यो भिक्षितुं वसु ।
श्रुतर्वाणं महीपालं यं वेदाभ्यधिकं नृपैः ॥ ००१ ॥

स विदित्वा तु नृपतिः कुम्भयोनिमुपागमत् ।

विषयान्ते सहामात्यः प्रत्यगृह्णात्सुसत्कृतम्  ॥ ००२  ॥

तस्मै चार्घ्यं यथान्यायमानीय पृथिवीपतिः ।
प्राञ्जलिः प्रयतो भूत्वा पप्रच्छागमनेऽर्थिताम्  ॥ ००३  ॥

अगस्त्य उवाच  ॥

वित्तार्थिनमनुप्राप्तं विद्धि मां पृथिवीपते ।
यथाशक्त्यविहिंस्यान्यान्संविभागं प्रयच्छ मे  ॥ ००४  ॥

लोमश उवाच  ॥

तत आयव्ययौ पूर्णौ तस्मै राजा न्यवेदयत् ।
अतो विद्वन्नुपादत्स्व यदत्र वसु मन्यसे  ॥ ००५  ॥

तत आयव्ययौ दृष्ट्वा समौ सममतिर्द्विजः ।
सर्वथा प्राणिनां पीडामुपादानादमन्यत  ॥ ००६  ॥

स श्रुतर्वाणमादाय वध्र्यश्वमगमत्ततः ।
स च तौ विषयस्यान्ते प्रत्यगृह्णाद्यथाविधि  ॥ ००७  ॥

तयोरर्घ्यं च पाद्यं च वध्र्यश्वः प्रत्यवेदयत् ।
अनुज्ञाप्य च पप्रच्छ प्रयोजनमुपक्रमे  ॥ ००८  ॥

अगस्त्य उवाच  ॥

वित्तकामाविह प्राप्तौ विद्ध्यावां पृथिवीपते ।
यथाशक्त्यविहिंस्यान्यान्संविभागं प्रयच्छ नौ  ॥ ००९  ॥

लोमश उवाच  ॥

तत आयव्ययौ पूर्णौ ताभ्यां राजा न्यवेदयत् ।
ततो ज्ञात्वा समादत्तां यदत्र व्यतिरिच्यते ॥ ०१० ॥

तत आयव्ययौ दृष्ट्वा समौ सममतिर्द्विजः ।
सर्वथा प्राणिनां पीडामुपादानादमन्यत ॥ ०११ ॥

पौरुकुत्सं ततो जग्मुस्त्रसदस्युं महाधनम् ।
अगस्त्यश्च श्रुतर्वा च वध्र्यश्वश्च महीपतिः ॥ ०१२ ॥

त्रसदस्युश्च तान्सर्वान्प्रत्यगृह्णाद्यथाविधि ।
अभिगम्य महाराज विषयान्ते सवाहनः ॥ ०१३ ॥

अर्चयित्वा यथान्यायमिक्ष्वाकू राजसत्तमः ।
समाश्वस्तांस्ततोऽपृच्छत्प्रयोजनमुपक्रमे ॥ ०१४ ॥

अगस्त्य उवाच ॥

वित्तकामानिह प्राप्तान्विद्धि नः पृथिवीपते ।
यथाशक्त्यविहिंस्यान्यान्संविभागं प्रयच्छ नः ॥ ०१५ ॥

लोमश उवाच ॥

तत आयव्ययौ पूर्णौ तेषां राजा न्यवेदयत् ।
अतो ज्ञात्वा समादद्ध्वं यदत्र व्यतिरिच्यते ॥ ०१६ ॥

तत आयव्ययौ दृष्ट्वा समौ सममतिर्द्विजः ।
सर्वथा प्राणिनां पीडामुपादानादमन्यत ॥ ०१७ ॥

ततः सर्वे समेत्याथ ते नृपास्तं महामुनिम् ।
इदमूचुर्महाराज समवेक्ष्य परस्परम् ॥ ०१८ ॥

अयं वै दानवो ब्रह्मन्निल्वलो वसुमान्भुवि ।
तमभिक्रम्य सर्वेऽद्य वयं याचामहे वसु ॥ ०१९ ॥

तेषां तदासीद्रुचितमिल्वलस्योपभिक्षणम् ।
ततस्ते सहिता राजन्निल्वलं समुपाद्रवन् ॥ ०२० ॥

---

# अध्याय ०९७

लोमश उवाच ॥

इल्वलस्तान्विदित्वा तु महर्षिसहितान्नृपान् ।
उपस्थितान्सहामात्यो विषयान्तेऽभ्यपूजयत् ॥ ००१ ॥

तेषां ततोऽसुरश्रेष्ठ आतिथ्यमकरोत्तदा ।
स संस्कृतेन कौरव्य भ्रात्रा वातापिना किल ॥ ००२ ॥

ततो राजर्षयः सर्वे विषण्णा गतचेतसः ।
वातापिं संस्कृतं दृष्ट्वा मेषभूतं महासुरम् ॥ ००३ ॥

अथाब्रवीदगस्त्यस्तान्राजर्षीनृषिसत्तमः ।
विषादो वो न कर्तव्यो अहं भोक्ष्ये महासुरम् ॥ ००४ ॥

धुर्यासनमथासाद्य निषसाद महामुनिः ।
तं पर्यवेषद्दैत्येन्द्र इल्वलः प्रहसन्निव ॥ ००५ ॥

अगस्त्य एव कृत्स्नं तु वातापिं बुभुजे ततः ।
भुक्तवत्यसुरोऽऽह्वानमकरोत्तस्य इल्वलः ॥ ००६ ॥

ततो वायुः प्रादुरभूदगस्त्यस्य महात्मनः ।
इल्वलश्च विषण्णोऽभूद्दृष्ट्वा जीर्णं महासुरम्  ॥ ००७  ॥

प्राञ्जलिश्च सहामात्यैरिदं वचनमब्रवीत् ।
किमर्थमुपयाताः स्थ ब्रूत किं करवाणि वः  ॥ ००८  ॥

प्रत्युवाच ततोऽगस्त्यः प्रहसन्निल्वलं तदा ।
ईशं ह्यसुर विद्मस्त्वां वयं सर्वे धनेश्वरम्  ॥ ००९  ॥

इमे च नातिधनिनो धनार्थश्च महान्मम ।
यथाशक्त्यविहिंस्यान्यान्संविभागं प्रयच्छ नः  ॥ ०१०  ॥

ततोऽभिवाद्य तमृषिमिल्वलो वाक्यमब्रवीत् ।
दित्सितं यदि वेत्सि त्वं ततो दास्यामि ते वसु  ॥ ०११  ॥

अगस्त्य उवाच  ॥

गवां दश सहस्राणि राज्ञामेकैकशोऽसुर ।
तावदेव सुवर्णस्य दित्सितं ते महासुर  ॥ ०१२  ॥

मह्यं ततो वै द्विगुणं रथश्चैव हिरण्मयः ।
मनोजवौ वाजिनौ च दित्सितं ते महासुर  ॥ ०१३  ॥

जिज्ञास्यतां रथः सद्यो व्यक्तमेष हिरण्मयः  ॥ ०१३  ॥

लोमश उवाच  ॥

जिज्ञास्यमानः स रथः कौन्तेयासीद्धिरण्मयः ।
ततः प्रव्यथितो दैत्यो ददावभ्यधिकं वसु  ॥ ०१४  ॥

विवाजश्च सुवाजश्च तस्मिन्युक्तौ रथे हयौ ।
ऊहतुस्तौ वसून्याशु तान्यगस्त्याश्रमं प्रति ॥ ०१५ ॥

सर्वान्राज्ञः सहागस्त्यान्निमेषादिव भारत ॥ ०१५ ॥

अगस्त्येनाभ्यनुज्ञाता जग्मू राजर्षयस्तदा ।
कृतवांश्च मुनिः सर्वं लोपामुद्राचिकीर्षितम् ॥ ०१६ ॥

लोपामुद्रोवाच ॥

कृतवानसि तत्सर्वं भगवन्मम काङ्क्षितम् ।
उत्पादय सकृन्मह्यमपत्यं वीर्यवत्तरम् ॥ ०१७ ॥

अगस्त्य उवाच ॥

तुष्टोऽहमस्मि कल्याणि तव वृत्तेन शोभने ।
विचारणामपत्ये तु तव वक्ष्यामि तां शृणु ॥ ०१८ ॥

सहस्रं तेऽस्तु पुत्राणां शतं वा दशसंमितम् ।
दश वा शततुल्याः स्युरेको वापि सहस्रवत् ॥ ०१९ ॥

लोपामुद्रोवाच ॥

सहस्रसंमितः पुत्र एको मेऽस्तु तपोधन ।
एको हि बहुभिः श्रेयान्विद्वान्साधुरसाधुभिः ॥ ०२० ॥

लोमश उवाच ॥

स तथेति प्रतिज्ञाय तया समभवन्मुनिः ।
समये समशीलिन्या श्रद्धावाञ्श्रद्दधानया ॥ ०२१ ॥

तत आधाय गर्भं तमगमद्वनमेव सः ।
तस्मिन्वनगते गर्भो ववृधे सप्त शारदान् ॥ ०२२ ॥

सप्तमेऽब्दे गते चापि प्राच्यवत्स महाकविः ।
ज्वलन्निव प्रभावेन दृढस्युर्नाम भारत ॥ ०२३ ॥

साङ्गोपनिषदान्वेदाञ्जपन्नेव महायशाः ॥ ०२३ ॥

तस्य पुत्रोऽभवदृषेः स तेजस्वी महानृषिः ।
स बाल एव तेजस्वी पितुस्तस्य निवेशने ॥ ०२४ ॥

इध्मानां भारमाजह्रे इध्मवाहस्ततोऽभवत् ॥ ०२४ ॥

तथायुक्तं च तं दृष्ट्वा मुमुदे स मुनिस्तदा ।
लेभिरे पितरश्चास्य लोकान्राजन्यथेप्सितान् ॥ ०२५ ॥

अगस्त्यस्याश्रमः ख्यातः सर्वर्तुकुसुमान्वितः ।
प्राह्रादिरेवं वातापिरगस्त्येन विनाशितः ॥ ०२६ ॥

तस्यायमाश्रमो राजन्रमणीयो गुणैर्युतः ।
एषा भागीरथी पुण्या यथेष्टमवगाह्यताम् ॥ ०२७ ॥

---

# अध्याय ०९८

युधिष्ठिर उवाच ॥

भूय एवाहमिच्छामि महर्षेस्तस्य धीमतः ।
कर्मणां विस्तरं श्रोतुमगस्त्यस्य द्विजोत्तम ॥ ००१ ॥

लोमश उवाच ॥

श्रृणु राजन्कथां दिव्यामद्भुतामतिमानुषीम् ।
अगस्त्यस्य महाराज प्रभावममितात्मनः ॥ ००२ ॥

आसन्कृतयुगे घोरा दानवा युद्धदुर्मदाः ।
कालेया इति विख्याता गणाः परमदारुणाः ॥ ००३ ॥

ते तु वृत्रं समाश्रित्य नानाप्रहरणोद्यताः ।
समन्तात्पर्यधावन्त महेन्द्रप्रमुखान्सुरान् ॥ ००४ ॥

ततो वृत्रवधे यत्नमकुर्वंस्त्रिदशाः पुरा ।
पुरंदरं पुरस्कृत्य ब्रह्माणमुपतस्थिरे ॥ ००५ ॥

कृताञ्जलींस्तु तान्सर्वान्परमेष्ठी उवाच ह ।
विदितं मे सुराः सर्वं यद्वः कार्यं चिकीर्षितम् ॥ ००६ ॥

तमुपायं प्रवक्ष्यामि यथा वृत्रं वधिष्यथ ।
दधीच इति विख्यातो महानृषिरुदारधीः ॥ ००७ ॥

तं गत्वा सहिताः सर्वे वरं वै संप्रयाचत ।
स वो दास्यति धर्मात्मा सुप्रीतेनान्तरात्मना ॥ ००८ ॥

स वाच्यः सहितैः सर्वैर्भवद्भिर्जयकाङ्क्षिभिः ।
स्वान्यस्थीनि प्रयच्छेति त्रैलोक्यस्य हिताय वै ॥ ००९ ॥

स शरीरं समुत्सृज्य स्वान्यस्थीनि प्रदास्यति ॥ ००९ ॥

तस्यास्थिभिर्महाघोरं वज्रं संभ्रियतां दृढम् ।
महच्छत्रुहणं तीक्ष्णं षडश्रं भीमनिस्वनम् ॥ ०१० ॥

तेन वज्रेण वै वृत्रं वधिष्यति शतक्रतुः ।
एतद्वः सर्वमाख्यातं तस्माच्छीघ्रं विधीयताम् ॥ ०११ ॥

एवमुक्तास्ततो देवा अनुज्ञाप्य पितामहम् ।
नारायणं पुरस्कृत्य दधीचस्याश्रमं ययुः ॥ ०१२ ॥

सरस्वत्याः परे पारे नानाद्रुमलतावृतम् ।
षट्पदोद्गीतनिनदैर्विघुष्टं सामगैरिव ॥ ०१३ ॥

पुंस्कोकिलरवोन्मिश्रं जीवञ्जीवकनादितम् ॥ ०१३ ॥

महिषैश्च वराहैश्च सृमरैश्चमरैरपि ।
तत्र तत्रानुचरितं शार्दूलभयवर्जितैः ॥ ०१४ ॥

करेणुभिर्वारणैश्च प्रभिन्नकरटामुखैः ।
सरोऽवगाढैः क्रीडद्भिः समन्तादनुनादितम् ॥ ०१५ ॥

सिंहव्याघ्रैर्महानादान्नदद्भिरनुनादितम् ।
अपरैश्चापि संलीनैर्गुहाकन्दरवासिभिः ॥ ०१६ ॥

तेषु तेष्ववकाशेषु शोभितं सुमनोरमम् ।
त्रिविष्टपसमप्रख्यं दधीचाश्रममागमन् ॥ ०१७ ॥

तत्रापश्यन्दधीचं ते दिवाकरसमद्युतिम् ।
जाज्वल्यमानं वपुषा यथा लक्ष्म्या पितामहम् ॥ ०१८ ॥

तस्य पादौ सुरा राजन्नभिवाद्य प्रणम्य च ।
अयाचन्त वरं सर्वे यथोक्तं परमेष्ठिना ॥ ०१९ ॥

ततो दधीचः परमप्रतीतः ; सुरोत्तमांस्तानिदमभ्युवाच ।

करोमि यद्वो हितमद्य देवाः ; स्वं चापि देहं त्वहमुत्सृजामि ॥ ०२० ॥

स एवमुक्त्वा द्विपदां वरिष्ठः ; प्राणान्वशी स्वान्सहसोत्ससर्ज ।
ततः सुरास्ते जगृहुः परासो ;रस्थीनि तस्याथ यथोपदेशम् ॥ ०२१ ॥

प्रहृष्टरूपाश्च जयाय देवा ;स्त्वष्टारमागम्य तमर्थमूचुः ।
त्वष्टा तु तेषां वचनं निशम्य ; प्रहृष्टरूपः प्रयतः प्रयत्नात् ॥ ०२२ ॥

चकार वज्रं भृशमुग्ररूपं ; कृत्वा च शक्रं स उवाच हृष्टः ।
अनेन वज्रप्रवरेण देव ; भस्मीकुरुष्वाद्य सुरारिमुग्रम् ॥ ०२३ ॥

ततो हतारिः सगणः सुखं वै ; प्रशाधि कृत्स्नं त्रिदिवं दिविष्ठः ।
त्वष्ट्रा तथोक्तः स पुरंदरस्तु ; वज्रं प्रहृष्टः प्रयतोऽभ्यगृह्णात् ॥ ०२४ ॥

---

# अध्याय ०९९

लोमश उवाच ॥

ततः स वज्री बलिभिर्दैवतैरभिरक्षितः ।
आससाद ततो वृत्रं स्थितमावृत्य रोदसी ॥ ००१ ॥

कालकेयैर्महाकायैः समन्तादभिरक्षितम् ।
समुद्यतप्रहरणैः सशृङ्गैरिव पर्वतैः ॥ ००२ ॥

ततो युद्धं समभवद्देवानां सह दानवैः ।
मुहूर्तं भरतश्रेष्ठ लोकत्रासकरं महत् ॥ ००३ ॥

उद्यतप्रतिपिष्टानां खड्गानां वीरबाहुभिः ।

आसीत्सुतुमुलः शब्दः शरीरेष्वभिपात्यताम् ॥ ००४ ॥

शिरोभिः प्रपतद्भिश्च अन्तरिक्षान्महीतलम् ।
तालैरिव महीपाल वृन्ताद्भ्रष्टैरदृश्यत ॥ ००५ ॥

ते हेमकवचा भूत्वा कालेयाः परिघायुधाः ।
त्रिदशानभ्यवर्तन्त दावदग्धा इवाद्रयः ॥ ००६ ॥

तेषां वेगवतां वेगं सहितानां प्रधावताम् ।
न शेकुस्त्रिदशाः सोढुं ते भग्नाः प्राद्रवन्भयात् ॥ ००७ ॥

तान्दृष्ट्वा द्रवतो भीतान्सहस्राक्षः पुरंदरः ।
वृत्रे विवर्धमाने च कश्मलं महदाविशत् ॥ ००८ ॥

तं शक्रं कश्मलाविष्टं दृष्ट्वा विष्णुः सनातनः ।
स्वतेजो व्यदधाच्छक्रे बलमस्य विवर्धयन् ॥ ००९ ॥

विष्णुनाप्यायितं शक्रं दृष्ट्वा देवगणास्ततः ।
स्वं स्वं तेजः समादध्युस्तथा ब्रह्मर्षयोऽमलाः ॥ ०१० ॥

स समाप्यायितः शक्रो विष्णुना दैवतैः सह ।
ऋषिभिश्च महाभागैर्बलवान्समपद्यत ॥ ०११ ॥

ज्ञात्वा बलस्थं त्रिदशाधिपं तु ; ननाद वृत्रो महतो निनादान् ।
तस्य प्रणादेन धरा दिशश्च ; खं द्यौर्नगाश्चापि चचाल सर्वम् ॥ ०१२ ॥

ततो महेन्द्रः परमाभितप्तः ; श्रुत्वा रवं घोररूपं महान्तम् ।
भये निमग्नस्त्वरितं मुमोच ; वज्रं महत्तस्य वधाय राजन् ॥ ०१३ ॥

स शक्रवज्राभिहतः पपात ; महासुरः काञ्चनमाल्यधारी ।
यथा महाञ्शैलवरः पुरस्ता ;त्स मन्दरो विष्णुकरात्प्रमुक्तः ॥ ०१४ ॥

तस्मिन्हते दैत्यवरे भयार्तः ; शक्रः पदुद्राव सरः प्रवेष्टुम् ।
वज्रं न मेने स्वकरात्प्रमुक्तं ; वृत्रं हतं चापि भयान्न मेने ॥ ०१५ ॥

सर्वे च देवा मुदिताः प्रहृष्टा ; महर्षयश्चेन्द्रमभिष्टुवन्तः ।
सर्वांश्च दैत्यांस्त्वरिताः समेत्य ; जघ्नुः सुरा वृत्रवधाभितप्तान् ॥ ०१६ ॥

ते वध्यमानास्त्रिदशैस्तदानीं ; समुद्रमेवाविविशुर्भयार्ताः ।
प्रविश्य चैवोदधिमप्रमेयं ; झषाकुलं रत्नसमाकुलं च ॥ ०१७ ॥

तदा स्म मन्त्रं सहिताः प्रचक्रु ;स्त्रैलोक्यनाशार्थमभिस्मयन्तः ।
तत्र स्म केचिन्मतिनिश्चयज्ञा ;स्तांस्तानुपायाननुवर्णयन्ति ॥ ०१८ ॥

तेषां तु तत्र क्रमकालयोगा ;द्घोरा मतिश्चिन्तयतां बभूव ।
ये सन्ति विद्यातपसोपपन्ना ;स्तेषां विनाशः प्रथमं तु कार्यः ॥ ०१९ ॥

लोका हि सर्वे तपसा ध्रियन्ते ; तस्मात्त्वरध्वं तपसः क्षयाय ।
ये सन्ति केचिद्धि वसुंधरायां ; तपस्विनो धर्मविदश्च तज्ज्ञाः ॥ ०२० ॥

तेषां वधः क्रियतां क्षिप्रमेव ; तेषु प्रनष्टेषु जगत्प्रनष्टम् ॥ ०२० ॥

एवं हि सर्वे गतबुद्धिभावा ; जगद्विनाशे परमप्रहृष्टाः ।
दुर्गं समाश्रित्य महोर्मिमन्तं ; रत्नाकरं वरुणस्यालयं स्म ॥ ०२१ ॥

---

# अध्याय १००

लोमश उवाच ॥

समुद्रं ते समाश्रित्य वारुणं निधिमम्भसाम् ।
कालेयाः संप्रवर्तन्त त्रैलोक्यस्य विनाशने ॥ ००१ ॥

ते रात्रौ समभिक्रुद्धा भक्षयन्ति सदा मुनीन् ।
आश्रमेषु च ये सन्ति पुन्येष्वायतनेषु च ॥ ००२ ॥

वसिष्ठस्याश्रमे विप्रा भक्षितास्तैर्दुरात्मभिः ।
अशीतिशतमष्टौ च नव चान्ये तपस्विनः ॥ ००३ ॥

च्यवनस्याश्रमं गत्वा पुण्यं द्विजनिषेवितम् ।
फलमूलाशनानां हि मुनीनां भक्षितं शतम् ॥ ००४ ॥

एवं रात्रौ स्म कुर्वन्ति विविशुश्चार्णवं दिवा ।
भरद्वाजाश्रमे चैव नियता ब्रह्मचारिणः ॥ ००५ ॥

वाय्वाहाराम्बुभक्षाश्च विंशतिः संनिपातिताः ॥ ००५ ॥

एवं क्रमेण सर्वांस्तानाश्रमान्दानवास्तदा ।
निशायां परिधावन्ति मत्ता भुजबलाश्रयात् ॥ ००६ ॥

कालोपसृष्टाः कालेया घ्नन्तो द्विजगणान्बहून् ॥ ००६ ॥

न चैनानन्वबुध्यन्त मनुजा मनुजोत्तम ।
एवं प्रवृत्तान्दैत्यांस्तांस्तापसेषु तपस्विषु ॥ ००७ ॥

प्रभाते समदृश्यन्त नियताहारकर्शिताः ।
महीतलस्था मुनयः शरीरैर्गतजीवितैः ॥ ००८ ॥

क्षीणमांसैर्विरुधिरैर्विमज्जान्त्रैर्विसंधिभिः ।
आकीर्णैराचिता भूमिः शङ्खानामिव राशिभिः ॥ ००९ ॥

कलशैर्विप्रविद्धैश्च स्रुवैर्भग्नैस्तथैव च ।
विकीर्णैरग्निहोत्रैश्च भूर्बभूव समावृता ॥ ०१० ॥

निःस्वाध्यायवषट्कारं नष्टयज्ञोत्सवक्रियम् ।
जगदासीन्निरुत्साहं कालेयभयपीडितम् ॥ ०११ ॥

एवं प्रक्षीयमाणाश्च मानवा मनुजेश्वर ।
आत्मत्राणपरा भीताः प्राद्रवन्त दिशो भयात् ॥ ०१२ ॥

केचिद्गुहाः प्रविविशुर्निर्झरांश्चापरे श्रिताः ।
अपरे मरणोद्विग्ना भयात्प्रानान्समुत्सृजन् ॥ ०१३ ॥

केचिदत्र महेष्वासाः शूराः परमदर्पिताः ।
मार्गमाणाः परं यत्नं दानवानां प्रचक्रिरे ॥ ०१४ ॥

न चैतानधिजग्मुस्ते समुद्रं समुपाश्रितान् ।
श्रमं जग्मुश्च परममाजग्मुः क्षयमेव च ॥ ०१५ ॥

जगत्युपशमं याते नष्टयज्ञोत्सवक्रिये ।
आजग्मुः परमामार्तिं त्रिदशा मनुजेश्वर ॥ ०१६ ॥

समेत्य समहेन्द्राश्च भयान्मन्त्रं प्रचक्रिरे ।
नारायणं पुरस्कृत्य वैकुण्ठमपराजितम् ॥ ०१७ ॥

ततो देवाः समेतास्ते तदोचुर्मधुसूदनम् ।
त्वं नः स्रष्टा च पाता च भर्ता च जगतः प्रभो ॥ ०१८ ॥

त्वया सृष्टमिदं सर्वं यच्चेङ्गं यच्च नेङ्गति ॥ ०१८ ॥

त्वया भूमिः पुरा नष्टा समुद्रात्पुष्करेक्षण ।

वाराहं रूपमास्थाय जगदर्थे समुद्धृता ॥ ०१९ ॥

आदिदैत्यो महावीर्यो हिरण्यकशिपुस्त्वया ।
नारसिंहं वपुः कृत्वा सूदितः पुरुषोत्तम ॥ ०२० ॥

अवध्यः सर्वभूतानां बलिश्चापि महासुरः ।
वामनं वपुराश्रित्य त्रैलोक्याद्भ्रंशितस्त्वया ॥ ०२१ ॥

असुरश्च महेष्वासो जम्भ इत्यभिविश्रुतः ।
यज्ञक्षोभकरः क्रूरस्त्वयैव विनिपातितः ॥ ०२२ ॥

एवमादीनि कर्माणि येषां संख्या न विद्यते ।
अस्माकं भयभीतानां त्वं गतिर्मधुसूदन ॥ ०२३ ॥

तस्मात्त्वां देव देवेश लोकार्थं ज्ञापयामहे ।
रक्ष लोकांश्च देवांश्च शक्रं च महतो भयात् ॥ ०२४ ॥

---

# अध्याय १०१

देवा ऊचुः ॥

इतः प्रदानाद्वर्तन्ते प्रजाः सर्वाश्चतुर्विधाः ।
ता भाविता भावयन्ति हव्यकव्यैर्दिवौकसः ॥ ००१ ॥

लोका ह्येवं वर्तयन्ति अन्योन्यं समुपाश्रिताः ।
त्वत्प्रसादान्निरुद्विग्नास्त्वयैव परिरक्षिताः ॥ ००२ ॥

इदं च समनुप्राप्तं लोकानां भयमुत्तमम् ।

न च जानीम केनेमे रात्रौ वध्यन्ति ब्राह्मणाः ॥ ००३ ॥

क्षीणेषु च ब्राह्मणेषु पृथिवी क्षयमेष्यति ।
ततः पृथिव्यां क्षीणायां त्रिदिवं क्षयमेष्यति ॥ ००४ ॥

त्वत्प्रसादान्महाबाहो लोकाः सर्वे जगत्पते ।
विनाशं नाधिगच्छेयुस्त्वया वै परिरक्षिताः ॥ ००५ ॥

विष्णुरुवाच ॥

विदितं मे सुराः सर्वं प्रजानां क्षयकारणम् ।
भवतां चापि वक्ष्यामि शृणुध्वं विगतज्वराः ॥ ००६ ॥

कालेय इति विख्यातो गणः परमदारुणः ।
तैश्च वृत्रं समाश्रित्य जगत्सर्वं प्रबाधितम् ॥ ००७ ॥

ते वृत्रं निहतं दृष्ट्वा सहस्राक्षेण धीमता ।
जीवितं परिरक्षन्तः प्रविष्टा वरुणालयम् ॥ ००८ ॥

ते प्रविश्योदधिं घोरं नक्रग्राहसमाकुलम् ।
उत्सादनार्थं लोकानां रात्रौ घ्नन्ति मुनीनिह ॥ ००९ ॥

न तु शक्याः क्षयं नेतुं समुद्राश्रयगा हि ते ।
समुद्रस्य क्षये बुद्धिर्भवद्भिः संप्रधार्यताम् ॥ ०१० ॥

अगस्त्येन विना को हि शक्तोऽन्योऽर्णवशोषणे ॥ ०१० ॥

एतच्छ्रुत्वा वचो देवा विष्णुना समुदाहृतम् ।
परमेष्ठिनमाज्ञाप्य अगस्त्यस्याश्रमं ययुः ॥ ०११ ॥

तत्रापश्यन्महात्मानं वारुणिं दीप्ततेजसम् ।

उपास्यमानमृषिभिर्देवैरिव पितामहम्  ॥ ०१२  ॥

तेऽभिगम्य महात्मानं मैत्रावरुणिमच्युतम् ।
आश्रमस्थं तपोराशिं कर्मभिः स्वैरभिष्टुवन्  ॥ ०१३  ॥

देवा ऊचुः  ॥

नहुषेणाभितप्तानां त्वं लोकानां गतिः पुरा ।
भ्रंशितश्च सुरैश्वर्याल्लोकार्थं लोककण्टकः  ॥ ०१४  ॥

क्रोधात्प्रवृद्धः सहसा भास्करस्य नगोत्तमः ।
वचस्तवानतिक्रामन्विन्ध्यः शैलो न वर्धते  ॥ ०१५  ॥

तमसा चावृते लोके मृत्युनाभ्यर्दिताः प्रजाः ।
त्वामेव नाथमासाद्य निर्वृतिं परमां गताः  ॥ ०१६  ॥

अस्माकं भयभीतानां नित्यशो भगवान्गतिः ।
ततस्त्वार्ताः प्रयाचामस्त्वां वरं वरदो ह्यसि  ॥ ०१७  ॥

---

# अध्याय १०२

युधिष्ठिर उवाच  ॥

किमर्थं सहसा विन्ध्यः प्रवृद्धः क्रोधमूर्छितः ।
एतदिच्छाम्यहं श्रोतुं विस्तरेण महामुने  ॥ ००१  ॥

लोमश उवाच  ॥

अद्रिराजं महाशैलं मरुं कनकपर्वतम् ।
उदयास्तमये भानुः प्रदक्षिणमवर्तत ॥ ००२ ॥

तं तु दृष्ट्वा तथा विन्ध्यः शैलः सूर्यमथाब्रवीत् ।
यथा हि मेरुर्भवता नित्यशः परिगम्यते ॥ ००३ ॥

प्रदक्षिणं च क्रियते मामेवं कुरु भास्कर ॥ ००३ ॥

एवमुक्तस्ततः सूर्यः शैलेन्द्रं प्रत्यभाषत ।
नाहमात्मेच्छया शैल करोम्येनं प्रदक्षिणम् ॥ ००४ ॥

एष मार्गः प्रदिष्टो मे येनेदं निर्मितं जगत् ॥ ००४ ॥

एवमुक्तस्ततः क्रोधात्प्रवृद्धः सहसाचलः ।
सूर्याचन्द्रमसोर्मार्गं रोद्धुमिच्छन्परंतप ॥ ००५ ॥

ततो देवाः सहिताः सर्व एव ; सेन्द्राः समागम्य महाद्रिराजम् ।
निवारयामासुरुपायतस्तं ; न च स्म तेषां वचनं चकार ॥ ००६ ॥

अथाभिजग्मुर्मुनिमाश्रमस्थं ; तपस्विनं धर्मभृतां वरिष्ठम् ।
अगस्त्यमत्यद्भुतवीर्यदीप्तं ; तं चार्थमूचुः सहिताः सुरास्ते ॥ ००७ ॥

देवा ऊचुः ॥

सूर्याचन्द्रमसोर्मार्गं नक्षत्राणां गतिं तथा ।
शैलराजो वृणोत्येष विन्ध्यः क्रोधवशानुगः ॥ ००८ ॥

तं निवारयितुं शक्तो नान्यः कश्चिद्द्विजोत्तम ।
ऋते त्वां हि महाभाग तस्मादेनं निवारय ॥ ००९ ॥

लोमश उवाच ॥

तच्छ्रुत्वा वचनं विप्रः सुराणां शैलमभ्यगात् ।
सोऽभिगम्याब्रवीद्विन्ध्यं सदारः समुपस्थितः  ॥ ०१० ॥

मार्गमिच्छाम्यहं दत्तं भवता पर्वतोत्तम ।
दक्षिणामभिगन्तास्मि दिशं कार्येण केनचित्  ॥ ०११ ॥

यावदागमनं मह्यं तावत्त्वं प्रतिपालय ।
निवृत्ते मयि शैलेन्द्र ततो वर्धस्व कामतः  ॥ ०१२ ॥

एवं स समयं कृत्वा विन्ध्येनामित्रकर्शन ।
अद्यापि दक्षिणाद्देशाद्वारुणिर्न निवर्तते  ॥ ०१३ ॥

एतत्ते सर्वमाख्यातं यथा विन्ध्यो न वर्धते ।
अगस्त्यस्य प्रभावेन यन्मां त्वं परिपृच्छसि  ॥ ०१४ ॥

कालेयास्तु यथा राजन्सुरैः सर्वैर्निषूदिताः ।
अगस्त्याद्वरमासाद्य तन्मे निगदतः शृणु  ॥ ०१५ ॥

त्रिदशानां वचः श्रुत्वा मैत्रावरुणिरब्रवीत् ।
किमर्थमभियाताः स्थ वरं मत्तः किमिच्छथ  ॥ ०१६ ॥

एवमुक्तास्ततस्तेन देवास्तं मुनिमब्रुवन्  ॥ ०१६ ॥

एवं त्वयेच्छाम कृतं महर्षे ; महार्णवं पीयमानं महात्मन् ।
ततो वधिष्याम सहानुबन्धा ;न्कालेयसञ्ज्ञान्सुरविद्विषस्तान्  ॥ ०१७ ॥

त्रिदशानां वचः श्रुत्वा तथेति मुनिरब्रवीत् ।
करिष्ये भवतां कामं लोकानां च महत्सुखम्  ॥ ०१८ ॥

एवमुक्त्वा ततोऽगच्छत्समुद्रं सरितां पतिम् ।

ऋषिभिश्च तपःसिद्धैः सार्धं देवैश्च सुव्रतः ॥ ०१९ ॥

मनुष्योरगगन्धर्वयक्षकिंपुरुषास्तथा ।
अनुजग्मुर्महात्मानं द्रष्टुकामास्तदद्भुतम् ॥ ०२० ॥

ततोऽभ्यगच्छन्सहिताः समुद्रं भीमनिस्वनम् ।
नृत्यन्तमिव चोर्मीभिर्वल्गन्तमिव वायुना ॥ ०२१ ॥

हसन्तमिव फेनौघैः स्खलन्तं कन्दरेषु च ।
नानाग्राहसमाकीर्णं नानाद्विजगणायुतम् ॥ ०२२ ॥

अगस्त्यसहिता देवाः सगन्धर्वमहोरगाः ।
ऋषयश्च महाभागाः समासेदुर्महोदधिम् ॥ ०२३ ॥

---

# अध्याय १०३

लोमश उवाच ॥

समुद्रं स समासाद्य वारुणिर्भगवानृषिः ।
उवाच सहितान्देवानृषींश्चैव समागतान् ॥ ००१ ॥

एष लोकहितार्थं वै पिबामि वरुणालयम् ।
भवद्भिर्यदनुष्ठेयं तच्छीघ्रं संविधीयताम् ॥ ००२ ॥

एतावदुक्त्वा वचनं मैत्रावरुणिरच्युतः ।
समुद्रमपिबत्क्रुद्धः सर्वलोकस्य पश्यतः ॥ ००३ ॥

पीयमानं समुद्रं तु दृष्ट्वा देवाः सवासवाः ।
विस्मयं परमं जग्मुः स्तुतिभिश्चाप्यपूजयन्  ॥ ००४  ॥

त्वं नस्त्राता विधाता च लोकानां लोकभावनः ।
त्वत्प्रसादात्समुच्छेदं न गच्छेत्सामरं जगत्  ॥ ००५  ॥

संपूज्यमानस्त्रिदशैर्महात्मा ; गन्धर्वतूर्येषु नदत्सु सर्वशः ।
दिव्यैश्च पुष्पैरवकीर्यमाणो ; महार्णवं निःसलिलं चकार  ॥ ००६  ॥

दृष्ट्वा कृतं निःसलिलं महार्णवं ; सुराः समस्ताः परमप्रहृष्टाः ।
प्रगृह्य दिव्यानि वरायुधानि ; तान्दानवाञ्जघ्नुरदीनसत्त्वाः  ॥ ००७  ॥

ते वध्यमानास्त्रिदशैर्महात्मभि ;र्महाबलैर्वेगिभिरुन्नदद्भिः ।
न सेहिरे वेगवतां महात्मनां ; वेगं तदा धारयितुं दिवौकसाम्  ॥ ००८  ॥

ते वध्यमानास्त्रिदशैर्दानवा भीमनिस्वनाः ।
चक्रुः सुतुमुलं युद्धं मुहूर्तमिव भारत  ॥ ००९  ॥

ते पूर्वं तपसा दग्धा मुनिभिर्भावितात्मभिः ।
यतमानाः परं शक्त्या त्रिदशैर्विनिषूदिताः  ॥ ०१०  ॥

ते हेमनिष्काभरणाः कुण्डलाङ्गदधारिणः ।
निहत्य बह्वशोभन्त पुष्पिता इव किंशुकाः  ॥ ०११  ॥

हतशेषास्ततः केचित्कालेया मनुजोत्तम ।
विदार्य वसुधां देवीं पातालतलमाश्रिताः  ॥ ०१२  ॥

निहतान्दानवान्दृष्ट्वा त्रिदशा मुनिपुङ्गवम् ।
तुष्टुवुर्विविधैर्वाक्यैरिदं चैवाब्रुवन्वचः  ॥ ०१३  ॥

त्वत्प्रसादान्महाभाग लोकैः प्राप्तं महत्सुखम् ।

त्वत्तेजसा च निहताः कालेयाः क्रूरविक्रमाः ॥ ०१४ ॥

पूरयस्व महाबाहो समुद्रं लोकभावन ।
यत्त्वया सलिलं पीतं तदस्मिन्पुनरुत्सृज ॥ ०१५ ॥

एवमुक्तः प्रत्युवाच भगवान्मुनिपुङ्गवः ।
जीर्णं तद्धि मया तोयमुपायोऽन्यः प्रचिन्त्यताम् ॥ ०१६ ॥

पूरणार्थं समुद्रस्य भवद्भिर्यत्नमास्थितैः ॥ ०१६ ॥

एतच्छ्रुत्वा तु वचनं महर्षेर्भावितात्मनः ।
विस्मिताश्च विषण्णाश्च बभूवुः सहिताः सुराः ॥ ०१७ ॥

परस्परमनुज्ञाप्य प्रणम्य मुनिपुङ्गवम् ।
प्रजाः सर्वा महाराज विप्रजग्मुर्यथागतम् ॥ ०१८ ॥

त्रिदशा विष्णुना सार्धमुपजग्मुः पितामहम् ।
पूरणार्थं समुद्रस्य मन्त्रयित्वा पुनः पुनः ॥ ०१९ ॥

ऊचुः प्राञ्जलयः सर्वे सागरस्याभिपूरणम् ॥ ०१९ ॥

---

# अध्याय १०४

लोमश उवाच ॥

तानुवाच समेतांस्तु ब्रह्मा लोकपितामहः ।
गच्छध्वं विबुधाः सर्वे यथाकामं यथेप्सितम् ॥ ००१ ॥

महता कालयोगेन प्रकृतिं यास्यतेऽर्णवः ।
ज्ञातीन्वै कारणं कृत्वा महाराज्ञो भगीरथात् ॥ ००२ ॥

युधिष्ठिर उवाच ॥

कथं वै ज्ञातयो ब्रह्मन्कारणं चात्र किं मुने ।
कथं समुद्रः पूर्णश्च भगीरथपरिश्रमात् ॥ ००३ ॥

एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन ।
कथ्यमानं त्वया विप्र राज्ञां चरितमुत्तमम् ॥ ००४ ॥

वैशंपायन उवाच ॥

एवमुक्तस्तु विप्रेन्द्रो धर्मराज्ञा महात्मना ।
कथयामास माहात्म्यं सगरस्य महात्मनः ॥ ००५ ॥

लोमश उवाच ॥

इक्ष्वाकूणां कुले जातः सगरो नाम पार्थिवः ।
रूपसत्त्वबलोपेतः स चापुत्रः प्रतापवान् ॥ ००६ ॥

स हैहयान्समुत्साद्य तालजङ्घांश्च भारत ।
वशे च कृत्वा राज्ञोऽन्यान्स्वराज्यमन्वशासत ॥ ००७ ॥

तस्य भार्ये त्वभवतां रूपयौवनदर्पिते ।
वैदर्भी भरतश्रेष्ठ शैब्या च भरतर्षभ ॥ ००८ ॥

स पुत्रकामो नृपतिस्तताप सुमहत्तपः ।
पत्नीभ्यां सह राजेन्द्र कैलासं गिरिमाश्रितः ॥ ००९ ॥

स तप्यमानः सुमहत्तपो योगसमन्वितः ।
आससाद महात्मानं त्र्यक्षं त्रिपुरमर्दनम् ॥ ०१० ॥

शङ्करं भवमीशानं शूलपानिं पिनाकिनम् ।
त्र्यम्बकं शिवमुग्रेशं बहुरूपमुमापतिम् ॥ ०११ ॥

स तं दृष्ट्वैव वरदं पत्नीभ्यां सहितो नृपः ।
प्रणिपत्य महाबाहुः पुत्रार्थं समयाचत ॥ ०१२ ॥

तं प्रीतिमान्हरः प्राह सभार्यं नृपसत्तमम् ।
यस्मिन्वृतो मुहूर्तेऽहं त्वयेह नृपते वरम् ॥ ०१३ ॥

षष्टिः पुत्रसहस्राणि शूराः समरदर्पिताः ।
एकस्यां संभविष्यन्ति पत्न्यां तव नरोत्तम ॥ ०१४ ॥

ते चैव सर्वे सहिताः क्षयं यास्यन्ति पार्थिव ।
एको वंशधरः शूर एकस्यां संभविष्यति ॥ ०१५ ॥

एवमुक्त्वा तु तं रुद्रस्तत्रैवान्तरधीयत ॥ ०१५ ॥

स चापि सगरो राजा जगाम स्वं निवेशनम् ।
पत्नीभ्यां सहितस्तात सोऽतिहृष्टमनास्तदा ॥ ०१६ ॥

तस्याथ मनुजश्रेष्ठ ते भार्ये कमलेक्षणे ।
वैदर्भी चैव शैब्या च गर्भिण्यौ संबभूवतुः ॥ ०१७ ॥

ततः कालेन वैदर्भी गर्भालाबुं व्यजायत ।
शैब्या च सुषुवे पुत्रं कुमारं देवरूपिणम् ॥ ०१८ ॥

तदालाबुं समुत्स्रष्टुं मनश्चक्रे स पार्थिवः ।
अथान्तरिक्षाच्छुश्राव वाचं गम्भीरनिस्वनाम् ॥ ०१९ ॥

राजन्मा साहसं कार्षीः पुत्रान्न त्यक्तुमर्हसि ।
अलाबुमध्यान्निष्कृष्य बीजं यत्नेन गोप्यताम्  ॥ ०२०  ॥

सोपस्वेदेषु पात्रेषु घृतपूर्णेषु भागशः ।
ततः पुत्रसहस्राणि षष्टिं प्राप्स्यसि पार्थिव  ॥ ०२१  ॥

महादेवेन दिष्टं ते पुत्रजन्म नराधिप ।
अनेन क्रमयोगेन मा ते बुद्धिरतोऽन्यथा  ॥ ०२२  ॥

---

# अध्याय १०५

लोमश उवाच  ॥

एतच्छ्रुत्वान्तरिक्षाच्च स राजा राजसत्तम ।
यथोक्तं तच्चकाराथ श्रद्दधद्भरतर्षभ  ॥ ००१  ॥

षष्टिः पुत्रसहस्राणि तस्याप्रतिमतेजसः ।
रुद्रप्रसादाद्राजर्षेः समजायन्त पार्थिव  ॥ ००२  ॥

ते घोराः क्रूरकर्माण आकाशपरिसर्पिणः ।
बहुत्वाच्चावजानन्तः सर्वा.ण्ल्लोकान्सहामरान्  ॥ ००३  ॥

त्रिदशांश्चाप्यबाधन्त तथा गन्धर्वराक्षसान् ।
सर्वाणि चैव भूतानि शूराः समरशालिनः  ॥ ००४  ॥

वध्यमानास्ततो लोकाः सागरैर्मन्दबुद्धिभिः ।

ब्रह्माणं शरणं जग्मुः सहिताः सर्वदैवतैः ॥ ००५ ॥

तानुवाच महाभागः सर्वलोकपितामहः ।
गच्छध्वं त्रिदशाः सर्वे लोकैः सार्धं यथागतम् ॥ ००६ ॥

नातिदीर्घेण कालेन सागराणां क्षयो महान् ।
भविष्यति महाघोरः स्वकृतैः कर्मभिः सुराः ॥ ००७ ॥

एवमुक्तास्ततो देवा लोकाश्च मनुजेश्वर ।
पितामहमनुज्ञाप्य विप्रजग्मुर्यथागतम् ॥ ००८ ॥

ततः काले बहुतिथे व्यतीते भरतर्षभ ।
दीक्षितः सगरो राजा हयमेधेन वीर्यवान् ॥ ००९ ॥

तस्याश्वो व्यचरद्भूमिं पुत्रैः सुपरिरक्षितः ॥ ००९ ॥

समुद्रं स समासाद्य निस्तोयं भीमदर्शनम् ।
रक्ष्यमाणः प्रयत्नेन तत्रैवान्तरधीयत ॥ ०१० ॥

ततस्ते सागरास्तात हृतं मत्वा हयोत्तमम् ।
आगम्य पितुराचख्युरदृश्यं तुरगं हृतम् ॥ ०११ ॥

तेनोक्ता दिक्षु सर्वासु सर्वे मार्गत वाजिनम् ॥ ०११ ॥

ततस्ते पितुराज्ञाय दिक्षु सर्वासु तं हयम् ।
अमार्गन्त महाराज सर्वं च पृथिवीतलम् ॥ ०१२ ॥

ततस्ते सागराः सर्वे समुपेत्य परस्परम् ।
नाध्यगच्छन्त तुरगमश्वहर्तारमेव च ॥ ०१३ ॥

आगम्य पितरं चोचुस्ततः प्राञ्जलयोऽग्रतः ।

ससमुद्रवनद्वीपा सनदीनदकन्दरा ॥ ०१४ ॥

सपर्वतवनोद्देशा निखिलेन मही नृप ॥ ०१४ ॥

अस्माभिर्विचिता राजञ्शासनात्तव पार्थिव ।
न चाश्वमधिगच्छामो नाश्वहर्तारमेव च ॥ ०१५ ॥

श्रुत्वा तु वचनं तेषां स राजा क्रोधमूर्छितः ।
उवाच वचनं सर्वांस्तदा दैववशान्नृप ॥ ०१६ ॥

अनागमाय गच्छध्वं भूयो मार्गत वाजिनम् ।
यज्ञियं तं विना ह्यश्वं नागन्तव्यं हि पुत्रकाः ॥ ०१७ ॥

प्रतिगृह्य तु संदेशं ततस्ते सगरात्मजाः ।
भूय एव महीं कृत्स्नां विचेतुमुपचक्रमुः ॥ ०१८ ॥

अथापश्यन्त ते वीराः पृथिवीमवदारिताम् ।
समासाद्य बिलं तच्च खनन्तः सगरात्मजाः ॥ ०१९ ॥

कुद्दालैर्हेषुकैश्चैव समुद्रमखनंस्तदा ॥ ०१९ ॥

स खन्यमानः सहितैः सागरैर्वरुणालयः ।
अगच्छत्परमामार्तिं दार्यमाणः समन्ततः ॥ ०२० ॥

असुरोरगरक्षांसि सत्त्वानि विविधानि च ।
आर्तनादमकुर्वन्त वध्यमानानि सागरैः ॥ ०२१ ॥

छिन्नशीर्षा विदेहाश्च भिन्नजान्वस्थिमस्तकाः ।
प्राणिनः समदृश्यन्त शतशोऽथ सहस्रशः ॥ ०२२ ॥

एवं हि खनतां तेषां समुद्रं मकरालयम् ।

व्यतीतः सुमहान्कालो न चाश्वः समदृश्यत ॥ ०२३ ॥

ततः पूर्वोत्तरे देशे समुद्रस्य महीपते ।
विदार्य पातालमथ सङ्क्रुद्धाः सगरात्मजाः ॥ ०२४ ॥

अपश्यन्त हयं तत्र विचरन्तं महीतले ॥ ०२४ ॥

कपिलं च महात्मानं तेजोराशिमनुत्तमम् ।
तपसा दीप्यमानं तं ज्वालाभिरिव पावकम् ॥ ०२५ ॥

---

# अध्याय १०६

लोमश उवाच ॥

ते तं दृष्ट्वा हयं राजन्संप्रहृष्टतनूरुहाः ।
अनादृत्य महात्मानं कपिलं कालचोदिताः ॥ ००१ ॥

सङ्क्रुद्धाः समधावन्त अश्वग्रहणकाङ्क्षिणः ॥ ००१ ॥

ततः क्रुद्धो महाराज कपिलो मुनिसत्तमः ।
वासुदेवेति यं प्राहुः कपिलं मुनिसत्तमम् ॥ ००२ ॥

स चक्षुर्विवृतं कृत्वा तेजस्तेषु समुत्सृजन् ।
ददाह सुमहातेजा मन्दबुद्धीन्स सागरान् ॥ ००३ ॥

तान्दृष्ट्वा भस्मसाद्भूतान्नारदः सुमहातपाः ।
सगरान्तिकमागच्छत्तच्च तस्मै न्यवेदयत् ॥ ००४ ॥

स तच्छ्रुत्वा वचो घोरं राजा मुनिमुखोद्गतम् ।
मुहूर्तं विमना भूत्वा स्थाणोर्वाक्यमचिन्तयत् ॥ ००५ ॥

आत्मानमात्मनाश्वास्य हयमेवान्वचिन्तयत् ॥ ००५ ॥

अंशुमन्तं समाहूय असमञ्जःसुतं तदा ।
पौत्रं भरतशार्दूल इदं वचनमब्रवीत् ॥ ००६ ॥

षष्टिस्तानि सहस्राणि पुत्राणाममितौजसाम् ।
कापिलं तेज आसाद्य मत्कृते निधनं गताः ॥ ००७ ॥

तव चापि पिता तात परित्यक्तो मयानघ ।
धर्मं संरक्षमाणेन पौराणां हितमिच्छता ॥ ००८ ॥

युधिष्ठिर उवाच ॥

किमर्थं राजशार्दूलः सगरः पुत्रमात्मजम् ।
त्यक्तवान्दुस्त्यजं वीरं तन्मे ब्रूहि तपोधन ॥ ००९ ॥

लोमश उवाच ॥

असमञ्जा इति ख्यातः सगरस्य सुतो ह्यभूत् ।
यं शैब्या जनयामास पौराणां स हि दारकान् ॥ ०१० ॥

खुरेषु क्रोशतो गृह्य नद्यां चिक्षेप दुर्बलान् ॥ ०१० ॥

ततः पौराः समाजग्मुर्भयशोकपरिप्लुताः ।
सगरं चाभ्ययाचन्त सर्वे प्राञ्जलयः स्थिताः ॥ ०११ ॥

त्वं नस्त्राता महाराज परचक्रादिभिर्भयैः ।
असमञ्जोभयाद्धोरात्ततो नस्त्रातुमर्हसि ॥ ०१२ ॥

पौराणां वचनं श्रुत्वा घोरं नृपतिसत्तमः ।
मुहूर्तं विमना भूत्वा सचिवानिदमब्रवीत् ॥ ०१३ ॥

असमञ्जाः पुरादद्य सुतो मे विप्रवास्यताम् ।
यदि वो मत्प्रियं कार्यमेतच्छीघ्रं विधीयताम् ॥ ०१४ ॥

एवमुक्ता नरेन्द्रेण सचिवास्ते नराधिप ।
यथोक्तं त्वरिताश्चक्रुर्यथाज्ञापितवान्नृपः ॥ ०१५ ॥

एतत्ते सर्वमाख्यातं यथा पुत्रो महात्मना ।
पौराणां हितकामेन सगरेण विवासितः ॥ ०१६ ॥

अंशुमांस्तु महेष्वासो यदुक्तः सगरेण ह ।
तत्ते सर्वं प्रवक्ष्यामि कीर्त्यमानं निबोध मे ॥ ०१७ ॥

सगर उवाच ॥

पितुश्च तेऽहं त्यागेन पुत्राणां निधनेन च ।
अलाभेन तथाश्वस्य परितप्यामि पुत्रक ॥ ०१८ ॥

तस्माद्दुःखाभिसंतप्तं यज्ञविघ्नाच्च मोहितम् ।
हयस्यानयनात्पौत्र नरकान्मां समुद्धर ॥ ०१९ ॥

लोमश उवाच ॥

अंशुमानेवमुक्तस्तु सगरेण महात्मना ।
जगाम दुःखात्तं देशं यत्र वै दारिता मही ॥ ०२० ॥

स तु तेनैव मार्गेण समुद्रं प्रविवेश ह ।
अपश्यच्च महात्मानं कपिलं तुरगं च तम् ॥ ०२१ ॥

स दृष्ट्वा तेजसो राशिं पुराणमृषिसत्तमम् ।
प्रणम्य शिरसा भूमौ कार्यमस्मै न्यवेदयत्  ॥ ०२२  ॥

ततः प्रीतो महातेजाः कलिपोंऽशुमतोऽभवत् ।
उवाच चैनं धर्मात्मा वरदोऽस्मीति भारत  ॥ ०२३  ॥

स वव्रे तुरगं तत्र प्रथमं यज्ञकारणात् ।
द्वितीयमुदकं वव्रे पितॄणां पावनेप्सया  ॥ ०२४  ॥

तमुवाच महातेजाः कपिलो मुनिपुङ्गवः ।
ददानि तव भद्रं ते यद्यत्प्रार्थयसेऽनघ  ॥ ०२५  ॥

त्वयि क्षमा च धर्मश्च सत्यं चापि प्रतिष्ठितम् ।
त्वया कृतार्थः सगरः पुत्रवांश्च त्वया पिता  ॥ ०२६  ॥

तव चैव प्रभावेन स्वर्गं यास्यन्ति सागराः ।
पौत्रश्च ते त्रिपथगां त्रिदिवादानयिष्यति  ॥ ०२७  ॥

पावनार्थं सागराणां तोषयित्वा महेश्वरम्  ॥ ०२७  ॥

हयं नयस्व भद्रं ते यज्ञियं नरपुङ्गव ।
यज्ञः समाप्यतां तात सगरस्य महात्मनः  ॥ ०२८  ॥

अंशुमानेवमुक्तस्तु कपिलेन महात्मना ।
आजगाम हयं गृह्य यज्ञवाटं महात्मनः  ॥ ०२९  ॥

सोऽभिवाद्य ततः पादौ सगरस्य महात्मनः ।
मूर्ध्नि तेनाप्युपाघ्रातस्तस्मै सर्वं न्यवेदयत्  ॥ ०३०  ॥

यथा दृष्टं श्रुतं चापि सागराणां क्षयं तथा ।

तं चास्मै हयमाचष्ट यज्ञवाटमुपागतम् ॥ ०३१ ॥

तच्छ्रुत्वा सगरो राजा पुत्रजं दुःखमत्यजत् ।
अंशुमन्तं च संपूज्य समापयत तं क्रतुम् ॥ ०३२ ॥

समाप्तयज्ञः सगरो देवैः सर्वैः सभाजितः ।
पुत्रत्वे कल्पयामास समुद्रं वरुणालयम् ॥ ०३३ ॥

प्रशास्य सुचिरं कालं राज्यं राजीवलोचनः ।
पौत्रे भारं समावेश्य जगाम त्रिदिवं तदा ॥ ०३४ ॥

अंशुमानपि धर्मात्मा महीं सागरमेखलाम् ।
प्रशशास महाराज यथैवास्य पितामहः ॥ ०३५ ॥

तस्य पुत्रः समभवद्दिलीपो नाम धर्मवित् ।
तस्मै राज्यं समाधाय अंशुमानपि संस्थितः ॥ ०३६ ॥

दिलीपस्तु ततः श्रुत्वा पितॄणां निधनं महत् ।
पर्यतप्यत दुःखेन तेषां गतिमचिन्तयत् ॥ ०३७ ॥

गङ्गावतरणे यत्नं सुमहच्चाकरोन्नृपः ।
न चावतारयामास चेष्टमानो यथाबलम् ॥ ०३८ ॥

तस्य पुत्रः समभवच्छ्रीमान्धर्मपरायणः ।
भगीरथ इति ख्यातः सत्यवागनसूयकः ॥ ०३९ ॥

अभिषिच्य तु तं राज्ये दिलीपो वनमाश्रितः ।
तपःसिद्धिसमायोगात्स राजा भरतर्षभ ॥ ०४० ॥

वनाज्जगाम त्रिदिवं कालयोगेन भारत ॥ ०४० ॥

# अध्याय १०७

लोमश उवाच ॥

स तु राजा महेष्वासश्चक्रवर्ती महारथः ।
बभूव सर्वलोकस्य मनोनयननन्दनः ॥ ००१ ॥

स शुश्राव महाबाहुः कपिलेन महात्मना ।
पितृणां निधनं घोरमप्राप्तिं त्रिदिवस्य च ॥ ००२ ॥

स राज्यं सचिवे न्यस्य हृदयेन विदूयता ।
जगाम हिमवत्पार्श्वं तपस्तप्तुं नरेश्वरः ॥ ००३ ॥

आरिराधयिषुर्गङ्गां तपसा दग्धकिल्बिषः ।
सोऽपश्यत नरश्रेष्ठ हिमवन्तं नगोत्तमम् ॥ ००४ ॥

शृङ्गैर्बहुविधाकारैर्धातुमद्भिरलङ्कृतम् ।
पवनालम्बिभिर्मेघैः परिष्वक्तं समन्ततः ॥ ००५ ॥

नदीकुञ्जनितम्बैश्च सोदकैरुपशोभितम् ।
गुहाकन्दरसंलीनैः सिंहव्याघ्रैर्निषेवितम् ॥ ००६ ॥

शकुनैश्च विचित्राङ्गैः कूजद्भिर्विविधा गिरः ।
भृङ्गराजैस्तथा हंसैर्दात्यूहैर्जलकुक्कुटैः ॥ ००७ ॥

मयूरैः शतपत्रैश्च कोकिलैर्जीवजीवकैः ।
चकोरैरसितापाङ्गैस्तथा पुत्रप्रियैरपि ॥ ००८ ॥

जलस्थानेषु रम्येषु पद्मिनीभिश्च सङ्कुलम् ।
सारसानां च मधुरैर्व्याहृतैः समलङ्कृतम्  ॥ ००९  ॥

किंनरैरप्सरोभिश्च निषेवितशिलातलम् ।
दिशागजविषाणाग्रैः समन्ताद्धृष्टपादपम्  ॥ ०१०  ॥

विद्याधरानुचरितं नानारत्नसमाकुलम् ।
विषोल्बणैर्भुजङ्गैश्च दीप्तजिह्वैर्निषेवितम्  ॥ ०११  ॥

क्वचित्कनकसङ्काशं क्वचिद्रजतसंनिभम् ।
क्वचिदञ्जनपुञ्जाभं हिमवन्तमुपागमत्  ॥ ०१२  ॥

स तु तत्र नरश्रेष्ठस्तपो घोरं समाश्रितः ।
फलमूलाम्बुभक्षोऽभूत्सहस्रं परिवत्सरान्  ॥ ०१३  ॥

संवत्सरसहस्रे तु गते दिव्ये महानदी ।
दर्शयामास तं गङ्गा तदा मूर्तिमती स्वयम्  ॥ ०१४  ॥

गङ्गोवाच  ॥

किमिच्छसि महाराज मत्तः किं च ददानि ते ।
तद्ब्रवीहि नरश्रेष्ठ करिष्यामि वचस्तव  ॥ ०१५  ॥

लोमश उवाच  ॥

एवमुक्तः प्रत्युवाच राजा हैमवतीं तदा ।
पितामहा मे वरदे कपिलेन महानदि  ॥ ०१६  ॥

अन्वेषमाणास्तुरगं नीता वैवस्वतक्षयम्  ॥ ०१६  ॥

षष्टिस्तानि सहस्राणि सागराणां महात्मनाम् ।
कापिलं तेज आसाद्य क्षणेन निधनं गताः ॥ ०१७ ॥

तेषामेवं विनष्टानां स्वर्गे वासो न विद्यते ।
यावत्तानि शरीराणि त्वं जलैर्नाभिषिञ्चसि ॥ ०१८ ॥

स्वर्गं नय महाभागे मत्पितॄन्सगरात्मजान् ।
तेषामर्थेऽभियाचामि त्वामहं वै महानदि ॥ ०१९ ॥

एतच्छ्रुत्वा वचो राज्ञो गङ्गा लोकनमस्कृता ।
भगीरथमिदं वाक्यं सुप्रीता समभाषत ॥ ०२० ॥

करिष्यामि महाराज वचस्ते नात्र संशयः ।
वेगं तु मम दुर्धार्यं पतन्त्या गगनाच्च्युतम् ॥ ०२१ ॥

न शक्तस्त्रिषु लोकेषु कश्चिद्धारयितुं नृप ।
अन्यत्र विबुधश्रेष्ठान्नीलकण्ठान्महेश्वरात् ॥ ०२२ ॥

तं तोषय महाबाहो तपसा वरदं हरम् ।
स तु मां प्रच्युतां देवः शिरसा धारयिष्यति ॥ ०२३ ॥

करिष्यति च ते कामं पितॄणां हितकाम्यया ॥ ०२३ ॥

एतच्छ्रुत्वा वचो राजन्महाराजो भगीरथः ।
कैलासं पर्वतं गत्वा तोषयामास शङ्करम् ॥ ०२४ ॥

ततस्तेन समागम्य कालयोगेन केनचित् ।
अगृह्णाच्च वरं तस्माद्गङ्गाया धारणं नृप ॥ ०२५ ॥

स्वर्गवासं समुद्दिश्य पितॄणां स नरोत्तमः ॥ ०२५ ॥

# अध्याय १०८

लोमश उवाच ॥

भगीरथवचः श्रुत्वा प्रियार्थं च दिवौकसाम् ।
एवमस्त्विति राजानं भगवान्प्रत्यभाषत ॥ ००१ ॥

धारयिष्ये महाबाहो गगनात्प्रच्युतां शिवाम् ।
दिव्यां देवनदीं पुण्यां त्वत्कृते नृपसत्तम ॥ ००२ ॥

एवमुक्त्वा महाबाहो हिमवन्तमुपागमत् ।
संवृतः पार्षदैर्घोरैर्नानाप्रहरणोद्यतैः ॥ ००३ ॥

ततः स्थित्वा नरश्रेष्ठं भगीरथमुवाच ह ।
प्रयाचस्व महाबाहो शैलराजसुतां नदीम् ॥ ००४ ॥

पतमानां सरिच्छ्रेष्ठां धारयिष्ये त्रिविष्टपात् ॥ ००४ ॥

एतच्छ्रुत्वा वचो राजा शर्वेण समुदाहृतम् ।
प्रयतः प्रणतो भूत्वा गङ्गां समनुचिन्तयत् ॥ ००५ ॥

ततः पुण्यजला रम्या राज्ञा समनुचिन्तिता ।
ईशानं च स्थितं दृष्ट्वा गगनात्सहसा च्युता ॥ ००६ ॥

तां प्रच्युतां ततो दृष्ट्वा देवाः सार्धं महर्षिभिः ।
गन्धर्वोरगरक्षांसि समाजग्मुर्दिदृक्षया ॥ ००७ ॥

ततः पपात गगनाद्गङ्गा हिमवतः सुता ।
समुद्भ्रान्तमहावर्ता मीनग्राहसमाकुला ॥ ००८ ॥

तां दधार हरो राजन्गङ्गां गगनमेखलाम् ।
ललाटदेशे पतितां मालां मुक्तामयीमिव ॥ ००९ ॥

सा बभूव विसर्पन्ती त्रिधा राजन्समुद्रगा ।
फेनपुञ्जाकुलजला हंसानामिव पङ्क्तयः ॥ ०१० ॥

क्वचिदाभोगकुटिला प्रस्खलन्ती क्वचित्क्वचित् ।
स्वफेनपटसंवीता मत्तेव प्रमदाव्रजत् ॥ ०११ ॥

क्वचित्सा तोयनिनदैर्नदन्ती नादमुत्तमम् ॥ ०११ ॥

एवं प्रकारान्सुबहून्कुर्वन्ती गगनाच्च्युता ।
पृथिवीतलमासाद्य भगीरथमथाब्रवीत् ॥ ०१२ ॥

दर्शयस्व महाराज मार्गं केन व्रजाम्यहम् ।
त्वदर्थमवतीर्णास्मि पृथिवीं पृथिवीपते ॥ ०१३ ॥

एतच्छ्रुत्वा वचो राजा प्रातिष्ठत भगीरथः ।
यत्र तानि शरीराणि सागराणां महात्मनाम् ॥ ०१४ ॥

पावनार्थं नरश्रेष्ठ पुण्येन सलिलेन ह ॥ ०१४ ॥

गङ्गाया धारणं कृत्वा हरो लोकनमस्कृतः ।
कैलासं पर्वतश्रेष्ठं जगाम त्रिदशैः सह ॥ ०१५ ॥

समुद्रं च समासाद्य गङ्गया सहितो नृपः ।
पूरयामास वेगेन समुद्रं वरुणालयम् ॥ ०१६ ॥

दुहितृत्वे च नृपतिर्गङ्गां समनुकल्पयत् ।
पितृणां चोदकं तत्र ददौ पूर्णमनोरथः ॥ ०१७ ॥

एतत्ते सर्वमाख्यातं गङ्गा त्रिपथगा यथा ।
पूरणार्थं समुद्रस्य पृथिवीमवतारिता ॥ ०१८ ॥

समुद्रश्च यथा पीतः कारणार्थे महात्मना ।
वातापिश्च यथा नीतः क्षयं स ब्रह्महा प्रभो ॥ ०१९ ॥

अगस्त्येन महाराज यन्मां त्वं परिपृच्छसि ॥ ०१९ ॥

---

# अध्याय १०९

वैशंपायन उवाच ॥

ततः प्रयातः कौन्तेयः क्रमेण भरतर्षभ ।
नन्दामपरनन्दां च नद्यौ पापभयापहे ॥ ००१ ॥

स पर्वतं समासाद्य हेमकूटमनामयम् ।
अचिन्त्यानद्भुतान्भावान्ददर्श सुबहून्नृपः ॥ ००२ ॥

वाचो यत्राभवन्मेघा उपलाश्च सहस्रशः ।
नाशक्नुवंस्तमारोढुं विषण्णमनसो जनाः ॥ ००३ ॥

वायुर्नित्यं ववौ यत्र नित्यं देवश्च वर्षति ।
सायं प्रातश्च भगवान्दृश्यते हव्यवाहनः ॥ ००४ ॥

एवं बहुविधान्भावानद्भुतान्वीक्ष्य पाण्डवः ।

लोमशं पुनरेव स्म पर्यपृच्छत्तदद्भुतम् ॥ ००५ ॥

लोमश उवाच ॥

यथाश्रुतमिदं पूर्वमस्माभिररिकर्शन ।
तदेकाग्रमना राजन्निबोध गदतो मम ॥ ००६ ॥

अस्मिन्नृषभकूटेऽभूदृषभो नाम तापसः ।
अनेकशतवर्षायुस्तपस्वी कोपनो भृशम् ॥ ००७ ॥

स वै संभाष्यमाणोऽन्यैः कोपाद्गिरिमुवाच ह ।
य इह व्याहरेत्कश्चिदुपलानुत्सृजेस्तदा ॥ ००८ ॥

वातं चाहूय मा शब्दमित्युवाच स तापसः ।
व्याहरंश्चैव पुरुषो मेघेन विनिवार्यते ॥ ००९ ॥

एवमेतानि कर्माणि राजंस्तेन महर्षिणा ।
कृतानि कानिचित्कोपात्प्रतिषिद्धानि कानिचित् ॥ ०१० ॥

नन्दामभिगतान्देवान्पुरा राजन्निति श्रुतिः ।
अन्वपद्यन्त सहसा पुरुषा देवदर्शिनः ॥ ०११ ॥

ते दर्शनमनिच्छन्तो देवाः शक्रपुरोगमाः ।
दुर्गं चक्रुरिमं देशं गिरिप्रत्यूहरूपकम् ॥ ०१२ ॥

तदा प्रभृति कौन्तेय नरा गिरिमिमं सदा ।
नाशक्नुवनभिद्रष्टुं कुत एवाधिरोहितुम् ॥ ०१३ ॥

नातप्ततपसा शक्यो द्रष्टुमेष महागिरिः ।
आरोढुं वापि कौन्तेय तस्मान्नियतवाग्भव ॥ ०१४ ॥

इह देवाः सदा सर्वे यज्ञानाजह्रुरुत्तमान् ।
तेषामेतानि लिङ्गानि दृश्यन्तेऽद्यापि भारत ॥ ०१५ ॥

कुशाकारेव दूर्वेयं संस्तीर्णेव च भूरियम् ।
यूपप्रकारा बहवो वृक्षाश्चेमे विशां पते ॥ ०१६ ॥

देवाश्च ऋषयश्चैव वसन्त्यद्यापि भारत ।
तेषां सायं तथा प्रातर्दृश्यते हव्यवाहनः ॥ ०१७ ॥

इहाप्लुतानां कौन्तेय सद्यः पाप्मा विहन्यते ।
कुरुश्रेष्ठाभिषेकं वै तस्मात्कुरु सहानुजः ॥ ०१८ ॥

ततो नन्दाप्लुताङ्गस्त्वं कौशिकीमभियास्यसि ।
विश्वामित्रेण यत्रोग्रं तपस्तप्तमनुत्तमम् ॥ ०१९ ॥

वैशंपायन उवाच ॥

ततस्तत्र समाप्लुत्य गात्राणि सगणो नृपः ।
जगाम कौशिकीं पुण्यां रम्यां शिवजलां नदीम् ॥ ०२० ॥

---

# ऋश्यशृङ्गोपाख्यानम्

## अध्याय ११०

लोमश उवाच ॥

एषा देवनदी पुण्या कौशिकी भरतर्षभ ।

विश्वामित्राश्रमो रम्य एष चात्र प्रकाशते  ॥ ००१  ॥

आश्रमश्चैव पुण्याख्यः काश्यपस्य महात्मनः ।
ऋश्यश‍ृङ्गः सुतो यस्य तपस्वी संयतेन्द्रियः  ॥ ००२  ॥

तपसो यः प्रभावेन वर्षयामास वासवम् ।
अनावृष्ट्यां भयाद्यस्य ववर्ष बलवृत्रहा  ॥ ००३  ॥

मृग्यां जातः स तेजस्वी काश्यपस्य सुतः प्रभुः ।
विषये लोमपादस्य यश्चकाराद्भुतं महत्  ॥ ००४  ॥

निवर्तितेषु सस्येषु यस्मै शान्तां ददौ नृपः ।
लोमपादो दुहितरं सावित्रीं सविता यथा  ॥ ००५  ॥

युधिष्ठिर उवाच  ॥

ऋश्यश‍ृङ्गः कथं मृग्यामुत्पन्नः काश्यपात्मजः ।
विरुद्धे योनिसंसर्गे कथं च तपसा युतः  ॥ ००६  ॥

किमर्थं च भयाच्छक्रस्तस्य बालस्य धीमतः ।
अनावृष्ट्यां प्रवृत्तायां ववर्ष बलवृत्रहा  ॥ ००७  ॥

कथंरूपा च शान्ताभूद्राजपुत्री यतव्रता ।
लोभयामास या चेतो मृगभूतस्य तस्य वै  ॥ ००८  ॥

लोमपादश्च राजर्षिर्यदाश्रूयत धार्मिकः ।
कथं वै विषये तस्य नावर्षत्पाकशासनः  ॥ ००९  ॥

एतन्मे भगवन्सर्वं विस्तरेण यथातथम् ।
वक्तुमर्हसि शुश्रूषोर्ऋष्यश‍ृङ्गस्य चेष्टितम्  ॥ ०१०  ॥

लोमश उवाच ॥

विभाण्डकस्य ब्रह्मर्षेस्तपसा भावितात्मनः ।
अमोघवीर्यस्य सतः प्रजापतिसमद्युतेः ॥ ०११ ॥

शृणु पुत्रो यथा जात ऋश्यशृङ्गः प्रतापवान् ।
महाह्रदे महातेजा बालः स्थविरसंमतः ॥ ०१२ ॥

महाह्रदं समासाद्य काश्यपस्तपसि स्थितः ।
दीर्घकालं परिश्रान्त ऋषिर्देवर्षिसंमतः ॥ ०१३ ॥

तस्य रेतः प्रचस्कन्द दृष्ट्वाप्सरसमुर्वशीम् ।
अप्सूपस्पृशतो राजन्मृगी तच्चापिबत्तदा ॥ ०१४ ॥

सह तोयेन तृषिता सा गर्भिण्यभवन्नृप ।
अमोघत्वाद्विधेश्चैव भावित्वाद्दैवनिर्मितात् ॥ ०१५ ॥

तस्यां मृग्यां समभवत्तस्य पुत्रो महानृषिः ।
ऋश्यशृङ्गस्तपोनित्यो वन एव व्यवर्धत ॥ ०१६ ॥

तस्यर्श्यशृङ्गं शिरसि राजन्नासीन्महात्मनः ।
तेनर्श्यशृङ्ग इत्येवं तदा स प्रथितोऽभवत् ॥ ०१७ ॥

न तेन दृष्टपूर्वोऽन्यः पितुरन्यत्र मानुषः ।
तस्मात्तस्य मनो नित्यं ब्रह्मचर्येऽभवन्नृप ॥ ०१८ ॥

एतस्मिन्नेव काले तु सखा दशरथस्य वै ।
लोमपाद इति ख्यातो अङ्गानामीश्वरोऽभवत् ॥ ०१९ ॥

तेन कामः कृतो मिथ्या ब्राह्मणेभ्य इति श्रुतिः ।
स ब्राह्मणैः परित्यक्तस्तदा वै जगतीपतिः ॥ ०२० ॥

पुरोहितापचाराच्च तस्य राज्ञो यदृच्छया ।
न ववर्ष सहस्राक्षस्ततोऽपीड्यन्त वै प्रजाः ॥ ०२१ ॥

स ब्राह्मणान्पर्यपृच्छत्तपोयुक्तान्मनीषिणः ।
प्रवर्षणे सुरेन्द्रस्य समर्थान्पृथिवीपतिः ॥ ०२२ ॥

कथं प्रवर्षेत्पर्जन्य उपायः परिदृश्यताम् ।
तमूचुश्चोदितास्तेन स्वमतानि मनीषिणः ॥ ०२३ ॥

तत्र त्वेको मुनिवरस्तं राजानमुवाच ह ।
कुपितास्तव राजेन्द्र ब्राह्मणा निस्कृतिं चर ॥ ०२४ ॥

ऋश्यश्रृङ्गं मुनिसुतमानयस्व च पार्थिव ।
वानेयमनभिज्ञं च नारीणामार्जवे रतम् ॥ ०२५ ॥

स चेदवतरेद्राजन्विषयं ते महातपाः ।
सद्यः प्रवर्षेत्पर्जन्य इति मे नात्र संशयः ॥ ०२६ ॥

एतच्छ्रुत्वा वचो राजन्कृत्वा निस्कृतिमात्मनः ।
स गत्वा पुनरागच्छत्प्रसन्नेषु द्विजातिषु ॥ ०२७ ॥

राजानमागतं दृष्ट्वा प्रतिसञ्जगृहुः प्रजाः ॥ ०२७ ॥

ततोऽङ्गपतिराहूय सचिवान्मन्त्रकोविदान् ।
ऋश्यश्रृङ्गागमे यत्नमकरोन्मन्त्रनिश्चये ॥ ०२८ ॥

सोऽध्यगच्छदुपायं तु तैरमात्यैः सहाच्युतः ।
शास्त्रज्ञैरलमर्थज्ञैर्नीत्यां च परिनिष्ठितैः ॥ ०२९ ॥

तत आनाययामास वारमुख्या महीपतिः ।

वेश्याः सर्वत्र निष्णातास्ता उवाच स पार्थिवः ॥ ०३० ॥

ऋश्यशृङ्गमृषेः पुत्रमानयध्वमुपायतः ।
लोभयित्वाभिविश्वास्य विषयं मम शोभनाः ॥ ०३१ ॥

ता राजभयभीताश्च शापभीताश्च योषितः ।
अशक्यमूचुस्तत्कार्यं विवर्णा गतचेतसः ॥ ०३२ ॥

तत्र त्वेका जरद्योषा राजानमिदमब्रवीत् ।
प्रयतिष्ये महाराज तमानेतुं तपोधनम् ॥ ०३३ ॥

अभिप्रेतांस्तु मे कामान्समनुज्ञातुमर्हसि ।
ततः शक्ष्ये लोभयितुमृश्यशृङ्गमृषेः सुतम् ॥ ०३४ ॥

तस्याः सर्वमभिप्रायमन्वजानात्स पार्थिवः ।
धनं च प्रददौ भूरि रत्नानि विविधानि च ॥ ०३५ ॥

ततो रूपेण संपन्ना वयसा च महीपते ।
स्त्रिय आदाय काश्चित्सा जगाम वनमञ्जसा ॥ ०३६ ॥

---

# अध्याय १११

लोमश उवाच ॥

सा तु नाव्याश्रमं चक्रे राजकार्यार्थसिद्धये ।
संदेशाच्चैव नृपतेः स्वबुद्ध्या चैव भारत ॥ ००१ ॥

नानापुष्पफलैर्वृक्षैः कृत्रिमैरुपशोभितम् ।

नानागुल्मलतोपेतैः स्वादुकामफलप्रदैः ॥ ००२ ॥

अतीव रमणीयं तदतीव च मनोहरम् ।
चक्रे नाव्याश्रमं रम्यमद्भुतोपमदर्शनम् ॥ ००३ ॥

ततो निबध्य तां नावमदूरे काश्यपाश्रमात् ।
चारयामास पुरुषैर्विहारं तस्य वै मुनेः ॥ ००४ ॥

ततो दुहितरं वेश्या समाधायेतिकृत्यताम् ।
दृष्ट्वान्तरं काश्यपस्य प्राहिणोद्बुद्धिसंमताम् ॥ ००५ ॥

सा तत्र गत्वा कुशला तपोनित्यस्य संनिधौ ।
आश्रमं तं समासाद्य ददर्श तमृषेः सुतम् ॥ ००६ ॥

वेश्योवाच ॥

कच्चिन्मुने कुशलं तापसानां ; कच्चिच्च वो मूलफलं प्रभूतम् ।
कच्चिद्भवान्रमते चाश्रमेऽस्मिं ;स्त्वां वै द्रष्टुं सांप्रतमागतोऽस्मि ॥ ००७ ॥

कच्चित्तपो वर्धते तापसानां ; पिता च ते कच्चिदहीनतेजाः ।
कच्चित्त्वया प्रीयते चैव विप्र ; कच्चित्स्वाध्यायः क्रियते ऋश्यशृङ्ग ॥ ००८ ॥

ऋश्यशृङ्ग उवाच ॥

ऋद्धो भवाञ्ज्योतिरिव प्रकाशते ; मन्ये चाहं त्वामभिवादनीयम् ।
पाद्यं वै ते संप्रदास्यामि कामा ;द्यथाधर्मं फलमूलानि चैव ॥ ००९ ॥

कौश्यां बृस्यामास्स्व यथोपजोषं ; कृष्णाजिनेनावृतायां सुखायाम् ।
क्व चाश्रमस्तव किं नाम चेदं ; व्रतं ब्रह्मंश्चरसि हि देववत्त्वम् ॥ ०१० ॥

वेश्योवाच ॥

ममाश्रमः काश्यपपुत्र रम्य ;स्त्रियोजनं शैलमिमं परेण ।
तत्र स्वधर्मोऽनभिवादनं नो ; न चोदकं पाद्यमुपस्पृशामः ॥ ०११ ॥

ऋश्यशृङ्ग उवाच ॥

फलानि पक्वानि ददानि तेऽहं ; भल्लातकान्यामलकानि चैव ।
परूषकानीङ्गुदधन्वनानि ; प्रियालानां कामकारं कुरुष्व ॥ ०१२ ॥

लोमश उवाच ॥

सा तानि सर्वाणि विसर्जयित्वा ; भक्षान्महार्हान्प्रददौ ततोऽस्मै ।
तान्यृश्यशृङ्गस्य महारसानि ; भृशं सुरूपाणि रुचिं ददुर्हि ॥ ०१३ ॥

ददौ च माल्यानि सुगन्धवन्ति ; चित्राणि वासांसि च भानुमन्ति ।
पानानि चाग्र्याणि ततो मुमोद ; चिक्रीड चैव प्रजहास चैव ॥ ०१४ ॥

सा कन्दुकेनारमतास्य मूले ; विभज्यमाना फलिता लतेव ।
गात्रैश्च गात्राणि निषेवमाणा ; समाश्लिषच्चासकृदृश्यशृङ्गम् ॥ ०१५ ॥

सर्जानशोकांस्तिलकांश्च वृक्षा ;न्प्रपुष्पितानवनाम्यावभज्य ।
विलज्जमानेव मदाभिभूता ; प्रलोभयामास सुतं महर्षेः ॥ ०१६ ॥

अथर्श्यशृङ्गं विकृतं समीक्ष्य ; पुनः पुनः पीड्य च कायमस्य ।
अवेक्षमाणा शनकैर्जगाम ; कृत्वाग्निहोत्रस्य तदापदेशम् ॥ ०१७ ॥

तस्यां गतायां मदनेन मत्तो ; विचेतनश्चाभवदृश्यशृङ्गः ।
तामेव भावेन गतेन शून्यो ; विनिःश्वसन्नार्तरूपो बभूव ॥ ०१८ ॥

ततो मुहूर्ताद्धरिपिङ्गलाक्षः ; प्रवेष्टितो रोमभिरा नखाग्रात् ।
स्वाध्यायवान्वृत्तसमाधियुक्तो ; विभाण्डकः काश्यपः प्रादुरासीत् ॥ ०१९ ॥

सोऽपश्यदासीनमुपेत्य पुत्रं ; ध्यायन्तमेकं विपरीतचित्तम् ।
विनिःश्वसन्तं मुहुरूर्ध्वदृष्टिं ; विभाण्डकः पुत्रमुवाच दीनम्  ॥ ०२०  ॥

न कल्प्यन्ते समिधः किं नु तात ; कच्चिद्धुतं चाग्निहोत्रं त्वयाद्य ।
सुनिर्णिक्तं स्रुक्स्रुवं होमधेनुः ; कच्चित्सवत्सा च कृता त्वयाद्य  ॥ ०२१  ॥

न वै यथापूर्वमिवासि पुत्र ; चिन्तापरश्चासि विचेतनश्च ।
दीनोऽतिमात्रं त्वमिहाद्य किं नु ; पृच्छामि त्वां क इहाद्यागतोऽभूत्  ॥ ०२२  ॥

---

# अध्याय ११२

ऋश्यशृङ्ग उवाच  ॥

इहागतो जटिलो ब्रह्मचारी ; न वै ह्रस्वो नातिदीर्घो मनस्वी ।
सुवर्णवर्णः कमलायताक्षः ; सुतः सुराणामिव शोभमानः  ॥ ००१  ॥

समृद्धरूपः सवितेव दीप्तः ; सुशुक्लकृष्णाक्षतरश्चकोरैः ।
नीलाः प्रसन्नाश्च जटाः सुगन्धा ; हिरण्यरज्जुग्रथिताः सुदीर्घाः  ॥ ००२  ॥

आधाररूपा पुनरस्य कण्ठे ; विभ्राजते विद्युदिवान्तरिक्षे ।
द्वौ चास्य पिण्डावधरेण कण्ठ ;मजातरोमौ सुमनोहरौ च  ॥ ००३  ॥

विलग्नमध्यश्च स नाभिदेशे ; कटिश्च तस्यातिकृतप्रमाणा ।
तथास्य चीरान्तरिता प्रभाति ; हिरण्मयी मेखला मे यथेयम्  ॥ ००४  ॥

अन्यच्च तस्याद्भुतदर्शनीयं ; विकूजितं पादयोः संप्रभाति ।

पाण्योश्च तद्वत्स्वनवन्निबद्धौ ; कलापकावक्षमाला यथेयम्  ॥ ००५  ॥

विचेष्टमानस्य च तस्य तानि ; कूजन्ति हंसा सरसीव मत्ताः ।
चीराणि तस्याद्भुतदर्शनानि ; नेमानि तद्वन्मम रूपवन्ति  ॥ ००६  ॥

वक्रं च तस्याद्भुतदर्शनीयं ; प्रव्याहृतं ह्लादयतीव चेतः ।
पुंस्कोकिलस्येव च तस्य वाणी ; तां शृण्वतो मे व्यथितोऽन्तरात्मा  ॥ ००७  ॥

यथा वनं माधवमासि मध्ये ; समीरितं श्वसनेनाभिवाति ।
तथा स वात्युत्तमपुण्यगन्धी ; निषेव्यमाणः पवनेन तात  ॥ ००८  ॥

सुसंयताश्चापि जटा विभक्ता ; द्वैधीकृता भान्ति समा ललाटे ।
कर्णौ च चित्रैरिव चक्रवालैः ; समावृतौ तस्य सुरूपवद्भिः  ॥ ००९  ॥

तथा फलं वृत्तमथो विचित्रं ; समाहनत्पाणिना दक्षिणेन ।
तद्भूमिमासाद्य पुनः पुनश्च ; समुत्पतत्यद्भुतरूपमुच्चैः  ॥ ०१०  ॥

तच्चापि हत्वा परिवर्ततेऽसौ ; वातेरितो वृक्ष इवावघूर्णः ।
तं प्रेक्ष्य मे पुत्रमिवामराणां ; प्रीतिः परा तात रतिश्च जाता  ॥ ०११  ॥

स मे समाश्लिष्य पुनः शरीरं ; जटासु गृह्याभ्यवनाम्य वक्त्रम् ।
वक्त्रेण वक्त्रं प्रणिधाय शब्दं ; चकार तन्मेऽजनयत्प्रहर्षम्  ॥ ०१२  ॥

न चापि पाद्यं बहु मन्यतेऽसौ ; फलानि चेमानि मयाहृतानि ।
एवंव्रतोऽस्मीति च मामवोच ;त्फलानि चान्यानि नवान्यदान्मे  ॥ ०१३  ॥

मयोपयुक्तानि फलानि तानि ; नेमानि तुल्यानि रसेन तेषाम् ।
न चापि तेषां त्वगियं यथैषां ; साराणि नैषामिव सन्ति तेषाम्  ॥ ०१४  ॥

तोयानि चैवातिरसानि मह्यं ; प्रादात्स वै पातुमुदाररूपः ।
पीत्वैव यान्यभ्यधिकः प्रहर्षो ; ममाभवद्भूश्चलितेव चासीत्  ॥ ०१५  ॥

इमानि चित्राणि च गन्धवन्ति ; माल्यानि तस्योद्ग्रथितानि पट्टैः ।
यानि प्रकीर्येह गतः स्वमेव ; स आश्रमं तपसा द्योतमानः ॥ ०१६ ॥

गतेन तेनास्मि कृतो विचेता ; गात्रं च मे संपरितप्यतीव ।
इच्छामि तस्यान्तिकमाशु गन्तुं ; तं चेह नित्यं परिवर्तमानम् ॥ ०१७ ॥

गच्छामि तस्यान्तिकमेव तात ; का नाम सा व्रतचर्या च तस्य ।
इच्छाम्यहं चरितुं तेन सार्धं ; यथा तपः स चरत्युग्रकर्मा ॥ ०१८ ॥

---

# अध्याय ११३

विभाण्डक उवाच ॥

रक्षांसि चैतानि चरन्ति पुत्र ; रूपेण तेनाद्भुतदर्शनेन ।
अतुल्यरूपाण्यतिघोरवन्ति ; विघ्नं सदा तपसश्चिन्तयन्ति ॥ ००१ ॥

सुरूपरूपाणि च तानि तात ; प्रलोभयन्ते विविधैरुपायैः ।
सुखाच्च लोकाच्च निपातयन्ति ; तान्युग्रकर्माणि मुनीन्वनेषु ॥ ००२ ॥

न तानि सेवेत मुनिर्यतात्मा ; सतां लोकान्प्रार्थयानः कथञ्चित् ।
कृत्वा विघ्नं तापसानां रमन्ते ; पापाचारास्तपसस्तान्यपाप ॥ ००३ ॥

असज्जनेनाचरितानि पुत्र ; पापान्यपेयानि मधूनि तानि ।
माल्यानि चैतानि न वै मुनीनां ; स्मृतानि चित्रोज्ज्वलगन्धवन्ति ॥ ००४ ॥

लोमश उवाच ॥

रक्षांसि तानीति निवार्य पुत्रं ; विभाण्डकस्तां मृगयां बभूव ।
नासादयामास यदा त्र्यहेण ; तदा स पर्याववृतेऽऽश्रमाय ॥ ००५ ॥

यदा पुनः काश्यपो वै जगाम ; फलान्याहर्तुं विधिना श्रामणेन ।
तदा पुनर्लोभयितुं जगाम ; सा वेशयोषा मुनिमृश्यशृङ्गम् ॥ ००६ ॥

दृष्ट्वैव तामृश्यशृङ्गः प्रहृष्टः ; संभ्रान्तरूपोऽभ्यपतत्तदानीम् ।
प्रोवाच चैनां भवतोऽऽश्रमाय ; गच्छाव यावन्न पिता ममैति ॥ ००७ ॥

ततो राजन्काश्यपस्यैकपुत्रं ; प्रवेश्य योगेन विमुच्य नावम् ।
प्रलोभयन्त्यो विविधैरुपायै ;राजग्मुरङ्गाधिपतेः समीपम् ॥ ००८ ॥

संस्थाप्य तामाश्रमदर्शने तु ; संतारितां नावमतीव शुभ्राम् ।
तीरादुपादाय तथैव चक्रे ; राजाश्रमं नाम वनं विचित्रम् ॥ ००९ ॥

अन्तःपुरे तं तु निवेश्य राजा ; विभाण्डकस्यात्मजमेकपुत्रम् ।
ददर्श देवं सहसा प्रवृष्ट ;मापूर्यमाणं च जगज्जलेन ॥ ०१० ॥

स लोमपादः परिपूर्णकामः ; सुतां ददावृश्यशृङ्गाय शान्ताम् ।
क्रोधप्रतीकारकरं च चक्रे ; गोभिश्च मार्गेष्वभिकर्षणं च ॥ ०११ ॥

विभाण्डकस्याव्रजतः स राजा ; पशून्प्रभूतान्पशुपांश्च वीरान् ।
समादिशत्पुत्रगृद्धी महर्षि ;र्विभाण्डकः परिपृच्छेद्यदा वः ॥ ०१२ ॥

स वक्तव्यः प्राञ्जलिभिर्भवद्भिः ; पुत्रस्य ते पशवः कर्षणं च ।
किं ते प्रियं वै क्रियतां महर्षे ; दासाः स्म सर्वे तव वाचि बद्धाः ॥ ०१३ ॥

अथोपायात्स मुनिश्चण्डकोपः ; स्वमाश्रमं मूलफलानि गृह्य ।
अन्वेषमाणश्च न तत्र पुत्रं ; ददर्श चुक्रोध ततो भृशं सः ॥ ०१४ ॥

ततः स कोपेन विदीर्यमाण ; आशङ्कमानो नृपतेर्विधानम् ।
जगाम चम्पां प्रदिधक्षमाण ;स्तमङ्गराजं विषयं च तस्य ॥ ०१५ ॥

स वै श्रान्तः क्षुधितः काश्यपस्ता ;न्घोषान्समासादितवान्समृद्धान् ।
गोपैश्च तैर्विधिवत्पूज्यमानो ; राजेव तां रात्रिमुवास तत्र ॥ ०१६ ॥

संप्राप्य सत्कारमतीव तेभ्यः ; प्रोवाच कस्य प्रथिताः स्थ सौम्याः ।
ऊचुस्ततस्तेऽभ्युपगम्य सर्वे ; धनं तवेदं विहितं सुतस्य ॥ ०१७ ॥

देशे तु देशे तु स पूज्यमान ;स्तांश्चैव शृण्वन्मधुरान्प्रलापान् ।
प्रशान्तभूयिष्ठरजाः प्रहृष्टः ; समाससादाङ्गपतिं पुरस्थम् ॥ ०१८ ॥

संपूजितस्तेन नरर्षभेण ; ददर्श पुत्रं दिवि देवं यथेन्द्रम् ।
शान्तां स्नुषां चैव ददर्श तत्र ; सौदामिनीमुच्चरन्तीं यथैव ॥ ०१९ ॥

ग्रामांश्च घोषांश्च सुतं च दृष्ट्वा ; शान्तां च शान्तोऽस्य परः स कोपः ।
चकार तस्मै परमं प्रसादं ; विभाण्डको भूमिपतेर्नरेन्द्र ॥ ०२० ॥

स तत्र निक्षिप्य सुतं महर्षि ;रुवाच सूर्याग्निसमप्रभावम् ।
जाते पुत्रे वनमेवाव्रजेथा ; राज्ञः प्रियाण्यस्य सर्वाणि कृत्वा ॥ ०२१ ॥

स तद्वचः कृतवानृश्यश्रृङ्गो ; ययौ च यत्रास्य पिता बभूव ।
शान्ता चैनं पर्यचरद्यथाव ;त्खे रोहिणी सोममिवानुकूला ॥ ०२२ ॥

अरुन्धती वा सुभगा वसिष्ठं ; लोपामुद्रा वापि यथा ह्यगस्त्यम् ।
नलस्य वा दमयन्ती यथाभू ;द्यथा शची वज्रधरस्य चैव ॥ ०२३ ॥

नाडायनी चेन्द्रसेना यथैव ; वश्या नित्यं मुद्गलस्याजमीढ ।
तथा शान्ता ऋश्यश्रृङ्गं वनस्थं ; प्रीत्या युक्ता पर्यचरन्नरेन्द्र ॥ ०२४ ॥

तस्याश्रमः पुण्य एषो विभाति ; महाह्रदं शोभयन्पुण्यकीर्तेः ।

अत्र स्नातः कृतकृत्यो विशुद्ध ;स्तीर्थान्यन्यान्यनुसंयाहि राजन् ॥ ०२५ ॥

---

# अध्याय ११४

वैशंपायन उवाच ॥

ततः प्रयातः कौशिक्याः पाण्डवो जनमेजय ।
आनुपूर्व्येण सर्वाणि जगामायतनान्युत ॥ ००१ ॥

स सागरं समासाद्य गङ्गायाः सङ्गमे नृप ।
नदीशतानां पञ्चानां मध्ये चक्रे समाप्लवम् ॥ ००२ ॥

ततः समुद्रतीरेण जगाम वसुधाधिपः ।
भ्रातृभिः सहितो वीरः कलिङ्गान्प्रति भारत ॥ ००३ ॥

लोमश उवाच ॥

एते कलिङ्गाः कौन्तेय यत्र वैतरणी नदी ।
यत्रायजत धर्मोऽपि देवाञ्शरणमेत्य वै ॥ ००४ ॥

ऋषिभिः समुपायुक्तं यज्ञियं गिरिशोभितम् ।
उत्तरं तीरमेतद्धि सततं द्विजसेवितम् ॥ ००५ ॥

समेन देवयानेन पथा स्वर्गमुपेयुषः ।
अत्र वै ऋषयोऽन्येऽपि पुरा क्रतुभिरीजिरे ॥ ००६ ॥

अत्रैव रुद्रो राजेन्द्र पशुमादत्तवान्मखे ।
रुद्रः पशुं मानवेन्द्र भागोऽयमिति चाब्रवीत् ॥ ००७ ॥

हृते पशौ तदा देवास्तमूचुर्भरतर्षभ ।
मा परस्वमभिद्रोग्धा मा धर्मान्सकलान्नशीः ॥ ००८ ॥

ततः कल्याणरूपाभिर्वाग्भिस्ते रुद्रमस्तुवन् ।
इष्ट्या चैनं तर्पयित्वा मानयां चक्रिरे तदा ॥ ००९ ॥

ततः स पशुमुत्सृज्य देवयानेन जग्मिवान् ।
अत्रानुवंशो रुद्रस्य तं निबोध युधिष्ठिर ॥ ०१० ॥

अयातयामं सर्वेभ्यो भागेभ्यो भागमुत्तमम् ।
देवाः सङ्कल्पयामासुर्भयाद्रुद्रस्य शाश्वतम् ॥ ०११ ॥

इमां गाथामत्र गायन्नपः स्पृशति यो नरः ।
देवयानस्तस्य पन्थाश्चक्षुश्चैव प्रकाशते ॥ ०१२ ॥

वैशंपायन उवाच ॥

ततो वैतरणीं सर्वे पाण्डवा द्रौपदी तथा ।
अवतीर्य महाभागा तर्पयां चक्रिरे पितॄन् ॥ ०१३ ॥

युधिष्ठिर उवाच ॥

उपस्पृश्यैव भगवन्नस्यां नद्यां तपोधन ।
मानुषादस्मि विषयादपेतः पश्य लोमश ॥ ०१४ ॥

सर्वा.णल्लोकान्प्रपश्यामि प्रसादात्तव सुव्रत ।
वैखानसानां जपतामेष शब्दो महात्मनाम् ॥ ०१५ ॥

लोमश उवाच ॥

त्रिशतं वै सहस्राणि योजनानां युधिष्ठिर ।
यत्र ध्वनिं श्रृणोष्येनं तूष्णीमास्स्व विशां पते ॥ ०१६ ॥

एतत्स्वयंभुवो राजन्वनं रम्यं प्रकाशते ।
यत्रायजत कौन्तेय विश्वकर्मा प्रतापवान् ॥ ०१७ ॥

यस्मिन्यज्ञे हि भूर्दत्ता कश्यपाय महात्मने ।
सपर्वतवनोद्देशा दक्षिणा वै स्वयंभुवा ॥ ०१८ ॥

अवासीदच्च कौन्तेय दत्तमात्रा मही तदा ।
उवाच चापि कुपिता लोकेश्वरमिदं प्रभुम् ॥ ०१९ ॥

न मां मर्त्याय भगवन्कस्मैचिद्दातुमर्हसि ।
प्रदानं मोघमेतत्ते यास्याम्येषा रसातलम् ॥ ०२० ॥

विषीदन्तीं तु तां दृष्ट्वा कश्यपो भगवानृषिः ।
प्रसादयां बभूवाथ ततो भूमिं विशां पते ॥ ०२१ ॥

ततः प्रसन्ना पृथिवी तपसा तस्य पाण्डव ।
पुनरुन्मज्ज्य सलिलाद्वेदीरूपा स्थिता बभौ ॥ ०२२ ॥

सैषा प्रकाशते राजन्वेदी संस्थानलक्षणा ।
आरुह्यात्र महाराज वीर्यवान्वै भविष्यसि ॥ ०२३ ॥

अहं च ते स्वस्त्ययनं प्रयोक्ष्ये ; यथा त्वमेनामधिरोक्ष्यसेऽद्य ।
स्पृष्टा हि मर्त्येन ततः समुद्र ;मेषा वेदी प्रविशत्याजमीढ ॥ ०२४ ॥

अग्निर्मित्रो योनिरापोऽथ देव्यो ; विष्णो रेतस्त्वममृतस्य नाभिः ।
एवं ब्रुवन्पाण्डव सत्यवाक्यं ; वेदीमिमां त्वं तरसाधिरोह ॥ ०२५ ॥

वैशंपायन उवाच ॥

ततः कृतस्वस्त्ययनो महात्मा ; युधिष्ठिरः सागरगामगच्छत् ।
कृत्वा च तच्छासनमस्य सर्वं ; महेन्द्रमासाद्य निशामुवास ॥ ०२६ ॥

---

# कार्तवीर्योपाख्यानम्

## अध्याय ११५

वैशंपायन उवाच ॥

स तत्र तामुषित्वैकां रजनीं पृथिवीपतिः ।
तापसानां परं चक्रे सत्कारं भ्रातृभिः सह ॥ ००१ ॥

लोमशश्चास्य तान्सर्वानाचख्यौ तत्र तापसान् ।
भृगूनङ्गिरसश्चैव वासिष्ठानथ काश्यपान् ॥ ००२ ॥

तान्समेत्य स राजर्षिरभिवाद्य कृताञ्जलिः ।
रामस्यानुचरं वीरमपृच्छदकृतव्रणम् ॥ ००३ ॥

कदा नु रामो भगवांस्तापसान्दर्शयिष्यति ।
तेनैवाहं प्रसङ्गेन द्रष्टुमिच्छामि भार्गवम् ॥ ००४ ॥

अकृतव्रण उवाच ॥

आयानेवासि विदितो रामस्य विदितात्मनः ।
प्रीतिस्त्वयि च रामस्य क्षिप्रं त्वां दर्शयिष्यति ॥ ००५ ॥

चतुर्दशीमष्टमीं च रामं पश्यन्ति तापसाः ।
अस्यां रात्र्यां व्यतीतायां भवित्री च चतुर्दशी ॥ ००६ ॥

युधिष्ठिर उवाच ॥

भवाननुगतो वीरं जामदग्न्यं महाबलम् ।
प्रत्यक्षदर्शी सर्वस्य पूर्ववृत्तस्य कर्मणः ॥ ००७ ॥

स भवान्कथयत्वेतद्यथा रामेण निर्जिताः ।
आहवे क्षत्रियाः सर्वे कथं केन च हेतुना ॥ ००८ ॥

अकृतव्रण उवाच ॥

कन्यकुब्जे महानासीत्पार्थिवः सुमहाबलः ।
गाधीति विश्रुतो लोके वनवासं जगाम सः ॥ ००९ ॥

वने तु तस्य वसतः कन्या जज्ञेऽप्सरःसमा ।
ऋचीको भार्गवस्तां च वरयामास भारत ॥ ०१० ॥

तमुवाच ततो राजा ब्राह्मणं संशितव्रतम् ।
उचितं नः कुले किञ्चित्पूर्वैर्यत्संप्रवर्तितम् ॥ ०११ ॥

एकतः श्यामकर्णानां पाण्डुराणां तरस्विनाम् ।
सहस्रं वाजिनां शुल्कमिति विद्धि द्विजोत्तम ॥ ०१२ ॥

न चापि भगवान्वाच्यो दीयतामिति भार्गव ।
देया मे दुहिता चेयं त्वद्विधाय महात्मने ॥ ०१३ ॥

ऋचीक उवाच ॥

एकतःश्यामकर्णानां पाण्डुराणां तरस्विनाम् ।

दास्याम्यश्वसहस्रं ते मम भार्या सुतास्तु ते ॥ ०१४ ॥

अकृतव्रण उवाच ॥

स तथेति प्रतिज्ञाय राजन्वरुणमब्रवीत् ।
एकतःश्यामकर्णानां पाण्डुराणां तरस्विनाम् ॥ ०१५ ॥

सहस्रं वाजिनामेकं शुल्कार्थं मे प्रदीयताम् ॥ ०१५ ॥

तस्मै प्रादात्सहस्रं वै वाजिनां वरुणस्तदा ।
तदश्वतीर्थं विख्यातमुत्थिता यत्र ते हयाः ॥ ०१६ ॥

गङ्गायां कन्यकुब्जे वै ददौ सत्यवतीं तदा ।
ततो गाधिः सुतां तस्मै जन्याश्चासन्सुरास्तदा ॥ ०१७ ॥

लब्ध्वा हयसहस्रं तु तांश्च दृष्ट्वा दिवौकसः ॥ ०१७ ॥

धर्मेण लब्ध्वा तां भार्यामृचीको द्विजसत्तमः ।
यथाकामं यथाजोषं तया रेमे सुमध्यया ॥ ०१८ ॥

तं विवाहे कृते राजन्सभार्यमवलोककः ।
आजगाम भृगुश्रेष्ठः पुत्रं दृष्ट्वा ननन्द च ॥ ०१९ ॥

भार्यापती तमासीनं गुरुं सुरगणार्चितम् ।
अर्चित्वा पर्युपासीनौ प्राञ्जली तस्थतुस्तदा ॥ ०२० ॥

ततः स्नुषां स भगवान्प्रहृष्टो भृगुरब्रवीत् ।
वरं वृणीष्व सुभगे दाता ह्यस्मि तवेप्सितम् ॥ ०२१ ॥

सा वै प्रसादयामास तं गुरुं पुत्रकारणात् ।
आत्मनश्चैव मातुश्च प्रसादं च चकार सः ॥ ०२२ ॥

भृगुरुवाच ॥

ऋतौ त्वं चैव माता च स्नाते पुंसवनाय वै ।
आलिङ्गेतां पृथग्वृक्षौ साश्वत्थं त्वमुदुम्बरम् ॥ ०२३ ॥

आलिङ्गने तु ते राजंश्चक्रतुः स्म विपर्ययम् ।
कदाचिद्भृगुरागच्छत्तं च वेद विपर्ययम् ॥ ०२४ ॥

अथोवाच महातेजा भृगुः सत्यवतीं स्नुषाम् ।
ब्राह्मणः क्षत्रवृत्तिर्वै तव पुत्रो भविष्यति ॥ ०२५ ॥

क्षत्रियो ब्राह्मणाचारो मातुस्तव सुतो महान् ।
भविष्यति महावीर्यः साधूनां मार्गमास्थितः ॥ ०२६ ॥

ततः प्रसादयामास श्वशुरं सा पुनः पुनः ।
न मे पुत्रो भवेदीदृक्कामं पौत्रो भवेदिति ॥ ०२७ ॥

एवमस्त्विति सा तेन पाण्डव प्रतिनन्दिता ।
जमदग्निं ततः पुत्रं सा जज्ञे काल आगते ॥ ०२८ ॥

तेजसा वर्चसा चैव युक्तं भार्गवनन्दनम् ॥ ०२८ ॥

स वर्धमानस्तेजस्वी वेदस्याध्ययनेन वै ।
बहूनृषीन्महातेजाः पाण्डवेयात्यवर्तत ॥ ०२९ ॥

तं तु कृत्स्नो धनुर्वेदः प्रत्यभाद्भरतर्षभ ।
चतुर्विधानि चास्त्राणि भास्करोपमवर्चसम् ॥ ०३० ॥

# अध्याय ११६

अकृतव्रण उवाच ॥

स वेदाध्ययने युक्तो जमदग्निर्महातपाः ।
तपस्तेपे ततो देवान्नियमाद्वशमानयत् ॥ ००१ ॥

स प्रसेनजितं राजन्नधिगम्य नराधिपम् ।
रेणुकां वरयामास स च तस्मै ददौ नृपः ॥ ००२ ॥

रेणुकां त्वथ संप्राप्य भार्यां भार्गवनन्दनः ।
आश्रमस्थस्तया सार्धं तपस्तेपेऽनुकूलया ॥ ००३ ॥

तस्याः कुमाराश्चत्वारो जज्ञिरे रामपञ्चमाः ।
सर्वेषामजघन्यस्तु राम आसीज्जघन्यजः ॥ ००४ ॥

फलाहारेषु सर्वेषु गतेष्वथ सुतेषु वै ।
रेणुका स्नातुमगमत्कदाचिन्नियतव्रता ॥ ००५ ॥

सा तु चित्ररथं नाम मार्त्तिकावतकं नृपम् ।
ददर्श रेणुका राजन्नागच्छन्ती यदृच्छया ॥ ००६ ॥

क्रीडन्तं सलिले दृष्ट्वा सभार्यं पद्ममालिनम् ।
ऋद्धिमन्तं ततस्तस्य स्पृहयामास रेणुका ॥ ००७ ॥

व्यभिचारात्तु सा तस्मात्क्लिन्नाम्भसि विचेतना ।
प्रविवेशाश्रमं त्रस्ता तां वै भर्तान्वबुध्यत ॥ ००८ ॥

स तां दृष्ट्वा च्युतां धैर्याद्ब्राह्म्या लक्ष्म्या विवर्जिताम् ।
धिक्शब्देन महातेजा गर्हयामास वीर्यवान् ॥ ००९ ॥

ततो ज्येष्ठो जामदग्न्यो रुमण्वान्नाम नामतः ।
आजगाम सुषेणश्च वसुर्विश्वावसुस्तथा ॥ ०१० ॥

तानानुपूर्व्याद्भगवान्वधे मातुरचोदयत् ।
न च ते जातसंमोहाः किञ्चिदूचुर्विचेतसः ॥ ०११ ॥

ततः शशाप तान्कोपात्ते शप्ताश्चेतनां जहुः ।
मृगपक्षिसधर्माणः क्षिप्रमासञ्जडोपमाः ॥ ०१२ ॥

ततो रामोऽभ्यगात्पश्चादाश्रमं परवीरहा ।
तमुवाच महामन्युर्जमदग्निर्महातपाः ॥ ०१३ ॥

जहीमां मातरं पापां मा च पुत्र व्यथां कृथाः ।
तत आदाय परशुं रामो मातुः शिरोऽहरत् ॥ ०१४ ॥

ततस्तस्य महाराज जमदग्नेर्महात्मनः ।
कोपो अगच्छत्सहसा प्रसन्नश्चाब्रवीदिदम् ॥ ०१५ ॥

ममेदं वचनात्तात कृतं ते कर्म दुष्करम् ।
वृणीष्व कामान्धर्मज्ञ यावतो वाञ्छसे हृदा ॥ ०१६ ॥

स वव्रे मातुरुत्थानमस्मृतिं च वधस्य वै ।
पापेन तेन चास्पर्शं भ्रातॄणां प्रकृतिं तथा ॥ ०१७ ॥

अप्रतिद्वन्द्वतां युद्धे दीर्घमायुश्च भारत ।
ददौ च सर्वान्कामांस्ताञ्जमदग्निर्महातपाः ॥ ०१८ ॥

कदाचित्तु तथैवास्य विनिष्क्रान्ताः सुताः प्रभो ।
अथानूपपतिर्वीरः कार्तवीर्योऽभ्यवर्तत ॥ ०१९ ॥

तमाश्रमपदं प्राप्तमृषेर्भार्या समर्चयत् ।

स युद्धमदसंमत्तो नाभ्यनन्दत्तथार्चनम् ॥ ०२० ॥

प्रमथ्य चाश्रमात्तस्माद्धोमधेन्वास्तदा बलात् ।
जहार वत्सं क्रोशन्त्या बभञ्ज च महाद्रुमान् ॥ ०२१ ॥

आगताय च रामाय तदाचष्ट पिता स्वयम् ।
गां च रोरूयतीं दृष्ट्वा कोपो रामं समाविशत् ॥ ०२२ ॥

स मन्युवशमापन्नः कार्तवीर्यमुपाद्रवत् ।
तस्याथ युधि विक्रम्य भार्गवः परवीरहा ॥ ०२३ ॥

चिच्छेद निशितैर्भल्लैर्बाहून्परिघसंनिभान् ।
सहस्रसंमितान्राजन्प्रगृह्य रुचिरं धनुः ॥ ०२४ ॥

अर्जुनस्याथ दायादा रामेण कृतमन्यवः ।
आश्रमस्थं विना रामं जमदग्निमुपाद्रवन् ॥ ०२५ ॥

ते तं जघ्नुर्महावीर्यमयुध्यन्तं तपस्विनम् ।
असकृद्राम रामेति विक्रोशन्तमनाथवत् ॥ ०२६ ॥

कार्तवीर्यस्य पुत्रास्तु जमदग्निं युधिष्ठिर ।
घातयित्वा शरैर्जग्मुर्यथागतमरिंदमाः ॥ ०२७ ॥

अपक्रान्तेषु चैतेषु जमदग्नौ तथागते ।
समित्पाणिरुपागच्छदाश्रमं भृगुनन्दनः ॥ ०२८ ॥

स दृष्ट्वा पितरं वीरस्तथा मृत्युवशं गतम् ।
अनर्हन्तं तथाभूतं विललाप सुदुःखितः ॥ ०२९ ॥

# अध्याय ११७

राम उवाच ॥

ममापराधात्तैः क्षुद्रैर्हतस्त्वं तात बालिशैः ।
कार्तवीर्यस्य दायादैर्वने मृग इवेषुभिः ॥ ००१ ॥

धर्मज्ञस्य कथं तात वर्तमानस्य सत्पथे ।
मृत्युरेवंविधो युक्तः सर्वभूतेष्वनागसः ॥ ००२ ॥

किं नु तैर्न कृतं पापं यैर्भवांस्तपसि स्थितः ।
अयुध्यमानो वृद्धः सन्हतः शरशतैः शितैः ॥ ००३ ॥

किं नु ते तत्र वक्ष्यन्ति सचिवेषु सुहृत्सु च ।
अयुध्यमानं धर्मज्ञमेकं हत्वानपत्रपाः ॥ ००४ ॥

अकृतव्रण उवाच ॥

विलप्यैवं स करुणं बहु नानाविधं नृप ।
प्रेतकार्याणि सर्वाणि पितुश्चक्रे महातपाः ॥ ००५ ॥

ददाह पितरं चाग्नौ रामः परपुरञ्जयः ।
प्रतिजज्ञे वधं चापि सर्वक्षत्रस्य भारत ॥ ००६ ॥

सङ्क्रुद्धोऽतिबलः शूरः शस्त्रमादाय वीर्यवान् ।
जघ्निवान्कार्तवीर्यस्य सुतानेकोऽन्तकोपमः ॥ ००७ ॥

तेषां चानुगता ये च क्षत्रियाः क्षत्रियर्षभ ।
तांश्च सर्वानवामृद्नाद्रामः प्रहरतां वरः ॥ ००८ ॥

त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः ।

समन्तपञ्चके पञ्च चकार रुधिरह्रदान्  ॥ ००९  ॥

स तेषु तर्पयामास पितॄन्भृगुकुलोद्वहः ।
साक्षाद्ददर्श चर्चीकं स च रामं न्यवारयत्  ॥ ०१०  ॥

ततो यज्ञेन महता जामदग्न्यः प्रतापवान् ।
तर्पयामास देवेन्द्रमृत्विग्भ्यश्च महीं ददौ  ॥ ०११  ॥

वेदीं चाप्यददद्धैमीं कश्यपाय महात्मने ।
दशव्यामायतां कृत्वा नवोत्सेधां विशां पते  ॥ ०१२  ॥

तां कश्यपस्यानुमते ब्राह्मणाः खण्डशस्तदा ।
व्यभजंस्तेन ते राजन्प्रख्याताः खाण्डवायनाः  ॥ ०१३  ॥

स प्रदाय महीं तस्मै कश्यपाय महात्मने ।
अस्मिन्महेन्द्रे शैलेन्द्रे वसत्यमितविक्रमः  ॥ ०१४  ॥

एवं वैरमभूत्तस्य क्षत्रियैर्लोकवासिभिः ।
पृथिवी चापि विजिता रामेणामिततेजसा  ॥ ०१५  ॥

वैशंपायन उवाच  ॥

ततश्चतुर्दशीं रामः समयेन महामनाः ।
दर्शयामास तान्विप्रान्धर्मराजं च सानुजम्  ॥ ०१६  ॥

स तमानर्च राजेन्द्रो भ्रातृभिः सहितः प्रभुः ।
द्विजानां च परां पूजां चक्रे नृपतिसत्तमः  ॥ ०१७  ॥

अर्चयित्वा जामदग्न्यं पूजितस्तेन चाभिभूः ।
महेन्द्र उष्य तां रात्रिं प्रययौ दक्षिणामुखः  ॥ ०१८  ॥

# अध्याय ११८

वैशंपायन उवाच ॥

गच्छन्स तीर्थानि महानुभावः ; पुण्यानि रम्याणि ददर्श राजा ।
सर्वाणि विप्रैरुपशोभितानि ; क्वचित्क्वचिद्भारत सागरस्य ॥ ००१ ॥

स वृत्तवांस्तेषु कृताभिषेकः ; सहानुजः पार्थिवपुत्रपौत्रः ।
समुद्रगां पुण्यतमां प्रशस्तां ; जगाम पारिक्षित पाण्डुपुत्रः ॥ ००२ ॥

तत्रापि चाप्लुत्य महानुभावः ; संतर्पयामास पितॄन्सुरांश्च ।
द्विजातिमुख्येषु धनं विसृज्य ; गोदावरीं सागरगामगच्छत् ॥ ००३ ॥

ततो विपाप्मा द्रविडेषु राज ;न्समुद्रमासाद्य च लोकपुण्यम् ।
अगस्त्यतीर्थं च पवित्रपुण्यं ; नारीतीर्थान्यथ वीरो ददर्श ॥ ००४ ॥

तत्रार्जुनस्याग्र्यधनुर्धरस्य ; निशम्य तत्कर्म परैरसह्यम् ।
संपूज्यमानः परमर्षिसंघैः ; परां मुदं पाण्डुसुतः स लेभे ॥ ००५ ॥

स तेषु तीर्थेष्वभिषिक्तगात्रः ; कृष्णासहायः सहितोऽनुजैश्च ।
संपूजयन्विक्रममर्जुनस्य ; रेमे महीपालपतिः पृथिव्याम् ॥ ००६ ॥

ततः सहस्राणि गवां प्रदाय ; तीर्थेषु तेष्वम्बुधरोत्तमस्य ।
हृष्टः सह भ्रातृभिरर्जुनस्य ; सङ्कीर्तयामास गवां प्रदानम् ॥ ००७ ॥

स तानि तीर्थानि च सागरस्य ; पुण्यानि चान्यानि बहूनि राजन् ।
क्रमेण गच्छन्परिपूर्णकामः ; शूर्पारकं पुण्यतमं ददर्श ॥ ००८ ॥

तत्रोदधेः कञ्चिदतीत्य देशं ; ख्यातं पृथिव्यां वनमाससाद ।
तप्तं सुरैर्यत्र तपः पुरस्ता ;दिष्टं तथा पुण्यतमैर्नरेन्द्रैः ॥ ००९ ॥

स तत्र तामग्र्यधनुर्धरस्य ; वेदीं ददर्शायतपीनबाहुः ।
ऋचीकपुत्रस्य तपस्विसंघैः ; समावृतां पुण्यकृदर्चनीयाम् ॥ ०१० ॥

ततो वसूनां वसुधाधिपः स ; मरुद्गणानां च तथाश्विनोश्च ।
वैवस्वतादित्यधनेश्वराणा ;मिन्द्रस्य विष्णोः सवितुर्विभोश्च ॥ ०११ ॥

भगस्य चन्द्रस्य दिवाकरस्य ; पतेरपां साध्यगणस्य चैव ।
धातुः पितॄणां च तथा महात्मा ; रुद्रस्य राजन्सगणस्य चैव ॥ ०१२ ॥

सरस्वत्याः सिद्धगणस्य चैव ; पूष्णश्च ये चाप्यमरास्तथान्ये ।
पुण्यानि चाप्यायतनानि तेषां ; ददर्श राजा सुमनोहराणि ॥ ०१३ ॥

तेषूपवासान्विविधानुपोष्य ; दत्त्वा च रत्नानि महाधनानि ।
तीर्थेषु सर्वेषु परिप्लुताङ्गः ; पुनः स शूर्पारकमाजगाम ॥ ०१४ ॥

स तेन तीर्थेन तु सागरस्य ; पुनः प्रयातः सह सोदरीयैः ।
द्विजैः पृथिव्यां प्रथितं महद्भि ;स्तीर्थं प्रभासं समुपाजगाम ॥ ०१५ ॥

तत्राभिषिक्तः पृथुलोहिताक्षः ; सहानुजैर्देवगणान्पितॄंश्च ।
संतर्पयामास तथैव कृष्णा ; ते चापि विप्राः सह लोमशेन ॥ ०१६ ॥

स द्वादशाहं जलवायुभक्षः ; कुर्वन्क्षपाहःसु तदाभिषेकम् ।
समन्ततोऽग्नीनुपदीपयित्वा ; तेपे तपो धर्मभृतां वरिष्ठः ॥ ०१७ ॥

तमुग्रमास्थाय तपश्चरन्तं ; शुश्राव रामश्च जनार्दनश्च ।
तौ सर्ववृष्णिप्रवरौ ससैन्यौ ; युधिष्ठिरं जग्मतुराजमीढम् ॥ ०१८ ॥

ते वृष्णयः पाण्डुसुतान्समीक्ष्य ; भूमौ शयानान्मलदिग्धगात्रान् ।
अनर्हतीं द्रौपदीं चापि दृष्ट्वा ; सुदुःखिताश्चुक्रुशुरार्तनादम् ॥ ०१९ ॥

ततः स रामं च जनार्दनं च ; कार्ष्णिं च साम्बं च शिनेश्च पौत्रम् ।
अन्यांश्च वृष्णीनुपगम्य पूजां ; चक्रे यथाधर्ममदीनसत्त्वः ॥ ०२० ॥

ते चापि सर्वान्प्रतिपूज्य पार्थां ;स्तैः सत्कृताः पाण्डुसुतैस्तथैव ।
युधिष्ठिरं संपरिवार्य राज ;न्नुपाविशन्देवगणा यथेन्द्रम् ॥ ०२१ ॥

तेषां स सर्वं चरितं परेषां ; वने च वासं परमप्रतीतः ।
अस्त्रार्थमिन्द्रस्य गतं च पार्थं ; कृष्णे शशंसामरराजपुत्रम् ॥ ०२२ ॥

श्रुत्वा तु ते तस्य वचः प्रतीता ;स्तांश्चापि दृष्ट्वा सुकृशानतीव ।
नेत्रोद्भवं संमुमुचुर्दशार्हा ; दुःखार्तिजं वारि महानुभावाः ॥ ०२३ ॥

---

# अध्याय ११९

जनमेजय उवाच ॥

प्रभासतीर्थं संप्राप्य वृष्णयः पाण्डवास्तथा ।
किमकुर्वन्कथाश्चैषां कास्तत्रासंस्तपोधन ॥ ००१ ॥

ते हि सर्वे महात्मानः सर्वशास्त्रविशारदाः ।
वृष्णयः पाण्डवाश्चैव सुहृदश्च परस्परम् ॥ ००२ ॥

वैशंपायन उवाच ॥

प्रभासतीर्थं संप्राप्य पुण्यं तीर्थं महोदधेः ।
वृष्णयः पाण्डवान्वीरान्परिवार्योपतस्थिरे ॥ ००३ ॥

ततो गोक्षीरकुन्देन्दुमृणालरजतप्रभः ।
वनमाली हली रामो बभाषे पुष्करेक्षणम् ॥ ००४ ॥

न कृष्ण धर्मश्चरितो भवाय ; जन्तोरधर्मश्च पराभवाय ।
युधिष्ठिरो यत्र जटी महात्मा ; वनाश्रयः क्लिश्यति चीरवासाः ॥ ००५ ॥

दुर्योधनश्चापि महीं प्रशास्ति ; न चास्य भूमिर्विवरं ददाति ।
धर्मादधर्मश्चरितो गरीया ;नितीव मन्येत नरोऽल्पबुद्धिः ॥ ००६ ॥

दुर्योधने चापि विवर्धमाने ; युधिष्ठिरे चासुख आत्तराज्ये ।
किं न्वद्य कर्तव्यमिति प्रजाभिः ; शङ्का मिथः सञ्जनिता नराणाम् ॥ ००७ ॥

अयं हि धर्मप्रभवो नरेन्द्रो ; धर्मे रतः सत्यधृतिः प्रदाता ।
चलेद्धि राज्याच्च सुखाच्च पार्थो ; धर्मादपेतश्च कथं विवर्धेत् ॥ ००८ ॥

कथं नु भीष्मश्च कृपश्च विप्रो ; द्रोणश्च राजा च कुलस्य वृद्धः ।
प्रव्राज्य पार्थान्सुखमाप्नुवन्ति ; धिक्पापबुद्धीन्भरतप्रधानान् ॥ ००९ ॥

किं नाम वक्ष्यत्यवनिप्रधानः ; पितॄन्समागम्य परत्र पापः ।
पुत्रेषु सम्यक्चरितं मयेति ; पुत्रानपापानवरोप्य राज्यात् ॥ ०१० ॥

नासौ धिया संप्रतिपश्यति स्म ; किं नाम कृत्वाहमचक्षुरेवम् ।
जातः पृथिव्यामिति पार्थिवेषु ; प्रव्राज्य कौन्तेयमथापि राज्यात् ॥ ०११ ॥

नूनं समृद्धान्पितृलोकभूमौ ; चामीकराभान्क्षितिजान्प्रफुल्लान् ।
विचित्रवीर्यस्य सुतः सपुत्रः ; कृत्वा नृशंसं बत पश्यति स्म ॥ ०१२ ॥

व्यूढोत्तरांसान्पृथुलोहिताक्षा ;न्नेमान्स्म पृच्छन्स शृणोति नूनम् ।
प्रस्थापयद्यत्स वनं ह्यशङ्को ; युधिष्ठिरं सानुजमात्तशस्त्रम् ॥ ०१३ ॥

योऽयं परेषां पृतनां समृद्धां ; निरायुधो दीर्घभुजो निहन्यात् ।
श्रुत्वैव शब्दं हि वृकोदरस्य ; मुञ्चन्ति सैन्यानि शकृत्समूत्रम् ॥ ०१४ ॥

स क्षुत्पिपासाध्वकृशस्तरस्वी ; समेत्य नानायुधबाणपाणिः ।
वने स्मरन्वासमिमं सुघोरं ; शेषं न कुर्यादिति निश्चितं मे ॥ ०१५ ॥

न ह्यस्य वीर्येण बलेन कश्चि ;त्समः पृथिव्यां भविता नरेषु ।
शीतोष्णवातातपकर्शिताङ्गो ; न शेषमाजावसुहृत्सु कुर्यात् ॥ ०१६ ॥

प्राच्यां नृपानेकरथेन जित्वा ; वृकोदरः सानुचरान्रणेषु ।
स्वस्त्यागमद्योऽतिरथस्तरस्वी ; सोऽयं वने क्लिश्यति चीरवासाः ॥ ०१७ ॥

यो दन्तकूरे व्यजयन्नृदेवा ;न्समागतान्दाक्षिणात्यान्महीपान् ।
तं पश्यतेमं सहदेवमद्य ; तपस्विनं तापसवेषरूपम् ॥ ०१८ ॥

यः पार्थिवानेकरथेन वीरो ; दिशं प्रतीचीं प्रति युद्धशौण्डः ।
सोऽयं वने मूलफलेन जीव ;ञ्जटी चरत्यद्य मलाचिताङ्गः ॥ ०१९ ॥

सत्रे समृद्धेऽति रथस्य राज्ञो ; वेदीतलादुत्पतिता सुता या ।
सेयं वने वासमिमं सुदुःखं ; कथं सहत्यद्य सती सुखार्हा ॥ ०२० ॥

त्रिवर्गमुख्यस्य समीरणस्य ; देवेश्वरस्याप्यथ वाश्विनोश्च ।
एषां सुराणां तनयाः कथं नु ; वने चरन्त्यल्पसुखाः सुखार्हाः ॥ ०२१ ॥

जिते हि धर्मस्य सुते सभार्ये ; सभ्रातृके सानुचरे निरस्ते ।
दुर्योधने चापि विवर्धमाने ; कथं न सीदत्यवनिः सशैला ॥ ०२२ ॥

# अध्याय १२०

सात्यकिरुवाच ॥

न राम कालः परिदेवनाय ; यदुत्तरं तत्र तदेव सर्वे ।
समाचरामो ह्यनतीतकालं ; युधिष्ठिरो यद्यपि नाह किञ्चित् ॥ ००१ ॥

ये नाथवन्तो हि भवन्ति लोके ; ते नात्मना कर्म समारभन्ते ।
तेषां तु कार्येषु भवन्ति नाथाः ; शैब्यादयो राम यथा ययातेः ॥ ००२ ॥

येषां तथा राम समारभन्ते ; कार्याणि नाथाः स्वमतेन लोके ।
ते नाथवन्तः पुरुषप्रवीरा ; नानाथवत्कृच्छ्रमवाप्नुवन्ति ॥ ००३ ॥

कस्मादयं रामजनार्दनौ च ; प्रद्युम्नसाम्बौ च मया समेतौ ।
वसत्यरण्ये सह सोदरीयै ;स्त्रैलोक्यनाथानधिगम्य नाथान् ॥ ००४ ॥

निर्यातु साध्वद्य दशार्हसेना ; प्रभूतनानायुधचित्रवर्मा ।
यमक्षयं गच्छतु धार्तराष्ट्रः ; सबान्धवो वृष्णिबलाभिभूतः ॥ ००५ ॥

त्वं ह्येव कोपात्पृथिवीमपीमां ; संवेष्टयेस्तिष्ठतु शार्ङ्गधन्वा ।
स धार्तराष्ट्रं जहि सानुबन्धं ; वृत्रं यथा देवपतिर्महेन्द्रः ॥ ००६ ॥

भ्राता च मे यश्च सखा गुरुश्च ; जनार्दनस्यात्मसमश्च पार्थः ।
यदर्थमभ्युद्यतमुत्तमं त ;त्करोति कर्माग्र्यमपारणीयम् ॥ ००७ ॥

तस्यास्त्रवर्षाण्यहमुत्तमास्त्रै ;र्विहत्य सर्वाणि रणेऽभिभूय ।
कायाच्छिरः सर्पविषाग्निकल्पैः ; शरोत्तमैरुन्मथितास्मि राम ॥ ००८ ॥

खड्गेन चाहं निशितेन संख्ये ; कायाच्छिरस्तस्य बलात्प्रमथ्य ।
ततोऽस्य सर्वाननुगान्हनिष्ये ; दुर्योधनं चापि कुरूंश्च सर्वान् ॥ ००९ ॥

आत्तायुधं मामिह रौहिणेय ; पश्यन्तु भौमा युधि जातहर्षाः ।
निघ्नन्तमेकं कुरुयोधमुख्या ;न्काले महाकक्षमिवान्तकाग्निः ॥ ०१० ॥

प्रद्युम्नमुक्तान्निशितान्न शक्ताः ; सोढुं कृपद्रोणविकर्णकर्णाः ।
जानामि वीर्यं च तवात्मजस्य ; कार्ष्णिर्भवत्येष यथा रणस्थः ॥ ०११ ॥

साम्बः ससूतं सरथं भुजाभ्यां ; दुःशासनं शास्तु बलात्प्रमथ्य ।
न विद्यते जाम्बवतीसुतस्य ; रणेऽविषह्यं हि रणोत्कटस्य ॥ ०१२ ॥

एतेन बालेन हि शम्बरस्य ; दैत्यस्य सैन्यं सहसा प्रणुन्नम् ।
वृत्तोरुरत्यायतपीनबाहु ;रेतेन संख्ये निहतोऽश्वचक्रः ॥ ०१३ ॥

को नाम साम्बस्य रणे मनुष्यो ; गत्वान्तरं वै भुजयोर्धरेत ॥ ०१३ ॥

यथा प्रविश्यान्तरमन्तकस्य ; काले मनुष्यो न विनिष्क्रमेत ।
तथा प्रविश्यान्तरमस्य संख्ये ; को नाम जीवन्पुनराव्रजेत ॥ ०१४ ॥

द्रोणं च भीष्मं च महारथौ तौ ; सुतैर्वृतं चाप्यथ सोमदत्तम् ।
सर्वाणि सैन्यानि च वासुदेवः ; प्रधक्ष्यते सायकवह्निजालैः ॥ ०१५ ॥

किं नाम लोकेष्वविषह्यमस्ति ; कृष्णस्य सर्वेषु सदैवतेषु ।
आत्तायुधस्योत्तमबाणपाणे ;श्चक्रायुधस्याप्रतिमस्य युद्धे ॥ ०१६ ॥

ततोऽनिरुद्धोऽप्यसिचर्मपाणि ;र्महीमिमां धार्तराष्ट्रैर्विसञ्ज्ञैः ।
हृतोत्तमाङ्गैर्निहतैः करोतु ; कीर्णां कुशैर्वेदिमिवाध्वरेषु ॥ ०१७ ॥

गदोल्मुकौ बाहुकभानुनीथाः ; शूरश्च संख्ये निशठः कुमारः ।
रणोत्कटौ सारणचारुदेष्णौ ; कुलोचितं विप्रथयन्तु कर्म ॥ ०१८ ॥

सवृष्णिभोजान्धकयोधमुख्या ; समागता क्षत्रियशूरसेना ।
हत्वा रणे तान्धृतराष्ट्रपुत्रा.ण्;ल्लोके यशः स्फीतमुपाकरोतु ॥ ०१९ ॥

ततोऽभिमन्युः पृथिवीं प्रशास्तु ; यावद्व्रतं धर्मभृतां वरिष्ठः ।
युधिष्ठिरः पारयते महात्मा ; द्यूते यथोक्तं कुरुसत्तमेन ॥ ०२० ॥

अस्मत्प्रमुक्तैर्विशिखैर्जितारि ;स्ततो महीं भोक्ष्यति धर्मराजः ।
निर्धार्तराष्ट्रां हतसूतपुत्रा ;मेतद्धि नः कृत्यतमं यशस्यम् ॥ ०२१ ॥

वासुदेव उवाच ॥

असंशयं माधव सत्यमेत ;द्गृह्णीम ते वाक्यमदीनसत्त्व ।
स्वाभ्यां भुजाभ्यामजितां तु भूमिं ; नेच्छेत्कुरूणामृषभः कथञ्चित् ॥ ०२२ ॥

न ह्येष कामान्न भयान्न लोभा ;द्युधिष्ठिरो जातु जह्यात्स्वधर्मम् ।
भीमार्जुनौ चातिरथौ यमौ वा ; तथैव कृष्णा द्रुपदात्मजेयम् ॥ ०२३ ॥

उभौ हि युद्धेऽप्रतिमौ पृथिव्यां ; वृकोदरश्चैव धनञ्जयश्च ।
कस्मान्न कृत्स्नां पृथिवीं प्रशासे ;न्माद्रीसुताभ्यां च पुरस्कृतोऽयम् ॥ ०२४ ॥

यदा तु पाञ्चालपतिर्महात्मा ; सकेकयश्चेदिपतिर्वयं च ।
योत्स्याम विक्रम्य परांस्तदा वै ; सुयोधनस्त्यक्ष्यति जीवलोकम् ॥ ०२५ ॥

युधिष्ठिर उवाच ॥

नैतच्चित्रं माधव यद्ब्रवीषि ; सत्यं तु मे रक्ष्यतमं न राज्यम् ।
कृष्णस्तु मां वेद यथावदेकः ; कृष्णं च वेदाहमथो यथावत् ॥ ०२६ ॥

यदैव कालं पुरुषप्रवीरो ; वेत्स्यत्ययं माधव विक्रमस्य ।
तदा रणे त्वं च शिनिप्रवीर ; सुयोधनं जेष्यसि केशवश्च ॥ ०२७ ॥

प्रतिप्रयान्त्वद्य दशार्हवीरा ; दृढोऽस्मि नाथैर्नरलोकनाथैः ।
धर्मेऽप्रमादं कुरुताप्रमेया ; द्रष्टास्मि भूयः सुखिनः समेतान् ॥ ०२८ ॥

वैशंपायन उवाच ॥

तेऽन्योन्यमामन्त्र्य तथाभिवाद्य ; वृद्धान्परिस्वज्य शिशूंश्च सर्वान् ।
यदुप्रवीराः स्वगृहाणि जग्मू ; राजापि तीर्थान्यनुसञ्चचार ॥ ०२९ ॥

विसृज्य कृष्णं त्वथ धर्मराजो ; विदर्भराजोपचितां सुतीर्थाम् ।
सुतेन सोमेन विमिश्रितोदां ; ततः पयोष्णीं प्रति स ह्युवास ॥ ०३० ॥

---

# अध्याय १२१

लोमश उवाच ॥

नृगेण यजमानेन सोमेनेह पुरंदरः ।
तर्पितः श्रूयते राजन्स तृप्तो मदमभ्यगात् ॥ ००१ ॥

इह देवैः सहेन्द्रैर्हि प्रजापतिभिरेव च ।
इष्टं बहुविधैर्यज्ञैर्महद्भिर्भूरिदक्षिणैः ॥ ००२ ॥

आमूर्तरयसश्चेह राजा वज्रधरं प्रभुम् ।
तर्पयामास सोमेन हयमेधेषु सप्तसु ॥ ००३ ॥

तस्य सप्तसु यज्ञेषु सर्वमासीद्धिरण्मयम् ।
वानस्पत्यं च भौमं च यद्द्रव्यं नियतं मखे ॥ ००४ ॥

तेष्वेव चास्य यज्ञेषु प्रयोगाः सप्त विश्रुताः ।
सप्तैकैकस्य यूपस्य चषालाश्चोपरि स्थिताः ॥ ००५ ॥

तस्य स्म यूपान्यज्ञेषु भ्राजमानान्हिरण्मयान् ।
स्वयमुत्थापयामासुर्देवाः सेन्द्रा युधिष्ठिर ॥ ००६ ॥

तेषु तस्य मखाग्र्येषु गयस्य पृथिवीपतेः ।
अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ॥ ००७ ॥

सिकता वा यथा लोके यथा वा दिवि तारकाः ।
यथा वा वर्षतो धारा असंख्येयाश्च केनचित् ॥ ००८ ॥

तथैव तदसंख्येयं धनं यत्प्रददौ गयः ।
सदस्येभ्यो महाराज तेषु यज्ञेषु सप्तसु ॥ ००९ ॥

भवेत्संख्येयमेतद्वै यदेतत्परिकीर्तितम् ।
न सा शक्या तु संख्यातुं दक्षिणा दक्षिणावतः ॥ ०१० ॥

हिरण्मयीभिर्गोभिश्च कृताभिर्विश्वकर्मणा ।
ब्राह्मणांस्तर्पयामास नानादिग्भ्यः समागतान् ॥ ०११ ॥

अल्पावशेषा पृथिवी चैत्यैरासीन्महात्मनः ।
गयस्य यजमानस्य तत्र तत्र विशां पते ॥ ०१२ ॥

स लोकान्प्राप्तवानैन्द्रान्कर्मणा तेन भारत ।
सलोकतां तस्य गच्छेत्पयोष्ण्यां य उपस्पृशेत् ॥ ०१३ ॥

तस्मात्त्वमत्र राजेन्द्र भ्रातृभिः सहितोऽनघ ।
उपस्पृश्य महीपाल धूतपाप्मा भविष्यसि ॥ ०१४ ॥

वैशंपायन उवाच ॥

स पयोष्ण्यां नरश्रेष्ठः स्नात्वा वै भ्रातृभिः सह ।
वैडूर्यपर्वतं चैव नर्मदां च महानदीम् ॥ ०१५ ॥

समाजगाम तेजस्वी भ्रातृभिः सहितोऽनघः ॥ ०१५ ॥

ततोऽस्य सर्वाण्याचख्यौ लोमशो भगवानृषिः ।
तीर्थानि रमणीयानि तत्र तत्र विशां पते ॥ ०१६ ॥

यथायोगं यथाप्रीति प्रययौ भ्रातृभिः सह ।
ददमानोऽसकृद्वित्तं ब्राह्मणेभ्यः सहस्रशः ॥ ०१७ ॥

लोमश उवाच ॥

देवानामेति कौन्तेय तथा राज्ञां सलोकताम् ।
वैडूर्यपर्वतं दृष्ट्वा नर्मदामवतीर्य च ॥ ०१८ ॥

संधिरेष नरश्रेष्ठ त्रेताया द्वापरस्य च ।
एतमासाद्य कौन्तेय सर्वपापैः प्रमुच्यते ॥ ०१९ ॥

एष शर्यातियज्ञस्य देशस्तात प्रकाशते ।
साक्षाद्यत्रापिबत्सोममश्विभ्यां सह कौशिकः ॥ ०२० ॥

चुकोप भार्गवश्चापि महेन्द्रस्य महातपाः ।
संस्तम्भयामास च तं वासवं च्यवनः प्रभुः ॥ ०२१ ॥

सुकन्यां चापि भार्यां स राजपुत्रीमिवाप्तवान् ॥ ०२१ ॥

युधिष्ठिर उवाच ॥

कथं विष्टम्भितस्तेन भगवान्पाकशासनः ।
किमर्थं भार्गवश्चापि कोपं चक्रे महातपाः ॥ ०२२ ॥

नासत्यौ च कथं ब्रह्मन्कृतवान्सोमपीथिनौ ।
एतत्सर्वं यथावृत्तमाख्यातु भगवान्मम ॥ ०२३ ॥

---

# सुकन्योपाख्यानम्

## अध्याय १२२

लोमश उवाच ॥

भृगोर्महर्षेः पुत्रोऽभूच्च्यवनो नाम भार्गवः ।
समीपे सरसः सोऽस्य तपस्तेपे महाद्युतिः ॥ ००१ ॥

स्थाणुभूतो महातेजा वीरस्थानेन पाण्डव ।
अतिष्ठत्सुबहून्कालानेकदेशे विशां पते ॥ ००२ ॥

स वल्मीकोऽभवदृषिर्लताभिरभिसंवृतः ।
कालेन महता राजन्समाकीर्णः पिपीलिकैः ॥ ००३ ॥

तथा स संवृतो धीमान्मृत्पिण्ड इव सर्वशः ।
तप्यति स्म तपो राजन्वल्मीकेन समावृतः ॥ ००४ ॥

अथ दीर्घस्य कालस्य शर्यातिर्नाम पार्थिवः ।
आजगाम सरो रम्यं विहर्तुमिदमुत्तमम् ॥ ००५ ॥

तस्य स्त्रीणां सहस्त्राणि चत्वार्यासन्परिग्रहः ।
एकैव च सुता शुभ्रा सुकन्या नाम भारत ॥ ००६ ॥

सा सखीभिः परिवृता सर्वाभरणभूषिता ।
चङ्क्रम्यमाणा वल्मीकं भार्गवस्य समासदत् ॥ ००७ ॥

सा चैव सुदती तत्र पश्यमाना मनोरमान् ।
वनस्पतीन्विचिन्वन्ती विजहार सखीवृता ॥ ००८ ॥

रूपेण वयसा चैव मदनेन मदेन च ।
बभञ्ज वनवृक्षाणां शाखाः परमपुष्पिताः ॥ ००९ ॥

तां सखीरहितामेकामेकवस्त्रामलङ्कृताम् ।
ददर्श भार्गवो धीमांश्चरन्तीमिव विद्युतम् ॥ ०१० ॥

तां पश्यमानो विजने स रेमे परमद्युतिः ।
क्षामकण्ठश्च ब्रह्मर्षिस्तपोबलसमन्वितः ॥ ०११ ॥

तामाबभाषे कल्याणीं सा चास्य न शृणोति वै ॥ ०११ ॥

ततः सुकन्या वल्मीके दृष्ट्वा भार्गवचक्षुषी ।
कौतूहलात्कण्टकेन बुद्धिमोहबलात्कृता ॥ ०१२ ॥

किं नु खल्विदमित्युक्त्वा निर्बिभेदास्य लोचने ।
अक्रुध्यत्स तया विद्धे नेत्रे परममन्युमान् ॥ ०१३ ॥

ततः शर्यातिसैन्यस्य शकृन्मूत्रं समावृणोत् ॥ ०१३ ॥

ततो रुद्धे शकृन्मूत्रे सैन्यमानाहदुःखितम् ।
तथागतमभिप्रेक्ष्य पर्यपृच्छत्स पार्थिवः ॥ ०१४ ॥

तपोनित्यस्य वृद्धस्य रोषणस्य विशेषतः ।
केनापकृतमद्येह भार्गवस्य महात्मनः ॥ ०१५ ॥

ज्ञातं वा यदि वाज्ञातं तद्दतं ब्रूत माचिरम् ॥ ०१५ ॥

तमूचुः सैनिकाः सर्वे न विद्मोऽपकृतं वयम् ।
सर्वोपायैर्यथाकामं भवांस्तदधिगच्छतु ॥ ०१६ ॥

ततः स पृथिवीपालः साम्ना चोग्रेण च स्वयम् ।
पर्यपृच्छत्सुहृद्वर्गं प्रत्यजानन्न चैव ते ॥ ०१७ ॥

आनाहार्तं ततो दृष्ट्वा तत्सैन्यमसुखार्दितम् ।
पितरं दुःखितं चापि सुकन्येदमथाब्रवीत् ॥ ०१८ ॥

मयाटन्त्येह वल्मीके दृष्टं सत्त्वमभिज्वलत् ।
खद्योतवदभिज्ञातं तन्मया विद्धमन्तिकात् ॥ ०१९ ॥

एतच्छ्रुत्वा तु शर्यातिर्वल्मीकं तूर्णमाद्रवत् ।
तत्रापश्यत्तपोवृद्धं वयोवृद्धं च भार्गवम् ॥ ०२० ॥

अयाचदथ सैन्यार्थं प्राञ्जलिः पृथिवीपतिः ।
अज्ञानाद्बालया यत्ते कृतं तत्क्षन्तुमर्हसि ॥ ०२१ ॥

ततोऽब्रवीन्महीपालं च्यवनो भार्गवस्तदा ।
रूपौदार्यसमायुक्तां लोभमोहबलात्कृताम् ॥ ०२२ ॥

तामेव प्रतिगृह्याहं राजन्दुहितरं तव ।
क्षमिष्यामि महीपाल सत्यमेतद्ब्रवीमि ते ॥ ०२३ ॥

ऋषेर्वचनमाज्ञाय शर्यातिरविचारयन् ।
ददौ दुहितरं तस्मै च्यवनाय महात्मने ॥ ०२४ ॥

प्रतिगृह्य च तां कन्यां च्यवनः प्रससाद ह ।
प्राप्तप्रसादो राजा स ससैन्यः पुनराव्रजत् ॥ ०२५ ॥

सुकन्यापि पतिं लब्ध्वा तपस्विनमनिन्दिता ।
नित्यं पर्यचरत्प्रीत्या तपसा नियमेन च ॥ ०२६ ॥

अग्नीनामतिथीनां च शुश्रूषुरनसूयिका ।
समाराधयत क्षिप्रं च्यवनं सा शुभानना ॥ ०२७ ॥

---

# अध्याय १२३

लोमश उवाच ॥

कस्यचित्त्वथ कालस्य सुराणामश्विनौ नृप ।
कृताभिषेकां विवृतां सुकन्यां तामपश्यताम् ॥ ००१ ॥

तां दृष्ट्वा दर्शनीयाङ्गीं देवराजसुतामिव ।
ऊचतुः समभिद्रुत्य नासत्यावश्विनाविदम् ॥ ००२ ॥

कस्य त्वमसि वामोरु किं वने वै करोषि च ।
इच्छाव भद्रे ज्ञातुं त्वां तत्त्वमाख्याहि शोभने ॥ ००३ ॥

ततः सुकन्या संवीता तावुवाच सुरोत्तमौ ।
शर्यातितनयां वित्तं भार्यां च च्यवनस्य माम् ॥ ००४ ॥

अथाश्विनौ प्रहस्यैतामब्रूतां पुनरेव तु ।
कथं त्वमसि कल्याणि पित्रा दत्ता गताध्वने ॥ ००५ ॥

भ्राजसे वनमध्ये त्वं विद्युत्सौदामिनी यथा ।
न देवेष्वपि तुल्यां हि त्वया पश्याव भामिनि ॥ ००६ ॥

सर्वाभरणसंपन्ना परमाम्बरधारिणी ।
शोभेथास्त्वनवद्याङ्गि न त्वेवं मलपङ्किनी ॥ ००७ ॥

कस्मादेवंविधा भूत्वा जराजर्जरितं पतिम् ।
त्वमुपास्से ह कल्याणि कामभोगबहिष्कृतम् ॥ ००८ ॥

असमर्थं परित्राणे पोषणे च शुचिस्मिते ।
साधु च्यवनमुत्सृज्य वरयस्वैकमावयोः ॥ ००९ ॥

पत्यर्थं देवगर्भाभे मा वृथा यौवनं कृथाः ॥ ००९ ॥

एवमुक्ता सुकन्या तु सुरौ ताविदमब्रवीत् ।
रताहं च्यवने पत्यौ मैवं मा पर्यशङ्किथाः ॥ ०१० ॥

तावब्रूतां पुनस्त्वेनामावां देवभिषग्वरौ ।
युवानं रूपसंपन्नं करिष्यावः पतिं तव ॥ ०११ ॥

ततस्तस्यावयोश्चैव पतिमेकतमं वृणु ।
एतेन समयेनैनमामन्त्रय वरानने ॥ ०१२ ॥

सा तयोर्वचनाद्राजन्नुपसङ्गम्य भार्गवम् ।
उवाच वाक्यं यत्ताभ्यामुक्तं भृगुसुतं प्रति ॥ ०१३ ॥

तच्छ्रुत्वा च्यवनो भार्यामुवाच क्रियतामिति ।
भर्त्रा सा समनुज्ञाता क्रियतामित्यथाब्रवीत् ॥ ०१४ ॥

श्रुत्वा तदश्विनौ वाक्यं तत्तस्याः क्रियतामिति ।

ऊचतू राजपुत्रीं तां पतिस्तव विशत्वपः ॥ ०१५ ॥

ततोऽम्भश्च्यवनः शीघ्रं रूपार्थी प्रविवेश ह ।
अश्विनावपि तद्राजन्सरः प्रविशतां प्रभो ॥ ०१६ ॥

ततो मुहूर्तादुत्तीर्णाः सर्वे ते सरसस्ततः ।
दिव्यरूपधराः सर्वे युवानो मृष्टकुण्डलाः ॥ ०१७ ॥

तुल्यरूपधराश्चैव मनसः प्रीतिवर्धनाः ॥ ०१७ ॥

तेऽब्रुवन्सहिताः सर्वे वृणीष्वान्यतमं शुभे ।
अस्माकमीप्सितं भद्रे पतित्वे वरवर्णिनि ॥ ०१८ ॥

यत्र वाप्यभिकामासि तं वृणीष्व सुशोभने ॥ ०१८ ॥

सा समीक्ष्य तु तान्सर्वांस्तुल्यरूपधरान्स्थितान् ।
निश्चित्य मनसा बुद्ध्या देवी वव्रे स्वकं पतिम् ॥ ०१९ ॥

लब्ध्वा तु च्यवनो भार्यां वयोरूपं च वाञ्छितम् ।
हृष्टोऽब्रवीन्महातेजास्तौ नासत्याविदं वचः ॥ ०२० ॥

यथाहं रूपसंपन्नो वयसा च समन्वितः ।
कृतो भवद्भ्यां वृद्धः सन्भार्यां च प्राप्तवानिमाम् ॥ ०२१ ॥

तस्माद्युवां करिष्यामि प्रीत्याहं सोमपीथिनौ ।
मिषतो देवराजस्य सत्यमेतद्ब्रवीमि वाम् ॥ ०२२ ॥

तच्छ्रुत्वा हृष्टमनसौ दिवं तौ प्रतिजग्मतुः ।
च्यवनोऽपि सुकन्या च सुराविव विजह्रतुः ॥ ०२३ ॥

# अध्याय १२४

लोमश उवाच ॥

ततः श्रुत्वा तु शर्यातिर्वयःस्थं च्यवनं कृतम् ।
संहृष्टः सेनया सार्धमुपायाद्भार्गवाश्रमम् ॥ ००१ ॥

च्यवनं च सुकन्यां च दृष्ट्वा देवसुताविव ।
रेमे महीपः शर्यातिः कृत्स्नां प्राप्य महीमिव ॥ ००२ ॥

ऋषिणा सत्कृतस्तेन सभार्यः पृथिवीपतिः ।
उपोपविष्टः कल्याणीः कथाश्चक्रे महामनाः ॥ ००३ ॥

अथैनं भार्गवो राजन्नुवाच परिसान्त्वयन् ।
याजयिष्यामि राजंस्त्वां संभारानुपकल्पय ॥ ००४ ॥

ततः परमसंहृष्टः शर्यातिः पृथिवीपतिः ।
च्यवनस्य महाराज तद्वाक्यं प्रत्यपूजयत् ॥ ००५ ॥

प्रशस्तेऽहनि यज्ञीये सर्वकामसमृद्धिमत् ।
कारयामास शर्यातिर्यज्ञायतनमुत्तमम् ॥ ००६ ॥

तत्रैनं च्यवनो राजन्याजयामास भार्गवः ।
अद्भुतानि च तत्रासन्यानि तानि निबोध मे ॥ ००७ ॥

अगृह्णाच्च्यवनः सोममश्विनोर्देवयोस्तदा ।
तमिन्द्रो वारयामास गृह्यमाणं तयोर्ग्रहम् ॥ ००८ ॥

इन्द्र उवाच ॥

उभावेतौ न सोमार्हौ नासत्याविति मे मतिः ।
भिषजौ देवपुत्राणां कर्मणा नैवमर्हतः ॥ ००९ ॥

च्यवन उवाच ॥

मावमंस्था महात्मानौ रूपद्रविणवत्तरौ ।
यौ चक्रतुर्मां मघवन्वृन्दारकमिवाजरम् ॥ ०१० ॥

ऋते त्वां विबुधांश्चान्यान्कथं वै नार्हतः सवम् ।
अश्विनावपि देवेन्द्र देवौ विद्धि पुरंदर ॥ ०११ ॥

इन्द्र उवाच ॥

चिकित्सकौ कर्मकरौ कामरूपसमन्वितौ ।
लोके चरन्तौ मर्त्यानां कथं सोममिहार्हतः ॥ ०१२ ॥

लोमश उवाच ॥

एतदेव यदा वाक्यमाम्रेडयति वासवः ।
अनादृत्य ततः शक्रं ग्रहं जग्राह भार्गवः ॥ ०१३ ॥

ग्रहीष्यन्तं तु तं सोममश्विनोरुत्तमं तदा ।
समीक्ष्य बलभिद्देव इदं वचनमब्रवीत् ॥ ०१४ ॥

आभ्यामर्थाय सोमं त्वं ग्रहीष्यसि यदि स्वयम् ।
वज्रं ते प्रहरिष्यामि घोररूपमनुत्तमम् ॥ ०१५ ॥

एवमुक्तः स्मयन्निन्द्रमभिवीक्ष्य स भार्गवः ।
जग्राह विधिवत्सोममश्विभ्यामुत्तमं ग्रहम् ॥ ०१६ ॥

ततोऽस्मै प्राहरद्वज्रं घोररूपं शचीपतिः ।

तस्य प्रहरतो बाहुं स्तम्भयामास भार्गवः ॥ ०१७ ॥

संस्तम्भयित्वा च्यवनो जुहुवे मन्त्रतोऽनलम् ।
कृत्यार्थी सुमहातेजा देवं हिंसितुमुद्यतः ॥ ०१८ ॥

ततः कृत्या समभवदृषेस्तस्य तपोबलात् ।
मदो नाम महावीर्यो बृहत्कायो महासुरः ॥ ०१९ ॥

शरीरं यस्य निर्देष्टुमशक्यं तु सुरासुरैः ॥ ०१९ ॥

तस्यास्यमभवद्घोरं तीक्ष्णाग्रदशनं महत् ।
हनुरेका स्थिता तस्य भूमावेका दिवं गता ॥ ०२० ॥

चतस्र आयता दंष्ट्रा योजनानां शतं शतम् ।
इतरे त्वस्य दशना बभूवुर्दशयोजनाः ॥ ०२१ ॥

प्राकारसदृशाकाराः शूलाग्रसमदर्शनाः ॥ ०२१ ॥

बाहू पर्वतसङ्काशावायतावयुतं समौ ।
नेत्रे रविशशिप्रख्ये वक्त्रमन्तकसंनिभम् ॥ ०२२ ॥

लेलिहञ्जिह्वया वक्त्रं विद्युच्चपललोलया ।
व्यात्ताननो घोरदृष्टिर्ग्रसन्निव जगद्बलात् ॥ ०२३ ॥

स भक्षयिष्यन्सङ्क्रुद्धः शतक्रतुमुपाद्रवत् ।
महता घोररूपेण लोकाञ्शब्देन नादयन् ॥ ०२४ ॥

# अध्याय १२५

लोमश उवाच ॥

तं दृष्ट्वा घोरवदनं मदं देवः शतक्रतुः ।
आयान्तं भक्षयिष्यन्तं व्यात्ताननमिवान्तकम् ॥ ००१ ॥

भयात्संस्तम्भितभुजः सृक्किणी लेलिहन्मुहुः ।
ततोऽब्रवीद्देवराजश्च्यवनं भयपीडितः ॥ ००२ ॥

सोमार्हावश्विनावेतावद्य प्रभृति भार्गव ।
भविष्यतः सत्यमेतद्वचो ब्रह्मन्ब्रवीमि ते ॥ ००३ ॥

न ते मिथ्या समारम्भो भवत्वेष परो विधिः ।
जानामि चाहं विप्रर्षे न मिथ्या त्वं करिष्यसि ॥ ००४ ॥

सोमार्हावश्विनावेतौ यथैवाद्य कृतौ त्वया ।
भूय एव तु ते वीर्यं प्रकाशेदिति भार्गव ॥ ००५ ॥

सुकन्यायाः पितुश्चास्य लोके कीर्तिः प्रथेदिति ।
अतो मयैतद्विहितं तव वीर्यप्रकाशनम् ॥ ००६ ॥

तस्मात्प्रसादं कुरु मे भवत्वेतद्यथेच्छसि ॥ ००६ ॥

एवमुक्तस्य शक्रेण च्यवनस्य महात्मनः ।
स मन्युर्व्यगमच्छीघ्रं मुमोच च पुरंदरम् ॥ ००७ ॥

मदं च व्यभजद्राजन्पाने स्त्रीषु च वीर्यवान् ।
अक्षेषु मृगयायां च पूर्वसृष्टं पुनः पुनः ॥ ००८ ॥

तथा मदं विनिष्क्षिप्य शक्रं संतर्प्य चेन्दुना ।

अश्विभ्यां सहितान्देवान्याजयित्वा च तं नृपम्  ॥ ००९  ॥

विख्याप्य वीर्यं सर्वेषु लोकेषु वदतां वरः ।
सुकन्यया सहारण्ये विजहारानुरक्तया  ॥ ०१०  ॥

तस्यैतद्द्विजसंघुष्टं सरो राजन्प्रकाशते ।
अत्र त्वं सह सोदर्यैः पितॄन्देवांश्च तर्पय  ॥ ०११  ॥

एतद्दृष्ट्वा महीपाल सिकताक्षं च भारत ।
सैन्धवारण्यमासाद्य कुल्यानां कुरु दर्शनम्  ॥ ०१२  ॥

पुष्करेषु महाराज सर्वेषु च जलं स्पृश  ॥ ०१२  ॥

आर्चीकपर्वतश्चैव निवासो वै मनीषिणाम् ।
सदाफलः सदास्त्रोतो मरुतां स्थानमुत्तमम्  ॥ ०१३  ॥

चैत्याश्चैते बहुशतास्त्रिदशानां युधिष्ठिर  ॥ ०१३  ॥

एतच्चन्द्रमसस्तीर्थमृषयः पर्युपासते ।
वैखानसाश्च ऋषयो वालखिल्यास्तथैव च  ॥ ०१४  ॥

शृङ्गाणि त्रीणि पुण्याणि त्रीणि प्रस्त्रवणानि च ।
सर्वाण्यनुपरिक्रम्य यथाकाममुपस्पृश  ॥ ०१५  ॥

शंतनुश्चात्र कौन्तेय शुनकश्च नराधिप ।
नरनारायणौ चोभौ स्थानं प्राप्ताः सनातनम्  ॥ ०१६  ॥

इह नित्यशया देवाः पितरश्च महर्षिभिः ।
आर्चीकपर्वते तेपुस्तान्यजस्व युधिष्ठिर  ॥ ०१७  ॥

इह ते वै चरून्प्राश्नन्नृषयश्च विशां पते ।

यमुना चाक्षयस्रोताः कृष्णश्चेह तपोरतः ॥ ०१८ ॥

यमौ च भीमसेनश्च कृष्णा चामित्रकर्शन ।
सर्वे चात्र गमिष्यामः सुकृशाः सुतपस्विनः ॥ ०१९ ॥

एतत्प्रस्रवणं पुण्यमिन्द्रस्य मनुजाधिप ।
यत्र धाता विधाता च वरुणश्चोर्ध्वमागताः ॥ ०२० ॥

इह ते न्यवसन्राजन्क्षान्ताः परमधर्मिणः ।
मैत्राणामृजुबुद्धीनामयं गिरिवरः शुभः ॥ ०२१ ॥

एषा सा यमुना राजन्राजर्षिगणसेविता ।
नानायज्ञचिता राजन्पुण्या पापभयापहा ॥ ०२२ ॥

अत्र राजा महेष्वासो मान्धातायजत स्वयम् ।
सहदेवश्च कौन्तेय सोमको ददतां वरः ॥ ०२३ ॥

---

# मान्धात्रुपाख्यानम्

## अध्याय १२६

युधिष्ठिर उवाच ॥

मान्धाता राजशार्दूलस्त्रिषु लोकेषु विश्रुतः ।
कथं जातो महाब्रह्मन्यौवनाश्वो नृपोत्तमः ॥ ००१ ॥

कथं चैतां परां काष्ठां प्राप्तवानमितद्युतिः ॥ ००१ ॥

यस्य लोकास्त्रयो वश्या विष्णोरिव महात्मनः ।
एतदिच्छाम्यहं श्रोतुं चरितं तस्य धीमतः ॥ ००२ ॥

यथा मान्धातृशब्दश्च तस्य शक्रसमद्युतेः ।
जन्म चाप्रतिवीर्यस्य कुशलो ह्यसि भाषितुम् ॥ ००३ ॥

लोमश उवाच ॥

शृणुष्वावहितो राजन्राज्ञस्तस्य महात्मनः ।
यथा मान्धातृशब्दो वै लोकेषु परिगीयते ॥ ००४ ॥

इक्ष्वाकुवंशप्रभवो युवनाश्वो महीपतिः ।
सोऽयजत्पृथिवीपाल क्रतुभिर्भूरिदक्षिणैः ॥ ००५ ॥

अश्वमेधसहस्रं च प्राप्य धर्मभृतां वरः ।
अन्यैश्च क्रतुभिर्मुख्यैर्विविधैराप्तदक्षिणैः ॥ ००६ ॥

अनपत्यस्तु राजर्षिः स महात्मा दृढव्रतः ।
मन्त्रिष्वाधाय तद्राज्यं वननित्यो बभूव ह ॥ ००७ ॥

शास्त्रदृष्टेन विधिना संयोज्यात्मानमात्मना ।
पिपासाशुष्कहृदयः प्रविवेशाश्रमं भृगोः ॥ ००८ ॥

तामेव रात्रिं राजेन्द्र महात्मा भृगुनन्दनः ।
इष्टिं चकार सौद्युम्नेर्महर्षिः पुत्रकारणात् ॥ ००९ ॥

संभृतो मन्त्रपूतेन वारिणा कलशो महान् ।
तत्रातिष्ठत राजेन्द्र पूर्वमेव समाहितः ॥ ०१० ॥

यत्प्राश्य प्रसवेत्तस्य पत्नी शक्रसमं सुतम् ॥ ०१० ॥

तं न्यस्य वेद्यां कलशं सुषुपुस्ते महर्षयः ।
रात्रिजागरणश्रान्ताः सौद्युम्निः समतीत्य तान् ॥ ०११ ॥

शुष्ककण्ठः पिपासार्तः पाणीयार्थी भृशं नृपः ।
तं प्रविश्याश्रमं श्रान्तः पाणीयं सोऽभ्ययाचत ॥ ०१२ ॥

तस्य श्रान्तस्य शुष्केण कण्ठेन क्रोशतस्तदा ।
नाश्रौषीत्कश्चन तदा शकुनेरिव वाशितम् ॥ ०१३ ॥

ततस्तं कलशं दृष्ट्वा जलपूर्णं स पार्थिवः ।
अभ्यद्रवत वेगेन पीत्वा चाम्भो व्यवासृजत् ॥ ०१४ ॥

स पीत्वा शीतलं तोयं पिपासार्तो महीपतिः ।
निर्वाणमगमद्धीमान्सुसुखी चाभवत्तदा ॥ ०१५ ॥

ततस्ते प्रत्यबुध्यन्त ऋषयः सनराधिपाः ।
निस्तोयं तं च कलशं ददृशुः सर्व एव ते ॥ ०१६ ॥

कस्य कर्मेदमिति च पर्यपृच्छन्समागताः ।
युवनाश्वो मयेत्येव सत्यं समभिपद्यत ॥ ०१७ ॥

न युक्तमिति तं प्राह भगवान्भार्गवस्तदा ।
सुतार्थं स्थापिता ह्यापस्तपसा चैव संभृताः ॥ ०१८ ॥

मया ह्यत्राहितं ब्रह्म तप आस्थाय दारुणम् ।
पुत्रार्थं तव राजर्षे महाबलपराक्रम ॥ ०१९ ॥

महाबलो महावीर्यस्तपोबलसमन्वितः ।
यः शक्रमपि वीर्येण गमयेद्यमसादनम् ॥ ०२० ॥

अनेन विधिना राजन्मयैतदुपपादितम् ।
अब्भक्षणं त्वया राजन्नयुक्तं कृतमद्य वै ॥ ०२१ ॥

न त्वद्य शक्यमस्माभिरेतत्कर्तुमतोऽन्यथा ।
नूनं दैवकृतं ह्येतद्यदेवं कृतवानसि ॥ ०२२ ॥

पिपासितेन याः पीता विधिमन्त्रपुरस्कृताः ।
आपस्त्वया महाराज मत्तपोवीर्यसंभृताः ॥ ०२३ ॥

ताभ्यस्त्वमात्मना पुत्रमेवंवीर्यं जनिष्यसि ॥ ०२३ ॥

विधास्यामो वयं तत्र तवेष्टिं परमाद्भुताम् ।
यथा शक्रसमं पुत्रं जनयिष्यसि वीर्यवान् ॥ ०२४ ॥

ततो वर्षशते पूर्णे तस्य राज्ञो महात्मनः ।
वामं पार्श्वं विनिर्भिद्य सुतः सूर्य इवापरः ॥ ०२५ ॥

निश्चक्राम महातेजा न च तं मृत्युराविशत् ।
युवनाश्वं नरपतिं तदद्भुतमिवाभवत् ॥ ०२६ ॥

ततः शक्रो महातेजास्तं दिदृक्षुरुपागमत् ।
प्रदेशिनीं ततोऽस्यास्ये शक्रः समभिसंदधे ॥ ०२७ ॥

मामयं धास्यतीत्येवं परिभाष्टः स वज्रिणा ।
मान्धातेति च नामास्य चक्रुः सेन्द्रा दिवौकसः ॥ ०२८ ॥

प्रदेशिनीं शक्रदत्तामास्वाद्य स शिशुस्तदा ।
अवर्धत महीपाल किष्कूणां च त्रयोदश ॥ ०२९ ॥

वेदास्तं सधनुर्वेदा दिव्यान्यस्त्राणि चेश्वरम् ।
उपतस्थुर्महाराज ध्यातमात्राणि सर्वशः ॥ ०३० ॥

धनुराजगवं नाम शराः शृङ्गोद्भवाश्च ये ।
अभेद्यं कवचं चैव सद्यस्तमुपसंश्रयन्  ॥ ०३१  ॥

सोऽभिषिक्तो मघवता स्वयं शक्रेण भारत ।
धर्मेण व्यजयल्लोकांस्त्रीन्विष्णुरिव विक्रमैः  ॥ ०३२  ॥

तस्याप्रतिहतं चक्रं प्रावर्तत महात्मनः ।
रत्नानि चैव राजर्षिं स्वयमेवोपतस्थिरे  ॥ ०३३  ॥

तस्येयं वसुसंपूर्णा वसुधा वसुधाधिप ।
तेनेष्टं विविधैर्यज्ञैर्बहुभिः स्वाप्तदक्षिणैः  ॥ ०३४  ॥

चितचैत्यो महातेजा धर्मं प्राप्य च पुष्कलम् ।
शक्रस्यार्धासनं राज.ण्लब्ध्वानमितद्युतिः  ॥ ०३५  ॥

एकाह्ना पृथिवी तेन धर्मनित्येन धीमता ।
निर्जिता शासनादेव सरत्नाकरपत्तना  ॥ ०३६  ॥

तस्य चित्यैर्महाराज क्रतूनां दक्षिणावताम् ।
चतुरन्ता मही व्याप्ता नासीत्किञ्चिदनावृतम्  ॥ ०३७  ॥

तेन पद्मसहस्राणि गवां दश महात्मना ।
ब्राह्मणेभ्यो महाराज दत्तानीति प्रचक्षते  ॥ ०३८  ॥

तेन द्वादशवार्षिक्यामनावृष्ट्यां महात्मना ।
वृष्टं सस्यविवृद्ध्यर्थं मिषतो वज्रपाणिनः  ॥ ०३९  ॥

तेन सोमकुलोत्पन्नो गान्धाराधिपतिर्महान् ।
गर्जन्निव महामेघः प्रमथ्य निहतः शरैः  ॥ ०४०  ॥

प्रजाश्चतुर्विधास्तेन जिता राजन्महात्मना ।
तेनात्मतपसा लोकाः स्थापिताश्चापि तेजसा ॥ ०४१ ॥

तस्यैतद्देवयजनं स्थानमादित्यवर्चसः ।
पश्य पुण्यतमे देशे कुरुक्षेत्रस्य मध्यतः ॥ ०४२ ॥

एतत्ते सर्वमाख्यातं मान्धातुश्चरितं महत् ।
जन्म चाग्र्यं महीपाल यन्मां त्वं परिपृच्छसि ॥ ०४३ ॥

---

# अध्याय १२७

युधिष्ठिर उवाच ॥

कथंवीर्यः स राजाभूत्सोमको वदतां वर ।
कर्माण्यस्य प्रभावं च श्रोतुमिच्छामि तत्त्वतः ॥ ००१ ॥

लोमश उवाच ॥

युधिष्ठिरासीन्नृपतिः सोमको नाम धार्मिकः ।
तस्य भार्याशतं राजन्सदृशीनामभूत्तदा ॥ ००२ ॥

स वै यत्नेन महता तासु पुत्रं महीपतिः ।
कञ्चिन्नासादयामास कालेन महता अपि ॥ ००३ ॥

कदाचित्तस्य वृद्धस्य यतमानस्य यत्नतः ।
जन्तुर्नाम सुतस्तस्मिन्स्त्रीशते समजायत ॥ ००४ ॥

तं जातं मातरः सर्वाः परिवार्य समासते ।

सततं पृष्ठतः कृत्वा कामभोगान्विशां पते ॥ ००५ ॥

ततः पिपीलिका जन्तुं कदाचिददशत्स्फिजि ।
स दष्टो व्यनदद्राजंस्तेन दुःखेन बालकः ॥ ००६ ॥

ततस्ता मातरः सर्वाः प्राक्रोशन्भृशदुःखिताः ।
परिवार्य जन्तुं सहिताः स शब्दस्तुमुलोऽभवत् ॥ ००७ ॥

तमार्तनादं सहसा शुश्राव स महीपतिः ।
अमात्यपरिषन्मध्ये उपविष्टः सहर्त्विजैः ॥ ००८ ॥

ततः प्रस्थापयामास किमेतदिति पार्थिवः ।
तस्मै क्षत्ता यथावृत्तमाचचक्षे सुतं प्रति ॥ ००९ ॥

त्वरमाणः स चोत्थाय सोमकः सह मन्त्रिभिः ।
प्रविश्यान्तःपुरं पुत्रमाश्वासयदरिंदमः ॥ ०१० ॥

सान्त्वयित्वा तु तं पुत्रं निष्क्रम्यान्तःपुरान्नृपः ।
ऋत्विजैः सहितो राजन्सहामात्य उपाविशत् ॥ ०११ ॥

सोमक उवाच ॥

धिगस्त्विहैकपुत्रत्वमपुत्रत्वं वरं भवेत् ।
नित्यातुरत्वाद्भूतानां शोक एवैकपुत्रता ॥ ०१२ ॥

इदं भार्याशतं ब्रह्मन्परीक्ष्योपचितं प्रभो ।
पुत्रार्थिना मया वोढं न चासां विद्यते प्रजा ॥ ०१३ ॥

एकः कथञ्चिदुत्पन्नः पुत्रो जन्तुरयं मम ।
यतमानस्य सर्वासु किं नु दुःखमतः परम् ॥ ०१४ ॥

वयश्च समतीतं मे सभार्यस्य द्विजोत्तम ।
आसां प्राणाः समायत्ता मम चात्रैकपुत्रके ॥ ०१५ ॥

स्यान्नु कर्म तथा युक्तं येन पुत्रशतं भवेत् ।
महता लघुना वापि कर्मणा दुष्करेण वा ॥ ०१६ ॥

ऋत्विगुवाच ॥

अस्ति वै तादृशं कर्म येन पुत्रशतं भवेत् ।
यदि शक्नोषि तत्कर्तुमथ वक्ष्यामि सोमक ॥ ०१७ ॥

सोमक उवाच ॥

कार्यं वा यदि वाकार्यं येन पुत्रशतं भवेत् ।
कृतमेव हि तद्विद्धि भगवान्प्रब्रवीतु मे ॥ ०१८ ॥

ऋत्विगुवाच ॥

यजस्व जन्तुना राजंस्त्वं मया वितते क्रतौ ।
ततः पुत्रशतं श्रीमद्भविष्यत्यचिरेण ते ॥ ०१९ ॥

वपायां हूयमानायां धूममाघ्राय मातरः ।
ततस्ताः सुमहावीर्याञ्जनयिष्यन्ति ते सुतान् ॥ ०२० ॥

तस्यामेव तु ते जन्तुर्भविता पुनरात्मजः ।
उत्तरे चास्य सौवर्णं लक्ष्म पार्श्वे भविष्यति ॥ ०२१ ॥

# जन्तूपाख्यानम्

## अध्याय १२८

सोमक उवाच ॥

ब्रह्मन्यद्यद्यथा कार्यं तत्तत्कुरु तथा तथा ।
पुत्रकामतया सर्वं करिष्यामि वचस्तव ॥ ००१ ॥

लोमश उवाच ॥

ततः स याजयामास सोमकं तेन जन्तुना ।
मातरस्तु बलात्पुत्रमपाकर्षुः कृपान्विताः ॥ ००२ ॥

हा हताः स्मेति वाशन्त्यस्तीव्रशोकसमन्विताः ।
तं मातरः प्रत्यकर्षन्गृहीत्वा दक्षिणे करे ॥ ००३ ॥

सव्ये पाणौ गृहीत्वा तु याजकोऽपि स्म कर्षति ॥ ००३ ॥

कुररीणामिवार्तानामपाकृष्य तु तं सुतम् ।
विशस्य चैनं विधिना वपामस्य जुहाव सः ॥ ००४ ॥

वपायां हूयमानायां गन्धमाघ्राय मातरः ।
आर्ता निपेतुः सहसा पृथिव्यां कुरुनन्दन ॥ ००५ ॥

सर्वाश्च गर्भानलभंस्ततस्ताः पार्थिवाङ्गनाः ॥ ००५ ॥

ततो दशसु मासेषु सोमकस्य विशां पते ।
जज्ञे पुत्रशतं पूर्णं तासु सर्वासु भारत ॥ ००६ ॥

जन्तुर्ज्येष्ठः समभवज्जनित्र्यामेव भारत ।

स तासामिष्ट एवासीन्न तथान्ये निजाः सुताः ॥ ००७ ॥

तच्च लक्षणमस्यासीत्सौवर्णं पार्श्व उत्तरे ।
तस्मिन्पुत्रशते चाग्र्यः स बभूव गुणैर्युतः ॥ ००८ ॥

ततः स लोकमगमत्सोमकस्य गुरुः परम् ।
अथ काले व्यतीते तु सोमकोऽप्यगमत्परम् ॥ ००९ ॥

अथ तं नरके घोरे पच्यमानं ददर्श सः ।
तमपृच्छत्किमर्थं त्वं नरके पच्यसे द्विज ॥ ०१० ॥

तमब्रवीद्गुरुः सोऽथ पच्यमानोऽग्निना भृशम् ।
त्वं मया याजितो राजंस्तस्येदं कर्मणः फलम् ॥ ०११ ॥

एतच्छ्रुत्वा स राजर्षिर्धर्मराजानमब्रवीत् ।
अहमत्र प्रवेक्ष्यामि मुच्यतां मम याजकः ॥ ०१२ ॥

मत्कृते हि महाभागः पच्यते नरकाग्निना ॥ ०१२ ॥

धर्म उवाच ॥

नान्यः कर्तुः फलं राजन्नुपभुङ्क्ते कदाचन ।
इमानि तव दृश्यन्ते फलानि ददतां वर ॥ ०१३ ॥

सोमक उवाच ॥

पुण्यान्न कामये लोकानृतेऽहं ब्रह्मवादिनम् ।
इच्छाम्यहमनेनैव सह वस्तुं सुरालये ॥ ०१४ ॥

नरके वा धर्मराज कर्मणास्य समो ह्यहम् ।
पुण्यापुण्यफलं देव सममस्त्वावयोरिदम् ॥ ०१५ ॥

धर्म उवाच ॥

यद्येवमीप्सितं राजन्भुङ्क्ष्वास्य सहितः फलम् ।
तुल्यकालं सहानेन पश्चात्प्राप्स्यसि सद्गतिम् ॥ ०१६ ॥

लोमश उवाच ॥

स चकार तथा सर्वं राजा राजीवलोचनः ।
पुनश्च लेभे लोकान्स्वान्कर्मणा निर्जिताञ्शुभान् ॥ ०१७ ॥

सह तेनैव विप्रेण गुरुणा स गुरुप्रियः ॥ ०१७ ॥

एष तस्याश्रमः पुण्यो य एषोऽग्रे विराजते ।
क्षान्त उष्यात्र षड्रात्रं प्राप्नोति सुगतिं नरः ॥ ०१८ ॥

एतस्मिन्नपि राजेन्द्र वत्स्यामो विगतज्वराः ।
षड्रात्रं नियतात्मानः सज्जीभव कुरूद्वह ॥ ०१९ ॥

---

# श्येनकपोतीयम्

## अध्याय १२९

लोमश उवाच ॥

अस्मिन्किल स्वयं राजन्निष्टवान्वै प्रजापतिः ।
सत्रमिष्टीकृतं नाम पुरा वर्षसहस्त्रिकम् ॥ ००१ ॥

अम्बरीषश्च नाभाग इष्टवान्यमुनामनु ।
यज्ञैश्च तपसा चैव परां सिद्धिमवाप सः ॥ ००२ ॥

देशो नाहुषयज्ञानामयं पुण्यतमो नृप ।
यत्रेष्ट्वा दश पद्मानि सदस्येभ्यो निसृष्टवान् ॥ ००३ ॥

सार्वभौमस्य कौन्तेय ययातेरमितौजसः ।
स्पर्धमानस्य शक्रेण पश्येदं यज्ञवास्त्विह ॥ ००४ ॥

पश्य नानाविधाकारैरग्निभिर्निचितां महीम् ।
मज्जन्तीमिव चाक्रान्तां ययातेर्यज्ञकर्मभिः ॥ ००५ ॥

एषा शम्येकपत्रा सा शरकं चैतदुत्तमम् ।
पश्य रामह्रदानेतान्पश्य नारायणाश्रमम् ॥ ००६ ॥

एतदार्चीकपुत्रस्य योगैर्विचरतो महीम् ।
अपसर्पणं महीपाल रौप्यायाममितौजसः ॥ ००७ ॥

अत्रानुवंशं पठतः शृणु मे कुरुनन्दन ।
उलूखलैराभरणैः पिशाची यदभाषत ॥ ००८ ॥

युगंधरे दधि प्राश्य उषित्वा चाच्युतस्थले ।
तद्वद्भूतिलये स्नात्वा सपुत्रा वस्तुमिच्छसि ॥ ००९ ॥

एकरात्रमुषित्वेह द्वितीयं यदि वत्स्यसि ।
एतद्वै ते दिवा वृत्तं रात्रौ वृत्तमतोऽन्यथा ॥ ०१० ॥

अत्राद्याहो निवत्स्यामः क्षपां भरतसत्तम ।
द्वारमेतद्धि कौन्तेय कुरुक्षेत्रस्य भारत ॥ ०११ ॥

अत्रैव नाहुषो राजा राजन्क्रतुभिरिष्टवान् ।

ययातिर्बहुरत्नाढ्यैर्यत्रेन्द्रो मुदमभ्यगात् ॥ ०१२ ॥

एतत्प्लक्षावतरणं यमुनातीर्थमुच्यते ।
एतद्वै नाकपृष्ठस्य द्वारमाहुर्मनीषिणः ॥ ०१३ ॥

अत्र सारस्वतैर्यज्ञैरीजानाः परमर्षयः ।
यूपोलूखलिनस्तात गच्छन्त्यवभृथाप्लवम् ॥ ०१४ ॥

अत्रैव भरतो राजा मेध्यमश्वमवासृजत् ।
असकृत्कृष्णसारङ्गं धर्मेणावाप्य मेदिनीम् ॥ ०१५ ॥

अत्रैव पुरुषव्याघ्र मरुत्तः सत्रमुत्तमम् ।
आस्ते देवर्षिमुख्येन संवर्तेनाभिपालितः ॥ ०१६ ॥

अत्रोपस्पृश्य राजेन्द्र सर्वा.ण्ल्लोकान्प्रपश्यति ।
पूयते दुष्कृताच्चैव समुपस्पृश्य भारत ॥ ०१७ ॥

वैशंपायन उवाच ॥

तत्र सभ्रातृकः स्नात्वा स्तूयमानो महर्षिभिः ।
लोमशं पाण्डवश्रेष्ठ इदं वचनमब्रवीत् ॥ ०१८ ॥

सर्वा.ण्ल्लोकान्प्रपश्यामि तपसा सत्यविक्रम ।
इहस्थः पाण्डवश्रेष्ठं पश्यामि श्वेतवाहनम् ॥ ०१९ ॥

लोमश उवाच ॥

एवमेतन्महाबाहो पश्यन्ति परमर्षयः ।
सरस्वतीमिमां पुण्यां पश्यैकशरणावृताम् ॥ ०२० ॥

यत्र स्नात्वा नरश्रेष्ठ धूतपाप्मा भविष्यति ।

इह सारस्वतैर्यज्ञैरिष्टवन्तः सुरर्षयः ॥ ०२१ ॥

ऋषयश्चैव कौन्तेय तथा राजर्षयोऽपि च ॥ ०२१ ॥

वेदी प्रजापतेरेषा समन्तात्पञ्चयोजना ।
कुरोर्वै यज्ञशीलस्य क्षेत्रमेतन्महात्मनः ॥ ०२२ ॥

---

# अध्याय १३०

लोमश उवाच ॥

इह मर्त्यास्तपस्तप्त्वा स्वर्गं गच्छन्ति भारत ।
मर्तुकामा नरा राजन्निहायान्ति सहस्रशः ॥ ००१ ॥

एवमाशीः प्रयुक्ता हि दक्षेण यजता पुरा ।
इह ये वै मरिष्यन्ति ते वै स्वर्गजितो नराः ॥ ००२ ॥

एषा सरस्वती पुण्या दिव्या चोघवती नदी ।
एतद्विनशनं नाम सरस्वत्या विशां पते ॥ ००३ ॥

द्वारं निषादराष्ट्रस्य येषां द्वेषात्सरस्वती ।
प्रविष्टा पृथिवीं वीर मा निषादा हि मां विदुः ॥ ००४ ॥

एष वै चमसोद्भेदो यत्र दृश्या सरस्वती ।
यत्रैनामभ्यवर्तन्त दिव्याः पुण्याः समुद्रगाः ॥ ००५ ॥

एतत्सिन्धोर्महत्तीर्थं यत्रागस्त्यमरिंदम ।
लोपामुद्रा समागम्य भर्तारमवृणीत वै ॥ ००६ ॥

एतत्प्रभासते तीर्थं प्रभासं भास्करद्युते ।
इन्द्रस्य दयितं पुण्यं पवित्रं पापनाशनम् ॥ ००७ ॥

एतद्विष्णुपदं नाम दृश्यते तीर्थमुत्तमम् ।
एषा रम्या विपाशा च नदी परमपावनी ॥ ००८ ॥

अत्रैव पुत्रशोकेन वसिष्ठो भगवानृषिः ।
बद्ध्वात्मानं निपतितो विपाशः पुनरुत्थितः ॥ ००९ ॥

काश्मीरमण्डलं चैतत्सर्वपुण्यमरिंदम ।
महर्षिभिश्चाध्युषितं पश्येदं भ्रातृभिः सह ॥ ०१० ॥

अत्रोत्तराणां सर्वेषामृषीणां नाहुषस्य च ।
अग्नेश्चात्रैव संवादः काश्यपस्य च भारत ॥ ०११ ॥

एतद्द्वारं महाराज मानसस्य प्रकाशते ।
वर्षमस्य गिरेर्मध्ये रामेण श्रीमता कृतम् ॥ ०१२ ॥

एष वातिकषण्डो वै प्रख्यातः सत्यविक्रमः ।
नाभ्यवर्तत यद्द्वारं विदेहानुत्तरं च यः ॥ ०१३ ॥

एष उज्जानको नाम यवक्रीर्यत्र शान्तवान् ।
अरुन्धतीसहायश्च वसिष्ठो भगवानृषिः ॥ ०१४ ॥

ह्रदश्च कुशवानेष यत्र पद्मं कुशेशयम् ।
आश्रमश्चैव रुक्मिण्या यत्राशाम्यदकोपना ॥ ०१५ ॥

समाधीनां समासस्तु पाण्डवेय श्रुतस्त्वया ।
तं द्रक्ष्यसि महाराज भृगुतुङ्गं महागिरिम् ॥ ०१६ ॥

जलां चोपजलां चैव यमुनामभितो नदीम् ।
उशीनरो वै यत्रेष्ट्वा वासवादत्यरिच्यत ॥ ०१७ ॥

तां देवसमितिं तस्य वासवश्च विशां पते ।
अभ्यगच्छत राजानं ज्ञातुमग्निश्च भारत ॥ ०१८ ॥

जिज्ञासमानौ वरदौ महात्मानमुशीनरम् ।
इन्द्रः श्येनः कपोतोऽग्निर्भूत्वा यज्ञेऽभिजग्मतुः ॥ ०१९ ॥

ऊरुं राज्ञः समासाद्य कपोतः श्येनजाद्भयात् ।
शरणार्थी तदा राजन्निलिल्ये भयपीडितः ॥ ०२० ॥

---

# अध्याय १३१

श्येन उवाच ॥

धर्मात्मानं त्वाहुरेकं सर्वे राजन्महीक्षितः ।
स वै धर्मविरुद्धं त्वं कस्मात्कर्म चिकीर्षसि ॥ ००१ ॥

विहितं भक्षणं राजन्पीड्यमानस्य मे क्षुधा ।
मा भाङ्क्षीर्धर्मलोभेन धर्ममुत्सृष्टवानसि ॥ ००२ ॥

राजोवाच ॥

संत्रस्तरूपस्त्राणार्थी त्वत्तो भीतो महाद्विज ।
मत्सकाशमनुप्राप्तः प्राणगृध्नुरयं द्विजः ॥ ००३ ॥

एवमभ्यागतस्येह कपोतस्याभयार्थिनः ।

अप्रदाने परोऽधर्मः किं त्वं श्येन प्रपश्यसि ॥ ००४ ॥

प्रस्पन्दमानः संभ्रान्तः कपोतः श्येन लक्ष्यते ।
मत्सकाशं जीवितार्थी तस्य त्यागो विगर्हितः ॥ ००५ ॥

श्येन उवाच ॥

आहारात्सर्वभूतानि संभवन्ति महीपते ।
आहारेण विवर्धन्ते तेन जीवन्ति जन्तवः ॥ ००६ ॥

शक्यते दुस्त्यजेऽप्यर्थे चिररात्राय जीवितुम् ।
न तु भोजनमुत्सृज्य शक्यं वर्तयितुं चिरम् ॥ ००७ ॥

भक्ष्याद्विलोपितस्याद्य मम प्राणा विशां पते ।
विसृज्य कायमेष्यन्ति पन्थानमपुनर्भवम् ॥ ००८ ॥

प्रमृते मयि धर्मात्मन्पुत्रदारं नशिष्यति ।
रक्षमाणः कपोतं त्वं बहून्प्राणान्नशिष्यसि ॥ ००९ ॥

धर्मं यो बाधते धर्मो न स धर्मः कुधर्म तत् ।
अविरोधी तु यो धर्मः स धर्मः सत्यविक्रम ॥ ०१० ॥

विरोधिषु महीपाल निश्चित्य गुरुलाघवम् ।
न बाधा विद्यते यत्र तं धर्मं समुदाचरेत् ॥ ०११ ॥

गुरुलाघवमाज्ञाय धर्माधर्मविनिश्चये ।
यतो भूयांस्ततो राजन्कुरु धर्मविनिश्चयम् ॥ ०१२ ॥

राजोवाच ॥

बहुकल्याणसंयुक्तं भाषसे विहगोत्तम ।

सुपर्णः पक्षिराड्धिं त्वं धर्मज्ञश्चास्यसंशयम् ॥ ०१३ ॥

तथा हि धर्मसंयुक्तं बहु चित्रं प्रभाषसे ॥ ०१३ ॥

न तेऽस्त्यविदितं किञ्चिदिति त्वा लक्षयाम्यहम् ।
शरणैषिणः परित्यागं कथं साध्विति मन्यसे ॥ ०१४ ॥

आहारार्थं समारम्भस्तव चायं विहङ्गम ।
शक्यश्चाप्यन्यथा कर्तुमाहारोऽप्यधिकस्त्वया ॥ ०१५ ॥

गोवृषो वा वराहो वा मृगो वा महिषोऽपि वा ।
त्वदर्थमद्य क्रियतां यद्वान्यदभिकाङ्क्षसे ॥ ०१६ ॥

श्येन उवाच ॥

न वराहं न चोक्षाणं न मृगान्विविधांस्तथा ।
भक्षयामि महाराज किमन्नाद्येन तेन मे ॥ ०१७ ॥

यस्तु मे दैवविहितो भक्षः क्षत्रियपुङ्गव ।
तमुत्सृज महीपाल कपोतमिममेव मे ॥ ०१८ ॥

श्येनाः कपोतान्खादन्ति स्थितिरेषा सनातनी ।
मा राजन्मार्गमाज्ञाय कदलीस्कन्धमारुह ॥ ०१९ ॥

राजोवाच ॥

राज्यं शिबीनामृद्धं वै शाधि पक्षिगणार्चित ।
यद्वा कामयसे किञ्चिच्छ्येन सर्वं ददानि ते ॥ ०२० ॥

विनेमं पक्षिणं श्येन शरणार्थिनमागतम् ॥ ०२० ॥

येनेमं वर्जयेथास्त्वं कर्मणा पक्षिसत्तम ।
तदाचक्ष्व करिष्यामि न हि दास्ये कपोतकम्  ॥ ०२१  ॥

श्येन उवाच  ॥

उशीनर कपोते ते यदि स्नेहो नराधिप ।
आत्मनो मांसमुत्कृत्य कपोततुलया धृतम्  ॥ ०२२  ॥

यदा समं कपोतेन तव मांसं भवेन्नृप ।
तदा प्रदेयं तन्मह्यं सा मे तुष्टिर्भविष्यति  ॥ ०२३  ॥

राजोवाच  ॥

अनुग्रहमिमं मन्ये श्येन यन्माभियाचसे ।
तस्मात्तेऽद्य प्रदास्यामि स्वमांसं तुलया धृतम्  ॥ ०२४  ॥

लोमश उवाच  ॥

अथोत्कृत्य स्वमांसं तु राजा परमधर्मवित् ।
तुलयामास कौन्तेय कपोतेन सहाभिभो  ॥ ०२५  ॥

ध्रियमाणस्तु तुलया कपोतो व्यतिरिच्यते ।
पुनश्चोत्कृत्य मांसानि राजा प्रादादुशीनरः  ॥ ०२६  ॥

न विद्यते यदा मांसं कपोतेन समं धृतम् ।
तत उत्कृत्तमांसोऽसावारुरोह स्वयं तुलाम्  ॥ ०२७  ॥

श्येन उवाच  ॥

इन्द्रोऽहमस्मि धर्मज्ञ कपोतो हव्यवाडयम् ।
जिज्ञासमानौ धर्मे त्वां यज्ञवाटमुपागतौ  ॥ ०२८  ॥

यत्ते मांसानि गात्रेभ्य उत्कृत्तानि विशां पते ।
एषा ते भास्वरी कीर्तिर्लोकानभिभविष्यति ॥ ०२९ ॥

यावल्लोके मनुष्यास्त्वां कथयिष्यन्ति पार्थिव ।
तावत्कीर्तिश्च लोकाश्च स्थास्यन्ति तव शाश्वताः ॥ ०३० ॥

लोमश उवाच ॥

तत्पाण्डवेय सदनं राज्ञस्तस्य महात्मनः ।
पश्यस्वैतन्मया सार्धं पुण्यं पापप्रमोचनम् ॥ ०३१ ॥

अत्र वै सततं देवा मुनयश्च सनातनाः ।
दृश्यन्ते ब्राह्मणै राजन्पुण्यवद्भिर्महात्मभिः ॥ ०३२ ॥

---

# अष्टावक्रीयम्

## अध्याय १३२

लोमश उवाच ॥

यः कथ्यते मन्त्रविदग्र्यबुद्धि ;रौद्दालकिः श्वेतकेतुः पृथिव्याम् ।
तस्याश्रमं पश्य नरेन्द्र पुण्यं ; सदाफलैरुपपन्नं महीजैः ॥ ००१ ॥

साक्षादत्र श्वेतकेतुर्ददर्श ; सरस्वतीं मानुषदेहरूपाम् ।
वेत्स्यामि वाणीमिति संप्रवृत्तां ; सरस्वतीं श्वेतकेतुर्बभाषे ॥ ००२ ॥

तस्मिन्काले ब्रह्मविदां वरिष्ठा ;वास्तां तदा मातुलभागिनेयौ ।
अष्टावक्रश्चैव कहोडसूनु ;रौद्दालकिः श्वेतकेतुश्च राजन् ॥ ००३ ॥

विदेहराजस्य महीपतेस्तौ ; विप्रावुभौ मातुलभागिनेयौ ।
प्रविश्य यज्ञायतनं विवादे ; बन्दिं निजग्राहतुरप्रमेयम् ॥ ००४ ॥

युधिष्ठिर उवाच ॥

कथंप्रभावः स बभूव विप्र ;स्तथायुक्तं यो निजग्राह बन्दिम् ।
अष्टावक्रः केन चासौ बभूव ; तत्सर्वं मे लोमश शंस तत्त्वम् ॥ ००५ ॥

लोमश उवाच ॥

उद्दालकस्य नियतः शिष्य एको ; नाम्ना कहोडेति बभूव राजन् ।
शुश्रूषुराचार्यवशानुवर्ती ; दीर्घं कालं सोऽध्ययनं चकार ॥ ००६ ॥

तं वै विप्राः पर्यभवंश्च शिष्या ;स्तं च ज्ञात्वा विप्रकारं गुरुः सः ।
तस्मै प्रादात्सद्य एव श्रुतं च ; भार्यां च वै दुहितरं स्वां सुजाताम् ॥ ००७ ॥

तस्या गर्भः समभवदग्निकल्पः ; सोऽधीयानं पितरमथाभ्युवाच ।
सर्वां रात्रिमध्ययनं करोषि ; नेदं पितः सम्यगिवोपवर्तते ॥ ००८ ॥

उपालब्धः शिष्यमध्ये महर्षिः ; स तं कोपादुदरस्थं शशाप ।
यस्मात्कुक्षौ वर्तमानो ब्रवीषि ; तस्माद्वक्रो भवितास्यष्टकृत्वः ॥ ००९ ॥

स वै तथा वक्र एवाभ्यजाय ;दष्टावक्रः प्रथितो वै महर्षिः ।
तस्यासीद्वै मातुलः श्वेतकेतुः ; स तेन तुल्यो वयसा बभूव ॥ ०१० ॥

संपीड्यमाना तु तदा सुजाता ; विवर्धमानेन सुतेन कुक्षौ ।
उवाच भर्तारमिदं रहोगता ; प्रसाद्य हीनं वसुना धनार्थिनी ॥ ०११ ॥

कथं करिष्याम्यधना महर्षे; मासश्चायं दशमो वर्तते मे ।
न चास्ति ते वसु किञ्चित्प्रजाता; येनाहमेतामापदं निस्तरेयम् ॥ ०१२ ॥

उक्तस्त्वेवं भार्यया वै कहोडो; वित्तस्यार्थे जनकमथाभ्यगच्छत् ।
स वै तदा वादविदा निगृह्य; निमज्जितो बन्दिनेहाप्सु विप्रः ॥ ०१३ ॥

उद्दालकस्तं तु तदा निशम्य; सूतेन वादेऽप्सु तथा निमज्जितम् ।
उवाच तां तत्र ततः सुजाता ;मष्टावक्रे गूहितव्योऽयमर्थः ॥ ०१४ ॥

ररक्ष सा चाप्यति तं सुमन्त्रं; जातोऽप्येवं न स शुश्राव विप्रः ।
उद्दालकं पितृवच्चापि मेने; अष्टावक्रो भ्रातृवच्छ्वेतकेतुम् ॥ ०१५ ॥

ततो वर्षे द्वादशे श्वेतकेतु ;रष्टावक्रं पितुरङ्के निसन्नम् ।
अपाकर्षद्गृह्य पाणौ रुदन्तं; नायं तवाङ्कः पितुरित्युक्तवांश्च ॥ ०१६ ॥

यत्तेनोक्तं दुरुक्तं तत्तदानीं; हृदि स्थितं तस्य सुदुःखमासीत् ।
गृहं गत्वा मातरं रोदमानः; पप्रच्छेदं क्व नु तातो ममेति ॥ ०१७ ॥

ततः सुजाता परमार्तरूपा; शापाद्भीता सर्वमेवाचचक्षे ।
तद्वै तत्त्वं सर्वमाज्ञाय मातु ;रित्यब्रवीच्छ्वेतकेतुं स विप्रः ॥ ०१८ ॥

गच्छाव यज्ञं जनकस्य राज्ञो; बह्वाश्चर्यः श्रूयते तस्य यज्ञः ।
श्रोष्यावोऽत्र ब्राह्मणानां विवाद ;मन्नं चाग्र्यं तत्र भोक्ष्यावहे च ॥ ०१९ ॥

विचक्षणत्वं च भविष्यते नौ; शिवश्च सौम्यश्च हि ब्रह्मघोषः ॥ ०१९ ॥

तौ जग्मतुर्मातुलभागिनेयौ; यज्ञं समृद्धं जनकस्य राज्ञः ।
अष्टावक्रः पथि राज्ञा समेत्य; उत्सार्यमाणो वाक्यमिदं जगाद ॥ ०२० ॥

# अध्याय १३३

अष्टावक्र उवाच ॥

अन्धस्य पन्था बधिरस्य पन्थाः ; स्त्रियः पन्था वैवधिकस्य पन्थाः ।
राज्ञः पन्था ब्राह्मणेनासमेत्य ; समेत्य तु ब्राह्मणस्यैव पन्थाः ॥ ००१ ॥

राजोवाच ॥

पन्था अयं तेऽद्य मया निसृष्टो ; येनेच्छसे तेन कामं व्रजस्व ।
न पावको विद्यते वै लघीया ;निन्द्रोऽपि नित्यं नमते ब्राह्मणानाम् ॥ ००२ ॥

अष्टावक्र उवाच ॥

यज्ञं द्रष्टुं प्राप्तवन्तौ स्व तात ; कौतूहलं नौ बलवद्वै विवृद्धम् ।
आवां प्राप्तावतिथी संप्रवेशं ; काङ्क्षावहे द्वारपते तवाज्ञाम् ॥ ००३ ॥

ऐन्द्रद्युम्नेर्यज्ञदृशाविहावां ; विवक्षू वै जनकेन्द्रं दिदृक्षू ।
न वै क्रोधाद्व्याधिनैवोत्तमेन ; संयोजय द्वारपाल क्षणेन ॥ ००४ ॥

द्वारपाल उवाच ॥

बन्देः समादेशकरा वयं स्म ; निबोध वाक्यं च मयेर्यमाणम् ।
न वै बालाः प्रविशन्त्यत्र विप्रा ; वृद्धा विद्वांसः प्रविशन्ति द्विजाग्र्याः ॥ ००५ ॥

अष्टावक्र उवाच ॥

यद्यत्र वृद्धेषु कृतः प्रवेशो ; युक्तं मम द्वारपाल प्रवेष्टुम् ।
वयं हि वृद्धाश्चरितव्रताश्च ; वेदप्रभावेन प्रवेशनार्हाः ॥ ००६ ॥

शुश्रूषवश्चापि जितेन्द्रियाश्च ; ज्ञानागमे चापि गताः स्म निष्ठाम् ।
न बाल इत्यवमन्तव्यमाहु ;र्बालोऽप्यग्निर्दहति स्पृश्यमानः ॥ ००७ ॥

द्वारपाल उवाच ॥

सरस्वतीमीरय वेदजुष्टा ;मेकाक्षरां बहुरूपां विराजम् ।
अङ्गात्मानं समवेक्षस्व बालं ; किं श्लाघसे दुर्लभा वादसिद्धिः ॥ ००८ ॥

अष्टावक्र उवाच ॥

न ज्ञायते कायवृद्ध्या विवृद्धि ;र्यथाष्ठीला शाल्मलेः संप्रवृद्धा ।
ह्रस्वोऽल्पकायः फलितो विवृद्धो ; यश्चाफलस्तस्य न वृद्धभावः ॥ ००९ ॥

द्वारपाल उवाच ॥

वृद्धेभ्य एवेह मतिं स्म बाला ; गृह्णन्ति कालेन भवन्ति वृद्धाः ।
न हि ज्ञानमल्पकालेन शक्यं ; कस्माद्बालो वृद्ध इवावभाषसे ॥ ०१० ॥

अष्टावक्र उवाच ॥

न तेन स्थविरो भवति येनास्य पलितं शिरः ।
बालोऽपि यः प्रजानाति तं देवाः स्थविरं विदुः ॥ ०११ ॥

न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः ।
ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥ ०१२ ॥

दिदृक्षुरस्मि संप्राप्तो बन्दिनं राजसंसदि ।
निवेदयस्व मां द्वाःस्थ राज्ञे पुष्करमालिने ॥ ०१३ ॥

द्रष्टास्यद्य वदतो द्वारपाल ; मनीषिभिः सह वादे विवृद्धे ।
उताहो वाप्युच्चतां नीचतां वा ; तूष्णीं भूतेष्वथ सर्वेषु चाद्य ॥ ०१४ ॥

द्वारपाल उवाच ॥

कथं यज्ञं दशवर्षो विशेस्त्वं ; विनीतानां विदुषां संप्रवेश्यम् ।
उपायतः प्रयतिष्ये तवाहं ; प्रवेशने कुरु यत्नं यथावत् ॥ ०१५ ॥

अष्टावक्र उवाच ॥

भो भो राजञ्जनकानां वरिष्ठ ; सभाज्यस्त्वं त्वयि सर्वं समृद्धम् ।
त्वं वा कर्ता कर्मणां यज्ञियानां ; ययातिरेको नृपतिर्वा पुरस्तात् ॥ ०१६ ॥

विद्वान्बन्दी वेदविदो निगृह्य ; वादे भग्नानप्रतिशङ्कमानः ।
त्वया निसृष्टैः पुरुषैराप्तकृद्भि ;र्जले सर्वान्मज्जयतीति नः श्रुतम् ॥ ०१७ ॥

स तच्छ्रुत्वा ब्राह्मणानां सकाशा ;द्ब्रह्मोद्यं वै कथयितुमागतोऽस्मि ।
क्वासौ बन्दी यावदेनं समेत्य ; नक्षत्राणीव सविता नाशयामि ॥ ०१८ ॥

राजोवाच ॥

आशंससे बन्दिनं त्वं विजेतु ;मविज्ञात्वा वाक्यबलं परस्य ।
विज्ञातवीर्यैः शक्यमेवं प्रवक्तुं ; दृष्टश्चासौ ब्राह्मणैर्वादशीलैः ॥ ०१९ ॥

अष्टावक्र उवाच ॥

विवादितोऽसौ न हि मादृशैर्हि ; सिंहीकृतस्तेन वदत्यभीतः ।
समेत्य मां निहतः शेष्यतेऽद्य ; मार्गे भग्नं शकटमिवाबलाक्षम् ॥ ०२० ॥

राजोवाच ॥

षण्णाभेर्द्वादशाक्षस्य चतुर्विंशतिपर्वणः ।
यस्त्रिषष्टिशतारस्य वेदार्थं स परः कविः ॥ ०२१ ॥

अष्टावक्र उवाच ॥

चतुर्विंशतिपर्व त्वां षण्णाभि द्वादशप्रधि ।
तत्त्रिषष्टिशतारं वै चक्रं पातु सदागति ॥ ०२२ ॥

राजोवाच ॥

वडवे इव संयुक्ते श्येनपाते दिवौकसाम् ।
कस्तयोर्गर्भमाधत्ते गर्भं सुषुवतुश्च कम् ॥ ०२३ ॥

अष्टावक्र उवाच ॥

मा स्म ते ते गृहे राजञ्शात्रवाणामपि ध्रुवम् ।
वातसारथिराधत्ते गर्भं सुषुवतुश्च तम् ॥ ०२४ ॥

राजोवाच ॥

किं स्वित्सुप्तं न निमिषति किं स्विज्जातं न चोपति ।
कस्य स्विद्धृदयं नास्ति किं स्विद्वेगेन वर्धते ॥ ०२५ ॥

अष्टावक्र उवाच ॥

मत्स्यः सुप्तो न निमिषत्यण्डं जातं न चोपति ।
अश्मनो हृदयं नास्ति नदी वेगेन वर्धते ॥ ०२६ ॥

राजोवाच ॥

न त्वा मन्ये मानुषं देवसत्त्वं ; न त्वं बालः स्थविरस्त्वं मतो मे ।
न ते तुल्यो विद्यते वाक्प्रलापे ; तस्माद्द्वारं वितराम्येष बन्दी ॥ ०२७ ॥

# अध्याय १३४

अष्टावक्र उवाच ॥

अत्रोग्रसेनसमितेषु राज ;न्समागतेष्वप्रतिमेषु राजसु ।
न वै विवित्सान्तरमस्ति वादिनां ; महाजले हंसनिनादिनामिव ॥ ००१ ॥

न मेऽद्य वक्ष्यस्यतिवादिमानि ;न्ग्लहं प्रपन्नः सरितामिवागमः ।
हुताशनस्येव समिद्धतेजसः ; स्थिरो भवस्वेह ममाद्य बन्दिन् ॥ ००२ ॥

बन्द्युवाच ॥

व्याघ्रं शयानं प्रति मा प्रबोधय ; आशीविषं सृक्किणी लेलिहानम् ।
पदाहतस्येव शिरोऽभिहत्य ; नादष्टो वै मोक्ष्यसे तन्निबोध ॥ ००३ ॥

यो वै दर्पात्संहननोपपन्नः ; सुदुर्बलः पर्वतमाविहन्ति ।
तस्यैव पाणिः सनखो विशीर्यते ; न चैव शैलस्य हि दृश्यते व्रणः ॥ ००४ ॥

सर्वे राज्ञो मैथिलस्य मैनाकस्येव पर्वताः ।
निकृष्टभूता राजानो वत्सा अनडुहो यथा ॥ ००५ ॥

लोमश उवाच ॥

अष्टावक्रः समितौ गर्जमानो ; जातक्रोधो बन्दिनमाह राजन् ।
उक्ते वाक्ये चोत्तरं मे ब्रवीहि ; वाक्यस्य चाप्युत्तरं ते ब्रवीमि ॥ ००६ ॥

बन्द्युवाच ॥

एक एवाग्निर्बहुधा समिध्यते ; एकः सूर्यः सर्वमिदं प्रभासते ।
एको वीरो देवराजो निहन्ता ; यमः पितृणामीश्वरश्चैक एव ॥ ००७ ॥

अष्टावक्र उवाच ॥

द्वाविन्द्राग्नी चरतो वै सखायौ ; द्वौ देवर्षी नारदः पर्वतश्च ।
द्वावश्विनौ द्वे च रथस्य चक्रे ; भार्यापती द्वौ विहितौ विधात्रा ॥ ००८ ॥

बन्द्युवाच ॥

त्रिः सूयते कर्मणा वै प्रजेयं ; त्रयो युक्ता वाजपेयं वहन्ति ।
अध्वर्यवस्त्रिषवणानि तन्वते ; त्रयो लोकास्त्रीणि ज्योतींषि चाहुः ॥ ००९ ॥

अष्टावक्र उवाच ॥

चतुष्टयं ब्राह्मणानां निकेतं ; चत्वारो युक्ता यज्ञमिमं वहन्ति ।
दिशश्चतस्रश्चतुरश्च वर्णा ;श्चतुष्पदा गौरपि शश्वदुक्ता ॥ ०१० ॥

बन्द्युवाच ॥

पञ्चाग्नयः पञ्चपदा च पङ्क्ति ;र्यज्ञाः पञ्चैवाप्यथ पञ्चेन्द्रियाणि ।
दृष्टा वेदे पञ्चचूडाश्च पञ्च ; लोके ख्यातं पञ्चनदं च पुण्यम् ॥ ०११ ॥

अष्टावक्र उवाच ॥

षडाधाने दक्षिणामाहुरेके ; षडेवेमे ऋतवः कालचक्रम् ।
षडिन्द्रियाण्युत षट्कृत्तिकाश्च ; षट्साद्यस्काः सर्ववेदेषु दृष्टाः ॥ ०१२ ॥

बन्द्युवाच ॥

सप्त ग्राम्याः पशवः सप्त वन्याः ; सप्त छन्दांसि क्रतुमेकं वहन्ति ।

सप्तर्षयः सप्त चाप्यर्हणानि ; सप्ततन्त्री प्रथिता चैव वीणा ॥ ०१३ ॥

अष्टावक्र उवाच ॥

अष्टौ शाणाः शतमानं वहन्ति ; तथाष्टपादः शरभः सिंहघाती ।
अष्टौ वसूञ्शुश्रुम देवतासु ; यूपश्चाष्टास्रिर्विहितः सर्वयज्ञः ॥ ०१४ ॥

बन्द्युवाच ॥

नवैवोक्ताः सामिधेन्यः पितॄणां ; तथा प्राहुर्नवयोगं विषर्गम् ।
नवाक्षरा बृहती संप्रदिष्टा ; नवयोगो गणनामेति शश्वत् ॥ ०१५ ॥

अष्टावक्र उवाच ॥

दशा दशोक्ताः पुरुषस्य लोके ; सहस्रमाहुर्दश पूर्ण शतानि ।
दशैव मासान्बिभ्रति गर्भवत्यो ; दशेरका दश दाशा दशार्णाः ॥ ०१६ ॥

बन्द्युवाच ॥

एकादशैकादशिनः पशूना ;मेकादशैवात्र भवन्ति यूपाः ।
एकादश प्राणभृतां विकारा ; एकादशोक्ता दिवि देवेषु रुद्राः ॥ ०१७ ॥

अष्टावक्र उवाच ॥

संवत्सरं द्वादश मासमाहु ;र्जगत्याः पादो द्वादशैवाक्षराणि ।
द्वादशाहः प्राकृतो यज्ञ उक्तो ; द्वादशादित्यान्कथयन्तीह विप्राः ॥ ०१८ ॥

बन्द्युवाच ॥

त्रयोदशी तिथिरुक्ता महोग्रा ; त्रयोदशद्वीपवती मही च ।
लोमश उवाच ॥

एतावदुक्त्वा विरराम बन्दी ; श्लोकस्यार्धं व्याजहाराष्टवक्रः ।
त्रयोदशाहानि ससार केशी ; त्रयोदशादीन्यतिच्छन्दांसि चाहुः ॥ ०२० ॥

ततो महानुदतिष्ठन्निनाद ;स्तूष्णींभूतं सूतपुत्रं निशम्य ।
अधोमुखं ध्यानपरं तदानी ;मष्टावक्रं चाप्युदीर्यन्तमेव ॥ ०२१ ॥

तस्मिंस्तथा सङ्कुले वर्तमाने ; स्फीते यज्ञे जनकस्याथ राज्ञः ।
अष्टावक्रं पूजयन्तोऽभ्युपेयु ;र्विप्राः सर्वे प्राञ्जलयः प्रतीताः ॥ ०२२ ॥

अष्टावक्र उवाच ॥

अनेन वै ब्राह्मणाः शुश्रुवांसो ; वादे जित्वा सलिले मज्जिताः किल ।
तानेव धर्मानयमद्य बन्दी ; प्राप्नोतु गृह्याप्सु निमज्जयैनम् ॥ ०२३ ॥

बन्द्युवाच ॥

अहं पुत्रो वरुणस्योत राज्ञ ;स्तत्रास सत्रं द्वादशवार्षिकं वै ।
सत्रेण ते जनक तुल्यकालं ; तदर्थं ते प्रहिता मे द्विजाग्र्याः ॥ ०२४ ॥

एते सर्वे वरुणस्योत यज्ञं ; द्रष्टुं गता इह आयान्ति भूयः ।
अष्टावक्रं पूजये पूजनीयं ; यस्य हेतोर्जनितारं समेष्ये ॥ ०२५ ॥

अष्टावक्र उवाच ॥

विप्राः समुद्राम्भसि मज्जितास्ते ; वाचा जिता मेधया आविदानाः ।
तां मेधया वाचमथोज्जहार ; यथा वाचमवचिन्वन्ति सन्तः ॥ ०२६ ॥

अग्निर्दहञ्जातवेदाः सतां गृहा ;न्विसर्जयंस्तेजसा न स्म धाक्षीत् ।
बालेषु पुत्रेषु कृपणं वदत्सु ; तथा वाचमवचिन्वन्ति सन्तः ॥ ०२७ ॥

श्लेष्मातकी क्षीणवर्चाः शृणोषि ; उताहो त्वां स्तुतयो मादयन्ति ।
हस्तीव त्वं जनक वितुद्यमानो ; न मामिकां वाचमिमां शृणोषि ॥ ०२८ ॥

जनक उवाच ॥

शृणोमि वाचं तव दिव्यरूपा ;ममानुषीं दिव्यरूपोऽसि साक्षात् ।
अजैषीर्यद्बन्दिनं त्वं विवादे ; निसृष्ट एष तव कामोऽद्य बन्दी ॥ ०२९ ॥

अष्टावक्र उवाच ॥

नानेन जीवता कश्चिदर्थो मे बन्दिना नृप ।
पिता यद्यस्य वरुणो मज्जयैनं जलाशये ॥ ०३० ॥

बन्द्युवाच ॥

अहं पुत्रो वरुणस्योत राज्ञो ; न मे भयं सलिले मज्जितस्य ।
इमं मुहूर्तं पितरं द्रक्ष्यतेऽय ;मष्टावक्रश्चिरनष्टं कहोडम् ॥ ०३१ ॥

लोमश उवाच ॥

ततस्ते पूजिता विप्रा वरुणेन महात्मना ।
उदतिष्ठन्त ते सर्वे जनकस्य समीपतः ॥ ०३२ ॥

कहोड उवाच ॥

इत्यर्थमिच्छन्ति सुताञ्जना जनक कर्मणा ।
यदहं नाशकं कर्तुं तत्पुत्रः कृतवान्मम ॥ ०३३ ॥

उताबलस्य बलवानुत बालस्य पण्डितः ।
उत वाविदुषो विद्वान्पुत्रो जनक जायते ॥ ०३४ ॥

बन्द्युवाच ॥

शितेन ते परशुना स्वयमेवान्तको नृप ।
शिरांस्यपाहरत्वाजौ रिपूणां भद्रमस्तु ते ॥ ०३५ ॥

महदुक्थ्यं गीयते साम चाग्र्यं ; सम्यक्सोमः पीयते चात्र सत्रे ।
शुचीन्भागान्प्रतिजगृहुश्च हृष्टाः ; साक्षाद्देवा जनकस्येह यज्ञे ॥ ०३६ ॥

लोमश उवाच ॥

समुत्थितेष्वथ सर्वेषु राज ;न्विप्रेषु तेष्वधिकं सुप्रभेषु ।
अनुज्ञातो जनकेनाथ राज्ञा ; विवेश तोयं सागरस्योत बन्दी ॥ ०३७ ॥

अष्टावक्रः पितरं पूजयित्वा ; संपूजितो ब्राह्मणैस्तैर्यथावत् ।
प्रत्याजगामाश्रममेव चाग्र्यं ; जित्वा बन्दिं सहितो मातुलेन ॥ ०३८ ॥

अत्र कौन्तेय सहितो भ्रातृभिस्त्वं ; सुखोषितः सह विप्रैः प्रतीतः ।
पुण्यान्यन्यानि शुचिकर्मैकभक्ति ;र्मया सार्धं चरितास्याजमीढ ॥ ०३९ ॥

---

# यवक्रीतोपाख्यानम्

## अध्याय १३५

लोमश उवाच ॥

एषा मधुविला राजन्समङ्गा संप्रकाशते ।
एतत्कर्दमिलं नाम भरतस्याभिषेचनम् ॥ ००१ ॥

अलक्ष्म्या किल संयुक्तो वृत्रं हत्वा शचीपतिः ।
आप्लुतः सर्वपापेभ्यः समङ्गायां व्यमुच्यत ॥ ००२ ॥

एतद्विनशनं कुक्षौ मैनाकस्य नरर्षभ ।
अदितिर्यत्र पुत्रार्थं तदन्नमपचत्पुरा ॥ ००३ ॥

एनं पर्वतराजानमारुह्य पुरुषर्षभ ।
अयशस्यामसंशब्द्यामलक्ष्मीं व्यपनोत्स्यथ ॥ ००४ ॥

एते कनखला राजनृषीणां दयिता नगाः ।
एषा प्रकाशते गङ्गा युधिष्ठिर महानदी ॥ ००५ ॥

सनत्कुमारो भगवानत्र सिद्धिमगात्पराम् ।
आजमीढावगाह्यैनां सर्वपापैः प्रमोक्ष्यसे ॥ ००६ ॥

अपां ह्रदं च पुण्याख्यं भृगुतुङ्गं च पर्वतम् ।
तूष्णीं गङ्गां च कौन्तेय सामात्यः समुपस्पृश ॥ ००७ ॥

आश्रमः स्थूलशिरसो रमणीयः प्रकाशते ।
अत्र मानं च कौन्तेय क्रोधं चैव विवर्जय ॥ ००८ ॥

एष रैभ्याश्रमः श्रीमान्पाण्डवेय प्रकाशते ।
भारद्वाजो यत्र कविर्यवक्रीतो व्यनश्यत ॥ ००९ ॥

युधिष्ठिर उवाच ॥

कथंयुक्तोऽभवदृषिर्भरद्वाजः प्रतापवान् ।
किमर्थं च यवक्रीत ऋषिपुत्रो व्यनश्यत ॥ ०१० ॥

एतत्सर्वं यथावृत्तं श्रोतुमिच्छामि लोमश ।

कर्मभिर्देवकल्पानां कीर्त्यमानैर्भृशं रमे ॥ ०११ ॥

लोमश उवाच ॥

भरद्वाजश्च रैभ्यश्च सखायौ संबभूवतुः ।
तावूषतुरिहात्यन्तं प्रीयमाणौ वनान्तरे ॥ ०१२ ॥

रैभ्यस्य तु सुतावास्तामर्वावसुपरावसू ।
आसीद्यवक्रीः पुत्रस्तु भरद्वाजस्य भारत ॥ ०१३ ॥

रैभ्यो विद्वान्सहापत्यस्तपस्वी चेतरोऽभवत् ।
तयोश्चाप्यतुला प्रीतिर्बाल्यात्प्रभृति भारत ॥ ०१४ ॥

यवक्रीः पितरं दृष्ट्वा तपस्विनमसत्कृतम् ।
दृष्ट्वा च सत्कृतं विप्रै रैभ्यं पुत्रैः सहानघ ॥ ०१५ ॥

पर्यतप्यत तेजस्वी मन्युनाभिपरिप्लुतः ।
तपस्तेपे ततो घोरं वेदज्ञानाय पाण्डव ॥ ०१६ ॥

सुसमिद्धे महत्यग्नौ शरीरमुपतापयन् ।
जनयामास संतापमिन्द्रस्य सुमहातपाः ॥ ०१७ ॥

तत इन्द्रो यवक्रीतमुपगम्य युधिष्ठिर ।
अब्रवीत्कस्य हेतोस्त्वमास्थितस्तप उत्तमम् ॥ ०१८ ॥

यवक्रीरुवाच ॥

द्विजानामनधीता वै वेदाः सुरगणार्चित ।
प्रतिभान्त्विति तप्येऽहमिदं परमकं तपः ॥ ०१९ ॥

स्वाध्यायार्थे समारम्भो ममायं पाकशासन ।

तपसा ज्ञातुमिच्छामि सर्वज्ञानानि कौशिक ॥ ०२० ॥

कालेन महता वेदाः शक्या गुरुमुखाद्विभो ।
प्राप्तुं तस्मादयं यत्नः परमो मे समास्थितः ॥ ०२१ ॥

इन्द्र उवाच ॥

अमार्ग एष विप्रर्षे येन त्वं यातुमिच्छसि ।
किं विघातेन ते विप्र गच्छाधीहि गुरोर्मुखात् ॥ ०२२ ॥

लोमश उवाच ॥

एवमुक्त्वा गतः शक्रो यवक्रीरपि भारत ।
भूय एवाकरोद्यत्नं तपस्यमितविक्रम ॥ ०२३ ॥

घोरेण तपसा राजंस्तप्यमानो महातपाः ।
संतापयामास भृशं देवेन्द्रमिति नः श्रुतम् ॥ ०२४ ॥

तं तथा तप्यमानं तु तपस्तीव्रं महामुनिम् ।
उपेत्य बलभिद्देवो वारयामास वै पुनः ॥ ०२५ ॥

अशक्योऽर्थः समारब्धो नैतद्बुद्धिकृतं तव ।
प्रतिभास्यन्ति वै वेदास्तव चैव पितुश्च ते ॥ ०२६ ॥

यवक्रीरुवाच ॥

न चैतदेवं क्रियते देवराज ममेप्सितम् ।
महता नियमेनाहं तप्स्ये घोरतरं तपः ॥ ०२७ ॥

समिद्धेऽग्नावुपकृत्याङ्गमङ्गं ; होष्यामि वा मघवंस्तन्निबोध ।
यद्येतदेवं न करोषि कामं ; ममेप्सितं देवराजेह सर्वम् ॥ ०२८ ॥

लोमश उवाच ॥

निश्चयं तमभिज्ञाय मुनेस्तस्य महात्मनः ।
प्रतिवारणहेत्वर्थं बुद्ध्या सञ्चिन्त्य बुद्धिमान् ॥ ०२९ ॥

तत इन्द्रोऽकरोद्रूपं ब्राह्मणस्य तपस्विनः ।
अनेकशतवर्षस्य दुर्बलस्य सयक्ष्मणः ॥ ०३० ॥

यवक्रीतस्य यत्तीर्थमुचितं शौचकर्मणि ।
भागीरथ्यां तत्र सेतुं वालुकाभिश्चकार सः ॥ ०३१ ॥

यदास्य वदतो वाक्यं न स चक्रे द्विजोत्तमः ।
वालुकाभिस्ततः शक्रो गङ्गां समभिपूरयन् ॥ ०३२ ॥

वालुकामुष्टिमनिशं भागीरथ्यां व्यसर्जयत् ।
सेतुमभ्यारभच्छक्रो यवक्रीतं निदर्शयन् ॥ ०३३ ॥

तं ददर्श यवक्रीस्तु यत्नवन्तं निबन्धने ।
प्रहसंश्चाब्रवीद्वाक्यमिदं स मुनिपुङ्गवः ॥ ०३४ ॥

किमिदं वर्तते ब्रह्मन्किं च ते ह चिकीर्षितम् ।
अतीव हि महान्यत्नः क्रियतेऽयं निरर्थकः ॥ ०३५ ॥

इन्द्र उवाच ॥

बन्धिष्ये सेतुना गङ्गां सुखः पन्था भविष्यति ।
क्लिश्यते हि जनस्तात तरमाणः पुनः पुनः ॥ ०३६ ॥

यवक्रीरुवाच ॥

नायं शक्यस्त्वया बद्धुं महानोघः कथञ्चन ।
अशक्याद्विनिवर्तस्व शक्यमर्थं समारभ ॥ ०३७ ॥

इन्द्र उवाच ॥

यथैव भवता चेदं तपो वेदार्थमुद्यतम् ।
अशक्यं तद्वदस्माभिरयं भारः समुद्यतः ॥ ०३८ ॥

यवक्रीरुवाच ॥

यथा तव निरर्थोऽयमारम्भस्त्रिदशेश्वर ।
तथा यदि ममापीदं मन्यसे पाकशासन ॥ ०३९ ॥

क्रियतां यद्भवेच्छक्यं मया सुरगणेश्वर ।
वरांश्च मे प्रयच्छान्यान्यैरन्यान्भवितास्म्यति ॥ ०४० ॥

लोमश उवाच ॥

तस्मै प्रादाद्वरानिन्द्र उक्तवान्यान्महातपाः ।
प्रतिभास्यन्ति ते वेदाः पित्रा सह यथेप्सिताः ॥ ०४१ ॥

यच्चान्यत्काङ्क्षसे कामं यवक्रीर्गम्यतामिति ।
स लब्धकामः पितरमुपेत्याथ ततोऽब्रवीत् ॥ ०४२ ॥

---

# अध्याय १३६

यवक्रीरुवाच ॥

प्रतिभास्यन्ति वै वेदा मम तातस्य चोभयोः ।
अति चान्यान्भविष्यावो वरा लब्धास्तथा मया ॥ ००१ ॥

भरद्वाज उवाच ॥

दर्पस्ते भविता तात वरा.णल्लब्ध्वा यथेप्सितान् ।
स दर्पपूर्णः कृपणः क्षिप्रमेव विनश्यसि ॥ ००२ ॥

अत्राप्युदाहरन्तीमा गाथा देवैरुदाहृताः ।
ऋषिरासीत्पुरा पुत्र बालधिर्नाम वीर्यवान् ॥ ००३ ॥

स पुत्रशोकादुद्विग्नस्तपस्तेपे सुदुश्चरम् ।
भवेन्मम सुतोऽमर्त्य इति तं लब्धवांश्च सः ॥ ००४ ॥

तस्य प्रसादो देवैश्च कृतो न त्वमरैः समः ।
नामर्त्यो विद्यते मर्त्यो निमित्तायुर्भविष्यति ॥ ००५ ॥

बालधिरुवाच ॥

यथेमे पर्वताः शश्वत्तिष्ठन्ति सुरसत्तमाः ।
अक्षयास्तन्निमित्तं मे सुतस्यायुर्भवेदिति ॥ ००६ ॥

भरद्वाज उवाच ॥

तस्य पुत्रस्तदा जज्ञे मेधावी क्रोधनः सदा ।
स तच्छ्रुत्वाकरोद्दर्पमृषींश्चैवावमन्यत ॥ ००७ ॥

विकुर्वाणो मुनीनां तु चरमाणो महीमिमाम् ।
आससाद महावीर्यं धनुषाक्षं मनीषिणम् ॥ ००८ ॥

तस्यापचक्रे मेधावी तं शशाप स वीर्यवान् ।

भव भस्मेति चोक्तः स न भस्म समपद्यत ॥ ००९ ॥

धनुषाक्षस्तु तं दृष्ट्वा मेधाविनमनामयम् ।
निमित्तमस्य महिषैर्भेदयामास वीर्यवान् ॥ ०१० ॥

स निमित्ते विनष्टे तु ममार सहसा शिशुः ।
तं मृतं पुत्रमादाय विललाप ततः पिता ॥ ०११ ॥

लालप्यमानं तं दृष्ट्वा मुनयः पुनरार्तवत् ।
ऊचुर्वेदोक्तया पूर्वं गाथया तन्निबोध मे ॥ ०१२ ॥

न दिष्टमर्थमत्येतुमीशो मर्त्यः कथञ्चन ।
महिषैर्भेदयामास धनुषाक्षो महीधरान् ॥ ०१३ ॥

एवं लब्ध्वा वरान्बाला दर्पपूर्णास्तरस्विनः ।
क्षिप्रमेव विनश्यन्ति यथा न स्यात्तथा भवान् ॥ ०१४ ॥

एष रैभ्यो महावीर्यः पुत्रौ चास्य तथाविधौ ।
तं यथा पुत्र नाभ्येषि तथा कुर्यास्त्वतन्द्रितः ॥ ०१५ ॥

स हि क्रुद्धः समर्थस्त्वां पुत्र पीडयितुं रुषा ।
वैद्यश्चापि तपस्वी च कोपनश्च महानृषिः ॥ ०१६ ॥

यवक्रीरुवाच ॥

एवं करिष्ये मा तापं तात कार्षीः कथञ्चन ।
यथा हि मे भवान्मान्यस्तथा रैभ्यः पिता मम ॥ ०१७ ॥

लोमश उवाच ॥

उक्त्वा स पितरं श्लक्ष्णं यवक्रीरकुतोभयः ।

विप्रकुर्वन्नृषीनन्यानतुष्यत्परया मुदा ॥ ०१८ ॥

---

# अध्याय १३७

लोमश उवाच ॥

चङ्क्रम्यमाणः स तदा यवक्रीरकुतोभयः ।
जगाम माधवे मासि रैभ्याश्रमपदं प्रति ॥ ००१ ॥

स ददर्शाश्रमे पुण्ये पुष्पितद्रुमभूषिते ।
विचरन्तीं स्नुषां तस्य किंनरीमिव भारत ॥ ००२ ॥

यवक्रीस्तामुवाचेदमुपतिष्ठस्व मामिति ।
निर्लज्जो लज्जया युक्तां कामेन हृतचेतनः ॥ ००३ ॥

सा तस्य शीलमाज्ञाय तस्माच्छापाच्च बिभ्यती ।
तेजस्वितां च रैभ्यस्य तथेत्युक्त्वा जगाम सा ॥ ००४ ॥

तत एकान्तमुन्नीय मज्जयामास भारत ।
आजगाम तदा रैभ्यः स्वमाश्रममरिंदम ॥ ००५ ॥

रुदन्तीं च स्नुषां दृष्ट्वा भार्यामार्तां परावसोः ।
सान्त्वयञ्श्लक्ष्णया वाचा पर्यपृच्छद्युधिष्ठिर ॥ ००६ ॥

सा तस्मै सर्वमाचष्ट यवक्रीभाषितं शुभा ।
प्रत्युक्तं च यवक्रीतं प्रेक्षापूर्वं तदात्मना ॥ ००७ ॥

श्रृण्वानस्यैव रैभ्यस्य यवक्रीतविचेष्टितम् ।
दहन्निव तदा चेतः क्रोधः समभवन्महान्  ॥ ००८  ॥

स तदा मन्युनाविष्टस्तपस्वी भृशकोपनः ।
अवलुप्य जटामेकां जुहावाग्नौ सुसंस्कृते  ॥ ००९  ॥

ततः समभवन्नारी तस्या रूपेण संमिता ।
अवलुप्यापरां चाथ जुहावाग्नौ जटां पुनः  ॥ ०१०  ॥

ततः समभवद्रक्षो घोराक्षं भीमदर्शनम् ।
अब्रूतां तौ तदा रैभ्यं किं कार्यं करवामहे  ॥ ०११  ॥

तावब्रवीद्दृषिः क्रुद्धो यवक्रीर्वध्यतामिति ।
जग्मतुस्तौ तथेत्युक्त्वा यवक्रीतजिघांसया  ॥ ०१२  ॥

ततस्तं समुपास्थाय कृत्या सृष्टा महात्मना ।
कमण्डलुं जहारास्य मोहयित्वा तु भारत  ॥ ०१३  ॥

उच्छिष्टं तु यवक्रीतमपकृष्टकमण्डलुम् ।
तत उद्यतशूलः स राक्षसः समुपाद्रवत्  ॥ ०१४  ॥

तमापतन्तं संप्रेक्ष्य शूलहस्तं जिघांसया ।
यवक्रीः सहसोत्थाय प्राद्रवद्येन वै सरः  ॥ ०१५  ॥

जलहीनं सरो दृष्ट्वा यवक्रीस्त्वरितः पुनः ।
जगाम सरितः सर्वास्ताश्चाप्यासन्विशोषिताः  ॥ ०१६  ॥

स काल्यमानो घोरेण शूलहस्तेन रक्षसा ।
अग्निहोत्रं पितुर्भीतः सहसा समुपाद्रवत्  ॥ ०१७  ॥

स वै प्रविशमानस्तु शूद्रेणान्धेन रक्षिणा ।

निगृहीतो बलाद्वारि सोऽवातिष्ठत पार्थिव ॥ ०१८ ॥

निगृहीतं तु शूद्रेण यवक्रीतं स राक्षसः ।
ताडयामास शूलेन स भिन्नहृदयोऽपतत् ॥ ०१९ ॥

यवक्रीतं स हत्वा तु राक्षसो रैभ्यमागमत् ।
अनुज्ञातस्तु रैभ्येण तया नार्या सहाचरत् ॥ ०२० ॥

---

# अध्याय १३८

लोमश उवाच ॥

भरद्वाजस्तु कौन्तेय कृत्वा स्वाध्यायमाह्निकम् ।
समित्कलापमादाय प्रविवेश स्वमाश्रमम् ॥ ००१ ॥

तं स्म दृष्ट्वा पुरा सर्वे प्रत्युत्तिष्ठन्ति पावकाः ।
न त्वेनमुपतिष्ठन्ति हतपुत्रं तदाग्नयः ॥ ००२ ॥

वैकृतं त्वग्निहोत्रे स लक्षयित्वा महातपाः ।
तमन्धं शूद्रमासीनं गृहपालमथाब्रवीत् ॥ ००३ ॥

किं नु मे नाग्नयः शूद्र प्रतिनन्दन्ति दर्शनम् ।
त्वं चापि न यथापूर्वं कच्चित्क्षेममिहाश्रमे ॥ ००४ ॥

कच्चिन्न रैभ्यं पुत्रो मे गतवानल्पचेतनः ।
एतदाचक्ष्व मे शीघ्रं न हि मे शुध्यते मनः ॥ ००५ ॥

शूद्र उवाच ॥

रैभ्यं गतो नूनमसौ सुतस्ते मन्दचेतनः ।
तथा हि निहतः शेते राक्षसेन बलीयसा ॥ ००६ ॥

प्रकाल्यमानस्तेनायं शूलहस्तेन रक्षसा ।
अग्न्यागारं प्रति द्वारि मया दोर्भ्यां निवारितः ॥ ००७ ॥

ततः स निहतो ह्यत्र जलकामोऽशुचिर्ध्रुवम् ।
संभावितो हि तूर्णेन शूलहस्तेन रक्षसा ॥ ००८ ॥

लोमश उवाच ॥

भरद्वाजस्तु शूद्रस्य तच्छ्रुत्वा विप्रियं वचः ।
गतासुं पुत्रमादाय विललाप सुदुःखितः ॥ ००९ ॥

ब्राह्मणानां किलार्थाय ननु त्वं तप्तवांस्तपः ।
द्विजानामनधीता वै वेदाः संप्रतिभान्त्विति ॥ ०१० ॥

तथा कल्याणशीलस्त्वं ब्राह्मणेषु महात्मसु ।
अनागाः सर्वभूतेषु कर्कशत्वमुपेयिवान् ॥ ०११ ॥

प्रतिषिद्धो मया तात रैभ्यावसथदर्शनात् ।
गतवानेव तं क्षुद्रं कालान्तकयमोपमम् ॥ ०१२ ॥

यः स जानन्महातेजा वृद्धस्यैकं ममात्मजम् ।
गतवानेव कोपस्य वशं परमदुर्मतिः ॥ ०१३ ॥

पुत्रशोकमनुप्राप्य एष रैभ्यस्य कर्मणा ।
त्यक्ष्यामि त्वामृते पुत्र प्राणानिष्टतमान्भुवि ॥ ०१४ ॥

यथाहं पुत्रशोकेन देहं त्यक्ष्यामि किल्बिषी ।

तथा ज्येष्ठः सुतो रैभ्यं हिंस्याच्छीघ्रमनागसम्  ॥ ०१५  ॥

सुखिनो वै नरा येषां जात्या पुत्रो न विद्यते ।
ते पुत्रशोकमप्राप्य विचरन्ति यथासुखम्  ॥ ०१६  ॥

ये तु पुत्रकृताच्छोकाद्भृशं व्याकुलचेतसः ।
शपन्तीष्टान्सखीनार्तास्तेभ्यः पापतरो नु कः  ॥ ०१७  ॥

परासुश्च सुतो दृष्टः शप्तश्चेष्टः सखा मया ।
ईदृशीमापदं को नु द्वितीयोऽनुभविष्यति  ॥ ०१८  ॥

विलप्यैवं बहुविधं भरद्वाजोऽदहत्सुतम् ।
सुसमिद्धं ततः पश्चात्प्रविवेश हुताशनम्  ॥ ०१९  ॥

---

# अध्याय १३९

लोमश उवाच  ॥

एतस्मिन्नेव काले तु बृहद्युम्नो महीपतिः ।
सत्रमास्ते महाभागो रैभ्ययाज्यः प्रतापवान्  ॥ ००१  ॥

तेन रैभ्यस्य वै पुत्रावर्वावसुपरावसू ।
वृतौ सहायौ सत्रार्थे बृहद्युम्नेन धीमता  ॥ ००२  ॥

तत्र तौ समनुज्ञातौ पित्रा कौन्तेय जग्मतुः ।
आश्रमे त्वभवद्रैभ्यो भार्या चैव परावसोः  ॥ ००३  ॥

अथावलोककोऽगच्छद्गृहानेकः परावसुः ।
कृष्णाजिनेन संवीतं ददर्श पितरं वने ॥ ००४ ॥

जघन्यरात्रे निद्रान्धः सावशेषे तमस्यपि ।
चरन्तं गहनेऽरण्ये मेने स पितरं मृगम् ॥ ००५ ॥

मृगं तु मन्यमानेन पिता वै तेन हिंसितः ।
अकामयानेन तदा शरीरत्राणमिच्छता ॥ ००६ ॥

स तस्य प्रेतकार्याणि कृत्वा सर्वाणि भारत ।
पुनरागम्य तत्सत्रमब्रवीद्भ्रातरं वचः ॥ ००७ ॥

इदं कर्म न शक्तस्त्वं वोढुमेकः कथञ्चन ।
मया तु हिंसितस्तातो मन्यमानेन तं मृगम् ॥ ००८ ॥

सोऽस्मदर्थे व्रतं साधु चर त्वं ब्रह्महिंसनम् ।
समर्थो ह्यहमेकाकी कर्म कर्तुमिदं मुने ॥ ००९ ॥

अर्वावसुरुवाच ॥

करोतु वै भवान्सत्रं बृहद्युम्नस्य धीमतः ।
ब्रह्महत्यां चरिष्येऽहं त्वदर्थं नियतेन्द्रियः ॥ ०१० ॥

लोमश उवाच ॥

स तस्या ब्रह्महत्यायाः पारं गत्वा युधिष्ठिर ।
अर्वावसुस्तदा सत्रमाजगाम पुनर्मुनिः ॥ ०११ ॥

ततः परावसुर्दृष्ट्वा भ्रातरं समुपस्थितम् ।
बृहद्युम्नमुवाचेदं वचनं परिषद्गतम् ॥ ०१२ ॥

एष ते ब्रह्महा यज्ञं मा द्रष्टुं प्रविशेदिति ।
ब्रह्महा प्रेक्षितेनापि पीडयेत्त्वां न संशयः ॥ ०१३ ॥

प्रेष्यैरुत्सार्यमाणस्तु राजन्नर्वावसुस्तदा ।
न मया ब्रह्महत्येयं कृतेत्याह पुनः पुनः ॥ ०१४ ॥

उच्यमानोऽसकृत्प्रेष्यैर्ब्रह्महन्निति भारत ।
नैव स प्रतिजानाति ब्रह्महत्यां स्वयं कृताम् ॥ ०१५ ॥

मम भ्रात्रा कृतमिदं मया तु परिरक्षितम् ॥ ०१५ ॥

प्रीतास्तस्याभवन्देवाः कर्मणार्वावसोर्नृप ।
तं ते प्रवरयामासुर्निरासुश्च परावसुम् ॥ ०१६ ॥

ततो देवा वरं तस्मै ददुरग्निपुरोगमाः ।
स चापि वरयामास पितुरुत्थानमात्मनः ॥ ०१७ ॥

अनागस्त्वं तथा भ्रातुः पितुश्चास्मरणं वधे ।
भरद्वाजस्य चोत्थानं यवक्रीतस्य चोभयोः ॥ ०१८ ॥

ततः प्रादुर्बभूवुस्ते सर्व एव युधिष्ठिर ।
अथाब्रवीद्यवक्रीतो देवानग्निपुरोगमान् ॥ ०१९ ॥

समधीतं मया ब्रह्म व्रतानि चरितानि च ।
कथं नु रैभ्यः शक्तो मामधीयानं तपस्विनम् ॥ ०२० ॥

तथायुक्तेन विधिना निहन्तुममरोत्तमाः ॥ ०२० ॥

देवा ऊचुः ॥

मैवं कृथा यवक्रीत यथा वदसि वै मुने ।

ऋते गुरुमधीता हि सुखं वेदास्त्वया पुरा ॥ ०२१ ॥

अनेन तु गुरून्दुःखात्तोषयित्वा स्वकर्मणा ।
कालेन महता क्लेशाद्ब्रह्माधिगतमुत्तमम् ॥ ०२२ ॥

लोमश उवाच ॥

यवक्रीतमथोक्त्वैवं देवाः साग्निपुरोगमाः ।
सञ्जीवयित्वा तान्सर्वान्पुनर्जग्मुस्त्रिविष्टपम् ॥ ०२३ ॥

आश्रमस्तस्य पुण्योऽयं सदापुष्पफलद्रुमः ।
अत्रोष्य राजशार्दूल सर्वपापैः प्रमोक्ष्यसे ॥ ०२४ ॥

---

# अध्याय १४०

लोमश उवाच ॥

उशीरबीजं मैनाकं गिरिं श्वेतं च भारत ।
समतीतोऽसि कौन्तेय कालशैलं च पार्थिव ॥ ००१ ॥

एषा गङ्गा सप्तविधा राजते भरतर्षभ ।
स्थानं विरजसं रम्यं यत्राग्निर्नित्यमिध्यते ॥ ००२ ॥

एतद्वै मानुषेणाद्य न शक्यं द्रष्टुमप्युत ।
समाधिं कुरुताव्यग्रास्तीर्थान्येतानि द्रक्ष्यथ ॥ ००३ ॥

श्वेतं गिरिं प्रवेक्ष्यामो मन्दरं चैव पर्वतम् ।

यत्र माणिचरो यक्षः कुबेरश्चापि यक्षराट् ॥ ००४ ॥

अष्टाशीतिसहस्राणि गन्धर्वाः शीघ्रचारिणः ।
तथा किंपुरुषा राजन्यक्षाश्चैव चतुर्गुणाः ॥ ००५ ॥

अनेकरूपसंस्थाना नानाप्रहरणाश्च ते ।
यक्षेन्द्रं मनुजश्रेष्ठ माणिभद्रमुपासते ॥ ००६ ॥

तेषामृद्धिरतीवाग्र्या गतौ वायुसमाश्च ते ।
स्थानात्प्रच्यावयेयुर्ये देवराजमपि ध्रुवम् ॥ ००७ ॥

तैस्तात बलिभिर्गुप्ता यातुधानैश्च रक्षिताः ।
दुर्गमाः पर्वताः पार्थ समाधिं परमं कुरु ॥ ००८ ॥

कुबेरसचिवाश्चान्ये रौद्रा मैत्राश्च राक्षसाः ।
तैः समेष्याम कौन्तेय यत्तो विक्रमणे भव ॥ ००९ ॥

कैलासः पर्वतो राजन्षड्योजनशतान्युत ।
यत्र देवाः समायान्ति विशाला यत्र भारत ॥ ०१० ॥

असंख्येयास्तु कौन्तेय यक्षराक्षसकिंनराः ।
नागाः सुपर्णा गन्धर्वाः कुबेरसदनं प्रति ॥ ०११ ॥

तान्विगाहस्व पार्थाद्य तपसा च दमेन च ।
रक्ष्यमाणो मया राजन्भीमसेनबलेन च ॥ ०१२ ॥

स्वस्ति ते वरुणो राजा यमश्च समितिञ्जयः ।
गङ्गा च यमुना चैव पर्वतश्च दधातु ते ॥ ०१३ ॥

इन्द्रस्य जाम्बूनदपर्वताग्रे ; शृणोमि घोषं तव देवि गङ्गे ।
गोपाययेमं सुभगे गिरिभ्यः ; सर्वाजमीढापचितं नरेन्द्रम् ॥ ०१४ ॥

भवस्व शर्म प्रविविक्षतोऽस्य ; शैलानिमाञ्शैलसुते नृपस्य ॥ ०१४ ॥

युधिष्ठिर उवाच ॥

अपूर्वोऽयं संभ्रमो लोमशस्य ; कृष्णां सर्वे रक्षत मा प्रमादम् ।
देशो ह्ययं दुर्गतमो मतोऽस्य ; तस्मात्परं शौचमिहाचरध्वम् ॥ ०१५ ॥

वैशंपायन उवाच ॥

ततोऽब्रवीद्भीममुदारवीर्यं ; कृष्णां यत्तः पालय भीमसेन ।
शून्येऽर्जुनेऽसंनिहिते च तात ; त्वमेव कृष्णां भजसेऽसुखेषु ॥ ०१६ ॥

ततो महात्मा यमजौ समेत्य ; मूर्धन्युपाघ्राय विमृज्य गात्रे ।
उवाच तौ बाष्पकलं स राजा ; मा भैष्टमागच्छतमप्रमत्तौ ॥ ०१७ ॥

---

# अध्याय १४१

युधिष्ठिर उवाच ॥

अन्तर्हितानि भूतानि रक्षांसि बलवन्ति च ।
अग्निना तपसा चैव शक्यं गन्तुं वृकोदर ॥ ००१ ॥

संनिवर्तय कौन्तेय क्षुत्पिपासे बलान्वयात् ।
ततो बलं च दाक्ष्यं च संश्रयस्व कुरूद्वह ॥ ००२ ॥

ऋषेस्त्वया श्रुतं वाक्यं कैलासं पर्वतं प्रति ।

बुद्ध्या प्रपश्य कौन्तेय कथं कृष्णा गमिष्यति ॥ ००३ ॥

अथ वा सहदेवेन धौम्येन च सहाभिभो ।
सूदैः पौरोगवैश्चैव सर्वैश्च परिचारकैः ॥ ००४ ॥

रथैरश्वैश्च ये चान्ये विप्राः क्लेशासहाः पथि ।
सर्वैस्त्वं सहितो भीम निवर्तस्वायतेक्षण ॥ ००५ ॥

त्रयो वयं गमिष्यामो लघ्वाहारा यतव्रताः ।
अहं च नकुलश्चैव लोमशश्च महातपाः ॥ ००६ ॥

ममागमनमाकाङ्क्षन्गङ्गाद्वारे समाहितः ।
वसेह द्रौपदीं रक्षन्यावदागमनं मम ॥ ००७ ॥

भीम उवाच ॥

राजपुत्री श्रमेणार्ता दुःखार्ता चैव भारत ।
व्रजत्येव हि कल्याणी श्वेतवाहदिदृक्षया ॥ ००८ ॥

तव चाप्यरतिस्तीव्रा वर्धते तमपश्यतः ।
किं पुनः सहदेवं च मां च कृष्णां च भारत ॥ ००९ ॥

रथाः कामं निवर्तन्तां सर्वे च परिचारकाः ।
सूदाः पौरोगवाश्चैव मन्यते यत्र नो भवान् ॥ ०१० ॥

न ह्यहं हातुमिच्छामि भवन्तमिह कर्हिचित् ।
शैलेऽस्मिन्राक्षसाकीर्णे दुर्गेषु विषमेषु च ॥ ०११ ॥

इयं चापि महाभागा राजपुत्री यतव्रता ।
त्वामृते पुरुषव्याघ्र नोत्सहेद्विनिवर्तितुम् ॥ ०१२ ॥

तथैव सहदेवोऽयं सततं त्वामनुव्रतः ।
न जातु विनिवर्तेत मतज्ञो ह्यहमस्य वै ॥ ०१३ ॥

अपि चात्र महाराज सव्यसाचिदिदृक्षया ।
सर्वे लालसभूताः स्म तस्माद्यास्यामहे सह ॥ ०१४ ॥

यद्यशक्यो रथैर्गन्तुं शैलोऽयं बहुकन्दरः ।
पद्भिरेव गमिष्यामो मा राजन्विमना भव ॥ ०१५ ॥

अहं वहिष्ये पाञ्चालीं यत्र यत्र न शक्ष्यति ।
इति मे वर्तते बुद्धिर्मा राजन्विमना भव ॥ ०१६ ॥

सुकुमारौ तथा वीरौ माद्रीनन्दिकरावुभौ ।
दुर्गे संतारयिष्यामि यद्यशक्तौ भविष्यतः ॥ ०१७ ॥

युधिष्ठिर उवाच ॥

एवं ते भाषमाणस्य बलं भीमाभिवर्धताम् ।
यस्त्वमुत्सहसे वोढुं द्रौपदीं विपुलेऽध्वनि ॥ ०१८ ॥

यमजौ चापि भद्रं ते नैतदन्यत्र विद्यते ।
बलं च ते यशश्चैव धर्मः कीर्तिश्च वर्धताम् ॥ ०१९ ॥

यस्त्वमुत्सहसे नेतुं भ्रातरौ सह कृष्णया ।
मा ते ग्लानिर्महाबाहो मा च तेऽस्तु पराभवः ॥ ०२० ॥

वैशंपायन उवाच ॥

ततः कृष्णाब्रवीद्वाक्यं प्रहसन्ती मनोरमा ।
गमिष्यामि न संतापः कार्यो मां प्रति भारत ॥ ०२१ ॥

लोमश उवाच ॥

तपसा शक्यते गन्तुं पर्वतो गन्धमादनः ।
तपसा चैव कौन्तेय सर्वे योक्ष्यामहे वयम् ॥ ०२२ ॥

नकुलः सहदेवश्च भीमसेनश्च पार्थिव ।
अहं च त्वं च कौन्तेय द्रक्ष्यामः श्वेतवाहनम् ॥ ०२३ ॥

वैशंपायन उवाच ॥

एवं संभाषमाणास्ते सुबाहोर्विषयं महत् ।
ददृशुर्मुदिता राजन्प्रभूतगजवाजिमत् ॥ ०२४ ॥

किराततङ्गणाकीर्णं कुणिन्दशतसङ्कुलम् ।
हिमवत्यमरैर्जुष्टं बह्वाश्चर्यसमाकुलम् ॥ ०२५ ॥

सुबाहुश्चापि तान्दृष्ट्वा पूजया प्रत्यगृह्णत ।
विषयान्ते कुणिन्दानामीश्वरः प्रीतिपूर्वकम् ॥ ०२६ ॥

तत्र ते पूजितास्तेन सर्व एव सुखोषिताः ।
प्रतस्थुर्विमले सूर्ये हिमवन्तं गिरिं प्रति ॥ ०२७ ॥

इन्द्रसेनमुखांश्चैव भृत्यान्पौरोगवांस्तथा ।
सूदांश्च परिबर्हं च द्रौपद्याः सर्वशो नृप ॥ ०२८ ॥

राज्ञः कुणिन्दाधिपतेः परिदाय महारथाः ।
पद्भिरेव महावीर्या ययुः कौरवनन्दनाः ॥ ०२९ ॥

ते शनैः प्राद्रवन्सर्वे कृष्णया सह पाण्डवाः ।
तस्माद्देशात्सुसंहृष्टा द्रष्टुकामा धनञ्जयम् ॥ ०३० ॥

# अध्याय १४२

युधिष्ठिर उवाच ॥

भीमसेन यमौ चोभौ पाञ्चालि च निबोधत ।
नास्ति भूतस्य नाशो वै पश्यतास्मान्वनेचरान् ॥ ००१ ॥

दुर्बलाः क्लेशिताः स्मेति यद्ब्रवीथेतरेतरम् ।
अशक्येऽपि व्रजामेति धनञ्जयदिदृक्षया ॥ ००२ ॥

तन्मे दहति गात्राणि तूलराशिमिवानलः ।
यच्च वीरं न पश्यामि धनञ्जयमुपान्तिके ॥ ००३ ॥

तस्य दर्शनतृष्णं मां सानुजं वनमास्थितम् ।
याज्ञसेन्याः परामर्शः स च वीर दहत्युत ॥ ००४ ॥

नकुलात्पूर्वजं पार्थं न पश्याम्यमितौजसम् ।
अजेयमुग्रधन्वानं तेन तप्ये वृकोदर ॥ ००५ ॥

तीर्थानि चैव रम्याणि वनानि च सरांसि च ।
चरामि सह युष्माभिस्तस्य दर्शनकाङ्क्षया ॥ ००६ ॥

पञ्च वर्षाण्यहं वीरं सत्यसंधं धनञ्जयम् ।
यन्न पश्यामि बीभत्सुं तेन तप्ये वृकोदर ॥ ००७ ॥

तं वै श्यामं गुडाकेशं सिंहविक्रान्तगामिनम् ।
न पश्यामि महाबाहुं तेन तप्ये वृकोदर ॥ ००८ ॥

कृतास्त्रं निपुणं युद्धे प्रतिमानं धनुष्मताम् ।
न पश्यामि नरश्रेष्ठं तेन तप्ये वृकोदर ॥ ००९ ॥

चरन्तमरिसंघेषु कालं क्रुद्धमिवान्तकम् ।
प्रभिन्नमिव मातङ्गं सिंहस्कन्धं धनञ्जयम् ॥ ०१० ॥

यः स शक्रादनवरो वीर्येण द्रविणेन च ।
यमयोः पूर्वजः पार्थः श्वेताश्वोऽमितविक्रमः ॥ ०११ ॥

दुःखेन महताविष्टः स्वकृतेनानिवर्तिना ।
अजेयमुग्रधन्वानं तं न पश्यामि फल्गुनम् ॥ ०१२ ॥

सततं यः क्षमाशीलः क्षिप्यमाणोऽप्यणीयसा ।
ऋजुमार्गप्रपन्नस्य शर्मदाताभयस्य च ॥ ०१३ ॥

स तु जिह्मप्रवृत्तस्य माययाभिजिघांसतः ।
अपि वज्रधरस्यापि भवेत्कालविषोपमः ॥ ०१४ ॥

शत्रोरपि प्रपन्नस्य सोऽनृशंसः प्रतापवान् ।
दाताभयस्य बीभत्सुरमितात्मा महाबलः ॥ ०१५ ॥

सर्वेषामाश्रयोऽस्माकं रणेऽरीणां प्रमर्दिता ।
आहर्ता सर्वरत्नानां सर्वेषां नः सुखावहः ॥ ०१६ ॥

रत्नानि यस्य वीर्येण दिव्यान्यासन्पुरा मम ।
बहूनि बहुजातानि यानि प्राप्तः सुयोधनः ॥ ०१७ ॥

यस्य बाहुबलाद्वीर सभा चासीत्पुरा मम ।
सर्वरत्नमयी ख्याता त्रिषु लोकेषु पाण्डव ॥ ०१८ ॥

वासुदेवसमं वीर्ये कार्तवीर्यसमं युधि ।

अजेयमजितं युद्धे तं न पश्यामि फल्गुनम्  ॥ ०१९  ॥

सङ्कर्षणं महावीर्यं त्वां च भीमापराजितम् ।
अनुजातः स वीर्येण वासुदेवं च शत्रुहा  ॥ ०२०  ॥

यस्य बाहुबले तुल्यः प्रभावे च पुरंदरः ।
जवे वायुर्मुखे सोमः क्रोधे मृत्युः सनातनः  ॥ ०२१  ॥

ते वयं तं नरव्याघ्रं सर्वे वीर दिदृक्षवः ।
प्रवेक्ष्यामो महाबाहो पर्वतं गन्धमादनम्  ॥ ०२२  ॥

विशाला बदरी यत्र नरनारायणाश्रमः ।
तं सदाध्युषितं यक्षैर्द्रक्ष्यामो गिरिमुत्तमम्  ॥ ०२३  ॥

कुबेरनलिनीं रम्यां राक्षसैरभिरक्षिताम् ।
पद्भिरेव गमिष्यामस्तप्यमाना महत्तपः  ॥ ०२४  ॥

नातप्ततपसा शक्यो देशो गन्तुं वृकोदर ।
न नृशंसेन लुब्धेन नाप्रशान्तेन भारत  ॥ ०२५  ॥

तत्र सर्वे गमिष्यामो भीमार्जुनपदैषिणः ।
सायुधा बद्धनिस्त्रिंशाः सह विप्रैर्महाव्रतैः  ॥ ०२६  ॥

मक्षिकान्मशकान्दंशान्व्याघ्रान्सिंहान्सरीसृपान् ।
प्राप्नोत्यनियतः पार्थ नियतस्तान्न पश्यति  ॥ ०२७  ॥

ते वयं नियतात्मानः पर्वतं गन्धमादनम् ।
प्रवेक्ष्यामो मिताहारा धनञ्जयदिदृक्षवः  ॥ ०२८  ॥

# अध्याय १४३

वैशंपायन उवाच ॥

ते शूरास्ततधन्वानस्तूणवन्तः समार्गणाः ।
बद्धगोधाङ्गुलित्राणाः खड्गवन्तोऽमितौजसः ॥ ००१ ॥

परिगृह्य द्विजश्रेष्ठाञ्श्रेष्ठाः सर्वधनुष्मताम् ।
पाञ्चालीसहिता राजन्प्रययुर्गन्धमादनम् ॥ ००२ ॥

सरांसि सरितश्चैव पर्वतांश्च वनानि च ।
वृक्षांश्च बहुलच्छायान्ददृशुर्गिरिमूर्धनि ॥ ००३ ॥

नित्यपुष्पफलान्देशान्देवर्षिगणसेवितान् ॥ ००३ ॥

आत्मन्यात्मानमाधाय वीरा मूलफलाशनाः ।
चेरुरुच्चावचाकारान्देशान्विषमसङ्कटान् ॥ ००४ ॥

पश्यन्तो मृगजातानि बहूनि विविधानि च ॥ ००४ ॥

ऋषिसिद्धामरयुतं गन्धर्वाप्सरसां प्रियम् ।
विविशुस्ते महात्मानः किंनराचरितं गिरिम् ॥ ००५ ॥

प्रविशत्स्वथ वीरेषु पर्वतं गन्धमादनम् ।
चण्डवातं महद्वर्षं प्रादुरासीद्विशां पते ॥ ००६ ॥

ततो रेणुः समुद्भूतः सपत्रबहुलो महान् ।
पृथिवीं चान्तरिक्षं च द्यां चैव तमसावृणोत् ॥ ००७ ॥

न स्म प्रज्ञायते किञ्चिदावृते व्योम्नि रेणुना ।
न चापि शेकुस्ते कर्तुमन्योन्यस्याभिभाषणम् ॥ ००८ ॥

न चापश्यन्त तेऽन्योन्यं तमसा हतचक्षुषः ।
आकृष्यमाणा वातेन साश्मचूर्णेन भारत  ॥ ००९  ॥

द्रुमाणां वातभग्नानां पततां भूतले भृशम् ।
अन्येषां च महीजानां शब्दः समभवन्महान्  ॥ ०१०  ॥

द्यौः स्वित्पतति किं भूमौ दीर्यन्ते पर्वता नु किम् ।
इति ते मेनिरे सर्वे पवनेन विमोहिताः  ॥ ०११  ॥

ते यथानन्तरान्वृक्षान्वल्मीकान्विषमाणि च ।
पाणिभिः परिमार्गन्तो भीता वायोर्निलिल्यिरे  ॥ ०१२  ॥

ततः कार्मुकमुद्यम्य भीमसेनो महाबलः ।
कृष्णामादाय सङ्गत्या तस्थावाश्रित्य पादपम्  ॥ ०१३  ॥

धर्मराजश्च धौम्यश्च निलिल्याते महावने ।
अग्निहोत्राण्युपादाय सहदेवस्तु पर्वते  ॥ ०१४  ॥

नकुलो ब्राह्मणाश्चान्ये लोमशश्च महातपाः ।
वृक्षानासाद्य संत्रस्तास्तत्र तत्र निलिल्यिरे  ॥ ०१५  ॥

मन्दीभूते च पवने तस्मिन्रजसि शाम्यति ।
महद्भिः पृषतैस्तूर्णं वर्षमभ्याजगाम ह  ॥ ०१६  ॥

ततोऽश्मसहिता धाराः संवृण्वन्त्यः समन्ततः ।
प्रपेतुरनिशं तत्र शीघ्रवातसमीरिताः  ॥ ०१७  ॥

ततः सागरगा आपः कीर्यमाणाः समन्ततः ।
प्रादुरासन्सकलुसाः फेनवत्यो विशां पते  ॥ ०१८  ॥

वहन्त्यो वारि बहुलं फेनोडुपपरिप्लुतम् ।
परिसस्रुर्महाशब्दाः प्रकर्षन्त्यो महीरुहान् ॥ ०१९ ॥

तस्मिन्नुपरते वर्षे वाते च समतां गते ।
गते ह्यम्भसि निम्नानि प्रादुर्भूते दिवाकरे ॥ ०२० ॥

निर्जग्मुस्ते शनैः सर्वे समाजग्मुश्च भारत ।
प्रतस्थुश्च पुनर्वीराः पर्वतं गन्धमादनम् ॥ ०२१ ॥

---

# अध्याय १४४

वैशंपायन उवाच ॥

ततः प्रयातमात्रेषु पाण्डवेषु महात्मसु ।
पद्भ्यामनुचिता गन्तुं द्रौपदी समुपाविशत् ॥ ००१ ॥

श्रान्ता दुःखपरीता च वातवर्षेण तेन च ।
सौकुमार्याच्च पाञ्चाली संमुमोह यशस्विनी ॥ ००२ ॥

सा पात्यमाना मोहेन बाहुभ्यामसितेक्षणा ।
वृत्ताभ्यामनुरूपाभ्यामूरू समवलम्बत ॥ ००३ ॥

आलम्बमाना सहितावूरू गजकरोपमौ ।
पपात सहसा भूमौ वेपन्ती कदली यथा ॥ ००४ ॥

तां पतन्तीं वरारोहां सज्जमानां लतामिव ।
नकुलः समभिद्रुत्य परिजग्राह वीर्यवान् ॥ ००५ ॥

नकुल उवाच ॥

राजन्पाञ्चालराजस्य सुतेयमसितेक्षणा ।
श्रान्ता निपतिता भूमौ तामवेक्षस्व भारत ॥ ००६ ॥

अदुःखार्हा परं दुःखं प्राप्तेयं मृदुगामिनी ।
आश्वासय महाराज तामिमां श्रमकर्शिताम् ॥ ००७ ॥

वैशंपायन उवाच ॥

राजा तु वचनात्तस्य भृशं दुःखसमन्वितः ।
भीमश्च सहदेवश्च सहसा समुपाद्रवन् ॥ ००८ ॥

तामवेक्ष्य तु कौन्तेयो विवर्णवदनां कृशाम् ।
अङ्कमानीय धर्मात्मा पर्यदेवयदातुरः ॥ ००९ ॥

कथं वेश्मसु गुप्तेषु स्वास्तीर्णशयनोचिता ।
शेते निपतिता भूमौ सुखार्हा वरवर्णिनी ॥ ०१० ॥

सुकुमारौ कथं पादौ मुखं च कमलप्रभम् ।
मत्कृतेऽद्य वरार्हायाः श्यामतां समुपागतम् ॥ ०११ ॥

किमिदं द्यूतकामेन मया कृतमबुद्धिना ।
आदाय कृष्णां चरता वने मृगगणायुते ॥ ०१२ ॥

सुखं प्राप्स्यति पाञ्चाली पाण्डवान्प्राप्य वै पतीन् ।
इति द्रुपदराजेन पित्रा दत्तायतेक्षणा ॥ ०१३ ॥

तत्सर्वमनवाप्यैव श्रमशोकाद्धि कर्शिता ।
शेते निपतिता भूमौ पापस्य मम कर्मभिः ॥ ०१४ ॥

तथा लालप्यमाने तु धर्मराजे युधिष्ठिरे ।
धौम्यप्रभृतयः सर्वे तत्राजग्मुर्द्विजोत्तमाः ॥ ०१५ ॥

ते समाश्वासयामासुराशीर्भिश्चाप्यपूजयन् ।
रक्षोघ्नांश्च तथा मन्त्राञ्जेपुश्चक्रुश्च ते क्रियाः ॥ ०१६ ॥

पठ्यमानेषु मन्त्रेषु शान्त्यर्थं परमर्षिभिः ।
स्पृश्यमाना करैः शीतैः पाण्डवैश्च मुहुर्मुहुः ॥ ०१७ ॥

सेव्यमाना च शीतेन जलमिश्रेण वायुना ।
पाञ्चाली सुखमासाद्य लेभे चेतः शनैः शनैः ॥ ०१८ ॥

परिगृह्य च तां दीनां कृष्णामजिनसंस्तरे ।
तदा विश्रामयामासुर्लब्धसञ्ज्ञां तपस्विनीम् ॥ ०१९ ॥

तस्या यमौ रक्ततलौ पादौ पूजितलक्षणौ ।
कराभ्यां किणजाताभ्यां शनकैः संववाहतुः ॥ ०२० ॥

पर्याश्वासयदप्येनां धर्मराजो युधिष्ठिरः ।
उवाच च कुरुश्रेष्ठो भीमसेनमिदं वचः ॥ ०२१ ॥

बहवः पर्वता भीम विषमा हिमदुर्गमाः ।
तेषु कृष्णा महाबाहो कथं नु विचरिष्यति ॥ ०२२ ॥

भीमसेन उवाच ॥

त्वां राजन्राजपुत्रीं च यमौ च पुरुषर्षभौ ।
स्वयं नेष्यामि राजेन्द्र मा विषादे मनः कृथाः ॥ ०२३ ॥

अथ वासौ मया जातो विहगो मद्बलोपमः ।

वहेदनघ सर्वान्नो वचनात्ते घतोत्कचः ॥ ०२४ ॥

वैशंपायन उवाच ॥

अनुज्ञातो धर्मराज्ञा पुत्रं सस्मार राक्षसम् ।
घटोत्कचश्च धर्मात्मा स्मृतमात्रः पितुस्तदा ॥ ०२५ ॥

कृताञ्जलिरुपातिष्ठदभिवाद्याथ पाण्डवान् ॥ ०२५ ॥

ब्राह्मणांश्च महाबाहुः स च तैरभिनन्दितः ।
उवाच भीमसेनं स पितरं सत्यविक्रमः ॥ ०२६ ॥

स्मृतोऽस्मि भवता शीघ्रं शुश्रूषुरहमागतः ।
आज्ञापय महाबाहो सर्वं कर्तास्म्यसंशयम् ॥ ०२७ ॥

तच्छ्रुत्वा भीमसेनस्तु राक्षसं परिषस्वजे ॥ ०२७ ॥

---

# अध्याय १४५

युधिष्ठिर उवाच ॥

धर्मज्ञो बलवाञ्शूरः सद्यो राक्षसपुङ्गवः ।
भक्तोऽस्मानौरसः पुत्रो भीम गृह्णातु मातरम् ॥ ००१ ॥

तव भीम बलेनाहमतिभीमपराक्रम ।
अक्षतः सह पाञ्चाल्या गच्छेयं गन्धमादनम् ॥ ००२ ॥

वैशंपायन उवाच ॥

भ्रातुर्वचनमाज्ञाय भीमसेनो घटोत्कचम् ।
आदिदेश नरव्याघ्रस्तनयं शत्रुकर्शनम्  ॥ ००३  ॥

हैडिम्बेय परिश्रान्ता तव मातापराजिता ।
त्वं च कामगमस्तात बलवान्वह तां खग  ॥ ००४  ॥

स्कन्धमारोप्य भद्रं ते मध्येऽस्माकं विहायसा ।
गच्छ नीचिकया गत्या यथा चैनां न पीडयेः  ॥ ००५  ॥

घटोत्कच उवाच  ॥

धर्मराजं च धौम्यं च राजपुत्रीं यमौ तथा ।
एकोऽप्यहमलं वोढुं किमुताद्य सहायवान्  ॥ ००६  ॥

वैशंपायन उवाच  ॥

एवमुक्त्वा ततः कृष्णामुवाह स घटोत्कचः ।
पाण्डूनां मध्यगो वीरः पाण्डवानपि चापरे  ॥ ००७  ॥

लोमशः सिद्धमार्गेण जगामानुपमद्युतिः ।
स्वेनैवात्मप्रभावेन द्वितीय इव भास्करः  ॥ ००८  ॥

ब्राह्मणांश्चापि तान्सर्वान्समुपादाय राक्षसाः ।
नियोगाद्राक्षसेन्द्रस्य जग्मुर्भीमपराक्रमाः  ॥ ००९  ॥

एवं सुरमणीयानि वनान्युपवनानि च ।
आलोकयन्तस्ते जग्मुर्विशालां बदरीं प्रति  ॥ ०१०  ॥

ते त्वाशुगतिभिर्वीरा राक्षसैस्तैर्महाबलैः ।
उह्यमाना ययुः शीघ्रं महदध्वानमल्पवत्  ॥ ०११  ॥

देशान्म्लेच्छगणाकीर्णान्नानारत्नाकरायुतान् ।
ददृशुर्गिरिपादांश्च नानाधातुसमाचितान्  ॥ ०१२  ॥

विद्याधरगणाकीर्णान्युतान्वानरकिंनरैः ।
तथा किंपुरुषैश्चैव गन्धर्वैश्च समन्ततः  ॥ ०१३  ॥

नदीजालसमाकीर्णान्नानापक्षिरुताकुलान् ।
नानाविधैर्मृगैर्जुष्टान्वानरैश्चोपशोभितान्  ॥ ०१४  ॥

ते व्यतीत्य बहून्देशानुत्तरांश्च कुरूनपि ।
ददृशुर्विविधाश्चर्यं कैलासं पर्वतोत्तमम्  ॥ ०१५  ॥

तस्याभ्याशे तु ददृशुर्नरनारायणाश्रमम् ।
उपेतं पादपैर्दिव्यैः सदापुष्पफलोपगैः  ॥ ०१६  ॥

ददृशुस्तां च बदरीं वृत्तस्कन्धां मनोरमाम् ।
स्निग्धामविरलच्छायां श्रिया परमया युताम्  ॥ ०१७  ॥

पत्रैः स्निग्धैरविरलैरुपेतां मृदुभिः शुभाम् ।
विशालशाखां विस्तीर्णामतिद्युतिसमन्विताम्  ॥ ०१८  ॥

फलैरुपचितैर्दिव्यैराचितां स्वादुभिर्भृशम् ।
मधुस्रवैः सदा दिव्यां महर्षिगणसेविताम्  ॥ ०१९  ॥

मदप्रमुदितैर्नित्यं नानाद्विजगणैर्युताम्  ॥ ०१९  ॥

अदंशमशके देशे बहुमूलफलोदके ।
नीलशाद्वलसंछन्ने देवगन्धर्वसेविते  ॥ ०२०  ॥

सुसमीकृतभूभागे स्वभावविहिते शुभे ।

जातां हिममृदुस्पर्शे देशेऽपहतकण्टके ॥ ०२१ ॥

तामुपेत्य महात्मानः सह तैर्ब्राह्मणर्षभैः ।
अवतेरुस्ततः सर्वे राक्षसस्कन्धतः शनैः ॥ ०२२ ॥

ततस्तमाश्रमं पुण्यं नरनारायणाश्रितम् ।
ददृशुः पाण्डवा राजन्सहिता द्विजपुङ्गवैः ॥ ०२३ ॥

तमसा रहितं पुण्यमनामृष्टं रवेः करैः ।
क्षुत्तृड्शीतोष्णदोषैश्च वर्जितं शोकनाशनम् ॥ ०२४ ॥

महर्षिगणसंबाधं ब्राह्म्या लक्ष्म्या समन्वितम् ।
दुष्प्रवेशं महाराज नरैर्धर्मबहिष्कृतैः ॥ ०२५ ॥

बलिहोमार्चितं दिव्यं सुसंमृष्टानुलेपनम् ।
दिव्यपुष्पोपहारैश्च सर्वतोऽभिविराजितम् ॥ ०२६ ॥

विशालैरग्निशरणैः स्रुग्भाण्डैराचितं शुभैः ।
महद्भिस्तोयकलशैः कठिनैश्चोपशोभितम् ॥ ०२७ ॥

शरण्यं सर्वभूतानां ब्रह्मघोषनिनादितम् ॥ ०२७ ॥

दिव्यमाश्रयणीयं तमाश्रमं श्रमनाशनम् ।
श्रिया युतमनिर्देश्यं देवचर्योपशोभितम् ॥ ०२८ ॥

फलमूलाशनैर्दान्तैश्चीरकृष्णाजिनाम्बरैः ।
सूर्यवैश्वानरसमैस्तपसा भावितात्मभिः ॥ ०२९ ॥

महर्षिभिर्मोक्षपरैर्यतिभिर्नियतेन्द्रियैः ।
ब्रह्मभूतैर्महाभागैरुपेतं ब्रह्मवादिभिः ॥ ०३० ॥

सोऽभ्यगच्छन्महातेजास्तानृषीन्नियतः शुचिः ।
भ्रातृभिः सहितो धीमान्धर्मपुत्रो युधिष्ठिरः ॥ ०३१ ॥

दिव्यज्ञानोपपन्नास्ते दृष्ट्वा प्राप्तं युधिष्ठिरम् ।
अभ्यगच्छन्त सुप्रीताः सर्व एव महर्षयः ॥ ०३२ ॥

आशीर्वादान्प्रयुञ्जानाः स्वाध्यायनिरता भृशम् ॥ ०३२ ॥

प्रीतास्ते तस्य सत्कारं विधिना पावकोपमाः ।
उपाजह्रुश्च सलिलं पुष्पमूलफलं शुचि ॥ ०३३ ॥

स तैः प्रीत्याथ सत्कारमुपनीतं महर्षिभिः ।
प्रयतः प्रतिगृह्याथ धर्मपुत्रो युधिष्ठिरः ॥ ०३४ ॥

तं शक्रसदनप्रख्यं दिव्यगन्धं मनोरमम् ।
प्रीतः स्वर्गोपमं पुण्यं पाण्डवः सह कृष्णया ॥ ०३५ ॥

विवेश शोभया युक्तं भ्रातृभिश्च सहानघ ।
ब्राह्मणैर्वेदवेदाङ्गपारगैश्च सहाच्युतः ॥ ०३६ ॥

तत्रापश्यत्स धर्मात्मा देवदेवर्षिपूजितम् ।
नरनारायणस्थानं भागीरथ्योपशोभितम् ॥ ०३७ ॥

मधुस्रवफलां दिव्यां महर्षिगणसेविताम् ।
तामुपेत्य महात्मानस्तेऽवसन्ब्राह्मणैः सह ॥ ०३८ ॥

आलोकयन्तो मैनाकं नानाद्विजगणायुतम् ।
हिरण्यशिखरं चैव तच्च बिन्दुसरः शिवम् ॥ ०३९ ॥

भागीरथीं सुतीर्थां च शीतामलजलां शिवाम् ।
मणिप्रवालप्रस्तारां पादपैरुपशोभिताम् ॥ ०४० ॥

दिव्यपुष्पसमाकीर्णां मनसः प्रीतिवर्धनीम् ।
वीक्षमाणा महात्मानो विजह्रुस्तत्र पाण्डवाः  ॥ ०४१  ॥

तत्र देवान्पितॄंश्चैव तर्पयन्तः पुनः पुनः ।
ब्राह्मणैः सहिता वीरा न्यवसन्पुरुषर्षभाः  ॥ ०४२  ॥

कृष्णायास्तत्र पश्यन्तः क्रीडितान्यमरप्रभाः ।
विचित्राणि नरव्याघ्रा रेमिरे तत्र पाण्डवाः  ॥ ०४३  ॥

---

# सौगन्धिकाहरणम्

## अध्याय १४६

वैशंपायन उवाच  ॥

तत्र ते पुरुषव्याघ्राः परमं शौचमास्थिताः ।
षड्रात्रमवसन्वीरा धनञ्जयदिदृक्षया  ॥ ००१  ॥

तस्मिन्विहरमाणाश्च रममाणाश्च पाण्डवाः  ॥ ००१  ॥

मनोज्ञे काननवरे सर्वभूतमनोरमे ।
पादपैः पुष्पविकचैः फलभारावनामितैः  ॥ ००२  ॥

शोभितं सर्वतोरम्यैः पुंस्कोकिलकुलाकुलैः ।
स्निग्धपत्रैरविरलैः शीतच्छायैर्मनोरमैः  ॥ ००३  ॥

सरांसि च विचित्राणि प्रसन्नसलिलानि च ।
कमलैः सोत्पलैस्तत्र भ्राजमानानि सर्वशः ॥ ००४ ॥

पश्यन्तश्चारुरूपाणि रेमिरे तत्र पाण्डवाः ॥ ००४ ॥

पुण्यगन्धः सुखस्पर्शो ववौ तत्र समीरणः ।
ह्लादयन्पाण्डवान्सर्वान्सकृष्णान्सद्विजर्षभान् ॥ ००५ ॥

ततः पूर्वोत्तरो वायुः पवमानो यदृच्छया ।
सहस्रपत्रमर्काभं दिव्यं पद्ममुदावहत् ॥ ००६ ॥

तदपश्यत पाञ्चाली दिव्यगन्धं मनोरमम् ।
अनिलेनाहृतं भूमौ पतितं जलजं शुचि ॥ ००७ ॥

तच्छुभा शुभमासाद्य सौगन्धिकमनुत्तमम् ।
अतीव मुदिता राजन्भीमसेनमथाब्रवीत् ॥ ००८ ॥

पश्य दिव्यं सुरुचिरं भीम पुष्पमनुत्तमम् ।
गन्धसंस्थानसंपन्नं मनसो मम नन्दनम् ॥ ००९ ॥

एतत्तु धर्मराजाय प्रदास्यामि परंतप ।
हरेरिदं मे कामाय काम्यके पुनराश्रमे ॥ ०१० ॥

यदि तेऽहं प्रिया पार्थ बहूनीमान्युपाहर ।
तान्यहं नेतुमिच्छामि काम्यकं पुनराश्रमम् ॥ ०११ ॥

एवमुक्त्वा तु पाञ्चाली भीमसेनमनिन्दिता ।
जगाम धर्मराजाय पुष्पमादाय तत्तदा ॥ ०१२ ॥

अभिप्रायं तु विज्ञाय महिष्याः पुरुषर्षभः ।
प्रियायाः प्रियकामः स भीमो भीमपराक्रमः ॥ ०१३ ॥

वातं तमेवाभिमुखो यतस्तत्पुष्पमागतम् ।
आजिहीर्षुर्जगामाशु स पुष्पाण्यपराण्यपि ॥ ०१४ ॥

रुक्मपृष्ठं धनुर्गृह्य शरांश्चाशीविषोपमान् ।
मृगराडिव सङ्क्रुद्धः प्रभिन्न इव कुञ्जरः ॥ ०१५ ॥

द्रौपद्याः प्रियमन्विच्छन्स्वबाहुबलमाश्रितः ।
व्यपेतभयसंमोहः शैलमभ्यपतद्बली ॥ ०१६ ॥

स तं द्रुमलतागुल्मच्छन्नं नीलशिलातलम् ।
गिरिं चचारारिहरः किंनराचरितं शुभम् ॥ ०१७ ॥

नानावर्णधरैश्चित्रं धातुद्रुममृगाण्डजैः ।
सर्वभूषणसंपूर्णं भूमेर्भुजमिवोच्छ्रितम् ॥ ०१८ ॥

सर्वर्तुरमणीयेषु गन्धमादनसानुषु ।
सक्तचक्षुरभिप्रायं हृदयेनानुचिन्तयन् ॥ ०१९ ॥

पुंस्कोकिलनिनादेषु षट्पदाभिरुतेषु च ।
बद्धश्रोत्रमनश्चक्षुर्जगामामितविक्रमः ॥ ०२० ॥

जिघ्रमाणो महातेजाः सर्वर्तुकुसुमोद्भवम् ।
गन्धमुद्दाममुद्दामो वने मत्त इव द्विपः ॥ ०२१ ॥

ह्रियमाणश्रमः पित्रा संप्रहृष्टतनूरुहः ।
पितुः संस्पर्शशीतेन गन्धमादनवायुना ॥ ०२२ ॥

स यक्षगन्धर्वसुरब्रह्मर्षिगणसेवितम् ।
विलोडयामास तदा पुष्पहेतोररिंदमः ॥ ०२३ ॥

विषमच्छेदरचितैरनुलिप्तमिवाङ्गुलैः ।
विमलैर्धातुविच्छेदैः काञ्चनाञ्जनराजतैः ॥ ०२४ ॥

सपक्षमिव नृत्यन्तं पार्श्वलग्नैः पयोधरैः ।
मुक्ताहारैरिव चितं च्युतैः प्रस्रवणोदकैः ॥ ०२५ ॥

अभिरामनदीकुञ्जनिर्झरोदरकन्दरम् ।
अप्सरोनूपुररवैः प्रनृत्तबहुबर्हिणम् ॥ ०२६ ॥

दिग्वारणविषाणाग्रैर्घृष्टोपलशिलातलम् ।
स्रस्तांशुकमिवाक्षोभ्यैर्निम्नगानिःसृतैर्जलैः ॥ ०२७ ॥

सशष्पकवलैः स्वस्थैरदूरपरिवर्तिभिः ।
भयस्याज्ञैश्च हरिणैः कौतूहलनिरीक्षितः ॥ ०२८ ॥

चालयन्नूरुवेगेन लताजालान्यनेकशः ।
आक्रीडमानः कौन्तेयः श्रीमान्वायुसुतो ययौ ॥ ०२९ ॥

प्रियामनोरथं कर्तुमुद्यतश्चारुलोचनः ।
प्रांशुः कनकतालाभः सिंहसंहननो युवा ॥ ०३० ॥

मत्तवारणविक्रान्तो मत्तवारणवेगवान् ।
मत्तवारणताम्राक्षो मत्तवारणवारणः ॥ ०३१ ॥

प्रियपार्श्वोपविष्टाभिर्व्यावृत्ताभिर्विचेष्टितैः ।
यक्षगन्धर्वयोषाभिरदृश्याभिर्निरीक्षितः ॥ ०३२ ॥

नवावतारं रूपस्य विक्रीणन्निव पाण्डवः ।
चचार रमणीयेषु गन्धमादनसानुषु ॥ ०३३ ॥

संस्मरन्विविधान्क्लेशान्दुर्योधनकृतान्बहून् ।

द्रौपद्या वनवासिन्याः प्रियं कर्तुं समुद्यतः ॥ ०३४ ॥

सोऽचिन्तयद्गते स्वर्गमर्जुने मयि चागते ।
पुष्पहेतोः कथं न्वार्यः करिष्यति युधिष्ठिरः ॥ ०३५ ॥

स्नेहान्नरवरो नूनमविश्वासाद्वनस्य च ।
नकुलं सहदेवं च न मोक्ष्यति युधिष्ठिरः ॥ ०३६ ॥

कथं नु कुसुमावाप्तिः स्याच्छीघ्रमिति चिन्तयन् ।
प्रतस्थे नरशार्दूलः पक्षिराडिव वेगितः ॥ ०३७ ॥

कम्पयन्मेदिनीं पद्भ्यां निर्घात इव पर्वसु ।
त्रासयन्गजयूथानि वातरंहा वृकोदरः ॥ ०३८ ॥

सिंहव्याघ्रगणांश्चैव मर्दमानो महाबलः ।
उन्मूलयन्महावृक्षान्पोथयंश्चोरसा बली ॥ ०३९ ॥

लतावल्लीश्च वेगेन विकर्षन्पाण्डुनन्दनः ।
उपर्युपरि शैलाग्रमारुरुक्षुरिव द्विपः ॥ ०४० ॥

विनर्दमानोऽतिभृशं सविद्युदिव तोयदः ॥ ०४० ॥

तस्य शब्देन घोरेण धनुर्घोषेण चाभिभो ।
त्रस्तानि मृगयूथानि समन्ताद्विप्रदुद्रुवुः ॥ ०४१ ॥

अथापश्यन्महाबाहुर्गन्धमादनसानुषु ।
सुरम्यं कदलीषण्डं बहुयोजनविस्तृतम् ॥ ०४२ ॥

तमभ्यगच्छद्वेगेन क्षोभयिष्यन्महाबलः ।
महागज इवास्त्रावी प्रभञ्जन्विविधान्द्रुमान् ॥ ०४३ ॥

उत्पाट्य कदलीस्कन्धान्बहुतालसमुच्छ्रयान् ।
चिक्षेप तरसा भीमः समन्ताद्बलिनां वरः ॥ ०४४ ॥

ततः सत्त्वान्युपाक्रामन्बहूनि च महान्ति च ।
रुरुवारणसंघाश्च महिषाश्च जलाश्रयाः ॥ ०४५ ॥

सिंहव्याघ्राश्च सङ्क्रुद्धा भीमसेनमभिद्रवन् ।
व्यादितास्या महारौद्रा विनदन्तोऽतिभीषणाः ॥ ०४६ ॥

ततो वायुसुतः क्रोधात्स्वबाहुबलमाश्रितः ।
गजेनाघ्नन्गजं भीमः सिंहं सिंहेन चाभिभूः ॥ ०४७ ॥

तलप्रहारैरन्यांश्च व्यहनत्पाण्डवो बली ॥ ०४७ ॥

ते हन्यमाना भीमेन सिंहव्याघ्रतरक्षवः ।
भयाद्विससृपुः सर्वे शकृन्मूत्रं च सुस्रुवुः ॥ ०४८ ॥

प्रविवेश ततः क्षिप्रं तानपास्य महाबलः ।
वनं पाण्डुसुतः श्रीमाञ्शब्देनापूरयन्दिशः ॥ ०४९ ॥

तेन शब्देन चोग्रेण भीमसेनरवेण च ।
वनान्तरगताः सर्वे वित्रेसुर्मृगपक्षिणः ॥ ०५० ॥

तं शब्दं सहसा श्रुत्वा मृगपक्षिसमीरितम् ।
जलार्द्रपक्षा विहगाः समुत्पेतुः सहस्रशः ॥ ०५१ ॥

तानौदकान्पक्षिगणान्निरीक्ष्य भरतर्षभः ।
तानेवानुसरन्रम्यं ददर्श सुमहत्सरः ॥ ०५२ ॥

काञ्चनैः कदलीषण्डैर्मन्दमारुतकम्पितैः ।
वीज्यमानमिवाक्षोभ्यं तीरान्तरविसर्पिभिः ॥ ०५३ ॥

तत्सरोऽथावतीर्याशु प्रभूतकमलोत्पलम् ।
महागज इवोद्दामश्चिक्रीड बलवद्बली ॥ ०५४ ॥

विक्रीड्य तस्मिन्सुचिरमुत्ततारामितद्युतिः ॥ ०५४ ॥

ततोऽवगाह्य वेगेन तद्वनं बहुपादपम् ।
दध्मौ च शङ्खं स्वनवत्सर्वप्राणेन पाण्डवः ॥ ०५५ ॥

तस्य शङ्खस्य शब्देन भीमसेनरवेण च ।
बाहुशब्देन चोग्रेण नर्दन्तीव गिरेर्गुहाः ॥ ०५६ ॥

तं वज्रनिष्पेषसममास्फोटितरवं भृशम् ।
श्रुत्वा शैलगुहासुप्तैः सिंहैर्मुक्तो महास्वनः ॥ ०५७ ॥

सिंहनादभयत्रस्तैः कुञ्जरैरपि भारत ।
मुक्तो विरावः सुमहान्पर्वतो येन पूरितः ॥ ०५८ ॥

तं तु नादं ततः श्रुत्वा सुप्तो वानरपुङ्गवः ।
प्राजृम्भत महाकायो हनूमान्नाम वानरः ॥ ०५९ ॥

कदलीषण्डमध्यस्थो निद्रावशगतस्तदा ।
जृम्भमाणः सुविपुलं शक्रध्वजमिवोच्छ्रितम् ॥ ०६० ॥

आस्फोटयत लाङ्गूलमिन्द्राशनिसमस्वनम् ॥ ०६० ॥

तस्य लाङ्गूलनिनदं पर्वतः स गुहामुखैः ।
उद्गारमिव गौर्नर्दमुत्ससर्ज समन्ततः ॥ ०६१ ॥

स लाङ्गूलरवस्तस्य मत्तवारणनिस्वनम् ।
अन्तर्धाय विचित्रेषु चचार गिरिसानुषु ॥ ०६२ ॥

स भीमसेनस्तं श्रुत्वा संप्रहृष्टतनूरुहः ।
शब्दप्रभवमन्विच्छंश्चचार कदलीवनम् ॥ ०६३ ॥

कदलीवनमध्यस्थमथ पीने शिलातले ।
स ददर्श महाबाहुर्वानराधिपतिं स्थितम् ॥ ०६४ ॥

विद्युत्संघातदुष्प्रेक्ष्यं विद्युत्संघातपिङ्गलम् ।
विद्युत्संघातसदृशं विद्युत्संघातचञ्चलम् ॥ ०६५ ॥

बाहुस्वस्तिकविन्यस्तपीनह्रस्वशिरोधरम् ।
स्कन्धभूयिष्ठकायत्वात्तनुमध्यकटीतटम् ॥ ०६६ ॥

किञ्चिच्चाभुग्नशीर्षेण दीर्घरोमाञ्चितेन च ।
लाङ्गूलेनोर्ध्वगतिना ध्वजेनेव विराजितम् ॥ ०६७ ॥

रक्तोष्ठं ताम्रजिह्वास्यं रक्तकर्णं चलद्भ्रुवम् ।
वदनं वृत्तदंष्ट्राग्रं रश्मिवन्तमिवोडुपम् ॥ ०६८ ॥

वदनाभ्यन्तरगतैः शुक्लभासैरलङ्कृतम् ।
केसरोत्करसंमिश्रमशोकानामिवोत्करम् ॥ ०६९ ॥

हिरण्मयीनां मध्यस्थं कदलीनां महाद्युतिम् ।
दीप्यमानं स्ववपुषा अर्चिष्मन्तमिवानलम् ॥ ०७० ॥

निरीक्षन्तमवित्रस्तं लोचनैर्मधुपिङ्गलैः ।
तं वानरवरं वीरमतिकायं महाबलम् ॥ ०७१ ॥

अथोपसृत्य तरसा भीमो भीमपराक्रमः ।
सिंहनादं समकरोद्बोधयिष्यन्कपिं तदा ॥ ०७२ ॥

तेन शब्देन भीमस्य वित्रेसुर्मृगपक्षिणः ।
हनूमांश्च महासत्त्व ईषदुन्मील्य लोचने ॥ ०७३ ॥

अवैक्षदथ सावज्ञं लोचनैर्मधुपिङ्गलैः ॥ ०७३ ॥

स्मितेनाभाष्य कौन्तेयं वानरो नरमब्रवीत् ।
किमर्थं सरुजस्तेऽहं सुखसुप्तः प्रबोधितः ॥ ०७४ ॥

ननु नाम त्वया कार्या दया भूतेषु जानता ।
वयं धर्मं न जानीमस्तिर्यग्योनिं समाश्रिताः ॥ ०७५ ॥

मनुष्या बुद्धिसंपन्ना दयां कुर्वन्ति जन्तुषु ।
क्रूरेषु कर्मसु कथं देहवाक्चित्तदूषिषु ॥ ०७६ ॥

धर्मघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ ०७६ ॥

न त्वं धर्मं विजानासि वृद्धा नोपासितास्त्वया ।
अल्पबुद्धितया वन्यानुत्सादयसि यन्मृगान् ॥ ०७७ ॥

ब्रूहि कस्त्वं किमर्थं वा वनं त्वमिदमागतः ।
वर्जितं मानुषैर्भावैस्तथैव पुरुषैरपि ॥ ०७८ ॥

अतः परमगम्योऽयं पर्वतः सुदुरारुहः ।
विना सिद्धगतिं वीर गतिरत्र न विद्यते ॥ ०७९ ॥

कारुण्यात्सौहृदाच्चैव वारये त्वां महाबल ।
नातः परं त्वया शक्यं गन्तुमाश्वसिहि प्रभो ॥ ०८० ॥

इमान्यमृतकल्पानि मूलानि च फलानि च ।
भक्षयित्वा निवर्तस्व ग्राह्यं यदि वचो मम ॥ ०८१ ॥

# अध्याय १४७

वैशंपायन उवाच ॥

एतच्छ्रुत्वा वचस्तस्य वानरेन्द्रस्य धीमतः ।
भीमसेनस्तदा वीरः प्रोवाचामित्रकर्शनः ॥ ००१ ॥

को भवान्किंनिमित्तं वा वानरं वपुराश्रितः ।
ब्राह्मणानन्तरो वर्णः क्षत्रियस्त्वानुपृच्छति ॥ ००२ ॥

कौरवः सोमवंशीयः कुन्त्या गर्भेण धारितः ।
पाण्डवो वायुतनयो भीमसेन इति श्रुतः ॥ ००३ ॥

स वाक्यं भीमसेनस्य स्मितेन प्रतिगृह्य तत् ।
हनूमान्वायुतनयो वायुपुत्रमभाषत ॥ ००४ ॥

वानरोऽहं न ते मार्गं प्रदास्यामि यथेप्सितम् ।
साधु गच्छ निवर्तस्व मा त्वं प्राप्स्यसि वैशसम् ॥ ००५ ॥

भीम उवाच ॥

वैशसं वास्तु यद्वान्यन्न त्वा पृच्छामि वानर ।
प्रयच्छोत्तिष्ठ मार्गं मे मा त्वं प्राप्स्यसि वैशसम् ॥ ००६ ॥

हनूमानुवाच ॥

नास्ति शक्तिर्ममोत्थातुं व्याधिना क्लेशितो ह्यहम् ।
यद्यवश्यं प्रयातव्यं लङ्घयित्वा प्रयाहि माम् ॥ ००७ ॥

भीम उवाच ॥

निर्गुणः परमात्मेति देहं ते व्याप्य तिष्ठति ।
तमहं ज्ञानविज्ञेयं नावमन्ये न लङ्घये ॥ ००८ ॥

यद्यागमैर्न विन्देयं तमहं भूतभावनम् ।
क्रमेयं त्वां गिरिं चेमं हनूमानिव सागरम् ॥ ००९ ॥

हनूमानुवाच ॥

क एष हनुमान्नाम सागरो येन लङ्घितः ।
पृच्छामि त्वा कुरुश्रेष्ठ कथ्यतां यदि शक्यते ॥ ०१० ॥

भीम उवाच ॥

भ्राता मम गुणश्लाघ्यो बुद्धिसत्त्वबलान्वितः ।
रामायणेऽतिविख्यातः शूरो वानरपुङ्गवः ॥ ०११ ॥

रामपत्नीकृते येन शतयोजनमायतः ।
सागरः प्लवगेन्द्रेण क्रमेणैकेन लङ्घितः ॥ ०१२ ॥

स मे भ्राता महावीर्यस्तुल्योऽहं तस्य तेजसा ।
बले पराक्रमे युद्धे शक्तोऽहं तव निग्रहे ॥ ०१३ ॥

उत्तिष्ठ देहि मे मार्गं पश्य वा मेऽद्य पौरुषम् ।
मच्छासनमकुर्वाणं मा त्वा नेष्ये यमक्षयम् ॥ ०१४ ॥

वैशंपायन उवाच ॥

विज्ञाय तं बलोन्मत्तं बाहुवीर्येण गर्वितम् ।
हृदयेनावहस्यैनं हनूमान्वाक्यमब्रवीत् ॥ ०१५ ॥

प्रसीद नास्ति मे शक्तिरुत्थातुं जरयानघ ।
ममानुकम्पया त्वेतत्पुच्छमुत्सार्य गम्यताम्  ॥ ०१६  ॥

सावज्ञमथ वामेन स्मयञ्जग्राह पाणिना ।
न चाशकच्चालयितुं भीमः पुच्छं महाकपेः  ॥ ०१७  ॥

उच्चिक्षेप पुनर्दोर्भ्यामिन्द्रायुधमिवोच्छ्रितम् ।
नोद्धर्तुमशकद्भीमो दोर्भ्यामपि महाबलः  ॥ ०१८  ॥

उत्क्षिप्तभ्रूर्विवृत्ताक्षः संहतभ्रुकुटीमुखः ।
स्विन्नगात्रोऽभवद्भीमो न चोद्धर्तुं शशाक ह  ॥ ०१९  ॥

यत्नवानपि तु श्रीमा.ण्ल्लाङ्गूलोद्धरणोद्धुतः ।
कपेः पार्श्वगतो भीमस्तस्थौ व्रीडादधोमुखः  ॥ ०२०  ॥

प्रणिपत्य च कौन्तेयः प्राञ्जलिर्वाक्यमब्रवीत् ।
प्रसीद कपिशार्दूल दुरुक्तं क्षम्यतां मम  ॥ ०२१  ॥

सिद्धो वा यदि वा देवो गन्धर्वो वाथ गुह्यकः ।
पृष्टः सन्कामया ब्रूहि कस्त्वं वानररूपधृक्  ॥ ०२२  ॥

हनूमानुवाच  ॥

यत्ते मम परिज्ञाने कौतूहलमरिंदम ।
तत्सर्वमखिलेन त्वं शृणु पाण्डवनन्दन  ॥ ०२३  ॥

अहं केसरिणः क्षेत्रे वायुना जगदायुषा ।
जातः कमलपत्राक्ष हनूमान्नाम वानरः  ॥ ०२४  ॥

सूर्यपुत्रं च सुग्रीवं शक्रपुत्रं च वालिनम् ।

सर्ववानरराजानौ सर्ववानरयूथपाः ॥ ०२५ ॥

उपतस्थुर्महावीर्या मम चामित्रकर्शन ।
सुग्रीवेणाभवत्प्रीतिरनिलस्याग्निना यथा ॥ ०२६ ॥

निकृतः स ततो भ्रात्रा कस्मिंश्चित्कारणान्तरे ।
ऋश्यमूके मया सार्धं सुग्रीवो न्यवसच्चिरम् ॥ ०२७ ॥

अथ दाशरथिर्वीरो रामो नाम महाबलः ।
विष्णुर्मानुषरूपेण चचार वसुधामिमाम् ॥ ०२८ ॥

स पितुः प्रियमन्विच्छन्सहभार्यः सहानुजः ।
सधनुर्धन्विनां श्रेष्ठो दण्डकारण्यमाश्रितः ॥ ०२९ ॥

तस्य भार्या जनस्थानाद्रावणेन हृता बलात् ।
वञ्चयित्वा महाबुद्धिं मृगरूपेण राघवम् ॥ ०३० ॥

हृतदारः सह भ्रात्रा पत्नीं मार्गन्स राघवः ।
दृष्टवाञ्शैलशिखरे सुग्रीवं वानरर्षभम् ॥ ०३१ ॥

तेन तस्याभवत्सख्यं राघवस्य महात्मनः ।
स हत्वा वालिनं राज्ये सुग्रीवं प्रत्यपादयत् ॥ ०३२ ॥

स हरीन्प्रेषयामास सीतायाः परिमार्गणे ॥ ०३२ ॥

ततो वानरकोटीभिर्या वयं प्रस्थिता दिशम् ।
तत्र प्रवृत्तिः सीताया गृध्रेण प्रतिपादिता ॥ ०३३ ॥

ततोऽहं कार्यसिद्ध्यर्थं रामस्याक्लिष्टकर्मणः ।
शतयोजनविस्तीर्णमर्णवं सहसाप्लुतः ॥ ०३४ ॥

दृष्टा सा च मया देवी रावणस्य निवेशने ।
प्रत्यागतश्चापि पुनर्नाम तत्र प्रकाश्य वै ॥ ०३५ ॥

ततो रामेण वीरेण हत्वा तान्सर्वराक्षसान् ।
पुनः प्रत्याहृता भार्या नष्टा वेदश्रुतिर्यथा ॥ ०३६ ॥

ततः प्रतिष्ठिते रामे वीरोऽयं याचितो मया ।
यावद्रामकथा वीर भवेल्लोकेषु शत्रुहन् ॥ ०३७ ॥

तावज्जीवेयमित्येवं तथास्त्विति च सोऽब्रवीत् ॥ ०३७ ॥

दश वर्षसहस्राणि दश वर्षशतानि च ।
राज्यं कारितवान्रामस्ततस्तु त्रिदिवं गतः ॥ ०३८ ॥

तदिहाप्सरसस्तात गन्धर्वाश्च सदानघ ।
तस्य वीरस्य चरितं गायन्त्यो रमयन्ति माम् ॥ ०३९ ॥

अयं च मार्गो मर्त्यानामगम्यः कुरुनन्दन ।
ततोऽहं रुद्धवान्मार्गं तवेमं देवसेवितम् ॥ ०४० ॥

धर्षयेद्वा शपेद्वापि मा कश्चिदिति भारत ॥ ०४० ॥

दिव्यो देवपथो ह्येष नात्र गच्छन्ति मानुषाः ।
यदर्थमागतश्चासि तत्सरोऽभ्यर्णं एव हि ॥ ०४१ ॥

---

# अध्याय १४८

वैशंपायन उवाच ॥

एवमुक्तो महाबाहुर्भीमसेनः प्रतापवान् ।
प्रणिपत्य ततः प्रीत्या भ्रातरं हृष्टमानसः ॥ ००१ ॥

उवाच श्लक्ष्णया वाचा हनूमन्तं कपीश्वरम् ॥ ००१ ॥

मया धन्यतरो नास्ति यदार्यं दृष्टवानहम् ।
अनुग्रहो मे सुमहांस्तृप्तिश्च तव दर्शनात् ॥ ००२ ॥

एवं तु कृतमिच्छामि त्वयार्याद्य प्रियं मम ।
यत्ते तदासीत्प्लवतः सागरं मकरालयम् ॥ ००३ ॥

रूपमप्रतिमं वीर तदिच्छामि निरीक्षितुम् ॥ ००३ ॥

एवं तुष्टो भविष्यामि श्रद्धास्यामि च ते वचः ।
एवमुक्तः स तेजस्वी प्रहस्य हरिरब्रवीत् ॥ ००४ ॥

न तच्छक्यं त्वया द्रष्टुं रूपं नान्येन केनचित् ।
कालावस्था तदा ह्यन्या वर्तते सा न सांप्रतम् ॥ ००५ ॥

अन्यः कृतयुगे कालस्त्रेतायां द्वापरेऽपरः ।
अयं प्रध्वंसनः कालो नाद्य तद्रूपमस्ति मे ॥ ००६ ॥

भूमिर्नद्यो नगाः शैलाः सिद्धा देवा महर्षयः ।
कालं समनुवर्तन्ते यथा भावा युगे युगे ॥ ००७ ॥

बलवर्ष्मप्रभावा हि प्रहीयन्त्युद्भवन्ति च ॥ ००७ ॥

तदलं तव तद्रूपं द्रष्टुं कुरुकुलोद्वह ।
युगं समनुवर्तामि कालो हि दुरतिक्रमः ॥ ००८ ॥

भीम उवाच ॥

युगसंख्यां समाचक्ष्व आचारं च युगे युगे ।
धर्मकामार्थभावांश्च वर्ष्म वीर्यं भवाभवौ ॥ ००९ ॥

हनूमानुवाच ॥

कृतं नाम युगं तात यत्र धर्मः सनातनः ।
कृतमेव न कर्तव्यं तस्मिन्काले युगोत्तमे ॥ ०१० ॥

न तत्र धर्माः सीदन्ति न क्षीयन्ते च वै प्रजाः ।
ततः कृतयुगं नाम कालेन गुणतां गतम् ॥ ०११ ॥

देवदानवगन्धर्वयक्षराक्षसपन्नगाः ।
नासन्कृतयुगे तात तदा न क्रयविक्रयाः ॥ ०१२ ॥

न सामयजुरृग्वर्णाः क्रिया नासीच्च मानवी ।
अभिध्याय फलं तत्र धर्मः संन्यास एव च ॥ ०१३ ॥

न तस्मिन्युगसंसर्गे व्याधयो नेन्द्रियक्षयः ।
नासूया नापि रुदितं न दर्पो नापि पैशुनम् ॥ ०१४ ॥

न विग्रहः कुतस्तन्द्री न द्वेषो नापि वैकृतम् ।
न भयं न च संतापो न चेर्ष्या न च मत्सरः ॥ ०१५ ॥

ततः परमकं ब्रह्म या गतिर्योगिनां परा ।
आत्मा च सर्वभूतानां शुक्लो नारायणस्तदा ॥ ०१६ ॥

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च कृतलक्षणाः ।
कृते युगे समभवन्स्वकर्मनिरताः प्रजाः ॥ ०१७ ॥

समाश्रमं समाचारं समज्ञानमतीबलम् ।
तदा हि समकर्माणो वर्णा धर्मानवाप्नुवन् ॥ ०१८ ॥

एकवेदसमायुक्ता एकमन्त्रविधिक्रियाः ।
पृथग्धर्मास्त्वेकवेदा धर्ममेकमनुव्रताः ॥ ०१९ ॥

चातुराश्रम्ययुक्तेन कर्मणा कालयोगिना ।
अकामफलसंयोगात्प्राप्नुवन्ति परां गतिम् ॥ ०२० ॥

आत्मयोगसमायुक्तो धर्मोऽयं कृतलक्षणः ।
कृते युगे चतुष्पादश्चातुर्वर्ण्यस्य शाश्वतः ॥ ०२१ ॥

एतत्कृतयुगं नाम त्रैगुण्यपरिवर्जितम् ।
त्रेतामपि निबोध त्वं यस्मिन्सत्रं प्रवर्तते ॥ ०२२ ॥

पादेन ह्रसते धर्मो रक्ततां याति चाच्युतः ।
सत्यप्रवृत्ताश्च नराः क्रियाधर्मपरायणाः ॥ ०२३ ॥

ततो यज्ञाः प्रवर्तन्ते धर्माश्च विविधाः क्रियाः ।
त्रेतायां भावसङ्कल्पाः क्रियादानफलोदयाः ॥ ०२४ ॥

प्रचलन्ति न वै धर्मात्तपोदानपरायणाः ।
स्वधर्मस्थाः क्रियावन्तो जनास्त्रेतायुगेऽभवन् ॥ ०२५ ॥

द्वापरेऽपि युगे धर्मो द्विभागोनः प्रवर्तते ।
विष्णुर्वै पीततां याति चतुर्धा वेद एव च ॥ ०२६ ॥

ततोऽन्ये च चतुर्वेदास्त्रिवेदाश्च तथापरे ।
द्विवेदाश्चैकवेदाश्चाप्यनृचश्च तथापरे ॥ ०२७ ॥

एवं शास्त्रेषु भिन्नेषु बहुधा नीयते क्रिया ।

तपोदानप्रवृत्ता च राजसी भवति प्रजा ॥ ०२८ ॥

एकवेदस्य चाज्ञानाद्वेदास्ते बहवः कृताः ।
सत्यस्य चेह विभ्रंशात्सत्ये कश्चिदवस्थितः ॥ ०२९ ॥

सत्यात्प्रच्यवमानानां व्याधयो बहवोऽभवन् ।
कामाश्चोपद्रवाश्चैव तदा दैवतकारिताः ॥ ०३० ॥

यैरर्द्यमानाः सुभृशं तपस्तप्यन्ति मानवाः ।
कामकामाः स्वर्गकामा यज्ञांस्तन्वन्ति चापरे ॥ ०३१ ॥

एवं द्वापरमासाद्य प्रजाः क्षीयन्त्यधर्मतः ।
पादेनैकेन कौन्तेय धर्मः कलियुगे स्थितः ॥ ०३२ ॥

तामसं युगमासाद्य कृष्णो भवति केशवः ।
वेदाचाराः प्रशाम्यन्ति धर्मयज्ञक्रियास्तथा ॥ ०३३ ॥

ईतयो व्याधयस्तन्द्री दोषाः क्रोधादयस्तथा ।
उपद्रवाश्च वर्तन्ते आधयो व्याधयस्तथा ॥ ०३४ ॥

युगेष्वावर्तमानेषु धर्मो व्यावर्तते पुनः ।
धर्मे व्यावर्तमाने तु लोको व्यावर्तते पुनः ॥ ०३५ ॥

लोके क्षीणे क्षयं यान्ति भावा लोकप्रवर्तकाः ।
युगक्षयकृता धर्माः प्रार्थनानि विकुर्वते ॥ ०३६ ॥

एतत्कलियुगं नाम अचिराद्यत्प्रवर्तते ।
युगानुवर्तनं त्वेतत्कुर्वन्ति चिरजीविनः ॥ ०३७ ॥

यच्च ते मत्परिज्ञाने कौतूहलमरिंदम ।
अनर्थकेषु को भावः पुरुषस्य विजानतः ॥ ०३८ ॥

एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ।
युगसंख्यां महाबाहो स्वस्ति प्राप्नुहि गम्यताम्  ॥ ०३९  ॥

---

# अध्याय १४९

भीम उवाच  ॥

पूर्वरूपमदृष्ट्वा ते न यास्यामि कथञ्चन ।
यदि तेऽहमनुग्राह्यो दर्शयात्मानमात्मना  ॥ ००१  ॥

वैशंपायन उवाच  ॥

एवमुक्तस्तु भीमेन स्मितं कृत्वा प्लवङ्गमः ।
तद्रूपं दर्शयामास यद्वै सागरलङ्घने  ॥ ००२  ॥

भ्रातुः प्रियमभीप्सन्वै चकार सुमहद्वपुः ।
देहस्तस्य ततोऽतीव वर्धत्यायामविस्तरैः  ॥ ००३  ॥

तद्रूपं कदलीषण्डं छादयन्नमितद्युतिः ।
गिरेश्चोच्छ्रयमागम्य तस्थौ तत्र स वानरः  ॥ ००४  ॥

समुच्छ्रितमहाकायो द्वितीय इव पर्वतः ।
ताम्रेक्षणस्तीक्ष्णदंष्ट्रो भृकुटीकृतलोचनः  ॥ ००५  ॥

दीर्घलाङ्गूलमाविध्य दिशो व्याप्य स्थितः कपिः  ॥ ००५  ॥

तद्रूपं महदालक्ष्य भ्रातुः कौरवनन्दनः ।
विसिस्मिये तदा भीमो जहृषे च पुनः पुनः ॥ ००६ ॥

तमर्कमिव तेजोभिः सौवर्णमिव पर्वतम् ।
प्रदीप्तमिव चाकाशं दृष्ट्वा भीमो न्यमीलयत् ॥ ००७ ॥

आबभाषे च हनुमान्भीमसेनं स्मयन्निव ।
एतावदिह शक्तस्त्वं रूपं द्रष्टुं ममानघ ॥ ००८ ॥

वर्धेऽहं चाप्यतो भूयो यावन्मे मनसेप्सितम् ।
भीम शत्रुषु चात्यर्थं वर्धते मूर्तिरोजसा ॥ ००९ ॥

तदद्भुतं महारौद्रं विन्ध्यमन्दरसंनिभम् ।
दृष्ट्वा हनूमतो वर्ष्म संभ्रान्तः पवनात्मजः ॥ ०१० ॥

प्रत्युवाच ततो भीमः संप्रहृष्टतनूरुहः ।
कृताञ्जलिरदीनात्मा हनूमन्तमवस्थितम् ॥ ०११ ॥

दृष्टं प्रमाणं विपुलं शरीरस्यास्य ते विभो ।
संहरस्व महावीर्य स्वयमात्मानमात्मना ॥ ०१२ ॥

न हि शक्नोमि त्वां द्रष्टुं दिवाकरमिवोदितम् ।
अप्रमेयमनाधृष्यं मैनाकमिव पर्वतम् ॥ ०१३ ॥

विस्मयश्चैव मे वीर सुमहान्मनसोऽद्य वै ।
यद्रामस्त्वयि पार्श्वस्थे स्वयं रावणमभ्यगात् ॥ ०१४ ॥

त्वमेव शक्तस्तां लङ्कां सयोधां सहवाहनाम् ।
स्वबाहुबलमाश्रित्य विनाशयितुमोजसा ॥ ०१५ ॥

न हि ते किञ्चिदप्राप्यं मारुतात्मज विद्यते ।

तव नैकस्य पर्याप्तो रावणः सगणो युधि ॥ ०१६ ॥

एवमुक्तस्तु भीमेन हनूमान्प्लवगर्षभः ।
प्रत्युवाच ततो वाक्यं स्निग्धगम्भीरया गिरा ॥ ०१७ ॥

एवमेतन्महाबाहो यथा वदसि भारत ।
भीमसेन न पर्याप्तो ममासौ राक्षसाधमः ॥ ०१८ ॥

मया तु तस्मिन्निहते रावणे लोककण्टके ।
कीर्तिर्नश्येद्राघवस्य तत एतदुपेक्षितम् ॥ ०१९ ॥

तेन वीरेण हत्वा तु सगणं राक्षसाधिपम् ।
आनीता स्वपुरं सीता लोके कीर्तिश्च स्थापिता ॥ ०२० ॥

तद्गच्छ विपुलप्रज्ञ भ्रातुः प्रियहिते रतः ।
अरिष्टं क्षेममध्वानं वायुना परिरक्षितः ॥ ०२१ ॥

एष पन्थाः कुरुश्रेष्ठ सौगन्धिकवनाय ते ।
द्रक्ष्यसे धनदोद्यानं रक्षितं यक्षराक्षसैः ॥ ०२२ ॥

न च ते तरसा कार्यः कुसुमावचयः स्वयम् ।
दैवतानि हि मान्यानि पुरुषेण विशेषतः ॥ ०२३ ॥

बलिहोमनमस्कारैर्मन्त्रैश्च भरतर्षभ ।
दैवतानि प्रसादं हि भक्त्या कुर्वन्ति भारत ॥ ०२४ ॥

मा तात साहसं कार्षीः स्वधर्ममनुपालय ।
स्वधर्मस्थः परं धर्मं बुध्यस्वागमयस्व च ॥ ०२५ ॥

न हि धर्ममविज्ञाय वृद्धाननुपसेव्य च ।
धर्मो वै वेदितुं शक्यो बृहस्पतिसमैरपि ॥ ०२६ ॥

अधर्मो यत्र धर्माख्यो धर्मश्चाधर्मसञ्ज्ञितः ।
विज्ञातव्यो विभागेन यत्र मुह्यन्त्यबुद्धयः ॥ ०२७ ॥

आचारसंभवो धर्मो धर्माद्वेदाः समुत्थिताः ।
वेदैर्यज्ञाः समुत्पन्ना यज्ञैर्देवाः प्रतिष्ठिताः ॥ ०२८ ॥

वेदाचारविधानोक्तैर्यज्ञैर्धार्यन्ति देवताः ।
बृहस्पत्युशनोक्तैश्च नयैर्धार्यन्ति मानवाः ॥ ०२९ ॥

पण्याकरवणिज्याभिः कृष्याथो योनिपोषणैः ।
वार्तया धार्यते सर्वं धर्मैरेतैर्द्विजातिभिः ॥ ०३० ॥

त्रयी वार्ता दण्डनीतिस्तिस्रो विद्या विजानताम् ।
ताभिः सम्यक्प्रयुक्ताभिर्लोकयात्रा विधीयते ॥ ०३१ ॥

सा चेद्धर्मक्रिया न स्यात्त्रयीधर्ममृते भुवि ।
दण्डनीतिमृते चापि निर्मर्यादमिदं भवेत् ॥ ०३२ ॥

वार्ताधर्मे ह्यवर्तन्त्यो विनश्येयुरिमाः प्रजाः ।
सुप्रवृत्तैस्त्रिभिर्ह्येतैर्धर्मैः सूयन्ति वै प्रजाः ॥ ०३३ ॥

द्विजानाममृतं धर्मो ह्येकश्चैवैकवर्णिकः ।
यज्ञाध्ययनदानानि त्रयः साधारणाः स्मृताः ॥ ०३४ ॥

याजनाध्यापने चोभे ब्राह्मणानां प्रतिग्रहः ।
पालनं क्षत्रियाणां वै वैश्यधर्मश्च पोषणम् ॥ ०३५ ॥

शुश्रूषा तु द्विजातीनां शूद्राणां धर्म उच्यते ।
भैक्षहोमव्रतैर्हीनास्तथैव गुरुवासिनाम् ॥ ०३६ ॥

क्षत्रधर्मोऽत्र कौन्तेय तव धर्माभिरक्षणम् ।
स्वधर्मं प्रतिपद्यस्व विनीतो नियतेन्द्रियः ॥ ०३७ ॥

वृद्धैः संमन्त्र्य सद्भिश्च बुद्धिमद्भिः श्रुतान्वितैः ।
सुस्थितः शास्ति दण्डेन व्यसनी परिभूयते ॥ ०३८ ॥

निग्रहानुग्रहैः सम्यग्यदा राजा प्रवर्तते ।
तदा भवति लोकस्य मर्यादा सुव्यवस्थिता ॥ ०३९ ॥

तस्माद्देशे च दुर्गे च शत्रुमित्रबलेषु च ।
नित्यं चारेण बोद्धव्यं स्थानं वृद्धिः क्षयस्तथा ॥ ०४० ॥

राज्ञामुपायाश्चत्वारो बुद्धिमन्त्रः पराक्रमः ।
निग्रहानुग्रहौ चैव दाक्ष्यं तत्कार्यसाधनम् ॥ ०४१ ॥

साम्ना दानेन भेदेन दण्डेनोपेक्षणेन च ।
साधनीयानि कार्याणि समासव्यासयोगतः ॥ ०४२ ॥

मन्त्रमूला नयाः सर्वे चाराश्च भरतर्षभ ।
सुमन्त्रितैर्नयैः सिद्धिस्तद्विदैः सह मन्त्रयेत् ॥ ०४३ ॥

स्त्रिया मूढेन लुब्धेन बालेन लघुना तथा ।
न मन्त्रयेत गुह्यानि येषु चोन्मादलक्षणम् ॥ ०४४ ॥

मन्त्रयेत्सह विद्वद्भिः शक्तैः कर्माणि कारयेत् ।
स्निग्धैश्च नीतिविन्यासान्मूर्खान्सर्वत्र वर्जयेत् ॥ ०४५ ॥

धार्मिकान्धर्मकार्येषु अर्थकार्येषु पण्डितान् ।
स्त्रीषु क्लीबान्नियुञ्जीत क्रूरान्क्रूरेषु कर्मसु ॥ ०४६ ॥

स्वेभ्यश्चैव परेभ्यश्च कार्याकार्यसमुद्भवा ।

बुद्धिः कर्मसु विज्ञेया रिपूणां च बलाबलम्  ॥ ०४७  ॥

बुद्ध्या सुप्रतिपन्नेषु कुर्यात्साधुपरिग्रहम् ।
निग्रहं चाप्यशिष्टेषु निर्मर्यादेषु कारयेत्  ॥ ०४८  ॥

निग्रहे प्रग्रहे सम्यग्यदा राजा प्रवर्तते ।
तदा भवति लोकस्य मर्यादा सुव्यवस्थिता  ॥ ०४९  ॥

एष ते विहितः पार्थ घोरो धर्मो दुरन्वयः ।
तं स्वधर्मविभागेन विनयस्थोऽनुपालय  ॥ ०५०  ॥

तपोधर्मदमेज्याभिर्विप्रा यान्ति यथा दिवम् ।
दानातिथ्यक्रियाधर्मैर्यान्ति वैश्याश्च सद्गतिम्  ॥ ०५१  ॥

क्षत्रं याति तथा स्वर्गं भुवि निग्रहपालनैः ।
सम्यक्प्रणीय दण्डं हि कामद्वेषविवर्जिताः  ॥ ०५२  ॥

अलुब्धा विगतक्रोधाः सतां यान्ति सलोकताम्  ॥ ०५२  ॥

---

# अध्याय १५०

वैशंपायन उवाच  ॥

ततः संहृत्य विपुलं तद्वपुः कामवर्धितम् ।
भीमसेनं पुनर्दोर्भ्यां पर्यष्वजत वानरः  ॥ ००१  ॥

परिष्वक्तस्य तस्याशु भ्रात्रा भीमस्य भारत ।

श्रमो नाशमुपागच्छत्सर्वं चासीत्प्रदक्षिणम्  ॥ ००२  ॥

ततः पुनरथोवाच पर्यश्रुनयनो हरिः ।
भीममाभाष्य सौहार्दाद्बाष्पगद्गदया गिरा  ॥ ००३  ॥

गच्छ वीर स्वमावासं स्मर्तव्योऽस्मि कथान्तरे ।
इहस्थश्च कुरुश्रेष्ठ न निवेद्योऽस्मि कस्यचित्  ॥ ००४  ॥

धनदस्यालयाच्चापि विसृष्टानां महाबल ।
देशकाल इहायातुं देवगन्धर्वयोषिताम्  ॥ ००५  ॥

ममापि सफलं चक्षुः स्मारितश्चास्मि राघवम् ।
मानुषं गात्रसंस्पर्शं गत्वा भीम त्वया सह  ॥ ००६  ॥

तदस्मद्दर्शनं वीर कौन्तेयामोघमस्तु ते ।
भ्रातृत्वं त्वं पुरस्कृत्य वरं वरय भारत  ॥ ००७  ॥

यदि तावन्मया क्षुद्रा गत्वा वारणसाह्वयम् ।
धार्तराष्ट्रा निहन्तव्या यावदेतत्करोम्यहम्  ॥ ००८  ॥

शिलया नगरं वा तन्मर्दितव्यं मया यदि ।
यावदद्य करोम्येतत्कामं तव महाबल  ॥ ००९  ॥

भीमसेनस्तु तद्वाक्यं श्रुत्वा तस्य महात्मनः ।
प्रत्युवाच हनूमन्तं प्रहृष्टेनान्तरात्मना  ॥ ०१०  ॥

कृतमेव त्वया सर्वं मम वानरपुङ्गव ।
स्वस्ति तेऽस्तु महाबाहो क्षामये त्वां प्रसीद मे  ॥ ०११  ॥

सनाथाः पाण्डवाः सर्वे त्वया नाथेन वीर्यवन् ।
तवैव तेजसा सर्वान्विजेष्यामो वयं रिपून्  ॥ ०१२  ॥

एवमुक्तस्तु हनुमान्भीमसेनमभाषत ।
भ्रातृत्वात्सौहृदाच्चापि करिष्यामि तव प्रियम्  ॥ ०१३  ॥

चमूं विगाह्य शत्रूणां शरशक्तिसमाकुलाम् ।
यदा सिंहरवं वीर करिष्यसि महाबल  ॥ ०१४  ॥

तदाहं बृंहयिष्यामि स्वरवेण रवं तव  ॥ ०१४  ॥

विजयस्य ध्वजस्थश्च नादान्मोक्ष्यामि दारुणान् ।
शत्रूणां ते प्राणहरानित्युक्त्वान्तरधीयत  ॥ ०१५  ॥

गते तस्मिन्हरिवरे भीमोऽपि बलिनां वरः ।
तेन मार्गेण विपुलं व्यचरद्गन्धमादनम्  ॥ ०१६  ॥

अनुस्मरन्वपुस्तस्य श्रियं चाप्रतिमां भुवि ।
माहात्म्यमनुभावं च स्मरन्दाशरथेर्ययौ  ॥ ०१७  ॥

स तानि रमणीयानि वनान्युपवनानि च ।
विलोडयामास तदा सौगन्धिकवनेप्सया  ॥ ०१८  ॥

फुल्लपद्मविचित्राणि पुष्पितानि वनानि च ।
मत्तवारणयूथानि पङ्कक्लिन्नानि भारत  ॥ ०१९  ॥

वर्षतामिव मेघानां वृन्दानि ददृशे तदा  ॥ ०१९  ॥

हरिणैश्चञ्चलापाङ्गैर्हरिणीसहितैर्वने ।
सशष्पकवलैः श्रीमान्पथि दृष्टो द्रुतं ययौ  ॥ ०२०  ॥

महिषैश्च वराहैश्च शार्दूलैश्च निषेवितम् ।
व्यपेतभीर्गिरिं शौर्याद्भीमसेनो व्यगाहत  ॥ ०२१  ॥

कुसुमानतशाखैश्च ताम्रपल्लवकोमलैः ।
याच्यमान इवारण्ये द्रुमैर्मारुतकम्पितैः ॥ ०२२ ॥

कृतपद्माञ्जलिपुटा मत्तषट्पदसेविताः ।
प्रियतीर्थवना मार्गे पद्मिनीः समतिक्रमन् ॥ ०२३ ॥

सज्जमानमनोदृष्टिः फुल्लेषु गिरिसानुषु ।
द्रौपदीवाक्यपाथेयो भीमः शीघ्रतरं ययौ ॥ ०२४ ॥

परिवृत्तेऽहनि ततः प्रकीर्णहरिणे वने ।
काञ्चनैर्विमलैः पद्मैर्ददर्श विपुलां नदीम् ॥ ०२५ ॥

मत्तकारण्डवयुतां चक्रवाकोपशोभिताम् ।
रचितामिव तस्याद्रेर्मालां विमलपङ्कजाम् ॥ ०२६ ॥

तस्यां नद्यां महासत्त्वः सौगन्धिकवनं महत् ।
अपश्यत्प्रीतिजननं बालार्कसदृशद्युति ॥ ०२७ ॥

तद्दृष्ट्वा लब्धकामः स मनसा पाण्डुनन्दनः ।
वनवासपरिक्लिष्टां जगाम मनसा प्रियाम् ॥ ०२८ ॥

---

# अध्याय १५१

वैशंपायन उवाच ॥

स गत्वा नलिनीं रम्यां राक्षसैरभिरक्षिताम् ।

कैलासशिखरे रम्ये ददर्श शुभकानने ॥ ००१ ॥

कुबेरभवनाभ्याशे जातां पर्वतनिर्झरे ।
सुरम्यां विपुलच्छायां नानाद्रुमलतावृताम् ॥ ००२ ॥

हरिताम्बुजसंछन्नां दिव्यां कनकपुष्कराम् ।
पवित्रभूतां लोकस्य शुभामद्भुतदर्शनाम् ॥ ००३ ॥

तत्रामृतरसं शीतं लघु कुन्तीसुतः शुभम् ।
ददर्श विमलं तोयं शिवं बहु च पाण्डवः ॥ ००४ ॥

तां तु पुष्करिणीं रम्यां पद्मसौगन्धिकायुताम् ।
जातरूपमयैः पद्मैश्छन्नां परमगन्धिभिः ॥ ००५ ॥

वैडूर्यवरनालैश्च बहुचित्रैर्मनोहरैः ।
हंसकारण्डवोद्धूतैः सृजद्भिरमलं रजः ॥ ००६ ॥

आक्रीडं यक्षराजस्य कुबेरस्य महात्मनः ।
गन्धर्वैरप्सरोभिश्च देवैश्च परमार्चिताम् ॥ ००७ ॥

सेवितामृषिभिर्दिव्यां यक्षैः किंपुरुषैस्तथा ।
राक्षसैः किंनरैश्चैव गुप्तां वैश्रवणेन च ॥ ००८ ॥

तां च दृष्ट्वैव कौन्तेयो भीमसेनो महाबलः ।
बभूव परमप्रीतो दिव्यं संप्रेक्ष्य तत्सरः ॥ ००९ ॥

तच्च क्रोधवशा नाम राक्षसा राजशासनात् ।
रक्षन्ति शतसाहस्राश्चित्रायुधपरिच्छदाः ॥ ०१० ॥

ते तु दृष्ट्वैव कौन्तेयमजिनैः परिवारितम् ।
रुक्माङ्गदधरं वीरं भीमं भीमपराक्रमम् ॥ ०११ ॥

सायुधं बद्धनिस्त्रिंशमशङ्कितमरिंदमम् ।
पुष्करेप्सुमुपायान्तमन्योन्यमभिचुक्रुशुः ॥ ०१२ ॥

अयं पुरुषशार्दूलः सायुधोऽजिनसंवृतः ।
यच्चिकीर्षुरिह प्राप्तस्तत्संप्रष्टुमिहार्हथ ॥ ०१३ ॥

ततः सर्वे महाबाहुं समासाद्य वृकोदरम् ।
तेजोयुक्तमपृच्छन्त कस्त्वमाख्यातुमर्हसि ॥ ०१४ ॥

मुनिवेषधरश्चासि चीरवासाश्च लक्ष्यसे ।
यदर्थमसि संप्राप्तस्तदाचक्ष्व महाद्युते ॥ ०१५ ॥

---

# अध्याय १५२

भीम उवाच ॥

पाण्डवो भीमसेनोऽहं धर्मपुत्रादनन्तरः ।
विशालां बदरीं प्राप्तो भ्रातृभिः सह राक्षसाः ॥ ००१ ॥

अपश्यत्तत्र पञ्चाली सौगन्धिकमनुत्तमम् ।
अनिलोढमितो नूनं सा बहूनि परीप्सति ॥ ००२ ॥

तस्या मामनवद्याङ्ग्या धर्मपत्न्याः प्रिये स्थितम् ।
पुष्पाहारमिह प्राप्तं निबोधत निशाचराः ॥ ००३ ॥

राक्षसा ऊचुः ॥

आक्रीडोऽयं कुबेरस्य दयितः पुरुषर्षभ ।
नेह शक्यं मनुष्येण विहर्तुं मर्त्यधर्मिणा ॥ ००४ ॥

देवर्षयस्तथा यक्षा देवाश्चात्र वृकोदर ।
आमन्त्र्य यक्षप्रवरं पिबन्ति विहरन्ति च ॥ ००५ ॥

गन्धर्वाप्सरसश्चैव विहरन्त्यत्र पाण्डव ॥ ००५ ॥

अन्यायेनेह यः कश्चिदवमन्य धनेश्वरम् ।
विहर्तुमिच्छेद्दुर्वृत्तः स विनश्येदसंशयम् ॥ ००६ ॥

तमनादृत्य पद्मानि जिहीर्षसि बलादितः ।
धर्मराजस्य चात्मानं ब्रवीषि भ्रातरं कथम् ॥ ००७ ॥

भीम उवाच ॥

राक्षसास्तं न पश्यामि धनेश्वरमिहान्तिके ।
दृष्ट्वापि च महाराजं नाहं याचितुमुत्सहे ॥ ००८ ॥

न हि याचन्ति राजान एष धर्मः सनातनः ।
न चाहं हातुमिच्छामि क्षात्रधर्मं कथञ्चन ॥ ००९ ॥

इयं च नलिनी रम्या जाता पर्वतनिर्झरे ।
नेयं भवनमासाद्य कुबेरस्य महात्मनः ॥ ०१० ॥

तुल्या हि सर्वभूतानामियं वैश्रवणस्य च ।
एवङ्गतेषु द्रव्येषु कः कं याचितुमर्हति ॥ ०११ ॥

वैशंपायन उवाच ॥

इत्युक्त्वा राक्षसान्सर्वान्भीमसेनो व्यगाहत ।

ततः स राक्षसैर्वाचा प्रतिषिद्धः प्रतापवान्  ॥ ०१२  ॥

मा मैवमिति सक्रोधैर्भर्त्सयद्भिः समन्ततः  ॥ ०१२  ॥

कदर्थीकृत्य तु स तान्राक्षसान्भीमविक्रमः ।
व्यगाहत महातेजास्ते तं सर्वे न्यवारयन्  ॥ ०१३  ॥

गृह्णीत बध्नीत निकृन्ततेमं ; पचाम खादाम च भीमसेनम् ।
क्रुद्धा ब्रुवन्तोऽनुययुर्द्रुतं ते ; शस्त्राणि चोद्यम्य विवृत्तनेत्राः  ॥ ०१४  ॥

ततः स गुर्वीं यमदण्डकल्पां ; महागदां काञ्चनपट्टनद्धाम् ।
प्रगृह्य तानभ्यपतत्तरस्वी ; ततोऽब्रवीत्तिष्ठत तिष्ठतेति  ॥ ०१५  ॥

ते तं तदा तोमरपट्टिशाद्यै ;र्व्याविध्य शस्त्रैः सहसाभिपेतुः ।
जिघांसवः क्रोधवशाः सुभीमा ; भीमं समन्तात्परिवव्रुरुग्राः  ॥ ०१६  ॥

वातेन कुन्त्यां बलवान्स जातः ; शूरस्तरस्वी द्विषतां निहन्ता ।
सत्ये च धर्मे च रतः सदैव ; पराक्रमे शत्रुभिरप्रधृष्यः  ॥ ०१७  ॥

तेषां स मार्गान्विविधान्महात्मा ; निहत्य शस्त्राणि च शात्रवाणाम् ।
यथाप्रवीरान्निजघान वीरः ; परःशतान्पुष्करिणीसमीपे  ॥ ०१८  ॥

ते तस्य वीर्यं च बलं च दृष्ट्वा ; विद्याबलं बाहुबलं तथैव ।
अशक्नुवन्तः सहिताः समन्ता ;द्धतप्रवीराः सहसा निवृत्ताः  ॥ ०१९  ॥

विदीर्यमाणास्तत एव तूर्ण ;माकाशमास्थाय विमूढसञ्ज्ञाः ।
कैलासशृङ्गाण्यभिदुद्रुवुस्ते ; भीमार्दिताः क्रोधवशाः प्रभग्नाः  ॥ ०२०  ॥

स शक्रवद्दानवदैत्यसंघा ;न्विक्रम्य जित्वा च रणेऽरिसंघान् ।
विगाह्य तां पुष्करिणीं जितारिः ; कामाय जग्राह ततोऽम्बुजानि  ॥ ०२१  ॥

ततः स पीत्वामृतकल्पमम्भो ; भूयो बभूवोत्तमवीर्यतेजाः ।
उत्पाट्य जग्राह ततोऽम्बुजानि ; सौगन्धिकान्युत्तमगन्धवन्ति ॥ ०२२ ॥

ततस्तु ते क्रोधवशाः समेत्य ; धनेश्वरं भीमबलप्रणुन्नाः ।
भीमस्य वीर्यं च बलं च संख्ये ; यथावदाचख्युरतीव दीनाः ॥ ०२३ ॥

तेषां वचस्तत्तु निशम्य देवः ; प्रहस्य रक्षांशि ततोऽभ्युवाच ।
गृह्णातु भीमो जलजानि कामं ; कृष्णानिमित्तं विदितं ममैतत् ॥ ०२४ ॥

ततोऽभ्यनुज्ञाय धनेश्वरं ते ; जग्मुः कुरूणां प्रवरं विरोषाः ।
भीमं च तस्यां ददृशुर्नलिन्यां ; यथोपजोषं विहरन्तमेकम् ॥ ०२५ ॥

---

# अध्याय १५३

वैशंपायन उवाच ॥

ततस्तानि महार्हाणि दिव्यानि भरतर्षभ ।
बहूनि बहुरूपाणि विरजांसि समाददे ॥ ००१ ॥

ततो वायुर्महाञ्शीघ्रो नीचैः शर्करकर्षणः ।
प्रादुरासीत्खरस्पर्शः सङ्ग्राममभिचोदयन् ॥ ००२ ॥

पपात महती चोल्का सनिर्घाता महाप्रभा ।
निष्प्रभश्चाभवत्सूर्यश्छन्नरश्मिस्तमोवृतः ॥ ००३ ॥

निर्घातश्चाभवद्भीमो भीमे विक्रममास्थिते ।
चचाल पृथिवी चापि पांसुवर्षं पपात च ॥ ००४ ॥

सलोहिता दिशश्चासन्खरवाचो मृगद्विजाः ।
तमोवृतमभूत्सर्वं न प्रज्ञायत किञ्चन ॥ ००५ ॥

तदद्भुतमभिप्रेक्ष्य धर्मपुत्रो युधिष्ठिरः ।
उवाच वदतां श्रेष्ठः कोऽस्मानभिभविष्यति ॥ ००६ ॥

सज्जीभवत भद्रं वः पाण्डवा युद्धदुर्मदाः ।
यथारूपाणि पश्यामि स्वभ्यग्रो नः पराक्रमः ॥ ००७ ॥

एवमुक्त्वा ततो राजा वीक्षां चक्रे समन्ततः ।
अपश्यमानो भीमं च धर्मराजो युधिष्ठिरः ॥ ००८ ॥

तत्र कृष्णां यमौ चैव समीपस्थानरिंदमः ।
पप्रच्छ भ्रातरं भीमं भीमकर्माणमाहवे ॥ ००९ ॥

कच्चिन्न भीमः पाञ्चालि किञ्चित्कृत्यं चिकीर्षति ।
कृतवानपि वा वीरः साहसं साहसप्रियः ॥ ०१० ॥

इमे ह्यकस्मादुत्पाता महासमरदर्शिनः ।
दर्शयन्तो भयं तीव्रं प्रादुर्भूताः समन्ततः ॥ ०११ ॥

तं तथा वादिनं कृष्णा प्रत्युवाच मनस्विनी ।
प्रिया प्रियं चिकीर्षन्ती महिषी चारुहासिनी ॥ ०१२ ॥

यत्तत्सौगन्धिकं राजन्नाहृतं मातरिश्वना ।
तन्मया भीमसेनस्य प्रीतयाद्योपपादितम् ॥ ०१३ ॥

अपि चोक्तो मया वीरो यदि पश्येद्बहून्यपि ।
तानि सर्वाण्युपादाय शीघ्रमागम्यतामिति ॥ ०१४ ॥

स तु नूनं महाबाहुः प्रियार्थं मम पाण्डवः ।
प्रागुदीचीं दिशं राजंस्तान्याहर्तुमितो गतः ॥ ०१५ ॥

उक्तस्त्वेवं तया राजा यमाविदमथाब्रवीत् ।
गच्छाम सहितास्तूर्णं येन यातो वृकोदरः ॥ ०१६ ॥

वहन्तु राक्षसा विप्रान्यथाश्रान्तान्यथाकृशान् ।
त्वमप्यमरसङ्काश वह कृष्णां घटोत्कच ॥ ०१७ ॥

व्यक्तं दूरमितो भीमः प्रविष्ट इति मे मतिः ।
चिरं च तस्य कालोऽयं स च वायुसमो जवे ॥ ०१८ ॥

तरस्वी वैनतेयस्य सदृशो भुवि लङ्घने ।
उत्पतेदपि चाकाशं निपतेच्च यथेच्छकम् ॥ ०१९ ॥

तमन्वियाम भवतां प्रभावाद्रजनीचराः ।
पुरा स नापराध्नोति सिद्धानां ब्रह्मवादिनाम् ॥ ०२० ॥

तथेत्युक्त्वा तु ते सर्वे हैडिम्बप्रमुखास्तदा ।
उद्देशज्ञाः कुबेरस्य नलिन्या भरतर्षभ ॥ ०२१ ॥

आदाय पाण्डवांश्चैव तांश्च विप्राननेकशः ।
लोमशेनैव सहिताः प्रययुः प्रीतमानसाः ॥ ०२२ ॥

ते गत्वा सहिताः सर्वे ददृशुस्तत्र कानने ।
प्रफुल्लपङ्कजवतीं नलिनीं सुमनोहराम् ॥ ०२३ ॥

तं च भीमं महात्मानं तस्यास्तीरे व्यवस्थितम् ।
ददृशुर्निहतांश्चैव यक्षान्सुविपुलेक्षणान् ॥ ०२४ ॥

उद्यम्य च गदां दोर्भ्यां नदीतीरे व्यवस्थितम् ।

प्रजासङ्क्षेपसमये दण्डहस्तमिवान्तकम्  ॥ ०२५  ॥

तं दृष्ट्वा धर्मराजस्तु परिष्वज्य पुनः पुनः ।
उवाच श्लक्ष्णया वाचा कौन्तेय किमिदं कृतम्  ॥ ०२६  ॥

साहसं बत भद्रं ते देवानामपि चाप्रियम् ।
पुनरेवं न कर्तव्यं मम चेदिच्छसि प्रियम्  ॥ ०२७  ॥

अनुशास्य च कौन्तेयं पद्मानि प्रतिगृह्य च ।
तस्यामेव नलिन्यां ते विजह्रुरमरोपमाः  ॥ ०२८  ॥

एतस्मिन्नेव काले तु प्रगृहीतशिलायुधाः ।
प्रादुरासन्महाकायास्तस्योद्यानस्य रक्षिणः  ॥ ०२९  ॥

ते दृष्ट्वा धर्मराजानं देवर्षिं चापि लोमशम् ।
नकुलं सहदेवं च तथान्यान्ब्राह्मणर्षभान्  ॥ ०३०  ॥

विनयेनानताः सर्वे प्रणिपेतुश्च भारत  ॥ ०३०  ॥

सान्त्विता धर्मराजेन प्रसेदुः क्षणदाचराः ।
विदिताश्च कुबेरस्य ततस्ते नरपुङ्गवाः  ॥ ०३१  ॥

ऊषुर्नातिचिरं कालं रममाणाः कुरूद्वहाः  ॥ ०३१  ॥

# जटासुरबधपर्व

## अध्याय १५४

वैशंपायन उवाच ॥

ततस्तान्परिविश्वस्तान्वसतस्तत्र पाण्डवान् ।
गतेषु तेषु रक्षःसु भीमसेनात्मजेऽपि च ॥ ००१ ॥

रहितान्भीमसेनेन कदाचित्तान्यदृच्छया ।
जहार धर्मराजानं यमौ कृष्णां च राक्षसः ॥ ००२ ॥

ब्राह्मणो मन्त्रकुशलः सर्वास्त्रेष्वस्त्रवित्तमः ।
इति ब्रुवन्पाण्डवेयान्पर्युपास्ते स्म नित्यदा ॥ ००३ ॥

परीक्षमाणः पार्थानां कलापानि धनूंषि च ।
अन्तरं समभिप्रेप्सुर्नाम्ना ख्यातो जटासुरः ॥ ००४ ॥

स भीमसेने निष्क्रान्ते मृगयार्थमरिंदमे ।
अन्यद्रूपं समास्थाय विकृतं भैरवं महत् ॥ ००५ ॥

गृहीत्वा सर्वशस्त्राणि द्रौपदीं परिगृह्य च ।
प्रातिष्ठत स दुष्टात्मा त्रीन्गृहीत्वा च पाण्डवान् ॥ ००६ ॥

सहदेवस्तु यत्नेन ततोऽपक्रम्य पाण्डवः ।
आक्रन्दद्भीमसेनं वै येन यातो महाबलः ॥ ००७ ॥

तमब्रवीद्धर्मराजो ह्रियमाणो युधिष्ठिरः ।
धर्मस्ते हीयते मूढ न चैनं समवेक्षसे ॥ ००८ ॥

येऽन्ये केचिन्मनुष्येषु तिर्यग्योनिगता अपि ।

गन्धर्वयक्षरक्षांसि वयांसि पशवस्तथा ॥ ००९ ॥

मनुष्यानुपजीवन्ति ततस्त्वमुपजीवसि ॥ ००९ ॥

समृद्ध्या ह्यस्य लोकस्य लोको युष्माकमृध्यते ।
इमं च लोकं शोचन्तमनुशोचन्ति देवताः ॥ ०१० ॥

पूज्यमानाश्च वर्धन्ते हव्यकव्यैर्यथाविधि ॥ ०१० ॥

वयं राष्ट्रस्य गोप्तारो रक्षितारश्च राक्षस ।
राष्ट्रस्यारक्ष्यमाणस्य कुतो भूतिः कुतः सुखम् ॥ ०११ ॥

न च राजावमन्तव्यो रक्षसा जात्वनागसि ।
अणुरप्यपचारश्च नास्त्यस्माकं नराशन ॥ ०१२ ॥

द्रोग्धव्यं न च मित्रेषु न विश्वस्तेषु कर्हिचित् ।
येषां चान्नानि भुञ्जीत यत्र च स्यात्प्रतिश्रयः ॥ ०१३ ॥

स त्वं प्रतिश्रयेऽस्माकं पूज्यमानः सुखोषितः ।
भुक्त्वा चान्नानि दुष्प्रज्ञ कथमस्माञ्जिहीर्षसि ॥ ०१४ ॥

एवमेव वृथाचारो वृथावृद्धो वृथामतिः ।
वृथामरणमर्हस्त्वं वृथाद्य न भविष्यसि ॥ ०१५ ॥

अथ चेद्दुष्टबुद्धिस्त्वं सर्वैर्धर्मैर्विवर्जितः ।
प्रदाय शस्त्राण्यस्माकं युद्धेन द्रौपदीं हर ॥ ०१६ ॥

अथ चेत्त्वमविज्ञाय इदं कर्म करिष्यसि ।
अधर्मं चाप्यकीर्तिं च लोके प्राप्स्यसि केवलम् ॥ ०१७ ॥

एतामद्य परामृश्य स्त्रियं राक्षस मानुषीम् ।

विषमेतत्समालोड्य कुम्भेन प्राशितं त्वया ॥ ०१८ ॥

ततो युधिष्ठिरस्तस्य भारिकः समपद्यत ।
स तु भाराभिभूतात्मा न तथा शीघ्रगोऽभवत् ॥ ०१९ ॥

अथाब्रवीद्द्रौपदीं च नकुलं च युधिष्ठिरः ।
मा भैष्ट राक्षसान्मूढाद्गतिरस्य मया हृता ॥ ०२० ॥

नातिदूरे महाबाहुर्भविता पवनात्मजः ।
अस्मिन्मुहूर्ते संप्राप्ते न भविष्यति राक्षसः ॥ ०२१ ॥

सहदेवस्तु तं दृष्ट्वा राक्षसं मूढचेतसम् ।
उवाच वचनं राजन्कुन्तीपुत्रं युधिष्ठिरम् ॥ ०२२ ॥

राजन्किं नाम तत्कृत्यं क्षत्रियस्यास्त्यतोऽधिकम् ।
यद्युद्धेऽभिमुखः प्राणांस्त्यजेच्छत्रूञ्जयेत वा ॥ ०२३ ॥

एष चास्मान्वयं चैनं युध्यमानाः परंतप ।
सूदयेम महाबाहो देशकालो ह्ययं नृप ॥ ०२४ ॥

क्षत्रधर्मस्य संप्राप्तः कालः सत्यपराक्रम ।
जयन्तः पात्यमाना वा प्राप्तुमर्हाम सद्गतिम् ॥ ०२५ ॥

राक्षसे जीवमानेऽद्य रविरस्तमियाद्यदि ।
नाहं ब्रूयां पुनर्जातु क्षत्रियोऽस्मीति भारत ॥ ०२६ ॥

भो भो राक्षस तिष्ठस्व सहदेवोऽस्मि पाण्डवः ।
हत्वा वा मां नयस्वैनान्हतो वाद्येह स्वप्स्यसि ॥ ०२७ ॥

तथैव तस्मिन्ब्रुवति भीमसेनो यदृच्छया ।
प्रादृश्यत महाबाहुः सवज्र इव वासवः ॥ ०२८ ॥

सोऽपश्यद्भ्रातरौ तत्र द्रौपदीं च यशस्विनीम् ।
क्षितिस्थं सहदेवं च क्षिपन्तं राक्षसं तदा ॥ ०२९ ॥

मार्गाच्च राक्षसं मूढं कालोपहतचेतसम् ।
भ्रमन्तं तत्र तत्रैव दैवेन विनिवारितम् ॥ ०३० ॥

भ्रातॄंस्तान्ह्रियतो दृष्ट्वा द्रौपदीं च महाबलः ।
क्रोधमाहारयद्भीमो राक्षसं चेदमब्रवीत् ॥ ०३१ ॥

विज्ञातोऽसि मया पूर्वं चेष्टञ्शस्त्रपरीक्षणे ।
आस्था तु त्वयि मे नास्ति यतोऽसि न हतस्तदा ॥ ०३२ ॥

ब्रह्मरूपप्रतिच्छन्नो न नो वदसि चाप्रियम् ॥ ०३२ ॥

प्रियेषु चरमाणं त्वां न चैवाप्रियकारिणम् ।
अतिथिं ब्रह्मरूपं च कथं हन्यामनागसम् ॥ ०३३ ॥

राक्षसं मन्यमानोऽपि यो हन्यान्नरकं व्रजेत् ॥ ०३३ ॥

अपक्वस्य च कालेन वधस्तव न विद्यते ।
नूनमद्यासि संपक्वो यथा ते मतिरीदृशी ॥ ०३४ ॥

दत्ता कृष्णापहरणे कालेनाद्भुतकर्मणा ॥ ०३४ ॥

बडिशोऽयं त्वया ग्रस्तः कालसूत्रेण लम्बितः ।
मत्स्योऽम्भसीव स्यूतास्यः कथं मेऽद्य गमिष्यसि ॥ ०३५ ॥

यं चासि प्रस्थितो देशं मनः पूर्वं गतं च ते ।
न तं गन्तासि गन्तासि मार्गं बकहिडिम्बयोः ॥ ०३६ ॥

एवमुक्तस्तु भीमेन राक्षसः कालचोदितः ।
भीत उत्सृज्य तान्सर्वान्युद्धाय समुपस्थितः ॥ ०३७ ॥

अब्रवीच्च पुनर्भीमं रोषात्प्रस्फुरिताधरः ।
न मे मूढा दिशः पाप त्वदर्थं मे विलम्बनम् ॥ ०३८ ॥

श्रुता मे राक्षसा ये ये त्वया विनिहता रणे ।
तेषामद्य करिष्यामि तवास्त्रेणोदकक्रियाम् ॥ ०३९ ॥

एवमुक्तस्ततो भीमः सृक्किणी परिसंलिहन् ।
स्मयमान इव क्रोधात्साक्षात्कालान्तकोपमः ॥ ०४० ॥

बाहुसंरम्भमेवेच्छन्नभिदुद्राव राक्षसम् ॥ ०४० ॥

राक्षसोऽपि तदा भीमं युद्धार्थिनमवस्थितम् ।
अभिदुद्राव संरब्धो बलो वज्रधरं यथा ॥ ०४१ ॥

वर्तमाने तदा ताभ्यां बाहुयुद्धे सुदारुणे ।
माद्रीपुत्रावभिक्रुद्धावुभावप्यभ्यधावताम् ॥ ०४२ ॥

न्यवारयत्तौ प्रहसन्कुन्तीपुत्रो वृकोदरः ।
शक्तोऽहं राक्षसस्येति प्रेक्षध्वमिति चाब्रवीत् ॥ ०४३ ॥

आत्मना भ्रातृभिश्चाहं धर्मेण सुकृतेन च ।
इष्टेन च शपे राजन्सूदयिष्यामि राक्षसम् ॥ ०४४ ॥

इत्येवमुक्त्वा तौ वीरौ स्पर्धमानौ परस्परम् ।
बाहुभिः समसज्जेतामुभौ रक्षोवृकोदरौ ॥ ०४५ ॥

तयोरासीत्संप्रहारः क्रुद्धयोर्भीमरक्षसोः ।
अमृष्यमाणयोः संख्ये देवदानवयोरिव ॥ ०४६ ॥

आरुज्यारुज्य तौ वृक्षानन्योन्यमभिजघ्नतुः ।
जीमूताविव घर्मान्ते विनदन्तौ महाबलौ ॥ ०४७ ॥

बभञ्जतुर्महावृक्षानूरुभिर्बलिनां वरौ ।
अन्योन्येनाभिसंरब्धौ परस्परजयैषिणौ ॥ ०४८ ॥

तद्वृक्षयुद्धमभवन्महीरुहविनाशनम् ।
वालिसुग्रीवयोर्भ्रात्रोः पुरेव कपिसिंहयोः ॥ ०४९ ॥

आविध्याविध्य तौ वृक्षान्मुहूर्तमितरेतरम् ।
ताडयामासतुरुभौ विनदन्तौ मुहुर्मुहुः ॥ ०५० ॥

तस्मिन्देशे यदा वृक्षाः सर्व एव निपातिताः ।
पुञ्जीकृताश्च शतशः परस्परवधेप्सया ॥ ०५१ ॥

तदा शिलाः समादाय मुहूर्तमिव भारत ।
महाभ्रैरिव शैलेन्द्रौ युयुधाते महाबलौ ॥ ०५२ ॥

उग्राभिरुग्ररूपाभिर्बृहतीभिः परस्परम् ।
वज्रैरिव महावेगैराजघ्नतुरमर्षणौ ॥ ०५३ ॥

अभिहत्य च भूयस्तावन्योन्यं बलदर्पितौ ।
भुजाभ्यां परिगृह्याथ चकर्षाते गजाविव ॥ ०५४ ॥

मुष्टिभिश्च महाघोरैरन्योन्यमभिपेततुः ।
तयोश्चटचटाशब्दो बभूव सुमहात्मनोः ॥ ०५५ ॥

ततः संहृत्य मुष्टिं तु पञ्चशीर्षमिवोरगम् ।
वेगेनाभ्यहनद्भीमो राक्षसस्य शिरोधराम् ॥ ०५६ ॥

ततः श्रान्तं तु तद्रक्षो भीमसेनभुजाहतम् ।
सुपरिश्रान्तमालक्ष्य भीमसेनोऽभ्यवर्तत ॥ ०५७ ॥

तत एनं महाबाहुर्बाहुभ्याममरोपमः ।
समुत्क्षिप्य बलाद्भीमो निष्पिपेष महीतले ॥ ०५८ ॥

तस्य गात्राणि सर्वाणि चूर्णयामास पाण्डवः ।
अरत्निना चाभिहत्य शिरः कायादपाहरत् ॥ ०५९ ॥

संदष्टोष्ठं विवृत्ताक्षं फलं वृन्तादिव च्युतम् ।
जटासुरस्य तु शिरो भीमसेनबलाद्धृतम् ॥ ०६० ॥

पपात रुधिरादिग्धं संदष्टदशनच्छदम् ॥ ०६० ॥

तं निहत्य महेष्वासो युधिष्ठिरमुपागमत् ।
स्तूयमानो द्विजाग्र्यैस्तैर्मरुद्भिरिव वासवः ॥ ०६१ ॥

---

# यक्शायुद्धपर्व

## अध्याय १५५

वैशंपायन उवाच ॥

निहते राक्षसे तस्मिन्पुनर्नारायणाश्रमम् ।
अभ्येत्य राजा कौन्तेयो निवासमकरोत्प्रभुः ॥ ००१ ॥

स समानीय तान्सर्वान्भ्रातॄनित्यब्रवीद्वचः ।

द्रौपद्या सहितान्काले संस्मरन्भ्रातरं जयम्  ॥ ००२  ॥

समाश्वतस्त्रोऽभिगताः शिवेन चरतां वने ।
कृतोद्देशश्च बीभत्सुः पञ्चमीमभितः समाम्  ॥ ००३  ॥

प्राप्य पर्वतराजानं श्वेतं शिखरिणां वरम् ।
तत्रापि च कृतोद्देशः समागमदिदृक्षुभिः  ॥ ००४  ॥

कृतश्च समयस्तेन पार्थेनामिततेजसा ।
पञ्च वर्षाणि वत्स्यामि विद्यार्थीति पुरा मयि  ॥ ००५  ॥

तत्र गाण्डीवधन्वानमवाप्तास्त्रमरिंदमम् ।
देवलोकादिमं लोकं द्रक्ष्यामः पुनरागतम्  ॥ ००६  ॥

इत्युक्त्वा ब्राह्मणान्सर्वानामन्त्रयत पाण्डवः ।
कारणं चैव तत्तेषामाचचक्षे तपस्विनाम्  ॥ ००७  ॥

तमुग्रतपसः प्रीताः कृत्वा पार्थं प्रदक्षिणम् ।
ब्राह्मणास्तेऽन्वमोदन्त शिवेन कुशलेन च  ॥ ००८  ॥

सुखोदर्कमिमं क्लेशमचिराद्भरतर्षभ ।
क्षत्रधर्मेण धर्मज्ञ तीर्त्वा गां पालयिष्यसि  ॥ ००९  ॥

तत्तु राजा वचस्तेषां प्रतिगृह्य तपस्विनाम् ।
प्रतस्थे सह विप्रैस्तैर्भ्रातृभिश्च परंतपः  ॥ ०१०  ॥

द्रौपद्या सहितः श्रीमान्हैडिम्बेयादिभिस्तथा ।
राक्षसैरनुयातश्च लोमशेनाभिरक्षितः  ॥ ०११  ॥

क्वचिज्जगाम पद्भ्यां तु राक्षसैरुह्यते क्वचित् ।
तत्र तत्र महातेजा भ्रातृभिः सह सुव्रतः  ॥ ०१२  ॥

ततो युधिष्ठिरो राजा बहून्क्लेशान्विचिन्तयन् ।
सिंहव्याघ्रगजाकीर्णामुदीचीं प्रययौ दिशम्  ॥ ०१३  ॥

अवेक्षमाणः कैलासं मैनाकं चैव पर्वतम् ।
गन्धमादनपादांश्च मेरुं चापि शिलोच्चयम्  ॥ ०१४  ॥

उपर्युपरि शैलस्य बह्वीश्च सरितः शिवाः ।
प्रस्थं हिमवतः पुण्यं ययौ सप्तदशेऽहनि  ॥ ०१५  ॥

ददृशुः पाण्डवा राजन्गन्धमादनमन्तिकात् ।
पृष्ठे हिमवतः पुण्ये नानाद्रुमलतायुते  ॥ ०१६  ॥

सलिलावर्तसञ्जातैः पुष्पितैश्च महीरुहैः ।
समावृतं पुण्यतममाश्रमं वृषपर्वणः  ॥ ०१७  ॥

तमुपक्रम्य राजर्षिं धर्मात्मानमरिंदमाः ।
पाण्डवा वृषपर्वाणमवन्दन्त गतक्लमाः  ॥ ०१८  ॥

अभ्यनन्दत्स राजर्षिः पुत्रवद्भरतर्षभान् ।
पूजिताश्चावसंस्तत्र सप्तरात्रमरिंदमाः  ॥ ०१९  ॥

अष्टमेऽहनि संप्राप्ते तमृषिं लोकविश्रुतम् ।
आमन्त्र्य वृषपर्वाणं प्रस्थानं समरोचयन्  ॥ ०२०  ॥

एकैकशश्च तान्विप्रान्निवेद्य वृषपर्वणे ।
न्यासभूतान्यथाकालं बन्धूनिव सुसत्कृतान्  ॥ ०२१  ॥

ततस्ते वरवस्त्राणि शुभान्याभरणानि च ।
न्यदधुः पाण्डवास्तस्मिन्नाश्रमे वृषपर्वणः  ॥ ०२२  ॥

अतीतानागते विद्वान्कुशलः सर्वधर्मवित् ।
अन्वशासत्स धर्मज्ञः पुत्रवद्भरतर्षभान् ॥ ०२३ ॥

तेऽनुज्ञाता महात्मानः प्रययुर्दिशमुत्तराम् ।
कृष्णया सहिता वीरा ब्राह्मणैश्च महात्मभिः ॥ ०२४ ॥

तान्प्रस्थितानन्वगच्छद्वृषपर्वा महीपतिः ॥ ०२४ ॥

उपन्यस्य महातेजा विप्रेभ्यः पाण्डवांस्तदा ।
अनुसंसाध्य कौन्तेयानाशीर्भिरभिनन्द्य च ॥ ०२५ ॥

वृषपर्वा निववृते पन्थानमुपदिश्य च ॥ ०२५ ॥

नानामृगगणैर्जुष्टं कौन्तेयः सत्यविक्रमः ।
पदातिर्भ्रातृभिः सार्धं प्रातिष्ठत युधिष्ठिरः ॥ ०२६ ॥

नानाद्रुमनिरोधेषु वसन्तः शैलसानुषु ।
पर्वतं विविशुः श्वेतं चतुर्थेऽहनि पाण्डवाः ॥ ०२७ ॥

महाभ्रघनसङ्काशं सलिलोपहितं शुभम् ।
मणिकाञ्चनरम्यं च शैलं नानासमुच्छ्रयम् ॥ ०२८ ॥

ते समासाद्य पन्थानं यथोक्तं वृषपर्वणा ।
अनुसस्रुर्यथोद्देशं पश्यन्तो विविधान्नगान् ॥ ०२९ ॥

उपर्युपरि शैलस्य गुहाः परमदुर्गमाः ।
सुदुर्गमांस्ते सुबहून्सुखेनैवाभिचक्रमुः ॥ ०३० ॥

धौम्यः कृष्णा च पार्थाश्च लोमशश्च महानृषिः ।
अगमन्सहितास्तत्र न कश्चिदवहीयते ॥ ०३१ ॥

ते मृगद्विजसंघुष्टं नानाद्विजसमाकुलम् ।
शाखामृगगणैश्चैव सेवितं सुमनोहरम् ॥ ०३२ ॥

पुण्यं पद्मसरोपेतं सपल्वलमहावनम् ।
उपतस्थुर्महावीर्या माल्यवन्तं महागिरिम् ॥ ०३३ ॥

ततः किंपुरुषावासं सिद्धचारणसेवितम् ।
ददृशुर्हृष्टरोमाणः पर्वतं गन्धमादनम् ॥ ०३४ ॥

विद्याधरानुचरितं किंनरीभिस्तथैव च ।
गजसिंहसमाकीर्णमुदीर्णशरभायुतम् ॥ ०३५ ॥

उपेतमन्यैश्च तदा मृगैर्मृदुनिनादिभिः ।
ते गन्धमादनवनं तन्नन्दनवनोपमम् ॥ ०३६ ॥

मुदिताः पाण्डुतनया मनोहृदयनन्दनम् ।
विविशुः क्रमशो वीरा अरण्यं शुभकाननम् ॥ ०३७ ॥

द्रौपदीसहिता वीरास्तैश्च विप्रैर्महात्मभिः ।
शृण्वन्तः प्रीतिजननान्वल्गून्मदकलाञ्शुभान् ॥ ०३८ ॥

श्रोत्ररम्यान्सुमधुराञ्शब्दान्खगमुखेरितान् ॥ ०३८ ॥

सर्वर्तुफलभाराढ्यान्सर्वर्तुकुसुमोज्ज्वलान् ।
पश्यन्तः पादपांश्चापि फलभारावनामितान् ॥ ०३९ ॥

आम्रानाम्रातकान्फुल्लान्नारिकेलान्सतिन्दुकान् ।
अजातकांस्तथा जीरान्दाडिमान्बीजपूरकान् ॥ ०४० ॥

पनसा.ण्लिकुचान्मोचान्खर्जूरानाम्रवेतसान् ।
पारावतांस्तथा क्षौद्रान्नीपांश्चापि मनोरमान् ॥ ०४१ ॥

बिल्वान्कपित्थाञ्जम्बूंश्च काश्मरीर्बदरीस्तथा ।
प्लक्षानुदुम्बरवटानश्वत्थान्क्षीरिणस्तथा ॥ ०४२ ॥

भल्लातकानामलकान्हरीतकबिभीतकान् ॥ ०४२ ॥

इङ्गुदान्करवीरांश्च तिन्दुकांश्च महाफलान् ।
एतानन्यांश्च विविधान्गन्धमादनसानुषु ॥ ०४३ ॥

फलैरमृतकल्पैस्तानाचितान्स्वादुभिस्तरून् ।
तथैव चम्पकाशोकान्केतकान्बकुलांस्तथा ॥ ०४४ ॥

पुंनागान्सप्तपर्णांश्च कर्णिकारान्सकेतकान् ।
पाटलान्कुटजान्रम्यान्मन्दारेन्दीवरांस्तथा ॥ ०४५ ॥

पारिजातान्कोविदारान्देवदारुतरूंस्तथा ।
शालांस्तालांस्तमालांश्च प्रियालान्बकुलांस्तथा ॥ ०४६ ॥

शाल्मलीः किंशुकाशोकाञ्शिंशपांस्तरलांस्तथा ॥ ०४६ ॥

चकोरैः शतपत्रैश्च भृङ्गराजैस्तथा शुकैः ।
कोकिलैः कलविङ्कैश्च हारीतैर्जीवजीवकैः ॥ ०४७ ॥

प्रियव्रतैश्चातकैश्च तथान्यैर्विविधैः खगैः ।
श्रोत्ररम्यं सुमधुरं कूजद्भिश्चाप्यधिष्ठितान् ॥ ०४८ ॥

सरांसि च विचित्राणि प्रसन्नसलिलानि च ।
कुमुदैः पुण्डरीकैश्च तथा कोकनदोत्पलैः ॥ ०४९ ॥

कह्लारैः कमलैश्चैव आचितानि समन्ततः ॥ ०४९ ॥

कदम्बैश्चक्रवाकैश्च कुररैर्जलकुक्कुटैः ।
कारण्डवैः प्लवैर्हंसैर्बकैर्मद्गुभिरेव च ॥ ०५० ॥

एतैश्चान्यैश्च कीर्णानि समन्ताज्जलचारिभिः ॥ ०५० ॥

हृष्टैस्तथा तामरसरसासवमदालसैः ।
पद्मोदरच्युतरजःकिञ्जल्कारुणरञ्जितैः ॥ ०५१ ॥

मधुरस्वरैर्मधुकरैर्विरुतान्कमलाकरान् ।
पश्यन्तस्ते मनोरम्यान्गन्धमादनसानुषु ॥ ०५२ ॥

तथैव पद्मषण्डैश्च मण्डितेषु समन्ततः ।
शिखण्डिनीभिः सहिता.ण्लतामण्डपकेषु च ॥ ०५३ ॥

मेघतूर्यरवोद्दाममदनाकुलितान्भृशम् ॥ ०५३ ॥

कृत्वैव केकामधुरं सङ्गीतमधुरस्वरम् ।
चित्रान्कलापान्विस्तीर्य सविलासान्मदालसान् ॥ ०५४ ॥

मयूरान्ददृशुश्चित्रान्नृत्यतो वनलासकान् ॥ ०५४ ॥

कान्ताभिः सहितानन्यानपश्यन्रमतः सुखम् ।
वल्लीलतासङ्कटेषु कटकेषु स्थितांस्तथा ॥ ०५५ ॥

कांश्चिच्छकुनजातांश्च विटपेषूत्कटानपि ।
कलापरचिताटोपान्विचित्रमुकुटानिव ॥ ०५६ ॥

विवरेषु तरूणां च मुदितान्ददृशुश्च ते ॥ ०५६ ॥

सिन्धुवारानथोद्दामान्मन्मथस्येव तोमरान् ।
सुवर्णकुसुमाकीर्णान्गिरीणां शिखरेषु च ॥ ०५७ ॥

कर्णिकारान्विरचितान्कर्णपूरानिवोत्तमान् ।
अथापश्यन्कुरबकान्वनराजिषु पुष्पितान्  ॥ ०५८  ॥

कामवश्योत्सुककरान्कामस्येव शरोत्करान्  ॥ ०५८  ॥

तथैव वनराजीनामुदारान्रचितानिव ।
विराजमानांस्तेऽपश्यंस्तिलकांस्तिलकानिव  ॥ ०५९  ॥

तथानङ्गशराकारान्सहकारान्मनोरमान् ।
अपश्यन्भ्रमरारावान्मञ्जरीभिर्विराजितान्  ॥ ०६०  ॥

हिरण्यसदृशैः पुष्पैर्दावाग्निसदृशैरपि ।
लोहितैरञ्जनाभैश्च वैडूर्यसदृशैरपि  ॥ ०६१  ॥

तथा शालांस्तमालांश्च पाटल्यो बकुलानि च ।
माला इव समासक्ताः शैलानां शिखरेषु च  ॥ ०६२  ॥

एवं क्रमेण ते वीरा वीक्षमाणाः समन्ततः ।
गजसंघसमाबाधं सिंहव्याघ्रसमायुतम्  ॥ ०६३  ॥

शरभोन्नादसंघुष्टं नानारावनिनादितम् ।
सर्वर्तुफलपुष्पाढ्यं गन्धमादनसानुषु  ॥ ०६४  ॥

पीता भास्वरवर्णाभा बभूवुर्वनराजयः ।
नात्र कण्टकिनः केचिन्नात्र केचिदपुष्पिताः  ॥ ०६५  ॥

स्निग्धपत्रफला वृक्षा गन्धमादनसानुषु  ॥ ०६५  ॥

विमलस्फटिकाभानि पाण्डुरच्छदनैर्द्विजैः ।
राजहंसैरुपेतानि सारसाभिरुतानि च  ॥ ०६६  ॥

सरांसि सरितः पार्थाः पश्यन्तः शैलसानुषु ॥ ०६६ ॥

पद्मोत्पलविचित्राणि सुखस्पर्शजलानि च ।
गन्धवन्ति च माल्यानि रसवन्ति फलानि च ॥ ०६७ ॥

अतीव वृक्षा राजन्ते पुष्पिताः शैलसानुषु ॥ ०६७ ॥

एते चान्ये च बहवस्तत्र काननजा द्रुमाः ।
लताश्च विविधाकाराः पत्रपुष्पफलोच्चयाः ॥ ०६८ ॥

युधिष्ठिरस्तु तान्वृक्षान्पश्यमानो नगोत्तमे ।
भीमसेनमिदं वाक्यमब्रवीन्मधुराक्षरम् ॥ ०६९ ॥

पश्य भीम शुभान्देशान्देवाक्रीडान्समन्ततः ।
अमानुषगतिं प्राप्ताः संसिद्धाः स्म वृकोदर ॥ ०७० ॥

लताभिश्चैव बह्वीभिः पुष्पिताः पादपोत्तमाः ।
संश्लिष्टाः पार्थ शोभन्ते गन्धमादनसानुषु ॥ ०७१ ॥

शिखण्डिनीभिश्चरतां सहितानां शिखण्डिनाम् ।
नर्दतां शृणु निर्घोषं भीम पर्वतसानुषु ॥ ०७२ ॥

चकोराः शतपत्राश्च मत्तकोकिलशारिकाः ।
पत्रिणः पुष्पितानेतान्संश्लिष्यन्ति महाद्रुमान् ॥ ०७३ ॥

रक्तपीतारुणाः पार्थ पादपाग्रगता द्विजाः ।
परस्परमुदीक्षन्ते बहवो जीवजीवकाः ॥ ०७४ ॥

हरितारुणवर्णानां शाद्वलानां समन्ततः ।
सारसाः प्रतिदृश्यन्ते शैलप्रस्रवणेष्वपि ॥ ०७५ ॥

वदन्ति मधुरा वाचः सर्वभूतमनोनुगाः ।
भृङ्गराजोपचक्राश्च लोहपृष्ठाश्च पत्रिणः ॥ ०७६ ॥

चतुर्विषाणाः पद्माभाः कुञ्जराः सकरेणवः ।
एते वैडूर्यवर्णाभं क्षोभयन्ति महत्सरः ॥ ०७७ ॥

बहुतालसमुत्सेधाः शैलश‍ृङ्गात्परिच्युताः ।
नानाप्रस्रवणेभ्यश्च वारिधाराः पतन्त्यमूः ॥ ०७८ ॥

भास्कराभप्रभा भीम शारदाभ्रघनोपमाः ।
शोभयन्ति महाशैलं नानारजतधातवः ॥ ०७९ ॥

क्वचिदञ्जनवर्णाभाः क्वचित्काञ्चनसंनिभाः ।
धातवो हरितालस्य क्वचिद्धिङ्गुलकस्य च ॥ ०८० ॥

मनःशिलागुहाश्चैव संध्याभ्रनिकरोपमाः ।
शशलोहितवर्णाभाः क्वचिद्गैरिकधातवः ॥ ०८१ ॥

सितासिताभ्रप्रतिमा बालसूर्यसमप्रभाः ।
एते बहुविधाः शैलं शोभयन्ति महाप्रभाः ॥ ०८२ ॥

गन्धर्वाः सह कान्ताभिर्यथोक्तं वृषपर्वणा ।
दृश्यन्ते शैलश‍ृङ्गेषु पार्थ किंपुरुषैः सह ॥ ०८३ ॥

गीतानां तलतालानां यथा साम्नां च निस्वनः ।
श्रूयते बहुधा भीम सर्वभूतमनोहरः ॥ ०८४ ॥

महागङ्गामुदीक्षस्व पुण्यां देवनदीं शुभाम् ।
कलहंसगणैर्जुष्टामृषिकिंनरसेविताम् ॥ ०८५ ॥

धातुभिश्च सरिद्भिश्च किंनरैर्मृगपक्षिभिः ।
गन्धर्वैरप्सरोभिश्च काननैश्च मनोरमैः ॥ ०८६ ॥

व्यालैश्च विविधाकारैः शतशीर्षैः समन्ततः ।
उपेतं पश्य कौन्तेय शैलराजमरिंदम ॥ ०८७ ॥

ते प्रीतमनसः शूराः प्राप्ता गतिमनुत्तमाम् ।
नातृप्यन्पर्वतेन्द्रस्य दर्शनेन परंतपाः ॥ ०८८ ॥

उपेतमथ माल्यैश्च फलवद्भिश्च पादपैः ।
आर्ष्टिषेणस्य राजर्षेराश्रमं ददृशुस्तदा ॥ ०८९ ॥

ततस्तं तीव्रतपसं कृशं धमनिसंततम् ।
पारगं सर्वधर्माणामार्ष्टिषेणमुपागमन् ॥ ०९० ॥

---

# अध्याय १५६

वैशंपायन उवाच ॥

युधिष्ठिरस्तमासाद्य तपसा दग्धकिल्बिषम् ।
अभ्यवादयत प्रीतः शिरसा नाम कीर्तयन् ॥ ००१ ॥

ततः कृष्णा च भीमश्च यमौ चापि यशस्विनौ ।
शिरोभिः प्राप्य राजर्षिं परिवार्योपतस्थिरे ॥ ००२ ॥

तथैव धौम्यो धर्मज्ञः पाण्डवानां पुरोहितः ।
यथान्यायमुपाक्रान्तस्तमृषिं संशितव्रतम् ॥ ००३ ॥

अन्वजानात्स धर्मज्ञो मुनिर्दिव्येन चक्षुषा ।
पाण्डोः पुत्रान्कुरुश्रेष्ठानास्यतामिति चाब्रवीत् ॥ ००४ ॥

कुरूणामृषभं प्राज्ञं पूजयित्वा महातपाः ।
सह भ्रातृभिरासीनं पर्यपृच्छदनामयम् ॥ ००५ ॥

नानृते कुरुषे भावं कच्चिद्धर्मे च वर्तसे ।
मतापित्रोश्च ते वृत्तिः कच्चित्पार्थ न सीदति ॥ ००६ ॥

कच्चित्ते गुरवः सर्वे वृद्धा वैद्याश्च पूजिताः ।
कच्चिन्न कुरुषे भावं पार्थ पापेषु कर्मसु ॥ ००७ ॥

सुकृतं प्रतिकर्तुं च कच्चिद्धातुं च दुष्कृतम् ।
यथान्यायं कुरुश्रेष्ठ जानासि न च कत्थसे ॥ ००८ ॥

यथार्हं मानिताः कच्चित्त्वया नन्दन्ति साधवः ।
वनेष्वपि वसन्कच्चिद्धर्ममेवानुवर्तसे ॥ ००९ ॥

कच्चिद्धौम्यस्त्वदाचारैर्न पार्थ परितप्यते ।
दानधर्मतपःशौचैरार्जवेन तितिक्षया ॥ ०१० ॥

पितृपैतामहं वृत्तं कच्चित्पार्थानुवर्तसे ।
कच्चिद्राजर्षियातेन पथा गच्छसि पाण्डव ॥ ०११ ॥

स्वे स्वे किल कुले जाते पुत्रे नप्तरि वा पुनः ।
पितरः पितृलोकस्थाः शोचन्ति च हसन्ति च ॥ ०१२ ॥

किं न्वस्य दुष्कृतेऽस्माभिः संप्राप्तव्यं भविष्यति ।
किं चास्य सुकृतेऽस्माभिः प्राप्तव्यमिति शोभनम् ॥ ०१३ ॥

पिता माता तथैवाग्निर्गुरुरात्मा च पञ्चमः ।
यस्यैते पूजिताः पार्थ तस्य लोकावुभौ जितौ  ॥ ०१४  ॥

अब्भक्षा वायुभक्षाश्च प्लवमाना विहायसा ।
जुषन्ते पर्वतश्रेष्ठमृषयः पर्वसंधिषु  ॥ ०१५  ॥

कामिनः सह कान्ताभिः परस्परमनुव्रताः ।
दृश्यन्ते शैलशृङ्गस्थास्तथा किंपुरुषा नृप  ॥ ०१६  ॥

अरजांसि च वासांसि वसानाः कौशिकानि च ।
दृश्यन्ते बहवः पार्थ गन्धर्वाप्सरसां गणाः  ॥ ०१७  ॥

विद्याधरगणाश्चैव स्रग्विणः प्रियदर्शनाः ।
महोरगगणाश्चैव सुपर्णाश्चोरगादयः  ॥ ०१८  ॥

अस्य चोपरि शैलस्य श्रूयते पर्वसंधिषु ।
भेरीपणवशङ्खानां मृदङ्गानां च निस्वनः  ॥ ०१९  ॥

इहस्थैरेव तत्सर्वं श्रोतव्यं भरतर्षभाः ।
न कार्या वः कथञ्चित्स्यात्तत्राभिसरणे मतिः  ॥ ०२०  ॥

न चाप्यतः परं शक्यं गन्तुं भरतसत्तमाः ।
विहारो ह्यत्र देवानाममानुषगतिस्तु सा  ॥ ०२१  ॥

ईषच्चपलकर्माणं मनुष्यमिह भारत ।
द्विषन्ति सर्वभूतानि ताडयन्ति च राक्षसाः  ॥ ०२२  ॥

अभ्यतिक्रम्य शिखरं शैलस्यास्य युधिष्ठिर ।
गतिः परमसिद्धानां देवर्षीणां प्रकाशते  ॥ ०२३  ॥

चापलादिह गच्छन्तं पार्थ यानमतः परम् ।

अयःशूलादिभिर्घ्नन्ति राक्षसाः शत्रुसूदन ॥ ०२४ ॥

अप्सरोभिः परिवृतः समृद्ध्या नरवाहनः ।
इह वैश्रवणस्तात पर्वसंधिषु दृश्यते ॥ ०२५ ॥

शिखरे तं समासीनमधिपं सर्वरक्षसाम् ।
प्रेक्षन्ते सर्वभूतानि भानुमन्तमिवोदितम् ॥ ०२६ ॥

देवदानवसिद्धानां तथा वैश्रवणस्य च ।
गिरेः शिखरमुद्यानमिदं भरतसत्तम ॥ ०२७ ॥

उपासीनस्य धनदं तुम्बुरोः पर्वसंधिषु ।
गीतसामस्वनस्तात श्रूयते गन्धमादने ॥ ०२८ ॥

एतदेवंविधं चित्रमिह तात युधिष्ठिर ।
प्रेक्षन्ते सर्वभूतानि बहुशः पर्वसंधिषु ॥ ०२९ ॥

भुञ्जानाः सर्वभोज्यानि रसवन्ति फलानि च ।
वसध्वं पाण्डवश्रेष्ठा यावदर्जुनदर्शनम् ॥ ०३० ॥

न तात चपलैर्भाव्यमिह प्राप्तैः कथञ्चन ।
उषित्वेह यथाकामं यथाश्रद्धं विहृत्य च ॥ ०३१ ॥

ततः शस्त्रभृतां श्रेष्ठ पृथिवीं पालयिष्यसि ॥ ०३१ ॥

---

# अध्याय १५७

जनमेजय उवाच ॥

पाण्डोः पुत्रा महात्मानः सर्वे दिव्यपराक्रमाः ।
कियन्तं कालमवसन्पर्वते गन्धमादने ॥ ००१ ॥

कानि चाभ्यवहार्याणि तत्र तेषां महात्मनाम् ।
वसतां लोकवीराणामासंस्तद्ब्रूहि सत्तम ॥ ००२ ॥

विस्तरेण च मे शंस भीमसेनपराक्रमम् ।
यद्यच्चक्रे महाबाहुस्तस्मिन्हैमवते गिरौ ॥ ००३ ॥

न खल्वासीत्पुनर्युद्धं तस्य यक्षैर्द्विजोत्तम ॥ ००३ ॥

कच्चित्समागमस्तेषामासीद्वैश्रवणेन च ।
तत्र ह्यायाति धनद आर्ष्टिषेणो यथाब्रवीत् ॥ ००४ ॥

एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन ।
न हि मे शृण्वतस्तृप्तिरस्ति तेषां विचेष्टितम् ॥ ००५ ॥

वैशंपायन उवाच ॥

एतदात्महितं श्रुत्वा तस्याप्रतिमतेजसः ।
शासनं सततं चक्रुस्तथैव भरतर्षभाः ॥ ००६ ॥

भुञ्जाना मुनिभोज्यानि रसवन्ति फलानि च ।
शुद्धबाणहतानां च मृगाणां पिशितान्यपि ॥ ००७ ॥

मेध्यानि हिमवत्पृष्ठे मधूनि विविधानि च ।
एवं ते न्यवसंस्तत्र पाण्डवा भरतर्षभाः ॥ ००८ ॥

तथा निवसतां तेषां पञ्चमं वर्षमभ्यगात् ।
शृण्वतां लोमशोक्तानि वाक्यानि विविधानि च ॥ ००९ ॥

कृत्यकाल उपस्थास्य इति चोक्त्वा घटोत्कचः ।
राक्षसैः सहितः सर्वैः पूर्वमेव गतः प्रभो ॥ ०१० ॥

आर्ष्टिषेणाश्रमे तेषां वसतां वै महात्मनाम् ।
अगच्छन्बहवो मासाः पश्यतां महदद्भुतम् ॥ ०११ ॥

तैस्तत्र रममाणैश्च विहरद्भिश्च पाण्डवैः ।
प्रीतिमन्तो महाभागा मुनयश्चारणास्तथा ॥ ०१२ ॥

आजग्मुः पाण्डवान्द्रष्टुं सिद्धात्मानो यतव्रताः ।
तैस्तैः सह कथाश्चक्रुर्दिव्या भरतसत्तमाः ॥ ०१३ ॥

ततः कतिपयाहस्य महाह्रदनिवासिनम् ।
ऋद्धिमन्तं महानागं सुपर्णः सहसाहरत् ॥ ०१४ ॥

प्राकम्पत महाशैलः प्रामृद्यन्त महाद्रुमाः ।
ददृशुः सर्वभूतानि पाण्डवाश्च तदद्भुतम् ॥ ०१५ ॥

ततः शैलोत्तमस्याग्रात्पाण्डवान्प्रति मारुतः ।
अवहत्सर्वमाल्यानि गन्धवन्ति शुभानि च ॥ ०१६ ॥

तत्र पुष्पाणि दिव्यानि सुहृद्भिः सह पाण्डवाः ।
ददृशुः पञ्च वर्णानि द्रौपदी च यशस्विनी ॥ ०१७ ॥

भीमसेनं ततः कृष्णा काले वचनमब्रवीत् ।
विविक्ते पर्वतोद्देशे सुखासीनं महाभुजम् ॥ ०१८ ॥

सुपर्णानिलवेगेन श्वसनेन महाबलात् ।
पञ्चवर्णानि पात्यन्ते पुष्पाणि भरतर्षभ ॥ ०१९ ॥

प्रत्यक्षं सर्वभूतानां नदीमश्वरथां प्रति ॥ ०१९ ॥

खाण्डवे सत्यसंधेन भ्रात्रा तव नरेश्वर ।
गन्धर्वोरगरक्षांसि वासवश्च निवारितः ॥ ०२० ॥

हता मायाविनश्चोग्रा धनुः प्राप्तं च गाण्डिवम् ॥ ०२० ॥

तवापि सुमहत्तेजो महद्बाहुबलं च ते ।
अविषह्यमनाधृष्यं शतक्रतुबलोपमम् ॥ ०२१ ॥

त्वद्बाहुबलवेगेन त्रासिताः सर्वराक्षसाः ।
हित्वा शैलं प्रपद्यन्तां भीमसेन दिशो दश ॥ ०२२ ॥

ततः शैलोत्तमस्याग्रं चित्रमाल्यधरं शिवम् ।
व्यपेतभयसंमोहाः पश्यन्तु सुहृदस्तव ॥ ०२३ ॥

एवं प्रणिहितं भीम चिरात्प्रभृति मे मनः ।
द्रष्टुमिच्छामि शैलाग्रं त्वद्बाहुबलमाश्रिता ॥ ०२४ ॥

ततः क्षिप्तमिवात्मानं द्रौपद्या स परंतपः ।
नामृष्यत महाबाहुः प्रहारमिव सद्गवः ॥ ०२५ ॥

सिंहर्षभगतिः श्रीमानुदारः कनकप्रभः ।
मनस्वी बलवान्दृप्तो मानी शूरश्च पाण्डवः ॥ ०२६ ॥

लोहिताक्षः पृथुव्यंसो मत्तवारणविक्रमः ।
सिंहदंष्ट्रो बृहत्स्कन्धः शालपोत इवोद्गतः ॥ ०२७ ॥

महात्मा चारुसर्वाङ्गः कम्बुग्रीवो महाभुजः ।
रुक्मपृष्ठं धनुः खड्गं तूणांश्चापि परामृशत् ॥ ०२८ ॥

केसरीव यथोत्सिक्तः प्रभिन्न इव वारणः ।
व्यपेतभयसंमोहः शैलमभ्यपतद्बली ॥ ०२९ ॥

तं मृगेन्द्रमिवायान्तं प्रभिन्नमिव वारणम् ।
ददृशुः सर्वभूतानि बाणखड्गधनुर्धरम् ॥ ०३० ॥

द्रौपद्या वर्धयन्हर्षं गदामादाय पाण्डवः ।
व्यपेतभयसंमोहः शैलराजं समाविशत् ॥ ०३१ ॥

न ग्लानिर्न च कातर्यं न वैक्लव्यं न मत्सरः ।
कदाचिज्जुषते पार्थमात्मजं मातरिश्वनः ॥ ०३२ ॥

तदेकायनमासाद्य विषमं भीमदर्शनम् ।
बहुतालोच्छ्रयं शृङ्गमारुरोह महाबलः ॥ ०३३ ॥

स किंनरमहानागमुनिगन्धर्वराक्षसान् ।
हर्षयन्पर्वतस्याग्रमाससाद महाबलः ॥ ०३४ ॥

तत्र वैश्रवणावासं ददर्श भरतर्षभः ।
काञ्चनैः स्फाटिकाकारैर्वेश्मभिः समलङ्कृतम् ॥ ०३५ ॥

मोदयन्सर्वभूतानि गन्धमादनसंभवः ।
सर्वगन्धवहस्तत्र मारुतः सुसुखो ववौ ॥ ०३६ ॥

चित्रा विविधवर्णाभाश्चित्रमञ्जरिधारिणः ।
अचिन्त्या विविधास्तत्र द्रुमाः परमशोभनाः ॥ ०३७ ॥

रत्नजालपरिक्षिप्तं चित्रमाल्यधरं शिवम् ।
राक्षसाधिपतेः स्थानं ददर्श भरतर्षभः ॥ ०३८ ॥

गदाखड्गधनुष्पाणिः समभित्यक्तजीवितः ।

भीमसेनो महाबाहुस्तस्थौ गिरिरिवाचलः ॥ ०३९ ॥

ततः शङ्खमुपाध्मासीद्द्विषतां लोमहर्षणम् ।
ज्याघोषतलघोषं च कृत्वा भूतान्यमोहयत् ॥ ०४० ॥

ततः संहृष्टरोमाणः शब्दं तमभिदुद्रुवुः ।
यक्षराक्षसगन्धर्वाः पाण्डवस्य समीपतः ॥ ०४१ ॥

गदापरिघनिस्त्रिंशशक्तिशूलपरश्वधाः ।
प्रगृहीता व्यरोचन्त यक्षराक्षसबाहुभिः ॥ ०४२ ॥

ततः प्रववृते युद्धं तेषां तस्य च भारत ।
तैः प्रयुक्तान्महाकायैः शक्तिशूलपरश्वधान् ॥ ०४३ ॥

भल्लैर्भीमः प्रचिच्छेद भीमवेगतरैस्ततः ॥ ०४३ ॥

अन्तरिक्षचराणां च भूमिष्ठानां च गर्जताम् ।
शरैर्विव्याध गात्राणि राक्षसानां महाबलः ॥ ०४४ ॥

सा लोहितमहावृष्टिरभ्यवर्षन्महाबलम् ।
कायेभ्यः प्रच्युता धारा राक्षसानां समन्ततः ॥ ०४५ ॥

भीमबाहुबलोत्सृष्टैर्बहुधा यक्षरक्षसाम् ।
विनिकृत्तान्यदृश्यन्त शरीराणि शिरांसि च ॥ ०४६ ॥

प्रच्छाद्यमानं रक्षोभिः पाण्डवं प्रियदर्शनम् ।
ददृशुः सर्वभूतानि सूर्यमभ्रगणैरिव ॥ ०४७ ॥

स रश्मिभिरिवादित्यः शरैररिनिघातिभिः ।
सर्वानार्छन्महाबाहुर्बलवान्सत्यविक्रमः ॥ ०४८ ॥

अभितर्जयमानाश्च रुवन्तश्च महारवान् ।
न मोहं भीमसेनस्य ददृशुः सर्वराक्षसाः ॥ ०४९ ॥

ते शरैः क्षतसर्वाङ्गा भीमसेनभयार्दिताः ।
भीममार्तस्वरं चक्रुर्विप्रकीर्णमहायुधाः ॥ ०५० ॥

उत्सृज्य ते गदाशूलानसिशक्तिपरश्वधान् ।
दक्षिणां दिशमाजग्मुस्त्रासिता दृढधन्वना ॥ ०५१ ॥

तत्र शूलगदापाणिर्व्यूढोरस्को महाभुजः ।
सखा वैश्रवणस्यासीन्मणिमान्नाम राक्षसः ॥ ०५२ ॥

अदर्शयदधीकारं पौरुषं च महाबलः ।
स तान्दृष्ट्वा परावृत्तान्स्मयमान इवाब्रवीत् ॥ ०५३ ॥

एकेन बहवः संख्ये मानुषेण पराजिताः ।
प्राप्य वैश्रवणावासं किं वक्ष्यथ धनेश्वरम् ॥ ०५४ ॥

एवमाभाष्य तान्सर्वान्न्यवर्तत स राक्षसः ।
शक्तिशूलगदापाणिरभ्यधावच्च पाण्डवम् ॥ ०५५ ॥

तमापतन्तं वेगेन प्रभिन्नमिव वारणम् ।
वत्सदन्तैस्त्रिभिः पार्श्वे भीमसेनः समर्पयत् ॥ ०५६ ॥

मणिमानपि सङ्क्रुद्धः प्रगृह्य महतीं गदाम् ।
प्राहिणोद्भीमसेनाय परिक्षिप्य महाबलः ॥ ०५७ ॥

विद्युद्रूपां महाघोरामाकाशे महतीं गदाम् ।
शरैर्बहुभिरभ्यर्छद्भीमसेनः शिलाशितैः ॥ ०५८ ॥

प्रत्यहन्यन्त ते सर्वे गदामासाद्य सायकाः ।

न वेगं धारयामासुर्गदावेगस्य वेगिताः ॥ ०५९ ॥

गदायुद्धसमाचारं बुध्यमानः स वीर्यवान् ।
व्यंसयामास तं तस्य प्रहारं भीमविक्रमः ॥ ०६० ॥

ततः शक्तिं महाघोरां रुक्मदण्डामयस्मयीम् ।
तस्मिन्नेवान्तरे धीमान्प्रजहाराथ राक्षसः ॥ ०६१ ॥

सा भुजं भीमनिर्ह्रादा भित्त्वा भीमस्य दक्षिणम् ।
साग्निज्वाला महारौद्रा पपात सहसा भुवि ॥ ०६२ ॥

सोऽतिविद्धो महेष्वासः शक्त्यामितपराक्रमः ।
गदां जग्राह कौरव्यो गदायुद्धविशारदः ॥ ०६३ ॥

तां प्रगृह्योन्नदन्भीमः सर्वशैक्यायसीं गदाम् ।
तरसा सोऽभिदुद्राव मणिमन्तं महाबलम् ॥ ०६४ ॥

दीप्यमानं महाशूलं प्रगृह्य मणिमानपि ।
प्राहिणोद्भीमसेनाय वेगेन महता नदन् ॥ ०६५ ॥

भङ्क्त्वा शूलं गदाग्रेण गदायुद्धविशारदः ।
अभिदुद्राव तं तूर्णं गरुत्मानिव पन्नगम् ॥ ०६६ ॥

सोऽन्तरिक्षमभिप्लुत्य विधूय सहसा गदाम् ।
प्रचिक्षेप महाबाहुर्विनद्य रणमूर्धनि ॥ ०६७ ॥

सेन्द्राशनिरिवेन्द्रेण विसृष्टा वातरंहसा ।
हत्वा रक्षः क्षितिं प्राप्य कृत्येव निपपात ह ॥ ०६८ ॥

तं राक्षसं भीमबलं भीमसेनेन पातितम् ।
ददृशुः सर्वभूतानि सिंहेनेव गवां पतिम् ॥ ०६९ ॥

तं प्रेक्ष्य निहतं भूमौ हतशेषा निशाचराः ।
भीममार्तस्वरं कृत्वा जग्मुः प्राचीं दिशं प्रति ॥ ०७० ॥

---

# अध्याय १५८

वैशंपायन उवाच ॥

श्रुत्वा बहुविधैः शब्दैर्नाद्यमाना गिरेर्गुहाः ।
अजातशत्रुः कौन्तेयो माद्रीपुत्रावुभावपि ॥ ००१ ॥

धौम्यः कृष्णा च विप्राश्च सर्वे च सुहृदस्तथा ।
भीमसेनमपश्यन्तः सर्वे विमनसोऽभवन् ॥ ००२ ॥

द्रौपदीमार्ष्टिषेणाय प्रदाय तु महारथाः ।
सहिताः सायुधाः शूराः शैलमारुरुहुस्तदा ॥ ००३ ॥

ततः संप्राप्य शैलाग्रं वीक्षमाणा महारथाः ।
ददृशुस्ते महेष्वासा भीमसेनमरिंदमम् ॥ ००४ ॥

स्फुरतश्च महाकायान्गतसत्त्वांश्च राक्षसान् ।
महाबलान्महाघोरान्भीमसेनेन पातितान् ॥ ००५ ॥

शुशुभे स महाबाहुर्गदाखड्गधनुर्धरः ।
निहत्य समरे सर्वान्दानवान्मघवानिव ॥ ००६ ॥

ततस्ते समतिक्रम्य परिष्वज्य वृकोदरम् ।

तत्रोपविविशुः पार्थाः प्राप्ता गतिमनुत्तमाम्  ॥ ००७  ॥

तैश्चतुर्भिर्महेष्वासैर्गिरिश्रृङ्गमशोभत ।
लोकपालैर्महाभागैर्दिवं देववरैरिव  ॥ ००८  ॥

कुबेरसदनं दृष्ट्वा राक्षसांश्च निपातितान् ।
भ्राता भ्रातरमासीनमभ्यभाषत पाण्डवम्  ॥ ००९  ॥

साहसाद्यदि वा मोहाद्भीम पापमिदं कृतम् ।
नैतत्ते सदृशं वीर मुनेरिव मृषावचः  ॥ ०१०  ॥

राजद्विष्टं न कर्तव्यमिति धर्मविदो विदुः ।
त्रिदशानामिदं द्विष्टं भीमसेन त्वया कृतम्  ॥ ०११  ॥

अर्थधर्मावनादृत्य यः पापे कुरुते मनः ।
कर्मणां पार्थ पापानां स फलं विन्दते ध्रुवम्  ॥ ०१२  ॥

पुनरेवं न कर्तव्यं मम चेदिच्छसि प्रियम्  ॥ ०१२  ॥

एवमुक्त्वा स धर्मात्मा भ्राता भ्रातरमच्युतम् ।
अर्थतत्त्वविभागज्ञः कुन्तीपुत्रो युधिष्ठिरः  ॥ ०१३  ॥

विरराम महातेजास्तमेवार्थं विचिन्तयन्  ॥ ०१३  ॥

ततस्तु हतशिष्टा ये भीमसेनेन राक्षसाः ।
सहिताः प्रत्यपद्यन्त कुबेरसदनं प्रति  ॥ ०१४  ॥

ते जवेन महावेगाः प्राप्य वैश्रवणालयम् ।
भीममार्तस्वरं चक्रुर्भीमसेनभयार्दिताः  ॥ ०१५  ॥

न्यस्तशस्त्रायुधाः श्रान्ताः शोणिताक्तपरिच्छदाः ।

प्रकीर्णमूर्धजा राजन्यक्षाधिपतिमब्रुवन् ॥ ०१६ ॥

गदापरिघनिस्त्रिंशतोमरप्रासयोधिनः ।
राक्षसा निहताः सर्वे तव देव पुरःसराः ॥ ०१७ ॥

प्रमृद्य तरसा शैलं मानुषेण धनेश्वर ।
एकेन सहिताः संख्ये हताः क्रोधवशा गणाः ॥ ०१८ ॥

प्रवरा रक्षसेन्द्राणां यक्षाणां च धनाधिप ।
शेरते निहता देव गतसत्त्वाः परासवः ॥ ०१९ ॥

लब्धः शैलो वयं मुक्ता मणिमांस्ते सखा हतः ।
मानुषेण कृतं कर्म विधत्स्व यदनन्तरम् ॥ ०२० ॥

स तच्छ्रुत्वा तु सङ्क्रुद्धः सर्वयक्षगणाधिपः ।
कोपसंरक्तनयनः कथमित्यब्रवीद्वचः ॥ ०२१ ॥

द्वितीयमपराध्यन्तं भीमं श्रुत्वा धनेश्वरः ।
चुक्रोध यक्षाधिपतिर्युज्यतामिति चाब्रवीत् ॥ ०२२ ॥

अथाभ्रघनसङ्काशं गिरिकूटमिवोच्छ्रितम् ।
हयैः संयोजयामासुर्गान्धर्वैरुत्तमं रथम् ॥ ०२३ ॥

तस्य सर्वगुणोपेता विमलाक्षा हयोत्तमाः ।
तेजोबलजवोपेता नानारत्नविभूषिताः ॥ ०२४ ॥

शोभमाना रथे युक्तास्तरिष्यन्त इवाशुगाः ।
हर्षयामासुरन्योन्यमिङ्गितैर्विजयावहैः ॥ ०२५ ॥

स तमास्थाय भगवान्राजराजो महारथम् ।
प्रययौ देवगन्धर्वैः स्तूयमानो महाद्युतिः ॥ ०२६ ॥

तं प्रयान्तं महात्मानं सर्वयक्षधनाधिपम् ।
रक्ताक्षा हेमसङ्काशा महाकाया महाबलाः ॥ ०२७ ॥

सायुधा बद्धनिस्त्रिंशा यक्षा दशशतायुताः ।
जवेन महता वीराः परिवार्योपतस्थिरे ॥ ०२८ ॥

तं महान्तमुपायान्तं धनेश्वरमुपान्तिके ।
ददृशुर्हृष्टरोमाणः पाण्डवाः प्रियदर्शनम् ॥ ०२९ ॥

कुबेरस्तु महासत्त्वान्पाण्डोः पुत्रान्महारथान् ।
आत्तकार्मुकनिस्त्रिंशान्दृष्ट्वा प्रीतोऽभवत्तदा ॥ ०३० ॥

ते पक्षिण इवोत्पत्य गिरेः शृङ्गं महाजवाः ।
तस्थुस्तेषां समभ्याशे धनेश्वरपुरःसराः ॥ ०३१ ॥

ततस्तं हृष्टमनसं पाण्डवान्प्रति भारत ।
समीक्ष्य यक्षगन्धर्वा निर्विकारा व्यवस्थिताः ॥ ०३२ ॥

पाण्डवाश्च महात्मानः प्रणम्य धनदं प्रभुम् ।
नकुलः सहदेवश्च धर्मपुत्रश्च धर्मवित् ॥ ०३३ ॥

अपराद्धमिवात्मानं मन्यमाना महारथाः ।
तस्थुः प्राञ्जलयः सर्वे परिवार्य धनेश्वरम् ॥ ०३४ ॥

शय्यासनवरं श्रीमत्पुष्पकं विश्वकर्मणा ।
विहितं चित्रपर्यन्तमातिष्ठत धनाधिपः ॥ ०३५ ॥

तमासीनं महाकायाः शङ्कुकर्णा महाजवाः ।
उपोपविविशुर्यक्षा राक्षसाश्च सहस्रशः ॥ ०३६ ॥

शतशश्चापि गन्धर्वास्तथैवाप्सरसां गणाः ।
परिवार्योपतिष्ठन्त यथा देवाः शतक्रतुम् ॥ ०३७ ॥

काञ्चनीं शिरसा बिभ्रद्भीमसेनः स्रजं शुभाम् ।
बाणखड्गधनुष्पाणिरुदैक्षत धनाधिपम् ॥ ०३८ ॥

न भीर्भीमस्य न ग्लानिर्विक्षतस्यापि राक्षसैः ।
आसीत्तस्यामवस्थायां कुबेरमपि पश्यतः ॥ ०३९ ॥

आददानं शितान्बाणान्योद्धुकाममवस्थितम् ।
दृष्ट्वा भीमं धर्मसुतमब्रवीन्नरवाहनः ॥ ०४० ॥

विदुस्त्वां सर्वभूतानि पार्थ भूतहिते रतम् ।
निर्भयश्चापि शैलाग्रे वस त्वं सह बन्धुभिः ॥ ०४१ ॥

न च मन्युस्त्वया कार्यो भीमसेनस्य पाण्डव ।
कालेनैते हताः पूर्वं निमित्तमनुजस्तव ॥ ०४२ ॥

व्रीडा चात्र न कर्तव्या साहसं यदिदं कृतम् ।
दृष्टश्चापि सुरैः पूर्वं विनाशो यक्षरक्षसाम् ॥ ०४३ ॥

न भीमसेने कोपो मे प्रीतोऽस्मि भरतर्षभ ।
कर्मणानेन भीमस्य मम तुष्टिरभूत्पुरा ॥ ०४४ ॥

एवमुक्त्वा तु राजानं भीमसेनमभाषत ।
नैतन्मनसि मे तात वर्तते कुरुसत्तम ॥ ०४५ ॥

यदिदं साहसं भीम कृष्णार्थे कृतवानसि ॥ ०४५ ॥

मामनादृत्य देवांश्च विनाशं यक्षरक्षसाम् ।
स्वबाहुबलमाश्रित्य तेनाहं प्रीतिमांस्त्वयि ॥ ०४६ ॥

शापादस्मि विनिर्मुक्तो घोरादद्य वृकोदर ॥ ०४६ ॥

अहं पूर्वमगस्त्येन क्रुद्धेन परमर्षिणा ।
शप्तोऽपराधे कस्मिंश्चित्तस्यैषा निष्कृतिः कृता ॥ ०४७ ॥

दृष्टो हि मम सङ्क्लेशः पुरा पाण्डवनन्दन ।
न तवात्रापराधोऽस्ति कथञ्चिदपि शत्रुहन् ॥ ०४८ ॥

युधिष्ठिर उवाच ॥

कथं शप्तोऽसि भगवन्नगस्त्येन महात्मना ।
श्रोतुमिच्छाम्यहं देव तवैतच्छापकारणम् ॥ ०४९ ॥

इदं चाश्चर्यभूतं मे यत्क्रोधात्तस्य धीमतः ।
तदैव त्वं न निर्दग्धः सबलः सपदानुगः ॥ ०५० ॥

वैश्रवण उवाच ॥

देवतानामभून्मन्त्रः कुशवत्यां नरेश्वर ।
वृतस्तत्राहमगमं महापद्मशतैस्त्रिभिः ॥ ०५१ ॥

यक्षाणां घोररूपाणां विविधायुधधारिणाम् ॥ ०५१ ॥

अध्वन्यहमथापश्यमगस्त्यमृषिसत्तमम् ।
उग्रं तपस्तपस्यन्तं यमुनातीरमाश्रितम् ॥ ०५२ ॥

नानापक्षिगणाकीर्णं पुष्पितद्रुमशोभितम् ॥ ०५२ ॥

तमूर्ध्वबाहुं दृष्ट्वा तु सूर्यस्याभिमुखं स्थितम् ।
तेजोराशिं दीप्यमानं हुताशनमिवैधितम् ॥ ०५३ ॥

राक्षसाधिपतिः श्रीमान्मणिमान्नाम मे सखा ।
मौर्ख्यादज्ञानभावाच्च दर्पान्मोहाच्च भारत ॥ ०५४ ॥

न्यष्ठीवदाकाशगतो महर्षेस्तस्य मूर्धनि ॥ ०५४ ॥

स कोपान्मामुवाचेदं दिशः सर्वा दहन्निव ।
मामवज्ञाय दुष्टात्मा यस्मादेष सखा तव ॥ ०५५ ॥

धर्षणां कृतवानेतां पश्यतस्ते धनेश्वर ।
तस्मात्सहैभिः सैन्यैस्ते वधं प्राप्स्यति मानुषात् ॥ ०५६ ॥

त्वं चाप्येभिर्हतैः सैन्यैः क्लेशं प्राप्स्यसि दुर्मते ।
तमेव मानुषं दृष्ट्वा किल्बिषाद्विप्रमोक्ष्यसे ॥ ०५७ ॥

सैन्यानां तु तवैतेषां पुत्रपौत्रबलान्वितम् ।
न शापं प्राप्स्यते घोरं गच्छ तेऽऽज्ञां करिष्यति ॥ ०५८ ॥

एष शापो मया प्राप्तः प्राक्तस्मादृषिसत्तमात् ।
स भीमेन महाराज भ्रात्रा तव विमोक्षितः ॥ ०५९ ॥

---

# अध्याय १५९

वैश्रवण उवाच ॥

युधिष्ठिर धृतिर्दाक्ष्यं देशकालौ पराक्रमः ।
लोकतन्त्रविधानानामेष पञ्चविधो विधिः ॥ ००१ ॥

धृतिमन्तश्च दक्षाश्च स्वे स्वे कर्मणि भारत ।
पराक्रमविधानज्ञा नराः कृतयुगेऽभवन्  ॥ ००२  ॥

धृतिमान्देशकालज्ञः सर्वधर्मविधानवित् ।
क्षत्रियः क्षत्रियश्रेष्ठ पृथिवीमनुशास्ति वै  ॥ ००३  ॥

य एवं वर्तते पार्थ पुरुषः सर्वकर्मसु ।
स लोके लभते वीर यशः प्रेत्य च सद्गतिम्  ॥ ००४  ॥

देशकालान्तरप्रेप्सुः कृत्वा शक्रः पराक्रमम् ।
संप्राप्तस्त्रिदिवे राज्यं वृत्रहा वसुभिः सह  ॥ ००५  ॥

पापात्मा पापबुद्धिर्यः पापमेवानुवर्तते ।
कर्मणामविभागज्ञः प्रेत्य चेह च नश्यति  ॥ ००६  ॥

अकालज्ञः सुदुर्मेधाः कार्याणामविशेषवित् ।
वृथाचारसमारम्भः प्रेत्य चेह च नश्यति  ॥ ००७  ॥

साहसे वर्तमानानां निकृतीनां दुरात्मनाम् ।
सर्वसामर्थ्यलिप्सूनां पापो भवति निश्चयः  ॥ ००८  ॥

अधर्मज्ञोऽवलिप्तश्च बालबुद्धिरमर्षणः ।
निर्भयो भीमसेनोऽयं तं शाधि पुरुषर्षभ  ॥ ००९  ॥

आर्ष्टिषेणस्य राजर्षेः प्राप्य भूयस्त्वमाश्रमम् ।
तामिस्रं प्रथमं पक्षं वीतशोकभयो वस  ॥ ०१०  ॥

अलकाः सह गन्धर्वैर्यक्षैश्च सह राक्षसैः ।
मन्नियुक्ता मनुष्येन्द्र सर्वे च गिरिवासिनः  ॥ ०११  ॥

रक्षन्तु त्वा महाबाहो सहितं द्विजसत्तमैः  ॥ ०११  ॥

साहसेषु च संतिष्ठन्निह शैले वृकोदरः ।
वार्यतां साध्वयं राजंस्त्वया धर्मभृतां वर ॥ ०१२ ॥

इतः परं च राजेन्द्र द्रक्ष्यन्ति वनगोचराः ।
उपस्थास्यन्ति च सदा रक्षिष्यन्ति च सर्वशः ॥ ०१३ ॥

तथैव चान्नपानानि स्वादूनि च बहूनि च ।
उपस्थास्यन्ति वो गृह्य मत्प्रेष्याः पुरुषर्षभ ॥ ०१४ ॥

यथा जिष्णुर्महेन्द्रस्य यथा वायोर्वृकोदरः ।
धर्मस्य त्वं यथा तात योगोत्पन्नो निजः सुतः ॥ ०१५ ॥

आत्मजावात्मसंपन्नौ यमौ चोभौ यथाश्विनोः ।
रक्ष्यास्तद्वन्ममापीह यूयं सर्वे युधिष्ठिर ॥ ०१६ ॥

अर्थतत्त्वविभागज्ञः सर्वधर्मविशेषवित् ।
भीमसेनादवरजः फल्गुनः कुशली दिवि ॥ ०१७ ॥

याः काश्चन मता लोकेष्वग्र्याः परमसंपदः ।
जन्मप्रभृति ताः सर्वाः स्थितास्तात धनञ्जये ॥ ०१८ ॥

दमो दानं बलं बुद्धिर्ह्रीर्धृतिस्तेज उत्तमम् ।
एतान्यपि महासत्त्वे स्थितान्यमिततेजसि ॥ ०१९ ॥

न मोहात्कुरुते जिष्णुः कर्म पाण्डव गर्हितम् ।
न पार्थस्य मृषोक्तानि कथयन्ति नरा नृषु ॥ ०२० ॥

स देवपितृगन्धर्वैः कुरूणां कीर्तिवर्धनः ।
मानितः कुरुतेऽस्त्राणि शक्रसद्मनि भारत ॥ ०२१ ॥

योऽसौ सर्वान्महीपालान्धर्मेण वशमानयत् ।
स शंतनुर्महातेजाः पितुस्तव पितामहः ॥ ०२२ ॥

प्रीयते पार्थ पार्थेन दिवि गाण्डीवधन्वना ॥ ०२२ ॥

सम्यक्चासौ महावीर्यः कुलधुर्य इव स्थितः ।
पितॄन्देवांस्तथा विप्रान्पूजयित्वा महायशाः ॥ ०२३ ॥

सप्त मुख्यान्महामेधानाहरद्यमुनां प्रति ॥ ०२३ ॥

अधिराजः स राजंस्त्वां शंतनुः प्रपितामहः ।
स्वर्गजिच्छक्रलोकस्थः कुशलं परिपृच्छति ॥ ०२४ ॥

वैशंपायन उवाच ॥

ततः शक्तिं गदां खड्गं धनुश्च भरतर्षभ ।
प्राध्वं कृत्वा नमश्चक्रे कुबेराय वृकोदरः ॥ ०२५ ॥

ततोऽब्रवीद्धनाध्यक्षः शरण्यः शरणागतम् ।
मानहा भव शत्रूणां सुहृदां नन्दिवर्धनः ॥ ०२६ ॥

स्वेषु वेश्मसु रम्येषु वसतामित्रतापनाः ।
कामानुपहरिष्यन्ति यक्षा वो भरतर्षभाः ॥ ०२७ ॥

शीघ्रमेव गुडाकेशः कृतास्त्रः पुरुषर्षभः ।
साक्षान्मघवता सृष्टः संप्राप्स्यति धनञ्जयः ॥ ०२८ ॥

एवमुत्तमकर्माणमनुशिष्य युधिष्ठिरम् ।
अस्तं गिरिवरश्रेष्ठं प्रययौ गुह्यकाधिपः ॥ ०२९ ॥

तं परिस्तोमसङ्कीर्णैर्नानारत्नविभूषितैः ।

यानैरनुययुर्यक्षा राक्षसाश्च सहस्रशः ॥ ०३० ॥

पक्षिणामिव निर्घोषः कुबेरसदनं प्रति ।
बभूव परमाश्वानामैरावतपथे यताम् ॥ ०३१ ॥

ते जग्मुस्तूर्णमाकाशं धनाधिपतिवाजिनः ।
प्रकर्षन्त इवाभ्राणि पिबन्त इव मारुतम् ॥ ०३२ ॥

ततस्तानि शरीराणि गतसत्त्वानि रक्षसाम् ।
अपाकृष्यन्त शैलाग्राद्धनाधिपतिशासनात् ॥ ०३३ ॥

तेषां हि शापकालोऽसौ कृतोऽगस्त्येन धीमता ।
समरे निहतास्तस्मात्सर्वे मणिमता सह ॥ ०३४ ॥

पाण्डवास्तु महात्मानस्तेषु वेश्मसु तां क्षपाम् ।
सुखमूषुर्गतोद्वेगाः पूजिताः सर्वराक्षसैः ॥ ०३५ ॥

---

# अध्याय १६०

वैशंपायन उवाच ॥

ततः सूर्योदये धौम्यः कृत्वाह्निकमरिंदम ।
आर्ष्टिषेणेन सहितः पाण्डवानभ्यवर्तत ॥ ००१ ॥

तेऽभिवाद्यार्ष्टिषेणस्य पादौ धौम्यस्य चैव ह ।
ततः प्राञ्जलयः सर्वे ब्राह्मणांस्तानपूजयन् ॥ ००२ ॥

ततो युधिष्ठिरं धौम्यो गृहीत्वा दक्षिणे करे ।
प्राचीं दिशमभिप्रेक्ष्य महर्षिरिदमब्रवीत्  ॥ ००३  ॥

असौ सागरपर्यन्तां भूमिमावृत्य तिष्ठति ।
शैलराजो महाराज मन्दरोऽभिविराजते  ॥ ००४  ॥

इन्द्रवैश्रवणावेतां दिशं पाण्डव रक्षतः ।
पर्वतैश्च वनान्तैश्च काननैश्चोपशोभिताम्  ॥ ००५  ॥

एतदाहुर्महेन्द्रस्य राज्ञो वैश्रवणस्य च ।
ऋषयः सर्वधर्मज्ञाः सद्म तात मनीषिणः  ॥ ००६  ॥

अतश्चोद्यन्तमादित्यमुपतिष्ठन्ति वै प्रजाः ।
ऋषयश्चापि धर्मज्ञाः सिद्धाः साध्याश्च देवताः  ॥ ००७  ॥

यमस्तु राजा धर्मात्मा सर्वप्राणभृतां प्रभुः ।
प्रेतसत्त्वगतीमेतां दक्षिणामाश्रितो दिशम्  ॥ ००८  ॥

एतत्संयमनं पुण्यमतीवाद्भुतदर्शनम् ।
प्रेतराजस्य भवनमृद्ध्या परमया युतम्  ॥ ००९  ॥

यं प्राप्य सविता राजन्सत्येन प्रतितिष्ठति ।
अस्तं पर्वतराजानमेतमाहुर्मनीषिणः  ॥ ०१०  ॥

एतं पर्वतराजानं समुद्रं च महोदधिम् ।
आवसन्वरुणो राजा भूतानि परिरक्षति  ॥ ०११  ॥

उदीचीं दीपयन्नेष दिशं तिष्ठति कीर्तिमान् ।
महामेरुर्महाभाग शिवो ब्रह्मविदां गतिः  ॥ ०१२  ॥

यस्मिन्ब्रह्मसदश्चैव तिष्ठते च प्रजापतिः ।

भूतात्मा विसृजन्सर्वं यत्किञ्चिज्जङ्गमागमम्  ॥ ०१३  ॥

यानाहुर्ब्रह्मणः पुत्रान्मानसान्दक्षसप्तमान् ।
तेषामपि महामेरुः स्थानं शिवमनामयम्  ॥ ०१४  ॥

अत्रैव प्रतितिष्ठन्ति पुनरत्रोदयन्ति च ।
सप्त देवर्षयस्तात वसिष्ठप्रमुखाः सदा  ॥ ०१५  ॥

देशं विरजसं पश्य मेरोः शिखरमुत्तमम् ।
यत्रात्मतृप्तैरध्यास्ते देवैः सह पितामहः  ॥ ०१६  ॥

यमाहुः सर्वभूतानां प्रकृतेः प्रकृतिं ध्रुवम् ।
अनादिनिधनं देवं प्रभुं नारायणं परम्  ॥ ०१७  ॥

ब्रह्मणः सदनात्तस्य परं स्थानं प्रकाशते ।
देवाश्च यत्नात्पश्यन्ति दिव्यं तेजोमयं शिवम्  ॥ ०१८  ॥

अत्यर्कानलदीप्तं तत्स्थानं विष्णोर्महात्मनः ।
स्वयैव प्रभया राजन्दुष्प्रेक्ष्यं देवदानवैः  ॥ ०१९  ॥

तद्वै ज्योतींषि सर्वाणि प्राप्य भासन्ति नोऽपि च ।
स्वयं विभुरदीनात्मा तत्र ह्यभिविराजते  ॥ ०२०  ॥

यतयस्तत्र गच्छन्ति भक्त्या नारायणं हरिम् ।
परेण तपसा युक्ता भाविताः कर्मभिः शुभैः  ॥ ०२१  ॥

योगसिद्धा महात्मानस्तमोमोहविवर्जिताः ।
तत्र गत्वा पुनर्नेमं लोकमायान्ति भारत  ॥ ०२२  ॥

स्थानमेतन्महाभाग ध्रुवमक्षयमव्ययम् ।
ईश्वरस्य सदा ह्येतत्प्रणमात्र युधिष्ठिर  ॥ ०२३  ॥

एतं ज्योतींषि सर्वाणि प्रकर्षन्भगवानपि ।
कुरुते वितमस्कर्मा आदित्योऽभिप्रदक्षिणम्  ॥ ०२४  ॥

अस्तं प्राप्य ततः संध्यामतिक्रम्य दिवाकरः ।
उदीचीं भजते काष्ठां दिशमेष विभावसुः  ॥ ०२५  ॥

स मेरुमनुवृत्तः सन्पुनर्गच्छति पाण्डव ।
प्राङ्मुखः सविता देवः सर्वभूतहिते रतः  ॥ ०२६  ॥

स मासं विभजन्कालं बहुधा पर्वसंधिषु ।
तथैव भगवान्सोमो नक्षत्रैः सह गच्छति  ॥ ०२७  ॥

एवमेष परिक्रम्य महामेरुमतन्द्रितः ।
भावयन्सर्वभूतानि पुनर्गच्छति मन्दरम्  ॥ ०२८  ॥

तथा तमिस्रहा देवो मयूखैर्भावयञ्जगत् ।
मार्गमेतदसंबाधमादित्यः परिवर्तते  ॥ ०२९  ॥

सिसृक्षुः शिशिराण्येष दक्षिणां भजते दिशम् ।
ततः सर्वाणि भूतानि कालः शिशिरमृच्छति  ॥ ०३०  ॥

स्थावराणां च भूतानां जङ्गमानां च तेजसा ।
तेजांसि समुपादत्ते निवृत्तः सन्विभावसुः  ॥ ०३१  ॥

ततः स्वेदः क्लमस्तन्द्री ग्लानिश्च भजते नरान् ।
प्राणिभिः सततं स्वप्नो ह्यभीक्ष्णं च निषेव्यते  ॥ ०३२  ॥

एवमेतदनिर्देश्यं मार्गमावृत्य भानुमान् ।
पुनः सृजति वर्षाणि भगवान्भावयन्प्रजाः  ॥ ०३३  ॥

वृष्टिमारुतसंतापैः सुखैः स्थावरजङ्गमान् ।
वर्धयन्सुमहातेजाः पुनः प्रतिनिवर्तते ॥ ०३४ ॥

एवमेष चरन्पार्थ कालचक्रमतन्द्रितः ।
प्रकर्षन्सर्वभूतानि सविता परिवर्तते ॥ ०३५ ॥

संतता गतिरेतस्य नैष तिष्ठति पाण्डव ।
आदायैव तु भूतानां तेजो विसृजते पुनः ॥ ०३६ ॥

विभजन्सर्वभूतानामायुः कर्म च भारत ।
अहोरात्रान्कलाः काष्ठाः सृजत्येष सदा विभुः ॥ ०३७ ॥

---

# अध्याय १६१

वैशंपायन उवाच ॥

तस्मिन्नगेन्द्रे वसतां तु तेषां ; महात्मनां सद्व्रतमास्थितानाम् ।
रतिः प्रमोदश्च बभूव तेषा ;माकाङ्क्षतां दर्शनमर्जुनस्य ॥ ००१ ॥

तान्वीर्ययुक्तान्सुविशुद्धसत्त्वां ;स्तेजस्विनः सत्यधृतिप्रधानान् ।
संप्रीयमाणा बहवोऽभिजग्मु ;र्गन्धर्वसंघाश्च महर्षयश्च ॥ ००२ ॥

तं पादपैः पुष्पधरैरुपेतं ; नगोत्तमं प्राप्य महारथानाम् ।
मनःप्रसादः परमो बभूव ; यथा दिवं प्राप्य मरुद्गणानाम् ॥ ००३ ॥

मयूरहंसस्वननादितानि ; पुष्पोपकीर्णानि महाचलस्य ।
शृङ्गाणि सानूनि च पश्यमाना ; गिरेः परं हर्षमवाप्य तस्थुः ॥ ००४ ॥

साक्षात्कुबेरेण कृताश्च तस्मि ;न्नगोत्तमे संवृतकूलरोधसः ।
कादम्बकारण्डवहंसजुष्टाः ; पद्माकुलाः पुष्करिणीरपश्यन् ॥ ००५ ॥

क्रीडाप्रदेशांश्च समृद्धरूपा ;न्सुचित्रमाल्यावृतजातशोभान् ।
मणिप्रवेकान्सुमनोहरांश्च ; यथा भवेयुर्धनदस्य राज्ञः ॥ ००६ ॥

अनेकवर्णैश्च सुगन्धिभिश्च ; महाद्रुमैः संततमभ्रमालिभिः ।
तपःप्रधानाः सततं चरन्तः ; शृङ्गं गिरेश्चिन्तयितुं न शेकुः ॥ ००७ ॥

स्वतेजसा तस्य नगोत्तमस्य ; महौषधीनां च तथा प्रभावात् ।
विभक्तभावो न बभूव कश्चि ;दहर्निशानां पुरुषप्रवीर ॥ ००८ ॥

यमास्थितः स्थावरजङ्गमानि ; विभावसुर्भावयतेऽमितौजाः ।
तस्योदयं चास्तमयं च वीरा ;स्तत्र स्थितास्ते ददृशुर्नृसिंहाः ॥ ००९ ॥

रवेस्तमिस्रागमनिर्गमांस्ते ; तथोदयं चास्तमयं च वीराः ।
समावृताः प्रेक्ष्य तमोनुदस्य ; गभस्तिजालैः प्रदिशो दिशश्च ॥ ०१० ॥

स्वाध्यायवन्तः सततक्रियाश्च ; धर्मप्रधानाश्च शुचिव्रताश्च ।
सत्ये स्थितास्तस्य महारथस्य ; सत्यव्रतस्यागमनप्रतीक्षाः ॥ ०११ ॥

इहैव हर्षोऽस्तु समागतानां ; क्षिप्रं कृतास्त्रेण धनञ्जयेन ।
इति ब्रुवन्तः परमाशिषस्ते ; पार्थास्तपोयोगपरा बभूवुः ॥ ०१२ ॥

दृष्ट्वा विचित्राणि गिरौ वनानि ; किरीटिनं चिन्तयतामभीक्ष्णम् ।
बभूव रात्रिर्दिवसश्च तेषां ; संवत्सरेणैव समानरूपः ॥ ०१३ ॥

यदैव धौम्यानुमते महात्मा ; कृत्वा जटाः प्रव्रजितः स जिष्णुः ।
तदैव तेषां न बभूव हर्षः ; कुतो रतिस्तद्गतमानसानाम् ॥ ०१४ ॥

भ्रातुर्नियोगात्तु युधिष्ठिरस्य ; वनादसौ वारणमत्तगामी ।
यत्काम्यकात्प्रव्रजितः स जिष्णु ;स्तदैव ते शोकहता बभूवुः ॥ ०१५ ॥

तथा तु तं चिन्तयतां सिताश्व ;मस्त्रार्थिनं वासवमभ्युपेतम् ।
मासोऽथ कृच्छ्रेण तदा व्यतीत ;स्तस्मिन्नगे भारत भारतानाम् ॥ ०१६ ॥

ततः कदाचिद्धरिसंप्रयुक्तं ; महेन्द्रवाहं सहसोपयातम् ।
विद्युत्प्रभं प्रेक्ष्य महारथानां ; हर्षोऽर्जुनं चिन्तयतां बभूव ॥ ०१७ ॥

स दीप्यमानः सहसान्तरिक्षं ; प्रकाशयन्मातलिसङ्गृहीतः ।
बभौ महोल्केव घनान्तरस्था ; शिखेव चाग्नेर्ज्वलिता विधूमा ॥ ०१८ ॥

तमास्थितः संददृशे किरीटी ; स्रग्वी वराण्याभरणानि बिभ्रत् ।
धनञ्जयो वज्रधरप्रभावः ; श्रिया ज्वलन्पर्वतमाजगाम ॥ ०१९ ॥

स शैलमासाद्य किरीटमाली ; महेन्द्रवाहादवरुह्य तस्मात् ।
धौम्यस्य पादावभिवाद्य पूर्व ;मजातशत्रोस्तदनन्तरं च ॥ ०२० ॥

वृकोदरस्यापि ववन्द पादौ ; माद्रीसुताभ्यामभिवादितश्च ।
समेत्य कृष्णां परिसान्त्व्य चैनां ; प्रह्वोऽभवद्भ्रातुरुपह्वरे सः ॥ ०२१ ॥

बभूव तेषां परमः प्रहर्ष ;स्तेनाप्रमेयेण समागतानाम् ।
स चापि तान्प्रेक्ष्य किरीटमाली ; ननन्द राजानमभिप्रशंसन् ॥ ०२२ ॥

यमास्थितः सप्त जघान पूगा ;न्दितेः सुतानां नमुचेर्निहन्ता ।
तमिन्द्रवाहं समुपेत्य पार्थाः ; प्रदक्षिणं चक्रुरदीनसत्त्वाः ॥ ०२३ ॥

ते मातलेश्चक्रुरतीव हृष्टाः ; सत्कारमग्र्यं सुरराजतुल्यम् ।
सर्वं यथावच्च दिवौकसस्ता ;न्पप्रच्छुरेनं कुरुराजपुत्राः ॥ ०२४ ॥

तानप्यसौ मातलिरभ्यनन्द ;त्पितेव पुत्राननुशिष्य चैनान् ।

ययौ रथेनाप्रतिमप्रभेण ; पुनः सकाशं त्रिदिवेश्वरस्य ॥ ०२५ ॥

गते तु तस्मिन्वरदेववाहे ; शक्रात्मजः सर्वरिपुप्रमाथी ।
शक्रेण दत्तानि ददौ महात्मा ; महाधनान्युत्तमरूपवन्ति ॥ ०२६ ॥

दिवाकराभाणि विभूषणानि ; प्रीतः प्रियायै सुतसोममात्रे ॥ ०२६ ॥

ततः स तेषां कुरुपुङ्गवानां ; तेषां च सूर्याग्निसमप्रभाणाम् ।
विप्रर्षभाणामुपविश्य मध्ये ; सर्वं यथावत्कथयां बभूव ॥ ०२७ ॥

एवं मयास्त्राण्युपशिक्षितानि ; शक्राच्च वाताच्च शिवाच्च साक्षात् ।
तथैव शीलेन समाधिना च ; प्रीताः सुरा मे सहिताः सहेन्द्राः ॥ ०२८ ॥

सङ्क्षेपतो वै स विशुद्धकर्मा ; तेभ्यः समाख्याय दिवि प्रवेशम् ।
माद्रीसुताभ्यां सहितः किरीटी ; सुष्वाप तामावसतिं प्रतीतः ॥ ०२९ ॥

---

# अध्याय १६२

वैशंपायन उवाच ॥

एतस्मिन्नेव काले तु सर्ववादित्रनिस्वनः ।
बभूव तुमुलः शब्दस्त्वन्तरिक्षे दिवौकसाम् ॥ ००१ ॥

रथनेमिस्वनश्चैव घण्टाशब्दश्च भारत ।
पृथग्व्यालमृगाणां च पक्षिणां चैव सर्वशः ॥ ००२ ॥

तं समन्तादनुययुर्गन्धर्वाप्सरसस्तथा ।

विमानैः सूर्यसङ्काशैर्देवराजमरिंदमम् ॥ ००३ ॥

ततः स हरिभिर्युक्तं जाम्बूनदपरिष्कृतम् ।
मेघनादिनमारुह्य श्रिया परमया ज्वलन् ॥ ००४ ॥

पार्थानभ्याजगामाशु देवराजः पुरंदरः ।
आगत्य च सहस्राक्षो रथादवरुरोह वै ॥ ००५ ॥

तं दृष्ट्वैव महात्मानं धर्मराजो युधिष्ठिरः ।
भ्रातृभिः सहितः श्रीमान्देवराजमुपागमत् ॥ ००६ ॥

पूजयामास चैवाथ विधिवद्भूरिदक्षिणः ।
यथार्हममितात्मानं विधिदृष्टेन कर्मणा ॥ ००७ ॥

धनञ्जयश्च तेजस्वी प्रणिपत्य पुरंदरम् ।
भृत्यवत्प्रणतस्तस्थौ देवराजसमीपतः ॥ ००८ ॥

आप्यायत महातेजाः कुन्तीपुत्रो युधिष्ठिरः ।
धनञ्जयमभिप्रेक्ष्य विनीतं स्थितमन्तिके ॥ ००९ ॥

जटिलं देवराजस्य तपोयुक्तमकल्मषम् ।
हर्षेण महताविष्टः फल्गुनस्याथ दर्शनात् ॥ ०१० ॥

तं तथादीनमनसं राजानं हर्षसंप्लुतम् ।
उवाच वचनं धीमान्देवराजः पुरंदरः ॥ ०११ ॥

त्वमिमां पृथिवीं राजन्प्रशासिष्यसि पाण्डव ।
स्वस्ति प्राप्नुहि कौन्तेय काम्यकं पुनराश्रमम् ॥ ०१२ ॥

अस्त्राणि लब्धानि च पाण्डवेन; सर्वाणि मत्तः प्रयतेन राजन् ।
कृतप्रियश्चास्मि धनञ्जयेन; जेतुं न शक्यस्त्रिभिरेष लोकैः ॥ ०१३ ॥

एवमुक्त्वा सहस्राक्षः कुन्तीपुत्रं युधिष्ठिरम् ।
जगाम त्रिदिवं हृष्टः स्तूयमानो महर्षिभिः ॥ ०१४ ॥

धनेश्वरगृहस्थानां पाण्डवानां समागमम् ।
शक्रेण य इमं विद्वानधीयीत समाहितः ॥ ०१५ ॥

संवत्सरं ब्रह्मचारी नियतः संशितव्रतः ।
स जीवेत निराबाधः सुसुखी शरदां शतम् ॥ ०१६ ॥

---

# अध्याय १६३

वैशंपायन उवाच ॥

यथागतं गते शक्रे भ्रातृभिः सह सङ्गतः ।
कृष्णया चैव बीभत्सुर्धर्मपुत्रमपूजयत् ॥ ००१ ॥

अभिवादयमानं तु मूर्ध्न्युपाघ्राय पाण्डवम् ।
हर्षगद्गदया वाचा प्रहृष्टोऽर्जुनमब्रवीत् ॥ ००२ ॥

कथमर्जुन कालोऽयं स्वर्गे व्यतिगतस्तव ।
कथं चास्त्राण्यवाप्तानि देवराजश्च तोषितः ॥ ००३ ॥

सम्यग्वा ते गृहीतानि कच्चिदस्त्राणि भारत ।
कच्चित्सुराधिपः प्रीतो रुद्रश्चास्त्राण्यदात्तव ॥ ००४ ॥

यथा दृष्टश्च ते शक्रो भगवान्वा पिनाकधृक् ।
यथा चास्त्राण्यवाप्तानि यथा चाराधितश्च ते ॥ ००५ ॥

यथोक्तवांस्त्वां भगवाञ्शतक्रतुररिंदम ।
कृतप्रियस्त्वयास्मीति तच्च ते किं प्रियं कृतम् ॥ ००६ ॥

एतदिच्छाम्यहं श्रोतुं विस्तरेण महाद्युते ॥ ००६ ॥

यथा तुष्टो महादेवो देवराजश्च तेऽनघ ।
यच्चापि वज्रपाणेस्ते प्रियं कृतमरिंदम ॥ ००७ ॥

एतदाख्याहि मे सर्वमखिलेन धनञ्जय ॥ ००७ ॥

अर्जुन उवाच ॥

शृणु हन्त महाराज विधिना येन दृष्टवान् ।
शतक्रतुमहं देवं भगवन्तं च शङ्करम् ॥ ००८ ॥

विद्यामधीत्य तां राजंस्त्वयोक्तामरिमर्दन ।
भवता च समादिष्टस्तपसे प्रस्थितो वनम् ॥ ००९ ॥

भृगुतुङ्गमथो गत्वा काम्यकादास्थितस्तपः ।
एकरात्रोषितः कश्चिदपश्यं ब्राह्मणं पथि ॥ ०१० ॥

स मामपृच्छत्कौन्तेय क्वासि गन्ता ब्रवीहि मे ।
तस्मा अवितथं सर्वमब्रुवं कुरुनन्दन ॥ ०११ ॥

स तथ्यं मम तच्छ्रुत्वा ब्राह्मणो राजसत्तम ।
अपूजयत मां राजन्प्रीतिमांश्चाभवन्मयि ॥ ०१२ ॥

ततो मामब्रवीत्प्रीतस्तप आतिष्ठ भारत ।
तपस्वी नचिरेण त्वं द्रक्ष्यसे विबुधाधिपम् ॥ ०१३ ॥

ततोऽहं वचनात्तस्य गिरिमारुह्य शैशिरम् ।
तपोऽतप्यं महाराज मासं मूलफलाशनः ॥ ०१४ ॥

द्वितीयश्चापि मे मासो जलं भक्षयतो गतः ।
निराहारस्तृतीयेऽथ मासे पाण्डवनन्दन ॥ ०१५ ॥

ऊर्ध्वबाहुश्चतुर्थं तु मासमस्मि स्थितस्तदा ।
न च मे हीयते प्राणस्तदद्भुतमिवाभवत् ॥ ०१६ ॥

चतुर्थे समभिक्रान्ते प्रथमे दिवसे गते ।
वराहसंस्थितं भूतं मत्समीपमुपागमत् ॥ ०१७ ॥

निघ्नन्प्रोथेन पृथिवीं विलिखंश्चरणैरपि ।
संमार्जञ्जठरेणोर्वीं विवर्तंश्च मुहुर्मुहुः ॥ ०१८ ॥

अनु तस्यापरं भूतं महत्कैरातसंस्थितम् ।
धनुर्बाणासिमत्प्राप्तं स्त्रीगणानुगतं तदा ॥ ०१९ ॥

ततोऽहं धनुरादाय तथाक्षय्यौ महेषुधी ।
अताडयं शरेणाथ तद्भूतं लोमहर्षणम् ॥ ०२० ॥

युगपत्तत्किरातश्च विकृष्य बलवद्धनुः ।
अभ्याजघ्ने दृढतरं कम्पयन्निव मे मनः ॥ ०२१ ॥

स तु मामब्रवीद्राजन्मम पूर्वपरिग्रहः ।
मृगयाधर्ममुत्सृज्य किमर्थं ताडितस्त्वया ॥ ०२२ ॥

एष ते निशितैर्बाणैर्दर्पं हन्मि स्थिरो भव ।
स वर्ष्मवान्महाकायस्ततो मामभ्यधावत ॥ ०२३ ॥

ततो गिरिमिवात्यर्थमावृणोन्मां महाशरैः ।

तं चाहं शरवर्षेण महता समवाकिरम्  ॥ ०२४  ॥

ततः शरैर्दीप्तमुखैः पत्रितैरनुमन्त्रितैः ।
प्रत्यविध्यमहं तं तु वज्रैरिव शिलोच्चयम्  ॥ ०२५  ॥

तस्य तच्छतधा रूपमभवच्च सहस्रधा ।
तानि चास्य शरीराणि शरैरहमताडयम्  ॥ ०२६  ॥

पुनस्तानि शरीराणि एकीभूतानि भारत ।
अदृश्यन्त महाराज तान्यहं व्यधमं पुनः  ॥ ०२७  ॥

अणुर्बृहच्छिरा भूत्वा बृहच्चाणुशिराः पुनः ।
एकीभूतस्तदा राजन्सोऽभ्यवर्तत मां युधि  ॥ ०२८  ॥

यदाभिभवितुं बाणैर्नैव शक्नोमि तं रणे ।
ततोऽहमस्त्रमातिष्ठं वायव्यं भरतर्षभ  ॥ ०२९  ॥

न चैनमशकं हन्तुं तदद्भुतमिवाभवत् ।
तस्मिन्प्रतिहते चास्त्रे विस्मयो मे महानभूत्  ॥ ०३०  ॥

भूयश्चैव महाराज सविशेषमहं ततः ।
अस्त्रपूगेन महता रणे भूतमवाकिरम्  ॥ ०३१  ॥

स्थूणाकर्णमयोजालं शरवर्षं शरोल्बणम् ।
शैलास्त्रमश्मवर्षं च समास्थायाहमभ्ययाम्  ॥ ०३२  ॥

जग्रास प्रहसंस्तानि सर्वाण्यस्त्राणि मेऽनघ  ॥ ०३२  ॥

तेषु सर्वेषु शान्तेषु ब्रह्मास्त्रमहमादिशम् ।
ततः प्रज्वलितैर्बाणैः सर्वतः सोपचीयत  ॥ ०३३  ॥

उपचीयमानश्च मया महास्त्रेण व्यवर्धत ॥ ०३३ ॥

ततः संतापितो लोको मत्प्रसूतेन तेजसा ।
क्षणेन हि दिशः खं च सर्वतोऽभिविदीपितम् ॥ ०३४ ॥

तदप्यस्त्रं महातेजाः क्षणेनैव व्यशातयत् ।
ब्रह्मास्त्रे तु हते राजन्भयं मां महदाविशत् ॥ ०३५ ॥

ततोऽहं धनुरादाय तथाक्षय्यौ महेषुधी ।
सहसाभ्यहनं भूतं तान्यप्यस्त्राण्यभक्षयत् ॥ ०३६ ॥

हतेष्वस्त्रेषु सर्वेषु भक्षितेष्वायुधेषु च ।
मम तस्य च भूतस्य बाहुयुद्धमवर्तत ॥ ०३७ ॥

व्यायामं मुष्टिभिः कृत्वा तलैरपि समाहतौ ।
अपातयच्च तद्भूतं निश्चेष्टो ह्यगमं महीम् ॥ ०३८ ॥

ततः प्रहस्य तद्भूतं तत्रैवान्तरधीयत ।
सह स्त्रीभिर्महाराज पश्यतो मेऽद्भुतोपमम् ॥ ०३९ ॥

एवं कृत्वा स भगवांस्ततोऽन्यद्रूपमात्मनः ।
दिव्यमेव महाराज वसानोऽद्भुतमम्बरम् ॥ ०४० ॥

हित्वा किरातरूपं च भगवांस्त्रिदशेश्वरः ।
स्वरूपं दिव्यमास्थाय तस्थौ तत्र महेश्वरः ॥ ०४१ ॥

अदृश्यत ततः साक्षाद्भगवान्गोवृषध्वजः ।
उमासहायो हरिदृग्बहुरूपः पिनाकधृक् ॥ ०४२ ॥

स मामभ्येत्य समरे तथैवाभिमुखं स्थितम् ।
शूलपाणिरथोवाच तुष्टोऽस्मीति परंतप ॥ ०४३ ॥

ततस्तद्धनुरादाय तूणौ चाक्षय्यसायकौ ।
प्रादान्ममैव भगवान्वरयस्वेति चाब्रवीत् ॥ ०४४ ॥

तुष्टोऽस्मि तव कौन्तेय ब्रूहि किं करवाणि ते ।
यत्ते मनोगतं वीर तद्ब्रूहि वितराम्यहम् ॥ ०४५ ॥

अमरत्वमपाहाय ब्रूहि यत्ते मनोगतम् ॥ ०४५ ॥

ततः प्राञ्जलिरेवाहमस्त्रेषु गतमानसः ।
प्रणम्य शिरसा शर्वं ततो वचनमाददे ॥ ०४६ ॥

भगवान्मे प्रसन्नश्चेदीप्सितोऽयं वरो मम ।
अस्त्राणीच्छाम्यहं ज्ञातुं यानि देवेषु कानिचित् ॥ ०४७ ॥

ददानीत्येव भगवानब्रवीत्त्र्यम्बकश्च माम् ॥ ०४७ ॥

रौद्रमस्त्रं मदीयं त्वामुपस्थास्यति पाण्डव ।
प्रददौ च मम प्रीतः सोऽस्त्रं पाशुपतं प्रभुः ॥ ०४८ ॥

उवाच च महादेवो दत्त्वा मेऽस्त्रं सनातनम् ।
न प्रयोज्यं भवेदेतन्मानुषेषु कथञ्चन ॥ ०४९ ॥

पीड्यमानेन बलवत्प्रयोज्यं ते धनञ्जय ।
अस्त्राणां प्रतिघाते च सर्वथैव प्रयोजयेः ॥ ०५० ॥

तदप्रतिहतं दिव्यं सर्वास्त्रप्रतिषेधनम् ।
मूर्तिमन्मे स्थितं पार्श्वे प्रसन्ने गोवृषध्वजे ॥ ०५१ ॥

उत्सादनममित्राणां परसेनानिकर्तनम् ।
दुरासदं दुष्प्रहसं सुरदानवराक्षसैः ॥ ०५२ ॥

अनुज्ञातस्त्वहं तेन तत्रैव समुपाविशम् ।
प्रेक्षतश्चैव मे देवस्तत्रैवान्तरधीयत ॥ ०५३ ॥

---

# अध्याय १६४

अर्जुन उवाच ॥

ततस्तामवसं प्रीतो रजनीं तत्र भारत ।
प्रसादाद्देवदेवस्य त्र्यम्बकस्य महात्मनः ॥ ००१ ॥

व्युषितो रजनीं चाहं कृत्वा पूर्वाह्णिकक्रियाम् ।
अपश्यं तं द्विजश्रेष्ठं दृष्टवानस्मि यं पुरा ॥ ००२ ॥

तस्मै चाहं यथावृत्तं सर्वमेव न्यवेदयम् ।
भगवन्तं महादेवं समेतोऽस्मीति भारत ॥ ००३ ॥

स मामुवाच राजेन्द्र प्रीयमाणो द्विजोत्तमः ।
दृष्टस्त्वया महादेवो यथा नान्येन केनचित् ॥ ००४ ॥

समेत्य लोकपालैस्तु सर्वैर्वैवस्वतादिभिः ।
द्रष्टास्यनघ देवेन्द्रं स च तेऽस्त्राणि दास्यति ॥ ००५ ॥

एवमुक्त्वा स मां राजन्नाश्लिष्य च पुनः पुनः ।
अगच्छत्स यथाकामं ब्राह्मणः सूर्यसंनिभः ॥ ००६ ॥

अथापराह्णे तस्याह्नः प्रावात्पुण्यः समीरणः ।
पुनर्नवमिमं लोकं कुर्वन्निव सपत्नहन् ॥ ००७ ॥

दिव्यानि चैव माल्यानि सुगन्धीनि नवानि च ।
शैशिरस्य गिरेः पादे प्रादुरासन्समीपतः  ॥ ००८  ॥

वादित्राणि च दिव्यानि सुघोषाणि समन्ततः ।
स्तुतयश्चेन्द्रसंयुक्ता अश्रूयन्त मनोहराः  ॥ ००९  ॥

गणाश्चाप्सरसां तत्र गन्धर्वाणां तथैव च ।
पुरस्ताद्देवदेवस्य जगुर्गीतानि सर्वशः  ॥ ०१०  ॥

मरुतां च गणास्तत्र देवयानैरुपागमन् ।
महेन्द्रानुचरा ये च देवसद्मनिवासिनः  ॥ ०११  ॥

ततो मरुत्वान्हरिभिर्युक्तैर्वाहैः स्वलङ्कृतैः ।
शचीसहायस्तत्रायात्सह सर्वैस्तदामरैः  ॥ ०१२  ॥

एतस्मिन्नेव काले तु कुबेरो नरवाहनः ।
दर्शयामास मां राज.ण्लक्ष्म्या परमया युतः  ॥ ०१३  ॥

दक्षिणस्यां दिशि यमं प्रत्यपश्यं व्यवस्थितम् ।
वरुणं देवराजं च यथास्थानमवस्थितम्  ॥ ०१४  ॥

ते मामूचुर्महाराज सान्त्वयित्वा सुरर्षभाः ।
सव्यसाचिन्समीक्षस्व लोकपालानवस्थितान्  ॥ ०१५  ॥

सुरकार्यार्थसिद्ध्यर्थं दृष्टवानसि शङ्करम् ।
अस्मत्तोऽपि गृहाण त्वमस्त्राणीति समन्ततः  ॥ ०१६  ॥

ततोऽहं प्रयतो भूत्वा प्रणिपत्य सुरर्षभान् ।
प्रत्यगृह्णं तदास्त्राणि महान्ति विधिवत्प्रभो  ॥ ०१७  ॥

गृहीतास्त्रस्ततो देवैरनुज्ञातोऽस्मि भारत ।
अथ देवा ययुः सर्वे यथागतमरिंदम ॥ ०१८ ॥

मघवानपि देवेशो रथमारुह्य सुप्रभम् ।
उवाच भगवान्वाक्यं स्मयन्निव सुरारिहा ॥ ०१९ ॥

पुरैवागमनादस्माद्वेदाहं त्वां धनञ्जय ।
अतः परं त्वहं वै त्वां दर्शये भरतर्षभ ॥ ०२० ॥

त्वया हि तीर्थेषु पुरा समाप्लावः कृतोऽसकृत् ।
तपश्चेदं पुरा तप्तं स्वर्गं गन्तासि पाण्डव ॥ ०२१ ॥

भूयश्चैव तु तप्तव्यं तपः परमदारुणम् ।
उवाच भगवान्सर्वं तपसश्चोपपादनम् ॥ ०२२ ॥

मातलिर्मन्नियोगात्त्वां त्रिदिवं प्रापयिष्यति ।
विदितस्त्वं हि देवानामृषीणां च महात्मनाम् ॥ ०२३ ॥

ततोऽहमब्रुवं शक्रं प्रसीद भगवन्मम ।
आचार्यं वरये त्वाहमस्त्रार्थं त्रिदशेश्वर ॥ ०२४ ॥

इन्द्र उवाच ॥

क्रूरं कर्मास्त्रवित्तात करिष्यसि परंतप ।
यदर्थमस्त्राणीप्सुस्त्वं तं कामं पाण्डवाप्नुहि ॥ ०२५ ॥

अर्जुन उवाच ॥

ततोऽहमब्रुवं नाहं दिव्यान्यस्त्राणि शत्रुहन् ।
मानुषेषु प्रयोक्ष्यामि विनास्त्रप्रतिघातनम् ॥ ०२६ ॥

तानि दिव्यानि मेऽस्त्राणि प्रयच्छ विबुधाधिप ।
लोकांश्चास्त्रजितान्पश्चाल्लभेयं सुरपुङ्गव ॥ ०२७ ॥

इन्द्र उवाच ॥

परीक्षार्थं मयैतत्ते वाक्यमुक्तं धनञ्जय ।
ममात्मजस्य वचनं सूपपन्नमिदं तव ॥ ०२८ ॥

शिक्ष मे भवनं गत्वा सर्वाण्यस्त्राणि भारत ।
वायोरग्नेर्वसुभ्योऽथ वरुणात्समरुद्गणात् ॥ ०२९ ॥

साध्यं पैतामहं चैव गन्धर्वोरगरक्षसाम् ।
वैष्णवानि च सर्वाणि नैर्ऋतानि तथैव च ॥ ०३० ॥

मद्गतानि च यानीह सर्वास्त्राणि कुरूद्वह ॥ ०३० ॥

अर्जुन उवाच ॥

एवमुक्त्वा तु मां शक्रस्तत्रैवान्तरधीयत ।
अथापश्यं हरियुजं रथमैन्द्रमुपस्थितम् ॥ ०३१ ॥

दिव्यं मायामयं पुण्यं यत्तं मातलिना नृप ॥ ०३१ ॥

लोकपालेषु यातेषु मामुवाचाथ मातलिः ।
द्रष्टुमिच्छति शक्रस्त्वां देवराजो महाद्युते ॥ ०३२ ॥

संसिद्धस्त्वं महाबाहो कुरु कार्यमनुत्तमम् ।
पश्य पुण्यकृतां लोकान्सशरीरो दिवं व्रज ॥ ०३३ ॥

इत्युक्तोऽहं मातलिना गिरिमामन्त्र्य शैशिरम् ।
प्रदक्षिणमुपावृत्य समारोहं रथोत्तमम् ॥ ०३४ ॥

चोदयामास स हयान्मनोमारुतरंहसः ।
मातलिर्हयशास्त्रज्ञो यथावद्भूरिदक्षिणः ॥ ०३५ ॥

अवैक्षत च मे वक्त्रं स्थितस्याथ स सारथिः ।
तथा भ्रान्ते रथे राजन्विस्मितश्चेदमब्रवीत् ॥ ०३६ ॥

अत्यद्भुतमिदं मेऽद्य विचित्रं प्रतिभाति माम् ।
यदास्थितो रथं दिव्यं पदा न चलितो भवान् ॥ ०३७ ॥

देवराजोऽपि हि मया नित्यमत्रोपलक्षितः ।
विचलन्प्रथमोत्पाते हयानां भरतर्षभ ॥ ०३८ ॥

त्वं पुनः स्थित एवात्र रथे भ्रान्ते कुरूद्वह ।
अतिशक्रमिदं सत्त्वं तवेति प्रतिभाति मे ॥ ०३९ ॥

इत्युक्त्वाकाशमाविश्य मातलिर्विबुधालयान् ।
दर्शयामास मे राजन्विमानानि च भारत ॥ ०४० ॥

नन्दनादीनि देवानां वनानि बहुलान्युत ।
दर्शयामास मे प्रीत्या मातलिः शक्रसारथिः ॥ ०४१ ॥

ततः शक्रस्य भवनमपश्यममरावतीम् ।
दिव्यैः कामफलैर्वृक्षै रत्नैश्च समलङ्कृताम् ॥ ०४२ ॥

न तां भासयते सूर्यो न शीतोष्णे न च क्लमः ।
रजः पङ्को न च तमस्तत्रास्ति न जरा नृप ॥ ०४३ ॥

न तत्र शोको दैन्यं वा वैवर्ण्यं चोपलक्ष्यते ।
दिवौकसां महाराज न च ग्लानिररिंदम ॥ ०४४ ॥

न क्रोधलोभौ तत्रास्तामशुभं च विशां पते ।
नित्यतुष्टाश्च हृष्टाश्च प्राणिनः सुरवेश्मनि ॥ ०४५ ॥

नित्यपुष्पफलास्तत्र पादपा हरितच्छदाः ।
पुष्करिण्यश्च विविधाः पद्मसौगन्धिकायुताः ॥ ०४६ ॥

शीतस्तत्र ववौ वायुः सुगन्धो जीवनः शुचिः ।
सर्वरत्नविचित्रा च भूमिः पुष्पविभूषिता ॥ ०४७ ॥

मृगद्विजाश्च बहवो रुचिरा मधुरस्वराः ।
विमानयायिनश्चात्र दृश्यन्ते बहवोऽमराः ॥ ०४८ ॥

ततोऽपश्यं वसून्रुद्रान्साध्यांश्च समरुद्गणान् ।
आदित्यानश्विनौ चैव तान्सर्वान्प्रत्यपूजयम् ॥ ०४९ ॥

ते मां वीर्येण यशसा तेजसा च बलेन च ।
अस्त्रैश्चाप्यन्वजानन्त सङ्ग्रामविजयेन च ॥ ०५० ॥

प्रविश्य तां पुरीं रम्यां देवगन्धर्वसेविताम् ।
देवराजं सहस्राक्षमुपातिष्ठं कृताञ्जलिः ॥ ०५१ ॥

ददावर्धासनं प्रीतः शक्रो मे ददतां वरः ।
बहुमानाच्च गात्राणि पस्पर्श मम वासवः ॥ ०५२ ॥

तत्राहं देवगन्धर्वैः सहितो भुरिदक्षिण ।
अस्त्रार्थमवसं स्वर्गे कुर्वाणोऽस्त्राणि भारत ॥ ०५३ ॥

विश्वावसोश्च मे पुत्रश्चित्रसेनोऽभवत्सखा ।
स च गान्धर्वमखिलं ग्राहयामास मां नृप ॥ ०५४ ॥

ततोऽहमवसं राजन्गृहीतास्त्रः सुपूजितः ।

सुखं शक्रस्य भवने सर्वकामसमन्वितः ॥ ०५५ ॥

शृण्वन्वै गीतशब्दं च तूर्यशब्दं च पुष्कलम् ।
पश्यंश्चाप्सरसः श्रेष्ठा नृत्यमानाः परंतप ॥ ०५६ ॥

तत्सर्वमनवज्ञाय तथ्यं विज्ञाय भारत ।
अत्यर्थं प्रतिगृह्याहमस्त्रेष्वेव व्यवस्थितः ॥ ०५७ ॥

ततोऽतुष्यत्सहस्राक्षस्तेन कामेन मे विभुः ।
एवं मे वसतो राजन्नेष कालोऽत्यगाद्दिवि ॥ ०५८ ॥

---

# अध्याय १६५

अर्जुन उवाच ॥

कृतास्त्रमभिविश्वस्तमथ मां हरिवाहनः ।
संस्पृश्य मूर्ध्नि पाणिभ्यामिदं वचनमब्रवीत् ॥ ००१ ॥

न त्वमद्य युधा जेतुं शक्यः सुरगणैरपि ।
किं पुनर्मानुषे लोके मानुषैरकृतात्मभिः ॥ ००२ ॥

अप्रमेयोऽप्रधृष्यश्च युद्धेष्वप्रतिमस्तथा ॥ ००२ ॥

अथाब्रवीत्पुनर्देवः संप्रहृष्टतनूरुहः ।
अस्त्रयुद्धे समो वीर न ते कश्चिद्भविष्यति ॥ ००३ ॥

अप्रमत्तः सदा दक्षः सत्यवादी जितेन्द्रियः ।
ब्रह्मण्यश्चास्त्रविच्चासि शूरश्चासि कुरूद्वह ॥ ००४ ॥

अस्त्राणि समवाप्तानि त्वया दश च पञ्च च ।
पञ्चभिर्विधिभिः पार्थ न त्वया विद्यते समः ॥ ००५ ॥

प्रयोगमुपसंहारमावृत्तिं च धनञ्जय ।
प्रायश्चित्तं च वेत्थ त्वं प्रतिघातं च सर्वशः ॥ ००६ ॥

तव गुर्वर्थकालोऽयमुपपन्नः परंतप ।
प्रतिजानीष्व तं कर्तुमतो वेत्स्याम्यहं परम् ॥ ००७ ॥

ततोऽहमब्रुवं राजन्देवराजमिदं वचः ।
विषह्यं चेन्मया कर्तुं कृतमेव निबोध तत् ॥ ००८ ॥

ततो मामब्रवीद्राजन्प्रहस्य बलवृत्रहा ।
नाविषह्यं तवाद्यास्ति त्रिषु लोकेषु किञ्चन ॥ ००९ ॥

निवातकवचा नाम दानवा मम शत्रवः ।
समुद्रकुक्षिमाश्रित्य दुर्गे प्रतिवसन्त्युत ॥ ०१० ॥

तिस्रः कोट्यः समाख्यातास्तुल्यरूपबलप्रभाः ।
तांस्तत्र जहि कौन्तेय गुर्वर्थस्ते भविष्यति ॥ ०११ ॥

ततो मातलिसंयुक्तं मयूरसमरोमभिः ।
हयैरुपेतं प्रादान्मे रथं दिव्यं महाप्रभम् ॥ ०१२ ॥

बबन्ध चैव मे मूर्ध्नि किरीटमिदमुत्तमम् ।
स्वरूपसदृशं चैव प्रादादङ्गविभूषणम् ॥ ०१३ ॥

अभेद्यं कवचं चेदं स्पर्शरूपवदुत्तमम् ।
अजरां ज्यामिमां चापि गाण्डीवे समयोजयत् ॥ ०१४ ॥

ततः प्रायामहं तेन स्यन्दनेन विराजता ।
येनाजयद्देवपतिर्बलिं वैरोचनिं पुरा ॥ ०१५ ॥

ततो देवाः सर्व एव तेन घोषेण बोधितः ।
मन्वाना देवराजं मां समाजग्मुर्विशां पते ॥ ०१६ ॥

दृष्ट्वा च मामपृच्छन्त किं करिष्यसि फल्गुन ॥ ०१६ ॥

तानब्रुवं यथाभूतमिदं कर्तास्मि संयुगे ।
निवातकवचानां तु प्रस्थितं मां वधैषिणम् ॥ ०१७ ॥

निबोधत महाभागाः शिवं चाशास्त मेऽनघाः ॥ ०१७ ॥

तुष्टवुर्मां प्रसन्नास्ते यथा देवं पुरंदरम् ।
रथेनानेन मघवा जितवाञ्शम्बरं युधि ॥ ०१८ ॥

नमुचिं बलवृत्रौ च प्रह्लादनरकावपि ॥ ०१८ ॥

बहूनि च सहस्राणि प्रयुतान्यर्बुदानि च ।
रथेनानेन दैत्यानां जितवान्मघवान्युधि ॥ ०१९ ॥

त्वमप्येतेन कौन्तेय निवातकवचान्रणे ।
विजेता युधि विक्रम्य पुरेव मघवान्वशी ॥ ०२० ॥

अयं च शङ्खप्रवरो येन जेतासि दानवान् ।
अनेन विजिता लोकाः शक्रेणापि महात्मना ॥ ०२१ ॥

प्रदीयमानं देवैस्तु देवदत्तं जलोद्भवम् ।
प्रत्यगृह्णं जयायैनं स्तूयमानस्तदामरैः ॥ ०२२ ॥

स शङ्खी कवची बाणी प्रगृहीतशरासनः ।

दानवालयमत्युग्रं प्रयातोऽस्मि युयुत्सया ॥ ०२३ ॥

---

# अध्याय १६६

अर्जुन उवाच ॥

ततोऽहं स्तूयमानस्तु तत्र तत्र महर्षिभिः ।
अपश्यमुदधिं भीममपांपतिमथाव्ययम् ॥ ००१ ॥

फेनवत्यः प्रकीर्णाश्च संहताश्च समुच्छ्रिताः ।
ऊर्मयश्चात्र दृश्यन्ते चलन्त इव पर्वताः ॥ ००२ ॥

नावः सहस्रशस्तत्र रत्नपूर्णाः समन्ततः ॥ ००२ ॥

तिमिङ्गिलाः कच्छपाश्च तथा तिमितिमिङ्गिलाः ।
मकराश्चात्र दृश्यन्ते जले मग्ना इवाद्रयः ॥ ००३ ॥

शङ्खानां च सहस्राणि मग्नान्यप्सु समन्ततः ।
दृश्यन्ते स्म यथा रात्रौ तारास्तन्वभ्रसंवृताः ॥ ००४ ॥

तथा सहस्रशस्तत्र रत्नसंघाः प्लवन्त्युत ।
वायुश्च घूर्णते भीमस्तदद्भुतमिवाभवत् ॥ ००५ ॥

तमतीत्य महावेगं सर्वाम्भोनिधिमुत्तमम् ।
अपश्यं दानवाकीर्णं तद्दैत्यपुरमन्तिकात् ॥ ००६ ॥

तत्रैव मातलिस्तूर्णं निपत्य पृथिवीतले ।
नादयन्रथघोषेण तत्पुरं समुपाद्रवत् ॥ ००७ ॥

रथघोषं तु तं श्रुत्वा स्तनयित्नोरिवाम्बरे ।
मन्वाना देवराजं मां संविग्ना दानवाभवन्  ॥ ००८  ॥

सर्वे संभ्रान्तमनसः शरचापधराः स्थिताः ।
तथा शूलासिपरशुगदामुसलपाणयः  ॥ ००९  ॥

ततो द्वाराणि पिदधुर्दानवास्त्रस्तचेतसः ।
संविधाय पुरे रक्षां न स्म कश्चन दृश्यते  ॥ ०१०  ॥

ततः शङ्खमुपादाय देवदत्तं महास्वनम् ।
पुरमासुरमाश्लिष्य प्राधमं तं शनैरहम्  ॥ ०११  ॥

स तु शब्दो दिवं स्तब्ध्वा प्रतिशब्दमजीजनत् ।
वित्रेसुश्च निलिल्युश्च भूतानि सुमहान्त्यपि  ॥ ०१२  ॥

ततो निवातकवचाः सर्व एव समन्ततः ।
दंशिता विविधैस्त्राणैर्विविधायुधपाणयः  ॥ ०१३  ॥

आयसैश्च महाशूलैर्गदाभिर्मुसलैरपि ।
पट्टिशैः करवालैश्च रथचक्रैश्च भारत  ॥ ०१४  ॥

शतघ्नीभिर्भुशुण्डीभिः खड्गैश्चित्रैः स्वलङ्कृतैः ।
प्रगृहीतैर्दितेः पुत्राः प्रादुरासन्सहस्रशः  ॥ ०१५  ॥

ततो विचार्य बहुधा रथमार्गेषु तान्हयान् ।
प्राचोदयत्समे देशे मातलिर्भरतर्षभ  ॥ ०१६  ॥

तेन तेषां प्रणुन्नानामाशुत्वाच्छीघ्रगामिनाम् ।
नान्वपश्यं तदा किञ्चित्तन्मेऽद्भुतमिवाभवत्  ॥ ०१७  ॥

ततस्ते दानवास्तत्र योधव्रातान्यनेकशः ।
विकृतस्वररूपाणि भृशं सर्वाण्यचोदयन् ॥ ०१८ ॥

तेन शब्देन महता समुद्रे पर्वतोपमाः ।
आप्लवन्त गतैः सत्त्वैर्मत्स्याः शतसहस्रशः ॥ ०१९ ॥

ततो वेगेन महता दानवा मामुपाद्रवन् ।
विमुञ्चन्तः शितान्बाणाञ्शतशोऽथ सहस्रशः ॥ ०२० ॥

स संप्रहारस्तुमुलस्तेषां मम च भारत ।
अवर्तत महाघोरो निवातकवचान्तकः ॥ ०२१ ॥

ततो देवर्षयश्चैव दानवर्षिगणाश्च ये ।
ब्रह्मर्षयश्च सिद्धाश्च समाजग्मुर्महामृधे ॥ ०२२ ॥

ते वै मामनुरूपाभिर्मधुराभिर्जयैषिणः ।
अस्तुवन्मुनयो वाग्भिर्यथेन्द्रं तारकामये ॥ ०२३ ॥

---

# अध्याय १६७

अर्जुन उवाच ॥

ततो निवातकवचाः सर्वे वेगेन भारत ।
अभ्यद्रवन्मां सहिताः प्रगृहीतायुधा रणे ॥ ००१ ॥

आच्छिद्य रथपन्थानमुत्क्रोशन्तो महारथाः ।
आवृत्य सर्वतस्ते मां शरवर्षैरवाकिरन् ॥ ००२ ॥

ततोऽपरे महावीर्याः शूलपट्टिशपाणयः ।
शूलानि च भुशुण्डीश्च मुमुचुर्दानवा मयि ॥ ००३ ॥

तच्छूलवर्षं सुमहद्गदाशक्तिसमाकुलम् ।
अनिशं सृज्यमानं तैरपतन्मद्रथोपरि ॥ ००४ ॥

अन्ये मामभ्यधावन्त निवातकवचा युधि ।
शितशस्त्रायुधा रौद्राः कालरूपाः प्रहारिणः ॥ ००५ ॥

तानहं विविधैर्बाणैर्वेगवद्भिरजिह्मगैः ।
गाण्डीवमुक्तैरभ्यघ्नमेकैकं दशभिर्मृधे ॥ ००६ ॥

ते कृता विमुखाः सर्वे मत्प्रयुक्तैः शिलाशितैः ॥ ००६ ॥

ततो मातलिना तूर्णं हयास्ते संप्रचोदिताः ।
रथमार्गाद्बहूंस्तत्र विचेरुर्वातरंहसः ॥ ००७ ॥

सुसंयता मातलिना प्रामथ्नन्त दितेः सुतान् ॥ ००७ ॥

शतं शतास्ते हरयस्तस्मिन्युक्ता महारथे ।
तदा मातलिना यत्ता व्यचरन्नल्पका इव ॥ ००८ ॥

तेषां चरणपातेन रथनेमिस्वनेन च ।
मम बाणनिपातैश्च हतास्ते शतशोऽसुराः ॥ ००९ ॥

गतासवस्तथा चान्ये प्रगृहीतशरासनाः ।
हतसारथयस्तत्र व्यकृष्यन्त तुरङ्गमैः ॥ ०१० ॥

ते दिशो विदिशः सर्वाः प्रतिरुध्य प्रहारिणः ।
निघ्नन्ति विविधैः शस्त्रैस्ततो मे व्यथितं मनः ॥ ०११ ॥

ततोऽहं मातलेर्वीर्यमपश्यं परमाद्भुतम् ।
अश्वांस्तथा वेगवतो यदयत्नादधारयत् ॥ ०१२ ॥

ततोऽहं लघुभिश्चित्रैरस्त्रैस्तानसुरान्रणे ।
सायुधानच्छिनं राजञ्शतशोऽथ सहस्रशः ॥ ०१३ ॥

एवं मे चरतस्तत्र सर्वयत्नेन शत्रुहन् ।
प्रीतिमानभवद्वीरो मातलिः शक्रसारथिः ॥ ०१४ ॥

वध्यमानास्ततस्ते तु हयैस्तेन रथेन च ।
अगमन्प्रक्षयं केचिन्न्यवर्तन्त तथापरे ॥ ०१५ ॥

स्पर्धमाना इवास्माभिर्निवातकवचा रणे ।
शरवर्षैर्महद्भिर्मां समन्तात्प्रत्यवारयन् ॥ ०१६ ॥

ततोऽहं लघुभिश्चित्रैर्ब्रह्मास्त्रपरिमन्त्रितैः ।
व्यधमं सायकैराशु शतशोऽथ सहस्रशः ॥ ०१७ ॥

ततः संपीड्यमानास्ते क्रोधाविष्टा महासुराः ।
अपीडयन्मां सहिताः शरशूलासिवृष्टिभिः ॥ ०१८ ॥

ततोऽहमस्त्रमातिष्ठं परमं तिग्मतेजसम् ।
दयितं देवराजस्य माधवं नाम भारत ॥ ०१९ ॥

ततः खड्गांस्त्रिशूलांश्च तोमरांश्च सहस्रशः ।
अस्त्रवीर्येण शतधा तैर्मुक्तानहमच्छिनम् ॥ ०२० ॥

छित्त्वा प्रहरणान्येषां ततस्तानपि सर्वशः ।
प्रत्यविध्यमहं रोषाद्दशभिर्दशभिः शरैः ॥ ०२१ ॥

गाण्डीवाद्धि तदा संख्ये यथा भ्रमरपङ्क्तयः ।
निष्पतन्ति तथा बाणास्तन्मातलिरपूजयत् ॥ ०२२ ॥

तेषामपि तु बाणास्ते बहुत्वाच्छलभा इव ।
अवाकिरन्मां बलवत्तानहं व्यधमं शरैः ॥ ०२३ ॥

वध्यमानास्ततस्ते तु निवातकवचाः पुनः ।
शरवर्षैर्महद्भिर्मां समन्तात्पर्यवारयन् ॥ ०२४ ॥

शरवेगान्निहत्याहमस्त्रैः शरविघातिभिः ।
ज्वलद्भिः परमैः शीघ्रैस्तानविध्यं सहस्रशः ॥ ०२५ ॥

तेषां छिन्नानि गात्राणि विसृजन्ति स्म शोणितम् ।
प्रावृषीवातिवृष्टानि शृङ्गाणीव धराभृताम् ॥ ०२६ ॥

इन्द्राशनिसमस्पर्शैर्वेगवद्भिरजिह्मगैः ।
मद्बाणैर्वध्यमानास्ते समुद्विग्नाः स्म दानवाः ॥ ०२७ ॥

शतधा भिन्नदेहान्त्राः क्षीणप्रहरणौजसः ।
ततो निवातकवचा मामयुध्यन्त मायया ॥ ०२८ ॥

---

# अध्याय १६८

अर्जुन उवाच ॥

ततोऽश्मवर्षं सुमहत्प्रादुरासीत्समन्ततः ।
नगमात्रैर्महाघोरैस्तन्मां दृढमपीडयत् ॥ ००१ ॥

तदहं वज्रसङ्काशैः शरैरिन्द्रास्त्रचोदितैः ।
अचूर्णयं वेगवद्भिः शतधैकैकमाहवे ॥ ००२ ॥

चूर्ण्यमानेऽश्मवर्षे तु पावकः समजायत ।
तत्राश्मचूर्णमपतत्पावकप्रकरा इव ॥ ००३ ॥

ततोऽश्मवर्षे निहते जलवर्षं महत्तरम् ।
धाराभिरक्षमात्राभिः प्रादुरासीन्ममान्तिके ॥ ००४ ॥

नभसः प्रच्युता धारास्तिग्मवीर्याः सहस्रशः ।
आवृण्वन्सर्वतो व्योम दिशश्चोपदिशस्तथा ॥ ००५ ॥

धाराणां च निपातेन वायोर्विस्फूर्जितेन च ।
गर्जितेन च दैत्यानां न प्राज्ञायत किञ्चन ॥ ००६ ॥

धारा दिवि च संबद्धा वसुधायां च सर्वशः ।
व्यामोहयन्त मां तत्र निपतन्त्योऽनिशं भुवि ॥ ००७ ॥

तत्रोपदिष्टमिन्द्रेण दिव्यमस्त्रं विशोषणम् ।
दीप्तं प्राहिणवं घोरमशुष्यत्तेन तज्जलम् ॥ ००८ ॥

हतेऽश्मवर्षे तु मया जलवर्षे च शोषिते ।
मुमुचुर्दानवा मायामग्निं वायुं च मानद ॥ ००९ ॥

ततोऽहमग्निं व्यधमं सलिलास्त्रेण सर्वशः ।
शैलेन च महास्त्रेण वायोर्वेगमधारयम् ॥ ०१० ॥

तस्यां प्रतिहतायां तु दानवा युद्धदुर्मदाः ।
प्राकुर्वन्विविधा माया यौगपद्येन भारत ॥ ०११ ॥

ततो वर्षं प्रादुरभूत्सुमहल्लोमहर्षणम् ।

अस्त्राणां घोररूपाणामग्नेर्वायोस्तथाश्मनाम् ॥ ०१२ ॥

सा तु मायामयी वृष्टिः पीडयामास मां युधि ।
अथ घोरं तमस्तीव्रं प्रादुरासीत्समन्ततः ॥ ०१३ ॥

तमसा संवृते लोके घोरेण परुषेण च ।
तुरगा विमुखाश्चासन्प्रास्खलच्चापि मातलिः ॥ ०१४ ॥

हस्ताद्धिरण्मयश्चास्य प्रतोदः प्रापतद्भुवि ।
असकृच्चाह मां भीतः क्वासीति भरतर्षभ ॥ ०१५ ॥

मां च भीराविशत्तीव्रा तस्मिन्विगतचेतसि ।
स च मां विगतज्ञानः संत्रस्त इदमब्रवीत् ॥ ०१६ ॥

सुराणामसुराणां च सङ्ग्रामः सुमहानभूत् ।
अमृतार्थे पुरा पार्थ स च दृष्टो मयानघ ॥ ०१७ ॥

शम्बरस्य वधे चापि सङ्ग्रामः सुमहानभूत् ।
सारथ्यं देवराजस्य तत्रापि कृतवानहम् ॥ ०१८ ॥

तथैव वृत्रस्य वधे सङ्गृहीता हया मया ।
वैरोचनेर्मया युद्धं दृष्टं चापि सुदारुणम् ॥ ०१९ ॥

एते मया महाघोराः सङ्ग्रामाः पर्युपासिताः ।
न चापि विगतज्ञानो भूतपूर्वोऽस्मि पाण्डव ॥ ०२० ॥

पितामहेन संहारः प्रजानां विहितो ध्रुवम् ।
न हि युद्धमिदं युक्तमन्यत्र जगतः क्षयात् ॥ ०२१ ॥

तस्य तद्वचनं श्रुत्वा संस्तभ्यात्मानमात्मना ।
मोहयिष्यन्दानवानामहं मायामयं बलम् ॥ ०२२ ॥

अब्रुवं मातलिं भीतं पश्य मे भुजयोर्बलम् ।
अस्त्राणां च प्रभावं मे धनुषो गाण्डिवस्य च ॥ ०२३ ॥

अद्यास्त्रमाययैतेषां मायामेतां सुदारुणाम् ।
विनिहन्मि तमश्चोग्रं मा भैः सूत स्थिरो भव ॥ ०२४ ॥

एवमुक्त्वाहमसृजमस्त्रमायां नराधिप ।
मोहनीं सर्वशत्रूणां हिताय त्रिदिवौकसाम् ॥ ०२५ ॥

पीड्यमानासु मायासु तासु तास्वसुरेश्वराः ।
पुनर्बहुविधा मायाः प्राकुर्वन्नमितौजसः ॥ ०२६ ॥

पुनः प्रकाशमभवत्तमसा ग्रस्यते पुनः ।
व्रजत्यदर्शनं लोकः पुनरप्सु निमज्जति ॥ ०२७ ॥

सुसङ्गृहीतैर्हरिभिः प्रकाशे सति मातलिः ।
व्यचरत्स्यन्दनाग्र्येण सङ्ग्रामे लोमहर्षणे ॥ ०२८ ॥

ततः पर्यपतन्नुग्रा निवातकवचा मयि ।
तानहं विवरं दृष्ट्वा प्राहिण्वं यमसादनम् ॥ ०२९ ॥

वर्तमाने तथा युद्धे निवातकवचान्तके ।
नापश्यं सहसा सर्वान्दानवान्माययावृतान् ॥ ०३० ॥

# अध्याय १६९

अर्जुन उवाच ॥

अदृश्यमानास्ते दैत्या योधयन्ति स्म मायया ।
अदृश्यानस्त्रवीर्येण तानप्यहमयोधयम् ॥ ००१ ॥

गाण्डीवमुक्ता विशिखाः सम्यगस्त्रप्रचोदिताः ।
अच्छिन्दन्नुत्तमाङ्गानि यत्र यत्र स्म तेऽभवन् ॥ ००२ ॥

ततो निवातकवचा वध्यमाना मया युधि ।
संहृत्य मायां सहसा प्राविशन्पुरमात्मनः ॥ ००३ ॥

व्यपयातेषु दैत्येषु प्रादुर्भूते च दर्शने ।
अपश्यं दानवांस्तत्र हताञ्शतसहस्रशः ॥ ००४ ॥

विनिष्पिष्टानि तत्रैषां शस्त्राण्याभरणानि च ।
कूटशः स्म प्रदृश्यन्ते गात्राणि कवचानि च ॥ ००५ ॥

हयानां नान्तरं ह्यासीत्पदाद्विचलितुं पदम् ।
उत्पत्य सहसा तस्थुरन्तरिक्षगमास्ततः ॥ ००६ ॥

ततो निवातकवचा व्योम संछाद्य केवलम् ।
अदृश्या ह्यभ्यवर्तन्त विसृजन्तः शिलोच्चयान् ॥ ००७ ॥

अन्तर्भूमिगताश्चान्ये हयानां चरणान्यथ ।
न्यगृह्णन्दानवा घोरा रथचक्रे च भारत ॥ ००८ ॥

विनिगृह्य हरीनश्वान्रथं च मम युध्यतः ।
सर्वतो मामचिन्वन्त सरथं धरणीधरैः ॥ ००९ ॥

पर्वतैरुपचीयद्भिः पतमानैस्तथापरैः ।

स देशो यत्र वर्ताम गुहेव समपद्यत ॥ ०१० ॥

पर्वतैश्छाद्यमानोऽहं निगृहीतैश्च वाजिभिः ।
अगच्छं परमामार्तिं मातलिस्तदलक्षयत् ॥ ०११ ॥

लक्षयित्वा तु मां भीतमिदं वचनमब्रवीत् ।
अर्जुनार्जुन मा भैस्त्वं वज्रमस्त्रमुदीरय ॥ ०१२ ॥

ततोऽहं तस्य तद्वाक्यं श्रुत्वा वज्रमुदीरयम् ।
देवराजस्य दयितं वज्रमस्त्रं नराधिप ॥ ०१३ ॥

अचलं स्थानमासाद्य गाण्डीवमनुमन्त्र्य च ।
अमुञ्चं वज्रसंस्पर्शानायसान्निशिताञ्शरान् ॥ ०१४ ॥

ततो मायाश्च ताः सर्वा निवातकवचांश्च तान् ।
ते वज्रचोदिता बाणा वज्रभूताः समाविशन् ॥ ०१५ ॥

ते वज्रवेगाभिहता दानवाः पर्वतोपमाः ।
इतरेतरमाश्लिष्य न्यपतन्पृथिवीतले ॥ ०१६ ॥

अन्तर्भूमौ तु येऽगृह्णन्दानवा रथवाजिनः ।
अनुप्रविश्य तान्बाणाः प्राहिण्वन्यमसादनम् ॥ ०१७ ॥

हतैर्निवातकवचैर्निरस्तैः पर्वतोपमैः ।
समाच्छाद्यत देशः स विकीर्णैरिव पर्वतैः ॥ ०१८ ॥

न हयानां क्षतिः काचिन्न रथस्य न मातलेः ।
मम चादृश्यत तदा तदद्भुतमिवाभवत् ॥ ०१९ ॥

ततो मां प्रहसन्राजन्मातलिः प्रत्यभाषत ।
नैतदर्जुन देवेषु त्वयि वीर्यं यदीक्ष्यते ॥ ०२० ॥

हतेष्वसुरसंघेषु दारास्तेषां तु सर्वशः ।
प्राक्रोशन्नगरे तस्मिन्यथा शरदि लक्ष्मणाः ॥ ०२१ ॥

ततो मातलिना सार्धमहं तत्पुरमभ्ययाम् ।
त्रासयन्रथघोषेण निवातकवचस्त्रियः ॥ ०२२ ॥

तान्दृष्ट्वा दशसाहस्रान्मयूरसदृशान्हयान् ।
रथं च रविसङ्काशं प्राद्रवन्गणशः स्त्रियः ॥ ०२३ ॥

ताभिराभरणैः शब्दस्त्रासिताभिः समीरितः ।
शिलानामिव शैलेषु पतन्तीनामभूत्तदा ॥ ०२४ ॥

वित्रस्ता दैत्यनार्यस्ताः स्वानि वेश्मान्यथाविशन् ।
बहुरत्नविचित्राणि शातकुम्भमयानि च ॥ ०२५ ॥

तदद्भुताकारमहं दृष्ट्वा नगरमुत्तमम् ।
विशिष्टं देवनगरादपृच्छं मातलिं ततः ॥ ०२६ ॥

इदमेवंविधं कस्माद्देवता नाविशन्त्युत ।
पुरंदरपुराद्धीदं विशिष्टमिति लक्षये ॥ ०२७ ॥

मातलिरुवाच ॥

आसीदिदं पुरा पार्थ देवराजस्य नः पुरम् ।
ततो निवातकवचैरितः प्रच्याविताः सुराः ॥ ०२८ ॥

तपस्तप्त्वा महत्तीव्रं प्रसाद्य च पितामहम् ।
इदं वृतं निवासाय देवेभ्यश्चाभयं युधि ॥ ०२९ ॥

ततः शक्रेण भगवान्स्वयम्भूरभिचोदितः ।

विधत्तां भगवानत्रेत्यात्मनो हितकाम्यया ॥ ०३० ॥

तत उक्तो भगवता दिष्टमत्रेति वासवः ।
भवितान्तस्त्वमेवैषां देहेनान्येन वृत्रहन् ॥ ०३१ ॥

तत एषां वधार्थाय शक्रोऽस्त्राणि ददौ तव ।
न हि शक्याः सुरैर्हन्तुं य एते निहतास्त्वया ॥ ०३२ ॥

कालस्य परिणामेन ततस्त्वमिह भारत ।
एषामन्तकरः प्राप्तस्तत्त्वया च कृतं तथा ॥ ०३३ ॥

दानवानां विनाशार्थं महास्त्राणां महद्बलम् ।
ग्राहितस्त्वं महेन्द्रेण पुरुषेन्द्र तदुत्तमम् ॥ ०३४ ॥

अर्जुन उवाच ॥

ततः प्रविश्य नगरं दानवांश्च निहत्य तान् ।
पुनर्मातलिना सार्धमगच्छं देवसद्म तत् ॥ ०३५ ॥

---

# अध्याय १७०

अर्जुन उवाच ॥

निवर्तमानेन मया महद्दृष्टं ततोऽपरम् ।
पुरं कामचरं दिव्यं पावकार्कसमप्रभम् ॥ ००१ ॥

द्रुमै रत्नमयैश्चैत्रैर्भास्वरैश्च पतत्रिभिः ।
पौलोमैः कालकेयैश्च नित्यहृष्टैरधिष्ठितम् ॥ ००२ ॥

गोपुराट्टालकोपेतं चतुर्द्वारं दुरासदम् ।
सर्वरत्नमयं दिव्यमद्भुतोपमदर्शनम् ॥ ००३ ॥

द्रुमैः पुष्पफलोपेतैर्दिव्यरत्नमयैर्वृतम् ॥ ००३ ॥

तथा पतत्रिभिर्दिव्यैरुपेतं सुमनोहरैः ।
असुरैर्नित्यमुदितैः शूलर्ष्टिमुसलायुधैः ॥ ००४ ॥

चापमुद्गरहस्तैश्च स्रग्विभिः सर्वतो वृतम् ॥ ००४ ॥

तदहं प्रेक्ष्य दैत्यानां पुरमद्भुतदर्शनम् ।
अपृच्छं मातलिं राजन्किमिदं दृश्यतेति वै ॥ ००५ ॥

मातलिरुवाच ॥

पुलोमा नाम दैतेयी कालका च महासुरी ।
दिव्यं वर्षसहस्रं ते चेरतुः परमं तपः ॥ ००६ ॥

तपसोऽन्ते ततस्ताभ्यां स्वयम्भूरददाद्वरम् ॥ ००६ ॥

अगृह्णीतां वरं ते तु सुतानामल्पदुःखताम् ।
अवध्यतां च राजेन्द्र सुरराक्षसपन्नगैः ॥ ००७ ॥

रमणीयं पुरं चेदं खचरं सुकृतप्रभम् ।
सर्वरत्नैः समुदितं दुर्धर्षममरैरपि ॥ ००८ ॥

सयक्षगन्धर्वगणैः पन्नगासुरराक्षसैः ॥ ००८ ॥

सर्वकामगुणोपेतं वीतशोकमनामयम् ।
ब्रह्मणा भरतश्रेष्ठ कालकेयकृते कृतम् ॥ ००९ ॥

तदेतत्खचरं दिव्यं चरत्यमरवर्जितम् ।
पौलोमाध्युषितं वीर कालकेयैश्च दानवैः ॥ ०१० ॥

हिरण्यपुरमित्येतत्ख्यायते नगरं महत् ।
रक्षितं कालकेयैश्च पौलोमैश्च महासुरैः ॥ ०११ ॥

त एते मुदिता नित्यमवध्याः सर्वदैवतैः ।
निवसन्त्यत्र राजेन्द्र गतोद्वेगा निरुत्सुकाः ॥ ०१२ ॥

मानुषो मृत्युरेतेषां निर्दिष्टो ब्रह्मणा पुरा ॥ ०१२ ॥

अर्जुन उवाच ॥

सुरासुरैरवध्यांस्तानहं ज्ञात्वा ततः प्रभो ।
अब्रुवं मातलिं हृष्टो याह्येतत्पुरमञ्जसा ॥ ०१३ ॥

त्रिदशेशद्विषो यावत्क्षयमस्त्रैर्नयाम्यहम् ।
न कथञ्चिद्धि मे पापा न वध्या ये सुरद्विषः ॥ ०१४ ॥

उवाह मां ततः शीघ्रं हिरण्यपुरमन्तिकात् ।
रथेन तेन दिव्येन हरियुक्तेन मातलिः ॥ ०१५ ॥

ते मामालक्ष्य दैतेया विचित्राभरणाम्बराः ।
समुत्पेतुर्महावेगा रथानास्थाय दंशिताः ॥ ०१६ ॥

ततो नालीकनाराचैर्भल्लशक्त्यृष्टितोमरैः ।
अभ्यघ्नन्दानवेन्द्रा मां क्रुद्धास्तीव्रपराक्रमाः ॥ ०१७ ॥

तदहं चास्त्रवर्षेण महता प्रत्यवारयम् ।
शस्त्रवर्षं महद्राजन्विद्याबलमुपाश्रितः ॥ ०१८ ॥

व्यामोहयं च तान्सर्वान्रथमार्गैश्चरन्रणे ।
तेऽन्योन्यमभिसंमूढाः पातयन्ति स्म दानवाः ॥ ०१९ ॥

तेषामहं विमूढानामन्योन्यमभिधावताम् ।
शिरांसि विशिखैर्दीप्तैर्व्यहरं शतसंघशः ॥ ०२० ॥

ते वध्यमाना दैतेयाः पुरमास्थाय तत्पुनः ।
खमुत्पेतुः सनगरा मायामास्थाय दानवीम् ॥ ०२१ ॥

ततोऽहं शरवर्षेण महता प्रत्यवारयम् ।
मार्गमावृत्य दैत्यानां गतिं चैषामवारयम् ॥ ०२२ ॥

तत्पुरं खचरं दिव्यं कामगं दिव्यवर्चसम् ।
दैतेयैर्वरदानेन धार्यते स्म यथासुखम् ॥ ०२३ ॥

अन्तर्भूमौ निपतितं पुनरूर्ध्वं प्रतिष्ठते ।
पुनस्तिर्यक्प्रयात्याशु पुनरप्सु निमज्जति ॥ ०२४ ॥

अमरावतिसङ्काशं पुरं कामगमं तु तत् ।
अहमस्त्रैर्बहुविधैः प्रत्यगृह्णं नराधिप ॥ ०२५ ॥

ततोऽहं शरजालेन दिव्यास्त्रमुदितेन च ।
न्यगृह्णं सह दैतेयैस्तत्पुरं भरतर्षभ ॥ ०२६ ॥

विक्षतं चायसैर्बाणैर्मत्प्रयुक्तैरजिह्मगैः ।
महीमभ्यपतद्राजन्प्रभग्नं पुरमासुरम् ॥ ०२७ ॥

ते वध्यमाना मद्बाणैर्वज्रवेगैरयस्मयैः ।
पर्यभ्रमन्त वै राजन्नसुराः कालचोदिताः ॥ ०२८ ॥

ततो मातलिरप्याशु पुरस्तान्निपतन्निव ।
महीमवातरत्क्षिप्रं रथेनादित्यवर्चसा ॥ ०२९ ॥

ततो रथसहस्राणि षष्टिस्तेषाममर्षिणाम् ।
युयुत्सूनां मया सार्धं पर्यवर्तन्त भारत ॥ ०३० ॥

तानहं निशितैर्बाणैर्व्यधमं गार्ध्रवाजितैः ।
ते युद्धे संन्यवर्तन्त समुद्रस्य यथोर्मयः ॥ ०३१ ॥

नेमे शक्या मानुषेण युद्धेनेति प्रचिन्त्य वै ।
ततोऽहमानुपूर्व्येण सर्वाण्यस्त्राण्ययोजयम् ॥ ०३२ ॥

ततस्तानि सहस्राणि रथानां चित्रयोधिनाम् ।
अस्त्राणि मम दिव्यानि प्रत्यघ्नञ्शनकैरिव ॥ ०३३ ॥

रथमार्गान्विचित्रांस्ते विचरन्तो महारथाः ।
प्रत्यदृश्यन्त सङ्ग्रामे शतशोऽथ सहस्रशः ॥ ०३४ ॥

विचित्रमुकुटापीडा विचित्रकवचध्वजाः ।
विचित्राभरणाश्चैव नन्दयन्तीव मे मनः ॥ ०३५ ॥

अहं तु शरवर्षैस्तानस्त्रप्रमुदितै रणे ।
नाशक्नुवं पीडयितुं ते तु मां पर्यपीडयन् ॥ ०३६ ॥

तैः पीड्यमानो बहुभिः कृतास्त्रैः कुशलैर्युधि ।
व्यथितोऽस्मि महायुद्धे भयं चागान्महन्मम ॥ ०३७ ॥

ततोऽहं देवदेवाय रुद्राय प्रणतो रणे ।
स्वस्ति भूतेभ्य इत्युक्त्वा महास्त्रं समयोजयम् ॥ ०३८ ॥

यत्तद्रौद्रमिति ख्यातं सर्वामित्रविनाशनम् ॥ ०३८ ॥

ततोऽपश्यं त्रिशिरसं पुरुषं नवलोचनम् ।
त्रिमुखं षड्भुजं दीप्तमर्कज्वलनमूर्धजम् ॥ ०३९ ॥

लेलिहानैर्महानागैः कृतशीर्षममित्रहन् ॥ ०३९ ॥

विभीस्ततस्तदस्त्रं तु घोरं रौद्रं सनातनम् ।
दृष्ट्वा गाण्डीवसंयोगमानीय भरतर्षभ ॥ ०४० ॥

नमस्कृत्वा त्रिनेत्राय शर्वायामिततेजसे ।
मुक्तवान्दानवेन्द्राणां पराभावाय भारत ॥ ०४१ ॥

मुक्तमात्रे ततस्तस्मिन्रूपाण्यासन्सहस्रशः ।
मृगाणामथ सिंहानां व्याघ्राणां च विशां पते ॥ ०४२ ॥

ऋक्षाणां महिषाणां च पन्नगानां तथा गवाम् ॥ ०४२ ॥

गजानां सृमराणां च शरभाणां च सर्वशः ।
ऋषभाणां वराहाणां मार्जाराणां तथैव च ॥ ०४३ ॥

शालावृकाणां प्रेतानां भुरुण्डानां च सर्वशः ॥ ०४३ ॥

गृध्राणां गरुडानां च मकराणां तथैव च ।
पिशाचानां सयक्षाणां तथैव च सुरद्विषाम् ॥ ०४४ ॥

गुह्यकानां च सङ्ग्रामे नैरृतानां तथैव च ।
झषाणां गजवक्त्राणामुलूकानां तथैव च ॥ ०४५ ॥

मीनकूर्मसमूहानां नानाशस्त्रासिपाणिनाम् ।
तथैव यातु धानानां गदामुद्गरधारिणाम् ॥ ०४६ ॥

एतैश्चान्यैश्च बहुभिर्नानारूपधरैस्तथा ।
सर्वमासीज्जगद्व्याप्तं तस्मिन्नस्त्रे विसर्जिते ॥ ०४७ ॥

त्रिषिरोभिश्चतुर्दंष्ट्रैश्चतुरास्यैश्चतुर्भुजैः ।
अनेकरूपसंयुक्तैर्मांसमेदोवसाशिभिः ॥ ०४८ ॥

अभीक्ष्णं वध्यमानास्ते दानवा ये समागताः ॥ ०४८ ॥

अर्कज्वलनतेजोभिर्वज्राशनिसमप्रभैः ।
अद्रिसारमयैश्चान्यैर्बाणैररिविदारणैः ॥ ०४९ ॥

न्यहनं दानवान्सर्वान्मुहूर्तेनैव भारत ॥ ०४९ ॥

गाण्डीवास्त्रप्रणुन्नांस्तान्गतासून्नभसश्च्युतान् ।
दृष्ट्वाहं प्राणमं भूयस्त्रिपुरघ्नाय वेधसे ॥ ०५० ॥

तथा रौद्रास्त्रनिष्पिष्टान्दिव्याभरणभूषितान् ।
निशाम्य परमं हर्षमगमद्देवसारथिः ॥ ०५१ ॥

तदसह्यं कृतं कर्म देवैरपि दुरासदम् ।
दृष्ट्वा मां पूजयामास मातलिः शक्रसारथिः ॥ ०५२ ॥

उवाच चेदं वचनं प्रीयमाणः कृताञ्जलिः ।
सुरासुरैरसह्यं हि कर्म यत्साधितं त्वया ॥ ०५३ ॥

न ह्येतत्संयुगे कर्तुमपि शक्तः सुरेश्वरः ॥ ०५३ ॥

सुरासुरैरवध्यं हि पुरमेतत्खगं महत् ।
त्वया विमथितं वीर स्ववीर्यास्त्रतपोबलात् ॥ ०५४ ॥

विध्वस्तेऽथ पुरे तस्मिन्दानवेषु हतेषु च ।

विनदन्त्यः स्त्रियः सर्वा निष्पेतुर्नगराद्बहिः ॥ ०५५ ॥

प्रकीर्णकेश्यो व्यथिताः कुरर्य इव दुःखिताः ।
पेतुः पुत्रान्पितॄन्भ्रातॄञ्शोचमाना महीतले ॥ ०५६ ॥

रुदन्त्यो दीनकण्ठ्यस्ता विनदन्त्यो हतेश्वराः ।
उरांसि पाणिभिर्घ्नन्त्यः प्रस्रस्तस्रग्विभूषणाः ॥ ०५७ ॥

तच्छोकयुक्तमश्रीकं दुःखदैन्यसमाहतम् ।
न बभौ दानवपुरं हतत्विड्कं हतेश्वरम् ॥ ०५८ ॥

गन्धर्वनगराकारं हतनागमिव ह्रदम् ।
शुष्कवृक्षमिवारण्यमदृश्यमभवत्पुरम् ॥ ०५९ ॥

मां तु संहृष्टमनसं क्षिप्रं मातलिरानयत् ।
देवराजस्य भवनं कृतकर्माणमाहवात् ॥ ०६० ॥

हिरण्यपुरमारुज्य निहत्य च महासुरान् ।
निवातकवचांश्चैव ततोऽहं शक्रमागमम् ॥ ०६१ ॥

मम कर्म च देवेन्द्रं मातलिर्विस्तरेण तत् ।
सर्वं विश्रावयामास यथा भूतं महाद्युते ॥ ०६२ ॥

हिरण्यपुरघातं च मायानां च निवारणम् ।
निवातकवचानां च वधं संख्ये महौजसाम् ॥ ०६३ ॥

तच्छ्रुत्वा भगवान्प्रीतः सहस्राक्षः पुरंदरः ।
मरुद्भिः सहितः श्रीमान्साधु साध्वित्यथाब्रवीत् ॥ ०६४ ॥

ततो मां देवराजो वै समाश्वास्य पुनः पुनः ।
अब्रवीद्विबुधैः सार्धमिदं सुमधुरं वचः ॥ ०६५ ॥

अतिदेवासुरं कर्म कृतमेतत्त्वया रणे ।
गुर्वर्थश्च महान्पार्थ कृतः शत्रून्घ्नता मम ॥ ०६६ ॥

एवमेव सदा भाव्यं स्थिरेणाजौ धनञ्जय ।
असंमूढेन चास्त्राणां कर्तव्यं प्रतिपादनम् ॥ ०६७ ॥

अविषह्यो रणे हि त्वं देवदानवराक्षसैः ।
सयक्षासुरगन्धर्वैः सपक्षिगणपन्नगैः ॥ ०६८ ॥

वसुधां चापि कौन्तेय त्वद्बाहुबलनिर्जिताम् ।
पालयिष्यति धर्मात्मा कुन्तीपुत्रो युधिष्ठिरः ॥ ०६९ ॥

---

# अध्याय १७१

अर्जुन उवाच ॥

ततो मामभिविश्वस्तं संरूढशरविक्षतम् ।
देवराजोऽनुगृह्येदं काले वचनमब्रवीत् ॥ ००१ ॥

दिव्यान्यस्त्राणि सर्वाणि त्वयि तिष्ठन्ति भारत ।
न त्वाभिभवितुं शक्तो मानुषो भुवि कश्चन ॥ ००२ ॥

भीष्मो द्रोणः कृपः कर्णः शकुनिः सह राजभिः ।
सङ्ग्रामस्थस्य ते पुत्र कलां नार्हन्ति षोडशीम् ॥ ००३ ॥

इदं च मे तनुत्राणं प्रायच्छन्मघवान्प्रभुः ।
अभेद्यं कवचं दिव्यं स्रजं चैव हिरण्मयीम् ॥ ००४ ॥

देवदत्तं च मे शङ्खं देवः प्रादान्महारवम् ।
दिव्यं चेदं किरीटं मे स्वयमिन्द्रो युयोज ह ॥ ००५ ॥

ततो दिव्यानि वस्त्राणि दिव्यान्याभरणानि च ।
प्रादाच्छक्रो ममैतानि रुचिराणि बृहन्ति च ॥ ००६ ॥

एवं संपूजितस्तत्र सुखमस्म्युषितो नृप ।
इन्द्रस्य भवने पुण्ये गन्धर्वशिशुभिः सह ॥ ००७ ॥

ततो मामब्रवीच्छक्रः प्रीतिमानमरैः सह ।
समयोऽर्जुन गन्तुं ते भ्रातरो हि स्मरन्ति ते ॥ ००८ ॥

एवमिन्द्रस्य भवने पञ्च वर्षाणि भारत ।
उषितानि मया राजन्स्मरता द्यूतजं कलिम् ॥ ००९ ॥

ततो भवन्तमद्राक्षं भ्रातृभिः परिवारितम् ।
गन्धमादनमासाद्य पर्वतस्यास्य मूर्धनि ॥ ०१० ॥

युधिष्ठिर उवाच ॥

दिष्ट्या धनञ्जयास्त्राणि त्वया प्राप्तानि भारत ।
दिष्ट्या चाराधितो राजा देवानामीश्वरः प्रभुः ॥ ०११ ॥

दिष्ट्या च भगवान्स्थाणुर्देव्या सह परंतप ।
साक्षाद्दृष्टः सुयुद्धेन तोषितश्च त्वयानघ ॥ ०१२ ॥

दिष्ट्या च लोकपालैस्त्वं समेतो भरतर्षभ ।
दिष्ट्या वर्धामहे सर्वे दिष्ट्यासि पुनरागतः ॥ ०१३ ॥

अद्य कृत्स्नामिमां देवीं विजितां पुरमालिनीम् ।

मन्ये च धृतराष्ट्रस्य पुत्रानपि वशीकृतान्  ॥ ०१४  ॥

तानि त्विच्छामि ते द्रष्टुं दिव्यान्यस्त्राणि भारत ।
यैस्तथा वीर्यवन्तस्ते निवातकवचा हता  ॥ ०१५  ॥

अर्जुन उवाच  ॥

श्वः प्रभाते भवान्द्रष्टा दिव्यान्यस्त्राणि सर्वशः ।
निवातकवचा घोरा यैर्मया विनिपातिताः  ॥ ०१६  ॥

वैशंपायन उवाच  ॥

एवमागमनं तत्र कथयित्वा धनञ्जयः ।
भ्रातृभिः सहितः सर्वै रजनीं तामुवास ह  ॥ ०१७  ॥

---

# अध्याय १७२

वैशंपायन उवाच  ॥

तस्यां रजन्यां व्युष्टायां धर्मराजो युधिष्ठिरः ।
उत्थायावश्यकार्याणि कृतवान्भ्रतृभिः सह  ॥ ००१  ॥

ततः सञ्चोदयामास सोऽर्जुनं भ्रातृनन्दनम् ।
दर्शयास्त्राणि कौन्तेय यैर्जिता दानवास्त्वया  ॥ ००२  ॥

ततो धनञ्जयो राजन्देवैर्दत्तानि पाण्डवः ।
अस्त्राणि तानि दिव्यानि दर्शयामास भारत  ॥ ००३  ॥

यथान्यायं महातेजाः शौचं परममास्थितः ।
गिरिकूबरं पादपाङ्गं शुभवेणु त्रिवेणुकम्  ॥ ००४  ॥

पार्थिवं रथमास्थाय शोभमानो धनञ्जयः  ॥ ००४  ॥

ततः सुदंशितस्तेन कवचेन सुवर्चसा ।
धनुरादाय गाण्डीवं देवदत्तं च वारिजम्  ॥ ००५  ॥

शोशुभ्यमानः कौन्तेय आनुपूर्व्यान्महाभुजः ।
अस्त्राणि तानि दिव्यानि दर्शनायोपचक्रमे  ॥ ००६  ॥

अथ प्रयोक्ष्यमाणेन दिव्यान्यस्त्राणि तेन वै ।
समाक्रान्ता मही पद्भ्यां समकम्पत सद्रुमा  ॥ ००७  ॥

क्षुभिताः सरितश्चैव तथैव च महोदधिः ।
शैलाश्चापि व्यशीर्यन्त न ववौ च समीरणः  ॥ ००८  ॥

न बभासे सहस्रांशुर्न जज्वाल च पावकः ।
न वेदाः प्रतिभान्ति स्म द्विजातीनां कथञ्चन  ॥ ००९  ॥

अन्तर्भूमिगता ये च प्राणिनो जनमेजय ।
पीड्यमानाः समुत्थाय पाण्डवं पर्यवारयन्  ॥ ०१०  ॥

वेपमानाः प्राञ्जलयस्ते सर्वे पिहिताननाः ।
दह्यमानास्तदास्त्रैस्तैर्याचन्ति स्म धनञ्जयम्  ॥ ०११  ॥

ततो ब्रह्मर्षयश्चैव सिद्धाश्चैव सुरर्षयः ।
जङ्गमानि च भूतानि सर्वाण्येवावतस्थिरे  ॥ ०१२  ॥

राजर्षयश्च प्रवरास्तथैव च दिवौकसः ।
यक्षराक्षसगन्धर्वास्तथैव च पतत्रिणः  ॥ ०१३  ॥

ततः पितामहश्चैव लोकपालाश्च सर्वशः ।
भगवांश्च महादेवः सगणोऽभ्याययौ तदा ॥ ०१४ ॥

ततो वायुर्महाराज दिव्यैर्माल्यैः सुगन्धिभिः ।
अभितः पाण्डवांश्चित्रैरवचक्रे समन्ततः ॥ ०१५ ॥

जगुश्च गाथा विविधा गन्धर्वाः सुरचोदिताः ।
ननृतुः संघशश्चैव राजन्नप्सरसां गणाः ॥ ०१६ ॥

तस्मिंस्तु तुमुले काले नारदः सुरचोदितः ।
आगम्याह वचः पार्थं श्रवणीयमिदं नृप ॥ ०१७ ॥

अर्जुनार्जुन मा युङ्क्ष्व दिव्यान्यस्त्राणि भारत ।
नैतानि निरधिष्ठाने प्रयुज्यन्ते कदाचन ॥ ०१८ ॥

अधिष्ठाने न वानार्तः प्रयुञ्जीत कदाचन ।
प्रयोगे सुमहान्दोषो ह्यस्त्राणां कुरुनन्दन ॥ ०१९ ॥

एतानि रक्ष्यमाणानि धनञ्जय यथागमम् ।
बलवन्ति सुखार्हाणि भविष्यन्ति न संशयः ॥ ०२० ॥

अरक्ष्यमाणान्येतानि त्रैलोक्यस्यापि पाण्डव ।
भवन्ति स्म विनाशाय मैवं भूयः कृथाः क्वचित् ॥ ०२१ ॥

अजातशत्रो त्वं चैव द्रक्ष्यसे तानि संयुगे ।
योज्यमानानि पार्थेन द्विषतामवमर्दने ॥ ०२२ ॥

निवार्याथ ततः पार्थं सर्वे देवा यथागतम् ।
जग्मुरन्ये च ये तत्र समाजग्मुर्नरर्षभ ॥ ०२३ ॥

तेषु सर्वेषु कौरव्य प्रतियातेषु पाण्डवाः ।
तस्मिन्नेव वने हृष्टास्त ऊषुः सह कृष्णया ॥ ०२४ ॥

---

# आजगरपर्व

## अध्याय १७३

जनमेजय उवाच ॥

तस्मिन्कृतास्त्रे रथिनां प्रधाने ; प्रत्यागते भवनाद्वृत्रहन्तुः ।
अतः परं किमकुर्वन्त पार्थाः ; समेत्य शूरेण धनञ्जयेन ॥ ००१ ॥

वैशंपायन उवाच ॥

वनेषु तेष्वेव तु ते नरेन्द्राः ; सहार्जुनेनेन्द्रसमेन वीराः ।
तस्मिंश्च शैलप्रवरे सुरम्ये ; धनेश्वराक्रीडगता विजह्रुः ॥ ००२ ॥

वेश्मानि तान्यप्रतिमानि पश्य ;न्क्रीडाश्च नानाद्रुमसंनिकर्षाः ।
चचार धन्वी बहुधा नरेन्द्रः ; सोऽस्त्रेषु यत्तः सततं किरीटी ॥ ००३ ॥

अवाप्य वासं नरदेवपुत्राः ; प्रसादजं वैश्रवणस्य राज्ञः ।
न प्राणिनां ते स्पृहयन्ति राज ;ञ्शिवश्च कालः स बभूव तेषाम् ॥ ००४ ॥

समेत्य पार्थेन यथैकरात्र ;मूषुः समास्तत्र तदा चतस्रः ।
पूर्वाश्च षट्वा दश पाण्डवानां ; शिवा बभूवुर्वसतां वनेषु ॥ ००५ ॥

ततोऽब्रवीद्वायुसुतस्तरस्वी ; जिष्णुश्च राजानमुपोपविश्य ।

यमौ च वीरौ सुरराजकल्पा ;वेकान्तमास्थाय हितं प्रियं च ॥ ००६ ॥

तव प्रतिज्ञां कुरुराज सत्यां ; चिकीर्षमाणास्त्वदनु प्रियं च ।
ततोऽनुगच्छाम वनान्यपास्य ; सुयोधनं सानुचरं निहन्तुम् ॥ ००७ ॥

एकादशं वर्षमिदं वसामः ; सुयोधनेनात्तसुखाः सुखार्हाः ।
तं वञ्चयित्वाधमबुद्धिशील ;मज्ञातवासं सुखमाप्नुयामः ॥ ००८ ॥

तवाज्ञया पार्थिव निर्विशङ्का ; विहाय मानं विचरन्वनानि ।
समीपवासेन विलोभितास्ते ; ज्ञास्यन्ति नास्मानपकृष्टदेशान् ॥ ००९ ॥

संवत्सरं तं तु विहृत्य गूढं ; नराधमं तं सुखमुद्धरेम ।
निर्यात्य वैरं सफलं सपुष्पं ; तस्मै नरेन्द्राधमपूरुषाय ॥ ०१० ॥

सुयोधनायानुचरैर्वृताय ; ततो महीमाहर धर्मराज ।
स्वर्गोपमं शैलमिमं चरद्भिः ; शक्यो विहन्तुं नरदेव शोकः ॥ ०११ ॥

कीर्तिश्च ते भारत पुण्यगन्धा ; नश्येत लोकेषु चराचरेषु ।
तत्प्राप्य राज्यं कुरुपुङ्गवानां ; शक्यं महत्प्राप्तमथ क्रियाश्च ॥ ०१२ ॥

इदं तु शक्यं सततं नरेन्द्र ; प्राप्तुं त्वया यल्लभसे कुबेरात् ।
कुरुष्व बुद्धिं द्विषतां वधाय ; कृतागसां भारत निग्रहे च ॥ ०१३ ॥

तेजस्तवोग्रं न सहेत राज ;न्समेत्य साक्षादपि वज्रपाणिः ।
न हि व्यथां जातु करिष्यतस्तौ ; समेत्य देवैरपि धर्मराज ॥ ०१४ ॥

त्वदर्थसिद्ध्यर्थमभिप्रवृत्तौ ; सुपर्णकेतुश्च शिनेश्च नप्ता ।
यथैव कृष्णोऽप्रतिमो बलेन ; तथैव राजन्स शिनिप्रवीरः ॥ ०१५ ॥

तवार्थसिद्ध्यर्थमभिप्रवृत्तौ ; यथैव कृष्णः सह यादवैस्तैः ।
तथैव चावां नरदेववर्य ; यमौ च वीरौ कृतिनौ प्रयोगे ॥ ०१६ ॥

त्वदर्थयोगप्रभवप्रधानाः ; समं करिष्याम परान्समेत्य ॥ ०१६ ॥

ततस्तदाज्ञाय मतं महात्मा ; तेषां स धर्मस्य सुतो वरिष्ठः ।
प्रदक्षिणं वैश्रवणाधिवासं ; चकार धर्मार्थविदुत्तमौजः ॥ ०१७ ॥

आमन्त्र्य वेश्मानि नदीः सरांसि ; सर्वाणि रक्षांसि च धर्मराजः ।
यथागतं मार्गमवेक्षमाणः ; पुनर्गिरिं चैव निरीक्षमाणः ॥ ०१८ ॥

समाप्तकर्मा सहितः सुहृद्भि ;र्जित्वा सपत्नान्प्रतिलभ्य राज्यम् ।
शैलेन्द्र भूयस्तपसे धृतात्मा ; द्रष्टा तवास्मीति मतिं चकार ॥ ०१९ ॥

वृतः स सर्वैरनुजैर्द्विजैश्च ; तेनैव मार्गेण पतिः कुरूणाम् ।
उवाह चैनान्सगणांस्तथैव ; घटोत्कचः पर्वतनिर्झरेषु ॥ ०२० ॥

तान्प्रस्थितान्प्रीतिमना महर्षिः ; पितेव पुत्राननुशिष्य सर्वान् ।
स लोमशः प्रीतमना जगाम ; दिवौकसां पुण्यतमं निवासम् ॥ ०२१ ॥

तेनानुशिष्टार्ष्टिषेणेन चैव ; तीर्थानि रम्याणि तपोवनानि ।
महान्ति चान्यानि सरांसि पार्थाः ; संपश्यमानाः प्रययुर्नराग्र्याः ॥ ०२२ ॥

---

# अध्याय १७४

वैशंपायन उवाच ॥

नगोत्तमं प्रस्रवणैरुपेतं ; दिशां गजैः किंनरपक्षिभिश्च ।
सुखं निवासं जहतां हि तेषां ; न प्रीतिरासीद्भरतर्षभाणाम् ॥ ००१ ॥

ततस्तु तेषां पुनरेव हर्षः ; कैलासमालोक्य महान्बभूव ।
कुबेरकान्तं भरतर्षभाणां ; महीधरं वारिधरप्रकाशम्  ॥ ००२  ॥

समुच्छ्रयान्पर्वतसंनिरोधा ;न्गोष्ठान्गिरीणां गिरिसेतुमालाः ।
बहून्प्रपातांश्च समीक्ष्य वीराः ; स्थलानि निम्नानि च तत्र तत्र  ॥ ००३  ॥

तथैव चान्यानि महावनानि ; मृगद्विजानेकपसेवितानि ।
आलोकयन्तोऽभिययुः प्रतीता ;स्ते धन्विनः खड्गधरा नराग्र्याः  ॥ ००४  ॥

वनानि रम्याणि सरांसि नद्यो ; गुहा गिरीणां गिरिगह्वराणि ।
एते निवासाः सततं बभूवु ;र्निशानिशं प्राप्य नरर्षभाणाम्  ॥ ००५  ॥

ते दुर्गवासं बहुधा निरुष्य ; व्यतीत्य कैलासमचिन्त्यरूपम् ।
आसेदुरत्यर्थमनोरमं वै ; तमाश्रमाग्र्यं वृषपर्वणस्ते  ॥ ००६  ॥

समेत्य राज्ञा वृषपर्वणस्ते ; प्रत्यर्चितास्तेन च वीतमोहाः ।
शशंसिरे विस्तरशः प्रवासं ; शिवं यथावद्वृषपर्वणस्ते  ॥ ००७  ॥

सुखोषितास्तत्र त एकरात्रं ; पुण्याश्रमे देवमहर्षिजुष्टे ।
अभ्याययुस्ते बदरीं विशालां ; सुखेन वीराः पुनरेव वासम्  ॥ ००८  ॥

ऊषुस्ततस्तत्र महानुभावा ; नारायणस्थानगता नराग्र्याः ।
कुबेरकान्तां नलिनीं विशोकाः ; संपश्यमानाः सुरसिद्धजुष्टाम्  ॥ ००९  ॥

तां चाथ दृष्ट्वा नलिनीं विशोकाः ; पाण्डोः सुताः सर्वनरप्रवीराः ।
ते रेमिरे नन्दनवासमेत्य ; द्विजर्षयो वीतभया यथैव  ॥ ०१०  ॥

ततः क्रमेणोपययुर्नृवीरा ; यथागतेनैव पथा समग्राः ।
विहृत्य मासं सुखिनो बदर्यां ; किरातराज्ञो विषयं सुबाहोः  ॥ ०११  ॥

चीनांस्तुखारान्दरदान्सदार्वा ;न्देशान्कुणिन्दस्य च भूरिरत्नान् ।
अतीत्य दुर्गं हिमवत्प्रदेशं ; पुरं सुबाहोर्ददृशुर्नृवीराः ॥ ०१२ ॥

श्रुत्वा च तान्पार्थिवपुत्रपौत्रा ;न्प्राप्तान्सुबाहुर्विषये समग्रान् ।
प्रत्युद्ययौ प्रीतियुतः स राजा ; तं चाभ्यनन्दन्वृषभाः कुरूणाम् ॥ ०१३ ॥

समेत्य राज्ञा तु सुबाहुना ते ; सूतैर्विशोकप्रमुखैश्च सर्वैः ।
सहेन्द्रसेनैः परिचारकैश्च ; पौरोगवैर्ये च महानसस्थाः ॥ ०१४ ॥

सुखोषितास्तत्र त एकरात्रं ; सूतानुपादाय रथांश्च सर्वान् ।
घटोत्कचं सानुचरं विसृज्य ; ततोऽभ्ययुर्यामुनमद्रिराजम् ॥ ०१५ ॥

तस्मिन्गिरौ प्रस्रवणोपपन्ने ; हिमोत्तरीयारुणपाण्डुसानौ ।
विशाखयूपं समुपेत्य चक्रु ;स्तदा निवासं पुरुषप्रवीराः ॥ ०१६ ॥

वराहनानामृगपक्षिजुष्टं ; महद्वनं चैत्ररथप्रकाशम् ।
शिवेन यात्वा मृगयाप्रधानाः ; संवत्सरं तत्र वने विजह्रुः ॥ ०१७ ॥

तत्राससादातिबलं भुजङ्गं ; क्षुधार्दितं मृत्युमिवोग्ररूपम् ।
वृकोदरः पर्वतकन्दरायां ; विषादमोहव्यथितान्तरात्मा ॥ ०१८ ॥

द्वीपोऽभवद्यत्र वृकोदरस्य ; युधिष्ठिरो धर्मभृतां वरिष्ठः ।
अमोक्षयद्यस्तमनन्ततेजा ; ग्राहेण संवेष्टितसर्वगात्रम् ॥ ०१९ ॥

ते द्वादशं वर्षमथोपयान्तं ; वने विहर्तुं कुरवः प्रतीताः ।
तस्माद्वनाच्चैत्ररथप्रकाशा ;च्छ्रिया ज्वलन्तस्तपसा च युक्ताः ॥ ०२० ॥

ततश्च यात्वा मरुधन्वपार्श्वं ; सदा धनुर्वेदरतिप्रधानाः ।
सरस्वतीमेत्य निवासकामाः ; सरस्ततो द्वैतवनं प्रतीयुः ॥ ०२१ ॥

समीक्ष्य तान्द्वैतवने निविष्टा ;न्निवासिनस्तत्र ततोऽभिजग्मुः ।

तपोदमाचारसमाधियुक्ता ;स्तृणोदपात्राहरणाश्मकुट्टाः ॥ ०२२ ॥

प्लक्षाक्षरौहीतकवेतसाश्च ; स्नुहा बदर्यः खदिराः शिरीषाः ।
बिल्वेङ्गुदाः पीलुशमीकरीराः ; सरस्वतीतीररुहा बभूवुः ॥ ०२३ ॥

तां यक्षगन्धर्वमहर्षिकान्ता ;मायागभूतामिव देवतानाम् ।
सरस्वतीं प्रीतियुताश्चरन्तः ; सुखं विजह्रुर्नरदेवपुत्राः ॥ ०२४ ॥

---

# अध्याय १७५

जनमेजय उवाच ॥

कथं नागायुतप्राणो भीमसेनो महाबलः ।
भयमाहारयत्तीव्रं तस्मादजगरान्मुने ॥ ००१ ॥

पौलस्त्यं योऽऽह्वयद्युद्धे धनदं बलदर्पितः ।
नलिन्यां कदनं कृत्वा वराणां यक्षरक्षसाम् ॥ ००२ ॥

तं शंससि भयाविष्टमापन्नमरिकर्षणम् ।
एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ॥ ००३ ॥

वैशंपायन उवाच ॥

बह्वाश्चर्ये वने तेषां वसतामुग्रधन्विनाम् ।
प्राप्तानामाश्रमाद्राजन्राजर्षेर्वृषपर्वणः ॥ ००४ ॥

यदृच्छया धनुष्पाणिर्बद्धखड्गो वृकोदरः ।
ददर्श तद्वनं रम्यं देवगन्धर्वसेवितम् ॥ ००५ ॥

स ददर्श शुभान्देशान्गिरेर्हिमवतस्तदा ।
देवर्षिसिद्धचरितानप्सरोगणसेवितान् ॥ ००६ ॥

चकोरैश्चक्रवाकैश्च पक्षिभिर्जीवजीवकैः ।
कोकिलैर्भृङ्गराजैश्च तत्र तत्र विनादितान् ॥ ००७ ॥

नित्यपुष्पफलैर्वृक्षैर्हिमसंस्पर्शकोमलैः ।
उपेतान्बहुलच्छायैर्मनोनयननन्दनैः ॥ ००८ ॥

स संपश्यन्गिरिनदीर्वैडूर्यमणिसंनिभैः ।
सलिलैर्हिमसंस्पर्शैर्हंसकारण्डवायुतैः ॥ ००९ ॥

वनानि देवदारूणां मेघानामिव वागुराः ।
हरिचन्दनमिश्राणि तुङ्गकालीयकान्यपि ॥ ०१० ॥

मृगयां परिधावन्स समेषु मरुधन्वसु ।
विध्यन्मृगाञ्शरैः शुद्धैश्चचार सुमहाबलः ॥ ०११ ॥

स ददर्श महाकायं भुजङ्गं लोमहर्षणम् ।
गिरिदुर्गे समापन्नं कायेनावृत्य कन्दरम् ॥ ०१२ ॥

पर्वताभोगवर्ष्माणं भोगैश्चन्द्रार्कमण्डलैः ।
चित्राङ्गमजिनैश्चित्रैर्हरिद्रासदृशच्छविम् ॥ ०१३ ॥

गुहाकारेण वक्त्रेण चतुर्दंष्ट्रेण राजता ।
दीप्ताक्षेणातिताम्रेण लिहन्तं सृक्किणी मुहुः ॥ ०१४ ॥

त्रासनं सर्वभूतानां कालान्तकयमोपमम् ।
निःश्वासक्ष्वेडनादेन भर्त्सयन्तमिव स्थितम् ॥ ०१५ ॥

स भीमं सहसाभ्येत्य पृदाकुः क्षुधितो भृशम् ।
जग्राहाजगरो ग्राहो भुजयोरुभयोर्बलात् ॥ ०१६ ॥

तेन संस्पृष्टमात्रस्य भिमसेनस्य वै तदा ।
सञ्ज्ञा मुमोह सहसा वरदानेन तस्य ह ॥ ०१७ ॥

दश नागसहस्राणि धारयन्ति हि यद्बलम् ।
तद्बलं भीमसेनस्य भुजयोरसमं परैः ॥ ०१८ ॥

स तेजस्वी तथा तेन भुजगेन वशीकृतः ।
विस्फुरञ्शनकैर्भीमो न शशाक विचेष्टितुम् ॥ ०१९ ॥

नागायुतसमप्राणः सिंहस्कन्धो महाभुजः ।
गृहीतो व्यजहात्सत्त्वं वरदानेन मोहितः ॥ ०२० ॥

स हि प्रयत्नमकरोत्तीव्रमात्मविमोक्षणे ।
न चैनमशकद्वीरः कथञ्चित्प्रतिबाधितुम् ॥ ०२१ ॥

---

# अध्याय १७६

वैशंपायन उवाच ॥

स भीमसेनस्तेजस्वी तथा सर्पवशं गतः ।
चिन्तयामास सर्पस्य वीर्यमत्यद्भुतं महत् ॥ ००१ ॥

उवाच च महासर्पं कामया ब्रूहि पन्नग ।
कस्त्वं भो भुजगश्रेष्ठ किं मया च करिष्यसि ॥ ००२ ॥

पाण्डवो भिमसेनोऽहं धर्मराजादनन्तरः ।
नागायुतसमप्राणस्त्वया नीतः कथं वशम् ॥ ००३ ॥

सिंहाः केसरिणो व्याघ्रा महिषा वारणास्तथा ।
समागताश्च बहुशो निहताश्च मया मृधे ॥ ००४ ॥

दानवाश्च पिशाचाश्च राक्षसाश्च महाबलाः ।
भुजवेगमशक्ता मे सोढुं पन्नगसत्तम ॥ ००५ ॥

किं नु विद्याबलं किं वा वरदानमथो तव ।
उद्योगमपि कुर्वाणो वशगोऽस्मि कृतस्त्वया ॥ ००६ ॥

असत्यो विक्रमो नृणामिति मे निश्चिता मतिः ।
यथेदं मे त्वया नाग बलं प्रतिहतं महत् ॥ ००७ ॥

इत्येवंवादिनं वीरं भीममक्लिष्टकारिणम् ।
भोगेन महता सर्पः समन्तात्पर्यवेष्टयत् ॥ ००८ ॥

निगृह्य तं महाबाहुं ततः स भुजगस्तदा ।
विमुच्यास्य भुजौ पीनाविदं वचनमब्रवीत् ॥ ००९ ॥

दिष्ट्या त्वं क्षुधितस्याद्य देवैर्भक्षो महाभुज ।
दिष्ट्या कालस्य महतः प्रियाः प्राणा हि देहिनाम् ॥ ०१० ॥

यथा त्विदं मया प्राप्तं भुजङ्गत्वमरिंदम ।
तदवश्यं मया ख्याप्यं तवाद्य श‍ृणु सत्तम ॥ ०११ ॥

इमामवस्थां संप्राप्तो ह्यहं कोपान्मनीषिणाम् ।
शापस्यान्तं परिप्रेप्सुः सर्पस्य कथयामि तत् ॥ ०१२ ॥

नहुषो नाम राजर्षिर्व्यक्तं ते श्रोत्रमागतः ।

तवैव पूर्वः पूर्वेषामायोर्वंशकरः सुतः ॥ ०१३ ॥

सोऽहं शापादगस्त्यस्य ब्राह्मणानवमन्य च ।
इमामवस्थामापन्नः पश्य दैवमिदं मम ॥ ०१४ ॥

त्वां चेदवध्यमायान्तमतीव प्रियदर्शनम् ।
अहमद्योपयोक्ष्यामि विधानं पश्य यादृशम् ॥ ०१५ ॥

न हि मे मुच्यते कश्चित्कथञ्चिद्ग्रहणं गतः ।
गजो वा महिषो वापि षष्ठे काले नरोत्तम ॥ ०१६ ॥

नासि केवलसर्पेण तिर्यग्योनिषु वर्तता ।
गृहीतः कौरवश्रेष्ठ वरदानमिदं मम ॥ ०१७ ॥

पतता हि विमानाग्रान्मया शक्रासनाद्द्रुतम् ।
कुरु शापान्तमित्युक्तो भगवान्मुनिसत्तमः ॥ ०१८ ॥

स मामुवाच तेजस्वी कृपयाभिपरिप्लुतः ।
मोक्षस्ते भविता राजन्कस्माच्चित्कालपर्ययात् ॥ ०१९ ॥

ततोऽस्मि पतितो भूमौ न च मामजहात्स्मृतिः ।
स्मार्तमस्ति पुराणं मे यथैवाधिगतं तथा ॥ ०२० ॥

यस्तु ते व्याहृतान्प्रश्नान्प्रतिब्रूयाद्विशेषवित् ।
स त्वां मोक्षयिता शापादिति मामब्रवीदृषिः ॥ ०२१ ॥

गृहीतस्य त्वया राजन्प्राणिनोऽपि बलीयसः ।
सत्त्वभ्रंशोऽधिकस्यापि सर्वस्याशु भविष्यति ॥ ०२२ ॥

इति चाप्यहमश्रौषं वचस्तेषां दयावताम् ।
मयि सञ्जातहार्दानामथ तेऽन्तर्हिता द्विजाः ॥ ०२३ ॥

सोऽहं परमदुष्कर्मा वसामि निरयेऽशुचौ ।
सर्पयोनिमिमां प्राप्य कालाकाङ्क्षी महाद्युते ॥ ०२४ ॥

तमुवाच महाबाहुर्भीमसेनो भुजङ्गमम् ।
न ते कुप्ये महासर्प न चात्मानं विगर्हये ॥ ०२५ ॥

यस्मादभावी भावी वा मनुष्यः सुखदुःखयोः ।
आगमे यदि वापाये न तत्र ग्लपयेन्मनः ॥ ०२६ ॥

दैवं पुरुषकारेण को निवर्तितुमर्हति ।
दैवमेव परं मन्ये पुरुषार्थो निरर्थकः ॥ ०२७ ॥

पश्य दैवोपघाताद्धि भुजवीर्यव्यपाश्रयम् ।
इमामवस्थां संप्राप्तमनिमित्तमिहाद्य माम् ॥ ०२८ ॥

किं तु नाद्यानुशोचामि तथात्मानं विनाशितम् ।
यथा तु विपिने न्यस्तान्भ्रातॄन्राज्यपरिच्युतान् ॥ ०२९ ॥

हिमवांश्च सुदुर्गोऽयं यक्षराक्षससङ्कुलः ।
मां च ते समुदीक्षन्तः प्रपतिष्यन्ति विह्वलाः ॥ ०३० ॥

विनष्टमथ वा श्रुत्वा भविष्यन्ति निरुद्यमाः ।
धर्मशीला मया ते हि बाध्यन्ते राज्यगृद्धिना ॥ ०३१ ॥

अथ वा नार्जुनो धीमान्विषादमुपयास्यति ।
सर्वास्त्रविदनाधृष्यो देवगन्धर्वराक्षसैः ॥ ०३२ ॥

समर्थः स महाबाहुरेकाह्ना सुमहाबलः ।
देवराजमपि स्थानात्प्रच्यावयितुमोजसा ॥ ०३३ ॥

किं पुनर्धृतराष्ट्रस्य पुत्रं दुर्द्यूतदेविनम् ।
विद्विष्टं सर्वलोकस्य दम्भलोभपरायणम्  ॥ ०३४  ॥

मातरं चैव शोचामि कृपणां पुत्रगृद्धिनीम् ।
यास्माकं नित्यमाशास्ते महत्त्वमधिकं परैः  ॥ ०३५  ॥

कथं नु तस्यानाथाया मद्विनाशाद्भुजङ्गम ।
अफलास्ते भविष्यन्ति मयि सर्वे मनोरथाः  ॥ ०३६  ॥

नकुलः सहदेवश्च यमजौ गुरुवर्तिनौ ।
मद्बाहुबलसंस्तब्धौ नित्यं पुरुषमानिनौ  ॥ ०३७  ॥

निरुत्साहौ भविष्येते भ्रष्टवीर्यपराक्रमौ ।
मद्विनाशात्परिद्यूनाविति मे वर्तते मतिः  ॥ ०३८  ॥

एवंविधं बहु तदा विललाप वृकोदरः ।
भुजङ्गभोगसंरुद्धो नाशकच्च विचेष्टितुम्  ॥ ०३९  ॥

युधिष्ठिरस्तु कौन्तेय बभूवास्वस्थचेतनः ।
अनिष्टदर्शनान्घोरानुत्पातान्परिचिन्तयन्  ॥ ०४०  ॥

दारुणं ह्यशिवं नादं शिवा दक्षिणतः स्थिता ।
दीप्तायां दिशि वित्रस्ता रौति तस्याश्रमस्य ह  ॥ ०४१  ॥

एकपक्षाक्षिचरणा वर्तिका घोरदर्शना ।
रुधिरं वमन्ती ददृशे प्रत्यादित्यमपस्वरा  ॥ ०४२  ॥

प्रववावनिलो रूक्षश्चण्डः शर्करकर्षणः ।
अपसव्यानि सर्वाणि मृगपक्षिरुतानि च  ॥ ०४३  ॥

पृष्ठतो वायसः कृष्णो याहि याहीति वाशति ।

मुहुर्मुहुः प्रस्फुरति दक्षिणोऽस्य भुजस्तथा ॥ ०४४ ॥

हृदयं चरणश्चापि वामोऽस्य परिवर्तते ।
सव्यस्याक्ष्णो विकारश्चाप्यनिष्टः समपद्यत ॥ ०४५ ॥

स धर्मराजो मेधावी शङ्कमानो महद्भयम् ।
द्रौपदीं परिपप्रच्छ क्व भीम इति भारत ॥ ०४६ ॥

शशंस तस्मै पाञ्चाली चिरयातं वृकोदरम् ।
स प्रतस्थे महाबाहुर्धौम्येन सहितो नृपः ॥ ०४७ ॥

द्रौपद्या रक्षणं कार्यमित्युवाच धनञ्जयम् ।
नकुलं सहदेवं च व्यादिदेश द्विजान्प्रति ॥ ०४८ ॥

स तस्य पदमुन्नीय तस्मादेवाश्रमात्प्रभुः ।
ददर्श पृथिवीं चिह्नैर्भीमस्य परिचिह्निताम् ॥ ०४९ ॥

धावतस्तस्य वीरस्य मृगार्थे वातरंहसः ।
ऊरुवातविनिर्भग्नान्द्रुमान्व्यावर्जितान्पथि ॥ ०५० ॥

स गत्वा तैस्तदा चिह्नैर्ददर्श गिरिगह्वरे ।
गृहीतं भुजगेन्द्रेण निश्चेष्टमनुजं तथा ॥ ०५१ ॥

---

# अध्याय १७७

वैशंपायन उवाच ॥

युधिष्ठिरस्तमासाद्य सर्पभोगाभिवेष्टितम् ।

दयितं भ्रातरं वीरमिदं वचनमब्रवीत् ॥ ००१ ॥

कुन्तीमातः कथमिमामापदं त्वमवाप्तवान् ।
कश्चायं पर्वताभोगप्रतिमः पन्नगोत्तमः ॥ ००२ ॥

स धर्मराजमालक्ष्य भ्राता भ्रातरमग्रजम् ।
कथयामास तत्सर्वं ग्रहणादि विचेष्टितम् ॥ ००३ ॥

युधिष्ठिर उवाच ॥

देवो वा यदि वा दैत्य उरगो वा भवान्यदि ।
सत्यं सर्प वचो ब्रूहि पृच्छति त्वां युधिष्ठिरः ॥ ००४ ॥

किमाहृत्य विदित्वा वा प्रीतिस्ते स्याद्भुजङ्गम ।
किमाहारं प्रयच्छामि कथं मुञ्चेद्भवानिमम् ॥ ००५ ॥

सर्प उवाच ॥

नहुषो नाम राजाहमासं पूर्वस्तवानघ ।
प्रथितः पञ्चमः सोमादायोः पुत्रो नराधिप ॥ ००६ ॥

क्रतुभिस्तपसा चैव स्वाध्यायेन दमेन च ।
त्रैलोक्यैश्वर्यमव्यग्रं प्राप्तो विक्रमणेन च ॥ ००७ ॥

तदैश्वर्यं समासाद्य दर्पो मामगमत्तदा ।
सहस्रं हि द्विजातीनामुवाह शिबिकां मम ॥ ००८ ॥

ऐश्वर्यमदमत्तोऽहमवमन्य ततो द्विजान् ।
इमामगस्त्येन दशामानीतः पृथिवीपते ॥ ००९ ॥

न तु मामजहात्प्रज्ञा यावदद्येति पाण्डव ।

तस्यैवानुग्रहाद्राजन्नगस्त्यस्य महात्मनः ॥ ०१० ॥

षष्ठे काले ममाहारः प्राप्तोऽयमनुजस्तव ।
नाहमेनं विमोक्ष्यामि न चान्यमभिकामये ॥ ०११ ॥

प्रश्नानुच्चारितांस्तु त्वं व्याहरिष्यसि चेन्मम ।
अथ पश्चाद्विमोक्ष्यामि भ्रातरं ते वृकोदरम् ॥ ०१२ ॥

युधिष्ठिर उवाच ॥

ब्रूहि सर्प यथाकामं प्रतिवक्ष्यामि ते वचः ।
अपि चेच्छक्नुयां प्रीतिमाहर्तुं ते भुजङ्गम ॥ ०१३ ॥

वेद्यं यद्ब्राह्मणेनेह तद्भवान्वेत्ति केवलम् ।
सर्पराज ततः श्रुत्वा प्रतिवक्ष्यामि ते वचः ॥ ०१४ ॥

सर्प उवाच ॥

ब्राह्मणः को भवेद्राजन्वेद्यं किं च युधिष्ठिर ।
ब्रवीह्यतिमतिं त्वां हि वाक्यैरनुमिमीमहे ॥ ०१५ ॥

युधिष्ठिर उवाच ॥

सत्यं दानं क्षमा शीलमानृशंस्यं दमो घृणा ।
दृश्यन्ते यत्र नागेन्द्र स ब्राह्मण इति स्मृतः ॥ ०१६ ॥

वेद्यं सर्प परं ब्रह्म निर्दुःखमसुखं च यत् ।
यत्र गत्वा न शोचन्ति भवतः किं विवक्षितम् ॥ ०१७ ॥

सर्प उवाच ॥

चातुर्वर्ण्यं प्रमाणं च सत्यं च ब्रह्म चैव ह ।
शूद्रेष्वपि च सत्यं च दानमक्रोध एव च ॥ ०१८ ॥

आनृशंस्यमहिंसा च घृणा चैव युधिष्ठिर ॥ ०१८ ॥

वेद्यं यच्चात्थ निर्दुःखमसुखं च नराधिप ।
ताभ्यां हीनं पदं चान्यन्न तदस्तीति लक्षये ॥ ०१९ ॥

युधिष्ठिर उवाच ॥

शूद्रे चैतद्भवेल्लक्ष्यं द्विजे तच्च न विद्यते ।
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥ ०२० ॥

यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मणः स्मृतः ।
यत्रैतन्न भवेत्सर्प तं शूद्रमिति निर्दिशेत् ॥ ०२१ ॥

यत्पुनर्भवता प्रोक्तं न वेद्यं विद्यतेति ह ।
ताभ्यां हीनमतीत्यात्र पदं नास्तीति चेदपि ॥ ०२२ ॥

एवमेतन्मतं सर्प ताभ्यां हीनं न विद्यते ।
यथा शीतोष्णयोर्मध्ये भवेन्नोष्णं न शीतता ॥ ०२३ ॥

एवं वै सुखदुःखाभ्यां हीनमस्ति पदं क्वचित् ।
एषा मम मतिः सर्प यथा वा मन्यते भवान् ॥ ०२४ ॥

सर्प उवाच ॥

यदि ते वृत्ततो राजन्ब्राह्मणः प्रसमीक्षितः ।
व्यर्था जातिस्तदायुष्मन्कृतिर्यावन्न दृश्यते ॥ ०२५ ॥

युधिष्ठिर उवाच ॥

जातिरत्र महासर्प मनुष्यत्वे महामते ।
सङ्करात्सर्ववर्णानां दुष्परीक्ष्येति मे मतिः ॥ ०२६ ॥

सर्वे सर्वास्वपत्यानि जनयन्ति यदा नराः ।
वाङ्मैथुनमथो जन्म मरणं च समं नृणाम् ॥ ०२७ ॥

इदमार्षं प्रमाणं च ये यजामह इत्यपि ।
तस्माच्छीलं प्रधानेष्टं विदुर्ये तत्त्वदर्शिनः ॥ ०२८ ॥

प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते ।
तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ॥ ०२९ ॥

वृत्त्या शूद्रसमो ह्येष यावद्वेदे न जायते ।
अस्मिन्नेवं मतिद्वैधे मनुः स्वायम्भुवोऽब्रवीत् ॥ ०३० ॥

कृतकृत्याः पुनर्वर्णा यदि वृत्तं न विद्यते ।
सङ्करस्तत्र नागेन्द्र बलवान्प्रसमीक्षितः ॥ ०३१ ॥

यत्रेदानीं महासर्प संस्कृतं वृत्तमिष्यते ।
तं ब्राह्मणमहं पूर्वमुक्तवान्भुजगोत्तम ॥ ०३२ ॥

सर्प उवाच ॥

श्रुतं विदितवेद्यस्य तव वाक्यं युधिष्ठिर ।
भक्षयेयमहं कस्माद्भ्रातरं ते वृकोदरम् ॥ ०३३ ॥

# अध्याय १७८

युधिष्ठिर उवाच ॥

भवानेतादृशो लोके वेदवेदाङ्गपारगः ।
ब्रूहि किं कुर्वतः कर्म भवेद्गतिरनुत्तमा ॥ ००१ ॥

सर्प उवाच ॥

पात्रे दत्त्वा प्रियाण्युक्त्वा सत्यमुक्त्वा च भारत ।
अहिंसानिरतः स्वर्गं गच्छेदिति मतिर्मम ॥ ००२ ॥

युधिष्ठिर उवाच ॥

दानाद्वा सर्प सत्याद्वा किमतो गुरु दृश्यते ।
अहिंसाप्रिययोश्चैव गुरुलाघवमुच्यताम् ॥ ००३ ॥

सर्प उवाच ॥

दाने रतत्वं सत्यं च अहिंसा प्रियमेव च ।
एषां कार्यगरीयस्त्वाद्दृश्यते गुरुलाघवम् ॥ ००४ ॥

कस्माच्चिद्दानयोगाद्धि सत्यमेव विशिष्यते ।
सत्यवाक्याच्च राजेन्द्र किञ्चिद्दानं विशिष्यते ॥ ००५ ॥

एवमेव महेष्वास प्रियवाक्यान्महीपते ।
अहिंसा दृश्यते गुर्वी ततश्च प्रियमिष्यते ॥ ००६ ॥

एवमेतद्भवेद्राजन्कार्यापेक्षमनन्तरम् ।
यदभिप्रेतमन्यत्ते ब्रूहि यावद्ब्रवीम्यहम् ॥ ००७ ॥

युधिष्ठिर उवाच ॥

कथं स्वर्गे गतिः सर्प कर्मणां च फलं ध्रुवम् ।
अशरीरस्य दृश्येत विषयांश्च ब्रवीहि मे ॥ ००८ ॥

सर्प उवाच ॥

तिस्रो वै गतयो राजन्परिदृष्टाः स्वकर्मभिः ।
मानुष्यं स्वर्गवासश्च तिर्यग्योनिश्च तत्त्रिधा ॥ ००९ ॥

तत्र वै मानुषाल्लोकाद्दानादिभिरतन्द्रितः ।
अहिंसार्थसमायुक्तैः कारणैः स्वर्गमश्नुते ॥ ०१० ॥

विपरीतैश्च राजेन्द्र कारणैर्मानुषो भवेत् ।
तिर्यग्योनिस्तथा तात विशेषश्चात्र वक्ष्यते ॥ ०११ ॥

कामक्रोधसमायुक्तो हिंसालोभसमन्वितः ।
मनुष्यत्वात्परिभ्रष्टस्तिर्यग्योनौ प्रसूयते ॥ ०१२ ॥

तिर्यग्योन्यां पृथग्भावो मनुष्यत्वे विधीयते ।
गवादिभ्यस्तथाश्वेभ्यो देवत्वमपि दृश्यते ॥ ०१३ ॥

सोऽयमेता गतीः सर्वा जन्तुश्चरति कार्यवान् ।
नित्ये महति चात्मानमवस्थापयते नृप ॥ ०१४ ॥

जातो जातश्च बलवान्भुङ्क्ते चात्मा स देहवान् ।
फलार्थस्तात निष्पृक्तः प्रजालक्षणभावनः ॥ ०१५ ॥

युधिष्ठिर उवाच ॥

शब्दे स्पर्शे च रूपे च तथैव रसगन्धयोः ।
तस्याधिष्ठानमव्यग्रं ब्रूहि सर्प यथातथम् ॥ ०१६ ॥

किं न गृह्णासि विषयान्युगपत्त्वं महामते ।
एतावदुच्यतां चोक्तं सर्वं पन्नगसत्तम ॥ ०१७ ॥

सर्प उवाच ॥

यदात्मद्रव्यमायुष्मन्देहसंश्रयणान्वितम् ।
करणाधिष्ठितं भोगानुपभुङ्क्ते यथाविधि ॥ ०१८ ॥

ज्ञानं चैवात्र बुद्धिश्च मनश्च भरतर्षभ ।
तस्य भोगाधिकरणे करणानि निबोध मे ॥ ०१९ ॥

मनसा तात पर्यैति क्रमशो विषयानिमान् ।
विषयायतनस्थेन भूतात्मा क्षेत्रनिःसृतः ॥ ०२० ॥

अत्र चापि नरव्याघ्र मनो जन्तोर्विधीयते ।
तस्माद्युगपदस्यात्र ग्रहणं नोपपद्यते ॥ ०२१ ॥

स आत्मा पुरुषव्याघ्र भ्रुवोरन्तरमाश्रितः ।
द्रव्येषु सृजते बुद्धिं विविधेषु परावराम् ॥ ०२२ ॥

बुद्धेरुत्तरकालं च वेदना दृश्यते बुधैः ।
एष वै राजशार्दूल विधिः क्षेत्रज्ञभावनः ॥ ०२३ ॥

युधिष्ठिर उवाच ॥

मनसश्चापि बुद्धेश्च ब्रूहि मे लक्षणं परम् ।
एतदध्यात्मविदुषां परं कार्यं विधीयते ॥ ०२४ ॥

सर्प उवाच ॥

बुद्धिरात्मानुगा तात उत्पातेन विधीयते ।
तदाश्रिता हि सञ्ज्ञैषा विधिस्तस्यैषणे भवेत् ॥ ०२५ ॥

बुद्धेर्गुणविधिर्नास्ति मनस्तु गुणवद्भवेत् ।
बुद्धिरुत्पद्यते कार्ये मनस्तूत्पन्नमेव हि ॥ ०२६ ॥

एतद्विशेषणं तात मनोबुद्ध्योर्मयेरितम् ।
त्वमप्यत्राभिसंबुद्धः कथं वा मन्यते भवान् ॥ ०२७ ॥

युधिष्ठिर उवाच ॥

अहो बुद्धिमतां श्रेष्ठ शुभा बुद्धिरियं तव ।
विदितं वेदितव्यं ते कस्मान्मामनुपृच्छसि ॥ ०२८ ॥

सर्वज्ञं त्वां कथं मोह आविशत्स्वर्गवासिनम् ।
एवमद्भुतकर्माणमिति मे संशयो महान् ॥ ०२९ ॥

सर्प उवाच ॥

सुप्रज्ञमपि चेच्छूरमृद्धिर्मोहयते नरम् ।
वर्तमानः सुखे सर्वो नावैतीति मतिर्मम ॥ ०३० ॥

सोऽहमैश्वर्यमोहेन मदाविष्टो युधिष्ठिर ।
पतितः प्रतिसंबुद्धस्त्वां तु संबोधयाम्यहम् ॥ ०३१ ॥

कृतं कार्यं महाराज त्वया मम परंतप ।
क्षीणः शापः सुकृच्छ्रो मे त्वया संभाष्य साधुना ॥ ०३२ ॥

अहं हि दिवि दिव्येन विमानेन चरन्पुरा ।
अभिमानेन मत्तः सन्कञ्चिन्नान्यमचिन्तयम् ॥ ०३३ ॥

ब्रह्मर्षिदेवगन्धर्वयक्षराक्षसकिंनराः ।
करान्मम प्रयच्छन्ति सर्वे त्रैलोक्यवासिनः ॥ ०३४ ॥

चक्षुषा यं प्रपश्यामि प्राणिनं पृथिवीपते ।
तस्य तेजो हराम्याशु तद्धि दृष्टिबलं मम ॥ ०३५ ॥

ब्रह्मर्षीणां सहस्रं हि उवाह शिबिकां मम ।
स मामपनयो राजन्भ्रंशयामास वै श्रियः ॥ ०३६ ॥

तत्र ह्यगस्त्यः पादेन वहन्स्पृष्टो मया मुनिः ।
अदृष्टेन ततोऽस्म्युक्तो ध्वंस सर्पेति वै रुषा ॥ ०३७ ॥

ततस्तस्माद्विमानाग्रात्प्रच्युतश्च्युतभूषणः ।
प्रपतन्बुबुधेऽऽत्मानं व्यालीभूतमधोमुखम् ॥ ०३८ ॥

अयाचं तमहं विप्रं शापस्यान्तो भवेदिति ।
अज्ञानात्संप्रवृत्तस्य भगवन्क्षन्तुमर्हसि ॥ ०३९ ॥

ततः स मामुवाचेदं प्रपतन्तं कृपान्वितः ।
युधिष्ठिरो धर्मराजः शापात्त्वां मोक्षयिष्यति ॥ ०४० ॥

अभिमानस्य घोरस्य बलस्य च नराधिप ।
फले क्षीणे महाराज फलं पुण्यमवाप्स्यसि ॥ ०४१ ॥

ततो मे विस्मयो जातस्तद्दृष्ट्वा तपसो बलम् ।
ब्रह्म च ब्राह्मणत्वं च येन त्वाहमचूचुदम् ॥ ०४२ ॥

सत्यं दमस्तपो योगमहिंसा दाननित्यता ।
साधकानि सदा पुंसां न जातिर्न कुलं नृप ॥ ०४३ ॥

अरिष्ट एष ते भ्राता भीमो मुक्तो महाभुजः ।

स्वस्ति तेऽस्तु महाराज गमिष्यामि दिवं पुनः ॥ ०४४ ॥

वैशंपायन उवाच ॥

इत्युक्त्वाजगरं देहं त्यक्त्वा स नहुषो नृपः ।
दिव्यं वपुः समास्थाय गतस्त्रिदिवमेव ह ॥ ०४५ ॥

युधिष्ठिरोऽपि धर्मात्मा भ्रात्रा भीमेन सङ्गतः ।
धौम्येन सहितः श्रीमानाश्रमं पुनरभ्यगात् ॥ ०४६ ॥

ततो द्विजेभ्यः सर्वेभ्यः समेतेभ्यो यथातथम् ।
कथयामास तत्सर्वं धर्मराजो युधिष्ठिरः ॥ ०४७ ॥

तच्छ्रुत्वा ते द्विजाः सर्वे भ्रातरश्चास्य ते त्रयः ।
आसन्सुव्रीडिता राजन्द्रौपदी च यशस्विनी ॥ ०४८ ॥

ते तु सर्वे द्विजश्रेष्ठाः पाण्डवानां हितेप्सया ।
मैवमित्यब्रुवन्भीमं गर्हयन्तोऽस्य साहसम् ॥ ०४९ ॥

पाण्डवास्तु भयान्मुक्तं प्रेक्ष्य भीमं महाबलम् ।
हर्षमाहारयां चक्रुर्विजह्रुश्च मुदा युताः ॥ ०५० ॥

---

# मार्कण्डेयसमास्यापर्व

## अध्याय १७९

वैशंपायन उवाच ॥

निदाघान्तकरः कालः सर्वभूतसुखावहः ।
तत्रैव वसतां तेषां प्रावृड्भमभिपद्यत ॥ ००१ ॥

छादयन्तो महाघोषाः खं दिशश्च बलाहकाः ।
प्रववर्षुर्दिवारात्रमसिताः सततं तदा ॥ ००२ ॥

तपात्ययनिकेताश्च शतशोऽथ सहस्रशः ।
अपेतार्कप्रभाजालाः सविद्युद्विमलप्रभाः ॥ ००३ ॥

विरूढशष्पा पृथिवी मत्तदंशसरीसृपा ।
बभूव पयसा सिक्ता शान्तधूमरजोऽरुणा ॥ ००४ ॥

न स्म प्रज्ञायते किञ्चिदम्भसा समवस्तृते ।
समं वा विषमं वापि नद्यो वा स्थावराणि वा ॥ ००५ ॥

क्षुब्धतोया महाघोषाः श्वसमाना इवाशुगाः ।
सिन्धवः शोभयां चक्रुः काननानि तपात्यये ॥ ००६ ॥

नदतां काननान्तेषु श्रूयन्ते विविधाः स्वनाः ।
वृष्टिभिस्ताड्यमानानां वराहमृगपक्षिणाम् ॥ ००७ ॥

स्तोककाः शिखिनश्चैव पुंस्कोकिलगणैः सह ।
मत्ताः परिपतन्ति स्म दर्दुराश्चैव दर्पिताः ॥ ००८ ॥

तथा बहुविधाकारा प्रावृण्मेघानुनादिता ।
अभ्यतीता शिवा तेषां चरतां मरुधन्वसु ॥ ००९ ॥

क्रौञ्चहंसगणाकीर्णा शरत्प्रणिहिताभवत् ।
रूढकक्षवनप्रस्था प्रसन्नजलनिम्नगा ॥ ०१० ॥

विमलाकाशनक्षत्रा शरत्तेषां शिवाभवत् ।
मृगद्विजसमाकीर्णा पाण्डवानां महात्मनाम् ॥ ०११ ॥

पश्यन्तः शान्तरजसः क्षपा जलदशीतलाः ।
ग्रहनक्षत्रसंघैश्च सोमेन च विराजिताः ॥ ०१२ ॥

कुमुदैः पुण्डरीकैश्च शीतवारिधराः शिवाः ।
नदीः पुष्करिणीश्चैव ददृशुः समलङ्कृताः ॥ ०१३ ॥

आकाशनीकाशतटां नीपनीवारसङ्कुलाम् ।
बभूव चरतां हर्षः पुण्यतीर्थां सरस्वतीम् ॥ ०१४ ॥

ते वै मुमुदिरे वीराः प्रसन्नसलिलां शिवाम् ।
पश्यन्तो दृढधन्वानः परिपूर्णां सरस्वतीम् ॥ ०१५ ॥

तेषां पुण्यतमा रात्रिः पर्वसंधौ स्म शारदी ।
तत्रैव वसतामासीत्कार्त्तिकी जनमेजय ॥ ०१६ ॥

पुण्यकृद्भिर्महासत्त्वैस्तापसैः सह पाण्डवाः ।
तत्सर्वं भरतश्रेष्ठाः समूहुर्योगमुत्तमम् ॥ ०१७ ॥

तमिस्राभ्युदये तस्मिन्धौम्येन सह पाण्डवाः ।
सूतैः पौरोगवैश्चैव काम्यकं प्रययुर्वनम् ॥ ०१८ ॥

---

# अध्याय १८०

वैशंपायन उवाच ॥

काम्यकं प्राप्य कौन्तेया युधिष्ठिरपुरोगमाः ।
कृतातिथ्या मुनिगणैर्निषेदुः सह कृष्णया ॥ ००१ ॥

ततस्तान्परिविश्वस्तान्वसतः पाण्डुनन्दनान् ।
ब्राह्मणा बहवस्तत्र समन्तात्पर्यवारयन् ॥ ००२ ॥

अथाब्रवीद्द्विजः कश्चिदर्जुनस्य प्रियः सखा ।
एष्यतीह महाबाहुर्वशी शौरिरुदारधीः ॥ ००३ ॥

विदिता हि हरेर्यूयमिहायाताः कुरूद्वहाः ।
सदा हि दर्शनाकाङ्क्षी श्रेयोऽन्वेषी च वो हरिः ॥ ००४ ॥

बहुवत्सरजीवी च मार्कण्डेयो महातपाः ।
स्वाध्यायतपसा युक्तः क्षिप्रं युष्मान्समेष्यति ॥ ००५ ॥

तथैव तस्य ब्रुवतः प्रत्यदृष्यत केशवः ।
सैन्यसुग्रीवयुक्तेन रथेन रथिनां वरः ॥ ००६ ॥

मघवानिव पौलोम्या सहितः सत्यभामया ।
उपायाद्देवकीपुत्रो दिदृक्षुः कुरुसत्तमान् ॥ ००७ ॥

अवतीर्य रथात्कृष्णो धर्मराजं यथाविधि ।
ववन्दे मुदितो धीमान्भीमं च बलिनां वरम् ॥ ००८ ॥

पूजयामास धौम्यं च यमाभ्यामभिवादितः ।
परिष्वज्य गुडाकेशं द्रौपदीं पर्यसान्त्वयत् ॥ ००९ ॥

स दृष्ट्वा फल्गुनं वीरं चिरस्य प्रियमागतम् ।
पर्यष्वजत दाशार्हः पुनः पुनररिंदमम् ॥ ०१० ॥

तथैव सत्यभामापि द्रौपदीं परिषस्वजे ।
पाण्डवानां प्रियां भार्यां कृष्णस्य महिषी प्रिया ॥ ०११ ॥

ततस्ते पाण्डवाः सर्वे सभार्याः सपुरोहिताः ।
आनर्चुः पुण्डरीकाक्षं परिवव्रुश्च सर्वशः ॥ ०१२ ॥

कृष्णस्तु पार्थेन समेत्य विद्वा ;न्धनञ्जयेनासुरतर्जनेन ।
बभौ यथा भूतपतिर्महात्मा ; समेत्य साक्षाद्भगवान्गुहेन ॥ ०१३ ॥

ततः समस्तानि किरीटमाली ; वनेषु वृत्तानि गदाग्रजाय ।
उक्त्वा यथावत्पुनरन्वपृच्छ ;त्कथं सुभद्रा च तथाभिमन्युः ॥ ०१४ ॥

स पूजयित्वा मधुहा यथाव ;त्पार्थांश्च कृष्णां च पुरोहितं च ।
उवाच राजानमभिप्रशंस ;न्युधिष्ठिरं तत्र सहोपविश्य ॥ ०१५ ॥

धर्मः परः पाण्डव राज्यलाभा ;त्तस्यार्थमाहुस्तप एव राजन् ।
सत्यार्जवाभ्यां चरता स्वधर्मं ; जितस्तवायं च परश्च लोकः ॥ ०१६ ॥

अधीतमग्रे चरता व्रतानि ; सम्यग्धनुर्वेदमवाप्य कृत्स्नम् ।
क्षात्रेण धर्मेण वसूनि लब्ध्वा ; सर्वे ह्यवाप्ताः क्रतवः पुराणाः ॥ ०१७ ॥

न ग्राम्यधर्मेषु रतिस्तवास्ति ; कामान्न किञ्चित्कुरुषे नरेन्द्र ।
न चार्थलोभात्प्रजहासि धर्मं ; तस्मात्स्वभावादसि धर्मराजः ॥ ०१८ ॥

दानं च सत्यं च तपश्च राज ;ञ्श्रद्धा च शान्तिश्च धृतिः क्षमा च ।
अवाप्य राष्ट्राणि वसूनि भोगा ;नेषा परा पार्थ सदा रतिस्ते ॥ ०१९ ॥

यदा जनौघः कुरुजाङ्गलानां ; कृष्णां सभायामवशामपश्यत् ।
अपेतधर्मव्यवहारवृत्तं ; सहेत तत्पाण्डव कस्त्वदन्यः ॥ ०२० ॥

असंशयं सर्वसमृद्धकामः ; क्षिप्रं प्रजाः पालयितासि सम्यक् ।

इमे वयं निग्रहणे कुरूणां ; यदि प्रतिज्ञा भवतः समाप्ता ॥ ०२१ ॥

धौम्यं च कृष्णां च युधिष्ठिरं च ; यमौ च भीमं च दशार्हसिंहः ।
उवाच दिष्ट्या भवतां शिवेन ; प्राप्तः किरीटी मुदितः कृतास्त्रः ॥ ०२२ ॥

प्रोवाच कृष्णामपि याज्ञसेनीं ; दशार्हभर्ता सहितः सुहृद्भिः ।
कृष्णे धनुर्वेदरतिप्रधानाः ; सत्यव्रतास्ते शिशवः सुशीलाः ॥ ०२३ ॥

सद्भिः सदैवाचरितं समाधिं ; चरन्ति पुत्रास्तव याज्ञसेनि ॥ ०२३ ॥

राज्येन राष्ट्रैश्च निमन्त्र्यमाणाः ; पित्रा च कृष्णे तव सोदरैश्च ।
न यज्ञसेनस्य न मातुलानां ; गृहेषु बाला रतिमाप्नुवन्ति ॥ ०२४ ॥

आनर्तमेवाभिमुखाः शिवेन ; गत्वा धनुर्वेदरतिप्रधानाः ।
तवात्मजा वृष्णिपुरं प्रविश्य ; न दैवतेभ्यः स्पृहयन्ति कृष्णे ॥ ०२५ ॥

यथा त्वमेवार्हसि तेषु वृत्तिं ; प्रयोक्तुमार्या च यथैव कुन्ती ।
तेष्वप्रमादेन सदा करोति ; तथा च भूयश्च तथा सुभद्रा ॥ ०२६ ॥

यथानिरुद्धस्य यथाभिमन्यो ;यथा सुनीथस्य यथैव भानोः ।
तथा विनेता च गतिश्च कृष्णे ; तवात्मजानामपि रौक्मिणेयः ॥ ०२७ ॥

गदासिचर्मग्रहणेषु शूरा ;नस्त्रेषु शिक्षासु रथाश्वयाने ।
सम्यग्विनेता विनयत्यतन्द्री ;स्तांश्चाभिमन्युः सततं कुमारः ॥ ०२८ ॥

स चापि सम्यक्प्रणिधाय शिक्षा ;मस्त्राणि चैषां गुरुवत्प्रदाय ।
तवात्मजानां च तथाभिमन्योः ; पराक्रमैस्तुष्यति रौक्मिणेयः ॥ ०२९ ॥

यदा विहारं प्रसमीक्षमाणाः ; प्रयान्ति पुत्रास्तव याज्ञसेनि ।
एकैकमेषामनुयान्ति तत्र ; रथाश्च यानानि च दन्तिनश्च ॥ ०३० ॥

अथाब्रवीद्धर्मराजं तु कृष्णो ; दशार्हयोधाः कुकुरान्धकाश्च ।
एते निदेशं तव पालयन्ति ; तिष्ठन्ति यत्रेच्छसि तत्र राजन् ॥ ०३१ ॥

आवर्ततां कार्मुकवेगवाता ; हलायुधप्रग्रहणा मधूनाम् ।
सेना तवार्थेषु नरेन्द्र यत्ता ; ससादिपत्त्यश्वरथा सनागा ॥ ०३२ ॥

प्रस्थाप्यतां पाण्डव धार्तराष्ट्रः ; सुयोधनः पापकृतां वरिष्ठः ।
स सानुबन्धः ससुहृद्गणश्च ; सौभस्य सौभाधिपतेश्च मार्गम् ॥ ०३३ ॥

कामं तथा तिष्ठ नरेन्द्र तस्मि ;न्यथा कृतस्ते समयः सभायाम् ।
दाशार्हयोधैस्तु ससादियोधं ; प्रतीक्षतां नागपुरं भवन्तम् ॥ ०३४ ॥

व्यपेतमन्युर्व्यपनीतपाप्मा ; विहृत्य यत्रेच्छसि तत्र कामम् ।
ततः समृद्धं प्रथमं विशोकः ; प्रपत्स्यसे नागपुरं सराष्ट्रम् ॥ ०३५ ॥

ततस्तदाज्ञाय मतं महात्मा ; यथावदुक्तं पुरुषोत्तमेन ।
प्रशस्य विप्रेक्ष्य च धर्मराजः ; कृताञ्जलिः केशवमित्युवाच ॥ ०३६ ॥

असंशयं केशव पाण्डवानां ; भवान्गतिस्त्वच्छरणा हि पार्थाः ।
कालोदये तच्च ततश्च भूयः ; कर्ता भवान्कर्म न संशयोऽस्ति ॥ ०३७ ॥

यथाप्रतिज्ञं विहृतश्च कालः ; सर्वाः समा द्वादश निर्जनेषु ।
अज्ञातचर्यां विधिवत्समाप्य ; भवद्गताः केशव पाण्डवेयाः ॥ ०३८ ॥

वैशंपायन उवाच ॥

तथा वदति वार्ष्णेये धर्मराजे च भारत ।
अथ पश्चात्तपोवृद्धो बहुवर्षसहस्रधृक् ॥ ०३९ ॥

प्रत्यदृष्यत धर्मात्मा मार्कण्डेयो महातपाः ॥ ०३९ ॥

तमागतमृषिं वृद्धं बहुवर्षसहस्रिणम् ।
आनर्चुर्ब्राह्मणाः सर्वे कृष्णश्च सह पाण्डवैः ॥ ०४० ॥

तमर्चितं सुविष्वस्तमासीनमृषिसत्तमम् ।
ब्राह्मणानां मतेनाह पाण्डवानां च केशवः ॥ ०४१ ॥

शुश्रूषवः पाण्डवास्ते ब्राह्मणाश्च समागताः ।
द्रौपदी सत्यभामा च तथाहं परमं वचः ॥ ०४२ ॥

पुरावृत्ताः कथाः पुण्याः सदाचाराः सनातनाः ।
राज्ञां स्त्रीणामृषीणां च मार्कण्डेय विचक्ष्व नः ॥ ०४३ ॥

तेषु तत्रोपविष्टेषु देवर्षिरपि नारदः ।
आजगाम विशुद्धात्मा पाण्डवानवलोककः ॥ ०४४ ॥

तमप्यथ महात्मानं सर्वे तु पुरुषर्षभाः ।
पाद्यार्घ्याभ्यां यथान्यायमुपतस्थुर्मनीषिणम् ॥ ०४५ ॥

नारदस्त्वथ देवर्षिर्ज्ञात्वा तांस्तु कृतक्षणान् ।
मार्कण्डेयस्य वदतस्तां कथामन्वमोदत ॥ ०४६ ॥

उवाच चैनं कालज्ञः स्मयन्निव स नारदः ।
ब्रह्मर्षे कथ्यतां यत्ते पाण्डवेषु विवक्षितम् ॥ ०४७ ॥

एवमुक्तः प्रत्युवाच मार्कण्डेयो महातपाः ।
क्षणं कुरुध्वं विपुलमाख्यातव्यं भविष्यति ॥ ०४८ ॥

एवमुक्ताः क्षणं चक्रुः पाण्डवाः सह तैर्द्विजैः ।
मध्यंदिने यथादित्यं प्रेक्षन्तस्तं महामुनिम् ॥ ०४९ ॥

# अध्याय १८१

वैशंपायन उवाच ॥

तं विवक्षन्तमालक्ष्य कुरुराजो महामुनिम् ।
कथासञ्जननार्थाय चोदयामास पाण्डवः ॥ ००१ ॥

भवान्दैवतदैत्यानामृषीणां च महात्मनाम् ।
राजर्षीणां च सर्वेषां चरितज्ञः सनातनः ॥ ००२ ॥

सेव्यश्चोपासितव्यश्च मतो नः काङ्क्षितश्चिरम् ।
अयं च देवकीपुत्रः प्राप्तोऽस्मानवलोककः ॥ ००३ ॥

भवत्येव हि मे बुद्धिर्दृष्ट्वात्मानं सुखाच्च्युतम् ।
धार्तराष्ट्रांश्च दुर्वृत्तानृध्यतः प्रेक्ष्य सर्वशः ॥ ००४ ॥

कर्मणः पुरुषः कर्ता शुभस्याप्यशुभस्य च ।
स्वफलं तदुपाश्नाति कथं कर्ता स्विदीश्वरः ॥ ००५ ॥

अथ वा सुखदुःखेषु नृणां ब्रह्मविदां वर ।
इह वा कृतमन्वेति परदेहेऽथ वा पुनः ॥ ००६ ॥

देही च देहं संत्यज्य मृग्यमाणः शुभाशुभैः ।
कथं संयुज्यते प्रेत्य इह वा द्विजसत्तम ॥ ००७ ॥

ऐहलौकिकमेवैतदुताहो पारलौकिकम् ।
क्व च कर्माणि तिष्ठन्ति जन्तोः प्रेतस्य भार्गव ॥ ००८ ॥

मार्कण्डेय उवाच ॥

त्वद्युक्तोऽयमनुप्रश्नो यथावद्वदतां वर ।
विदितं वेदितव्यं ते स्थित्यर्थमनुपृच्छसि ॥ ००९ ॥

अत्र ते वर्तयिष्यामि तदिहैकमनाः शृणु ।
यथेहामुत्र च नरः सुखदुःखमुपाश्नुते ॥ ०१० ॥

निर्मलानि शरीराणि विशुद्धानि शरीरिणाम् ।
ससर्ज धर्मतन्त्राणि पूर्वोत्पन्नः प्रजापतिः ॥ ०११ ॥

अमोघबलसङ्कल्पाः सुव्रताः सत्यवादिनः ।
ब्रह्मभूता नराः पुण्याः पुराणाः कुरुनन्दन ॥ ०१२ ॥

सर्वे देवैः समायान्ति स्वच्छन्देन नभस्तलम् ।
ततश्च पुनरायान्ति सर्वे स्वच्छन्दचारिणः ॥ ०१३ ॥

स्वच्छन्दमरणाश्चासन्नराः स्वच्छन्दजीविनः ।
अल्पबाधा निरातङ्का सिद्धार्था निरुपद्रवाः ॥ ०१४ ॥

द्रष्टारो देवसंघानामृषीणां च महात्मनाम् ।
प्रत्यक्षाः सर्वधर्माणां दान्ता विगतमत्सराः ॥ ०१५ ॥

आसन्वर्षसहस्राणि तथा पुत्रसहस्रिणः ।
ततः कालान्तरेऽन्यस्मिन्पृथिवीतलचारिणः ॥ ०१६ ॥

कामक्रोधाभिभूतास्ते मायाव्याजोपजीविनः ।
लोभमोहाभिभूताश्च त्यक्ता देवैस्ततो नराः ॥ ०१७ ॥

अशुभैः कर्मभिः पापास्तिर्यङ्नरकगामिनः ।
संसारेषु विचित्रेषु पच्यमानाः पुनः पुनः ॥ ०१८ ॥

मोघेष्टा मोघसङ्कल्पा मोघज्ञाना विचेतसः ।
सर्वातिशङ्किनश्चैव संवृत्ताः क्लेशभागिनः ॥ ०१९ ॥

अशुभैः कर्मभिश्चापि प्रायशः परिचिह्निताः ॥ ०१९ ॥

दौष्कुल्या व्याधिबहुला दुरात्मानोऽप्रतापिनः ।
भवन्त्यल्पायुषः पापा रौद्रकर्मफलोदयाः ॥ ०२० ॥

नाथन्तः सर्वकामानां नास्तिका भिन्नसेतवः ॥ ०२० ॥

जन्तोः प्रेतस्य कौन्तेय गतिः स्वैरिह कर्मभिः ।
प्राज्ञस्य हीनबुद्धेश्च कर्मकोशः क्व तिष्ठति ॥ ०२१ ॥

क्वस्थस्तत्समुपाश्नाति सुकृतं यदि वेतरत् ।
इति ते दर्शनं यच्च तत्राप्यनुनयं शृणु ॥ ०२२ ॥

अयमादिशरीरेण देवसृष्टेन मानवः ।
शुभानामशुभानां च कुरुते सञ्चयं महत् ॥ ०२३ ॥

आयुषोऽन्ते प्रहायेदं क्षीणप्रायं कलेवरम् ।
संभवत्येव युगपद्योनौ नास्त्यन्तराभवः ॥ ०२४ ॥

तत्रास्य स्वकृतं कर्म छायेवानुगतं सदा ।
फलत्यथ सुखार्हो वा दुःखार्हो वापि जायते ॥ ०२५ ॥

कृतान्तविधिसंयुक्तः स जन्तुर्लक्षणैः शुभैः ।
अशुभैर्वा निरादानो लक्ष्यते ज्ञानदृष्टिभिः ॥ ०२६ ॥

एषा तावदबुद्धीनां गतिरुक्ता युधिष्ठिर ।
अतः परं ज्ञानवतां निबोध गतिमुत्तमाम् ॥ ०२७ ॥

मनुष्यास्तप्ततपसः सर्वागमपरायणाः ।
स्थिरव्रताः सत्यपरा गुरुशुश्रूषणे रताः ॥ ०२८ ॥

सुशीलाः शुक्लजातीयाः क्षान्ता दान्ताः सुतेजसः ।
शुभयोन्यन्तरगताः प्रायशः शुभलक्षणाः ॥ ०२९ ॥

जितेन्द्रियत्वाद्वशिनः शुक्लत्वान्मन्दरोगिणः ।
अल्पबाधपरित्रासाद्भवन्ति निरुपद्रवाः ॥ ०३० ॥

च्च्यवन्तं जायमानं च गर्भस्थं चैव सर्वशः ।
स्वमात्मानं परं चैव बुध्यन्ते ज्ञानचक्षुषः ॥ ०३१ ॥

कर्मभूमिमिमां प्राप्य पुनर्यान्ति सुरालयम् ॥ ०३१ ॥

किञ्चिद्दैवाद्धठात्किञ्चित्किञ्चिदेव स्वकर्मभिः ।
प्राप्नुवन्ति नरा राजन्मा तेऽस्त्वन्या विचारणा ॥ ०३२ ॥

इमामत्रोपमां चापि निबोध वदतां वर ।
मनुष्यलोके यच्छ्रेयः परं मन्ये युधिष्ठिर ॥ ०३३ ॥

इह वैकस्य नामुत्र अमुत्रैकस्य नो इह ।
इह चामुत्र चैकस्य नामुत्रैकस्य नो इह ॥ ०३४ ॥

धनानि येषां विपुलानि सन्ति ; नित्यं रमन्ते सुविभूषिताङ्गाः ।
तेषामयं शत्रुवरघ्न लोको ; नासौ सदा देहसुखे रतानाम् ॥ ०३५ ॥

ये योगयुक्तास्तपसि प्रसक्ताः ; स्वाध्यायशीला जरयन्ति देहान् ।
जितेन्द्रिया भूतहिते निविष्टा ;स्तेषामसौ नायमरिघ्न लोकः ॥ ०३६ ॥

ये धर्ममेव प्रथमं चरन्ति ; धर्मेण लब्ध्वा च धनानि काले ।

दारानवाप्य क्रतुभिर्यजन्ते ; तेषामयं चैव परश्च लोकः ॥ ०३७ ॥

ये नैव विद्यां न तपो न दानं ; न चापि मूढाः प्रजने यतन्ते ।
न चाधिगच्छन्ति सुखान्यभाग्या ;स्तेषामयं चैव परश्च नास्ति ॥ ०३८ ॥

सर्वे भवन्तस्त्वतिवीर्यसत्त्वा ; दिव्यौजसः संहननोपपन्नाः ।
लोकादमुष्मादवनिं प्रपन्नाः ; स्वधीतविद्याः सुरकार्यहेतोः ॥ ०३९ ॥

कृत्वैव कर्माणि महान्ति शूरा ;स्तपोदमाचारविहारशीलाः ।
देवानृषीन्प्रेतगणांश्च सर्वा ;न्संतर्पयित्वा विधिना परेण ॥ ०४० ॥

स्वर्गं परं पुण्यकृतां निवासं ; क्रमेण संप्राप्स्यथ कर्मभिः स्वैः ।
मा भूद्विशङ्का तव कौरवेन्द्र ; दृष्ट्वात्मनः क्लेशमिमं सुखार्ह ॥ ०४१ ॥

---

# अध्याय १८२

वैशंपायन उवाच ॥

मार्कण्डेयं महात्मानमूचुः पाण्डुसुतास्तदा ।
माहात्म्यं द्विजमुख्यानां श्रोतुमिच्छाम कथ्यताम् ॥ ००१ ॥

एवमुक्तः स भगवान्मार्कण्डेयो महातपाः ।
उवाच सुमहातेजाः सर्वशास्त्रविशारदः ॥ ००२ ॥

हैहयानां कुलकरो राजा परपुरञ्जयः ।
कुमारो रूपसंपन्नो मृगयामचरद्बली ॥ ००३ ॥

चरमाणस्तु सोऽरण्ये तृणवीरुत्समावृते ।
कृष्णाजिनोत्तरासङ्गं ददर्श मुनिमन्तिके ॥ ००४ ॥

स तेन निहतोऽरण्ये मन्यमानेन वै मृगम् ॥ ००४ ॥

व्यथितः कर्म तत्कृत्वा शोकोपहतचेतनः ।
जगाम हैहयानां वै सकाशं प्रथितात्मनाम् ॥ ००५ ॥

राज्ञां राजीवनेत्रोसौ कुमारः पृथिवीपते ।
तेषां च तद्यथावृत्तं कथयामास वै तदा ॥ ००६ ॥

तं चापि हिंसितं तात मुनिं मूलफलाशिनम् ।
श्रुत्वा दृष्ट्वा च ते तत्र बभूवुर्दीनमानसाः ॥ ००७ ॥

कस्यायमिति ते सर्वे मार्गमाणास्ततस्ततः ।
जग्मुश्चारिष्टनेमेस्ते तार्क्ष्यस्याश्रममञ्जसा ॥ ००८ ॥

तेऽभिवाद्य महात्मानं तं मुनिं संशितव्रतम् ।
तस्थुः सर्वे स तु मुनिस्तेषां पूजामथाहरत् ॥ ००९ ॥

ते तमूचुर्महात्मानं न वयं सत्क्रियां मुने ।
त्वत्तोऽर्हाः कर्मदोषेण ब्राह्मणो हिंसितो हि नः ॥ ०१० ॥

तानब्रवीत्स विप्रर्षिः कथं वो ब्राह्मणो हतः ।
क्व चासौ ब्रूत सहिताः पश्यध्वं मे तपोबलम् ॥ ०११ ॥

ते तु तत्सर्वमखिलमाख्यायास्मै यथातथम् ।
नापश्यंस्तमृषिं तत्र गतासुं ते समागताः ॥ ०१२ ॥

अन्वेषमाणाः सव्रीडाः स्वप्नवद्गतमानसाः ॥ ०१२ ॥

तानब्रवीत्तत्र मुनिस्ताक्ष्यर्ः परपुरञ्जयः ।
स्यादयं ब्राह्मणः सोऽथ यो युष्माभिर्विनाशितः ॥ ०१३ ॥

पुत्रो ह्ययं मम नृपास्तपोबलसमन्वितः ॥ ०१३ ॥

ते तु दृष्ट्वैव तमृषिं विस्मयं परमं गताः ।
महदाश्चर्यमिति वै विब्रुवाणा महीपते ॥ ०१४ ॥

मृतो ह्ययमतो दृष्टः कथं जीवितमाप्तवान् ।
किमेतत्तपसो वीर्यं येनायं जीवितः पुनः ॥ ०१५ ॥

श्रोतुमिच्छाम विप्रर्षे यदि श्रोतव्यमित्युत ॥ ०१५ ॥

स तानुवाच नास्माकं मृत्युः प्रभवते नृपाः ।
कारणं वः प्रवक्ष्यामि हेतुयोगं समासतः ॥ ०१६ ॥

सत्यमेवाभिजानीमो नानृते कुर्महे मनः ।
स्वधर्ममनुतिष्ठामस्तस्मान्मृत्युभयं न नः ॥ ०१७ ॥

यद्ब्राह्मणानां कुशलं तदेषां कथयामहे ।
नैषां दुश्चरितं ब्रूमस्तस्मान्मृत्युभयं न नः ॥ ०१८ ॥

अतिथीनन्नपानेन भृत्यानत्यशनेन च ।
तेजस्विदेशवासाच्च तस्मान्मृत्युभयं न नः ॥ ०१९ ॥

एतद्वै लेशमात्रं वः समाख्यातं विमत्सराः ।
गच्छध्वं सहिताः सर्वे न पापाद्भयमस्ति वः ॥ ०२० ॥

एवमस्त्विति ते सर्वे प्रतिपूज्य महामुनिम् ।
स्वदेशमगमन्हृष्टा राजानो भरतर्षभ ॥ ०२१ ॥

# अध्याय १८३

मार्कण्डेय उवाच ॥

भूय एव तु माहात्म्यं ब्राह्मणानां निबोध मे ।
वैन्यो नामेह राजर्षिरश्वमेधाय दीक्षितः ॥ ००१ ॥

तमत्रिर्गन्तुमारेभे वित्तार्थमिति नः श्रुतम् ॥ ००१ ॥

भूयोऽथ नानुरुध्यत्स धर्मव्यक्तिनिदर्शनात् ।
सञ्चिन्त्य स महातेजा वनमेवान्वरोचयत् ॥ ००२ ॥

धर्मपत्नीं समाहूय पुत्रांश्चेदमुवाच ह ॥ ००२ ॥

प्राप्स्यामः फलमत्यन्तं बहुलं निरुपद्रवम् ।
अरण्यगमनं क्षिप्रं रोचतां वो गुणाधिकम् ॥ ००३ ॥

तं भार्या प्रत्युवाचेदं धर्ममेवानुरुध्यती ।
वैन्यं गत्वा महात्मानमर्थयस्व धनं बहु ॥ ००४ ॥

स ते दास्यति राजर्षिर्यजमानोऽर्थिने धनम् ॥ ००४ ॥

तत आदाय विप्रर्षे प्रतिगृह्य धनं बहु ।
भृत्यान्सुतान्संविभज्य ततो व्रज यथेप्सितम् ॥ ००५ ॥

एष वै परमो धर्मो धर्मविद्भिरुदाहृतः ॥ ००५ ॥

अत्रिरुवाच ॥

कथितो मे महाभागे गौतमेन महात्मना ।
वैन्यो धर्मार्थसंयुक्तः सत्यव्रतसमन्वितः ॥ ००६ ॥

किं त्वस्ति तत्र द्वेष्टारो निवसन्ति हि मे द्विजाः ।
यथा मे गौतमः प्राह ततो न व्यवसाम्यहम् ॥ ००७ ॥

तत्र स्म वाचं कल्याणीं धर्मकामार्थसंहिताम् ।
मयोक्तामन्यथा ब्रूयुस्ततस्ते वै निरर्थकाम् ॥ ००८ ॥

गमिष्यामि महाप्राज्ञे रोचते मे वचस्तव ।
गाश्च मे दास्यते वैन्यः प्रभूतं चार्थसञ्चयम् ॥ ००९ ॥

मार्कण्डेय उवाच ॥

एवमुक्त्वा जगामाशु वैन्ययज्ञं महातपाः ।
गत्वा च यज्ञायतनमत्रिस्तुष्टाव तं नृपम् ॥ ०१० ॥

राजन्वैन्य त्वमीशश्च भुवि त्वं प्रथमो नृपः ।
स्तुवन्ति त्वां मुनिगणास्त्वदन्यो नास्ति धर्मवित् ॥ ०११ ॥

तमब्रवीदृषिस्तत्र वचः क्रुद्धो महातपाः ।
मैवमत्रे पुनर्ब्रूया न ते प्रज्ञा समाहिता ॥ ०१२ ॥

अत्र नः प्रथमं स्थाता महेन्द्रो वै प्रजापतिः ॥ ०१२ ॥

अथात्रिरपि राजेन्द्र गौतमं प्रत्यभाषत ।
अयमेव विधाता च यथैवेन्द्रः प्रजापतिः ॥ ०१३ ॥

त्वमेव मुह्यसे मोहान्न प्रज्ञानं तवास्ति ह ॥ ०१३ ॥

गौतम उवाच ॥

जानामि नाहं मुह्यामि त्वं विवक्षुर्विमुह्यसे ।
स्तोष्यसेऽभ्युदयप्रेप्सुस्तस्य दर्शनसंश्रयात् ॥ ०१४ ॥

न वेत्थ परमं धर्मं न चावैषि प्रयोजनम् ।
बालस्त्वमसि मूढश्च वृद्धः केनापि हेतुना ॥ ०१५ ॥

मार्कण्डेय उवाच ॥

विवदन्तौ तथा तौ तु मुनीनां दर्शने स्थितौ ।
ये तस्य यज्ञे संवृत्तास्तेऽपृच्छन्त कथं त्विमौ ॥ ०१६ ॥

प्रवेशः केन दत्तोऽयमनयोर्वैन्यसंसदि ।
उच्चैः समभिभाषन्तौ केन कार्येण विष्ठितौ ॥ ०१७ ॥

ततः परमधर्मात्मा काश्यपः सर्वधर्मवित् ।
विवादिनावनुप्राप्तौ तावुभौ प्रत्यवेदयत् ॥ ०१८ ॥

अथाब्रवीत्सदस्यांस्तु गौतमो मुनिसत्तमान् ।
आवयोर्व्याहृतं प्रश्नं शृणुत द्विजपुङ्गवाः ॥ ०१९ ॥

वैन्यो विधातेत्याहात्रिरत्र नः संशयो महान् ॥ ०१९ ॥

श्रुत्वैव तु महात्मानो मुनयोऽभ्यद्रवन्द्रुतम् ।
सनत्कुमारं धर्मज्ञं संशयच्छेदनाय वै ॥ ०२० ॥

स च तेषां वचः श्रुत्वा यथातत्त्वं महातपाः ।
प्रत्युवाचाथ तानेवं धर्मार्थसहितं वचः ॥ ०२१ ॥

सनत्कुमार उवाच ॥

ब्रह्म क्षत्रेण सहितं क्षत्रं च ब्रह्मणा सह ।
राजा वै प्रथमो धर्मः प्रजानां पतिरेव च  ॥ ०२२  ॥

स एव शक्रः शुक्रश्च स धाता स बृहस्पतिः  ॥ ०२२  ॥

प्रजापतिर्विराड्सम्राट्क्षत्रियो भूपतिर्नृपः ।
य एभिः स्तूयते शब्दैः कस्तं नार्चितुमर्हति  ॥ ०२३  ॥

पुरायोनिर्युधाजिच्च अभिया मुदितो भवः ।
स्वर्णेता सहजिद्बभ्रुरिति राजाभिधीयते  ॥ ०२४  ॥

सत्यमन्युर्युधाजीवः सत्यधर्मप्रवर्तकः ।
अधर्मादृषयो भीता बलं क्षत्रे समादधन्  ॥ ०२५  ॥

आदित्यो दिवि देवेषु तमो नुदति तेजसा ।
तथैव नृपतिर्भूमावधर्मं नुदते भृशम्  ॥ ०२६  ॥

अतो राज्ञः प्रधानत्वं शास्त्रप्रामाण्यदर्शनात् ।
उत्तरः सिध्यते पक्षो येन राजेति भाषितम्  ॥ ०२७  ॥

मार्कण्डेय उवाच  ॥

ततः स राजा संहृष्टः सिद्धे पक्षे महामनाः ।
तमत्रिमब्रवीत्प्रीतः पूर्वं येनाभिसंस्तुतः  ॥ ०२८  ॥

यस्मात्सर्वमनुष्येषु ज्यायांसं मामिहाब्रवीः ।
सर्वदेवैश्च विप्रर्षे संमितं श्रेष्ठमेव च  ॥ ०२९  ॥

तस्मात्तेऽहं प्रदास्यामि विविधं वसु भूरि च  ॥ ०२९  ॥

दासीसहस्रं श्यामानां सुवस्त्राणामलङ्कृतम् ।
दश कोट्यो हिरण्यस्य रुक्मभारांस्तथा दश ॥ ०३० ॥

एतद्ददानि ते विप्र सर्वज्ञस्त्वं हि मे मतः ॥ ०३० ॥

तदत्रिर्न्यायतः सर्वं प्रतिगृह्य महामनाः ।
प्रत्याजगाम तेजस्वी गृहानेव महातपाः ॥ ०३१ ॥

प्रदाय च धनं प्रीतः पुत्रेभ्यः प्रयतात्मवान् ।
तपः समभिसंधाय वनमेवान्वपद्यत ॥ ०३२ ॥

---

# अध्याय १८४

मार्कण्डेय उवाच ॥

अत्रैव च सरस्वत्या गीतं परपुरञ्जय ।
पृष्टया मुनिना वीर शृणु तार्क्ष्येण धीमता ॥ ००१ ॥

तार्क्ष्य उवाच ॥

किं नु श्रेयः पुरुषस्येह भद्रे ; कथं कुर्वन्न च्यवते स्वधर्मात् ।
आचक्ष्व मे चारुसर्वाङ्गि सर्वं ; त्वयानुशिष्टो न च्यवेयं स्वधर्मात् ॥ ००२ ॥

कथं चाग्निं जुहुयां पूजये वा ; कस्मिन्काले केन धर्मो न नश्येत् ।
एतत्सर्वं सुभगे प्रब्रवीहि ; यथा लोकान्विरजाः सञ्चरेयम् ॥ ००३ ॥

मार्कण्डेय उवाच ॥

एवं पृष्टा प्रीतियुक्तेन तेन ; शुश्रूषुमीक्ष्योत्तमबुद्धियुक्तम् ।
तार्क्ष्यं विप्रं धर्मयुक्तं हितं च ; सरस्वती वाक्यमिदं बभाषे ॥ ००४ ॥

सरस्वत्युवाच ॥

यो ब्रह्म जानाति यथाप्रदेशं ; स्वाध्यायनित्यः शुचिरप्रमत्तः ।
स वै पुरो देवपुरस्य गन्ता ; सहामरैः प्राप्नुयात्प्रीतियोगम् ॥ ००५ ॥

तत्र स्म रम्या विपुला विशोकाः ; सुपुष्पिताः पुष्करिण्यः सुपुण्याः ।
अकर्दमा मीनवत्यः सुतीर्था ; हिरण्मयैरावृताः पुण्डरीकैः ॥ ००६ ॥

तासां तीरेष्वासते पुण्यकर्मा ; महीयमानः पृथगप्सरोभिः ।
सुपुण्यगन्धाभिरलङ्कृताभि ;र्हिरण्यवर्णाभिरतीव हृष्टः ॥ ००७ ॥

परं लोकं गोप्रदास्त्वाप्नुवन्ति ; दत्त्वानड्वाहं सूर्यलोकं व्रजन्ति ।
वासो दत्त्वा चन्द्रमसः स लोकं ; दत्त्वा हिरण्यममृतत्वमेति ॥ ००८ ॥

धेनुं दत्त्वा सुव्रतां साधुदोहां ; कल्याणवत्सामपलायिनीं च ।
यावन्ति रोमाणि भवन्ति तस्या ;स्तावद्वर्षाण्यश्नुते स्वर्गलोकम् ॥ ००९ ॥

अनड्वाहं सुव्रतं यो ददाति ; हलस्य वोढारमनन्तवीर्यम् ।
धुरंधरं बलवन्तं युवानं ; प्राप्नोति लोकान्दश धेनुदस्य ॥ ०१० ॥

यः सप्त वर्षाणि जुहोति तार्क्ष्य ; हव्यं त्वग्नौ सुव्रतः साधुशीलः ।
सप्तावरान्सप्त पूर्वान्पुनाति ; पितामहानात्मनः कर्मभिः स्वैः ॥ ०११ ॥

तार्क्ष्य उवाच ॥

किमग्निहोत्रस्य व्रतं पुराण ;माचक्ष्व मे पृच्छतश्चारुरूपे ।
त्वयानुशिष्टोऽहमिहाद्य विद्यां ; यदग्निहोत्रस्य व्रतं पुराणम् ॥ ०१२ ॥

सरस्वत्युवाच ॥

न चाशुचिर्नाप्यनिर्णिक्तपाणि ;र्नाब्रह्मविज्जुहुयान्नाविपश्चित् ।
बुभुक्षवः शुचिकामा हि देवा ; नाश्रद्दधानाद्धि हविर्जुषन्ति ॥ ०१३ ॥

नाश्रोत्रियं देवहव्ये नियुञ्ज्या ;न्मोघं परा सिञ्चति तादृशो हि ।
अपूर्णमश्रोत्रियमाह तार्क्ष्य ; न वै तादृग्जुहुयादग्निहोत्रम् ॥ ०१४ ॥

कृशानुं ये जुह्वति श्रद्दधानाः ; सत्यव्रता हुतशिष्टाशिनश्च ।
गवां लोकं प्राप्य ते पुण्यगन्धं ; पश्यन्ति देवं परमं चापि सत्यम् ॥ ०१५ ॥

तार्क्ष्य उवाच ॥

क्षेत्रज्ञभूतां परलोकभावे ; कर्मोदये बुद्धिमतिप्रविष्टाम् ।
प्रज्ञां च देवीं सुभगे विमृश्य ; पृच्छामि त्वां का ह्यसि चारुरूपे ॥ ०१६ ॥

सरस्वत्युवाच ॥

अग्निहोत्रादहमभ्यागतास्मि ; विप्रर्षभाणां संशयच्छेदनाय ।
त्वत्संयोगादहमेतदब्रुवं ; भावे स्थिता तथ्यमर्थं यथावत् ॥ ०१७ ॥

तार्क्ष्य उवाच ॥

न हि त्वया सदृशी काचिदस्ति ; विभ्राजसे ह्यतिमात्रं यथा श्रीः ।
रूपं च ते दिव्यमत्यन्तकान्तं ; प्रज्ञां च देवीं सुभगे बिभर्षि ॥ ०१८ ॥

सरस्वत्युवाच ॥

श्रेष्ठानि यानि द्विपदां वरिष्ठ ; यज्ञेषु विद्वन्नुपपादयन्ति ।
तैरेवाहं संप्रवृद्धा भवामि ; आप्यायिता रूपवती च विप्र ॥ ०१९ ॥

यच्चापि द्रव्यमुपयुज्यते ह ; वानस्पत्यमायसं पार्थिवं वा ।
दिव्येन रूपेण च प्रज्ञया च ; तेनैव सिद्धिरिति विद्धि विद्वन् ॥ ०२० ॥

ताक्ष्यं उवाच ॥

इदं श्रेयः परमं मन्यमाना ; व्यायच्छन्ते मुनयः संप्रतीताः ।
आचक्ष्व मे तं परमं विशोकं ; मोक्षं परं यं प्रविशन्ति धीराः ॥ ०२१ ॥

सरस्वत्युवाच ॥

तं वै परं वेदविदः प्रपन्नाः ; परं परेभ्यः प्रथितं पुराणम् ।
स्वाध्यायदानव्रतपुण्ययोगै ;स्तपोधना वीतशोका विमुक्ताः ॥ ०२२ ॥

तस्याथ मध्ये वेतसः पुण्यगन्धः ; सहस्रशाखो विमलो विभाति ।
तस्य मूलात्सरितः प्रस्रवन्ति ; मधूदकप्रस्रवणा रमण्यः ॥ ०२३ ॥

शाखां शाखां महानद्यः संयान्ति सिकतासमाः ।
धानापूपा मांसशाकाः सदा पायसकर्दमाः ॥ ०२४ ॥

यस्मिन्नग्निमुखा देवाः सेन्द्राः सह मरुद्गणैः ।
ईजिरे क्रतुभिः श्रेष्ठैस्तत्पदं परमं मुने ॥ ०२५ ॥

# मत्स्योपाख्यानम्

## अध्याय १८५

वैशंपायन उवाच ॥

ततः स पाण्डवो भूयो मार्कण्डेयमुवाच ह ।
कथयस्वेह चरितं मनोर्वैवस्वतस्य मे ॥ ००१ ॥

मार्कण्डेय उवाच ॥

विवस्वतः सुतो राजन्परमर्षिः प्रतापवान् ।
बभूव नरशार्दूल प्रजापतिसमद्युतिः ॥ ००२ ॥

ओजसा तेजसा लक्ष्म्या तपसा च विशेषतः ।
अतिचक्राम पितरं मनुः स्वं च पितामहम् ॥ ००३ ॥

ऊर्ध्वबाहुर्विशालायां बदर्यां स नराधिपः ।
एकपादस्थितस्तीव्रं चचार सुमहत्तपः ॥ ००४ ॥

अवाक्शिरास्तथा चापि नेत्रैरनिमिषैर्दृढम् ।
सोऽतप्यत तपो घोरं वर्षाणामयुतं तदा ॥ ००५ ॥

तं कदाचित्तपस्यन्तमार्द्रचीरजटाधरम् ।
वीरिणीतीरमागम्य मत्स्यो वचनमब्रवीत् ॥ ००६ ॥

भगवन्क्षुद्रमत्स्योऽस्मि बलवद्भ्यो भयं मम ।
मत्स्येभ्यो हि ततो मां त्वं त्रातुमर्हसि सुव्रत ॥ ००७ ॥

दुर्बलं बलवन्तो हि मत्स्यं मत्स्या विशेषतः ।
भक्षयन्ति यथा वृत्तिर्विहिता नः सनातनी ॥ ००८ ॥

तस्माद्भयौघान्महतो मज्जन्तं मां विशेषतः ।
त्रातुमर्हसि कर्तास्मि कृते प्रतिकृतं तव ॥ ००९ ॥

स मत्स्यवचनं श्रुत्वा कृपयाभिपरिप्लुतः ।
मनुर्वैवस्वतोऽगृह्णात्तं मत्स्यं पाणिना स्वयम् ॥ ०१० ॥

उदकान्तमुपानीय मत्स्यं वैवस्वतो मनुः ।
अलिञ्जरे प्राक्षिपत्स चन्द्रांशुसदृशप्रभम् ॥ ०११ ॥

स तत्र ववृधे राजन्मत्स्यः परमसत्कृतः ।
पुत्रवच्चाकरोत्तस्मिन्मनुर्भावं विशेषतः ॥ ०१२ ॥

अथ कालेन महता स मत्स्यः सुमहानभूत् ।
अलिञ्जरे जले चैव नासौ समभवत्किल ॥ ०१३ ॥

अथ मत्स्यो मनुं दृष्ट्वा पुनरेवाभ्यभाषत ।
भगवन्साधु मेऽद्यान्यत्स्थानं संप्रतिपादय ॥ ०१४ ॥

उद्धृत्यालिञ्जरात्तस्मात्ततः स भगवान्मुनिः ।
तं मत्स्यमनयद्वापीं महतीं स मनुस्तदा ॥ ०१५ ॥

तत्र तं प्राक्षिपच्चापि मनुः परपुरञ्जय ।
अथावर्धत मत्स्यः स पुनर्वर्षगणान्बहून् ॥ ०१६ ॥

द्वियोजनायता वापी विस्तृता चापि योजनम् ।
तस्यां नासौ समभवन्मत्स्यो राजीवलोचन ॥ ०१७ ॥

विचेष्टितुं वा कौन्तेय मत्स्यो वाप्यां विशां पते ॥ ०१७ ॥

मनुं मत्स्यस्ततो दृष्ट्वा पुनरेवाभ्यभाषत ।

नय मां भगवन्साधो समुद्रमहिषीं प्रभो ॥ ०१८ ॥

गङ्गां तत्र निवत्स्यामि यथा वा तात मन्यसे ॥ ०१८ ॥

एवमुक्तो मनुर्मत्स्यमनयद्भगवान्वशी ।
नदीं गङ्गां तत्र चैनं स्वयं प्राक्षिपदच्युतः ॥ ०१९ ॥

स तत्र ववृधे मत्स्यः किञ्चित्कालमरिंदम ।
ततः पुनर्मनुं दृष्ट्वा मत्स्यो वचनमब्रवीत् ॥ ०२० ॥

गङ्गायां हि न शक्नोमि बृहत्त्वाच्चेष्टितुं प्रभो ।
समुद्रं नय मामाशु प्रसीद भगवन्निति ॥ ०२१ ॥

उद्धृत्य गङ्गासलिलात्ततो मत्स्यं मनुः स्वयम् ।
समुद्रमनयत्पार्थ तत्र चैनमवासृजत् ॥ ०२२ ॥

सुमहानपि मत्स्यः सन्स मनोर्मनसस्तदा ।
आसीद्यथेष्टहार्यश्च स्पर्शगन्धसुखश्च वै ॥ ०२३ ॥

यदा समुद्रे प्रक्षिप्तः स मत्स्यो मनुना तदा ।
तत एनमिदं वाक्यं स्मयमान इवाब्रवीत् ॥ ०२४ ॥

भगवन्कृता हि मे रक्षा त्वया सर्वा विशेषतः ।
प्राप्तकालं तु यत्कार्यं त्वया तच्छ्रूयतां मम ॥ ०२५ ॥

अचिराद्भगवन्भौममिदं स्थावरजङ्गमम् ।
सर्वमेव महाभाग प्रलयं वै गमिष्यति ॥ ०२६ ॥

संप्रक्षालनकालोऽयं लोकानां समुपस्थितः ।
तस्मात्त्वां बोधयाम्यद्य यत्ते हितमनुत्तमम् ॥ ०२७ ॥

त्रसानां स्थावराणां च यच्चेङ्गं यच्च नेङ्गति ।
तस्य सर्वस्य संप्राप्तः कालः परमदारुणः ॥ ०२८ ॥

नौश्च कारयितव्या ते दृढा युक्तवटाकरा ।
तत्र सप्तर्षिभिः सार्धमारुहेथा महामुने ॥ ०२९ ॥

बीजानि चैव सर्वाणि यथोक्तानि मया पुरा ।
तस्यामारोहयेर्नावि सुसङ्गुप्तानि भागशः ॥ ०३० ॥

नौस्थश्च मां प्रतीक्षेथास्तदा मुनिजनप्रिय ।
आगमिष्याम्यहं शृङ्गी विज्ञेयस्तेन तापस ॥ ०३१ ॥

एवमेतत्त्वया कार्यमापृष्टोऽसि व्रजाम्यहम् ।
नातिशङ्क्यमिदं चापि वचनं ते ममाभिभो ॥ ०३२ ॥

एवं करिष्य इति तं स मत्स्यं प्रत्यभाषत ।
जग्मतुश्च यथाकाममनुज्ञाप्य परस्परम् ॥ ०३३ ॥

ततो मनुर्महाराज यथोक्तं मत्स्यकेन ह ।
बीजान्यादाय सर्वाणि सागरं पुप्लुवे तदा ॥ ०३४ ॥

नावा तु शुभया वीर महोर्मिणमरिंदम ॥ ०३४ ॥

चिन्तयामास च मनुस्तं मत्स्यं पृथिवीपते ।
स च तच्चिन्तितं ज्ञात्वा मत्स्यः परपुरञ्जय ॥ ०३५ ॥

शृङ्गी तत्राजगामाशु तदा भरतसत्तम ॥ ०३५ ॥

तं दृष्ट्वा मनुजेन्द्रेन्द्र मनुर्मत्स्यं जलार्णवे ।
शृङ्गिणं तं यथोक्तेन रूपेणाद्रिमिवोच्छ्रितम् ॥ ०३६ ॥

वटाकरमयं पाशमथ मत्स्यस्य मूर्धनि ।
मनुर्मनुजशार्दूल तस्मिञ्श्रृङ्गे न्यवेशयत् ॥ ०३७ ॥

संयतस्तेन पाशेन मत्स्यः परपुरञ्जय ।
वेगेन महता नावं प्राकर्षल्लवणाम्भसि ॥ ०३८ ॥

स ततार तया नावा समुद्रं मनुजेश्वर ।
नृत्यमानमिवोर्मीभिर्गर्जमानमिवाम्भसा ॥ ०३९ ॥

क्षोभ्यमाणा महावातैः सा नौस्तस्मिन्महोदधौ ।
घूर्णते चपलेव स्त्री मत्ता परपुरञ्जय ॥ ०४० ॥

नैव भूमिर्न च दिशः प्रदिशो वा चकाशिरे ।
सर्वमाम्भसमेवासीत्खं द्यौश्च नरपुङ्गव ॥ ०४१ ॥

एवंभूते तदा लोके सङ्कुले भरतर्षभ ।
अदृश्यन्त सप्तर्षयो मनुर्मत्स्यः सहैव ह ॥ ०४२ ॥

एवं बहून्वर्षगणांस्तां नावं सोऽथ मत्स्यकः ।
चकर्षातन्द्रितो राजंस्तस्मिन्सलिलसञ्चये ॥ ०४३ ॥

ततो हिमवतः श्रृङ्गं यत्परं पुरुषर्षभ ।
तत्राकर्षत्ततो नावं स मत्स्यः कुरुनन्दन ॥ ०४४ ॥

ततोऽब्रवीत्तदा मत्स्यस्तानृषीन्प्रहसञ्शनैः ।
अस्मिन्हिमवतः श्रृङ्गे नावं बध्नीत माचिरम् ॥ ०४५ ॥

सा बद्धा तत्र तैस्तूर्णमृषिभिर्भरतर्षभ ।
नौर्मत्स्यस्य वचः श्रुत्वा श्रृङ्गे हिमवतस्तदा ॥ ०४६ ॥

तच्च नौबन्धनं नाम श्रृङ्गं हिमवतः परम् ।

ख्यातमद्यापि कौन्तेय तद्विद्धि भरतर्षभ ॥ ०४७ ॥

अथाब्रवीदनिमिषस्तानृषीन्सहितांस्तदा ।
अहं प्रजापतिर्ब्रह्मा मत्परं नाधिगम्यते ॥ ०४८ ॥

मत्स्यरूपेण यूयं च मयास्मान्मोक्षिता भयात् ॥ ०४८ ॥

मनुना च प्रजाः सर्वाः सदेवासुरमानवाः ।
स्रष्टव्याः सर्वलोकाश्च यच्चेङ्गं यच्च नेङ्गति ॥ ०४९ ॥

तपसा चातितीव्रेण प्रतिभास्य भविष्यति ।
मत्प्रसादात्प्रजासर्गे न च मोहं गमिष्यति ॥ ०५० ॥

इत्युक्त्वा वचनं मत्स्यः क्षणेनादर्शनं गतः ।
स्रष्टुकामः प्रजाश्चापि मनुर्वैवस्वतः स्वयम् ॥ ०५१ ॥

प्रमूढोऽभूत्प्रजासर्गे तपस्तेपे महत्ततः ॥ ०५१ ॥

तपसा महता युक्तः सोऽथ स्रष्टुं प्रचक्रमे ।
सर्वाः प्रजा मनुः साक्षाद्यथावद्भरतर्षभ ॥ ०५२ ॥

इत्येतन्मात्स्यकं नाम पुराणं परिकीर्तितम् ।
आख्यानमिदमाख्यातं सर्वपापहरं मया ॥ ०५३ ॥

य इदं शृणुयान्नित्यं मनोश्चरितमादितः ।
स सुखी सर्वसिद्धार्थः स्वर्गलोकमियान्नरः ॥ ०५४ ॥

# अध्याय १८६

वैशंपायन उवाच ॥

ततः स पुनरेवाथ मार्कण्डेयं यशस्विनम् ।
पप्रच्छ विनयोपेतो धर्मराजो युधिष्ठिरः ॥ ००१ ॥

नैके युगसहस्रान्तास्त्वया दृष्टा महामुने ।
न चापीह समः कश्चिदायुषा तव विद्यते ॥ ००२ ॥

वर्जयित्वा महात्मानं ब्राह्मणं परमेष्ठिनम् ॥ ००२ ॥

अनन्तरिक्षे लोकेऽस्मिन्देवदानववर्जिते ।
त्वमेव प्रलये विप्र ब्रह्माणमुपतिष्ठसि ॥ ००३ ॥

प्रलये चापि निर्वृत्ते प्रबुद्धे च पितामहे ।
त्वमेव सृज्यमानानि भूतानीह प्रपश्यसि ॥ ००४ ॥

चतुर्विधानि विप्रर्षे यथावत्परमेष्ठिना ।
वायुभूता दिशः कृत्वा विक्षिप्यापस्ततस्ततः ॥ ००५ ॥

त्वया लोकगुरुः साक्षात्सर्वलोकपितामहः ।
आराधितो द्विजश्रेष्ठ तत्परेण समाधिना ॥ ००६ ॥

तस्मात्सर्वान्तको मृत्युर्जरा वा देहनाशिनी ।
न त्वा विशति विप्रर्षे प्रसादात्परमेष्ठिनः ॥ ००७ ॥

यदा नैव रविर्नाग्निर्न वायुर्न च चन्द्रमाः ।
नैवान्तरिक्षं नैवोर्वी शेषं भवति किञ्चन ॥ ००८ ॥

तस्मिन्नेकार्णवे लोके नष्टे स्थावरजङ्गमे ।

नष्टे देवासुरगणे समुत्सन्नमहोरगे ॥ ००९ ॥

शयानममितात्मानं पद्मे पद्मनिकेतनम् ।
त्वमेकः सर्वभूतेशं ब्रह्माणमुपतिष्ठसि ॥ ०१० ॥

एतत्प्रत्यक्षतः सर्वं पूर्ववृत्तं द्विजोत्तम ।
तस्मादिच्छामहे श्रोतुं सर्वहेत्वात्मिकां कथाम् ॥ ०११ ॥

अनुभूतं हि बहुशस्त्वयैकेन द्विजोत्तम ।
न तेऽस्त्यविदितं किञ्चित्सर्वलोकेषु नित्यदा ॥ ०१२ ॥

मार्कण्डेय उवाच ॥

हन्त ते कथयिष्यामि नमस्कृत्वा स्वयम्भुवे ।
पुरुषाय पुराणाय शाश्वतायाव्ययाय च ॥ ०१३ ॥

य एष पृथुदीर्घाक्षः पीतवासा जनार्दनः ।
एष कर्ता विकर्ता च सर्वभावनभूतकृत् ॥ ०१४ ॥

अचिन्त्यं महदाश्चर्यं पवित्रमपि चोत्तमम् ।
अनादिनिधनं भूतं विश्वमक्षयमव्ययम् ॥ ०१५ ॥

एष कर्ता न क्रियते कारणं चापि पौरुषे ।
यो ह्येनं पुरुषं वेत्ति देवा अपि न तं विदुः ॥ ०१६ ॥

सर्वमाश्चर्यमेवैतन्निर्वृत्तं राजसत्तम ।
आदितो मनुजव्याघ्र कृत्स्नस्य जगतः क्षये ॥ ०१७ ॥

चत्वार्याहुः सहस्राणि वर्षाणां तत्कृतं युगम् ।
तस्य तावच्छती संध्या संध्यांशश्च ततः परम् ॥ ०१८ ॥

त्रीणि वर्षसहस्राणि त्रेतायुगमिहोच्यते ।
तस्य तावच्छती संध्या संध्यांशश्च ततः परम्  ॥ ०१९  ॥

तथा वर्षसहस्रे द्वे द्वापरं परिमाणतः ।
तस्यापि द्विशती संध्या संध्यांशश्च ततः परम्  ॥ ०२०  ॥

सहस्रमेकं वर्षाणां ततः कलियुगं स्मृतम् ।
तस्य वर्षशतं संध्या संध्यांशश्च ततः परम्  ॥ ०२१  ॥

संध्यासंध्यांशयोस्तुल्यं प्रमाणमुपधारय  ॥ ०२१  ॥

क्षीणे कलियुगे चैव प्रवर्तति कृतं युगम् ।
एषा द्वादशसाहस्री युगाख्या परिकीर्तिता  ॥ ०२२  ॥

एतत्सहस्रपर्यन्तमहो ब्राह्ममुदाहृतम् ।
विश्वं हि ब्रह्मभवने सर्वशः परिवर्तते  ॥ ०२३  ॥

लोकानां मनुजव्याघ्र प्रलयं तं विदुर्बुधाः  ॥ ०२३  ॥

अल्पावशिष्टे तु तदा युगान्ते भरतर्षभ ।
सहस्रान्ते नराः सर्वे प्रायशोऽनृतवादिनः  ॥ ०२४  ॥

यज्ञप्रतिनिधिः पार्थ दानप्रतिनिधिस्तथा ।
व्रतप्रतिनिधिश्चैव तस्मिन्काले प्रवर्तते  ॥ ०२५  ॥

ब्राह्मणाः शूद्रकर्माणस्तथा शूद्रा धनार्जकाः ।
क्षत्रधर्मेण वाप्यत्र वर्तयन्ति गते युगे  ॥ ०२६  ॥

निवृत्तयज्ञस्वाध्यायाः पिण्डोदकविवर्जिताः ।
ब्राह्मणाः सर्वभक्षाश्च भविष्यन्ति कलौ युगे  ॥ ०२७  ॥

अजपा ब्राह्मणास्तात शूद्रा जपपरायणाः ।
विपरीते तदा लोके पूर्वरूपं क्षयस्य तत्  ॥ ०२८  ॥

बहवो म्लेच्छराजानः पृथिव्यां मनुजाधिप ।
मिथ्यानुशासिनः पापा मृषावादपरायणाः  ॥ ०२९  ॥

आन्ध्राः शकाः पुलिन्दाश्च यवनाश्च नराधिपाः ।
काम्बोजा और्णिकाः शूद्रास्तथाभीरा नरोत्तम  ॥ ०३०  ॥

न तदा ब्राह्मणः कश्चित्स्वधर्ममुपजीवति ।
क्षत्रिया अपि वैश्याश्च विकर्मस्था नराधिप  ॥ ०३१  ॥

अल्पायुषः स्वल्पबला अल्पतेजःपराक्रमाः ।
अल्पदेहाल्पसाराश्च तथा सत्याल्पभाषिणः  ॥ ०३२  ॥

बहुशून्या जनपदा मृगव्यालावृता दिशः ।
युगान्ते समनुप्राप्ते वृथा च ब्रह्मचारिणः  ॥ ०३३  ॥

भोवादिनस्तथा शूद्रा ब्राह्मणाश्चार्यवादिनः  ॥ ०३३  ॥

युगान्ते मनुजव्याघ्र भवन्ति बहुजन्तवः ।
न तथा घ्राणयुक्ताश्च सर्वगन्धा विशां पते  ॥ ०३४  ॥

रसाश्च मनुजव्याघ्र न तथा स्वादुयोगिनः  ॥ ०३४  ॥

बहुप्रजा ह्रस्वदेहाः शीलाचारविवर्जिताः ।
मुखेभगाः स्त्रियो राजन्भविष्यन्ति युगक्षये  ॥ ०३५  ॥

अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः ।
केशशूलाः स्त्रियो राजन्भविष्यन्ति युगक्षये  ॥ ०३६  ॥

अल्पक्षीरास्तथा गावो भविष्यन्ति जनाधिप ।
अल्पपुष्पफलाश्चापि पादपा बहुवायसाः ॥ ०३७ ॥

ब्रह्मवध्यावलिप्तानां तथा मिथ्याभिशंसिनाम् ।
नृपाणां पृथिवीपाल प्रतिगृह्णन्ति वै द्विजाः ॥ ०३८ ॥

लोभमोहपरीताश्च मिथ्याधर्मध्वजावृताः ।
भिक्षार्थं पृथिवीपाल चञ्चूर्यन्ते द्विजैर्दिशः ॥ ०३९ ॥

करभारभयात्पुंसो गृहस्थाः परिमोषकाः ।
मुनिच्छद्माकृतिच्छन्ना वाणिज्यमुपजीवते ॥ ०४० ॥

मिथ्या च नखरोमाणि धारयन्ति नरास्तदा ।
अर्थलोभान्नरव्याघ्र वृथा च ब्रह्मचारिणः ॥ ०४१ ॥

आश्रमेषु वृथाचाराः पानपा गुरुतल्पगाः ।
ऐहलौकिकमीहन्ते मांसशोणितवर्धनम् ॥ ०४२ ॥

बहुपाषण्डसङ्कीर्णाः परान्नगुणवादिनः ।
आश्रमा मनुजव्याघ्र न भवन्ति युगक्षये ॥ ०४३ ॥

यथर्तुवर्षी भगवान्न तथा पाकशासनः ।
न तदा सर्वबीजानि सम्यग्रोहन्ति भारत ॥ ०४४ ॥

अधर्मफलमत्यर्थं तदा भवति चानघ ॥ ०४४ ॥

तथा च पृथिवीपाल यो भवेद्धर्मसंयुतः ।
अल्पायुः स हि मन्तव्यो न हि धर्मोऽस्ति कश्चन ॥ ०४५ ॥

भूयिष्ठं कूटमानैश्च पण्यं विक्रीणते जनाः ।
वणिजश्च नरव्याघ्र बहुमाया भवन्त्युत ॥ ०४६ ॥

धर्मिष्ठाः परिहीयन्ते पापीयान्वर्धते जनः ।
धर्मस्य बलहानिः स्यादधर्मश्च बली तथा ॥ ०४७ ॥

अल्पायुषो दरिद्राश्च धर्मिष्ठा मानवास्तदा ।
दीर्घायुषः समृद्धाश्च विधर्माणो युगक्षये ॥ ०४८ ॥

अधर्मिष्ठैरुपायैश्च प्रजा व्यवहरन्त्युत ।
सञ्चयेनापि चाल्पेन भवन्त्याढ्या मदान्विताः ॥ ०४९ ॥

धनं विश्वासतो न्यस्तं मिथो भूयिष्ठशो नराः ।
हर्तुं व्यवसिता राजन्मायाचारसमन्विताः ॥ ०५० ॥

पुरुषादानि सत्त्वानि पक्षिणोऽथ मृगास्तथा ।
नगराणां विहारेषु चैत्येष्वपि च शेरते ॥ ०५१ ॥

सप्तवर्षाष्टवर्षाश्च स्त्रियो गर्भधरा नृप ।
दशद्वादशवर्षाणां पुंसां पुत्रः प्रजायते ॥ ०५२ ॥

भवन्ति षोडशे वर्षे नराः पलितिनस्तथा ।
आयुःक्षयो मनुष्याणां क्षिप्रमेव प्रपद्यते ॥ ०५३ ॥

क्षीणे युगे महाराज तरुणा वृद्धशीलिनः ।
तरुणानां च यच्छीलं तद्वृद्धेषु प्रजायते ॥ ०५४ ॥

विपरीतास्तदा नार्यो वञ्चयित्वा रहः पतीन् ।
व्युच्चरन्त्यपि दुःशीला दासैः पशुभिरेव च ॥ ०५५ ॥

तस्मिन्युगसहस्रान्ते संप्राप्ते चायुषः क्षये ।
अनावृष्टिर्महाराज जायते बहुवार्षिकी ॥ ०५६ ॥

ततस्तान्यल्पसाराणि सत्त्वानि क्षुधितानि च ।
प्रलयं यान्ति भूयिष्ठं पृथिव्यां पृथिवीपते ॥ ०५७ ॥

ततो दिनकरैर्दीप्तैः सप्तभिर्मनुजाधिप ।
पीयते सलिलं सर्वं समुद्रेषु सरित्सु च ॥ ०५८ ॥

यच्च काष्ठं तृणं चापि शुष्कं चार्द्रं च भारत ।
सर्वं तद्भस्मसाद्भूतं दृश्यते भरतर्षभ ॥ ०५९ ॥

ततः संवर्तको वह्निर्वायुना सह भारत ।
लोकमाविशते पूर्वमादित्यैरुपशोषितम् ॥ ०६० ॥

ततः स पृथिवीं भित्त्वा समाविश्य रसातलम् ।
देवदानवयक्षाणां भयं जनयते महत् ॥ ०६१ ॥

निर्दहन्नागलोकं च यच्च किञ्चित्क्षिताविह ।
अधस्तात्पृथिवीपाल सर्वं नाशयते क्षणात् ॥ ०६२ ॥

ततो योजनविंशानां सहस्राणि शतानि च ।
निर्दहत्यशिवो वायुः स च संवर्तकोऽनलः ॥ ०६३ ॥

सदेवासुरगन्धर्वं सयक्षोरगराक्षसम् ।
ततो दहति दीप्तः स सर्वमेव जगद्विभुः ॥ ०६४ ॥

ततो गजकुलप्रख्यास्तडिन्मालाविभूषिताः ।
उत्तिष्ठन्ति महामेघा नभस्यद्भुतदर्शनाः ॥ ०६५ ॥

केचिन्नीलोत्पलश्यामाः केचित्कुमुदसंनिभाः ।
केचित्किञ्जल्कसङ्काशाः केचित्पीताः पयोधराः ॥ ०६६ ॥

केचिद्धारिद्रसङ्काशाः काकाण्डकनिभास्तथा ।

केचित्कमलपत्राभाः केचिद्धिङ्गुलकप्रभाः ॥ ०६७ ॥

केचित्पुरवराकाराः केचिद्गजकुलोपमाः ।
केचिदञ्जनसङ्काशाः केचिन्मकरसंस्थिताः ॥ ०६८ ॥

विद्युन्मालापिनद्धाङ्गाः समुत्तिष्ठन्ति वै घनाः ॥ ०६८ ॥

घोररूपा महाराज घोरस्वननिनादिताः ।
ततो जलधराः सर्वे व्याप्नुवन्ति नभस्तलम् ॥ ०६९ ॥

तैरियं पृथिवी सर्वा सपर्वतवनाकरा ।
आपूर्यते महाराज सलिलौघपरिप्लुता ॥ ०७० ॥

ततस्ते जलदा घोरा राविणः पुरुषर्षभ ।
सर्वतः प्लावयन्त्याशु चोदिताः परमेष्ठिना ॥ ०७१ ॥

वर्षमाणा महत्तोयं पूरयन्तो वसुंधराम् ।
सुघोरमशिवं रौद्रं नाशयन्ति च पावकम् ॥ ०७२ ॥

ततो द्वादश वर्षाणि पयोदास्त उपप्लवे ।
धाराभिः पूरयन्तो वै चोद्यमाना महात्मना ॥ ०७३ ॥

ततः समुद्रः स्वां वेलामतिक्रामति भारत ।
पर्वताश्च विशीर्यन्ते मही चापि विशीर्यते ॥ ०७४ ॥

सर्वतः सहसा भ्रान्तास्ते पयोदा नभस्तलम् ।
संवेष्टयित्वा नश्यन्ति वायुवेगपराहताः ॥ ०७५ ॥

ततस्तं मारुतं घोरं स्वयम्भूर्मनुजाधिप ।
आदिपद्मालयो देवः पीत्वा स्वपिति भारत ॥ ०७६ ॥

तस्मिन्नेकार्णवे घोरे नष्टे स्थावरजङ्गमे ।
नष्टे देवासुरगणे यक्षराक्षसवर्जिते ॥ ०७७ ॥

निर्मनुष्ये महीपाल निःश्वापदमहीरुहे ।
अनन्तरिक्षे लोकेऽस्मिन्भ्रमाम्येकोऽहमादृतः ॥ ०७८ ॥

एकार्णवे जले घोरे विचरन्पार्थिवोत्तम ।
अपश्यन्सर्वभूतानि वैक्लव्यमगमं परम् ॥ ०७९ ॥

ततः सुदीर्घं गत्वा तु प्लवमानो नराधिप ।
श्रान्तः क्वचिन्न शरणं लभाम्यहमतन्द्रितः ॥ ०८० ॥

ततः कदाचित्पश्यामि तस्मिन्सलिलसंप्लवे ।
न्यग्रोधं सुमहान्तं वै विशालं पृथिवीपते ॥ ०८१ ॥

शाखायां तस्य वृक्षस्य विस्तीर्णायां नराधिप ।
पर्यङ्के पृथिवीपाल दिव्यास्तरणसंस्तृते ॥ ०८२ ॥

उपविष्टं महाराज पूर्णेन्दुसदृशाननम् ।
फुल्लपद्मविशालाक्षं बालं पश्यामि भारत ॥ ०८३ ॥

ततो मे पृथिवीपाल विस्मयः सुमहानभूत् ।
कथं त्वयं शिशुः शेते लोके नाशमुपागते ॥ ०८४ ॥

तपसा चिन्तयंश्चापि तं शिशुं नोपलक्षये ।
भूतं भव्यं भविष्यच्च जानन्नपि नराधिप ॥ ०८५ ॥

अतसीपुष्पवर्णाभः श्रीवत्सकृतलक्षणः ।
साक्षाल्लक्ष्म्या इवावासः स तदा प्रतिभाति मे ॥ ०८६ ॥

ततो मामब्रवीद्बालः स पद्मनिभलोचनः ।

श्रीवत्सधारी द्युतिमान्वाक्यं श्रुतिसुखावहम्  ॥ ०८७  ॥

जानामि त्वा परिश्रान्तं तात विश्रामकाङ्क्षिणम् ।
मार्कण्डेय इहास्स्व त्वं यावदिच्छसि भार्गव  ॥ ०८८  ॥

अभ्यन्तरं शरीरं मे प्रविश्य मुनिसत्तम ।
आस्स्व भो विहितो वासः प्रसादस्ते कृतो मया  ॥ ०८९  ॥

ततो बालेन तेनैवमुक्तस्यासीत्तदा मम ।
निर्वेदो जीविते दीर्घे मनुष्यत्वे च भारत  ॥ ०९०  ॥

ततो बालेन तेनास्यं सहसा विवृतं कृतम् ।
तस्याहमवशो वक्त्रं दैवयोगात्प्रवेशितः  ॥ ०९१  ॥

ततः प्रविष्टस्तत्कुक्षिं सहसा मनुजाधिप ।
सराष्ट्रनगराकीर्णां कृत्स्नां पश्यामि मेदिनीम्  ॥ ०९२  ॥

गङ्गां शतद्रुं सीतां च यमुनामथ कौशिकीम् ।
चर्मण्वतीं वेत्रवतीं चन्द्रभागां सरस्वतीम्  ॥ ०९३  ॥

सिन्धुं चैव विपाशां च नदीं गोदावरीमपि ।
वस्वोकसारां नलिनीं नर्मदां चैव भारत  ॥ ०९४  ॥

नदीं ताम्रां च वेण्णां च पुण्यतोयां शुभावहाम् ।
सुवेणां कृष्णवेणां च इरामां च महानदीम्  ॥ ०९५  ॥

शोणं च पुरुषव्याघ्र विशल्यां कम्पुनामपि  ॥ ०९५  ॥

एताश्चान्याश्च नद्योऽहं पृथिव्यां या नरोत्तम ।
परिक्रामन्प्रपश्यामि तस्य कुक्षौ महात्मनः  ॥ ०९६  ॥

ततः समुद्रं पश्यामि यादोगणनिषेवितम् ।
रत्नाकरममित्रघ्न निधानं पयसो महत् ॥ ०९७ ॥

ततः पश्यामि गगनं चन्द्रसूर्यविराजितम् ।
जाज्वल्यमानं तेजोभिः पावकार्कसमप्रभैः ॥ ०९८ ॥

पश्यामि च महीं राजन्काननैरुपशोभिताम् ॥ ०९८ ॥

यजन्ते हि तदा राजन्ब्राह्मणा बहुभिः सवैः ।
क्षत्रियाश्च प्रवर्तन्ते सर्ववर्णानुरञ्जने ॥ ०९९ ॥

वैश्याः कृषिं यथान्यायं कारयन्ति नराधिप ।
शुश्रूषायां च निरता द्विजानां वृषलास्तथा ॥ १०० ॥

ततः परिपतन्राजंस्तस्य कुक्षौ महात्मनः ।
हिमवन्तं च पश्यामि हेमकूटं च पर्वतम् ॥ १०१ ॥

निषधं चापि पश्यामि श्वेतं च रजताचितम् ।
पश्यामि च महीपाल पर्वतं गन्धमादनम् ॥ १०२ ॥

मन्दरं मनुजव्याघ्र नीलं चापि महागिरिम् ।
पश्यामि च महाराज मेरुं कनकपर्वतम् ॥ १०३ ॥

महेन्द्रं चैव पश्यामि विन्ध्यं च गिरिमुत्तमम् ।
मलयं चापि पश्यामि पारियात्रं च पर्वतम् ॥ १०४ ॥

एते चान्ये च बहवो यावन्तः पृथिवीधराः ।
तस्योदरे मया दृष्टाः सर्वरत्नविभूषिताः ॥ १०५ ॥

सिंहान्व्याघ्रान्वराहांश्च नागांश्च मनुजाधिप ।
पृथिव्यां यानि चान्यानि सत्त्वानि जगतीपते ॥ १०६ ॥

तानि सर्वाण्यहं तत्र पश्यन्पर्यचरं तदा ॥ १०६ ॥

कुक्षौ तस्य नरव्याघ्र प्रविष्टः सञ्चरन्दिशः ।
शक्रादींश्चापि पश्यामि कृत्स्नान्देवगणांस्तथा ॥ १०७ ॥

गन्धर्वाप्सरसो यक्षानृषींश्चैव महीपते ।
दैत्यदानवसंघांश्च कालेयांश्च नराधिप ॥ १०८ ॥

सिंहिकातनयांश्चापि ये चान्ये सुरशत्रवः ॥ १०८ ॥

यच्च किञ्चिन्मया लोके दृष्टं स्थावरजङ्गमम् ।
तदपश्यमहं सर्वं तस्य कुक्षौ महात्मनः ॥ १०९ ॥

फलाहारः प्रविचरन्कृत्स्नं जगदिदं तदा ॥ १०९ ॥

अन्तः शरीरे तस्याहं वर्षाणामधिकं शतम् ।
न च पश्यामि तस्याहमन्तं देहस्य कुत्रचित् ॥ ११० ॥

सततं धावमानश्च चिन्तयानो विशां पते ।
आसादयामि नैवान्तं तस्य राजन्महात्मनः ॥ १११ ॥

ततस्तमेव शरणं गतोऽस्मि विधिवत्तदा ।
वरेण्यं वरदं देवं मनसा कर्मणैव च ॥ ११२ ॥

ततोऽहं सहसा राजन्वायुवेगेन निःसृतः ।
महात्मनो मुखात्तस्य विवृतात्पुरुषोत्तम ॥ ११३ ॥

ततस्तस्यैव शाखायां न्यग्रोधस्य विशां पते ।
आस्ते मनुजशार्दूल कृत्स्नमादाय वै जगत् ॥ ११४ ॥

तेनैव बालवेषेण श्रीवत्सकृतलक्षणम् ।

आसीनं तं नरव्याघ्र पश्याम्यमिततेजसम्  ॥ ११५  ॥

ततो मामब्रवीद्वीर स बालः प्रहसन्निव ।
श्रीवत्सधारी द्युतिमान्पीतवासा महाद्युतिः  ॥ ११६  ॥

अपीदानीं शरीरेऽस्मिन्मामके मुनिसत्तम ।
उषितस्त्वं सुविश्रान्तो मार्कण्डेय ब्रवीहि मे  ॥ ११७  ॥

मुहूर्तादथ मे दृष्टिः प्रादुर्भूता पुनर्नवा ।
यया निर्मुक्तमात्मानमपश्यं लब्धचेतसम्  ॥ ११८  ॥

तस्य ताम्रतलौ तात चरणौ सुप्रतिष्ठितौ ।
सुजातौ मृदुरक्ताभिरङ्गुलीभिरलङ्कृतौ  ॥ ११९  ॥

प्रयतेन मया मूर्ध्ना गृहीत्वा ह्यभिवन्दितौ ।
दृष्ट्वापरिमितं तस्य प्रभावममितौजसः  ॥ १२०  ॥

विनयेनाञ्जलिं कृत्वा प्रयत्नेनोपगम्य च ।
दृष्टो मया स भूतात्मा देवः कमललोचनः  ॥ १२१  ॥

तमहं प्राञ्जलिर्भूत्वा नमस्कृत्येदमब्रुवम् ।
ज्ञातुमिच्छामि देव त्वां मायां चेमां तवोत्तमाम्  ॥ १२२  ॥

आस्येनानुप्रविष्टोऽहं शरीरं भगवंस्तव ।
दृष्टवानखिला.ण्ल्लोकान्समस्ताञ्जठरे तव  ॥ १२३  ॥

तव देव शरीरस्था देवदानवराक्षसाः ।
यक्षगन्धर्वनागाश्च जगत्स्थावरजङ्गमम्  ॥ १२४  ॥

त्वत्प्रसादाच्च मे देव स्मृतिर्न परिहीयते ।
द्रुतमन्तः शरीरे ते सततं परिधावतः  ॥ १२५  ॥

इच्छामि पुण्डरीकाक्ष ज्ञातुं त्वाहमनिन्दित ।
इह भूत्वा शिशुः साक्षात्किं भवानवतिष्ठते ॥ १२६ ॥

पीत्वा जगदिदं विश्वमेतदाख्यातुमर्हसि ॥ १२६ ॥

किमर्थं च जगत्सर्वं शरीरस्थं तवानघ ।
कियन्तं च त्वया कालमिह स्थेयमरिंदम ॥ १२७ ॥

एतदिच्छामि देवेश श्रोतुं ब्राह्मणकाम्यया ।
त्वत्तः कमलपत्राक्ष विस्तरेण यथातथम् ॥ १२८ ॥

महद्ध्येतदचिन्त्यं च यदहं दृष्टवान्प्रभो ॥ १२८ ॥

इत्युक्तः स मया श्रीमान्देवदेवो महाद्युतिः ।
सान्त्वयन्मामिदं वाक्यमुवाच वदतां वरः ॥ १२९ ॥

---

# अध्याय १८७

देव उवाच ॥

कामं देवापि मां विप्र न विजानन्ति तत्त्वतः ।
त्वत्प्रीत्या तु प्रवक्ष्यामि यथेदं विसृजाम्यहम् ॥ ००१ ॥

पितृभक्तोऽसि विप्रर्षे मां चैव शरणं गतः ।
अतो दृष्टोऽस्मि ते साक्षाद्ब्रह्मचर्यं च ते महत् ॥ ००२ ॥

आपो नारा इति प्रोक्ताः सञ्ज्ञानाम कृतं मया ।

तेन नारायणोऽस्म्युक्तो मम तद्धयनं सदा ॥ ००३ ॥

अहं नारायणो नाम प्रभवः शाश्वतोऽव्ययः ।
विधाता सर्वभूतानां संहर्ता च द्विजोत्तम ॥ ००४ ॥

अहं विष्णुरहं ब्रह्मा शक्रश्चाहं सुराधिपः ।
अहं वैश्रवणो राजा यमः प्रेताधिपस्तथा ॥ ००५ ॥

अहं शिवश्च सोमश्च कश्यपश्च प्रजापतिः ।
अहं धाता विधाता च यज्ञश्चाहं द्विजोत्तम ॥ ००६ ॥

अग्निरास्यं क्षितिः पादौ चन्द्रादित्यौ च लोचने ।
सदिशं च नभः कायो वायुर्मनसि मे स्थितः ॥ ००७ ॥

मया क्रतुशतैरिष्टं बहुभिः स्वाप्तदक्षिणैः ।
यजन्ते वेदविदुषो मां देवयजने स्थितम् ॥ ००८ ॥

पृथिव्यां क्षत्रियेन्द्राश्च पार्थिवाः स्वर्गकाङ्क्षिणः ।
यजन्ते मां तथा वैश्याः स्वर्गलोकजिगीषवः ॥ ००९ ॥

चतुःसमुद्रपर्यन्तां मेरुमन्दरभूषणाम् ।
शेषो भूत्वाहमेवैतां धारयामि वसुंधराम् ॥ ०१० ॥

वाराहं रूपमास्थाय मयेयं जगती पुरा ।
मज्जमाना जले विप्र वीर्येणासीत्समुद्धृता ॥ ०११ ॥

अग्निश्च वडवावक्त्रो भूत्वाहं द्विजसत्तम ।
पिबाम्यपः समाविद्धास्ताश्चैव विसृजाम्यहम् ॥ ०१२ ॥

ब्रह्म वक्त्रं भुजौ क्षत्रमूरू मे संश्रिता विशः ।
पादौ शूद्रा भजन्ते मे विक्रमेण क्रमेण च ॥ ०१३ ॥

ऋग्वेदः सामवेदश्च यजुर्वेदोऽप्यथर्वणः ।
मत्तः प्रादुर्भवन्त्येते मामेव प्रविशन्ति च ॥ ०१४ ॥

यतयः शान्तिपरमा यतात्मानो मुमुक्षवः ।
कामक्रोधद्वेषमुक्ता निःसङ्गा वीतकल्मषाः ॥ ०१५ ॥

सत्त्वस्था निरहङ्कारा नित्यमध्यात्मकोविदाः ।
मामेव सततं विप्राश्चिन्तयन्त उपासते ॥ ०१६ ॥

अहं संवर्तको ज्योतिरहं सर्वर्तको यमः ।
अहं संवर्तकः सूर्यो अहं संवर्तकोऽनिलः ॥ ०१७ ॥

तारारूपाणि दृश्यन्ते यान्येतानि नभस्तले ।
मम रूपाण्यथैतानि विद्धि त्वं द्विजसत्तम ॥ ०१८ ॥

रत्नाकराः समुद्राश्च सर्व एव चतुर्दिशम् ।
वसनं शयनं चैव निलयं चैव विद्धि मे ॥ ०१९ ॥

कामं क्रोधं च हर्षं च भयं मोहं तथैव च ।
ममैव विद्धि रूपाणि सर्वाण्येतानि सत्तम ॥ ०२० ॥

प्राप्नुवन्ति नरा विप्र यत्कृत्वा कर्मशोभनम् ।
सत्यं दानं तपश्चोग्रमहिंसा चैव जन्तुषु ॥ ०२१ ॥

मद्विधानेन विहिता मम देहविहारिणः ।
मयाभिभूतविज्ञाना विचेष्टन्ते न कामतः ॥ ०२२ ॥

सम्यग्वेदमधीयाना यजन्तो विविधैर्मखैः ।
शान्तात्मानो जितक्रोधाः प्राप्नुवन्ति द्विजातयः ॥ ०२३ ॥

प्राप्तुं न शक्यो यो विद्वन्नरैर्दुष्कृतकर्मभिः ।
लोभाभिभूतैः कृपणैरनार्यैरकृतात्मभिः ॥ ०२४ ॥

तं मां महाफलं विद्धि पदं सुकृतकर्मणः ।
दुष्प्रापं विप्रमूढानां मार्गं योगैर्निषेवितम् ॥ ०२५ ॥

यदा यदा च धर्मस्य ग्लानिर्भवति सत्तम ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ ०२६ ॥

दैत्या हिंसानुरक्ताश्च अवध्याः सुरसत्तमैः ।
राक्षसाश्चापि लोकेऽस्मिन्यदोत्पत्स्यन्ति दारुणाः ॥ ०२७ ॥

तदाहं संप्रसूयामि गृहेषु शुभकर्मणाम् ।
प्रविष्टो मानुषं देहं सर्वं प्रशमयाम्यहम् ॥ ०२८ ॥

सृष्ट्वा देवमनुष्यांश्च गन्धर्वोरगराक्षसान् ।
स्थावराणि च भूतानि संहराम्यात्ममायया ॥ ०२९ ॥

कर्मकाले पुनर्देहमनुचिन्त्य सृजाम्यहम् ।
प्रविश्य मानुषं देहं मर्यादाबन्धकारणात् ॥ ०३० ॥

श्वेतः कृतयुगे वर्णः पीतस्त्रेतायुगे मम ।
रक्तो द्वापरमासाद्य कृष्णः कलियुगे तथा ॥ ०३१ ॥

त्रयो भागा ह्यधर्मस्य तस्मिन्काले भवन्त्युत ।
अन्तकाले च संप्राप्ते कालो भूत्वातिदारुणः ॥ ०३२ ॥

त्रैलोक्यं नाशयाम्येकः कृत्स्नं स्थावरजङ्गमम् ॥ ०३२ ॥

अहं त्रिवर्त्मा सर्वात्मा सर्वलोकसुखावहः ।
अभिभूः सर्वगोऽनन्तो हृषीकेश उरुक्रमः ॥ ०३३ ॥

कालचक्रं नयाम्येको ब्रह्मन्नहमरूपि वै ।
शमनं सर्वभूतानां सर्वलोककृतोद्यमम् ॥ ०३४ ॥

एवं प्रणिहितः सम्यङ्मयात्मा मुनिसत्तम ।
सर्वभूतेषु विप्रेन्द्र न च मां वेत्ति कश्चन ॥ ०३५ ॥

यच्च किञ्चित्त्वया प्राप्तं मयि क्लेषात्मकं द्विज ।
सुखोदयाय तत्सर्वं श्रेयसे च तवानघ ॥ ०३६ ॥

यच्च किञ्चित्त्वया लोके दृष्टं स्थावरजङ्गमम् ।
विहितः सर्वथैवासौ ममात्मा मुनिसत्तम ॥ ०३७ ॥

अर्धं मम शरीरस्य सर्वलोकपितामहः ।
अहं नारायणो नाम शङ्खचक्रगदाधरः ॥ ०३८ ॥

यावद्युगानां विप्रर्षे सहस्रपरिवर्तनम् ।
तावत्स्वपिमि विश्वात्मा सर्वलोकपितामहः ॥ ०३९ ॥

एवं सर्वमहं कालमिहासे मुनिसत्तम ।
अशिशुः शिशुरूपेण यावद्ब्रह्मा न बुध्यते ॥ ०४० ॥

मया च विप्र दत्तोऽयं वरस्ते ब्रह्मरूपिणा ।
असकृत्परितुष्टेन विप्रर्षिगणपूजित ॥ ०४१ ॥

सर्वमेकार्णवं दृष्ट्वा नष्टं स्थावरजङ्गमम् ।
विक्लवोऽसि मया ज्ञातस्ततस्ते दर्शितं जगत् ॥ ०४२ ॥

अभ्यन्तरं शरीरस्य प्रविष्टोऽसि यदा मम ।
दृष्ट्वा लोकं समस्तं च विस्मितो नावबुध्यसे ॥ ०४३ ॥

ततोऽसि वक्राद्विप्रर्षे द्रुतं निःसारितो मया ।
आख्यातस्ते मया चात्मा दुर्ज्ञेयोऽपि सुरासुरैः ॥ ०४४ ॥

यावत्स भगवान्ब्रह्मा न बुध्यति महातपाः ।
तावत्त्वमिह विप्रर्षे विश्रब्धश्चर वै सुखम् ॥ ०४५ ॥

ततो विबुद्धे तस्मिंस्तु सर्वलोकपितामहे ।
एकीभूतो हि स्रक्ष्यामि शरीराद्द्विजसत्तम ॥ ०४६ ॥

आकाशं पृथिवीं ज्योतिर्वायुं सलिलमेव च ।
लोके यच्च भवेच्छेषमिह स्थावरजङ्गमम् ॥ ०४७ ॥

मार्कण्डेय उवाच ॥

इत्युक्त्वान्तर्हितस्तात स देवः परमाद्भुतः ।
प्रजाश्चेमाः प्रपश्यामि विचित्रा बहुधाकृताः ॥ ०४८ ॥

एतद्दृष्टं मया राजंस्तस्मिन्प्राप्ते युगक्षये ।
आश्चर्यं भरतश्रेष्ठ सर्वधर्मभृतां वर ॥ ०४९ ॥

यः स देवो मया दृष्टः पुरा पद्मनिभेक्षणः ।
स एष पुरुषव्याघ्र संबन्धी ते जनार्दनः ॥ ०५० ॥

अस्यैव वरदानाद्धि स्मृतिर्न प्रजहाति माम् ।
दीर्घमायुश्च कौन्तेय स्वच्छन्दमरणं तथा ॥ ०५१ ॥

स एष कृष्णो वार्ष्णेयः पुराणपुरुषो विभुः ।
आस्ते हरिरचिन्त्यात्मा क्रीडन्निव महाभुजः ॥ ०५२ ॥

एष धाता विधाता च संहर्ता चैव सात्वतः ।
श्रीवत्सवक्षा गोविन्दः प्रजापतिपतिः प्रभुः ॥ ०५३ ॥

दृष्ट्वेमं वृष्णिशार्दूलं स्मृतिर्मामियमागता ।
आदिदेवमजं विष्णुं पुरुषं पीतवाससम् ॥ ०५४ ॥

सर्वेषामेव भूतानां पिता माता च माधवः ।
गच्छध्वमेनं शरणं शरण्यं कौरवर्षभाः ॥ ०५५ ॥

---

# अध्याय १८८

वैशंपायन उवाच ॥

एवमुक्तास्तु ते पार्था यमौ च पुरुषर्षभौ ।
द्रौपद्या कृष्णया सार्धं नमश्चक्रुर्जनार्दनम् ॥ ००१ ॥

स चैतान्पुरुषव्याघ्र साम्ना परमवल्गुना ।
सान्त्वयामास मानार्हान्मन्यमानो यथाविधि ॥ ००२ ॥

युधिष्ठिरस्तु कौन्तेयो मार्कण्डेयं महामुनिम् ।
पुनः पप्रच्छ साम्राज्ये भविष्यां जगतो गतिम् ॥ ००३ ॥

आश्चर्यभूतं भवतः श्रुतं नो वदतां वर ।
मुने भार्गव यद्वृत्तं युगादौ प्रभवाप्ययौ ॥ ००४ ॥

अस्मिन्कलियुगेऽप्यस्ति पुनः कौतूहलं मम ।
समाकुलेषु धर्मेषु किं नु शेषं भविष्यति ॥ ००५ ॥

किंवीर्या मानवास्तत्र किमाहारविहारिणः ।

किमायुषः किंवसना भविष्यन्ति युगक्षये ॥ ००६ ॥

कां च काष्ठां समासाद्य पुनः संपत्स्यते कृतम् ।
विस्तरेण मुने ब्रूहि विचित्राणीह भाषसे ॥ ००७ ॥

इत्युक्तः स मुनिश्रेष्ठः पुनरेवाभ्यभाषत ।
रमयन्वृष्णिशार्दूलं पाण्डवांश्च महामुनिः ॥ ००८ ॥

मार्कण्डेय उवाच ॥

भविष्यं सर्वलोकस्य वृत्तान्तं भरतर्षभ ।
कलुषं कालमासाद्य कथ्यमानं निबोध मे ॥ ००९ ॥

कृते चतुष्पात्सकलो निर्व्याजोपाधिवर्जितः ।
वृषः प्रतिष्ठितो धर्मो मनुष्येष्वभवत्पुरा ॥ ०१० ॥

अधर्मपादविद्धस्तु त्रिभिरंशैः प्रतिष्ठितः ।
त्रेतायां द्वापरेऽर्धेन व्यामिश्रो धर्म उच्यते ॥ ०११ ॥

त्रिभिरंशैरधर्मस्तु लोकानाक्रम्य तिष्ठति ।
चतुर्थांशेन धर्मस्तु मनुष्यानुपतिष्ठति ॥ ०१२ ॥

आयुर्वीर्यमथो बुद्धिर्बलं तेजश्च पाण्डव ।
मनुष्याणामनुयुगं ह्रसतीति निबोध मे ॥ ०१३ ॥

राजानो ब्राह्मणा वैश्याः शूद्राश्चैव युधिष्ठिर ।
व्याजैर्धर्मं चरिष्यन्ति धर्मवैतंसिका नराः ॥ ०१४ ॥

सत्यं सङ्क्षेप्स्यते लोके नरैः पण्डितमानिभिः ।
सत्यहान्या ततस्तेषामायुरल्पं भविष्यति ॥ ०१५ ॥

आयुषः प्रक्षयाद्विद्यां न शक्ष्यन्त्युपशिक्षितुम् ।
विद्याहीनानविज्ञानाल्लोभोऽप्यभिभविष्यति ॥ ०१६ ॥

लोभक्रोधपरा मूढाः कामसक्ताश्च मानवाः ।
वैरबद्धा भविष्यन्ति परस्परवधेप्सवः ॥ ०१७ ॥

ब्राह्मणाः क्षत्रिया वैश्याः सङ्कीर्यन्तः परस्परम् ।
शूद्रतुल्या भविष्यन्ति तपःसत्यविवर्जिताः ॥ ०१८ ॥

अन्त्या मध्या भविष्यन्ति मध्याश्चान्तावसायिनः ।
ईदृशो भविता लोको युगान्ते पर्युपस्थिते ॥ ०१९ ॥

वस्त्राणां प्रवरा शाणी धान्यानां कोरदूषकाः ।
भार्यामित्राश्च पुरुषा भविष्यन्ति युगक्षये ॥ ०२० ॥

मत्स्यामिषेण जीवन्तो दुहन्तश्चाप्यजैडकम् ।
गोषु नष्टासु पुरुषा भविष्यन्ति युगक्षये ॥ ०२१ ॥

अन्योन्यं परिमुष्णन्तो हिंसयन्तश्च मानवाः ।
अजपा नास्तिकाः स्तेना भविष्यन्ति युगक्षये ॥ ०२२ ॥

सरित्तीरेषु कुद्दालैर्वापयिष्यन्ति चौषधीः ।
ताश्चाप्यल्पफलास्तेषां भविष्यन्ति युगक्षये ॥ ०२३ ॥

श्राद्धे दैवे च पुरुषा ये च नित्यं धृतव्रताः ।
तेऽपि लोभसमायुक्ता भोक्ष्यन्तीह परस्परम् ॥ ०२४ ॥

पिता पुत्रस्य भोक्ता च पितुः पुत्रस्तथैव च ।
अतिक्रान्तानि भोज्यानि भविष्यन्ति युगक्षये ॥ ०२५ ॥

न व्रतानि चरिष्यन्ति ब्राह्मणा वेदनिन्दकाः ।

न यक्ष्यन्ति न होष्यन्ति हेतुवादविलोभिताः ॥ ०२६ ॥

निम्ने कृषिं करिष्यन्ति योक्ष्यन्ति धुरि धेनुकाः ।
एकहायनवत्सांश्च वाहयिष्यन्ति मानवाः ॥ ०२७ ॥

पुत्रः पितृवधं कृत्वा पिता पुत्रवधं तथा ।
निरुद्वेगो बृहद्वादी न निन्दामुपलप्स्यते ॥ ०२८ ॥

म्लेच्छभूतं जगत्सर्वं निश्क्रियं यज्ञवर्जितम् ।
भविष्यति निरानन्दमनुत्सवमथो तथा ॥ ०२९ ॥

प्रायशः कृपणानां हि तथा बन्धुमतामपि ।
विधवानां च वित्तानि हरिष्यन्तीह मानवाः ॥ ०३० ॥

अल्पवीर्यबलाः स्तब्धा लोभमोहपरायणाः ।
तत्कथादानसंतुष्टा दुष्टानामपि मानवाः ॥ ०३१ ॥

परिग्रहं करिष्यन्ति पापाचारपरिग्रहाः ॥ ०३१ ॥

संघातयन्तः कौन्तेय राजानः पापबुद्धयः ।
परस्परवधोद्युक्ता मूर्खाः पण्डितमानिनः ॥ ०३२ ॥

भविष्यन्ति युगस्यान्ते क्षत्रिया लोककण्टकाः ॥ ०३२ ॥

अरक्षितारो लुब्धाश्च मानाहङ्कारदर्पिताः ।
केवलं दण्डरुचयो भविष्यन्ति युगक्षये ॥ ०३३ ॥

आक्रम्याक्रम्य साधूनां दारांश्चैव धनानि च ।
भोक्ष्यन्ते निरनुक्रोशा रुदतामपि भारत ॥ ०३४ ॥

न कन्यां याचते कश्चिन्नापि कन्या प्रदीयते ।

स्वयङ्ग्राहा भविष्यन्ति युगान्ते पर्युपस्थिते ॥ ०३५ ॥

राजानश्चाप्यसंतुष्टाः परार्थान्मूढचेतसः ।
सर्वोपायैर्हरिष्यन्ति युगान्ते पर्युपस्थिते ॥ ०३६ ॥

म्लेच्छीभूतं जगत्सर्वं भविष्यति च भारत ।
हस्तो हस्तं परिमुषेद्युगान्ते पर्युपस्थिते ॥ ०३७ ॥

सत्यं सङ्क्षिप्यते लोके नरैः पण्डितमानिभिः ।
स्थविरा बालमतयो बालाः स्थविरबुद्धयः ॥ ०३८ ॥

भीरवः शूरमानीनः शूरा भीरुविषादिनः ।
न विश्वसन्ति चान्योन्यं युगान्ते पर्युपस्थिते ॥ ०३९ ॥

एकाहार्यं जगत्सर्वं लोभमोहव्यवस्थितम् ।
अधर्मो वर्धति महान्न च धर्मः प्रवर्तते ॥ ०४० ॥

ब्राह्मणाः क्षत्रिया वैश्या न शिष्यन्ति जनाधिप ।
एकवर्णस्तदा लोको भविष्यति युगक्षये ॥ ०४१ ॥

न क्षंस्यति पिता पुत्रं पुत्रश्च पितरं तथा ।
भार्या च पतिशुश्रूषां न करिष्यति काचन ॥ ०४२ ॥

ये यवान्ना जनपदा गोधूमान्नास्तथैव च ।
तान्देशान्संश्रयिष्यन्ति युगान्ते पर्युपस्थिते ॥ ०४३ ॥

स्वैराहाराश्च पुरुषा योषितश्च विशां पते ।
अन्योन्यं न सहिष्यन्ति युगान्ते पर्युपस्थिते ॥ ०४४ ॥

म्लेच्छभूतं जगत्सर्वं भविष्यति युधिष्ठिर ।
न श्राद्धैर्हि पितॄंश्चापि तर्पयिष्यन्ति मानवाः ॥ ०४५ ॥

न कश्चित्कस्यचिच्छ्रोता न कश्चित्कस्यचिद्गुरुः ।
तमोग्रस्तस्तदा लोको भविष्यति नराधिप ॥ ०४६ ॥

परमायुश्च भविता तदा वर्षाणि षोडश ।
ततः प्राणान्विमोक्ष्यन्ति युगान्ते पर्युपस्थिते ॥ ०४७ ॥

पञ्चमे वाथ षष्ठे वा वर्षे कन्या प्रसूयते ।
सप्तवर्षाष्टवर्षाश्च प्रजास्यन्ति नरास्तदा ॥ ०४८ ॥

पत्यौ स्त्री तु तदा राजन्पुरुषो वा स्त्रियं प्रति ।
युगान्ते राजशार्दूल न तोषमुपयास्यति ॥ ०४९ ॥

अल्पद्रव्या वृथालिङ्गा हिंसा च प्रभविष्यति ।
न कश्चित्कस्यचिद्दाता भविष्यति युगक्षये ॥ ०५० ॥

अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः ।
केशशूलाः स्त्रियश्चापि भविष्यन्ति युगक्षये ॥ ०५१ ॥

म्लेच्छाः क्रूराः सर्वभक्षा दारुणाः सर्वकर्मसु ।
भाविनः पश्चिमे काले मनुष्या नात्र संशयः ॥ ०५२ ॥

क्रयविक्रयकाले च सर्वः सर्वस्य वञ्चनम् ।
युगान्ते भरतश्रेष्ठ वृत्तिलोभात्करिष्यति ॥ ०५३ ॥

ज्ञानानि चाप्यविज्ञाय करिष्यन्ति क्रियास्तथा ।
आत्मच्छन्देन वर्तन्ते युगान्ते पर्युपस्थिते ॥ ०५४ ॥

स्वभावात्क्रूरकर्माणश्चान्योन्यमभिशङ्किनः ।
भवितारो जनाः सर्वे संप्राप्ते युगसङ्क्षये ॥ ०५५ ॥

आरामांश्चैव वृक्षांश्च नाशयिष्यन्ति निर्व्यथाः ।
भविता सङ्क्षयो लोके जीवितस्य च देहिनाम्  ॥ ०५६  ॥

तथा लोभाभिभूताश्च चरिष्यन्ति महीमिमाम् ।
ब्राह्मणाश्च भविष्यन्ति ब्रह्मस्वानि च भुञ्जते  ॥ ०५७  ॥

हाहाकृता द्विजाश्चैव भयार्ता वृषलार्दिताः ।
त्रातारमलभन्तो वै भ्रमिष्यन्ति महीमिमाम्  ॥ ०५८  ॥

जीवितान्तकरा रौद्राः क्रूराः प्राणिविहिंसकाः ।
यदा भविष्यन्ति नरास्तदा सङ्क्षेप्स्यते युगम्  ॥ ०५९  ॥

आश्रयिष्यन्ति च नदीः पर्वतान्विषमाणि च ।
प्रधावमाना वित्रस्ता द्विजाः कुरुकुलोद्वह  ॥ ०६०  ॥

दस्युप्रपीडिता राजन्काका इव द्विजोत्तमाः ।
कुराजभिश्च सततं करभारप्रपीडिताः  ॥ ०६१  ॥

धैर्यं त्यक्त्वा महीपाल दारुणे युगसङ्क्षये ।
विकर्माणि करिष्यन्ति शूद्राणां परिचारकाः  ॥ ०६२  ॥

शूद्रा धर्मं प्रवक्ष्यन्ति ब्राह्मणाः पर्युपासकाः ।
श्रोतारश्च भविष्यन्ति प्रामाण्येन व्यवस्थिताः  ॥ ०६३  ॥

विपरीतश्च लोकोऽयं भविष्यत्यधरोत्तरः ।
एडूकान्पूजयिष्यन्ति वर्जयिष्यन्ति देवताः  ॥ ०६४  ॥

शूद्राः परिचरिष्यन्ति न द्विजान्युगसङ्क्षये  ॥ ०६४  ॥

आश्रमेषु महर्षीणां ब्राह्मणावसथेषु च ।
देवस्थानेषु चैत्येषु नागानामालयेषु च  ॥ ०६५  ॥

एडूकचिह्ना पृथिवी न देवगृहभूषिता ।
भविष्यति युगे क्षीणे तद्युगान्तस्य लक्षणम् ॥ ०६६ ॥

यदा रौद्रा धर्महीना मांसादाः पानपास्तथा ।
भविष्यन्ति नरा नित्यं तदा सङ्क्षेप्स्यते युगम् ॥ ०६७ ॥

पुष्पे पुष्पं यदा राजन्फले फलमुपाश्रितम् ।
प्रजास्यति महाराज तदा सङ्क्षेप्स्यते युगम् ॥ ०६८ ॥

अकालवर्षी पर्जन्यो भविष्यति गते युगे ।
अक्रमेण मनुष्याणां भविष्यति तदा क्रिया ॥ ०६९ ॥

विरोधमथ यास्यन्ति वृषला ब्राह्मणैः सह ॥ ०६९ ॥

मही म्लेच्छसमाकीर्णा भविष्यति ततोऽचिरात् ।
करभारभयाद्विप्रा भजिष्यन्ति दिशो दश ॥ ०७० ॥

निर्विशेषा जनपदा नरावृष्टिभिरर्दिताः ।
आश्रमानभिपत्स्यन्ति फलमूलोपजीविनः ॥ ०७१ ॥

एवं पर्याकुले लोके मर्यादा न भविष्यति ।
न स्थास्यन्त्युपदेशे च शिष्या विप्रियकारिणः ॥ ०७२ ॥

आचार्योपनिधिश्चैव वत्स्यते तदनन्तरम् ।
अर्थयुक्त्या प्रवत्स्यन्ति मित्रसंबन्धिबान्धवाः ॥ ०७३ ॥

अभावः सर्वभूतानां युगान्ते च भविष्यति ॥ ०७३ ॥

दिशः प्रज्वलिताः सर्वा नक्षत्राणि चलानि च ।
ज्योतींषि प्रतिकूलानि वाताः पर्याकुलास्तथा ॥ ०७४ ॥

उल्कापाताश्च बहवो महाभयनिदर्शकाः ॥ ०७४ ॥

षड्भिरन्यैश्च सहितो भास्करः प्रतपिष्यति ।
तुमुलाश्चापि निर्ह्रादा दिग्दाहाश्चापि सर्वशः ॥ ०७५ ॥

कबन्धान्तर्हितो भानुरुदयास्तमये तदा ॥ ०७५ ॥

अकालवर्षी च तदा भविष्यति सहस्रदृक् ।
सस्यानि च न रोक्ष्यन्ति युगान्ते पर्युपस्थिते ॥ ०७६ ॥

अभीक्ष्णं क्रूरवादिन्यः परुषा रुदितप्रियाः ।
भर्तॄणां वचने चैव न स्थास्यन्ति तदा स्त्रियः ॥ ०७७ ॥

पुत्राश्च मातापितरौ हनिष्यन्ति युगक्षये ।
सूदयिष्यन्ति च पतीन्स्त्रियः पुत्रानपाश्रिताः ॥ ०७८ ॥

अपर्वणि महाराज सूर्यं राहुरुपैष्यति ।
युगान्ते हुतभुक्चापि सर्वतः प्रज्वलिष्यति ॥ ०७९ ॥

पानीयं भोजनं चैव याचमानास्तदाध्वगाः ।
न लप्स्यन्ते निवासं च निरस्ताः पथि शेरते ॥ ०८० ॥

निर्घातवायसा नागाः शकुनाः समृगद्विजाः ।
रूक्षा वाचो विमोक्ष्यन्ति युगान्ते पर्युपस्थिते ॥ ०८१ ॥

मित्रसंबन्धिनश्चापि संत्यक्ष्यन्ति नरास्तदा ।
जनं परिजनं चापि युगान्ते पर्युपस्थिते ॥ ०८२ ॥

अथ देशान्दिशश्चापि पत्तनानि पुराणि च ।
क्रमशः संश्रयिष्यन्ति युगान्ते पर्युपस्थिते ॥ ०८३ ॥

हा तात हा सुतेत्येवं तदा वाचः सुदारुणाः ।
विक्रोशमानश्चान्योन्यं जनो गां पर्यटिष्यति ॥ ०८४ ॥

ततस्तुमुलसंघाते वर्तमाने युगक्षये ।
द्विजातिपूर्वको लोकः क्रमेण प्रभविष्यति ॥ ०८५ ॥

ततः कालान्तरेऽन्यस्मिन्पुनर्लोकविवृद्धये ।
भविष्यति पुनर्दैवमनुकूलं यदृच्छया ॥ ०८६ ॥

यदा चन्द्रश्च सूर्यश्च तथा तिष्यबृहस्पती ।
एकराशौ समेष्यन्ति प्रपत्स्यति तदा कृतम् ॥ ०८७ ॥

कालवर्षी च पर्जन्यो नक्षत्राणि शुभानि च ।
प्रदक्षिणा ग्रहाश्चापि भविष्यन्त्यनुलोमगाः ॥ ०८८ ॥

क्षेमं सुभिक्षमारोग्यं भविष्यति निरामयम् ॥ ०८८ ॥

कल्किर्विष्णुयशा नाम द्विजः कालप्रचोदितः ।
उत्पत्स्यते महावीर्यो महाबुद्धिपराक्रमः ॥ ०८९ ॥

संभूतः संभलग्रामे ब्राह्मणावसथे शुभे ।
मनसा तस्य सर्वाणि वाहनान्यायुधानि च ॥ ०९० ॥

उपस्थास्यन्ति योधाश्च शस्त्राणि कवचानि च ॥ ०९० ॥

स धर्मविजयी राजा चक्रवर्ती भविष्यति ।
स चेमं सङ्कुलं लोकं प्रसादमुपनेष्यति ॥ ०९१ ॥

उत्थितो ब्राह्मणो दीप्तः क्षयान्तकृदुदारधीः ।
स सङ्क्षेपो हि सर्वस्य युगस्य परिवर्तकः ॥ ०९२ ॥

स सर्वत्र गतान्क्षुद्रान्ब्राह्मणैः परिवारितः ।
उत्सादयिष्यति तदा सर्वान्म्लेच्छगणान्द्विजः ॥ ०९३ ॥

---

# अध्याय १८९

मार्कण्डेय उवाच ॥

ततश्चोरक्षयं कृत्वा द्विजेभ्यः पृथिवीमिमाम् ।
वाजिमेधे महायज्ञे विधिवत्कल्पयिष्यति ॥ ००१ ॥

स्थापयित्वा स मर्यादाः स्वयम्भुविहिताः शुभाः ।
वनं पुण्ययशःकर्मा जरावान्संश्रयिष्यति ॥ ००२ ॥

तच्छीलमनुवर्त्स्यन्ते मनुष्या लोकवासिनः ।
विप्रैश्चोरक्शये चैव कृते क्षेमं भविष्यति ॥ ००३ ॥

कृष्णाजिनानि शक्तीश्च त्रिशूलान्यायुधानि च ।
स्थापयन्विप्रशार्दूलो देशेषु विजितेषु च ॥ ००४ ॥

संस्तूयमानो विप्रेन्द्रैर्मानयानो द्विजोत्तमान् ।
कल्किश्चरिष्यति महीं सदा दस्युवधे रतः ॥ ००५ ॥

हा तात हा सुतेत्येवं तास्ता वाचः सुदारुणाः ।
विक्रोशमानान्सुभृशं दस्यून्नेष्यति सङ्क्षयम् ॥ ००६ ॥

ततोऽधर्मविनाशो वै धर्मवृद्धिश्च भारत ।

भविष्यति कृते प्राप्ते क्रियावांश्च जनस्तथा ॥ ००७ ॥

आरामाश्चैव चैत्याश्च तटाकान्यवटास्तथा ।
यज्ञक्रियाश्च विविधा भविष्यन्ति कृते युगे ॥ ००८ ॥

ब्राह्मणाः साधवश्चैव मुनयश्च तपस्विनः ।
आश्रमाः सहपाषण्डाः स्थिताः सत्ये जनाः प्रजाः ॥ ००९ ॥

जास्यन्ति सर्वबीजानि उप्यमानानि चैव ह ।
सर्वेष्वृतुषु राजेन्द्र सर्वं सस्यं भविष्यति ॥ ०१० ॥

नरा दानेषु निरता व्रतेषु नियमेषु च ।
जपयज्ञपरा विप्रा धर्मकामा मुदा युताः ॥ ०११ ॥

पालयिष्यन्ति राजानो धर्मेणेमां वसुंधराम् ॥ ०११ ॥

व्यवहाररता वैश्या भविष्यन्ति कृते युगे ।
षट्कर्मनिरता विप्राः क्षत्रिया रक्षणे रताः ॥ ०१२ ॥

शुश्रूषायां रताः शूद्रास्तथा वर्णत्रयस्य च ।
एष धर्मः कृतयुगे त्रेतायां द्वापरे तथा ॥ ०१३ ॥

पश्चिमे युगकाले च यः स ते संप्रकीर्तितः ॥ ०१३ ॥

सर्वलोकस्य विदिता युगसंख्या च पाण्डव ।
एतत्ते सर्वमाख्यातमतीतानागतं मया ॥ ०१४ ॥

वायुप्रोक्तमनुस्मृत्य पुराणमृषिसंस्तुतम् ॥ ०१४ ॥

एवं संसारमार्गा मे बहुशश्चिरजीविना ।
दृष्टाश्चैवानुभूताश्च तांस्ते कथितवानहम् ॥ ०१५ ॥

इदं चैवापरं भूयः सह भ्रातृभिरच्युत ।
धर्मसंशयमोक्षार्थं निबोध वचनं मम ॥ ०१६ ॥

धर्मे त्वयात्मा संयोज्यो नित्यं धर्मभृतां वर ।
धर्मात्मा हि सुखं राजा प्रेत्य चेह च नन्दति ॥ ०१७ ॥

निबोध च शुभां वाणीं यां प्रवक्ष्यामि तेऽनघ ।
न ब्राह्मणे परिभवः कर्तव्यस्ते कदाचन ॥ ०१८ ॥

ब्राह्मणो रुषितो हन्यादपि लोकान्प्रतिज्ञया ॥ ०१८ ॥

वैशंपायन उवाच ॥

मार्कण्डेयवचः श्रुत्वा कुरूणां प्रवरो नृपः ।
उवाच वचनं धीमान्परमं परमद्युतिः ॥ ०१९ ॥

कस्मिन्धर्मे मया स्थेयं प्रजाः संरक्षता मुने ।
कथं च वर्तमानो वै न च्यवेयं स्वधर्मतः ॥ ०२० ॥

मार्कण्डेय उवाच ॥

दयावान्सर्वभूतेषु हितो रक्तोऽनसूयकः ।
अपत्यानामिव स्वेषां प्रजानां रक्षणे रतः ॥ ०२१ ॥

चर धर्मं त्यजाधर्मं पितृन्देवांश्च पूजय ॥ ०२१ ॥

प्रमादाद्यत्कृतं तेऽभूत्संयग्दानेन तज्जय ।
अलं ते मानमाश्रित्य सततं परवान्भव ॥ ०२२ ॥

विजित्य पृथिवीं सर्वां मोदमानः सुखी भव ।

एष भूतो भविष्यश्च धर्मस्ते समुदीरितः ॥ ०२३ ॥

न तेऽस्त्यविदितं किञ्चिदतीतानागतं भुवि ।
तस्मादिमं परिक्लेशं त्वं तात हृदि मा कृथाः ॥ ०२४ ॥

एष कालो महाबाहो अपि सर्वदिवौकसाम् ।
मुह्यन्ति हि प्रजास्तात कालेनाभिप्रचोदिताः ॥ ०२५ ॥

मा च तेऽत्र विचारो भूद्यन्मयोक्तं तवानघ ।
अतिशङ्क्य वचो ह्येतद्धर्मलोपो भवेत्तव ॥ ०२६ ॥

जातोऽसि प्रथिते वंशे कुरूणां भरतर्षभ ।
कर्मणा मनसा वाचा सर्वमेतत्समाचर ॥ ०२७ ॥

युधिष्ठिर उवाच ॥

यत्त्वयोक्तं द्विजश्रेष्ठ वाक्यं श्रुतिमनोहरम् ।
तथा करिष्ये यत्नेन भवतः शासनं विभो ॥ ०२८ ॥

न मे लोभोऽस्ति विप्रेन्द्र न भयं न च मत्सरः ।
करिष्यामि हि तत्सर्वमुक्तं यत्ते मयि प्रभो ॥ ०२९ ॥

वैशंपायन उवाच ॥

श्रुत्वा तु वचनं तस्य पाण्डवस्य महात्मनः ।
प्रहृष्टाः पाण्डवा राजन्सहिताः शार्ङ्गधन्वना ॥ ०३० ॥

तथा कथां शुभां श्रुत्वा मार्कण्डेयस्य धीमतः ।
विस्मिताः समपद्यन्त पुराणस्य निवेदनात् ॥ ०३१ ॥

# मण्डूकोपाख्यानम्

## अध्याय १९०

वैशंपायन उवाच ॥

भूय एव ब्राह्मणमहाभाग्यं वक्तुमर्हसीत्यब्रवीत्पाण्डवेयो मार्कण्डेयम् ॥ ०१ ॥
अथाचष्ट मार्कण्डेयः ॥ ००२ ॥
अयोध्यायामिक्ष्वाकुकुलोत्पन्नः पार्थिवः परिक्षिन्नाम मृगयामगमत् ॥ ००३ ॥
तमेकाश्वेन मृगमनुसरन्तं मृगो दूरमपाहरत् ॥ ००४ ॥
अथाध्वनि जातश्रमः क्षुत्तृष्णाभिभूतश्च कस्मिंश्चिदुद्देशे नीलं वनषण्डमपश्यत् तच्च विवेश ॥ ००५ ॥
ततस्तस्य वनषण्डस्य मध्येऽतीव रमणीयं सरो दृष्ट्वा साश्व एव व्यगाहत ॥ ००६ ॥
अथाश्वस्तः स बिसमृणालमश्वस्याग्रे निक्षिप्य पुष्करिणीतीरे समाविशत् ॥ ००७ ॥
ततः शयानो मधुरं गीतशब्दमशृणोत् ॥ ००८ ॥
स श्रुत्वाचिन्तयत्
नेह मनुष्यगतिं पश्यामि
कस्य खल्वयं गीतशब्द इति ॥ ००९ ॥
अथापश्यत्कन्यां परमरूपदर्शनीयां पुष्पाण्यवचिन्वतीं गायन्तीं च ॥ ०१० ॥
अथ सा राज्ञः समीपे पर्यक्रामत् ॥ ०११ ॥
तामब्रवीद्राजा
कस्यासि सुभगे त्वमिति ॥ ०१२ ॥
सा प्रत्युवाच
कन्यास्मीति ॥ ०१३ ॥
तां राजोवाच
अर्थी त्वयाहमिति ॥ ०१४ ॥

अथोवाच कन्या
समयेनाहं शक्या त्वया लब्धुम्
नान्यथेति ॥ ०१५ ॥
तां राजा समयमपृच्छत् ॥ ०१६ ॥
ततः कन्येदमुवाच
उदकं मे न दर्शयितव्यमिति ॥ ०१७ ॥
स राजा बाढमित्युक्त्वा तां समागम्य तया सहास्ते ॥ ०१८ ॥
तत्रैवासीने राजनि सेनान्वगच्छत्
पदेनानुपदं दृष्ट्वा राजानं परिवार्यातिष्ठत् ॥ ०१९ ॥
पर्याश्वस्तश्च राजा तयैव सह शिबिकया प्रायादविघाटितया
स्वनगरमनुप्राप्य रहसि तया सह रमन्नास्ते
नान्यत्किञ्चनापश्यत् ॥ ०२० ॥
अथ प्रधानामात्यस्तस्याभ्याशचराः स्त्रियोऽपृच्छत्
किमत्र प्रयोजनं वर्तत इति ॥ ०२१ ॥
अथाब्रुवंस्ताः स्त्रियः
अपूर्वमिव पश्याम उदकं नात्र नीयतेति ॥ ०२२ ॥
अथामात्योऽनुदकं वनं कारयित्वोदारवृक्षं बहुमूलपुष्पफलं रहस्युपगम्य राजानमब्रवीत्
वनमिदमुदारमनुदकम्
साध्वत्र रम्यतामिति ॥ ०२३ ॥
स तस्य वचनात्तयैव सह देव्या तद्वनं प्राविशत्
स कदाचित्तस्मिन्वने रम्ये तयैव सह व्यवहरत्
अथ क्षुत्तृष्णार्दितः श्रान्तोऽतिमात्रमतिमुक्तागारमपश्यत् ॥ ०२४ ॥
तत्प्रविश्य राजा सह प्रियया सुधातलसुकृतां विमलसलिलपूर्णां वापीमपश्यत्
॥ ०२५ ॥
दृष्ट्वैव च तां तस्या एव तीरे सहैव तया देव्या व्यतिष्ठत् ॥ ०२६ ॥
अथ तां देवीं स राजाब्रवीत्
साध्ववतर वापीसलिलमिति ॥ ०२७ ॥
सा तद्वचः श्रुत्वावतीर्य वापीं न्यमज्जत्
न पुनरुदमज्जत् ॥ ०२८ ॥
तां मृगयमाणो राजा नापश्यत् ॥ ०२९ ॥
वापीमपि निःस्राव्य मण्डूकं श्वभ्रमुखे दृष्ट्वा क्रुद्ध आज्ञापयामास

सर्वमण्डूकवधः क्रियतामिति
यो मयार्थी स मृतकैर्मण्डूकैरुपायनैर्मामुपतिष्ठेदिति ॥ ०३० ॥
अथ मण्डूकवधे घोरे क्रियमाणे दिक्षु सर्वासु मण्डूकान्भयमाविशत्
ते भीता मण्डूकराज्ञे यथावृत्तं न्यवेदयन् ॥ ०३१ ॥
ततो मण्डूकराट्तापसवेषधारी राजानमभ्यगच्छत् ॥ ०३२ ॥
उपेत्य चैनमुवाच
मा राजन्क्रोधवशं गमः
प्रसादं कुरु
नार्हसि मण्डूकानामनपराधिनां वधं कर्तुमिति ॥ ०३३ ॥
श्लोकौ चात्र भवतः
मा मण्डूकाञ्जिघांस त्वं कोपं संधारयाच्युत ।
प्रक्षीयते धनोद्रेको जनानामविजानताम् ॥ ०३४ ॥

प्रतिजानीहि नैतांस्त्वं प्राप्य क्रोधं विमोक्ष्यसे ।
अलं कृत्वा तवाधर्मं मण्डूकैः किं हतैर्हि ते ॥ ०३५ ॥

तमेवंवादिनमिष्टजनशोकपरीतात्मा राजा प्रोवाच
न हि क्षम्यते तन्मया
हनिष्याम्येतान्
एतैर्दुरात्मभिः प्रिया मे भक्षिता
सर्वथैव मे वध्या मण्डूकाः
नार्हसि विद्वन्मामुपरोद्धुमिति ॥ ०३६ ॥
स तद्वाक्यमुपलभ्य व्यथितेन्द्रियमनाः प्रोवाच
प्रसीद राजन्
अहमायुर्नाम मण्डूकराजः
मम सा दुहिता सुशोभना नाम
तस्या दौःशील्यमेतत्
बहवो हि राजानस्तया विप्रलब्धपूर्वा इति ॥ ०३७ ॥
तमब्रवीद्राजा
तयास्म्यर्थी

सा मे दीयतामिति ॥ ०३८ ॥
अथैनां राज्ञे पितादात्
अब्रवीच्चैनाम्
एनं राजानं शुश्रूषस्वेति ॥ ०३९ ॥
स उवाच दुहितरम्
यस्मात्त्वया राजानो विप्रलब्धास्तस्मादब्रह्मण्यानि तवापत्यानि भविष्यन्त्यनृतकत्वात्तवेति ॥ ०४० ॥
स च राजा तामुपलभ्य तस्यां सुरतगुणनिबद्धहृदयो लोकत्रयैश्वर्यमिवोपलभ्य हर्षबाष्पकलया वाचा प्रणिपत्याभिपूज्य मण्डूकराजानमब्रवीत्
अनुगृहीतोऽस्मीति ॥ ०४१ ॥
स च मण्डूकराजो जामातरमनुज्ञाप्य यथागतमगच्छत् ॥ ०४२ ॥
अथ कस्यचित्कालस्य तस्यां कुमारास्त्रयस्तस्य राज्ञः संबभूवुः शलो दलो बलश्चेति
ततस्तेषां ज्येष्ठं शलं समये पिता राज्येऽभिषिच्य तपसि धृतात्मा वनं जगाम ॥ ०४३ ॥
अथ कदाचिच्छलो मृगयामचरत्
मृगं चासाद्य रथेनान्वधावत् ॥ ०४४ ॥
सूतं चोवाच
शीघ्रं मां वहस्वेति ॥ ०४५ ॥
स तथोक्तः सूतो राजानमब्रवीत्
मा क्रियतामनुबन्धः
नैष शक्यस्त्वया मृगो ग्रहीतुं यद्यपि ते रथे युक्तौ वाम्यौ स्यातामिति ॥ ०४६ ॥
ततोऽब्रवीद्राजा सूतम्
आचक्ष्व मे वाम्यौ
हन्मि वा त्वामिति ॥ ०४७ ॥
स एवमुक्तो राजभयभीतो वामदेवशापभीतश्च सन्नाचख्यौ राज्ञे
वामदेवस्याश्वौ वाम्यौ मनोजवाविति ॥ ०४८ ॥
अथैनमेवं ब्रुवाणमब्रवीद्राजा
वामदेवाश्रमं याहीति ॥ ०४९ ॥
स गत्वा वामदेवाश्रमं तमृषिमब्रवीत्

भगवन्मृगो मया विद्धः पलायते
तं संभावयेयम्
अर्हसि मे वाम्यौ दातुमिति ॥ ०५० ॥
तमब्रवीदृषिः
ददानि ते वाम्यौ
कृतकार्येण भवता ममैव निर्यात्यौ क्षिप्रमिति ॥ ०५१ ॥
स च तावश्वौ प्रतिगृह्यानुज्ञाप्य चर्षिं प्रायाद्वाम्यसंयुक्तेन रथेन मृगं प्रति गच्छंश्चाब्रवीत्सूतम्
अश्वरत्नाविमावयोग्यौ ब्राह्मणानाम्
नैतौ प्रतिदेयौ वामदेवायेति ॥ ०५२ ॥
एवमुक्त्वा मृगमवाप्य स्वनगरमेत्याश्वावन्तःपुरेऽस्थापयत् ॥ ०५३ ॥
अथर्षिश्चिन्तयामास
तरुणो राजपुत्रः कल्याणं पत्रमासाद्य रमते
न मे प्रतिनिर्यातयति
अहो कष्टमिति ॥ ०५४ ॥
मनसा निश्चित्य मासि पूर्णे शिष्यमब्रवीत्
गच्छात्रेय
राजानं ब्रूहि
यदि पर्याप्तं निर्यातयोपाध्यायवाम्याविति ॥ ०५५ ॥
स गत्वैवं तं राजानमब्रवीत् ॥ ०५६ ॥
तं राजा प्रत्युवाच
राज्ञामेतद्वाहनम्
अनर्हा ब्राह्मणा रत्नानामेवंविधानाम्
किं च ब्राह्मणानामश्वैः कार्यम्
साधु प्रतिगम्यतामिति ॥ ०५७ ॥
स गत्वैवमुपाध्यायायाचष्ट ॥ ०५८ ॥
तच्छ्रुत्वा वचनमप्रियं वामदेवः क्रोधपरीतात्मा स्वयमेव राजानमभिगम्याश्वार्थमभ्यचोदयत्
न चादाद्राजा ॥ ०५९ ॥
वामदेव उवाच ॥

प्रयच्छ वाम्यौ मम पार्थिव त्वं ; कृतं हि ते कार्यमन्यैरशक्यम् ।

मा त्वा वधीद्वरुणो घोरपाशै ;र्ब्रह्मक्षत्रस्यान्तरे वर्तमानः ॥ ०६० ॥

राजोवाच ॥

अनड्वाहौ सुव्रतौ साधु दान्ता ;वेतद्विप्राणां वाहनं वामदेव ।
ताभ्यां याहि त्वं यत्र कामो महर्षे ; छन्दांसि वै त्वादृशं संवहन्ति ॥ ०६१ ॥

वामदेव उवाच ॥

छन्दांसि वै मादृशं संवहन्ति ; लोकेऽमुष्मिन्पार्थिव यानि सन्ति ।
अस्मिंस्तु लोके मम यानमेत ;दस्मद्विधानामपरेषां च राजन् ॥ ०६२ ॥

राजोवाच ॥

चत्वारो वा गर्दभास्त्वां वहन्तु ; श्रेष्ठाश्वतर्यो हरयो वा तुरङ्गाः ।
तैस्त्वं याहि क्षत्रियस्यैष वाहो ; मम वाम्यौ न तवैतौ हि विद्धि ॥ ०६३ ॥

वामदेव उवाच ॥

घोरं व्रतं ब्राह्मणस्यैतदाहु ;रेतद्राजन्यदिहाजीवमानः ।
अयस्मया घोररूपा महान्तो ; वहन्तु त्वां शितशूलाश्चतुर्धा ॥ ०६४ ॥

राजोवाच ॥

ये त्वा विदुर्ब्राह्मणं वामदेव ; वाचा हन्तुं मनसा कर्मणा वा ।
ते त्वां सशिष्यमिह पातयन्तु ; मद्वाक्यनुन्नाः शितशूलासिहस्ताः ॥ ०६५ ॥

वामदेव उवाच ॥

नानुयोगा ब्राह्मणानां भवन्ति ; वाचा राजन्मनसा कर्मणा वा ।
यस्त्वेवं ब्रह्म तपसान्वेति विद्वां ;स्तेन श्रेष्ठो भवति हि जीवमानः ॥ ०६६ ॥

मार्कण्डेय उवाच ॥

एवमुक्ते वामदेवेन राज ;न्समुत्तस्थू राक्षसा घोररूपाः ।
तैः शूलहस्तैर्वध्यमानः स राजा ; प्रोवाचेदं वाक्यमुच्चैस्तदानीम् ॥ ०६७ ॥

इक्ष्वाकवो यदि ब्रह्मन्दलो वा ; विधेया मे यदि वान्ये विशोऽपि ।
नोत्स्रक्ष्येऽहं वामदेवस्य वाम्यौ ; नैवंविधा धर्मशीला भवन्ति ॥ ०६८ ॥

एवं ब्रुवन्नेव स यातुधानै ;र्हतो जगामाशु महीं क्षितीशः ।
ततो विदित्वा नृपतिं निपातित ;मिक्ष्वाकवो वै दलमभ्यषिञ्चन् ॥ ०६९ ॥

राज्ये तदा तत्र गत्वा स विप्रः ; प्रोवाचेदं वचनं वामदेवः ।
दलं राजानं ब्राह्मणानां हि देय ;मेवं राजन्सर्वधर्मेषु दृष्टम् ॥ ०७० ॥

बिभेषि चेत्त्वमधर्मान्नरेन्द्र ; प्रयच्छ मे शीघ्रमेवाद्य वाम्यौ ।
एतच्छ्रुत्वा वामदेवस्य वाक्यं ; स पार्थिवः सूतमुवाच रोषात् ॥ ०७१ ॥

एकं हि मे सायकं चित्ररूपं ; दिग्धं विषेणाहर सङ्गृहीतम् ।
येन विद्धो वामदेवः शयीत ; संदश्यमानः श्वभिरार्तरूपः ॥ ०७२ ॥

वामदेव उवाच ॥

जानामि पुत्रं दशवर्षं तवाहं ; जातं महिष्यां श्येनजितं नरेन्द्र ।
तं जहि त्वं मद्वचनात्प्रणुन्न ;स्तूर्णं प्रियं सायकैर्घोररूपैः ॥ ०७३ ॥

मार्कण्डेय उवाच ॥

एवमुक्तो वामदेवेन राज ;न्नन्तःपुरे राजपुत्रं जघान ।
स सायकस्तिग्मतेजा विसृष्टः ; श्रुत्वा दलस्तच्च वाक्यं बभाषे ॥ ०७४ ॥

इक्ष्वाकवो हन्त चरामि वः प्रियं ; निहन्मीमं विप्रमद्य प्रमथ्य ।
आनीयतामपरस्तिग्मतेजाः ; पश्यध्वं मे वीर्यमद्य क्षितीशाः ॥ ०७५ ॥

वामदेव उवाच ॥

यं त्वमेनं सायकं घोररूपं ; विषेण दिग्धं मम संदधासि ।
न त्वमेनं शरवर्यं विमोक्तुं ; संधातुं वा शक्ष्यसि मानवेन्द्र ॥ ०७६ ॥

राजोवाच ॥

इक्ष्वाकवः पश्यत मां गृहीतं ; न वै शक्नोम्येष शरं विमोक्तुम् ।
न चास्य कर्तुं नाशमभ्युत्सहामि ; आयुष्मान्वै जीवतु वामदेवः ॥ ०७७ ॥

वामदेव उवाच ॥

संस्पृशैनां महिषीं सायकेन ; ततस्तस्मादेनसो मोक्ष्यसे त्वम् ।
मार्कण्डेय उवाच ॥

ततस्तथा कृतवान्पार्थिवस्तु ; ततो मुनिं राजपुत्री बभाषे ।
यथा युक्तं वामदेवाहमेनं ; दिने दिने संविशन्ती व्यशंसम् ॥ ०७९ ॥

ब्राह्मणेभ्यो मृगयन्ती सूनृतानि ; तथा ब्रह्मन्पुण्यलोकं लभेयम् ॥ ०७९ ॥

वामदेव उवाच ॥

त्वया त्रातं राजकुलं शुभेक्षणे ; वरं वृणीष्वाप्रतिमं ददानि ते ।
प्रशाधीमं स्वजनं राजपुत्रि ; इक्ष्वाकुराज्यं सुमहच्चाप्यनिन्द्ये ॥ ०८० ॥

राजपुत्र्युवाच ॥

वरं वृणे भगवन्नेकमेव ; विमुच्यतां किल्बिषादद्य भर्ता ।

शिवेन चाध्याहि सपुत्रबान्धवं ; वरो वृतो ह्येष मया द्विजाग्र्य ॥ ०८१ ॥

मार्कण्डेय उवाच ॥

श्रुत्वा वचः स मुनी राजपुत्र्या ;स्तथास्त्विति प्राह कुरुप्रवीर ।
ततः स राजा मुदितो बभूव ; वाम्यौ चास्मै संप्रददौ प्रणम्य ॥ ०८२ ॥

---

# इन्द्रद्युम्नोपाख्यानम्

## अध्याय १९१

वैशंपायन उवाच ॥

मार्कण्डेयमृषयः पाण्डवाश्च पर्यपृच्छन्
अस्ति कश्चिद्भवतश्चिरजाततर इति ॥ ००१ ॥
स तानुवाच
अस्ति खलु राजर्षिरिन्द्रद्युम्नो नाम क्षीणपुण्यस्त्रिदिवात्प्रच्युतः
कीर्तिस्ते व्युच्छिन्नेति
स मामुपातिष्ठत्
अथ प्रत्यभिजानाति मां भवानिति ॥ ००२ ॥
तमहमब्रुवम्
न वयं रासायनिकाः शरीरोपतापेनात्मनः समारभामहेऽर्थानामनुष्ठानम् ॥ ००३ ॥
अस्ति खलु हिमवति प्राकारकर्णो नामोलूकः
स भवन्तं यदि जानीयात्
प्रकृष्टे चाध्वनि हिमवान्
तत्रासौ प्रतिवसतीति ॥ ००४ ॥

स मामश्वो भूत्वा तत्रावहद्यत्र बभूवोलूकः ॥ ००५ ॥
अथैनं स राजर्षिः पर्यपृच्छत्
प्रत्यभिजानाति मां भवानिति ॥ ००६ ॥
स मुहूर्तं ध्यात्वाब्रवीदेनम्
नाभिजाने भवन्तमिति ॥ ००७ ॥
स एवमुक्तो राजर्षिरिन्द्रद्युम्नः पुनस्तमुलूकमब्रवीत्
अस्ति कश्चिद्भवतश्चिरजाततर इति ॥ ००८ ॥
स एवमुक्तोऽब्रवीदेनम्
अस्ति खल्विन्द्रद्युम्नसरो नाम
तस्मिन्नाडीजङ्घो नाम बकः प्रतिवसति
सोऽस्मत्तश्चिरजाततरः
तं पृच्छेति ॥ ००९ ॥
तत इन्द्रद्युम्नो मां चोलूकं चादाय तत्सरोऽगच्छद्यत्रासौ नाडीजङ्घो नाम बको बभूव ॥ ०१० ॥
सोऽस्माभिः पृष्टः
भवानिन्द्रद्युम्नं राजानं प्रत्यभिजानातीति ॥ ०११ ॥
स एवमुक्तोऽब्रवीन्मुहूर्तं ध्यात्वा
नाभिजानाम्यहमिन्द्रद्युम्नं राजानमिति ॥ ०१२ ॥
ततः सोऽस्माभिः पृष्टः
अस्ति कश्चिदन्यो भवतश्चिरजाततर इति ॥ ०१३ ॥
स नोऽब्रवीदस्ति खल्विहैव सरस्यकूपारो नाम कच्छपः प्रतिवसति
स मत्तश्चिरजाततर इति
स यदि कथञ्चिदभिजानीयादिमं राजानं तमकूपारं पृच्छाम इति ॥ ०१४ ॥
ततः स बकस्तमकूपारं कच्छपं विज्ञापयामास
अस्त्यस्माकमभिप्रेतं भवन्तं कञ्चिदर्थमभिप्रष्टुम्
साध्वागम्यतां तावदिति ॥ ०१५ ॥
एतच्छ्रुत्वा स कच्छपस्तस्मात्सरस उत्थायाभ्यगच्छद्यत्र तिष्ठामो वयं तस्य सरसस्तीरे ॥ ०१६ ॥
आगतं चैनं वयमपृच्छाम
भवानिन्द्रद्युम्नं राजानमभिजानातीति ॥ ०१७ ॥
स मुहूर्तं ध्यात्वा बाष्पपूर्णनयन उद्विग्नहृदयो वेपमानो विसञ्ज्ञकल्पः प्राञ्जलिरब्रवीत्

किमहमेनं न प्रत्यभिजानामि
अहं ह्यनेन सहस्रकृत्वः पूर्वमग्निचितिषूपहितपूर्वः
सरश्चेदमस्य दक्षिणादत्ताभिर्गोभिरतिक्रममाणाभिः कृतम्
अत्र चाहं प्रतिवसामीति ॥ ०१८ ॥
अथैतत्कच्छपेनोदाहृतं श्रुत्वा समनन्तरं देवलोकाद्देवरथः प्रादुरासीत् ॥ ०१९ ॥
वाचश्चाश्रूयन्तेन्द्रद्युम्नं प्रति
प्रस्तुतस्ते स्वर्गः
यथोचितं स्थानमभिपद्यस्व
कीर्तिमानसि
अव्यग्रो याहीति ॥ ०२० ॥
दिवं स्पृशति भूमिं च शब्दः पुण्यस्य कर्मणः ।
यावत्स शब्दो भवति तावत्पुरुष उच्यते ॥ ०२१ ॥

अकीर्तिः कीर्त्यते यस्य लोके भूतस्य कस्यचित् ।
पतत्येवाधमा.ण्ल्लोकान्यावच्छब्दः स कीर्त्यते ॥ ०२२ ॥

तस्मात्कल्याणवृत्तः स्यादत्यन्ताय नरो भुवि ।
विहाय वृत्तं पापिष्ठं धर्ममेवाभिसंश्रयेत् ॥ ०२३ ॥

इत्येतच्छ्रुत्वा स राजाब्रवीत्
तिष्ठ तावद्यावदिदानीमिमौ वृद्धौ यथास्थानं प्रतिपादयामीति ॥ ०२४ ॥
स मां प्राकारकर्णं चोलूकं यथोचिते स्थाने प्रतिपाद्य तेनैव यानेन संसिद्धो यथोचितं स्थानं प्रतिपन्नः ॥ ०२५ ॥
एतन्मयानुभूतं चिरजीविना दृष्टमिति पाण्डवानुवाच मार्कण्डेयः ॥ ०२६ ॥
पाण्डवाश्चोचुः प्रीताः
साधु
शोभनं कृतं भवता राजानमिन्द्रद्युम्नं स्वर्गलोकाच्च्युतं स्वे स्थाने स्वर्गे पुनः प्रतिपादयतेति ॥ ०२७ ॥
अथैनानब्रवीदसौ

ननु देवकीपुत्रेणापि कृष्णेन नरके मज्जमानो राजर्षिर्नृगस्तस्मात्कृच्छ्रात्समुद्धृत्य पुनः स्वर्गं प्रतिपादित इति ॥ ०२८ ॥

---

# धुन्धुमारोपाख्यानम्

## अध्याय १९२

वैशंपायन उवाच ॥

युधिष्ठिरो धर्मराजः पप्रच्छ भरतर्षभ ।
मार्कण्डेयं तपोवृद्धं दीर्घायुषमकल्मषम् ॥ ००१ ॥

विदितास्तव धर्मज्ञ देवदानवराक्षसाः ।
राजवंशाश्च विविधा ऋषिवंशाश्च शाश्वताः ॥ ००२ ॥

न तेऽस्त्यविदितं किञ्चिदस्मि.ण्ल्लोके द्विजोत्तम ॥ ००२ ॥

कथां वेत्सि मुने दिव्यां मनुष्योरगरक्षसाम् ।
एतदिच्छाम्यहं श्रोतुं तत्त्वेन कथितं द्विज ॥ ००३ ॥

कुवलाश्व इति ख्यात इक्ष्वाकुरपराजितः ।
कथं नाम विपर्यासाद्धुन्धुमारत्वमागतः ॥ ००४ ॥

एतदिच्छामि तत्त्वेन ज्ञातुं भार्गवसत्तम ।
विपर्यस्तं यथा नाम कुवलाश्वस्य धीमतः ॥ ००५ ॥

मार्कण्डेय उवाच ॥

हन्त ते कथयिष्यामि श‍ृणु राजन्युधिष्ठिर ।
धर्मिष्ठमिदमाख्यानं धुन्धुमारस्य तच्छृणु ॥ ००६ ॥

यथा स राजा इक्ष्वाकुः कुवलाश्वो महीपतिः ।
धुन्धुमारत्वमगमत्तच्छृणुष्व महीपते ॥ ००७ ॥

महर्षिर्विश्रुतस्तात उत्तङ्क इति भारत ।
मरुधन्वसु रम्येषु आश्रमस्तस्य कौरव ॥ ००८ ॥

उत्तङ्कस्तु महाराज तपोऽतप्यत्सुदुश्चरम् ।
आरिराधयिषुर्विष्णुं बहून्वर्षगणान्विभो ॥ ००९ ॥

तस्य प्रीतः स भगवान्साक्षाद्दर्शनमेयिवान् ।
दृष्ट्वैव चर्षिः प्रह्वस्तं तुष्टाव विविधैः स्तवैः ॥ ०१० ॥

त्वया देव प्रजाः सर्वाः सदेवासुरमानवाः ।
स्थावराणि च भूतानि जङ्गमानि तथैव च ॥ ०११ ॥

ब्रह्म वेदाश्च वेद्यं च त्वया सृष्टं महाद्युते ॥ ०११ ॥

शिरस्ते गगनं देव नेत्रे शशिदिवाकरौ ।
निःश्वासः पवनश्चापि तेजोऽग्निश्च तवाच्युत ॥ ०१२ ॥

बाहवस्ते दिशः सर्वाः कुक्षिश्चापि महार्णवः ॥ ०१२ ॥

ऊरू ते पर्वता देव खं नाभिर्मधुसूदन ।
पादौ ते पृथिवी देवी रोमाण्योषधयस्तथा ॥ ०१३ ॥

इन्द्रसोमाग्निवरुणा देवासुरमहोरगाः ।
प्रह्वास्त्वामुपतिष्ठन्ति स्तुवन्तो विविधैः स्तवैः ॥ ०१४ ॥

त्वया व्याप्तानि सर्वाणि भूतानि भुवनेश्वर ।
योगिनः सुमहावीर्याः स्तुवन्ति त्वां महर्षयः ॥ ०१५ ॥

त्वयि तुष्टे जगत्स्वस्थं त्वयि क्रुद्धे महद्भयम् ।
भयानामपनेतासि त्वमेकः पुरुषोत्तम ॥ ०१६ ॥

देवानां मानुषाणां च सर्वभूतसुखावहः ।
त्रिभिर्विक्रमणैर्देव त्रयो लोकास्त्वयाहृताः ॥ ०१७ ॥

असुराणां समृद्धानां विनाशश्च त्वया कृतः ॥ ०१७ ॥

तव विक्रमणैर्देवा निर्वाणमगमन्परम् ।
पराभवं च दैत्येन्द्रास्त्वयि क्रुद्धे महाद्युते ॥ ०१८ ॥

त्वं हि कर्ता विकर्ता च भूतानामिह सर्वशः ।
आराधयित्वा त्वां देवाः सुखमेधन्ति सर्वशः ॥ ०१९ ॥

एवं स्तुतो हृषीकेश उत्तङ्केन महात्मना ।
उत्तङ्कमब्रवीद्विष्णुः प्रीतस्तेऽहं वरं वृणु ॥ ०२० ॥

उत्तङ्क उवाच ॥

पर्याप्तो मे वरो ह्येष यदहं दृष्टवान्हरिम् ।
पुरुषं शाश्वतं दिव्यं स्रष्टारं जगतः प्रभुम् ॥ ०२१ ॥

विष्णुरुवाच ॥

प्रीतस्तेऽहमलौल्येन भक्त्या च द्विजसत्तम ।
अवश्यं हि त्वया ब्रह्मन्मत्तो ग्राह्यो वरो द्विज ॥ ०२२ ॥

एवं संछन्द्यमानस्तु वरेण हरिणा तदा ।

उत्तङ्कः प्राञ्जलिर्वव्रे वरं भरतसत्तम ॥ ०२३ ॥

यदि मे भगवान्प्रीतः पुण्डरीकनिभेक्षणः ।
धर्मे सत्ये दमे चैव बुद्धिर्भवतु मे सदा ॥ ०२४ ॥

अभ्यासश्च भवेद्भक्त्या त्वयि नित्यं महेश्वर ॥ ०२४ ॥

विष्णुरुवाच ॥

सर्वमेतद्धि भविता मत्प्रसादात्तव द्विज ।
प्रतिभास्यति योगश्च येन युक्तो दिवौकसाम् ॥ ०२५ ॥

त्रयाणामपि लोकानां महत्कार्यं करिष्यसि ॥ ०२५ ॥

उत्सादनार्थं लोकानां धुन्धुर्नाम महासुरः ।
तपस्यति तपो घोरं शृणु यस्तं हनिष्यति ॥ ०२६ ॥

बृहदश्व इति ख्यातो भविष्यति महीपतिः ।
तस्य पुत्रः शुचिर्दान्तः कुवलाश्व इति श्रुतः ॥ ०२७ ॥

स योगबलमास्थाय मामकं पार्थिवोत्तमः ।
शासनात्तव विप्रर्षे धुन्धुमारो भविष्यति ॥ ०२८ ॥

मार्कण्डेय उवाच ॥

उत्तङ्कमेवमुक्त्वा तु विष्णुरन्तरधीयत ।

# अध्याय १९३

मार्कण्डेय उवाच ॥

इक्ष्वाकौ संस्थिते राजञ्शशादः पृथिवीमिमाम् ।
प्राप्तः परमधर्मात्मा सोऽयोध्यायां नृपोऽभवत् ॥ ००१ ॥

शशादस्य तु दायादः ककुत्स्थो नाम वीर्यवान् ।
अनेनाश्चापि काकुत्स्थः पृथुश्चानेनसः सुतः ॥ ००२ ॥

विष्वगश्वः पृथोः पुत्रस्तस्मादार्द्रस्तु जज्ञिवान् ।
आर्द्रस्य युवनाश्वस्तु श्रावस्तस्तस्य चात्मजः ॥ ००३ ॥

जज्ञे श्रावस्तको राजा श्रावस्ती येन निर्मिता ।
श्रावस्तस्य तु दायादो बृहदश्वो महाबलः ॥ ००४ ॥

बृहदश्वसुतश्चापि कुवलाश्व इति स्मृतः ॥ ००४ ॥

कुवलाश्वस्य पुत्राणां सहस्राण्येकविंशतिः ।
सर्वे विद्यासु निष्णाता बलवन्तो दुरासदाः ॥ ००५ ॥

कुवलाश्वस्तु पितृतो गुणैरभ्यधिकोऽभवत् ।
समये तं ततो राज्ये बृहदश्वोऽभ्यषेचयत् ॥ ००६ ॥

कुवलाश्वं महाराज शूरमुत्तमधार्मिकम् ॥ ००६ ॥

पुत्रसङ्क्रामितश्रीस्तु बृहदश्वो महीपतिः ।
जगाम तपसे धीमांस्तपोवनममित्रहा ॥ ००७ ॥

अथ शुश्राव राजर्षिं तमुत्तङ्को युधिष्ठिर ।
वनं संप्रस्थितं राजन्बृहदश्वं द्विजोत्तमः ॥ ००८ ॥

तमुत्तङ्को महातेजाः सर्वास्त्रविदुषां वरम् ।
न्यवारयदमेयात्मा समासाद्य नरोत्तमम् ॥ ००९ ॥

उत्तङ्क उवाच ॥

भवता रक्षणं कार्यं तत्तावत्कर्तुमर्हसि ।
निरुद्विग्ना वयं राजंस्त्वत्प्रसादाद्वसेमहि ॥ ०१० ॥

त्वया हि पृथिवी राजन्रक्ष्यमाणा महात्मना ।
भविष्यति निरुद्विग्ना नारण्यं गन्तुमर्हसि ॥ ०११ ॥

पालने हि महान्धर्मः प्रजानामिह दृश्यते ।
न तथा दृश्यतेऽरण्ये मा ते भूद्बुद्धिरीदृशी ॥ ०१२ ॥

ईदृशो न हि राजेन्द्र धर्मः क्वचन दृश्यते ।
प्रजानां पालने यो वै पुरा राजर्षिभिः कृतः ॥ ०१३ ॥

रक्षितव्याः प्रजा राज्ञा तास्त्वं रक्षितुमर्हसि ॥ ०१३ ॥

निरुद्विग्नस्तपश्चर्तुं न हि शक्नोमि पार्थिव ।
ममाश्रमसमीपे वै समेषु मरुधन्वसु ॥ ०१४ ॥

समुद्रो वालुकापूर्ण उज्जानक इति स्मृतः ।
बहुयोजनविस्तीर्णो बहुयोजनमायतः ॥ ०१५ ॥

तत्र रौद्रो दानवेन्द्रो महावीर्यपराक्रमः ।
मधुकैटभयोः पुत्रो धुन्धुर्नाम सुदारुणः ॥ ०१६ ॥

अन्तर्भूमिगतो राजन्वसत्यमितविक्रमः ।
तं निहत्य महाराज वनं त्वं गन्तुमर्हसि ॥ ०१७ ॥

शेते लोकविनाशाय तप आस्थाय दारुणम् ।
त्रिदशानां विनाशाय लोकानां चापि पार्थिव ॥ ०१८ ॥

अवध्यो देवतानां स दैत्यानामथ रक्षसाम् ।
नागानामथ यक्षाणां गन्धर्वाणां च सर्वशः ॥ ०१९ ॥

अवाप्य स वरं राजन्सर्वलोकपितामहात् ॥ ०१९ ॥

तं विनाशय भद्रं ते मा ते बुद्धिरतोऽन्यथा ।
प्राप्स्यसे महतीं कीर्तिं शाश्वतीमव्ययां ध्रुवाम् ॥ ०२० ॥

क्रूरस्य स्वपतस्तस्य वालुकान्तर्हितस्य वै ।
संवत्सरस्य पर्यन्ते निःश्वासः संप्रवर्तते ॥ ०२१ ॥

यदा तदा भूश्चलति सशैलवनकानना ॥ ०२१ ॥

तस्य निःश्वासवातेन रज उद्धूयते महत् ।
आदित्यपथमावृत्य सप्ताहं भूमिकम्पनम् ॥ ०२२ ॥

सविस्फुलिङ्गं सज्वालं सधूमं ह्यतिदारुणम् ॥ ०२२ ॥

तेन राजन्न शक्नोमि तस्मिन्स्थातुं स्व आश्रमे ।
तं विनाशय राजेन्द्र लोकानां हितकाम्यया ॥ ०२३ ॥

लोकाः स्वस्था भवन्त्वद्य तस्मिन्विनिहतेऽसुरे ॥ ०२३ ॥

त्वं हि तस्य विनाशाय पर्याप्त इति मे मतिः ।
तेजसा तव तेजश्च विष्णुराप्याययिष्यति ॥ ०२४ ॥

विष्णुना च वरो दत्तो मम पूर्वं ततो वधे ।

यस्तं महासुरं रौद्रं वधिष्यति महीपतिः ॥ ०२५ ॥

तेजस्तं वैष्णवमिति प्रवेक्ष्यति दुरासदम् ॥ ०२५ ॥

तत्तेजस्त्वं समाधाय राजेन्द्र भुवि दुःसहम् ।
तं निषूदय संदुष्टं दैत्यं रौद्रपराक्रमम् ॥ ०२६ ॥

न हि धुन्धुर्महातेजास्तेजसाल्पेन शक्यते ।
निर्दग्धुं पृथिवीपाल स हि वर्षशतैरपि ॥ ०२७ ॥

---

# अध्याय १९४

मार्कण्डेय उवाच ॥

स एवमुक्तो राजर्षिरुत्तङ्केनापराजितः ।
उत्तङ्कं कौरवश्रेष्ठ कृताञ्जलिरथाब्रवीत् ॥ ००१ ॥

न तेऽभिगमनं ब्रह्मन्मोघमेतद्भविष्यति ।
पुत्रो ममायं भगवन्कुवलाश्व इति स्मृतः ॥ ००२ ॥

धृतिमान्क्षिप्रकारी च वीर्येणाप्रतिमो भुवि ।
प्रियं वै सर्वमेतत्ते करिष्यति न संशयः ॥ ००३ ॥

पुत्रैः परिवृतः सर्वैः शूरैः परिघबाहुभिः ।
विसर्जयस्व मां ब्रह्मन्न्यस्तशस्त्रोऽस्मि सांप्रतम् ॥ ००४ ॥

तथास्त्विति च तेनोक्तो मुनिनामिततेजसा ।

स तमादिश्य तनयमुत्तङ्काय महात्मने ॥ ००५ ॥

क्रियतामिति राजर्षिर्जगाम वनमुत्तमम् ॥ ००५ ॥

युधिष्ठिर उवाच ॥

क एष भगवन्दैत्यो महावीर्यस्तपोधन ।
कस्य पुत्रोऽथ नप्ता वा एतदिच्छामि वेदितुम् ॥ ००६ ॥

एवं महाबलो दैत्यो न श्रुतो मे तपोधन ।
एतदिच्छामि भगवन्याथातथ्येन वेदितुम् ॥ ००७ ॥

सर्वमेव महाप्राज्ञ विस्तरेण तपोधन ॥ ००७ ॥

मार्कण्डेय उवाच ॥

शृणु राजन्निदं सर्वं यथावृत्तं नराधिप ।
एकार्णवे तदा घोरे नष्टे स्थावरजङ्गमे ॥ ००८ ॥

प्रनष्टेषु च भूतेषु सर्वेषु भरतर्षभ ॥ ००८ ॥

प्रभवः सर्वभूतानां शाश्वतः पुरुषोऽव्ययः ।
सुष्वाप भगवान्विष्णुरप्शय्यामेक एव ह ॥ ००९ ॥

नागस्य भोगे महति शेषस्यामिततेजसः ॥ ००९ ॥

लोककर्ता महाभाग भगवानच्युतो हरिः ।
नागभोगेन महता परिरभ्य महीमिमाम् ॥ ०१० ॥

स्वपतस्तस्य देवस्य पद्मं सूर्यसमप्रभम् ।
नाभ्यां विनिःसृतं तत्र यत्रोत्पन्नः पितामहः ॥ ०११ ॥

साक्षाल्लोकगुरुर्ब्रह्मा पद्मे सूर्येन्दुसप्रभे ॥ ०११ ॥

चतुर्वेदश्चतुर्मूर्तिस्तथैव च चतुर्मुखः ।
स्वप्रभावाद्दुराधर्षो महाबलपराक्रमः ॥ ०१२ ॥

कस्यचित्त्वथ कालस्य दानवौ वीर्यवत्तरौ ।
मधुश्च कैटभश्चैव दृष्टवन्तौ हरिं प्रभुम् ॥ ०१३ ॥

शयानं शयने दिव्ये नागभोगे महाद्युतिम् ।
बहुयोजनविस्तीर्णे बहुयोजनमायते ॥ ०१४ ॥

किरीटकौस्तुभधरं पीतकौशेयवाससम् ।
दीप्यमानं श्रिया राजंस्तेजसा वपुषा तथा ॥ ०१५ ॥

सहस्रसूर्यप्रतिममद्भुतोपमदर्शनम् ॥ ०१५ ॥

विस्मयः सुमहानासीन्मधुकैटभयोस्तदा ।
दृष्ट्वा पितामहं चैव पद्मे पद्मनिभेक्षणम् ॥ ०१६ ॥

वित्रासयेतामथ तौ ब्रह्माणममितौजसम् ।
वित्रास्यमानो बहुशो ब्रह्मा ताभ्यां महायशाः ॥ ०१७ ॥

अकम्पयत्पद्मनालं ततोऽबुध्यत केशवः ॥ ०१७ ॥

अथापश्यत गोविन्दो दानवौ वीर्यवत्तरौ ।
दृष्ट्वा तावब्रवीद्देवः स्वागतं वां महाबलौ ॥ ०१८ ॥

ददानि वां वरं श्रेष्ठं प्रीतिर्हि मम जायते ॥ ०१८ ॥

तौ प्रहस्य हृषीकेशं महावीर्यौ महासुरौ ।

प्रत्यब्रूतां महाराज सहितौ मधुसूदनम्  ॥ ०१९  ॥

आवां वरय देव त्वं वरदौ स्वः सुरोत्तम ।
दातारौ स्वो वरं तुभ्यं तद्ब्रवीह्यविचारयन्  ॥ ०२०  ॥

भगवानुवाच  ॥

प्रतिगृह्णे वरं वीरावीप्सितश्च वरो मम ।
युवां हि वीर्यसंपन्नौ न वामस्ति समः पुमान्  ॥ ०२१  ॥

वध्यत्वमुपगच्छेतां मम सत्यपराक्रमौ ।
एतदिच्छाम्यहं कामं प्राप्तुं लोकहिताय वै  ॥ ०२२  ॥

मधुकैटभावूचतुः  ॥

अनृतं नोक्तपूर्वं नौ स्वैरेष्वपि कुतोऽन्यथा ।
सत्ये धर्मे च निरतौ विद्ध्यावां पुरुषोत्तम  ॥ ०२३  ॥

बले रूपे च वीर्ये च शमे च न समोऽस्ति नौ ।
धर्मे तपसि दाने च शीलसत्त्वदमेषु च  ॥ ०२४  ॥

उपप्लवो महानस्मानुपावर्तत केशव ।
उक्तं प्रतिकुरुष्व त्वं कालो हि दुरतिक्रमः  ॥ ०२५  ॥

आवामिच्छावहे देव कृतमेकं त्वया विभो ।
अनावृतेऽस्मिन्नाकाशे वधं सुरवरोत्तम  ॥ ०२६  ॥

पुत्रत्वमभिगच्छाव तव चैव सुलोचन ।
वर एष वृतो देव तद्विद्धि सुरसत्तम  ॥ ०२७  ॥

भगवानुवाच  ॥

बाढमेवं करिष्यामि सर्वमेतद्भविष्यति ।
मार्कण्डेय उवाच ॥

विचिन्त्य त्वथ गोविन्दो नापश्यद्यदनावृतम् ।
अवकाशं पृथिव्यां वा दिवि वा मधुसूदनः ॥ ०२९ ॥

स्वकावनावृतावूरू दृष्ट्वा देववरस्तदा ।
मधुकैटभयो राजञ्शिरसी मधुसूदनः ॥ ०३० ॥

चक्रेण शितधारेण न्यकृन्तत महायशाः ॥ ०३० ॥

---

# अध्याय १९५

मार्कण्डेय उवाच ॥

धुन्धुर्नाम महातेजास्तयोः पुत्रो महाद्युतिः ।
स तपोऽतप्यत महन्महावीर्यपराक्रमः ॥ ००१ ॥

अतिष्ठदेकपादेन कृशो धमनिसंततः ।
तस्मै ब्रह्मा ददौ प्रीतो वरं वव्रे स च प्रभो ॥ ००२ ॥

देवदानवयक्षाणां सर्पगन्धर्वरक्षसाम् ।
अवध्योऽहं भवेयं वै वर एष वृतो मया ॥ ००३ ॥

एवं भवतु गच्छेति तमुवाच पितामहः ।
स एवमुक्तस्तत्पादौ मूर्ध्ना स्पृश्य जगाम ह ॥ ००४ ॥

स तु धुन्धुर्वरं लब्ध्वा महावीर्यपराक्रमः ।
अनुस्मरन्पितृवधं ततो विष्णुमुपाद्रवत् ॥ ००५ ॥

स तु देवान्सगन्धर्वाञ्जित्वा धुन्धुरमर्षणः ।
बबाध सर्वानसकृद्देवान्विष्णुं च वै भृशम् ॥ ००६ ॥

समुद्रो वालुकापूर्ण उज्जानक इति स्मृतः ।
आगम्य च स दुष्टात्मा तं देशं भरतर्षभ ॥ ००७ ॥

बाधते स्म परं शक्त्या तमुत्तङ्काश्रमं प्रभो ॥ ००७ ॥

अन्तर्भूमिगतस्तत्र वालुकान्तर्हितस्तदा ।
मधुकैटभयोः पुत्रो धुन्धुर्भीमपराक्रमः ॥ ००८ ॥

शेते लोकविनाशाय तपोबलसमाश्रितः ।
उत्तङ्कस्याश्रमाभ्याशे निःश्वसन्पावकार्चिषः ॥ ००९ ॥

एतस्मिन्नेव काले तु सभृत्यबलवाहनः ।
कुवलाश्वो नरपतिरन्वितो बलशालिनाम् ॥ ०१० ॥

सहस्रैरेकविंशत्या पुत्राणामरिमर्दनः ।
प्रायादुत्तङ्कसहितो धुन्धोस्तस्य निवेशनम् ॥ ०११ ॥

तमाविशत्ततो विष्णुर्भगवांस्तेजसा प्रभुः ।
उत्तङ्कस्य नियोगेन लोकानां हितकाम्यया ॥ ०१२ ॥

तस्मिन्प्रयाते दुर्धर्षे दिवि शब्दो महानभूत् ।
एष श्रीमान्नृपसुतो धुन्धुमारो भविष्यति ॥ ०१३ ॥

दिव्यैश्च पुष्पैस्तं देवाः समन्तात्पर्यवाकिरन् ।
देवदुन्दुभयश्चैव नेदुः स्वयमुदीरिताः ॥ ०१४ ॥

शीतश्च वायुः प्रववौ प्रयाणे तस्य धीमतः ।
विपांसुलां महीं कुर्वन्ववर्ष च सुरेश्वरः ॥ ०१५ ॥

अन्तरिक्षे विमानानि देवतानां युधिष्ठिर ।
तत्रैव समदृश्यन्त धुन्धुर्यत्र महासुरः ॥ ०१६ ॥

कुवलाश्वस्य धुन्धोश्च युद्धकौतूहलान्विताः ।
देवगन्धर्वसहिताः समवैक्षन्महर्षयः ॥ ०१७ ॥

नारायणेन कौरव्य तेजसाप्यायितस्तदा ।
स गतो नृपतिः क्षिप्रं पुत्रैस्तैः सर्वतोदिशम् ॥ ०१८ ॥

अर्णवं खानयामास कुवलाश्वो महीपतिः ।
कुवलाश्वस्य पुत्रैस्तु तस्मिन्वै वालुकार्णवे ॥ ०१९ ॥

सप्तभिर्दिवसैः खात्वा दृष्टो धुन्धुर्महाबलः ।
आसीद्घोरं वपुस्तस्य वालुकान्तर्हितं महत् ॥ ०२० ॥

दीप्यमानं यथा सूर्यस्तेजसा भरतर्षभ ॥ ०२० ॥

ततो धुन्धुर्महाराज दिशमाश्रित्य पश्चिमाम् ।
सुप्तोऽभूद्राजशार्दूल कालानलसमद्युतिः ॥ ०२१ ॥

कुवलाश्वस्य पुत्रैस्तु सर्वतः परिवारितः ।
अभिद्रुतः शरैस्तीक्ष्णैर्गदाभिर्मुसलैरपि ॥ ०२२ ॥

पट्टिशैः परिघैः प्रासैः खड्गैश्च विमलैः शितैः ॥ ०२२ ॥

स वध्यमानः सङ्क्रुद्धः समुत्तस्थौ महाबलः ।
क्रुद्धश्चाभक्षयत्तेषां शस्त्राणि विविधानि च ॥ ०२३ ॥

आस्याद्वमन्पावकं स संवर्तकसमं तदा ।
तान्सर्वान्नृपतेः पुत्रानदहत्स्वेन तेजसा ॥ ०२४ ॥

मुखजेनाग्निना क्रुद्धो लोकानुद्वर्तयन्निव ।
क्षणेन राजशार्दूल पुरेव कपिलः प्रभुः ॥ ०२५ ॥

सगरस्यात्मजान्क्रुद्धस्तदद्भुतमिवाभवत् ॥ ०२५ ॥

तेषु क्रोधाग्निदग्धेषु तदा भरतसत्तम ।
तं प्रबुद्धं महात्मानं कुम्भकर्णमिवापरम् ॥ ०२६ ॥

आससाद महातेजाः कुवलाश्वो महीपतिः ॥ ०२६ ॥

तस्य वारि महाराज सुस्राव बहु देहतः ।
तदापीयत तत्तेजो राजा वारिमयं नृप ॥ ०२७ ॥

योगी योगेन वह्निं च शमयामास वारिणा ॥ ०२७ ॥

ब्रह्मास्त्रेण तदा राजा दैत्यं क्रूरपराक्रमम् ।
ददाह भरतश्रेष्ठ सर्वलोकाभयाय वै ॥ ०२८ ॥

सोऽस्त्रेण दग्ध्वा राजर्षिः कुवलाश्वो महासुरम् ।
सुरशत्रुममित्रघ्नस्त्रिलोकेश इवापरः ॥ ०२९ ॥

धुन्धुमार इति ख्यातो नाम्ना समभवत्ततः ॥ ०२९ ॥

प्रीतैश्च त्रिदशैः सर्वैर्महर्षिसहितैस्तदा ।
वरं वृणीष्वेत्युक्तः स प्राञ्जलिः प्रणतस्तदा ॥ ०३० ॥

अतीव मुदितो राजन्निदं वचनमब्रवीत् ॥ ०३० ॥

दद्यां वित्तं द्विजाग्र्येभ्यः शत्रूणां चापि दुर्जयः ।
सख्यं च विष्णुना मे स्याद्भूतेष्वद्रोह एव च ॥ ०३१ ॥

धर्मे रतिश्च सततं स्वर्गे वासस्तथाक्षयः ॥ ०३१ ॥

तथास्त्विति ततो देवैः प्रीतैरुक्तः स पार्थिवः ।
ऋषिभिश्च सगन्धर्वैरुत्तङ्केन च धीमता ॥ ०३२ ॥

सभाज्य चैनं विविधैराशीर्वादैस्ततो नृपम् ।
देवा महर्षयश्चैव स्वानि स्थानानि भेजिरे ॥ ०३३ ॥

तस्य पुत्रास्त्रयः शिष्टा युधिष्ठिर तदाभवन् ।
दृढाश्वः कपिलाश्वश्च चन्द्राश्वश्चैव भारत ॥ ०३४ ॥

तेभ्यः परम्परा राजन्निक्ष्वाकूणां महात्मनाम् ॥ ०३४ ॥

एवं स निहतस्तेन कुवलाश्वेन सत्तम ।
धुन्धुर्दैत्यो महावीर्यो मधुकैटभयोः सुतः ॥ ०३५ ॥

कुवलाश्वस्तु नृपतिर्धुन्धुमार इति स्मृतः ।
नाम्ना च गुणसंयुक्तस्तदा प्रभृति सोऽभवत् ॥ ०३६ ॥

एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ।
धौन्धुमारमुपाख्यानं प्रथितं यस्य कर्मणा ॥ ०३७ ॥

इदं तु पुण्यमाख्यानं विष्णोः समनुकीर्तनम् ।
शृणुयाद्यः स धर्मात्मा पुत्रवांश्च भवेन्नरः ॥ ०३८ ॥

आयुष्मान्धृतिमांश्चैव श्रुत्वा भवति पर्वसु ।
न च व्याधिभयं किञ्चित्प्राप्नोति विगतज्वरः ॥ ०३९ ॥

# पतिव्रतोपाख्यानम्

## अध्याय १९६

वैशंपायन उवाच ॥

ततो युधिष्ठिरो राजा मार्कण्डेयं महाद्युतिम् ।
पप्रच्छ भरतश्रेष्ठो धर्मप्रश्नं सुदुर्वचम् ॥ ००१ ॥

श्रोतुमिच्छामि भगवन्स्त्रीणां माहात्म्यमुत्तमम् ।
कथ्यमानं त्वया विप्र सूक्ष्मं धर्मं च तत्त्वतः ॥ ००२ ॥

प्रत्यक्षेण हि विप्रर्षे देवा दृश्यन्ति सत्तम ।
सूर्याचन्द्रमसौ वायुः पृथिवी वह्निरेव च ॥ ००३ ॥

पिता माता च भगवन्गाव एव च सत्तम ।
यच्चान्यदेव विहितं तच्चापि भृगुनन्दन ॥ ००४ ॥

मन्येऽहं गुरुवत्सर्वमेकपत्न्यस्तथा स्त्रियः ।
पतिव्रतानां शुश्रूषा दुष्करा प्रतिभाति मे ॥ ००५ ॥

पतिव्रतानां माहात्म्यं वक्तुमर्हसि नः प्रभो ।
निरुध्य चेन्द्रियग्रामं मनः संरुध्य चानघ ॥ ००६ ॥

पतिं दैवतवच्चापि चिन्तयन्त्यः स्थिता हि याः ॥ ००६ ॥

भगवन्दुष्करं ह्येतत्प्रतिभाति मम प्रभो ।
मातापितृषु शुश्रूषा स्त्रीणां भर्तृषु च द्विज ॥ ००७ ॥

स्त्रीणां धर्मात्सुघोराद्धि नान्यं पश्यामि दुष्करम् ।
साध्वाचाराः स्त्रियो ब्रह्मन्यत्कुर्वन्ति सदादृताः ॥ ००८ ॥

दुष्करं बत कुर्वन्ति पितरो मातरश्च वै ॥ ००८ ॥

एकपत्न्यश्च या नार्यो याश्च सत्यं वदन्त्युत ।
कुक्षिणा दश मासांश्च गर्भं संधारयन्ति याः ॥ ००९ ॥

नार्यः कालेन संभूय किमद्भुततरं ततः ॥ ००९ ॥

संशयं परमं प्राप्य वेदनामतुलामपि ।
प्रजायन्ते सुतान्नार्यो दुःखेन महता विभो ॥ ०१० ॥

पुष्णन्ति चापि महता स्नेहेन द्विजसत्तम ॥ ०१० ॥

ये च क्रूरेषु सर्वेषु वर्तमाना जुगुप्सिताः ।
स्वकर्म कुर्वन्ति सदा दुष्करं तच्च मे मतम् ॥ ०११ ॥

क्षत्रधर्मसमाचारं तथ्यं चाख्याहि मे द्विज ।
धर्मः सुदुर्लभो विप्र नृशंसेन दुरात्मना ॥ ०१२ ॥

एतदिच्छामि भगवन्प्रश्नं प्रश्नविदां वर ।
श्रोतुं भृगुकुलश्रेष्ठ शुश्रूषे तव सुव्रत ॥ ०१३ ॥

मार्कण्डेय उवाच ॥

हन्त ते सर्वमाख्यास्ये प्रश्नमेतं सुदुर्वचम् ।
तत्त्वेन भरतश्रेष्ठ गदतस्तन्निबोध मे ॥ ०१४ ॥

मातरं सदृशीं तात पितॄनन्ये च मन्यते ।
दुष्करं कुरुते माता विवर्धयति या प्रजाः ॥ ०१५ ॥

तपसा देवतेज्याभिर्वन्दनेन तितिक्षया ।
अभिचारैरुपायैश्च ईहन्ते पितरः सुतान् ॥ ०१६ ॥

एवं कृच्छ्रेण महता पुत्रं प्राप्य सुदुर्लभम् ।
चिन्तयन्ति सदा वीर कीदृशोऽयं भविष्यति ॥ ०१७ ॥

आशंसते च पुत्रेषु पिता माता च भारत ।
यशः कीर्तिमथैश्वर्यं प्रजा धर्मं तथैव च ॥ ०१८ ॥

तयोराशां तु सफलां यः करोति स धर्मवित् ।
पिता माता च राजेन्द्र तुष्यतो यस्य नित्यदा ॥ ०१९ ॥

इह प्रेत्य च तस्याथ कीर्तिर्धर्मश्च शाश्वतः ॥ ०१९ ॥

नैव यज्ञः स्त्रियः कश्चिन्न श्राद्धं नोपवासकम् ।
या तु भर्तरि शुश्रूषा तया स्वर्गमुपाश्नुते ॥ ०२० ॥

एतत्प्रकरणं राजन्नधिकृत्य युधिष्ठिर ।
पतिव्रतानां नियतं धर्मं चावहितः शृणु ॥ ०२१ ॥

---

# अध्याय १९७

मार्कण्डेय उवाच ॥

कश्चिद्द्विजातिप्रवरो वेदाध्यायी तपोधनः ।
तपस्वी धर्मशीलश्च कौशिको नाम भारत ॥ ००१ ॥

साङ्गोपनिषदान्वेदानधीते द्विजसत्तमः ।
स वृक्षमूले कस्मिंश्चिद्वेदानुच्चारयन्स्थितः ॥ ००२ ॥

उपरिष्टाच्च वृक्षस्य बलाका संन्यलीयत ।
तया पुरीषमुत्सृष्टं ब्राह्मणस्य तदोपरि ॥ ००३ ॥

तामवेक्ष्य ततः क्रुद्धः समपध्यायत द्विजः ।
भृशं क्रोधाभिभूतेन बलाका सा निरीक्षिता ॥ ००४ ॥

अपध्याता च विप्रेण न्यपतद्वसुधातले ।
बलाकां पतितां दृष्ट्वा गतसत्त्वामचेतनाम् ॥ ००५ ॥

कारुण्यादभिसंतप्तः पर्यशोचत तां द्विजः ॥ ००५ ॥

अकार्यं कृतवानस्मि रागद्वेषबलात्कृतः ।
इत्युक्त्वा बहुशो विद्वान्ग्रामं भैक्षाय संश्रितः ॥ ००६ ॥

ग्रामे शुचीनि प्रचरन्कुलानि भरतर्षभ ।
प्रविष्टस्तत्कुलं यत्र पूर्वं चरितवांस्तु सः ॥ ००७ ॥

देहीति याचमानो वै तिष्ठेत्युक्तः स्त्रिया ततः ।
शौचं तु यावत्कुरुते भाजनस्य कुटुम्बिनी ॥ ००८ ॥

एतस्मिन्नन्तरे राजन्क्षुधासंपीडितो भृशम् ।
भर्ता प्रविष्टः सहसा तस्या भरतसत्तम ॥ ००९ ॥

सा तु दृष्ट्वा पतिं साध्वी ब्राह्मणं व्यपहाय तम् ।
पाद्यमाचमनीयं च ददौ भर्त्रे तथासनम् ॥ ०१० ॥

प्रह्वा पर्यचरच्चापि भर्तारमसितेक्षणा ।
आहारेणाथ भक्ष्यैश्च वाक्यैः सुमधुरैस्तथा ॥ ०११ ॥

उच्छिष्टं भुञ्जते भर्तुः सा तु नित्यं युधिष्ठिर ।
दैवतं च पतिं मेने भर्तुश्चित्तानुसारिणी ॥ ०१२ ॥

न कर्मणा न मनसा नात्यश्नान्नापि चापिबत् ।
तं सर्वभावोपगता पतिशुश्रूषणे रता ॥ ०१३ ॥

साध्वाचारा शुचिर्दक्षा कुटुम्बस्य हितैषिणी ।
भर्तुश्चापि हितं यत्तत्सततं सानुवर्तते ॥ ०१४ ॥

देवतातिथिभृत्यानां श्वश्रूश्वशुरयोस्तथा ।
शुश्रूषणपरा नित्यं सततं संयतेन्द्रिया ॥ ०१५ ॥

सा ब्राह्मणं तदा दृष्ट्वा संस्थितं भैक्षकाङ्क्षिणम् ।
कुर्वती पतिशुश्रूषां सस्माराथ शुभेक्षणा ॥ ०१६ ॥

व्रीडिता साभवत्साध्वी तदा भरतसत्तम ।
भिक्षामादाय विप्राय निर्जगाम यशस्विनी ॥ ०१७ ॥

ब्राह्मण उवाच ॥

किमिदं भवति त्वं मां तिष्ठेत्युक्त्वा वराङ्गने ।
उपरोधं कृतवती न विसर्जितवत्यसि ॥ ०१८ ॥

मार्कण्डेय उवाच ॥

ब्राह्मणं क्रोधसंतप्तं ज्वलन्तमिव तेजसा ।
दृष्ट्वा साध्वी मनुष्येन्द्र सान्त्वपूर्वं वचोऽब्रवीत् ॥ ०१९ ॥

क्षन्तुमर्हसि मे विप्र भर्ता मे दैवतं महत् ।
स चापि क्षुधितः श्रान्तः प्राप्तः शुश्रूषितो मया ॥ ०२० ॥

ब्राह्मण उवाच ॥

ब्राह्मणा न गरीयांसो गरीयांस्ते पतिः कृतः ।
गृहस्थधर्मे वर्तन्ती ब्राह्मणानवमन्यसे ॥ ०२१ ॥

इन्द्रोऽप्येषां प्रणमते किं पुनर्मानुषा भुवि ।
अवलिप्ते न जानीषे वृद्धानां न श्रुतं त्वया ॥ ०२२ ॥

ब्राह्मणा ह्यग्निसदृशा दहेयुः पृथिवीमपि ॥ ०२२ ॥

स्त्र्युवाच ॥

नावजानाम्यहं विप्रान्देवैस्तुल्यान्मनस्विनः ।
अपराधमिमं विप्र क्षन्तुमर्हसि मेऽनघ ॥ ०२३ ॥

जानामि तेजो विप्राणां महाभाग्यं च धीमताम् ।
अपेयः सागरः क्रोधात्कृतो हि लवणोदकः ॥ ०२४ ॥

तथैव दीप्ततपसां मुनीनां भावितात्मनाम् ।
येषां क्रोधाग्निरद्यापि दण्डके नोपशाम्यति ॥ ०२५ ॥

ब्राह्मणानां परिभवाद्वातापिश्च दुरात्मवान् ।
अगस्त्यमृषिमासाद्य जीर्णः क्रूरो महासुरः ॥ ०२६ ॥

प्रभावा बहवश्चापि श्रूयन्ते ब्रह्मवादिनाम् ।
क्रोधः सुविपुलो ब्रह्मन्प्रसादश्च महात्मनाम् ॥ ०२७ ॥

अस्मिंस्त्वतिक्रमे ब्रह्मन्क्षन्तुमर्हसि मेऽनघ ।
पतिशुश्रूषया धर्मो यः स मे रोचते द्विज ॥ ०२८ ॥

दैवतेष्वपि सर्वेषु भर्ता मे दैवतं परम् ।
अविशेषेण तस्याहं कुर्यां धर्मं द्विजोत्तम ॥ ०२९ ॥

शुश्रूषायाः फलं पश्य पत्युर्ब्राह्मण यादृशम् ।
बलाका हि त्वया दग्धा रोषात्तद्विदितं मम ॥ ०३० ॥

क्रोधः शत्रुः शरीरस्थो मनुष्याणां द्विजोत्तम ।
यः क्रोधमोहौ त्यजति तं देवा ब्राह्मणं विदुः ॥ ०३१ ॥

यो वदेदिह सत्यानि गुरुं संतोषयेत च ।
हिंसितश्च न हिंसेत तं देवा ब्राह्मणं विदुः ॥ ०३२ ॥

जितेन्द्रियो धर्मपरः स्वाध्यायनिरतः शुचिः ।
कामक्रोधौ वशे यस्य तं देवा ब्राह्मणं विदुः ॥ ०३३ ॥

यस्य चात्मसमो लोको धर्मज्ञस्य मनस्विनः ।
सर्वधर्मेषु च रतस्तं देवा ब्राह्मणं विदुः ॥ ०३४ ॥

योऽध्यापयेदधीयीत यजेद्वा याजयीत वा ।
दद्याद्वापि यथाशक्ति तं देवा ब्राह्मणं विदुः ॥ ०३५ ॥

ब्रह्मचारी च वेदान्यो अधीयीत द्विजोत्तमः ।
स्वाध्याये चाप्रमत्तो वै तं देवा ब्राह्मणं विदुः ॥ ०३६ ॥

यद्ब्राह्मणानां कुशलं तदेषां परिकीर्तयेत् ।
सत्यं तथा व्याहरतां नानृते रमते मनः ॥ ०३७ ॥

धनं तु ब्राह्मणस्याहुः स्वाध्यायं दममार्जवम् ।

इन्द्रियाणां निग्रहं च शाश्वतं द्विजसत्तम ॥ ०३८ ॥

सत्यार्जवे धर्ममाहुः परं धर्मविदो जनाः ॥ ०३८ ॥

दुर्ज्ञेयः शाश्वतो धर्मः स तु सत्ये प्रतिष्ठितः ।
श्रुतिप्रमाणो धर्मः स्यादिति वृद्धानुशासनम् ॥ ०३९ ॥

बहुधा दृश्यते धर्मः सूक्ष्म एव द्विजोत्तम ।
भवानपि च धर्मज्ञः स्वाध्यायनिरतः शुचिः ॥ ०४० ॥

न तु तत्त्वेन भगवन्धर्मान्वेत्सीति मे मतिः ॥ ०४० ॥

मातापितृभ्यां शुश्रूषुः सत्यवादी जितेन्द्रियः ।
मिथिलायां वसन्व्याधः स ते धर्मान्प्रवक्ष्यति ॥ ०४१ ॥

तत्र गच्छस्व भद्रं ते यथाकामं द्विजोत्तम ॥ ०४१ ॥

अत्युक्तमपि मे सर्वं क्षन्तुमर्हस्यनिन्दित ।
स्त्रियो ह्यवध्याः सर्वेषां ये धर्मविदुषो जनाः ॥ ०४२ ॥

ब्राह्मण उवाच ॥

प्रीतोऽस्मि तव भद्रं ते गतः क्रोधश्च शोभने ।
उपालम्भस्त्वया ह्युक्तो मम निःश्रेयसं परम् ॥ ०४३ ॥

स्वस्ति तेऽस्तु गमिष्यामि साधयिष्यामि शोभने ॥ ०४३ ॥

मार्कण्डेय उवाच ॥

तया विसृष्टो निर्गम्य स्वमेव भवनं ययौ ।
विनिन्दन्स द्विजोऽऽत्मानं कौशिको नरसत्तम ॥ ०४४ ॥

# ब्राह्मणव्याधसंवादः

## अध्याय १९८

मार्कण्डेय उवाच ॥

चिन्तयित्वा तदाश्चर्यं स्त्रिया प्रोक्तमशेषतः ।
विनिन्दन्स द्विजोऽऽत्मानमागस्कृत इवाबभौ ॥ ००१ ॥

चिन्तयानः स धर्मस्य सूक्ष्मां गतिमथाब्रवीत् ।
श्रद्दधानेन भाव्यं वै गच्छामि मिथिलामहम् ॥ ००२ ॥

कृतात्मा धर्मवित्तस्यां व्याधो निवसते किल ।
तं गच्छाम्यहमद्यैव धर्मं प्रष्टुं तपोधनम् ॥ ००३ ॥

इति सञ्चिन्त्य मनसा श्रद्दधानः स्त्रिया वचः ।
बलाकाप्रत्ययेनासौ धर्म्यैश्च वचनैः शुभैः ॥ ००४ ॥

संप्रतस्थे स मिथिलां कौतूहलसमन्वितः ॥ ००४ ॥

अतिक्रामन्नरण्यानि ग्रामांश्च नगराणि च ।
ततो जगाम मिथिलां जनकेन सुरक्षिताम् ॥ ००५ ॥

धर्मसेतुसमाकीर्णां यज्ञोत्सववतीं शुभाम् ।
गोपुराट्टालकवतीं गृहप्राकारशोभिताम् ॥ ००६ ॥

प्रविश्य स पुरीं रम्यां विमानैर्बहुभिर्वृताम् ।
पण्यैश्च बहुभिर्युक्तां सुविभक्तमहापथाम्  ॥ ००७  ॥

अश्वै रथैस्तथा नागैर्यानैश्च बहुभिर्वृताम् ।
हृष्टपुष्टजनाकीर्णां नित्योत्सवसमाकुलाम्  ॥ ००८  ॥

सोऽपश्यद्बहुवृत्तान्तां ब्राह्मणः समतिक्रमन् ।
धर्मव्याधमपृच्छच्च स चास्य कथितो द्विजैः  ॥ ००९  ॥

अपश्यत्तत्र गत्वा तं सूनामध्ये व्यवस्थितम् ।
मार्गमाहिषमांसानि विक्रीणन्तं तपस्विनम्  ॥ ०१०  ॥

आकुलत्वात्तु क्रेतृणामेकान्ते संस्थितो द्विजः  ॥ ०१०  ॥

स तु ज्ञात्वा द्विजं प्राप्तं सहसा संभ्रमोत्थितः ।
आजगाम यतो विप्रः स्थित एकान्त आसने  ॥ ०११  ॥

व्याध उवाच  ॥

अभिवादये त्वा भगवन्स्वागतं ते द्विजोत्तम ।
अहं व्याधस्तु भद्रं ते किं करोमि प्रशाधि माम्  ॥ ०१२  ॥

एकपत्न्या यदुक्तोऽसि गच्छ त्वं मिथिलामिति ।
जानाम्येतदहं सर्वं यदर्थं त्वमिहागतः  ॥ ०१३  ॥

मार्कण्डेय उवाच  ॥

श्रुत्वा तु तस्य तद्वाक्यं स विप्रो भृशहर्षितः ।
द्वितीयमिदमाश्चर्यमित्यचिन्तयत द्विजः  ॥ ०१४  ॥

अदेशस्थं हि ते स्थानमिति व्याधोऽब्रवीद्द्विजम् ।

गृहं गच्छाव भगवन्यदि रोचयसेऽनघ ॥ ०१५ ॥

बाढमित्येव संहृष्टो विप्रो वचनमब्रवीत् ।
अग्रतस्तु द्विजं कृत्वा स जगाम गृहान्प्रति ॥ ०१६ ॥

प्रविश्य च गृहं रम्यमासनेनाभिपूजितः ।
पाद्यमाचमनीयं च प्रतिगृह्य द्विजोत्तमः ॥ ०१७ ॥

ततः सुखोपविष्टस्तं व्याधं वचनमब्रवीत् ।
कर्मैतद्वै न सदृशं भवतः प्रतिभाति मे ॥ ०१८ ॥

अनुतप्ये भृशं तात तव घोरेण कर्मणा ॥ ०१८ ॥

व्याध उवाच ॥

कुलोचितमिदं कर्म पितृपैतामहं मम ।
वर्तमानस्य मे धर्मे स्वे मन्युं मा कृथा द्विज ॥ ०१९ ॥

धात्रा तु विहितं पूर्वं कर्म स्वं पालयाम्यहम् ।
प्रयत्नाच्च गुरू वृद्धौ शुश्रूषेऽहं द्विजोत्तम ॥ ०२० ॥

सत्यं वदे नाभ्यसूये यथाशक्ति ददामि च ।
देवतातिथिभृत्यानामवशिष्टेन वर्तये ॥ ०२१ ॥

न कुत्सयाम्यहं किञ्चिन्न गर्हे बलवत्तरम् ।
कृतमन्वेति कर्तारं पुरा कर्म द्विजोत्तम ॥ ०२२ ॥

कृषिगोरक्ष्यवाणिज्यमिह लोकस्य जीवनम् ।
दण्डनीतिस्त्रयी विद्या तेन लोका भवन्त्युत ॥ ०२३ ॥

कर्म शूद्रे कृषिर्वैश्ये सङ्ग्रामः क्षत्रिये स्मृतः ।

ब्रह्मचर्यं तपो मन्त्राः सत्यं च ब्राह्मणे सदा ॥ ०२४ ॥

राजा प्रशास्ति धर्मेण स्वकर्मनिरताः प्रजाः ।
विकर्माणश्च ये केचित्तान्युनक्ति स्वकर्मसु ॥ ०२५ ॥

भेतव्यं हि सदा राज्ञां प्रजानामधिपा हि ते ।
मारयन्ति विकर्मस्थं लुब्धा मृगमिवेषुभिः ॥ ०२६ ॥

जनकस्येह विप्रर्षे विकर्मस्थो न विद्यते ।
स्वकर्मनिरता वर्णाश्चत्वारोऽपि द्विजोत्तम ॥ ०२७ ॥

स एष जनको राजा दुर्वृत्तमपि चेत्सुतम् ।
दण्ड्यं दण्डे निक्षिपति तथा न ग्लाति धार्मिकम् ॥ ०२८ ॥

सुयुक्तचारो नृपतिः सर्वं धर्मेण पश्यति ।
श्रीश्च राज्यं च दण्डश्च क्षत्रियाणां द्विजोत्तम ॥ ०२९ ॥

राजानो हि स्वधर्मेण श्रियमिच्छन्ति भूयसीम् ।
सर्वेषामेव वर्णानां त्राता राजा भवत्युत ॥ ०३० ॥

परेण हि हतान्ब्रह्मन्वराहमहिषानहम् ।
न स्वयं हन्मि विप्रर्षे विक्रीणामि सदा त्वहम् ॥ ०३१ ॥

न भक्षयामि मांसानि ऋतुगामी तथा ह्यहम् ।
सदोपवासी च तथा नक्तभोजी तथा द्विज ॥ ०३२ ॥

अशीलश्चापि पुरुषो भूत्वा भवति शीलवान् ।
प्राणिहिंसारतश्चापि भवते धार्मिकः पुनः ॥ ०३३ ॥

व्यभिचारान्नरेन्द्राणां धर्मः सङ्कीर्यते महान् ।
अधर्मो वर्धते चापि सङ्कीर्यन्ते तथा प्रजाः ॥ ०३४ ॥

उरुण्डा वामनाः कुब्जाः स्थूलशीर्षास्तथैव च ।
क्लीबाश्चान्धाश्च जायन्ते बधिरा लम्बचूचुकाः ॥ ०३५ ॥

पार्थिवानामधर्मत्वात्प्रजानामभवः सदा ॥ ०३५ ॥

स एष राजा जनकः सर्वं धर्मेण पश्यति ।
अनुगृह्णन्प्रजाः सर्वाः स्वधर्मनिरताः सदा ॥ ०३६ ॥

ये चैव मां प्रशंसन्ति ये च निन्दन्ति मानवाः ।
सर्वान्सुपरिणीतेन कर्मणा तोषयाम्यहम् ॥ ०३७ ॥

ये जीवन्ति स्वधर्मेण संभुञ्जन्ते च पार्थिवाः ।
न किञ्चिदुपजीवन्ति दक्षा उत्थानशीलिनः ॥ ०३८ ॥

शक्त्यान्नदानं सततं तितिक्षा धर्मनित्यता ।
यथार्हं प्रतिपूजा च सर्वभूतेषु वै दया ॥ ०३९ ॥

त्यागान्नान्यत्र मर्त्यानां गुणास्तिष्ठन्ति पूरुषे ॥ ०३९ ॥

मृषावादं परिहरेत्कुर्यात्प्रियमयाचितः ।
न च कामान्न संरम्भान्न द्वेषाद्धर्ममुत्सृजेत् ॥ ०४० ॥

प्रिये नातिभृशं हृष्येदप्रिये न च सञ्ज्वरेत् ।
न मुह्येदर्थकृच्छ्रेषु न च धर्मं परित्यजेत् ॥ ०४१ ॥

कर्म चेत्किञ्चिदन्यत्स्यादितरन्न समाचरेत् ।
यत्कल्याणमभिध्यायेत्तत्रात्मानं नियोजयेत् ॥ ०४२ ॥

न पापं प्रति पापः स्यात्साधुरेव सदा भवेत् ।
आत्मनैव हतः पापो यः पापं कर्तुमिच्छति ॥ ०४३ ॥

कर्म चैतदसाधूनां वृजिनानामसाधुवत् ।
न धर्मोऽस्तीति मन्वानाः शुचीनवहसन्ति ये  ॥ ०४४  ॥

अश्रद्दधाना धर्मस्य ते नश्यन्ति न संशयः  ॥ ०४४  ॥

महादृतिरिवाध्मातः पापो भवति नित्यदा ।
मूढानामवलिप्तानामसारं भाषितं भवेत्  ॥ ०४५  ॥

दर्शयत्यन्तरात्मानं दिवा रूपमिवांशुमान्  ॥ ०४५  ॥

न लोके राजते मूर्खः केवलात्मप्रशंसया ।
अपि चेह मृजा हीनः कृतविद्यः प्रकाशते  ॥ ०४६  ॥

अब्रुवन्कस्यचिन्निन्दामात्मपूजामवर्णयन् ।
न कश्चिद्गुणसंपन्नः प्रकाशो भुवि दृश्यते  ॥ ०४७  ॥

विकर्मणा तप्यमानः पापाद्विपरिमुच्यते ।
नैतत्कुर्यां पुनरिति द्वितीयात्परिमुच्यते  ॥ ०४८  ॥

कर्मणा येन तेनेह पापाद्द्विजवरोत्तम ।
एवं श्रुतिरियं ब्रह्मन्धर्मेषु परिदृश्यते  ॥ ०४९  ॥

पापान्यबुद्ध्वेह पुरा कृतानि ; प्राग्धर्मशीलो विनिहन्ति पश्चात् ।
धर्मो ब्रह्मन्नुदते पूरुषाणां ; यत्कुर्वते पापमिह प्रमादात्  ॥ ०५०  ॥

पापं कृत्वा हि मन्येत नाहमस्मीति पूरुषः ।
चिकीर्षेदेव कल्याणं श्रद्दधानोऽनसूयकः  ॥ ०५१  ॥

वसनस्येव छिद्राणि साधूनां विवृणोति यः ।
पापं चेत्पुरुषः कृत्वा कल्याणमभिपद्यते  ॥ ०५२  ॥

मुच्यते सर्वपापेभ्यो महाभ्रैरिव चन्द्रमाः ॥ ०५२ ॥

यथादित्यः समुद्यन्वै तमः सर्वं व्यपोहति ।
एवं कल्याणमातिष्ठन्सर्वपापैः प्रमुच्यते ॥ ०५३ ॥

पापानां विद्ध्यधिष्ठानं लोभमेव द्विजोत्तम ।
लुब्धाः पापं व्यवस्यन्ति नरा नातिबहुश्रुताः ॥ ०५४ ॥

अधर्मा धर्मरूपेण तृणैः कूपा इवावृताः ॥ ०५४ ॥

तेषां दमः पवित्राणि प्रलापा धर्मसंश्रिताः ।
सर्वं हि विद्यते तेषु शिष्टाचारः सुदुर्लभः ॥ ०५५ ॥

मार्कण्डेय उवाच ॥

स तु विप्रो महाप्राज्ञो धर्मव्याधमपृच्छत ।
शिष्टाचारं कथमहं विद्यामिति नरोत्तम ॥ ०५६ ॥

एतन्महामते व्याध प्रब्रवीहि यथातथम् ॥ ०५६ ॥

व्याध उवाच ॥

यज्ञो दानं तपो वेदाः सत्यं च द्विजसत्तम ।
पञ्चैतानि पवित्राणि शिष्टाचारेषु नित्यदा ॥ ०५७ ॥

कामक्रोधौ वशे कृत्वा दम्भं लोभमनार्जवम् ।
धर्म इत्येव संतुष्टास्ते शिष्टाः शिष्टसंमताः ॥ ०५८ ॥

न तेषां विद्यतेऽवृत्तं यज्ञस्वाध्यायशीलिनाम् ।
आचारपालनं चैव द्वितीयं शिष्टलक्षणम् ॥ ०५९ ॥

गुरुशुश्रूषणं सत्यमक्रोधो दानमेव च ।
एतच्चतुष्टयं ब्रह्मञ्शिष्टाचारेषु नित्यदा ॥ ०६० ॥

शिष्टाचारे मनः कृत्वा प्रतिष्ठाप्य च सर्वशः ।
यामयं लभते तुष्टिं सा न शक्या ह्यतोऽन्यथा ॥ ०६१ ॥

वेदस्योपनिषत्सत्यं सत्यस्योपनिषद्दमः ।
दमस्योपनिषत्त्यागः शिष्टाचारेषु नित्यदा ॥ ०६२ ॥

ये तु धर्ममसूयन्ते बुद्धिमोहान्विता नराः ।
अपथा गच्छतां तेषामनुयातापि पीड्यते ॥ ०६३ ॥

ये तु शिष्टाः सुनियताः श्रुतित्यागपरायणाः ।
धर्म्यं पन्थानमारूढाः सत्यधर्मपरायणाः ॥ ०६४ ॥

नियच्छन्ति परां बुद्धिं शिष्टाचारान्विता नराः ।
उपाध्यायमते युक्ताः स्थित्या धर्मार्थदर्शिनः ॥ ०६५ ॥

नास्तिकान्भिन्नमर्यादान्क्रूरान्पापमतौ स्थितान् ।
त्यज ताञ्ज्ञानमाश्रित्य धार्मिकानुपसेव्य च ॥ ०६६ ॥

कामलोभग्रहाकीर्णां पञ्चेन्द्रियजलां नदीम् ।
नावं धृतिमयीं कृत्वा जन्मदुर्गाणि संतर ॥ ०६७ ॥

क्रमेण सञ्चितो धर्मो बुद्धियोगमयो महान् ।
शिष्टाचारे भवेत्साधू रागः शुक्लेव वाससि ॥ ०६८ ॥

अहिंसा सत्यवचनं सर्वभूतहितं परम् ।
अहिंसा परमो धर्मः स च सत्ये प्रतिष्ठितः ॥ ०६९ ॥

सत्ये कृत्वा प्रतिष्ठां तु प्रवर्तन्ते प्रवृत्तयः ॥ ०६९ ॥

सत्यमेव गरीयस्तु शिष्टाचारनिषेवितम् ।
आचारश्च सतां धर्मः सन्तश्चाचारलक्षणाः ॥ ०७० ॥

यो यथाप्रकृतिर्जन्तुः स्वां स्वां प्रकृतिमश्नुते ।
पापात्मा क्रोधकामादीन्दोषानाप्नोत्यनात्मवान् ॥ ०७१ ॥

आरम्भो न्याययुक्तो यः स हि धर्म इति स्मृतः ।
अनाचारस्त्वधर्मेति एतच्छिष्टानुशासनम् ॥ ०७२ ॥

अक्रुध्यन्तोऽनसूयन्तो निरहङ्कारमत्सराः ।
ऋजवः शमसंपन्नाः शिष्टाचारा भवन्ति ते ॥ ०७३ ॥

त्रैविद्यवृद्धाः शुचयो वृत्तवन्तो मनस्विनः ।
गुरुशुश्रूषवो दान्ताः शिष्टाचारा भवन्त्युत ॥ ०७४ ॥

तेषामदीनसत्त्वानां दुष्कराचारकर्मणाम् ।
स्वैः कर्मभिः सत्कृतानां घोरत्वं संप्रणश्यति ॥ ०७५ ॥

तं सदाचारमाश्चर्यं पुराणं शाश्वतं ध्रुवम् ।
धर्मं धर्मेण पश्यन्तः स्वर्गं यान्ति मनीषिणः ॥ ०७६ ॥

आस्तिका मानहीनाश्च द्विजातिजनपूजकाः ।
श्रुतवृत्तोपसंपन्नाः ते सन्तः स्वर्गगामिनः ॥ ०७७ ॥

वेदोक्तः परमो धर्मो धर्मशास्त्रेषु चापरः ।
शिष्टाचीर्णश्च शिष्टानां त्रिविधं धर्मलक्षणम् ॥ ०७८ ॥

पारणं चापि विद्यानां तीर्थानामवगाहनम् ।
क्षमा सत्यार्जवं शौचं शिष्टाचारनिदर्शनम् ॥ ०७९ ॥

सर्वभूतदयावन्तो अहिंसानिरताः सदा ।
परुषं न प्रभाषन्ते सदा सन्तो द्विजप्रियाः ॥ ०८० ॥

शुभानामशुभानां च कर्मणां फलसञ्चये ।
विपाकमभिजानन्ति ते शिष्टाः शिष्टसंमताः ॥ ०८१ ॥

न्यायोपेता गुणोपेताः सर्वलोकहितैषिणः ।
सन्तः स्वर्गजितः शुक्लाः संनिविष्टाश्च सत्पथे ॥ ०८२ ॥

दातारः संविभक्तारो दीनानुग्रहकारिणः ।
सर्वभूतदयावन्तस्ते शिष्टाः शिष्टसंमताः ॥ ०८३ ॥

सर्वपूज्याः श्रुतधनास्तथैव च तपस्विनः ।
दाननित्याः सुखा.ण्लोकानाप्नुवन्तीह च श्रियम् ॥ ०८४ ॥

पीडया च कलत्रस्य भृत्यानां च समाहिताः ।
अतिशक्त्या प्रयच्छन्ति सन्तः सद्भिः समागताः ॥ ०८५ ॥

लोकयात्रां च पश्यन्तो धर्ममात्महितानि च ।
एवं सन्तो वर्तमाना एधन्ते शाश्वतीः समाः ॥ ०८६ ॥

अहिंसा सत्यवचनमानृशंस्यमथार्जवम् ।
अद्रोहो नातिमानश्च ह्रीस्तितिक्षा दमः शमः ॥ ०८७ ॥

धीमन्तो धृतिमन्तश्च भूतानामनुकम्पकाः ।
अकामद्वेषसंयुक्तास्ते सन्तो लोकसत्कृताः ॥ ०८८ ॥

त्रीण्येव तु पदान्याहुः सतां वृत्तमनुत्तमम् ।
न द्रुह्येच्चैव दद्याच्च सत्यं चैव सदा वदेत् ॥ ०८९ ॥

सर्वत्र च दयावन्तः सन्तः करुणवेदिनः ।
गच्छन्तीह सुसंतुष्टा धर्म्यं पन्थानमुत्तमम्  ॥ ०९०  ॥

शिष्टाचारा महात्मानो येषां धर्मः सुनिश्चितः  ॥ ०९०  ॥

अनसूया क्षमा शान्तिः संतोषः प्रियवादिता ।
कामक्रोधपरित्यागः शिष्टाचारनिषेवणम्  ॥ ०९१  ॥

कर्मणा श्रुतसंपन्नं सतां मार्गमनुत्तमम् ।
शिष्टाचारं निषेवन्ते नित्यं धर्मेष्वतन्द्रिताः  ॥ ०९२  ॥

प्रज्ञाप्रासादमारुह्य मुह्यतो महतो जनान् ।
प्रेक्षन्तो लोकवृत्तानि विविधानि द्विजोत्तम  ॥ ०९३  ॥

अतिपुण्यानि पापानि तानि द्विजवरोत्तम  ॥ ०९३  ॥

एतत्ते सर्वमाख्यातं यथाप्रज्ञं यथाश्रुतम् ।
शिष्टाचारगुणान्ब्रह्मन्पुरस्कृत्य द्विजर्षभ  ॥ ०९४  ॥

---

# अध्याय १९९

मार्कण्डेय उवाच  ॥

स तु विप्रमथोवाच धर्मव्याधो युधिष्ठिर ।
यदहं ह्याचरे कर्म घोरमेतदसंशयम्  ॥ ००१  ॥

विधिस्तु बलवान्ब्रह्मन्दुस्तरं हि पुराकृतम् ।

पुराकृतस्य पापस्य कर्मदोषो भवत्ययम् ॥ ००२ ॥

दोषस्यैतस्य वै ब्रह्मन्विघाते यत्नवानहम् ॥ ००२ ॥

विधिना विहिते पूर्वं निमित्तं घातको भवेत् ।
निमित्तभूता हि वयं कर्मणोऽस्य द्विजोत्तम ॥ ००३ ॥

येषां हतानां मांसानि विक्रीणामो वयं द्विज ।
तेषामपि भवेद्धर्म उपभोगेन भक्षणात् ॥ ००४ ॥

देवतातिथिभृत्यानां पितॄणां प्रतिपूजनात् ॥ ००४ ॥

ओषध्यो वीरुधश्चापि पशवो मृगपक्षिणः ।
अन्नाद्यभूता लोकस्य इत्यपि श्रूयते श्रुतिः ॥ ००५ ॥

आत्ममांसप्रदानेन शिबिरौशीनरो नृपः ।
स्वर्गं सुदुर्लभं प्राप्तः क्षमावान्द्विजसत्तम ॥ ००६ ॥

राज्ञो महानसे पूर्वं रन्तिदेवस्य वै द्विज ।
द्वे सहस्रे तु वध्येते पशूनामन्वहं तदा ॥ ००७ ॥

समांसं ददतो ह्यन्नं रन्तिदेवस्य नित्यशः ।
अतुला कीर्तिरभवन्नृपस्य द्विजसत्तम ॥ ००८ ॥

चातुर्मास्येषु पशवो वध्यन्त इति नित्यशः ॥ ००८ ॥

अग्नयो मांसकामाश्च इत्यपि श्रूयते श्रुतिः ।
यज्ञेषु पशवो ब्रह्मन्वध्यन्ते सततं द्विजैः ॥ ००९ ॥

संस्कृताः किल मन्त्रैश्च तेऽपि स्वर्गमवाप्नुवन् ॥ ००९ ॥

यदि नैवाग्नयो ब्रह्मन्मांसकामाभवन्पुरा ।
भक्ष्यं नैव भवेन्मांसं कस्यचिद्द्विजसत्तम ॥ ०१० ॥

अत्रापि विधिरुक्तश्च मुनिभिर्मांसभक्षणे ।
देवतानां पितॄणां च भुङ्क्ते दत्त्वा तु यः सदा ॥ ०११ ॥

यथाविधि यथाश्रद्धं न स दुष्यति भक्षणात् ॥ ०११ ॥

अमांसाशी भवत्येवमित्यपि श्रूयते श्रुतिः ।
भार्यां गच्छन्ब्रह्मचारी ऋतौ भवति ब्राह्मणः ॥ ०१२ ॥

सत्यानृते विनिश्चित्य अत्रापि विधिरुच्यते ।
सौदासेन पुरा राज्ञा मानुषा भक्षिता द्विज ॥ ०१३ ॥

शापाभिभूतेन भृशमत्र किं प्रतिभाति ते ॥ ०१३ ॥

स्वधर्म इति कृत्वा तु न त्यजामि द्विजोत्तम ।
पुराकृतमिति ज्ञात्वा जीवाम्येतेन कर्मणा ॥ ०१४ ॥

स्वकर्म त्यजतो ब्रह्मन्नधर्म इह दृश्यते ।
स्वकर्मनिरतो यस्तु स धर्म इति निश्चयः ॥ ०१५ ॥

पूर्वं हि विहितं कर्म देहिनं न विमुञ्चति ।
धात्रा विधिरयं दृष्टो बहुधा कर्मनिर्णये ॥ ०१६ ॥

द्रष्टव्यं तु भवेत्प्राज्ञ क्रूरे कर्मणि वर्तता ।
कथं कर्म शुभं कुर्यां कथं मुच्ये पराभवात् ॥ ०१७ ॥

कर्मणस्तस्य घोरस्य बहुधा निर्णयो भवेत् ॥ ०१७ ॥

दाने च सत्यवाक्ये च गुरुशुश्रूषणे तथा ।

द्विजातिपूजने चाहं धर्मे च निरतः सदा ॥ ०१८ ॥

अतिवादातिमानाभ्यां निवृत्तोऽस्मि द्विजोत्तम ॥ ०१८ ॥

कृषिं साध्विति मन्यन्ते तत्र हिंसा परा स्मृता ।
कर्षन्तो लाङ्गलैः पुंसो घ्नन्ति भूमिशयान्बहून् ॥ ०१९ ॥

जीवानन्यांश्च बहुशस्तत्र किं प्रतिभाति ते ॥ ०१९ ॥

धान्यबीजानि यान्याहुर्व्रीह्यादीनि द्विजोत्तम ।
सर्वाण्येतानि जीवानि तत्र किं प्रतिभाति ते ॥ ०२० ॥

अध्याक्रम्य पशूंश्चापि घ्नन्ति वै भक्षयन्ति च ।
वृक्षानथौषधीश्चैव छिन्दन्ति पुरुषा द्विज ॥ ०२१ ॥

जीवा हि बहवो ब्रह्मन्वृक्षेषु च फलेषु च ।
उदके बहवश्चापि तत्र किं प्रतिभाति ते ॥ ०२२ ॥

सर्वं व्याप्तमिदं ब्रह्मन्प्राणिभिः प्राणिजीवनैः ।
मत्स्या ग्रसन्ते मत्स्यांश्च तत्र किं प्रतिभाति ते ॥ ०२३ ॥

सत्त्वैः सत्त्वानि जीवन्ति बहुधा द्विजसत्तम ।
प्राणिनोऽन्योन्यभक्षाश्च तत्र किं प्रतिभाति ते ॥ ०२४ ॥

चङ्क्रम्यमाणा जीवांश्च धरणीसंश्रितान्बहून् ।
पद्भ्यां घ्नन्ति नरा विप्र तत्र किं प्रतिभाति ते ॥ ०२५ ॥

उपविष्टाः शयानाश्च घ्नन्ति जीवाननेकशः ।
ज्ञानविज्ञानवन्तश्च तत्र किं प्रतिभाति ते ॥ ०२६ ॥

जीवैर्ग्रस्तमिदं सर्वमाकाशं पृथिवी तथा ।

अविज्ञानाच्च हिंसन्ति तत्र किं प्रतिभाति ते ॥ ०२७ ॥

अहिंसेति यदुक्तं हि पुरुषैर्विस्मितैः पुरा ।
के न हिंसन्ति जीवन्वै लोकेऽस्मिन्द्विजसत्तम ॥ ०२८ ॥

बहु सञ्चिन्त्य इह वै नास्ति कश्चिदहिंसकः ॥ ०२८ ॥

अहिंसायां तु निरता यतयो द्विजसत्तम ।
कुर्वन्त्येव हि हिंसां ते यत्नादल्पतरा भवेत् ॥ ०२९ ॥

आलक्ष्याश्चैव पुरुषाः कुले जाता महागुणाः ।
महाघोराणि कर्माणि कृत्वा लज्जन्ति वै न च ॥ ०३० ॥

सुहृदः सुहृदोऽन्यांश्च दुर्हृदश्चापि दुर्हृदः ।
सम्यक्प्रवृत्तान्पुरुषान्न सम्यगनुपश्यतः ॥ ०३१ ॥

समृद्धैश्च न नन्दन्ति बान्धवा बान्धवैरपि ।
गुरूंश्चैव विनिन्दन्ति मूढाः पण्डितमानिनः ॥ ०३२ ॥

बहु लोके विपर्यस्तं दृश्यते द्विजसत्तम ।
धर्मयुक्तमधर्मं च तत्र किं प्रतिभाति ते ॥ ०३३ ॥

वक्तुं बहुविधं शक्यं धर्माधर्मेषु कर्मसु ।
स्वकर्मनिरतो यो हि स यशः प्राप्नुयान्महत् ॥ ०३४ ॥

---

# अध्याय २००

मार्कण्डेय उवाच ॥

धर्मव्याधस्तु निपुणं पुनरेव युधिष्ठिर ।
विप्रर्षभमुवाचेदं सर्वधर्मभृतां वरः ॥ ००१ ॥

श्रुतिप्रमाणो धर्मो हि वृद्धानामिति भाषितम् ।
सूक्ष्मा गतिर्हि धर्मस्य बहुशाखा ह्यनन्तिका ॥ ००२ ॥

प्राणात्यये विवाहे च वक्तव्यमनृतं भवेत् ।
अनृतं च भवेत्सत्यं सत्यं चैवानृतं भवेत् ॥ ००३ ॥

यद्भूतहितमत्यन्तं तत्सत्यमिति धारणा ।
विपर्ययकृतोऽधर्मः पश्य धर्मस्य सूक्ष्मताम् ॥ ००४ ॥

यत्करोत्यशुभं कर्म शुभं वा द्विजसत्तम ।
अवश्यं तत्समाप्नोति पुरुषो नात्र संशयः ॥ ००५ ॥

विषमां च दशां प्राप्य देवान्गर्हति वै भृशम् ।
आत्मनः कर्मदोषाणि न विजानात्यपण्डितः ॥ ००६ ॥

मूढो नैकृतिकश्चापि चपलश्च द्विजोत्तम ।
सुखदुःखविपर्यासो यदा समुपपद्यते ॥ ००७ ॥

नैनं प्रज्ञा सुनीतं वा त्रायते नैव पौरुषम् ॥ ००७ ॥

यो यमिच्छेद्यथा कामं तं तं कामं समश्नुयात् ।
यदि स्यादपराधीनं पुरुषस्य क्रियाफलम् ॥ ००८ ॥

संयताश्चापि दक्षाश्च मतिमन्तश्च मानवाः ।

दृश्यन्ते निष्फलाः सन्तः प्रहीणाः सर्वकर्मभिः ॥ ००९ ॥

भूतानामपरः कश्चिद्धिंसायां सततोत्थितः ।
वञ्चनायां च लोकस्य स सुखेनेह जीवति ॥ ०१० ॥

अचेष्टमानमासीनं श्रीः कञ्चिदुपतिष्ठति ।
कश्चित्कर्माणि कुर्वन्हि न प्राप्यमधिगच्छति ॥ ०११ ॥

देवानिष्ट्वा तपस्तप्त्वा कृपणैः पुत्रगृद्धिभिः ।
दशमासधृता गर्भे जायन्ते कुलपांसनाः ॥ ०१२ ॥

अपरे धनधान्यैश्च भोगैश्च पितृसञ्चितैः ।
विपुलैरभिजायन्ते लब्धास्तैरेव मङ्गलैः ॥ ०१३ ॥

कर्मजा हि मनुष्याणां रोगा नास्त्यत्र संशयः ।
आधिभिश्चैव बाध्यन्ते व्याधैः क्षुद्रमृगा इव ॥ ०१४ ॥

ते चापि कुशलैर्वैद्यैर्निपुणैः संभृतौषधैः ।
व्याधयो विनिवार्यन्ते मृगा व्याधैरिव द्विज ॥ ०१५ ॥

येषामस्ति च भोक्तव्यं ग्रहणीदोषपीडिताः ।
न शक्नुवन्ति ते भोक्तुं पश्य धर्मभृतां वर ॥ ०१६ ॥

अपरे बाहुबलिनः क्लिश्यन्ते बहवो जनाः ।
दुःखेन चाधिगच्छन्ति भोजनं द्विजसत्तम ॥ ०१७ ॥

इति लोकमनाक्रन्दं मोहशोकपरिप्लुतम् ।
स्रोतसासकृदाक्षिप्तं ह्रियमाणं बलीयसा ॥ ०१८ ॥

न म्रियेयुर्न जीर्येयुः सर्वे स्युः सार्वकामिकाः ।
नाप्रियं प्रतिपश्येयुर्वशित्वं यदि वै भवेत् ॥ ०१९ ॥

उपर्युपरि लोकस्य सर्वो गन्तुं समीहते ।
यतते च यथाशक्ति न च तद्वर्तते तथा ॥ ०२० ॥

बहवः संप्रदृश्यन्ते तुल्यनक्षत्रमङ्गलाः ।
महच्च फलवैषम्यं दृश्यते कर्मसंधिषु ॥ ०२१ ॥

न कश्चिदीशते ब्रह्मन्स्वयङ्ग्राहस्य सत्तम ।
कर्मणां प्राकृतानां वै इह सिद्धिः प्रदृश्यते ॥ ०२२ ॥

यथा श्रुतिरियं ब्रह्मञ्जीवः किल सनातनः ।
शरीरमध्रुवं लोके सर्वेषां प्राणिनामिह ॥ ०२३ ॥

वध्यमाने शरीरे तु देहनाशो भवत्युत ।
जीवः सङ्क्रमतेऽन्यत्र कर्मबन्धनिबन्धनः ॥ ०२४ ॥

ब्राह्मण उवाच ॥

कथं धर्मभृतां श्रेष्ठ जीवो भवति शाश्वतः ।
एतदिच्छाम्यहं ज्ञातुं तत्त्वेन वदतां वर ॥ ०२५ ॥

व्याध उवाच ॥

न जीवनाशोऽस्ति हि देहभेदे ; मिथ्यैतदाहुर्म्रियतेति मूढाः ।
जीवस्तु देहान्तरितः प्रयाति ; दशार्धतैवास्य शरीरभेदः ॥ ०२६ ॥

अन्यो हि नाश्नाति कृतं हि कर्म ; स एव कर्ता सुखदुःखभागी ।
यत्तेन किञ्चिद्धि कृतं हि कर्म ; तदश्नुते नास्ति कृतस्य नाशः ॥ ०२७ ॥

अपुण्यशीलाश्च भवन्ति पुण्या ; नरोत्तमाः पापकृतो भवन्ति ।
नरोऽनुयातस्त्विह कर्मभिः स्वै ;स्ततः समुत्पद्यति भावितस्तैः ॥ ०२८ ॥

ब्राह्मण उवाच ॥

कथं संभवते योनौ कथं वा पुण्यपापयोः ।
जातीः पुण्या ह्यपुण्याश्च कथं गच्छति सत्तम ॥ ०२९ ॥

व्याध उवाच ॥

गर्भाधानसमायुक्तं कर्मेदं संप्रदृश्यते ।
समासेन तु ते क्षिप्रं प्रवक्ष्यामि द्विजोत्तम ॥ ०३० ॥

यथा संभृतसंभारः पुनरेव प्रजायते ।
शुभकृच्छुभयोनीषु पापकृत्पापयोनिषु ॥ ०३१ ॥

शुभैः प्रयोगैर्देवत्वं व्यामिश्रैर्मानुषो भवेत् ।
मोहनीयैर्वियोनीषु त्वधोगामी च किल्बिषैः ॥ ०३२ ॥

जातिमृत्युजरादुःखैः सततं समभिद्रुतः ।
संसारे पच्यमानश्च दोषैरात्मकृतैर्नरः ॥ ०३३ ॥

तिर्यग्योनिसहस्राणि गत्वा नरकमेव च ।
जीवाः संपरिवर्तन्ते कर्मबन्धनिबन्धनाः ॥ ०३४ ॥

जन्तुस्तु कर्मभिस्तैस्तैः स्वकृतैः प्रेत्य दुःखितः ।
तद्दुःखप्रतिघातार्थमपुण्यां योनिमश्नुते ॥ ०३५ ॥

ततः कर्म समादत्ते पुनरन्यन्नवं बहु ।
पच्यते तु पुनस्तेन भुक्त्वापथ्यमिवातुरः ॥ ०३६ ॥

अजस्रमेव दुःखार्तोऽदुःखितः सुखसञ्ज्ञितः ।
ततोऽनिवृत्तबन्धत्वात्कर्मणामुदयादपि ॥ ०३७ ॥

परिक्रामति संसारे चक्रवद्बहुवेदनः ॥ ०३७ ॥

स चेन्निवृत्तबन्धस्तु विशुद्धश्चापि कर्मभिः ।
प्राप्नोति सुकृता.णल्लोकान्यत्र गत्वा न शोचति ॥ ०३८ ॥

पापं कुर्वन्पापवृत्तः पापस्यान्तं न गच्छति ।
तस्मात्पुण्यं यतेत्कर्तुं वर्जयेत च पातकम् ॥ ०३९ ॥

अनसूयुः कृतज्ञश्च कल्याणान्येव सेवते ।
सुखानि धर्ममर्थं च स्वर्गं च लभते नरः ॥ ०४० ॥

संस्कृतस्य हि दान्तस्य नियतस्य यतात्मनः ।
प्राज्ञस्यानन्तरा वृत्तिरिह लोके परत्र च ॥ ०४१ ॥

सतां धर्मेण वर्तेत क्रियां शिष्टवदाचरेत् ।
असङ्क्लेशेन लोकस्य वृत्तिं लिप्सेत वै द्विज ॥ ०४२ ॥

सन्ति ह्यागतविज्ञानाः शिष्टाः शास्त्रविचक्षणाः ।
स्वधर्मेण क्रिया लोके कर्मणः सोऽप्यसङ्करः ॥ ०४३ ॥

प्राज्ञो धर्मेण रमते धर्मं चैवोपजीवति ।
तस्य धर्मादवाप्तेषु धनेषु द्विजसत्तम ॥ ०४४ ॥

तस्यैव सिञ्चते मूलं गुणान्पश्यति यत्र वै ॥ ०४४ ॥

धर्मात्मा भवति ह्येवं चित्तं चास्य प्रसीदति ।
स मैत्रजनसंतुष्ट इह प्रेत्य च नन्दति ॥ ०४५ ॥

शब्दं स्पर्शं तथा रूपं गन्धानिष्टांश्च सत्तम ।
प्रभुत्वं लभते चापि धर्मस्यैतत्फलं विदुः ॥ ०४६ ॥

धर्मस्य च फलं लब्ध्वा न तृप्यति महाद्विज ।
अतृप्यमाणो निर्वेदमादत्ते ज्ञानचक्षुषा ॥ ०४७ ॥

प्रज्ञाचक्षुर्नर इह दोषं नैवानुरुध्यते ।
विरज्यति यथाकामं न च धर्मं विमुञ्चति ॥ ०४८ ॥

सर्वत्यागे च यतते दृष्ट्वा लोकं क्षयात्मकम् ।
ततो मोक्षे प्रयतते नानुपायादुपायतः ॥ ०४९ ॥

एवं निर्वेदमादत्ते पापं कर्म जहाति च ।
धार्मिकश्चापि भवति मोक्षं च लभते परम् ॥ ०५० ॥

तपो निःश्रेयसं जन्तोस्तस्य मूलं शमो दमः ।
तेन सर्वानवाप्नोति कामान्यान्मनसेच्छति ॥ ०५१ ॥

इन्द्रियाणां निरोधेन सत्येन च दमेन च ।
ब्रह्मणः पदमाप्नोति यत्परं द्विजसत्तम ॥ ०५२ ॥

ब्राह्मण उवाच ॥

इन्द्रियाणि तु यान्याहुः कानि तानि यतव्रत ।
निग्रहश्च कथं कार्यो निग्रहस्य च किं फलम् ॥ ०५३ ॥

कथं च फलमाप्नोति तेषां धर्मभृतां वर ।
एतदिच्छामि तत्त्वेन धर्मं ज्ञातुं सुधार्मिक ॥ ०५४ ॥

# अध्याय २०१

मार्कण्डेय उवाच ॥

एवमुक्तस्तु विप्रेण धर्मव्याधो युधिष्ठिर ।
प्रत्युवाच यथा विप्रं तच्छृणुष्व नराधिप ॥ ००१ ॥

व्याध उवाच ॥

विज्ञानार्थं मनुष्याणां मनः पूर्वं प्रवर्तते ।
तत्प्राप्य कामं भजते क्रोधं च द्विजसत्तम ॥ ००२ ॥

ततस्तदर्थं यतते कर्म चारभते महत् ।
इष्टानां रूपगन्धानामभ्यासं च निषेवते ॥ ००३ ॥

ततो रागः प्रभवति द्वेषश्च तदनन्तरम् ।
ततो लोभः प्रभवति मोहश्च तदनन्तरम् ॥ ००४ ॥

तस्य लोभाभिभूतस्य रागद्वेषहतस्य च ।
न धर्मे जायते बुद्धिर्व्याजाद्धर्मं करोति च ॥ ००५ ॥

व्याजेन चरते धर्ममर्थं व्याजेन रोचते ।
व्याजेन सिध्यमानेषु धनेषु द्विजसत्तम ॥ ००६ ॥

तत्रैव रमते बुद्धिस्ततः पापं चिकीर्षति ॥ ००६ ॥

सुहृद्भिर्वार्यमाणश्च पण्डितैश्च द्विजोत्तम ।
उत्तरं श्रुतिसंबद्धं ब्रवीति श्रुतियोजितम् ॥ ००७ ॥

अधर्मस्त्रिविधस्तस्य वर्धते रागदोषतः ।
पापं चिन्तयते चापि ब्रवीति च करोति च ॥ ००८ ॥

तस्याधर्मप्रवृत्तस्य गुणा नश्यन्ति साधवः ।
एकशीलाश्च मित्रत्वं भजन्ते पापकर्मिणः ॥ ००९ ॥

स तेनासुखमाप्नोति परत्र च विहन्यते ।
पापात्मा भवति ह्येवं धर्मलाभं तु मे शृणु ॥ ०१० ॥

यस्त्वेतान्प्रज्ञया दोषान्पूर्वमेवानुपश्यति ।
कुशलः सुखदुःखेषु साधूंश्चाप्युपसेवते ॥ ०११ ॥

तस्य साधुसमारम्भाद्बुद्धिर्धर्मेषु जायते ॥ ०११ ॥

ब्राह्मण उवाच ॥

ब्रवीषि सूनृतं धर्मं यस्य वक्ता न विद्यते ।
दिव्यप्रभावः सुमहानृषिरेव मतोऽसि मे ॥ ०१२ ॥

व्याध उवाच ॥

ब्राह्मणा वै महाभागाः पितरोऽग्रभुजः सदा ।
तेषां सर्वात्मना कार्यं प्रियं लोके मनीषिणा ॥ ०१३ ॥

यत्तेषां च प्रियं तत्ते वक्ष्यामि द्विजसत्तम ।
नमस्कृत्वा ब्राह्मणेभ्यो ब्राह्मीं विद्यां निबोध मे ॥ ०१४ ॥

इदं विश्वं जगत्सर्वमजय्यं चापि सर्वशः ।
महाभूतात्मकं ब्रह्मन्नातः परतरं भवेत् ॥ ०१५ ॥

महाभूतानि खं वायुरग्निरापस्तथा च भूः ।
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च तद्गुणाः ॥ ०१६ ॥

तेषामपि गुणाः सर्वे गुणवृत्तिः परस्परम् ।

पूर्वपूर्वगुणाः सर्वे क्रमशो गुणिषु त्रिषु ॥ ०१७ ॥

षष्ठस्तु चेतना नाम मन इत्यभिधीयते ।
सप्तमी तु भवेद्बुद्धिरहङ्कारस्ततः परम् ॥ ०१८ ॥

इन्द्रियाणि च पञ्चैव रजः सत्त्वं तमस्तथा ।
इत्येष सप्तदशको राशिरव्यक्तसञ्ज्ञकः ॥ ०१९ ॥

सर्वैरिहेन्द्रियार्थैस्तु व्यक्ताव्यक्तैः सुसंवृतः ।
चतुर्विंशक इत्येष व्यक्ताव्यक्तमयो गुणः ॥ ०२० ॥

एतत्ते सर्वमाख्यातं किं भूयो श्रोतुमिच्छसि ॥ ०२० ॥

---

# अध्याय २०२

मार्कण्डेय उवाच ॥

एवमुक्तः स विप्रस्तु धर्मव्याधेन भारत ।
कथामकथयद्भूयो मनसः प्रीतिवर्धनीम् ॥ ००१ ॥

ब्राह्मण ॥

महाभूतानि यान्याहुः पञ्च धर्मविदां वर ।
एकैकस्य गुणान्सम्यक्पञ्चानामपि मे वद ॥ ००२ ॥

व्याध उवाच ॥

भूमिरापस्तथा ज्योतिर्वायुराकाशमेव च ।

गुणोत्तराणि सर्वाणि तेषां वक्ष्यामि ते गुणान्  ॥ ००३  ॥

भूमिः पञ्चगुणा ब्रह्मन्नुदकं च चतुर्गुणम् ।
गुणास्त्रयस्तेजसि च त्रयश्चाकाशवातयोः  ॥ ००४  ॥

शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ।
एते गुणाः पञ्च भूमेः सर्वेभ्यो गुणवत्तराः  ॥ ००५  ॥

शब्दः स्पर्शश्च रूपं च रसश्चापि द्विजोत्तम ।
अपामेते गुणा ब्रह्मन्कीर्तितास्तव सुव्रत  ॥ ००६  ॥

शब्दः स्पर्शश्च रूपं च तेजसोऽथ गुणास्त्रयः ।
शब्दः स्पर्शश्च वायौ तु शब्द आकाश एव च  ॥ ००७  ॥

एते पञ्चदश ब्रह्मन्गुणा भूतेषु पञ्चसु ।
वर्तन्ते सर्वभूतेषु येषु लोकाः प्रतिष्ठिताः  ॥ ००८  ॥

अन्योन्यं नातिवर्तन्ते संपच्च भवति द्विज  ॥ ००८  ॥

यदा तु विषमीभावमाचरन्ति चराचराः ।
तदा देही देहमन्यं व्यतिरोहति कालतः  ॥ ००९  ॥

आनुपूर्व्या विनश्यन्ति जायन्ते चानुपूर्वशः ।
तत्र तत्र हि दृश्यन्ते धातवः पाञ्चभौतिकाः  ॥ ०१०  ॥

यैरावृतमिदं सर्वं जगत्स्थावरजङ्गमम्  ॥ ०१०  ॥

इन्द्रियैः सृज्यते यद्यत्तत्तद्व्यक्तमिति स्मृतम् ।
अव्यक्तमिति विज्ञेयं लिङ्गग्राह्यमतीन्द्रियम्  ॥ ०११  ॥

यथास्वं ग्राहकान्येषां शब्दादीनामिमानि तु ।

इन्द्रियाणि यदा देही धारयन्निह तप्यते ॥ ०१२ ॥

लोके विततमात्मानं लोकं चात्मनि पश्यति ।
परावरज्ञः सक्तः सन्सर्वभूतानि पश्यति ॥ ०१३ ॥

पश्यतः सर्वभूतानि सर्वावस्थासु सर्वदा ।
ब्रह्मभूतस्य संयोगो नाशुभेनोपपद्यते ॥ ०१४ ॥

ज्ञानमूलात्मकं क्लेशमतिवृत्तस्य मोहजम् ।
लोको बुद्धिप्रकाशेन ज्ञेयमार्गेण दृश्यते ॥ ०१५ ॥

अनादिनिधनं जन्तुमात्मयोनिं सदाव्ययम् ।
अनौपम्यममूर्तं च भगवानाह बुद्धिमान् ॥ ०१६ ॥

तपोमूलमिदं सर्वं यन्मां विप्रानुपृच्छसि ॥ ०१६ ॥

इन्द्रियाण्येव तत्सर्वं यत्स्वर्गनरकावुभौ ।
निगृहीतविसृष्टानि स्वर्गाय नरकाय च ॥ ०१७ ॥

एष योगविधिः कृत्स्नो यावदिन्द्रियधारणम् ।
एतन्मूलं हि तपसः कृत्स्नस्य नरकस्य च ॥ ०१८ ॥

इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम् ।
संनियम्य तु तान्येव ततः सिद्धिमवाप्नुते ॥ ०१९ ॥

षण्णामात्मनि नित्यानामैश्वर्यं योऽधिगच्छति ।
न स पापैः कुतोऽनर्थैर्युज्यते विजितेन्द्रियः ॥ ०२० ॥

रथः शरीरं पुरुषस्य दृष्ट ;मात्मा नियन्तेन्द्रियाण्याहुरश्वान् ।
तैरप्रमत्तः कुशली सदश्वै ;र्दान्तैः सुखं याति रथीव धीरः ॥ ०२१ ॥

षण्णामात्मनि नित्यानामिन्द्रियाणां प्रमाथिनाम् ।
यो धीरो धारयेद्रश्मीन्स स्यात्परमसारथिः ॥ ०२२ ॥

इन्द्रियाणां प्रसृष्टानां हयानामिव वर्त्मसु ।
धृतिं कुर्वीत सारथ्ये धृत्या तानि जयेद्ध्रुवम् ॥ ०२३ ॥

इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य हरते बुद्धिं नावं वायुरिवाम्भसि ॥ ०२४ ॥

येषु विप्रतिपद्यन्ते षड्सु मोहात्फलागमे ।
तेष्वध्यवसिताध्यायी विन्दते ध्यानजं फलम् ॥ ०२५ ॥

---

# अध्याय २०३

मार्कण्डेय उवाच ॥

एवं तु सूक्ष्मे कथिते धर्मव्याधेन भारत ।
ब्राह्मणः स पुनः सूक्ष्मं पप्रच्छ सुसमाहितः ॥ ००१ ॥

ब्राह्मण उवाच ॥

सत्त्वस्य रजसश्चैव तमसश्च यथातथम् ।
गुणांस्तत्त्वेन मे ब्रूहि यथावदिह पृच्छतः ॥ ००२ ॥

व्याध उवाच ॥

हन्त ते कथयिष्यामि यन्मां त्वं परिपृच्छसि ।
एषां गुणान्पृथक्त्वेन निबोध गदतो मम ॥ ००३ ॥

मोहात्मकं तमस्तेषां रज एषां प्रवर्तकम् ।
प्रकाशबहुलत्वाच्च सत्त्वं ज्याय इहोच्यते ॥ ००४ ॥

अविद्याबहुलो मूढः स्वप्नशीलो विचेतनः ।
दुर्दृशीकस्तमोध्वस्तः सक्रोधस्तामसोऽलसः ॥ ००५ ॥

प्रवृत्तवाक्यो मन्त्री च योऽनुराग्यभ्यसूयकः ।
विवित्समानो विप्रर्षे स्तब्धो मानी स राजसः ॥ ००६ ॥

प्रकाशबहुलो धीरो निर्विवित्सोऽनसूयकः ।
अक्रोधनो नरो धीमान्दान्तश्चैव स सात्त्विकः ॥ ००७ ॥

सात्त्विकस्त्वथ संबुद्धो लोकवृत्तेन क्लिश्यते ।
यदा बुध्यति बोद्धव्यं लोकवृत्तं जुगुप्सते ॥ ००८ ॥

वैराग्यस्य हि रूपं तु पूर्वमेव प्रवर्तते ।
मृदुर्भवत्यहङ्कारः प्रसीदत्यार्जवं च यत् ॥ ००९ ॥

ततोऽस्य सर्वद्वंद्वानि प्रशाम्यन्ति परस्परम् ।
न चास्य संयमो नाम क्वचिद्भवति कश्चन ॥ ०१० ॥

शूद्रयोनौ हि जातस्य सद्गुणानुपतिष्ठतः ।
वैश्यत्वं भवति ब्रह्मन्क्षत्रियत्वं तथैव च ॥ ०११ ॥

आर्जवे वर्तमानस्य ब्राह्मण्यमभिजायते ।
गुणास्ते कीर्तिताः सर्वे किं भूयः श्रोतुमिच्छसि ॥ ०१२ ॥

ब्राह्मण उवाच ॥

पार्थिवं धातुमासाद्य शारीरोऽग्निः कथं भवेत् ।

अवकाशविशेषेण कथं वर्तयतेऽनिलः ॥ ०१३ ॥

मार्कण्डेय उवाच ॥

प्रश्नमेतं समुद्दिष्टं ब्राह्मणेन युधिष्ठिर ।
व्याधः स कथयामास ब्राह्मणाय महात्मने ॥ ०१४ ॥

व्याध उवाच ॥

मूर्धानमाश्रितो वह्निः शरीरं परिपालयन् ।
प्राणो मूर्धनि चाग्नौ च वर्तमानो विचेष्टते ॥ ०१५ ॥

भूतं भव्यं भविष्यच्च सर्वं प्राणे प्रतिष्ठितम् ॥ ०१५ ॥

श्रेष्ठं तदेव भूतानां ब्रह्मज्योतिरुपास्महे ।
स जन्तुः सर्वभूतात्मा पुरुषः स सनातनः ॥ ०१६ ॥

मनो बुद्धिरहङ्कारो भूतानां विषयश्च सः ॥ ०१६ ॥

एवं त्विह स सर्वत्र प्राणेन परिपाल्यते ।
पृष्ठतस्तु समानेन स्वां स्वां गतिमुपाश्रितः ॥ ०१७ ॥

बस्तिमूले गुदे चैव पावकः समुपाश्रितः ।
वहन्मूत्रं पुरीषं चाप्यपानः परिवर्तते ॥ ०१८ ॥

प्रयत्ने कर्मणि बले य एकस्त्रिषु वर्तते ।
उदान इति तं प्राहुरध्यात्मविदुषो जनाः ॥ ०१९ ॥

संधौ संधौ संनिविष्टः सर्वेष्वपि तथानिलः ।
शरीरेषु मनुष्याणां व्यान इत्युपदिष्यते ॥ ०२० ॥

धातुष्वग्निस्तु विततः स तु वायुसमीरितः ।
रसान्धातूंश्च दोषांश्च वर्तयन्परिधावति ॥ ०२१ ॥

प्राणानां संनिपातात्तु संनिपातः प्रजायते ।
ऊष्मा चाग्निरिति ज्ञेयो योऽन्नं पचति देहिनाम् ॥ ०२२ ॥

अपानोदानयोर्मध्ये प्राणव्यानौ समाहितौ ।
समन्वितस्त्वधिष्ठानं सम्यक्पचति पावकः ॥ ०२३ ॥

तस्यापि पायुपर्यन्तस्तथा स्याद्गुदसञ्ज्ञितः ।
स्त्रोतांसि तस्माज्जायन्ते सर्वप्राणेषु देहिनाम् ॥ ०२४ ॥

अग्निवेगवहः प्राणो गुदान्ते प्रतिहन्यते ।
स ऊर्ध्वमागम्य पुनः समुत्क्षिपति पावकम् ॥ ०२५ ॥

पक्वाशयस्त्वधो नाभ्या ऊर्ध्वमामाशयः स्थितः ।
नाभिमध्ये शरीरस्य प्राणाः सर्वे प्रतिष्ठिताः ॥ ०२६ ॥

प्रवृत्ता हृदयात्सर्वास्तिर्यगूर्ध्वमधस्तथा ।
वहन्त्यन्नरसान्नाड्यो दश प्राणप्रचोदिताः ॥ ०२७ ॥

योगिनामेष मार्गस्तु येन गच्छन्ति तत्परम् ।
जितक्लमासना धीरा मूर्धन्यात्मानमादधुः ॥ ०२८ ॥

एवं सर्वेषु विततौ प्राणापानौ हि देहिषु ॥ ०२८ ॥

एकादशविकारात्मा कलासंभारसंभृतः ।
मूर्तिमन्तं हि तं विद्धि नित्यं कर्मजितात्मकम् ॥ ०२९ ॥

तस्मिन्यः संस्थितो ह्यग्निर्नित्यं स्थाल्यामिवाहितः ।
आत्मानं तं विजानीहि नित्यं योगजितात्मकम् ॥ ०३० ॥

देवो यः संस्थितस्तस्मिन्नब्बिन्दुरिव पुष्करे ।
क्षेत्रज्ञं तं विजानीहि नित्यं त्यागजितात्मकम्  ॥ ०३१  ॥

जीवात्मकानि जानीहि रजः सत्त्वं तमस्तथा ।
जीवमात्मगुणं विद्धि तथात्मानं परात्मकम्  ॥ ०३२  ॥

सचेतनं जीवगुणं वदन्ति ; स चेष्टते चेष्टयते च सर्वम् ।
ततः परं क्षेत्रविदो वदन्ति ; प्राकल्पयद्यो भुवनानि सप्त  ॥ ०३३  ॥

एवं सर्वेषु भूतेषु भूतात्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया ज्ञानवेदिभिः  ॥ ०३४  ॥

चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभम् ।
प्रसन्नात्मात्मनि स्थित्वा सुखमानन्त्यमश्नुते  ॥ ०३५  ॥

लक्षणं तु प्रसादस्य यथा तृप्तः सुखं स्वपेत् ।
निवाते वा यथा दीपो दीप्येत्कुशलदीपितः  ॥ ०३६  ॥

पूर्वरात्रे परे चैव युञ्जानः सततं मनः ।
लघ्वाहारो विशुद्धात्मा पश्यन्नात्मानमात्मनि  ॥ ०३७  ॥

प्रदीप्तेनेव दीपेन मनोदीपेन पश्यति ।
दृष्ट्वात्मानं निरात्मानं तदा स तु विमुच्यते  ॥ ०३८  ॥

सर्वोपायैस्तु लोभस्य क्रोधस्य च विनिग्रहः ।
एतत्पवित्रं यज्ञानां तपो वै सङ्क्रमो मतः  ॥ ०३९  ॥

नित्यं क्रोधात्तपो रक्षेच्छ्रियं रक्षेत मत्सरात् ।
विद्यां मानापमानाभ्यामात्मानं तु प्रमादतः  ॥ ०४०  ॥

आनृशंस्यं परो धर्मः क्षमा च परमं बलम् ।

आत्मज्ञानं परं ज्ञानं परं सत्यव्रतं व्रतम्  ॥ ०४१  ॥

सत्यस्य वचनं श्रेयः सत्यं ज्ञानं हितं भवेत् ।
यद्भूतहितमत्यन्तं तद्वै सत्यं परं मतम्  ॥ ०४२  ॥

यस्य सर्वे समारम्भाः निराशीर्बन्धनाः सदा ।
त्यागे यस्य हुतं सर्वं स त्यागी स च बुद्धिमान्  ॥ ०४३  ॥

यतो न गुरुरप्येनं च्यावयेदुपपादयन् ।
तं विद्याद्ब्रह्मणो योगं वियोगं योगसञ्ज्ञितम्  ॥ ०४४  ॥

न हिंस्यात्सर्वभूतानि मैत्रायणगतश्चरेत् ।
नेदं जीवितमासाद्य वैरं कुर्वीत केनचित्  ॥ ०४५  ॥

आकिञ्चन्यं सुसंतोषो निराशित्वमचापलम् ।
एतदेव परं ज्ञानं सदात्मज्ञानमुत्तमम्  ॥ ०४६  ॥

परिग्रहं परित्यज्य भव बुद्ध्या यतव्रतः ।
अशोकं स्थानमातिष्ठेन्निश्चलं प्रेत्य चेह च  ॥ ०४७  ॥

तपोनित्येन दान्तेन मुनिना संयतात्मना ।
अजितं जेतुकामेन भाव्यं सङ्गेष्वसङ्गिना  ॥ ०४८  ॥

गुणागुणमनासङ्गमेककार्यमनन्तरम् ।
एतद्ब्राह्मण ते वृत्तमाहुरेकपदं सुखम्  ॥ ०४९  ॥

परित्यजति यो दुःखं सुखं चाप्युभयं नरः ।
ब्रह्म प्राप्नोति सोऽत्यन्तमसङ्गेन च गच्छति  ॥ ०५०  ॥

यथाश्रुतमिदं सर्वं समासेन द्विजोत्तम ।
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि  ॥ ०५१  ॥

# अध्याय २०४

मार्कण्डेय उवाच ॥

एवं सङ्कथिते कृत्स्ने मोक्षधर्मे युधिष्ठिर ।
दृढं प्रीतमना विप्रो धर्मव्याधमुवाच ह ॥ ००१ ॥

न्याययुक्तमिदं सर्वं भवता परिकीर्तितम् ।
न तेऽस्त्यविदितं किञ्चिद्धर्मेष्विह हि दृश्यते ॥ ००२ ॥

व्याध उवाच ॥

प्रत्यक्षं मम यो धर्मस्तं पश्य द्विजसत्तम ।
येन सिद्धिरियं प्राप्ता मया ब्राह्मणपुङ्गव ॥ ००३ ॥

उत्तिष्ठ भगवन्क्षिप्रं प्रविश्याभ्यन्तरं गृहम् ।
द्रष्टुमर्हसि धर्मज्ञ मातरं पितरं च मे ॥ ००४ ॥

मार्कण्डेय उवाच ॥

इत्युक्तः स प्रविश्याथ ददर्श परमार्चितम् ।
सौधं हृद्यं चतुःशालमतीव च मनोहरम् ॥ ००५ ॥

देवतागृहसङ्काशं दैवतैश्च सुपूजितम् ।
शयनासनसंबाधं गन्धैश्च परमैर्युतम् ॥ ००६ ॥

तत्र शुक्लाम्बरधरौ पितरावस्य पूजितौ ।

कृताहारौ सुतुष्टौ तावुपविष्टौ वरासने ॥ ००७ ॥

धर्मव्याधस्तु तौ दृष्ट्वा पादेषु शिरसापतत् ॥ ००७ ॥

वृद्धावूचतुः ॥

उत्तिष्ठोत्तिष्ठ धर्मज्ञ धर्मस्त्वामभिरक्षतु ।
प्रीतौ स्वस्तव शौचेन दीर्घमायुरवाप्नुहि ॥ ००८ ॥

सत्पुत्रेण त्वया पुत्र नित्यकालं सुपूजितौ ॥ ००८ ॥

न तेऽन्यद्दैवतं किञ्चिद्दैवतेष्वपि वर्तते ।
प्रयतत्वाद्धिजातीनां दमेनासि समन्वितः ॥ ००९ ॥

पितुः पितामहा ये च तथैव प्रपितामहाः ।
प्रीतास्ते सततं पुत्र दमेनावां च पूजया ॥ ०१० ॥

मनसा कर्मणा वाचा शुश्रूषा नैव हीयते ।
न चान्या वितथा बुद्धिर्दृश्यते सांप्रतं तव ॥ ०११ ॥

जामदग्न्येन रामेण यथा वृद्धौ सुपूजितौ ।
तथा त्वया कृतं सर्वं तद्विशिष्टं च पुत्रक ॥ ०१२ ॥

मार्कण्डेय उवाच ॥

ततस्तं ब्राह्मणं ताभ्यां धर्मव्याधो न्यवेदयत् ।
तौ स्वागतेन तं विप्रमर्चयामासतुस्तदा ॥ ०१३ ॥

प्रतिगृह्य च तां पूजां द्विजः पप्रच्छ तावुभौ ।
सपुत्राभ्यां सभृत्याभ्यां कच्चिद्वां कुशलं गृहे ॥ ०१४ ॥

अनामयं च वां कच्चित्सदैवेह शरीरयोः ॥ ०१४ ॥

वृद्धावूचतुः ॥

कुशलं नो गृहे विप्र भृत्यवर्गे च सर्वशः ।
कच्चित्त्वमप्यविघ्नेन संप्राप्तो भगवन्निह ॥ ०१५ ॥

मार्कण्डेय उवाच ॥

बाढमित्येव तौ विप्रः प्रत्युवाच मुदान्वितः ।
धर्मव्याधस्तु तं विप्रमर्थवद्वाक्यमब्रवीत् ॥ ०१६ ॥

पिता माता च भगवन्नेतौ मे दैवतं परम् ।
यद्दैवतेभ्यः कर्तव्यं तदेताभ्यां करोम्यहम् ॥ ०१७ ॥

त्रयस्त्रिंशद्यथा देवाः सर्वे शक्रपुरोगमाः ।
संपूज्याः सर्वलोकस्य तथा वृद्धाविमौ मम ॥ ०१८ ॥

उपहारानाहरन्तो देवतानां यथा द्विजाः ।
कुर्वते तद्वदेताभ्यां करोम्यहमतन्द्रितः ॥ ०१९ ॥

एतौ मे परमं ब्रह्मन्पिता माता च दैवतम् ।
एतौ पुष्पैः फलै रत्नैस्तोषयामि सदा द्विज ॥ ०२० ॥

एतावेवाग्नयो मह्यं यान्वदन्ति मनीषिणः ।
यज्ञा वेदाश्च चत्वारः सर्वमेतौ मम द्विज ॥ ०२१ ॥

एतदर्थं मम प्राणा भार्या पुत्राः सुहृज्जनाः ।
सपुत्रदारः शुश्रूषां नित्यमेव करोम्यहम् ॥ ०२२ ॥

स्वयं च स्नापयाम्येतौ तथा पादौ प्रधावये ।

आहारं संप्रयच्छामि स्वयं च द्विजसत्तम ॥ ०२३ ॥

अनुकूलाः कथा वच्मि विप्रियं परिवर्जयन् ।
अधर्मेणापि संयुक्तं प्रियमाभ्यां करोम्यहम् ॥ ०२४ ॥

धर्ममेव गुरुं ज्ञात्वा करोमि द्विजसत्तम ।
अतन्द्रितः सदा विप्र शुश्रूषां वै करोम्यहम् ॥ ०२५ ॥

पञ्चैव गुरवो ब्रह्मन्पुरुषस्य बुभूषतः ।
पिता माताग्निरात्मा च गुरुश्च द्विजसत्तम ॥ ०२६ ॥

एतेषु यस्तु वर्तेत सम्यगेव द्विजोत्तम ।
भवेयुरग्नयस्तस्य परिचीर्णास्तु नित्यशः ॥ ०२७ ॥

गार्हस्थ्ये वर्तमानस्य धर्म एष सनातनः ॥ ०२७ ॥

---

# अध्याय २०५

मार्कण्डेय उवाच ॥

गुरू निवेद्य विप्राय तौ मातापितरावुभौ ।
पुनरेव स धर्मात्मा व्याधो ब्राह्मणमब्रवीत् ॥ ००१ ॥

प्रवृत्तचक्षुर्जातोऽस्मि संपश्य तपसो बलम् ।
यदर्थमुक्तोऽसि तया गच्छस्व मिथिलामिति ॥ ००२ ॥

पतिशुश्रूषपरया दान्तया सत्यशीलया ।

मिथिलायां वसन्व्याधः स ते धर्मान्प्रवक्ष्यति ॥ ००३ ॥

ब्राह्मण उवाच ॥

पतिव्रतायाः सत्यायाः शीलाढ्याया यतव्रत ।
संस्मृत्य वाक्यं धर्मज्ञ गुणवानसि मे मतः ॥ ००४ ॥

व्याध उवाच ॥

यत्तदा त्वं द्विजश्रेष्ठ तयोक्तो मां प्रति प्रभो ।
दृष्टमेतत्तया सम्यगेकपत्न्या न संशयः ॥ ००५ ॥

त्वदनुग्रहबुद्ध्या तु विप्रैतद्दर्शितं मया ।
वाक्यं च शृणु मे तात यत्ते वक्ष्ये हितं द्विज ॥ ००६ ॥

त्वया विनिकृता माता पिता च द्विजसत्तम ।
अनिसृष्टोऽसि निष्क्रान्तो गृहात्ताभ्यामनिन्दित ॥ ००७ ॥

वेदोच्चारणकार्यार्थमयुक्तं तत्त्वया कृतम् ॥ ००७ ॥

तव शोकेन वृद्धौ तावन्धौ जातौ तपस्विनौ ।
तौ प्रसादयितुं गच्छ मा त्वा धर्मोऽत्यगान्महान् ॥ ००८ ॥

तपस्वी त्वं महात्मा च धर्मे च निरतः सदा ।
सर्वमेतदपार्थं ते क्षिप्रं तौ संप्रसादय ॥ ००९ ॥

श्रद्दधस्व मम ब्रह्मन्नान्यथा कर्तुमर्हसि ।
गम्यतामद्य विप्रर्षे श्रेयस्ते कथयाम्यहम् ॥ ०१० ॥

ब्राह्मण उवाच ॥

यदेतदुक्तं भवता सर्वं सत्यमसंशयम् ।
प्रीतोऽस्मि तव धर्मज्ञ साध्वाचार गुणान्वित ॥ ०११ ॥

व्याध उवाच ॥

दैवतप्रतिमो हि त्वं यस्त्वं धर्ममनुव्रतः ।
पुराणं शाश्वतं दिव्यं दुष्प्रापमकृतात्मभिः ॥ ०१२ ॥

अतन्द्रितः कुरु क्षिप्रं मातापित्रोर्हि पूजनम् ।
अतः परमहं धर्मं नान्यं पश्यामि कञ्चन ॥ ०१३ ॥

ब्राह्मण उवाच ॥

इहाहमागतो दिष्ट्या दिष्ट्या मे सङ्गतं त्वया ।
ईदृशा दुर्लभा लोके नरा धर्मप्रदर्शकाः ॥ ०१४ ॥

एको नरसहस्रेषु धर्मविद्विद्यते न वा ।
प्रीतोऽस्मि तव सत्येन भद्रं ते पुरुषोत्तम ॥ ०१५ ॥

पतमानो हि नरके भवतास्मि समुद्धृतः ।
भवितव्यमथैवं च यद्दृष्टोऽसि मयानघ ॥ ०१६ ॥

राजा ययातिर्दौहित्रैः पतितस्तारितो यथा ।
सद्भिः पुरुषशार्दूल तथाहं भवता त्विह ॥ ०१७ ॥

मातापितृभ्यां शुश्रूषां करिष्ये वचनात्तव ।
नाकृतात्मा वेदयति धर्माधर्मविनिश्चयम् ॥ ०१८ ॥

दुर्ज्ञेयः शाश्वतो धर्मः शूद्रयोनौ हि वर्तता ।
न त्वां शूद्रमहं मन्ये भवितव्यं हि कारणम् ॥ ०१९ ॥

येन कर्मविपाकेन प्राप्तेयं शूद्रता त्वया ॥ ०१९ ॥

एतदिच्छामि विज्ञातुं तत्त्वेन हि महामते ।
कामया ब्रूहि मे तथ्यं सर्वं त्वं प्रयतात्मवान् ॥ ०२० ॥

व्याध उवाच ॥

अनतिक्रमणीया हि ब्राह्मणा वै द्विजोत्तम ।
शृणु सर्वमिदं वृत्तं पूर्वदेहे ममानघ ॥ ०२१ ॥

अहं हि ब्राह्मणः पूर्वमासं द्विजवरात्मज ।
वेदाध्यायी सुकुशलो वेदाङ्गानां च पारगः ॥ ०२२ ॥

आत्मदोषकृतैर्ब्रह्मन्नवस्थां प्राप्तवानिमाम् ॥ ०२२ ॥

कश्चिद्राजा मम सखा धनुर्वेदपरायणः ।
संसर्गाद्धनुषि श्रेष्ठस्ततोऽहमभवं द्विज ॥ ०२३ ॥

एतस्मिन्नेव काले तु मृगयां निर्गतो नृपः ।
सहितो योधमुख्यैश्च मन्त्रिभिश्च सुसंवृतः ॥ ०२४ ॥

ततोऽभ्यहन्मृगांस्तत्र सुबहूनाश्रमं प्रति ॥ ०२४ ॥

अथ क्षिप्तः शरो घोरो मयापि द्विजसत्तम ।
ताडितश्च मुनिस्तेन शरेणानतपर्वणा ॥ ०२५ ॥

भूमौ निपतितो ब्रह्मन्नुवाच प्रतिनादयन् ।
नापराध्याम्यहं किञ्चित्केन पापमिदं कृतम् ॥ ०२६ ॥

मन्वानस्तं मृगं चाहं संप्राप्तः सहसा मुनिम् ।
अपश्यं तमृषिं विद्धं शरेणानतपर्वणा ॥ ०२७ ॥

तमुग्रतपसं विप्रं निष्टनन्तं महीतले ॥ ०२७ ॥

अकार्यकरणाच्चापि भृशं मे व्यथितं मनः ।
अजानता कृतमिदं मयेत्यथ तमब्रुवम् ॥ ०२८ ॥

क्षन्तुमर्हसि मे ब्रह्मन्निति चोक्तो मया मुनिः ॥ ०२८ ॥

ततः प्रत्यब्रवीद्वाक्यमृषिर्मां क्रोधमूर्छितः ।
व्याधस्त्वं भविता क्रूर शूद्रयोनाविति द्विज ॥ ०२९ ॥

---

# अध्याय २०६

व्याध उवाच ॥

एवं शप्तोऽहमृषिणा तदा द्विजवरोत्तम ।
अभिप्रसादयमृषिं गिरा वाक्यविशारदम् ॥ ००१ ॥

अजानता मयाकार्यमिदमद्य कृतं मुने ।
क्षन्तुमर्हसि तत्सर्वं प्रसीद भगवन्निति ॥ ००२ ॥

ऋषिरुवाच ॥

नान्यथा भविता शाप एवमेतदसंशयम् ।
आनृशंस्यादहं किञ्चित्कर्तानुग्रहमद्य ते ॥ ००३ ॥

शूद्रयोनौ वर्तमानो धर्मज्ञो भविता ह्यसि ।
मातापित्रोश्च शुश्रूषां करिष्यसि न संशयः ॥ ००४ ॥

तया शुश्रूषया सिद्धिं महतीं समवाप्स्यसि ।
जातिस्मरश्च भविता स्वर्गं चैव गमिष्यसि ॥ ००५ ॥

शापक्षयान्ते निर्वृत्ते भवितासि पुनर्द्विजः ॥ ००५ ॥

व्याध उवाच ॥

एवं शप्तः पुरा तेन ऋषिणास्म्युग्रतेजसा ।
प्रसादश्च कृतस्तेन ममैवं द्विपदां वर ॥ ००६ ॥

शरं चोद्धृतवानस्मि तस्य वै द्विजसत्तम ।
आश्रमं च मया नीतो न च प्राणैर्व्ययुज्यत ॥ ००७ ॥

एतत्ते सर्वमाख्यातं यथा मम पुराभवत् ।
अभितश्चापि गन्तव्यं मया स्वर्गं द्विजोत्तम ॥ ००८ ॥

ब्राह्मण उवाच ॥

एवमेतानि पुरुषा दुःखानि च सुखानि च ।
प्राप्नुवन्ति महाबुद्धे नोत्कण्ठां कर्तुमर्हसि ॥ ००९ ॥

दुष्करं हि कृतं तात जानता जातिमात्मनः ॥ ००९ ॥

कर्मदोषश्च वै विद्वन्नात्मजातिकृतेन वै ।
कञ्चित्कालं मृष्यतां वै ततोऽसि भविता द्विजः ॥ ०१० ॥

सांप्रतं च मतो मेऽसि ब्राह्मणो नात्र संशयः ॥ ०१० ॥

ब्राह्मणः पतनीयेषु वर्तमानो विकर्मसु ।
दाम्भिको दुष्कृतप्रायः शूद्रेण सदृशो भवेत् ॥ ०११ ॥

यस्तु शूद्रो दमे सत्ये धर्मे च सततोत्थितः ।
तं ब्राह्मणमहं मन्ये वृत्तेन हि भवेद्द्विजः ॥ ०१२ ॥

कर्मदोषेण विषमां गतिमाप्नोति दारुणाम् ।
क्षीणदोषमहं मन्ये चाभितस्त्वां नरोत्तम ॥ ०१३ ॥

कर्तुमर्हसि नोत्कण्ठां त्वद्विधा ह्यविषादिनः ।
लोकवृत्तान्तवृत्तज्ञा नित्यं धर्मपरायणाः ॥ ०१४ ॥

व्याध उवाच ॥

प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः ।
एतद्विज्ञानसामर्थ्यं न बालैः समतां व्रजेत् ॥ ०१५ ॥

अनिष्टसंप्रयोगाच्च विप्रयोगात्प्रियस्य च ।
मानुषा मानसैर्दुःखैर्युज्यन्ते अल्पबुद्धयः ॥ ०१६ ॥

गुणैर्भूतानि युज्यन्ते वियुज्यन्ते तथैव च ।
सर्वाणि नैतदेकस्य शोकस्थानं हि विद्यते ॥ ०१७ ॥

अनिष्टेनान्वितं पश्यंस्तथा क्षिप्रं विरज्यते ।
ततश्च प्रतिकुर्वन्ति यदि पश्यन्त्युपक्रमम् ॥ ०१८ ॥

शोचतो न भवेत्किञ्चित्केवलं परितप्यते ॥ ०१८ ॥

परित्यजन्ति ये दुःखं सुखं वाप्युभयं नराः ।
त एव सुखमेधन्ते ज्ञानतृप्ता मनीषिणः ॥ ०१९ ॥

असंतोषपरा मूढाः संतोषं यान्ति पण्डिताः ।
असंतोषस्य नास्त्यन्तस्तुष्टिस्तु परमं सुखम् ॥ ०२० ॥

न शोचन्ति गताध्वानः पश्यन्तः परमां गतिम्  ॥ ०२०  ॥

न विषादे मनः कार्यं विषादो विषमुत्तमम् ।
मारयत्यकृतप्रज्ञं बालं क्रुद्ध इवोरगः  ॥ ०२१  ॥

यं विषादोऽभिभवति विषमे समुपस्थिते ।
तेजसा तस्य हीनस्य पुरुषार्थो न विद्यते  ॥ ०२२  ॥

अवश्यं क्रियमाणस्य कर्मणो दृश्यते फलम् ।
न हि निर्वेदमागम्य किञ्चित्प्राप्नोति शोभनम्  ॥ ०२३  ॥

अथाप्युपायं पश्येत दुःखस्य परिमोक्षणे ।
अशोचन्नारभेतैव युक्तश्चाव्यसनी भवेत्  ॥ ०२४  ॥

भूतेष्वभावं सञ्चिन्त्य ये तु बुद्धेः परं गताः ।
न शोचन्ति कृतप्रज्ञाः पश्यन्तः परमां गतिम्  ॥ ०२५  ॥

न शोचामि च वै विद्वन्कालाकाङ्क्षी स्थितोऽस्म्यहम् ।
एतैर्निदर्शनैर्ब्रह्मन्नावसीदामि सत्तम  ॥ ०२६  ॥

ब्राह्मण उवाच  ॥

कृतप्रज्ञोऽसि मेधावी बुद्धिश्च विपुला तव ।
नाहं भवन्तं शोचामि ज्ञानतृप्तोऽसि धर्मवित्  ॥ ०२७  ॥

आपृच्छे त्वां स्वस्ति तेऽस्तु धर्मस्त्वा परिरक्षतु ।
अप्रमादस्तु कर्तव्यो धर्मे धर्मभृतां वर  ॥ ०२८  ॥

मार्कण्डेय उवाच  ॥

बाढमित्येव तं व्याधः कृताञ्जलिरुवाच ह ।
प्रदक्षिणमथो कृत्वा प्रस्थितो द्विजसत्तमः ॥ ०२९ ॥

स तु गत्वा द्विजः सर्वां शुश्रूषां कृतवांस्तदा ।
मातापितृभ्यां वृद्धाभ्यां यथान्यायं सुसंशितः ॥ ०३० ॥

एतत्ते सर्वमाख्यातं निखिलेन युधिष्ठिर ।
पृष्टवानसि यं तात धर्मं धर्मभृतां वर ॥ ०३१ ॥

पतिव्रताया माहात्म्यं ब्राह्मणस्य च सत्तम ।
मातापित्रोश्च शुश्रूषा व्याधे धर्मश्च कीर्तितः ॥ ०३२ ॥

युधिष्ठिर उवाच ॥

अत्यद्भुतमिदं ब्रह्मन्धर्माख्यानमनुत्तमम् ।
सर्वधर्मभृतां श्रेष्ठ कथितं द्विजसत्तम ॥ ०३३ ॥

सुखश्रव्यतया विद्वन्मुहूर्तमिव मे गतम् ।
न हि तृप्तोऽस्मि भगवञ्श्रृण्वानो धर्ममुत्तमम् ॥ ०३४ ॥

---

# आ ण्गिरसम्

# अध्याय २०७

वैशंपायन उवाच ॥

श्रुत्वेमां धर्मसंयुक्तां धर्मराजः कथां शुभाम् ।

पुनः पप्रच्छ तमृषिं मार्कण्डेयं तपस्विनम् ॥ ००१ ॥

युधिष्ठिर उवाच ॥

कथमग्निर्वनं यातः कथं चाप्यङ्गिराः पुरा ।
नष्टेऽग्नौ हव्यमवहदग्निर्भूत्वा महानृषिः ॥ ००२ ॥

अग्निर्यदा त्वेक एव बहुत्वं चास्य कर्मसु ।
दृश्यते भगवन्सर्वमेतदिच्छामि वेदितुम् ॥ ००३ ॥

कुमारश्च यथोत्पन्नो यथा चाग्नेः सुतोऽभवत् ।
यथा रुद्राच्च संभूतो गङ्गायां कृत्तिकासु च ॥ ००४ ॥

एतदिच्छाम्यहं त्वत्तः श्रोतुं भार्गवनन्दन ।
कौतूहलसमाविष्टो यथातथ्यं महामुने ॥ ००५ ॥

मार्कण्डेय उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
यथा क्रुद्धो हुतवहस्तपस्तप्तुं वनं गतः ॥ ००६ ॥

यथा च भगवानग्निः स्वयमेवाङ्गिराभवत् ।
संतापयन्स्वप्रभया नाशयंस्तिमिराणि च ॥ ००७ ॥

आश्रमस्थो महाभागो हव्यवाहं विशेषयन् ।
तथा स भूत्वा तु तदा जगत्सर्वं प्रकाशयन् ॥ ००८ ॥

तपश्चरंश्च हुतभुक्संतप्तस्तस्य तेजसा ।
भृशं ग्लानश्च तेजस्वी न स किञ्चित्प्रजज्ञिवान् ॥ ००९ ॥

अथ सञ्चिन्तयामास भगवान्हव्यवाहनः ।

अन्योऽग्निरिह लोकानां ब्रह्मणा संप्रवर्तितः ॥ ०१० ॥

अग्नित्वं विप्रनष्टं हि तप्यमानस्य मे तपः ॥ ०१० ॥

कथमग्निः पुनरहं भवेयमिति चिन्त्य सः ।
अपश्यदग्निवल्लोकांस्तापयन्तं महामुनिम् ॥ ०११ ॥

सोपासर्पच्छनैर्भीतस्तमुवाच तदाङ्गिराः ।
शीघ्रमेव भवस्वाग्निस्त्वं पुनर्लोकभावनः ॥ ०१२ ॥

विज्ञातश्चासि लोकेषु त्रिषु संस्थानचारिषु ॥ ०१२ ॥

त्वमग्ने प्रथमः सृष्टो ब्रह्मणा तिमिरापहः ।
स्वस्थानं प्रतिपद्यस्व शीघ्रमेव तमोनुद ॥ ०१३ ॥

अग्निरुवाच ॥

नष्टकीर्तिरहं लोके भवाञ्जातो हुताशनः ।
भवन्तमेव ज्ञास्यन्ति पावकं न तु मां जनाः ॥ ०१४ ॥

निक्षिपाम्यहमग्नित्वं त्वमग्निः प्रथमो भव ।
भविष्यामि द्वितीयोऽहं प्राजापत्यक एव च ॥ ०१५ ॥

अङ्गिरा उवाच ॥

कुरु पुण्यं प्रजास्वर्ग्यं भवाग्निस्तिमिरापहः ।
मां च देव कुरुष्वाग्ने प्रथमं पुत्रमञ्जसा ॥ ०१६ ॥

मार्कण्डेय उवाच ॥

तच्छ्रुत्वाङ्गिरसो वाक्यं जातवेदास्तथाकरोत् ।

राजन्बृहस्पतिर्नाम तस्याप्यङ्गिरसः सुतः  ॥ ०१७  ॥

ज्ञात्वा प्रथमजं तं तु वह्नेराङ्गिरसं सुतम् ।
उपेत्य देवाः पप्रच्छुः कारणं तत्र भारत  ॥ ०१८  ॥

स तु पृष्टस्तदा देवैस्ततः कारणमब्रवीत् ।
प्रत्यगृह्णंस्तु देवाश्च तद्वचोऽङ्गिरसस्तदा  ॥ ०१९  ॥

अत्र नानाविधानग्नीन्प्रवक्ष्यामि महाप्रभान् ।
कर्मभिर्बहुभिः ख्यातान्नानात्वं ब्राह्मणेष्विह  ॥ ०२०  ॥

---

# अध्याय २०८

मार्कण्डेय उवाच  ॥

ब्रह्मणो यस्तृतीयस्तु पुत्रः कुरुकुलोद्वह ।
तस्यापवसुता भार्या प्रजास्तस्यापि मे शृणु  ॥ ००१  ॥

बृहज्ज्योतिर्बृहत्कीर्तिर्बृहद्ब्रह्मा बृहन्मनाः ।
बृहन्मन्त्रो बृहद्भासस्तथा राजन्बृहस्पतिः  ॥ ००२  ॥

प्रजासु तासु सर्वासु रूपेणाप्रतिमाभवत् ।
देवी भानुमती नाम प्रथमाङ्गिरसः सुता  ॥ ००३  ॥

भूतानामेव सर्वेषां यस्यां रागस्तदाभवत् ।
रागाद्रागेति यामाहुर्द्वितीयाङ्गिरसः सुता  ॥ ००४  ॥

यां कपर्दिसुतामाहुर्दृश्यादृश्येति देहिनः ।

तनुत्वात्सा सिनीवाली तृतीयाङ्गिरसः सुता ॥ ००५ ॥

पश्यत्यर्चिष्मती भाभिर्हविर्भिश्च हविष्मती ।
षष्ठीमङ्गिरसः कन्यां पुण्यामाहुर्हविष्मतीम् ॥ ००६ ॥

महामखेष्वाङ्गिरसी दीप्तिमत्सु महामती ।
महामतीति विख्याता सप्तमी कथ्यते सुता ॥ ००७ ॥

यां तु दृष्ट्वा भगवतीं जनः कुहुकुहायते ।
एकानंशेति यामाहुः कुहूमङ्गिरसः सुताम् ॥ ००८ ॥

---

# अध्याय २०९

मार्कण्डेय उवाच ॥

बृहस्पतेश्चान्द्रमसी भार्याभूद्या यशस्विनी ।
अग्नीन्साजनयत्पुण्यान्षडेकां चापि पुत्रिकाम् ॥ ००१ ॥

आहुतिष्वेव यस्याग्नेर्हविषाज्यं विधीयते ।
सोऽग्निर्बृहस्पतेः पुत्रः शंयुर्नाम महाप्रभः ॥ ००२ ॥

चातुर्मास्येषु यस्येष्ट्यामश्वमेधेऽग्रजः पशुः ।
दीप्तो ज्वालैरनेकाभैरग्निरेकोऽथ वीर्यवान् ॥ ००३ ॥

शंयोरप्रतिमा भार्या सत्या सत्या च धर्मजा ।
अग्निस्तस्य सुतो दीप्तस्तिस्रः कन्याश्च सुव्रताः ॥ ००४ ॥

प्रथमेनाज्यभागेन पूज्यते योऽग्निरध्वरे ।

अग्निस्तस्य भरद्वाजः प्रथमः पुत्र उच्यते ॥ ००५ ॥

पौर्णमास्येषु सर्वेषु हविषाज्यं स्रुवोद्यतम् ।
भरतो नामतः सोऽग्निर्द्वितीयः शंयुतः सुतः ॥ ००६ ॥

तिस्रः कन्या भवन्त्यन्या यासां स भरतः पतिः ।
भरतस्तु सुतस्तस्य भरत्येका च पुत्रिका ॥ ००७ ॥

भरतो भरतस्याग्नेः पावकस्तु प्रजापतेः ।
महानत्यर्थमहितस्तथा भरतसत्तम ॥ ००८ ॥

भरद्वाजस्य भार्या तु वीरा वीरश्च पिण्डदः ।
प्राहुराज्येन तस्येज्यां सोमस्येव द्विजाः शनैः ॥ ००९ ॥

हविषा यो द्वितीयेन सोमेन सह युज्यते ।
रथप्रभू रथध्वानः कुम्भरेताः स उच्यते ॥ ०१० ॥

सरय्वां जनयत्सिद्धिं भानुं भाभिः समावृणोत् ।
आग्नेयमानयन्नित्यमाह्वानेष्वेष कथ्यते ॥ ०११ ॥

यस्तु न च्यवते नित्यं यशसा वर्चसा श्रिया ।
अग्निर्निश्च्यवनो नाम पृथिवीं स्तौति केवलम् ॥ ०१२ ॥

विपाप्मा कलुषैर्मुक्तो विशुद्धश्चार्चिषा ज्वलन् ।
विपापोऽग्निः सुतस्तस्य सत्यः समयकर्मसु ॥ ०१३ ॥

आक्रोशतां हि भूतानां यः करोति हि निष्कृतिम् ।
अग्निः स निष्कृतिर्नाम शोभयत्यभिसेवितः ॥ ०१४ ॥

अनुकूजन्ति येनेह वेदनार्ताः स्वयं जनाः ।
तस्य पुत्रः स्वनो नाम पावकः स रुजस्करः ॥ ०१५ ॥

यस्तु विश्वस्य जगतो बुद्धिमाक्रम्य तिष्ठति ।
तं प्राहुरध्यात्मविदो विश्वजिन्नाम पावकम् ॥ ०१६ ॥

अन्तराग्निः श्रितो यो हि भुक्तं पचति देहिनाम् ।
स यज्ञे विश्वभुङ्नाम सर्वलोकेषु भारत ॥ ०१७ ॥

ब्रह्मचारी यतात्मा च सततं विपुलव्रतः ।
ब्राह्मणाः पूजयन्त्येनं पाकयज्ञेषु पावकम् ॥ ०१८ ॥

प्रथितो गोपतिर्नाम नदी यस्याभवत्प्रिया ।
तस्मिन्सर्वाणि कर्माणि क्रियन्ते कर्मकर्तृभिः ॥ ०१९ ॥

वडवामुखः पिबत्यम्भो योऽसौ परमदारुणः ।
ऊर्ध्वभागूर्ध्वभाङ्नाम कविः प्राणाश्रितस्तु सः ॥ ०२० ॥

उदग्द्वारं हविर्यस्य गृहे नित्यं प्रदीयते ।
ततः स्विष्टं भवेदाज्यं स्विष्टकृत्परमः स्मृतः ॥ ०२१ ॥

यः प्रशान्तेषु भूतेषु मन्युर्भवति पावकः ।
क्रोधस्य तु रसो जज्ञे मन्यती चाथ पुत्रिका ॥ ०२२ ॥

स्वाहेति दारुणा क्रूरा सर्वभूतेषु तिष्ठति ॥ ०२२ ॥

त्रिदिवे यस्य सदृशो नास्ति रूपेण कश्चन ।
अतुल्यत्वात्कृतो देवैर्नाम्ना कामस्तु पावकः ॥ ०२३ ॥

संहर्षाद्धारयन्क्रोधं धन्वी स्रग्वी रथे स्थितः ।
समरे नाशयेच्छत्रूनमोघो नाम पावकः ॥ ०२४ ॥

उक्थो नाम महाभाग त्रिभिरुक्थैरभिष्टुतः ।

महावाचं त्वजनयत्सकामाश्वं हि यं विदुः ॥ ०२५ ॥

---

# अध्याय २१०

मार्कण्डेय उवाच ॥

काश्यपो ह्यथ वासिष्ठः प्राणश्च प्राणपुत्रकः ।
अग्निराङ्गिरसश्चैव च्यवनस्त्रिषुवर्चकः ॥ ००१ ॥

अचरन्त तपस्तीव्रं पुत्रार्थे बहुवार्षिकम् ।
पुत्रं लभेम धर्मिष्ठं यशसा ब्रह्मणा समम् ॥ ००२ ॥

महाव्याहृतिभिर्ध्यातः पञ्चभिस्तैस्तदा त्वथ ।
जज्ञे तेजोमयोऽर्चिष्मान्पञ्चवर्णः प्रभावनः ॥ ००३ ॥

समिद्धोऽग्निः शिरस्तस्य बाहू सूर्यनिभौ तथा ।
त्वङ्नेत्रे च सुवर्णाभे कृष्णे जङ्घे च भारत ॥ ००४ ॥

पञ्चवर्णः स तपसा कृतस्तैः पञ्चभिर्जनैः ।
पाञ्चजन्यः श्रुतो वेदे पञ्चवंशकरस्तु सः ॥ ००५ ॥

दश वर्षसहस्राणि तपस्तप्त्वा महातपाः ।
जनयत्पावकं घोरं पितृणां स प्रजाः सृजन् ॥ ००६ ॥

बृहद्रथंतरं मूर्ध्नो वक्त्राच्च तरसाहरौ ।
शिवं नाभ्यां बलादिन्द्रं वाय्वग्नी प्राणतोऽसृजत् ॥ ००७ ॥

बाहुभ्यामनुदात्तौ च विश्वे भूतानि चैव ह ।

एतान्सृष्ट्वा ततः पञ्च पितॄणामसृजत्सुतान्  ॥ ००८  ॥

बृहदूर्जस्य प्रणिधिः काश्यपस्य बृहत्तरः ।
भानुरङ्गिरसो वीरः पुत्रो वर्चस्य सौभरः  ॥ ००९  ॥

प्राणस्य चानुदात्तश्च व्याख्याताः पञ्च वंशजाः ।
देवान्यज्ञमुषश्चान्यान्सृजन्पञ्चदशोत्तरान्  ॥ ०१०  ॥

अभीममतिभीमं च भीमं भीमबलाबलम् ।
एतान्यज्ञमुषः पञ्च देवानभ्यसृजत्तपः  ॥ ०११  ॥

सुमित्रं मित्रवन्तं च मित्रज्ञं मित्रवर्धनम् ।
मित्रधर्माणमित्येतान्देवानभ्यसृजत्तपः  ॥ ०१२  ॥

सुरप्रवीरं वीरं च सुकेशं च सुवर्चसम् ।
सुराणामपि हन्तारं पञ्चैतानसृजत्तपः  ॥ ०१३  ॥

त्रिविधं संस्थिता ह्येते पञ्च पञ्च पृथक्पृथक् ।
मुष्णन्त्यत्र स्थिता ह्येते स्वर्गतो यज्ञयाजिनः  ॥ ०१४  ॥

तेषामिष्टं हरन्त्येते निघ्नन्ति च महद्भुवि ।
स्पर्धया हव्यवाहानां निघ्नन्त्येते हरन्ति च  ॥ ०१५  ॥

हविर्वेद्यां तदादानं कुशलैः संप्रवर्तितम् ।
तदेते नोपसर्पन्ति यत्र चाग्निः स्थितो भवेत्  ॥ ०१६  ॥

चितोऽग्निरुद्वहन्यज्ञं पक्षाभ्यां तान्प्रबाधते ।
मन्त्रैः प्रशमिता ह्येते नेष्टं मुष्णन्ति यज्ञियम्  ॥ ०१७  ॥

बृहदुक्थतपस्यैव पुत्रो भूमिमुपाश्रितः ।
अग्निहोत्रे हूयमाने पृथिव्यां सद्भिरिज्यते  ॥ ०१८  ॥

रथंतरश्च तपसः पुत्रोऽग्निः परिपठ्यते ।
मित्रविन्दाय वै तस्य हविरध्वर्यवो विदुः ॥ ०१९ ॥

मुमुदे परमप्रीतः सह पुत्रैर्महायशाः ॥ ०१९ ॥

---

# अध्याय २११

मार्कण्डेय उवाच ॥

गुरुभिर्नियमैर्युक्तो भरतो नाम पावकः ।
अग्निः पुष्टिमतिर्नाम तुष्टः पुष्टिं प्रयच्छति ॥ ००१ ॥

भरत्येष प्रजाः सर्वास्ततो भरत उच्यते ॥ ००१ ॥

अग्निर्यस्तु शिवो नाम शक्तिपूजापरश्च सः ।
दुःखार्तानां स सर्वेषां शिवकृत्सततं शिवः ॥ ००२ ॥

तपसस्तु फलं दृष्ट्वा संप्रवृद्धं तपो महत् ।
उद्धर्तुकामो मतिमान्पुत्रो जज्ञे पुरंदरः ॥ ००३ ॥

ऊष्मा चैवोष्मणो जज्ञे सोऽग्निर्भूतेषु लक्ष्यते ।
अग्निश्चापि मनुर्नाम प्राजापत्यमकारयत् ॥ ००४ ॥

शंभुमग्निमथ प्राहुर्ब्राह्मणा वेदपारगाः ।
आवसथ्यं द्विजाः प्राहुर्दीप्तमग्निं महाप्रभम् ॥ ००५ ॥

ऊर्जस्करान्हव्यवाहान्सुवर्णसदृशप्रभान् ।
अग्निस्तपो ह्यजनयत्पञ्च यज्ञसुतानिह ॥ ००६ ॥

प्रशान्तेऽग्निर्महाभाग परिश्रान्तो गवांपतिः ।
असुराञ्जनयन्घोरान्मर्त्यांश्चैव पृथग्विधान् ॥ ००७ ॥

तपसश्च मनुं पुत्रं भानुं चाप्यङ्गिरासृजत् ।
बृहद्भानुं तु तं प्राहुर्ब्राह्मणा वेदपारगाः ॥ ००८ ॥

भानोर्भार्या सुप्रजा तु बृहद्भासा तु सोमजा ।
असृजेतां तु षड्पुत्राञ्श्रृणु तासां प्रजाविधिम् ॥ ००९ ॥

दुर्बलानां तु भूतानां तनुं यः संप्रयच्छति ।
तमग्निं बलदं प्राहुः प्रथमं भानुतः सुतम् ॥ ०१० ॥

यः प्रशान्तेषु भूतेषु मन्युर्भवति दारुणः ।
अग्निः स मन्युमान्नाम द्वितीयो भानुतः सुतः ॥ ०११ ॥

दर्शे च पौर्णमासे च यस्येह हविरुच्यते ।
विष्णुर्नामेह योऽग्निस्तु धृतिमान्नाम सोऽङ्गिराः ॥ ०१२ ॥

इन्द्रेण सहितं यस्य हविराग्रयणं स्मृतम् ।
अग्निराग्रयणो नाम भानोरेवान्वयस्तु सः ॥ ०१३ ॥

चातुर्मास्येषु नित्यानां हविषां यो निरग्रहः ।
चतुर्भिः सहितः पुत्रैर्भानोरेवान्वयस्तु सः ॥ ०१४ ॥

निशां त्वजनयत्कन्यामग्नीषोमावुभौ तथा ।
मनोरेवाभवद्भार्या सुषुवे पञ्च पावकान् ॥ ०१५ ॥

पूज्यते हविषाग्र्येण चातुर्मास्येषु पावकः ।

पर्जन्यसहितः श्रीमानग्निर्वैश्वानरस्तु सः ॥ ०१६ ॥

अस्य लोकस्य सर्वस्य यः पतिः परिपठ्यते ।
सोऽग्निर्विश्वपतिर्नाम द्वितीयो वै मनोः सुतः ॥ ०१७ ॥

ततः स्विष्टं भवेदाज्यं स्विष्टकृत्परमः स्मृतः ॥ ०१७ ॥

कन्या सा रोहिणी नाम हिरण्यकशिपोः सुता ।
कर्मणासौ बभौ भार्या स वह्निः स प्रजापतिः ॥ ०१८ ॥

प्राणमाश्रित्य यो देहं प्रवर्तयति देहिनाम् ।
तस्य संनिहितो नाम शब्दरूपस्य साधनः ॥ ०१९ ॥

शुक्लकृष्णगतिर्देवो यो बिभर्ति हुताशनम् ।
अकल्मषः कल्मषाणां कर्ता क्रोधाश्रितस्तु सः ॥ ०२० ॥

कपिलं परमर्षिं च यं प्राहुर्यतयः सदा ।
अग्निः स कपिलो नाम सांख्ययोगप्रवर्तकः ॥ ०२१ ॥

अग्निर्यच्छति भूतानि येन भूतानि नित्यदा ।
कर्मस्विह विचित्रेषु सोऽग्रणीर्वह्निरुच्यते ॥ ०२२ ॥

इमानन्यान्समसृजत्पावकान्प्रथितान्भुवि ।
अग्निहोत्रस्य दुष्टस्य प्रायश्चित्तार्थमुल्बणान् ॥ ०२३ ॥

संस्पृशेयुर्यदान्योन्यं कथञ्चिद्वायुनाग्नयः ।
इष्टिरष्टाकपालेन कार्या वै शुचयेऽग्नये ॥ ०२४ ॥

दक्षिणाग्निर्यदा द्वाभ्यां संसृजेत तदा किल ।
इष्टिरष्टाकपालेन कार्या वै वीतयेऽग्नये ॥ ०२५ ॥

यद्यग्नयो हि स्पृश्येयुर्निवेशस्था दवाग्निना ।
इष्टिरष्टाकपालेन कार्या तु शुचयेऽग्नये ॥ ०२६ ॥

अग्निं रजस्वला चेत्स्त्री संस्पृशेदग्निहोत्रिकम् ।
इष्टिरष्टाकपालेन कार्या दस्युमतेऽग्नये ॥ ०२७ ॥

मृतः श्रूयेत यो जीवन्परेयुः पशवो यथा ।
इष्टिरष्टाकपालेन कर्तव्याभिमतेऽग्नये ॥ ०२८ ॥

आर्तो न जुहुयादग्निं त्रिरात्रं यस्तु ब्राह्मणः ।
इष्टिरष्टाकपालेन कार्या स्यादुत्तराग्नये ॥ ०२९ ॥

दर्शं च पौर्णमासं च यस्य तिष्ठेत्प्रतिष्ठितम् ।
इष्टिरष्टाकपालेन कार्या पथिकृतेऽग्नये ॥ ०३० ॥

सूतिकाग्निर्यदा चाग्निं संस्पृशेदग्निहोत्रिकम् ।
इष्टिरष्टाकपालेन कार्या चाग्निमतेऽग्नये ॥ ०३१ ॥

---

# अध्याय २१२

मार्कण्डेय उवाच ॥

आपस्य मुदिता भार्या सहस्य परमा प्रिया ।
भूपतिर्भुवभर्ता च जनयत्पावकं परम् ॥ ००१ ॥

भूतानां चापि सर्वेषां यं प्राहुः पावकं पतिम् ।
आत्मा भुवनभर्तेति सान्वयेषु द्विजातिषु ॥ ००२ ॥

महतां चैव भूतानां सर्वेषामिह यः पतिः ।
भगवान्स महातेजा नित्यं चरति पावकः  ॥ ००३  ॥

अग्निर्गृहपतिर्नाम नित्यं यज्ञेषु पूज्यते ।
हुतं वहति यो हव्यमस्य लोकस्य पावकः  ॥ ००४  ॥

अपां गर्भो महाभागः सहपुत्रो महाद्भुतः ।
भूपतिर्भुवभर्ता च महतः पतिरुच्यते  ॥ ००५  ॥

दहन्मृतानि भूतानि तस्याग्निर्भरतोऽभवत् ।
अग्निष्टोमे च नियतः क्रतुश्रेष्ठो भरस्य तु  ॥ ००६  ॥

आयान्तं नियतं दृष्ट्वा प्रविवेशार्णवं भयात् ।
देवास्तं नाधिगच्छन्ति मार्गमाणा यथादिशम्  ॥ ००७  ॥

दृष्ट्वा त्वग्निरथर्वाणं ततो वचनमब्रवीत् ।
देवानां वह हव्यं त्वमहं वीर सुदुर्बलः  ॥ ००८  ॥

अथर्वन्गच्छ मध्वक्षं प्रियमेतत्कुरुष्व मे  ॥ ००८  ॥

प्रेष्य चाग्निरथर्वाणमन्यं देशं ततोऽगमत् ।
मत्स्यास्तस्य समाचख्युः क्रुद्धस्तानग्निरब्रवीत्  ॥ ००९  ॥

भक्ष्या वै विविधैर्भावैर्भविष्यथ शरीरिणाम् ।
अथर्वाणं तथा चापि हव्यवाहोऽब्रवीद्वचः  ॥ ०१०  ॥

अनुनीयमानोऽपि भृशं देववाक्याद्धि तेन सः ।
नैच्छद्वोढुं हविः सर्वं शरीरं च समत्यजत्  ॥ ०११  ॥

स तच्छरीरं संत्यज्य प्रविवेश धरां तदा ।

भूमिं स्पृष्ट्वासृजद्धातून्पृथक्पृथगतीव हि ॥ ०१२ ॥

आस्यात्सुगन्धि तेजश्च अस्थिभ्यो देवदारु च ।
श्लेष्मणः स्फटिकं तस्य पित्तान्मरकतं तथा ॥ ०१३ ॥

यकृत्कृष्णायसं तस्य त्रिभिरेव बभुः प्रजाः ।
नखास्तस्याभ्रपटलं शिराजालानि विद्रुमम् ॥ ०१४ ॥

शरीराद्विविधाश्चान्ये धातवोऽस्याभवन्नृप ॥ ०१४ ॥

एवं त्यक्त्वा शरीरं तु परमे तपसि स्थितः ।
भृग्वङ्गिरादिभिर्भूयस्तपसोत्थापितस्तदा ॥ ०१५ ॥

भृशं जज्वाल तेजस्वी तपसाप्यायितः शिखी ।
दृष्ट्वा ऋषीन्भयाच्चापि प्रविवेश महार्णवम् ॥ ०१६ ॥

तस्मिन्नष्टे जगद्भीतमथर्वाणमथाश्रितम् ।
अर्चयामासुरेवैनमथर्वाणं सुरर्षयः ॥ ०१७ ॥

अथर्वा त्वसृजल्लोकानात्मनालोक्य पावकम् ।
मिषतां सर्वभूतानामुन्ममाथ महार्णवम् ॥ ०१८ ॥

एवमग्निर्भगवता नष्टः पूर्वमथर्वणा ।
आहूतः सर्वभूतानां हव्यं वहति सर्वदा ॥ ०१९ ॥

एवं त्वजनयद्धिष्ण्यान्वेदोक्तान्विबुधान्बहून् ।
विचरन्विविधान्देशान्भ्रममाणस्तु तत्र वै ॥ ०२० ॥

सिन्धुवर्जं पञ्च नद्यो देविकाथ सरस्वती ।
गङ्गा च शतकुम्भा च शरयूर्गण्डसाह्वया ॥ ०२१ ॥

चर्मण्वती मही चैव मेध्या मेधातिथिस्तथा ।
ताम्रावती वेत्रवती नद्यस्तिस्रोऽथ कौशिकी ॥ ०२२ ॥

तमसा नर्मदा चैव नदी गोदावरी तथा ।
वेण्णा प्रवेणी भीमा च मेद्रथा चैव भारत ॥ ०२३ ॥

भारती सुप्रयोगा च कावेरी मुर्मुरा तथा ।
कृष्णा च कृष्णवेण्णा च कपिला शोण एव च ॥ ०२४ ॥

एता नद्यस्तु धिष्ण्यानां मातरो याः प्रकीर्तिताः ॥ ०२४ ॥

अद्भुतस्य प्रिया भार्या तस्याः पुत्रो विडूरथः ।
यावन्तः पावकाः प्रोक्ताः सोमास्तावन्त एव च ॥ ०२५ ॥

अत्रेश्चाप्यन्वये जाता ब्रह्मणो मानसाः प्रजाः ।
अत्रिः पुत्रान्स्रष्टुकामस्तानेवात्मन्यधारयत् ॥ ०२६ ॥

तस्य तद्ब्रह्मणः कायान्निर्हरन्ति हुताशनाः ॥ ०२६ ॥

एवमेते महात्मानः कीर्तितास्तेऽग्नयो मया ।
अप्रमेया यथोत्पन्नाः श्रीमन्तस्तिमिरापहाः ॥ ०२७ ॥

अद्भुतस्य तु माहात्म्यं यथा वेदेषु कीर्तितम् ।
तादृशं विद्धि सर्वेषामेको ह्येष हुताशनः ॥ ०२८ ॥

एक एवैष भगवान्विज्ञेयः प्रथमोऽङ्गिराः ।
बहुधा निःसृतः कायाज्ज्योतिष्टोमः क्रतुर्यथा ॥ ०२९ ॥

इत्येष वंशः सुमहानग्नीनां कीर्तितो मया ।
पावितो विविधैर्मन्त्रैर्हव्यं वहति देहिनाम् ॥ ०३० ॥

# अध्याय २१३

मार्कण्डेय उवाच ॥

अग्नीनां विविधो वंशः कीर्तितस्ते मयानघ ।
शृणु जन्म तु कौरव्य कार्त्तिकेयस्य धीमतः ॥ ००१ ॥

अद्भुतस्याद्भुतं पुत्रं प्रवक्ष्याम्यमितौजसम् ।
जातं सप्तर्षिभार्याभिर्ब्रह्मण्यं कीर्तिवर्धनम् ॥ ००२ ॥

देवासुराः पुरा यत्ता विनिघ्नन्तः परस्परम् ।
तत्राजयन्सदा देवान्दानवा घोररूपिणः ॥ ००३ ॥

वध्यमानं बलं दृष्ट्वा बहुशस्तैः पुरंदरः ।
स्वसैन्यनायकार्थाय चिन्तामाप भृशं तदा ॥ ००४ ॥

देवसेनां दानवैर्यो भग्नां दृष्ट्वा महाबलः ।
पालयेद्वीर्यमाश्रित्य स ज्ञेयः पुरुषो मया ॥ ००५ ॥

स शैलं मानसं गत्वा ध्यायन्नर्थमिमं भृशम् ।
शुश्रावार्तस्वरं घोरमथ मुक्तं स्त्रिया तदा ॥ ००६ ॥

अभिधावतु मा कश्चित्पुरुषस्त्रातु चैव ह ।
पतिं च मे प्रदिशतु स्वयं वा पतिरस्तु मे ॥ ००७ ॥

पुरंदरस्तु तामाह मा भैर्नास्ति भयं तव ।
एवमुक्त्वा ततोऽपश्यत्केशिनं स्थितमग्रतः ॥ ००८ ॥

किरीटिनं गदापाणिं धातुमन्तमिवाचलम् ।
हस्ते गृहीत्वा तां कन्यामथैनं वासवोऽब्रवीत्  ॥ ००९  ॥

अनार्यकर्मन्कस्मात्त्वमिमां कन्यां जिहीर्षसि ।
वज्रिणं मां विजानीहि विरमास्याः प्रबाधनात्  ॥ ०१०  ॥

केश्युवाच  ॥

विसृजस्व त्वमेवैनां शक्रैषा प्रार्थिता मया ।
क्षमं ते जीवतो गन्तुं स्वपुरं पाकशासन  ॥ ०११  ॥

मार्कण्डेय उवाच  ॥

एवमुक्त्वा गदां केशी चिक्षेपेन्द्रवधाय वै ।
तामापतन्तीं चिच्छेद मध्ये वज्रेण वासवः  ॥ ०१२  ॥

अथास्य शैलशिखरं केशी क्रुद्धो व्यवासृजत् ।
तदापतन्तं संप्रेक्ष्य शैलशृङ्गं शतक्रतुः  ॥ ०१३  ॥

बिभेद राजन्वज्रेण भुवि तन्निपपात ह  ॥ ०१३  ॥

पतता तु तदा केशी तेन शृङ्गेण ताडितः ।
हित्वा कन्यां महाभागां प्राद्रवद्भृशपीडितः  ॥ ०१४  ॥

अपयातेऽसुरे तस्मिंस्तां कन्यां वासवोऽब्रवीत् ।
कासि कस्यासि किं चेह कुरुषे त्वं शुभानने  ॥ ०१५  ॥

कन्योवाच  ॥

अहं प्रजापतेः कन्या देवसेनेति विश्रुता ।

भगिनी दैत्यसेना मे सा पूर्वं केशिना हृता ॥ ०१६ ॥

सहैवावां भगिन्यौ तु सखीभिः सह मानसम् ।
आगच्छावेह रत्यर्थमनुज्ञाप्य प्रजापतिम् ॥ ०१७ ॥

नित्यं चावां प्रार्थयते हर्तुं केशी महासुरः ।
इच्छत्येनं दैत्यसेना न त्वहं पाकशासन ॥ ०१८ ॥

सा हृता तेन भगवन्मुक्ताहं त्वद्बलेन तु ।
त्वया देवेन्द्र निर्दिष्टं पतिमिच्छामि दुर्जयम् ॥ ०१९ ॥

इन्द्र उवाच ॥

मम मातृष्वसेया त्वं माता दाक्षायणी मम ।
आख्यातं त्वहमिच्छामि स्वयमात्मबलं त्वया ॥ ०२० ॥

कन्योवाच ॥

अबलाहं महाबाहो पतिस्तु बलवान्मम ।
वरदानात्पितुर्भावी सुरासुरनमस्कृतः ॥ ०२१ ॥

इन्द्र उवाच ॥

कीदृशं वै बलं देवि पत्युस्तव भविष्यति ।
एतदिच्छाम्यहं श्रोतुं तव वाक्यमनिन्दिते ॥ ०२२ ॥

कन्योवाच ॥

देवदानवयक्षाणां किंनरोरगरक्षसाम् ।
जेता स दृष्टो दुष्टानां महावीर्यो महाबलः ॥ ०२३ ॥

यस्तु सर्वाणि भूतानि त्वया सह विजेष्यति ।
स हि मे भविता भर्ता ब्रह्मण्यः कीर्तिवर्धनः ॥ ०२४ ॥

मार्कण्डेय उवाच ॥

इन्द्रस्तस्या वचः श्रुत्वा दुःखितोऽचिन्तयद्भृशम् ।
अस्या देव्याः पतिर्नास्ति यादृशं संप्रभाषते ॥ ०२५ ॥

अथापश्यत्स उदये भास्करं भास्करद्युतिः ।
सोमं चैव महाभागं विशमानं दिवाकरम् ॥ ०२६ ॥

अमावास्यां संप्रवृत्तं मुहूर्तं रौद्रमेव च ।
देवासुरं च सङ्ग्रामं सोऽपश्यदुदये गिरौ ॥ ०२७ ॥

लोहितैश्च घनैर्युक्तां पूर्वां संध्यां शतक्रतुः ।
अपश्यल्लोहितोदं च भगवान्वरुणालयम् ॥ ०२८ ॥

भृगुभिश्चाङ्गिरोभिश्च हुतं मन्त्रैः पृथग्विधैः ।
हव्यं गृहीत्वा वह्निं च प्रविशन्तं दिवाकरम् ॥ ०२९ ॥

पर्व चैव चतुर्विंशं तदा सूर्यमुपस्थितम् ।
तथा धर्मगतं रौद्रं सोमं सूर्यगतं च तम् ॥ ०३० ॥

समालोक्यैकतामेव शशिनो भास्करस्य च ।
समवायं तु तं रौद्रं दृष्ट्वा शक्रो व्यचिन्तयत् ॥ ०३१ ॥

एष रौद्रश्च संघातो महान्युक्तश्च तेजसा ।
सोमस्य वह्निसूर्याभ्यामद्भुतोऽयं समागमः ॥ ०३२ ॥

जनयेद्यं सुतं सोमः सोऽस्या देव्याः पतिर्भवेत् ॥ ०३२ ॥

अग्निश्चैतैर्गुणैर्युक्तः सर्वैरग्निश्च देवता ।
एष चेज्जनयेद्गर्भं सोऽस्या देव्याः पतिर्भवेत् ॥ ०३३ ॥

एवं सञ्चिन्त्य भगवान्ब्रह्मलोकं तदा गतः ।
गृहीत्वा देवसेनां तामवन्दत्स पितामहम् ॥ ०३४ ॥

उवाच चास्या देव्यास्त्वं साधु शूरं पतिं दिश ॥ ०३४ ॥

ब्रह्मोवाच ॥

यथैतच्चिन्तितं कार्यं त्वया दानवसूदन ।
तथा स भविता गर्भो बलवानुरुविक्रमः ॥ ०३५ ॥

स भविष्यति सेनानीस्त्वया सह शतक्रतो ।
अस्या देव्याः पतिश्चैव स भविष्यति वीर्यवान् ॥ ०३६ ॥

मार्कण्डेय उवाच ॥

एतच्छ्रुत्वा नमस्तस्मै कृत्वासौ सह कन्यया ।
तत्राभ्यगच्छद्देवेन्द्रो यत्र देवर्षयोऽभवन् ॥ ०३७ ॥

वसिष्ठप्रमुखा मुख्या विप्रेन्द्राः सुमहाव्रताः ॥ ०३७ ॥

भागार्थं तपसोपात्तं तेषां सोमं तथाध्वरे ।
पिपासवो ययुर्देवाः शतक्रतुपुरोगमाः ॥ ०३८ ॥

इष्टिं कृत्वा यथान्यायं सुसमिद्धे हुताशने ।
जुहुवुस्ते महात्मानो हव्यं सर्वदिवौकसाम् ॥ ०३९ ॥

समाहूतो हुतवहः सोऽद्भुतः सूर्यमण्डलात् ।
विनिःसृत्याययौ वह्निर्वाग्यतो विधिवत्प्रभुः ॥ ०४० ॥

आगम्याहवनीयं वै तैर्द्विजैर्मन्त्रतो हुतम्  ॥ ०४०  ॥

स तत्र विविधं हव्यं प्रतिगृह्य हुताशनः ।
ऋषिभ्यो भरतश्रेष्ठ प्रायच्छत दिवौकसाम्  ॥ ०४१  ॥

निष्क्रामंश्चाप्यपश्यत्स पत्नीस्तेषां महात्मनाम् ।
स्वेष्वाश्रमेषूपविष्टाः स्नायन्तीश्च यथासुखम्  ॥ ०४२  ॥

रुक्मवेदिनिभास्तास्तु चन्द्रलेखा इवामलाः ।
हुताशनार्चिप्रतिमाः सर्वास्तारा इवाद्भुताः  ॥ ०४३  ॥

स तद्गतेन मनसा बभूव क्षुभितेन्द्रियः ।
पत्नीर्दृष्ट्वा द्विजेन्द्राणां वह्निः कामवशं ययौ  ॥ ०४४  ॥

स भूयश्चिन्तयामास न न्याय्यं क्षुभितोऽस्मि यत् ।
साध्वीः पत्नीर्द्विजेन्द्राणामकामाः कामयाम्यहम्  ॥ ०४५  ॥

नैताः शक्या मया द्रष्टुं स्प्रष्टुं वाप्यनिमित्ततः ।
गार्हपत्यं समाविश्य तस्मात्पश्याम्यभीक्ष्णशः  ॥ ०४६  ॥

संस्पृशन्निव सर्वास्ताः शिखाभिः काञ्चनप्रभाः ।
पश्यमानश्च मुमुदे गार्हपत्यं समाश्रितः  ॥ ०४७  ॥

निरुष्य तत्र सुचिरमेवं वह्निर्वशं गतः ।
मनस्तासु विनिक्षिप्य कामयानो वराङ्गनाः  ॥ ०४८  ॥

कामसंतप्तहृदयो देहत्यागे सुनिश्चितः ।
अलाभे ब्राह्मणस्त्रीणामग्निर्वनमुपागतः  ॥ ०४९  ॥

स्वाहा तं दक्षदुहिता प्रथमं कामयत्तदा ।

सा तस्य छिद्रमन्वैच्छच्चिरात्प्रभृति भामिनी ॥ ०५० ॥

अप्रमत्तस्य देवस्य न चापश्यदनिन्दिता ॥ ०५० ॥

सा तं ज्ञात्वा यथावत्तु वह्निं वनमुपागतम् ।
तत्त्वतः कामसंतप्तं चिन्तयामास भामिनी ॥ ०५१ ॥

अहं सप्तर्षिपत्नीनां कृत्वा रूपाणि पावकम् ।
कामयिष्यामि कामार्तं तासां रूपेण मोहितम् ॥ ०५२ ॥

एवं कृते प्रीतिरस्य कामावाप्तिश्च मे भवेत् ॥ ०५२ ॥

---

# अध्याय २१४

मार्कण्डेय उवाच ॥

शिवा भार्या त्वङ्गिरसः शीलरूपगुणान्विता ।
तस्याः सा प्रथमं रूपं कृत्वा देवी जनाधिप ॥ ००१ ॥

जगाम पावकाभ्याशं तं चोवाच वराङ्गना ॥ ००१ ॥

मामग्ने कामसंतप्तां त्वं कामयितुमर्हसि ।
करिष्यसि न चेदेवं मृतां मामुपधारय ॥ ००२ ॥

अहमङ्गिरसो भार्या शिवा नाम हुताशन ।
सखीभिः सहिता प्राप्ता मन्त्रयित्वा विनिश्चयम् ॥ ००३ ॥

अग्निरुवाच ॥

कथं मां त्वं विजानीषे कामार्तमितराः कथम् ।
यास्त्वया कीर्तिताः सर्वाः सप्तर्षीणां प्रियाः स्त्रियः ॥ ००४ ॥

शिवोवाच ॥

अस्माकं त्वं प्रियो नित्यं बिभीमस्तु वयं तव ।
त्वच्चित्तमिङ्गितैर्ज्ञात्वा प्रेषितास्मि तवान्तिकम् ॥ ००५ ॥

मैथुनायेह संप्राप्ता कामं प्राप्तं द्रुतं चर ।
मातरो मां प्रतीक्षन्ते गमिष्यामि हुताशन ॥ ००६ ॥

मार्कण्डेय उवाच ॥

ततोऽग्निरुपयेमे तां शिवां प्रीतिमुदायुतः ।
प्रीत्या देवी च संयुक्ता शुक्रं जग्राह पाणिना ॥ ००७ ॥

अचिन्तयन्ममेदं ये रूपं द्रक्ष्यन्ति कानने ।
ते ब्राह्मणीनामनृतं दोषं वक्ष्यन्ति पावके ॥ ००८ ॥

तस्मादेतद्रक्ष्यमाणा गरुडी संभवाम्यहम् ।
वनान्निर्गमनं चैव सुखं मम भविष्यति ॥ ००९ ॥

सुपर्णी सा तदा भूत्वा निर्जगाम महावनात् ।
अपश्यत्पर्वतं श्वेतं शरस्तम्बैः सुसंवृतम् ॥ ०१० ॥

दृष्टीविषैः सप्तशीर्षैर्गुप्तं भोगिभिरद्भुतैः ।
रक्षोभिश्च पिशाचैश्च रौद्रैर्भूतगणैस्तथा ॥ ०११ ॥

राक्षसीभिश्च संपूर्णमनेकैश्च मृगद्विजैः ॥ ०११ ॥

सा तत्र सहसा गत्वा शैलपृष्ठं सुदुर्गमम् ।
प्राक्षिपत्काञ्चने कुण्डे शुक्रं सा त्वरिता सती ॥ ०१२ ॥

शिष्टानामपि सा देवी सप्तर्षीणां महात्मनाम् ।
पत्नीसरूपतां कृत्वा कामयामास पावकम् ॥ ०१३ ॥

दिव्यरूपमरुन्धत्याः कर्तुं न शकितं तया ।
तस्यास्तपःप्रभावेण भर्तृशुश्रूषणेन च ॥ ०१४ ॥

षट्कृत्वस्तत्तु निक्षिप्तमग्ने रेतः कुरूत्तम ।
तस्मिन्कुण्डे प्रतिपदि कामिन्या स्वाहया तदा ॥ ०१५ ॥

तत्स्कन्नं तेजसा तत्र संभृतं जनयत्सुतम् ।
ऋषिभिः पूजितं स्कन्नमनयत्स्कन्दतां ततः ॥ ०१६ ॥

षड्शिरा द्विगुणश्रोत्रो द्वादशाक्षिभुजक्रमः ।
एकग्रीवस्त्वेककायः कुमारः समपद्यत ॥ ०१७ ॥

द्वितीयायामभिव्यक्तस्तृतीयायां शिशुर्बभौ ।
अङ्गप्रत्यङ्गसंभूतश्चतुर्थ्यामभवद्गुहः ॥ ०१८ ॥

लोहिताभ्रेण महता संवृतः सह विद्युता ।
लोहिताभ्रे सुमहति भाति सूर्य इवोदितः ॥ ०१९ ॥

गृहीतं तु धनुस्तेन विपुलं लोमहर्षणम् ।
न्यस्तं यत्त्रिपुरघ्नेन सुरारिविनिकृन्तनम् ॥ ०२० ॥

तद्गृहीत्वा धनुःश्रेष्ठं ननाद बलवांस्तदा ।
संमोहयन्निवेमान्स त्री.ण्ल्लोकान्सचराचरान् ॥ ०२१ ॥

तस्य तं निनदं श्रुत्वा महामेघौघनिस्वनम् ।

उत्पेततुर्महानागौ चित्रश्चैरावतश्च ह ॥ ०२२ ॥

तावापतन्तौ संप्रेक्ष्य स बालार्कसमद्युतिः ।
द्वाभ्यां गृहीत्वा पाणिभ्यां शक्तिं चान्येन पाणिना ॥ ०२३ ॥

अपरेणाग्निदायादस्ताम्रचूडं भुजेन सः ॥ ०२३ ॥

महाकायमुपश्लिष्टं कुक्कुटं बलिनां वरम् ।
गृहीत्वा व्यनदद्भीमं चिक्रीड च महाबलः ॥ ०२४ ॥

द्वाभ्यां भुजाभ्यां बलवान्गृहीत्वा शङ्खमुत्तमम् ।
प्राध्मापयत भूतानां त्रासनं बलिनामपि ॥ ०२५ ॥

द्वाभ्यां भुजाभ्यामाकाशं बहुशो निजघान सः ।
क्रीडन्भाति महासेनस्त्री.ण्ल्लोकान्वदनैः पिबन् ॥ ०२६ ॥

पर्वताग्रेऽप्रमेयात्मा रश्मिमानुदये यथा ॥ ०२६ ॥

स तस्य पर्वतस्याग्रे निषण्णोऽद्भुतविक्रमः ।
व्यलोकयदमेयात्मा मुखैर्नानाविधैर्दिशः ॥ ०२७ ॥

स पश्यन्विविधान्भावांश्चकार निनदं पुनः ॥ ०२७ ॥

तस्य तं निनदं श्रुत्वा न्यपतन्बहुधा जनाः ।
भीताश्चोद्विग्नमनसस्तमेव शरणं ययुः ॥ ०२८ ॥

ये तु तं संश्रिता देवं नानावर्णास्तदा जनाः ।
तानप्याहुः पारिषदान्ब्राह्मणाः सुमहाबलान् ॥ ०२९ ॥

स तूत्थाय महाबाहुरुपसान्त्व्य च ताञ्जनान् ।
धनुर्विकृष्य व्यसृजद्बाणाञ्श्वेते महागिरौ ॥ ०३० ॥

बिभेद स शरैः शैलं क्रौञ्चं हिमवतः सुतम् ।
तेन हंसाश्च गृध्राश्च मेरुं गच्छन्ति पर्वतम् ॥ ०३१ ॥

स विशीर्णोऽपतच्छैलो भृशमार्तस्वरान्रुवन् ।
तस्मिन्निपतिते त्वन्ये नेदुः शैला भृशं भयात् ॥ ०३२ ॥

स तं नादं भृशार्तानां श्रुत्वापि बलिनां वरः ।
न प्राव्यथदमेयात्मा शक्तिमुद्यम्य चानदत् ॥ ०३३ ॥

सा तदा विपुला शक्तिः क्षिप्ता तेन महात्मना ।
बिभेद शिखरं घोरं श्वेतस्य तरसा गिरेः ॥ ०३४ ॥

स तेनाभिहतो दीनो गिरिः श्वेतोऽचलैः सह ।
उत्पपात महीं त्यक्त्वा भीतस्तस्मान्महात्मनः ॥ ०३५ ॥

ततः प्रव्यथिता भूमिर्व्यशीर्यत समन्ततः ।
आर्ता स्कन्दं समासाद्य पुनर्बलवती बभौ ॥ ०३६ ॥

पर्वताश्च नमस्कृत्य तमेव पृथिवीं गताः ।
अथायमभजल्लोकः स्कन्दं शुक्लस्य पञ्चमीम् ॥ ०३७ ॥

---

# अध्याय २१५

मार्कण्डेय उवाच ॥

ऋषयस्तु महाघोरान्दृष्ट्वोत्पातान्पृथग्विधान् ।

अकुर्वञ्शान्तिमुद्विग्ना लोकानां लोकभावनाः ॥ ००१ ॥

निवसन्ति वने ये तु तस्मिंश्चैत्ररथे जनाः ।
तेऽब्रुवन्नेष नोऽनर्थः पावकेनाहृतो महान् ॥ ००२ ॥

सङ्गम्य षड्भिः पत्नीभिः सप्तर्षीणामिति स्म ह ॥ ००२ ॥

अपरे गरुडीमाहुस्त्वयानर्थोऽयमाहृतः ।
यैर्दृष्टा सा तदा देवी तस्या रूपेण गच्छती ॥ ००३ ॥

न तु तत्स्वाहया कर्म कृतं जानाति वै जनः ॥ ००३ ॥

सुपर्णी तु वचः श्रुत्वा ममायं तनयस्त्विति ।
उपगम्य शनैः स्कन्दमाहाहं जननी तव ॥ ००४ ॥

अथ सप्तर्षयः श्रुत्वा जातं पुत्रं महौजसम् ।
तत्यजुः षट्तदा पत्नीर्विना देवीमरुन्धतीम् ॥ ००५ ॥

षड्भिरेव तदा जातमाहुस्तद्वनवासिनः ।
सप्तर्षीनाह च स्वाहा मम पुत्रोऽयमित्युत ॥ ००६ ॥

अहं जाने नैतदेवमिति राजन्पुनः पुनः ॥ ००६ ॥

विश्वामित्रस्तु कृत्वेष्टिं सप्तर्षीणां महामुनिः ।
पावकं कामसंतप्तमदृष्टः पृष्ठतोऽन्वगात् ॥ ००७ ॥

तत्तेन निखिलं सर्वमवबुद्धं यथातथम् ॥ ००७ ॥

विश्वामित्रस्तु प्रथमं कुमारं शरणं गतः ।
स्तवं दिव्यं संप्रचक्रे महासेनस्य चापि सः ॥ ००८ ॥

मङ्गलानि च सर्वाणि कौमाराणि त्रयोदश ।
जातकर्मादिकास्तस्य क्रियाश्चक्रे महामुनिः ॥ ००९ ॥

षड्वक्रस्य तु माहात्म्यं कुक्कुटस्य च साधनम् ।
शक्त्या देव्याः साधनं च तथा पारिषदामपि ॥ ०१० ॥

विश्वामित्रश्चकारैतत्कर्म लोकहिताय वै ।
तस्मादृषिः कुमारस्य विश्वामित्रोऽभवत्प्रियः ॥ ०११ ॥

अन्वजानाच्च स्वाहाया रूपान्यत्वं महामुनिः ।
अब्रवीच्च मुनीन्सर्वान्नापराध्यन्ति वै स्त्रियः ॥ ०१२ ॥

श्रुत्वा तु तत्त्वतस्तस्मात्ते पत्नीः सर्वतोऽत्यजन् ॥ ०१२ ॥

स्कन्दं श्रुत्वा ततो देवा वासवं सहिताब्रुवन् ।
अविषह्यबलं स्कन्दं जहि शक्राशु माचिरम् ॥ ०१३ ॥

यदि वा न निहंस्येनमद्येन्द्रोऽयं भविष्यति ।
त्रैलोक्यं संनिगृह्यास्मांस्त्वां च शक्र महाबलः ॥ ०१४ ॥

स तानुवाच व्यथितो बालोऽयं सुमहाबलः ।
स्रष्टारमपि लोकानां युधि विक्रम्य नाशयेत् ॥ ०१५ ॥

सर्वास्त्वद्याभिगच्छन्तु स्कन्दं लोकस्य मातरः ।
कामवीर्या घ्नन्तु चैनं तथेत्युक्त्वा च ता ययुः ॥ ०१६ ॥

तमप्रतिबलं दृष्ट्वा विषण्णवदनास्तु ताः ।
अशक्योऽयं विचिन्त्यैवं तमेव शरणं ययुः ॥ ०१७ ॥

ऊचुश्चापि त्वमस्माकं पुत्रोऽस्माभिर्धृतं जगत् ।
अभिनन्दस्व नः सर्वाः प्रस्नुताः स्नेहविक्लवाः ॥ ०१८ ॥

ताः संपूज्य महासेनः कामांश्चासां प्रदाय सः ।
अपश्यदग्निमायान्तं पितरं बलिनां बली ॥ ०१९ ॥

स तु संपूजितस्तेन सह मातृगणेन ह ।
परिवार्य महासेनं रक्षमाणः स्थितः स्थिरम् ॥ ०२० ॥

सर्वासां या तु मातॄणां नारी क्रोधसमुद्भवा ।
धात्री सा पुत्रवत्स्कन्दं शूलहस्ताभ्यरक्षत ॥ ०२१ ॥

लोहितस्योदधेः कन्या क्रूरा लोहितभोजना ।
परिष्वज्य महासेनं पुत्रवत्पर्यरक्षत ॥ ०२२ ॥

अग्निर्भूत्वा नैगमेयश्छागवक्त्रो बहुप्रजः ।
रमयामास शैलस्थं बालं क्रीडनकैरिव ॥ ०२३ ॥

---

# अध्याय २१६

मार्कण्डेय उवाच ॥

ग्रहाः सोपग्रहाश्चैव ऋषयो मातरस्तथा ।
हुताशनमुखाश्चापि दीप्ताः पारिषदां गणाः ॥ ००१ ॥

एते चान्ये च बहवो घोरास्त्रिदिववासिनः ।
परिवार्य महासेनं स्थिता मातृगणैः सह ॥ ००२ ॥

संदिग्धं विजयं दृष्ट्वा विजयेप्सुः सुरेश्वरः ।

आरुह्यैरावतस्कन्धं प्रययौ दैवतैः सह ॥ ००३ ॥

विजिघांसुर्महासेनमिन्द्रस्तूर्णतरं ययौ ॥ ००३ ॥

उग्रं तच्च महावेगं देवानीकं महाप्रभम् ।
विचित्रध्वजसंनाहं नानावाहनकार्मुकम् ॥ ००४ ॥

प्रवराम्बरसंवीतं श्रिया जुष्टमलङ्कृतम् ॥ ००४ ॥

विजिघांसुं तदायान्तं कुमारः शक्रमभ्ययात् ।
विनदन्पथि शक्रस्तु द्रुतं याति महाबलः ॥ ००५ ॥

संहर्षयन्देवसेनां जिघांसुः पावकात्मजम् ॥ ००५ ॥

संपूज्यमानस्त्रिदशैस्तथैव परमर्षिभिः ।
समीपमुपसंप्राप्तः कार्त्तिकेयस्य वासवः ॥ ००६ ॥

सिंहनादं ततश्चक्रे देवेशः सहितः सुरैः ।
गुहोऽपि शब्दं तं श्रुत्वा व्यनदत्सागरो यथा ॥ ००७ ॥

तस्य शब्देन महता समुद्धूतोदधिप्रभम् ।
बभ्राम तत्र तत्रैव देवसैन्यमचेतनम् ॥ ००८ ॥

जिघांसूनुपसंप्राप्तान्देवान्दृष्ट्वा स पावकिः ।
विससर्ज मुखात्क्रुद्धः प्रवृद्धाः पावकार्चिषः ॥ ००९ ॥

ता देवसैन्यान्यदहन्वेष्टमानानि भूतले ॥ ००९ ॥

ते प्रदीप्तशिरोदेहाः प्रदीप्तायुधवाहनाः ।
प्रच्युताः सहसा भान्ति चित्रास्तारागणा इव ॥ ०१० ॥

दह्यमानाः प्रपन्नास्ते शरणं पावकात्मजम् ।
देवा वज्रधरं त्यक्त्वा ततः शान्तिमुपागताः ॥ ०११ ॥

त्यक्तो देवैस्ततः स्कन्दे वज्रं शक्रोऽभ्यवासृजत् ।
तद्विसृष्टं जघानाशु पार्श्वं स्कन्दस्य दक्षिणम् ॥ ०१२ ॥

बिभेद च महाराज पार्श्वं तस्य महात्मनः ॥ ०१२ ॥

वज्रप्रहारात्स्कन्दस्य सञ्जातः पुरुषोऽपरः ।
युवा काञ्चनसंनाहः शक्तिधृग्दिव्यकुण्डलः ॥ ०१३ ॥

यद्वज्रविशनाज्जातो विशाखस्तेन सोऽभवत् ॥ ०१३ ॥

तं जातमपरं दृष्ट्वा कालानलसमद्युतिम् ।
भयादिन्द्रस्ततः स्कन्दं प्राञ्जलिः शरणं गतः ॥ ०१४ ॥

तस्याभयं ददौ स्कन्दः सहसैन्यस्य सत्तम ।
ततः प्रहृष्टास्त्रिदशा वादित्राण्यभ्यवादयन् ॥ ०१५ ॥

---

# अध्याय २१७

मार्कण्डेय उवाच ॥

स्कन्दस्य पार्षदान्घोराञ्शृणुष्वाद्भुतदर्शनान् ।
वज्रप्रहारात्स्कन्दस्य जज्ञुस्तत्र कुमारकाः ॥ ००१ ॥

ये हरन्ति शिशूञ्जातान्गर्भस्थांश्चैव दारुणाः ॥ ००१ ॥

वज्रप्रहारात्कन्याश्च जज्ञिरेऽस्य महाबलाः ।
कुमाराश्च विशाखं तं पितृत्वे समकल्पयन् ॥ ००२ ॥

स भूत्वा भगवान्संख्ये रक्षंश्छागमुखस्तदा ।
वृतः कन्यागणैः सर्वैरात्मनीनैश्च पुत्रकैः ॥ ००३ ॥

मातॄणां प्रेक्षतीनां च भद्रशाखश्च कौशलः ।
ततः कुमारपितरं स्कन्दमाहुर्जना भुवि ॥ ००४ ॥

रुद्रमग्निमुमां स्वाहां प्रदेशेषु महाबलाम् ।
यजन्ति पुत्रकामाश्च पुत्रिणश्च सदा जनाः ॥ ००५ ॥

यास्तास्त्वजनयत्कन्यास्तपो नाम हुताशनः ।
किं करोमीति ताः स्कन्दं संप्राप्ताः समभाषत ॥ ००६ ॥

मातर ऊचुः ॥

भवेम सर्वलोकस्य वयं मातर उत्तमाः ।
प्रसादात्तव पूज्याश्च प्रियमेतत्कुरुष्व नः ॥ ००७ ॥

मार्कण्डेय उवाच ॥

सोऽब्रवीद्बाढमित्येवं भविष्यध्वं पृथग्विधाः ।
अशिवाश्च शिवाश्चैव पुनः पुनरुदारधीः ॥ ००८ ॥

ततः सङ्कल्प्य पुत्रत्वे स्कंदं मातृगणोऽगमत् ।
काकी च हलिमा चैव रुद्राथ बृहली तथा ॥ ००९ ॥

आर्या पलाला वै मित्रा सप्तैताः शिशुमातरः ॥ ००९ ॥

एतासां वीर्यसंपन्नः शिशुर्नामातिदारुणः ।

स्कन्दप्रसादजः पुत्रो लोहिताक्षो भयङ्करः ॥ ०१० ॥

एष वीराष्टकः प्रोक्तः स्कन्दमातृगणोद्भवः ।
छागवक्त्रेण सहितो नवकः परिकीर्त्यते ॥ ०११ ॥

षष्ठं छागमयं वक्त्रं स्कन्दस्यैवेति विद्धि तत् ।
षड्शिरोऽभ्यन्तरं राजन्नित्यं मातृगणार्चितम् ॥ ०१२ ॥

षण्णां तु प्रवरं तस्य शीर्षाणामिह शब्द्यते ।
शक्तिं येनासृजद्दिव्यां भद्रशाख इति स्म ह ॥ ०१३ ॥

इत्येतद्विविधाकारं वृत्तं शुक्लस्य पञ्चमीम् ।
तत्र युद्धं महाघोरं वृत्तं षष्ठ्यां जनाधिप ॥ ०१४ ॥

---

# अध्याय २१८

मार्कण्डेय उवाच ॥

उपविष्टं ततः स्कन्दं हिरण्यकवचस्रजम् ।
हिरण्यचूडमुकुटं हिरण्याक्षं महाप्रभम् ॥ ००१ ॥

लोहिताम्बरसंवीतं तीक्ष्णदंष्ट्रं मनोरमम् ।
सर्वलक्षणसंपन्नं त्रैलोक्यस्यापि सुप्रियम् ॥ ००२ ॥

ततस्तं वरदं शूरं युवानं मृष्टकुण्डलम् ।
अभजत्पद्मरूपा श्रीः स्वयमेव शरीरिणी ॥ ००३ ॥

श्रिया जुष्टः पृथुयशाः स कुमारवरस्तदा ।

निषण्णो दृश्यते भूतैः पौर्णमास्यां यथा शशी ॥ ००४ ॥

अपूजयन्महात्मानो ब्राह्मणास्तं महाबलम् ।
इदमाहुस्तदा चैव स्कन्दं तत्र महर्षयः ॥ ००५ ॥

हिरण्यवर्ण भद्रं ते लोकानां शङ्करो भव ।
त्वया षड्रात्रजातेन सर्वे लोका वशीकृताः ॥ ००६ ॥

अभयं च पुनर्दत्तं त्वयैवैषां सुरोत्तम ।
तस्मादिन्द्रो भवानस्तु त्रैलोक्यस्याभयङ्करः ॥ ००७ ॥

स्कन्द उवाच ॥

किमिन्द्रः सर्वलोकानां करोतीह तपोधनाः ।
कथं देवगणांश्चैव पाति नित्यं सुरेश्वरः ॥ ००८ ॥

ऋषय ऊचुः ॥

इन्द्रो दिशति भूतानां बलं तेजः प्रजाः सुखम् ।
तुष्टः प्रयच्छति तथा सर्वान्दायान्सुरेश्वरः ॥ ००९ ॥

दुर्वृत्तानां संहरति वृत्तस्थानां प्रयच्छति ।
अनुशास्ति च भूतानि कार्येषु बलसूदनः ॥ ०१० ॥

असूर्ये च भवेत्सूर्यस्तथाचन्द्रे च चन्द्रमाः ।
भवत्यग्निश्च वायुश्च पृथिव्यापश्च कारणैः ॥ ०११ ॥

एतदिन्द्रेण कर्तव्यमिन्द्रे हि विपुलं बलम् ।
त्वं च वीर बलश्रेष्ठस्तस्मादिन्द्रो भवस्व नः ॥ ०१२ ॥

शक्र उवाच ॥

भवस्वेन्द्रो महाबाहो सर्वेषां नः सुखावहः ।
अभिषिच्यस्व चैवाद्य प्राप्तरूपोऽसि सत्तम ॥ ०१३ ॥

स्कन्द उवाच ॥

शाधि त्वमेव त्रैलोक्यमव्यग्रो विजये रतः ।
अहं ते किङ्करः शक्र न ममेन्द्रत्वमीप्सितम् ॥ ०१४ ॥

शक्र उवाच ॥

बलं तवाद्भुतं वीर त्वं देवानामरीञ्जहि ।
अवज्ञास्यन्ति मां लोका वीर्येण तव विस्मिताः ॥ ०१५ ॥

इन्द्रत्वेऽपि स्थितं वीर बलहीनं पराजितम् ।
आवयोश्च मिथो भेदे प्रयतिष्यन्त्यतन्द्रिताः ॥ ०१६ ॥

भेदिते च त्वयि विभो लोको द्वैधमुपेष्यति ।
द्विधाभूतेषु लोकेषु निश्चितेष्वावयोस्तथा ॥ ०१७ ॥

विग्रहः संप्रवर्तेत भूतभेदान्महाबल ॥ ०१७ ॥

तत्र त्वं मां रणे तात यथाश्रद्धं विजेष्यसि ।
तस्मादिन्द्रो भवानद्य भविता मा विचारय ॥ ०१८ ॥

स्कन्द उवाच ॥

त्वमेव राजा भद्रं ते त्रैलोक्यस्य ममैव च ।
करोमि किं च ते शक्र शासनं तद्ब्रवीहि मे ॥ ०१९ ॥

शक्र उवाच ॥

यदि सत्यमिदं वाक्यं निश्चयाद्भाषितं त्वया ।
यदि वा शासनं स्कन्द कर्तुमिच्छसि मे शृणु ॥ ०२० ॥

अभिषिच्यस्व देवानां सेनापत्ये महाबल ।
अहमिन्द्रो भविष्यामि तव वाक्यान्महाबल ॥ ०२१ ॥

स्कन्द उवाच ॥

दानवानां विनाशाय देवानामर्थसिद्धये ।
गोब्राह्मणस्य त्राणार्थं सेनापत्येऽभिषिञ्च माम् ॥ ०२२ ॥

मार्कण्डेय उवाच ॥

सोऽभिषिक्तो मघवता सर्वैर्देवगणैः सह ।
अतीव शुशुभे तत्र पूज्यमानो महर्षिभिः ॥ ०२३ ॥

तस्य तत्काञ्चनं छत्रं ध्रियमाणं व्यरोचत ।
यथैव सुसमिद्धस्य पावकस्यात्ममण्डलम् ॥ ०२४ ॥

विश्वकर्मकृता चास्य दिव्या माला हिरण्मयी ।
आबद्धा त्रिपुरघ्नेन स्वयमेव यशस्विना ॥ ०२५ ॥

आगम्य मनुजव्याघ्र सह देव्या परंतप ।
अर्चयामास सुप्रीतो भगवान्गोवृषध्वजः ॥ ०२६ ॥

रुद्रमग्निं द्विजाः प्राहू रुद्रसूनुस्ततस्तु सः ।
रुद्रेण शुक्रमुत्सृष्टं तच्छ्वेतः पर्वतोऽभवत् ॥ ०२७ ॥

पावकस्येन्द्रियं श्वेते कृत्तिकाभिः कृतं नगे ॥ ०२७ ॥

पूज्यमानं तु रुद्रेण दृष्ट्वा सर्वे दिवौकसः ।
रुद्रसूनुं ततः प्राहुर्गुहं गुणवतां वरम् ॥ ०२८ ॥

अनुप्रविश्य रुद्रेण वह्निं जातो ह्ययं शिशुः ।
तत्र जातस्ततः स्कन्दो रुद्रसूनुस्ततोऽभवत् ॥ ०२९ ॥

रुद्रस्य वह्नेः स्वाहायाः षण्णां स्त्रीणां च तेजसा ।
जातः स्कन्दः सुरश्रेष्ठो रुद्रसूनुस्ततोऽभवत् ॥ ०३० ॥

अरजे वाससी रक्ते वसानः पावकात्मजः ।
भाति दीप्तवपुः श्रीमान्रक्ताभ्राभ्यामिवांशुमान् ॥ ०३१ ॥

कुक्कुटश्चाग्निना दत्तस्तस्य केतुरलङ्कृतः ।
रथे समुच्छ्रितो भाति कालाग्निरिव लोहितः ॥ ०३२ ॥

विवेश कवचं चास्य शरीरं सहजं ततः ।
युध्यमानस्य देवस्य प्रादुर्भवति तत्सदा ॥ ०३३ ॥

शक्तिर्वर्म बलं तेजः कान्तत्वं सत्यमक्षतिः ।
ब्रह्मण्यत्वमसंमोहो भक्तानां परिरक्षणम् ॥ ०३४ ॥

निकृन्तनं च शत्रूणां लोकानां चाभिरक्षणम् ।
स्कन्देन सह जातानि सर्वाण्येव जनाधिप ॥ ०३५ ॥

एवं देवगणैः सर्वैः सोऽभिषिक्तः स्वलङ्कृतः ।
बभौ प्रतीतः सुमनाः परिपूर्णेन्दुदर्शनः ॥ ०३६ ॥

इष्टैः स्वाध्यायघोषैश्च देवतूर्यरवैरपि ।
देवगन्धर्वगीतैश्च सर्वैरप्सरसां गणैः ॥ ०३७ ॥

एतैश्चान्यैश्च विविधैर्हृष्टतुष्टैरलङ्कृतैः ।

क्रीडन्निव तदा देवैरभिषिक्तः स पावकिः ॥ ०३८ ॥

अभिषिक्तं महासेनमपश्यन्त दिवौकसः ।
विनिहत्य तमः सूर्यं यथेहाभ्युदितं तथा ॥ ०३९ ॥

अथैनमभ्ययुः सर्वा देवसेनाः सहस्रशः ।
अस्माकं त्वं पतिरिति ब्रुवाणाः सर्वतोदिशम् ॥ ०४० ॥

ताः समासाद्य भगवान्सर्वभूतगणैर्वृतः ।
अर्चितश्च स्तुतश्चैव सान्त्वयामास ता अपि ॥ ०४१ ॥

शतक्रतुश्चाभिषिच्य स्कन्दं सेनापतिं तदा ।
सस्मार तां देवसेनां या सा तेन विमोक्षिता ॥ ०४२ ॥

अयं तस्याः पतिर्नूनं विहितो ब्रह्मणा स्वयम् ।
इति चिन्त्यानयामास देवसेनां स्वलङ्कृताम् ॥ ०४३ ॥

स्कन्दं चोवाच बलभिदियं कन्या सुरोत्तम ।
अजाते त्वयि निर्दिष्टा तव पत्नी स्वयंभुवा ॥ ०४४ ॥

तस्मात्त्वमस्या विधिवत्पाणिं मन्त्रपुरस्कृतम् ।
गृहाण दक्षिणं देव्याः पाणिना पद्मवर्चसम् ॥ ०४५ ॥

एवमुक्तः स जग्राह तस्याः पाणिं यथाविधि ।
बृहस्पतिर्मन्त्रविधिं जजाप च जुहाव च ॥ ०४६ ॥

एवं स्कन्दस्य महिषीं देवसेनां विदुर्बुधाः ।
षष्ठीं यां ब्राह्मणाः प्राहुर्लक्ष्मीमाशां सुखप्रदाम् ॥ ०४७ ॥

सिनीवालीं कुहूं चैव सद्वृत्तिमपराजिताम् ॥ ०४७ ॥

यदा स्कन्दः पतिर्लब्धः शाश्वतो देवसेनया ।
तदा तमाश्रयल्लक्ष्मीः स्वयं देवी शरीरिणी ॥ ०४८ ॥

श्रीजुष्टः पञ्चमीं स्कन्दस्तस्माच्छ्रीपञ्चमी स्मृता ।
षष्ठ्यां कृतार्थोऽभूद्यस्मात्तस्मात्षष्ठी महातिथिः ॥ ०४९ ॥

---

# अध्याय २१९

मार्कण्डेय उवाच ॥

श्रिया जुष्टं महासेनं देवसेनापतिं कृतम् ।
सप्तर्षिपत्न्यः षड्देव्यस्तत्सकाशमथागमन् ॥ ००१ ॥

ऋषिभिः संपरित्यक्ता धर्मयुक्ता महाव्रताः ।
द्रुतमागम्य चोचुस्ता देवसेनापतिं प्रभुम् ॥ ००२ ॥

वयं पुत्र परित्यक्ता भर्तृभिर्देवसंमितैः ।
अकारणाद्रुषा तात पुण्यस्थानात्परिच्युताः ॥ ००३ ॥

अस्माभिः किल जातस्त्वमिति केनाप्युदाहृतम् ।
असत्यमेतत्संश्रुत्य तस्मान्नस्त्रातुमर्हसि ॥ ००४ ॥

अक्षयश्च भवेत्स्वर्गस्त्वत्प्रसादाद्धि नः प्रभो ।
त्वां पुत्रं चाप्यभीप्सामः कृत्वैतदनृणो भव ॥ ००५ ॥

स्कन्द उवाच ॥

मातरो हि भवत्यो मे सुतो वोऽहमनिन्दिताः ।

यच्चाभीप्सथ तत्सर्वं संभविष्यति वस्तथा ॥ ००६ ॥

मार्कण्डेय उवाच ॥

एवमुक्ते ततः शक्रं किं कार्यमिति सोऽब्रवीत् ।
उक्तः स्कन्देन ब्रूहीति सोऽब्रवीद्वासवस्ततः ॥ ००७ ॥

अभिजित्स्पर्धमाना तु रोहिण्या कन्यसी स्वसा ।
इच्छन्ती ज्येष्ठतां देवी तपस्तप्तुं वनं गता ॥ ००८ ॥

तत्र मूढोऽस्मि भद्रं ते नक्षत्रं गगनाच्च्युतम् ।
कालं त्विमं परं स्कन्द ब्रह्मणा सह चिन्तय ॥ ००९ ॥

धनिष्ठादिस्तदा कालो ब्रह्मणा परिनिर्मितः ।
रोहिण्याद्योऽभवत्पूर्वमेवं संख्या समाभवत् ॥ ०१० ॥

एवमुक्ते तु शक्रेण त्रिदिवं कृत्तिका गताः ।
नक्षत्रं शकटाकारं भाति तद्वह्निदैवतम् ॥ ०११ ॥

विनता चाब्रवीत्स्कन्दं मम त्वं पिण्डदः सुतः ।
इच्छामि नित्यमेवाहं त्वया पुत्र सहासितुम् ॥ ०१२ ॥

स्कन्द उवाच ॥

एवमस्तु नमस्तेऽस्तु पुत्रस्नेहात्प्रशाधि माम् ।
स्नुषया पूज्यमाना वै देवि वत्स्यसि नित्यदा ॥ ०१३ ॥

मार्कण्डेय उवाच ॥

अथ मातृगणः सर्वः स्कन्दं वचनमब्रवीत् ।
वयं सर्वस्य लोकस्य मातरः कविभिः स्तुताः ॥ ०१४ ॥

इच्छामो मातरस्तुभ्यं भवितुं पूजयस्व नः ॥ ०१४ ॥

स्कन्द उवाच ॥

मातरस्तु भवत्यो मे भवतीनामहं सुतः ।
उच्यतां यन्मया कार्यं भवतीनामथेप्सितम् ॥ ०१५ ॥

मातर ऊचुः ॥

यास्तु ता मातरः पूर्वं लोकस्यास्य प्रकल्पिताः ।
अस्माकं तद्भवेत्स्थानं तासां चैव न तद्भवेत् ॥ ०१६ ॥

भवेम पूज्या लोकस्य न ताः पूज्याः सुरर्षभ ।
प्रजास्माकं हृतास्ताभिस्त्वत्कृते ताः प्रयच्छ नः ॥ ०१७ ॥

स्कन्द उवाच ॥

दत्ताः प्रजा न ताः शक्या भवतीभिर्निषेवितुम् ।
अन्यां वः कां प्रयच्छामि प्रजां यां मनसेच्छथ ॥ ०१८ ॥

मातर ऊचुः ॥

इच्छाम तासां मातॄणां प्रजा भोक्तुं प्रयच्छ नः ।
त्वया सह पृथग्भूता ये च तासामथेश्वराः ॥ ०१९ ॥

स्कन्द उवाच ॥

प्रजा वो दद्मि कष्टं तु भवतीभिरुदाहृतम् ।
परिरक्षत भद्रं वः प्रजाः साधु नमस्कृताः ॥ ०२० ॥

मातर ऊचुः ॥

परिरक्षाम भद्रं ते प्रजाः स्कन्द यथेच्छसि ।
त्वया नो रोचते स्कन्द सहवासश्चिरं प्रभो ॥ ०२१ ॥

स्कन्द उवाच ॥

यावत्षोडश वर्षाणि भवन्ति तरुणाः प्रजाः ।
प्रबाधत मनुष्याणां तावद्रूपैः पृथग्विधैः ॥ ०२२ ॥

अहं च वः प्रदास्यामि रौद्रमात्मानमव्ययम् ।
परमं तेन सहिता सुखं वत्स्यथ पूजिताः ॥ ०२३ ॥

मार्कण्डेय उवाच ॥

ततः शरीरात्स्कन्दस्य पुरुषः काञ्चनप्रभः ।
भोक्तुं प्रजाः स मर्त्यानां निष्पपात महाबलः ॥ ०२४ ॥

अपतत्स तदा भूमौ विसञ्ज्ञोऽथ क्षुधान्वितः ।
स्कन्देन सोऽभ्यनुज्ञातो रौद्ररूपोऽभवद्ग्रहः ॥ ०२५ ॥

स्कन्दापस्मारमित्याहुर्ग्रहं तं द्विजसत्तमाः ॥ ०२५ ॥

विनता तु महारौद्रा कथ्यते शकुनिग्रहः ।
पूतनां राक्षसीं प्राहुस्तं विद्यात्पूतनाग्रहम् ॥ ०२६ ॥

कष्टा दारुणरूपेण घोररूपा निशाचरी ।
पिशाची दारुणाकारा कथ्यते शीतपूतना ॥ ०२७ ॥

गर्भान्सा मानुषीणां तु हरते घोरदर्शना ॥ ०२७ ॥

अदितिं रेवतीं प्राहुर्ग्रहस्तस्यास्तु रैवतः ।
सोऽपि बालाञ्शिशून्घोरो बाधते वै महाग्रहः ॥ ०२८ ॥

दैत्यानां या दितिर्माता तामाहुर्मुखमण्डिकाम् ।
अत्यर्थं शिशुमांसेन संप्रहृष्टा दुरासदा ॥ ०२९ ॥

कुमाराश्च कुमार्यश्च ये प्रोक्ताः स्कन्दसंभवाः ।
तेऽपि गर्भभुजः सर्वे कौरव्य सुमहाग्रहाः ॥ ०३० ॥

तासामेव कुमारीणां पतयस्ते प्रकीर्तिताः ।
अज्ञायमाना गृह्णन्ति बालकान्रौद्रकर्मिणः ॥ ०३१ ॥

गवां माता तु या प्राज्ञैः कथ्यते सुरभिर्नृप ।
शकुनिस्तामथारुह्य सह भुङ्क्ते शिशून्भुवि ॥ ०३२ ॥

सरमा नाम या माता शुनां देवी जनाधिप ।
सापि गर्भान्समादत्ते मानुषीणां सदैव हि ॥ ०३३ ॥

पादपानां च या माता करञ्जनिलया हि सा ।
करञ्जे तां नमस्यन्ति तस्मात्पुत्रार्थिनो नराः ॥ ०३४ ॥

इमे त्वष्टादशान्ये वै ग्रहा मांसमधुप्रियाः ।
द्विपञ्चरात्रं तिष्ठन्ति सततं सूतिकागृहे ॥ ०३५ ॥

कद्रूः सूक्ष्मवपुर्भूत्वा गर्भिणीं प्रविशेद्यदा ।
भुङ्क्ते सा तत्र तं गर्भं सा तु नागं प्रसूयते ॥ ०३६ ॥

गन्धर्वाणां तु या माता सा गर्भं गृह्य गच्छति ।
ततो विलीनगर्भा सा मानुषी भुवि दृश्यते ॥ ०३७ ॥

या जनित्री त्वप्सरसां गर्भमास्ते प्रगृह्य सा ।

उपविष्टं ततो गर्भं कथयन्ति मनीषिणः ॥ ०३८ ॥

लोहितस्योदधेः कन्या धात्री स्कन्दस्य सा स्मृता ।
लोहितायनिरित्येवं कदम्बे सा हि पूज्यते ॥ ०३९ ॥

पुरुषेषु यथा रुद्रस्तथार्या प्रमदास्वपि ।
आर्या माता कुमारस्य पृथक्कामार्थमिज्यते ॥ ०४० ॥

एवमेते कुमाराणां मया प्रोक्ता महाग्रहाः ।
यावत्षोडश वर्षाणि अशिवास्ते शिवास्ततः ॥ ०४१ ॥

ये च मातृगणाः प्रोक्ताः पुरुषाश्चैव ये ग्रहाः ।
सर्वे स्कन्दग्रहा नाम ज्ञेया नित्यं शरीरिभिः ॥ ०४२ ॥

तेषां प्रशमनं कार्यं स्नानं धूपमथाञ्जनम् ।
बलिकर्मोपहारश्च स्कन्दस्येज्या विशेषतः ॥ ०४३ ॥

एवमेतेऽर्चिताः सर्वे प्रयच्छन्ति शुभं नृणाम् ।
आयुर्वीर्यं च राजेन्द्र सम्यक्पूजानमस्कृताः ॥ ०४४ ॥

ऊर्ध्वं तु षोडशाद्वर्षाद्ये भवन्ति ग्रहा नृणाम् ।
तानहं संप्रवक्ष्यामि नमस्कृत्य महेश्वरम् ॥ ०४५ ॥

यः पश्यति नरो देवाञ्जाग्रद्वा शयितोऽपि वा ।
उन्माद्यति स तु क्षिप्रं तं तु देवग्रहं विदुः ॥ ०४६ ॥

आसीनश्च शयानश्च यः पश्यति नरः पितृन् ।
उन्माद्यति स तु क्षिप्रं स ज्ञेयस्तु पितृग्रहः ॥ ०४७ ॥

अवमन्यति यः सिद्धान्क्रुद्धाश्चापि शपन्ति यम् ।
उन्माद्यति स तु क्षिप्रं ज्ञेयः सिद्धग्रहस्तु सः ॥ ०४८ ॥

उपाघ्राति च यो गन्धान्रसांश्चापि पृथग्विधान् ।
उन्मादयति स तु क्षिप्रं स ज्ञेयो राक्षसो ग्रहः ॥ ०४९ ॥

गन्धर्वाश्चापि यं दिव्याः संस्पृशन्ति नरं भुवि ।
उन्मादयति स तु क्षिप्रं ग्रहो गान्धर्व एव सः ॥ ०५० ॥

आविशन्ति च यं यक्षाः पुरुषं कालपर्यये ।
उन्मादयति स तु क्षिप्रं ज्ञेयो यक्षग्रहस्तु सः ॥ ०५१ ॥

अधिरोहन्ति यं नित्यं पिशाचाः पुरुषं क्वचित् ।
उन्मादयति स तु क्षिप्रं पैशाचं तं ग्रहं विदुः ॥ ०५२ ॥

यस्य दोषैः प्रकुपितं चित्तं मुह्यति देहिनः ।
उन्मादयति स तु क्षिप्रं साधनं तस्य शास्त्रतः ॥ ०५३ ॥

वैक्लव्याच्च भयाच्चैव घोराणां चापि दर्शनात् ।
उन्मादयति स तु क्षिप्रं सत्त्वं तस्य तु साधनम् ॥ ०५४ ॥

कश्चित्क्रीडितुकामो वै भोक्तुकामस्तथापरः ।
अभिकामस्तथैवान्य इत्येष त्रिविधो ग्रहः ॥ ०५५ ॥

यावत्सप्ततिवर्षाणि भवन्त्येते ग्रहा नृणाम् ।
अतः परं देहिनां तु ग्रहतुल्यो भवेज्ज्वरः ॥ ०५६ ॥

अप्रकीर्णेन्द्रियं दान्तं शुचिं नित्यमतन्द्रितम् ।
आस्तिकं श्रद्दधानं च वर्जयन्ति सदा ग्रहाः ॥ ०५७ ॥

इत्येष ते ग्रहोद्देशो मानुषाणां प्रकीर्तितः ।
न स्पृशन्ति ग्रहा भक्तान्नरान्देवं महेश्वरम् ॥ ०५८ ॥

# अध्याय २२०

मार्कण्डेय उवाच ॥

यदा स्कन्देन मातॄणामेवमेतत्प्रियं कृतम् ।
अथैनमब्रवीत्स्वाहा मम पुत्रस्त्वमौरसः ॥ ००१ ॥

इच्छाम्यहं त्वया दत्तां प्रीतिं परमदुर्लभाम् ।
तामब्रवीत्ततः स्कन्दः प्रीतिमिच्छसि कीदृशीम् ॥ ००२ ॥

स्वाहोवाच ॥

दक्षस्याहं प्रिया कन्या स्वाहा नाम महाभुज ।
बाल्यात्प्रभृति नित्यं च जातकामा हुताशने ॥ ००३ ॥

न च मां कामिनीं पुत्र सम्यग्जानाति पावकः ।
इच्छामि शाश्वतं वासं वस्तुं पुत्र सहाग्निना ॥ ००४ ॥

स्कन्द उवाच ॥

हव्यं कव्यं च यत्किञ्चिद्द्विजा मन्त्रपुरस्कृतम् ।
होष्यन्त्यग्नौ सदा देवि स्वाहेत्युक्त्वा समुद्यतम् ॥ ००५ ॥

अद्य प्रभृति दास्यन्ति सुवृत्ताः सत्पथे स्थिताः ।
एवमग्निस्त्वया सार्धं सदा वत्स्यति शोभने ॥ ००६ ॥

मार्कण्डेय उवाच ॥

एवमुक्ता ततः स्वाहा तुष्टा स्कन्देन पूजिता ।
पावकेन समायुक्ता भर्त्रा स्कन्दमपूजयत् ॥ ००७ ॥

ततो ब्रह्मा महासेनं प्रजापतिरथाब्रवीत् ।
अभिगच्छ महादेवं पितरं त्रिपुरार्दनम् ॥ ००८ ॥

रुद्रेणाग्निं समाविश्य स्वाहामाविश्य चोमया ।
हितार्थं सर्वलोकानां जातस्त्वमपराजितः ॥ ००९ ॥

उमायोन्यां च रुद्रेण शुक्रं सिक्तं महात्मना ।
आस्ते गिरौ निपतितं मिञ्जिकामिञ्जिकं यतः ॥ ०१० ॥

संभूतं लोहितोदे तु शुक्रशेषमवापतत् ।
सूर्यरश्मिषु चाप्यन्यदन्यच्चैवापतद्भुवि ॥ ०११ ॥

आसक्तमन्यद्वृक्षेषु तदेवं पञ्चधापतत् ॥ ०११ ॥

त एते विविधाकारा गणा ज्ञेया मनीषिभिः ।
तव पारिषदा घोरा य एते पिशिताशनाः ॥ ०१२ ॥

एवमस्त्विति चाप्युक्त्वा महासेनो महेश्वरम् ।
अपूजयदमेयात्मा पितरं पितृवत्सलः ॥ ०१३ ॥

अर्कपुष्पैस्तु ते पञ्च गणाः पूज्या धनार्थिभिः ।
व्याधिप्रशमनार्थं च तेषां पूजां समाचरेत् ॥ ०१४ ॥

मिञ्जिकामिञ्जिकं चैव मिथुनं रुद्रसंभवम् ।
नमस्कार्यं सदैवेह बालानां हितमिच्छता ॥ ०१५ ॥

स्त्रियो मानुषमांसादा वृद्धिका नाम नामतः ।
वृक्षेषु जातास्ता देव्यो नमस्कार्याः प्रजार्थिभिः ॥ ०१६ ॥

एवमेते पिशाचानामसंख्येया गणाः स्मृताः ।
घण्टायाः सपताकायाः शृणु मे संभवं नृप ॥ ०१७ ॥

ऐरावतस्य घण्टे द्वे वैजयन्त्याविति श्रुते ।
गुहस्य ते स्वयं दत्ते शक्रेणानाय्य धीमता ॥ ०१८ ॥

एका तत्र विशाखस्य घण्टा स्कन्दस्य चापरा ।
पताका कार्त्तिकेयस्य विशाखस्य च लोहिता ॥ ०१९ ॥

यानि क्रीडनकान्यस्य देवैर्दत्तानि वै तदा ।
तैरेव रमते देवो महासेनो महाबलः ॥ ०२० ॥

स संवृतः पिशाचानां गणैर्देवगणैस्तथा ।
शुशुभे काञ्चने शैले दीप्यमानः श्रिया वृतः ॥ ०२१ ॥

तेन वीरेण शुशुभे स शैलः शुभकाननः ।
आदित्येनेवांशुमता मन्दरश्चारुकन्दरः ॥ ०२२ ॥

संतानकवनैः फुल्लैः करवीरवनैरपि ।
पारिजातवनैश्चैव जपाशोकवनैस्तथा ॥ ०२३ ॥

कदम्बतरुषण्डैश्च दिव्यैर्मृगगणैरपि ।
दिव्यैः पक्षिगणैश्चैव शुशुभे श्वेतपर्वतः ॥ ०२४ ॥

तत्र देवगणाः सर्वे सर्वे चैव महर्षयः ।
मेघतूर्यरवाश्चैव क्षुब्धोदधिसमस्वनाः ॥ ०२५ ॥

तत्र दिव्याश्च गन्धर्वा नृत्यन्त्यप्सरसस्तथा ।
हृष्टानां तत्र भूतानां श्रूयते निनदो महान् ॥ ०२६ ॥

एवं सेन्द्रं जगत्सर्वं श्वेतपर्वतसंस्थितम् ।
प्रहृष्टं प्रेक्षते स्कन्दं न च ग्लायति दर्शनात्  ॥ ०२७  ॥

---

# अध्याय २२१

मार्कण्डेय उवाच  ॥

यदाभिषिक्तो भगवान्सेनापत्येन पावकिः ।
तदा संप्रस्थितः श्रीमान्हृष्टो भद्रवटं हरः  ॥ ००१  ॥

रथेनादित्यवर्णेन पार्वत्या सहितः प्रभुः  ॥ ००१  ॥

सहस्रं तस्य सिंहानां तस्मिन्युक्तं रथोत्तमे ।
उत्पपात दिवं शुभ्रं कालेनाभिप्रचोदितः  ॥ ००२  ॥

ते पिबन्त इवाकाशं त्रासयन्तश्चराचरान् ।
सिंहा नभस्यगच्छन्त नदन्तश्चारुकेसराः  ॥ ००३  ॥

तस्मिन्रथे पशुपतिः स्थितो भात्युमया सह ।
विद्युता सहितः सूर्यः सेन्द्रचापे घने यथा  ॥ ००४  ॥

अग्रतस्तस्य भगवान्धनेशो गुह्यकैः सह ।
आस्थाय रुचिरं याति पुष्पकं नरवाहनः  ॥ ००५  ॥

ऐरावतं समास्थाय शक्रश्चापि सुरैः सह ।
पृष्ठतोऽनुययौ यान्तं वरदं वृषभध्वजम्  ॥ ००६  ॥

जम्भकैर्यक्षरक्षोभिः स्रग्विभिः समलङ्कृतः ।

यात्यमोघो महायक्षो दक्षिणं पक्षमास्थितः ॥ ००७ ॥

तस्य दक्षिणतो देवा मरुतश्चित्रयोधिनः ।
गच्छन्ति वसुभिः सार्धं रुद्रैश्च सह सङ्गताः ॥ ००८ ॥

यमश्च मृत्युना सार्धं सर्वतः परिवारितः ।
घोरैर्व्याधिशतैर्याति घोररूपवपुस्तथा ॥ ००९ ॥

यमस्य पृष्ठतश्चैव घोरस्त्रिशिखरः शितः ।
विजयो नाम रुद्रस्य याति शूलः स्वलङ्कृतः ॥ ०१० ॥

तमुग्रपाशो वरुणो भगवान्सलिलेश्वरः ।
परिवार्य शनैर्याति यादोभिर्विविधैर्वृतः ॥ ०११ ॥

पृष्ठतो विजयस्यापि याति रुद्रस्य पट्टिशः ।
गदामुसलशक्त्याद्यैर्वृतः प्रहरणोत्तमैः ॥ ०१२ ॥

पट्टिशं त्वन्वगाद्राजंश्छत्रं रौद्रं महाप्रभम् ।
कमण्डलुश्चाप्यनु तं महर्षिगणसंवृतः ॥ ०१३ ॥

तस्य दक्षिणतो भाति दण्डो गच्छञ्श्रिया वृतः ।
भृग्वङ्गिरोभिः सहितो देवैश्चाप्यभिपूजितः ॥ ०१४ ॥

एषां तु पृष्ठतो रुद्रो विमले स्यन्दने स्थितः ।
याति संहर्षयन्सर्वांस्तेजसा त्रिदिवौकसः ॥ ०१५ ॥

ऋषयश्चैव देवाश्च गन्धर्वा भुजगास्तथा ।
नद्यो नदा द्रुमाश्चैव तथैवाप्सरसां गणाः ॥ ०१६ ॥

नक्षत्राणि ग्रहाश्चैव देवानां शिशवश्च ये ।
स्त्रियश्च विविधाकारा यान्ति रुद्रस्य पृष्ठतः ॥ ०१७ ॥

सृजन्त्यः पुष्पवर्षाणि चारुरूपा वराङ्गनाः ॥ ०१७ ॥

पर्जन्यश्चाप्यनुययौ नमस्कृत्य पिनाकिनम् ।
छत्रं तु पाण्डुरं सोमस्तस्य मूर्धन्यधारयत् ॥ ०१८ ॥

चामरे चापि वायुश्च गृहीत्वाग्निश्च विष्ठितौ ॥ ०१८ ॥

शक्रश्च पृष्ठतस्तस्य याति राजञ्श्रिया वृतः ।
सह राजर्षिभिः सर्वैः स्तुवानो वृषकेतनम् ॥ ०१९ ॥

गौरी विद्याथ गान्धारी केशिनी मित्रसाह्वया ।
सावित्र्या सह सर्वास्ताः पार्वत्या यान्ति पृष्ठतः ॥ ०२० ॥

तत्र विद्यागणाः सर्वे ये केचित्कविभिः कृताः ।
यस्य कुर्वन्ति वचनं सेन्द्रा देवाश्चमूमुखे ॥ ०२१ ॥

स गृहीत्वा पताकां तु यात्यग्रे राक्षसो ग्रहः ।
व्यापृतस्तु श्मशाने यो नित्यं रुद्रस्य वै सखा ॥ ०२२ ॥

पिङ्गलो नाम यक्षेन्द्रो लोकस्यानन्ददायकः ॥ ०२२ ॥

एभिः स सहितस्तत्र ययौ देवो यथासुखम् ।
अग्रतः पृष्ठतश्चैव न हि तस्य गतिर्ध्रुवा ॥ ०२३ ॥

रुद्रं सत्कर्मभिर्मर्त्याः पूजयन्तीह दैवतम् ।
शिवमित्येव यं प्राहुरीशं रुद्रं पिनाकिनम् ॥ ०२४ ॥

भावैस्तु विविधाकारैः पूजयन्ति महेश्वरम् ॥ ०२४ ॥

देवसेनापतिस्त्वेवं देवसेनाभिरावृतः ।

अनुगच्छति देवेशं ब्रह्मण्यः कृत्तिकासुतः ॥ ०२५ ॥

अथाब्रवीन्महासेनं महादेवो बृहद्वचः ।
सप्तमं मारुतस्कन्धं रक्ष नित्यमतन्द्रितः ॥ ०२६ ॥

स्कन्द उवाच ॥

सप्तमं मारुतस्कन्धं पालयिष्याम्यहं प्रभो ।
यदन्यदपि मे कार्यं देव तद्वद माचिरम् ॥ ०२७ ॥

रुद्र उवाच ॥

कार्येष्वहं त्वया पुत्र संद्रष्टव्यः सदैव हि ।
दर्शनान्मम भक्त्या च श्रेयः परमवाप्स्यसि ॥ ०२८ ॥

मार्कण्डेय उवाच ॥

इत्युक्त्वा विससर्जैनं परिष्वज्य महेष्वरः ।
विसर्जिते ततः स्कन्दे बभूवौत्पातिकं महत् ॥ ०२९ ॥

सहसैव महाराज देवान्सर्वान्प्रमोहयत् ॥ ०२९ ॥

जज्वाल खं सनक्षत्रं प्रमूढं भुवनं भृशम् ।
चचाल व्यनदच्चोर्वी तमोभूतं जगत्प्रभो ॥ ०३० ॥

ततस्तद्दारुणं दृष्ट्वा क्षुभितः शङ्करस्तदा ।
उमा चैव महाभागा देवाश्च समहर्षयः ॥ ०३१ ॥

ततस्तेषु प्रमूढेषु पर्वताम्बुदसंनिभम् ।
नानाप्रहरणं घोरमदृश्यत महद्बलम् ॥ ०३२ ॥

तद्धि घोरमसंख्येयं गर्जच्च विविधा गिरः ।
अभ्यद्रवद्रणे देवान्भगवन्तं च शङ्करम् ॥ ०३३ ॥

तैर्विसृष्टान्यनीकेषु बाणजालान्यनेकशः ।
पर्वताश्च शतघ्न्यश्च प्रासाश्च परिघा गदाः ॥ ०३४ ॥

निपतद्भिश्च तैर्घोरैर्देवानीकं महायुधैः ।
क्षणेन व्यद्रवत्सर्वं विमुखं चाप्यदृश्यत ॥ ०३५ ॥

निकृत्तयोधनागाश्वं कृत्तायुधमहारथम् ।
दानवैरर्दितं सैन्यं देवानां विमुखं बभौ ॥ ०३६ ॥

असुरैर्वध्यमानं तत्पावकैरिव काननम् ।
अपतद्दग्धभूयिष्ठं महाद्रुमवनं यथा ॥ ०३७ ॥

ते विभिन्नशिरोदेहाः प्रच्यवन्ते दिवौकसः ।
न नाथमध्यगच्छन्त वध्यमाना महारणे ॥ ०३८ ॥

अथ तद्विद्रुतं सैन्यं दृष्ट्वा देवः पुरंदरः ।
आश्वासयन्नुवाचेदं बलवद्दानवार्दितम् ॥ ०३९ ॥

भयं त्यजत भद्रं वः शूराः शस्त्राणि गृह्णत ।
कुरुध्वं विक्रमे बुद्धिं मा वः काचिद्व्यथा भवेत् ॥ ०४० ॥

जयतैनान्सुदुर्वृत्तान्दानवान्घोरदर्शनान् ।
अभिद्रवत भद्रं वो मया सह महासुरान् ॥ ०४१ ॥

शक्रस्य वचनं श्रुत्वा समाश्वस्ता दिवौकसः ।
दानवान्प्रत्ययुध्यन्त शक्रं कृत्वा व्यपाश्रयम् ॥ ०४२ ॥

ततस्ते त्रिदशाः सर्वे मरुतश्च महाबलाः ।

प्रत्युद्ययुर्महावेगाः साध्याश्च वसुभिः सह ॥ ०४३ ॥

तैर्विसृष्टान्यनीकेषु क्रुद्धैः शस्त्राणि संयुगे ।
शराश्च दैत्यकायेषु पिबन्ति स्मासृगुल्बणम् ॥ ०४४ ॥

तेषां देहान्विनिर्भिद्य शरास्ते निशितास्तदा ।
निष्पतन्तो अदृश्यन्त नगेभ्य इव पन्नगाः ॥ ०४५ ॥

तानि दैत्यशरीराणि निर्भिन्नानि स्म सायकैः ।
अपतन्भूतले राजंश्छिन्नाभ्राणीव सर्वशः ॥ ०४६ ॥

ततस्तद्दानवं सैन्यं सर्वैर्देवगणैर्युधि ।
त्रासितं विविधैर्बाणैः कृतं चैव पराङ्मुखम् ॥ ०४७ ॥

अथोत्क्रुष्टं तदा हृष्टैः सर्वैर्देवैरुदायुधैः ।
संहतानि च तूर्याणि तदा सर्वाण्यनेकशः ॥ ०४८ ॥

एवमन्योन्यसंयुक्तं युद्धमासीत्सुदारुणम् ।
देवानां दानवानां च मांसशोणितकर्दमम् ॥ ०४९ ॥

अनयो देवलोकस्य सहसैव व्यदृश्यत ।
तथा हि दानवा घोरा विनिघ्नन्ति दिवौकसः ॥ ०५० ॥

ततस्तूर्यप्रणादाश्च भेरीणां च महास्वनाः ।
बभूवुर्दानवेन्द्राणां सिंहनादाश्च दारुणाः ॥ ०५१ ॥

अथ दैत्यबलाद्घोरान्निष्पपात महाबलः ।
दानवो महिषो नाम प्रगृह्य विपुलं गिरिम् ॥ ०५२ ॥

ते तं घनैरिवादित्यं दृष्ट्वा संपरिवारितम् ।
समुद्यतगिरिं राजन्व्यद्रवन्त दिवौकसः ॥ ०५३ ॥

अथाभिद्रुत्य महिषो देवांश्चिक्षेप तं गिरिम् ।
पतता तेन गिरिणा देवसैन्यस्य पार्थिव ॥ ०५४ ॥

भीमरूपेण निहतमयुतं प्रापतद्भुवि ॥ ०५४ ॥

अथ तैर्दानवैः सार्धं महिषस्त्रासयन्सुरान् ।
अभ्यद्रवद्रणे तूर्णं सिंहः क्षुद्रमृगानिव ॥ ०५५ ॥

तमापतन्तं महिषं दृष्ट्वा सेन्द्रा दिवौकसः ।
व्यद्रवन्त रणे भीता विशीर्णायुधकेतनाः ॥ ०५६ ॥

ततः स महिषः क्रुद्धस्तूर्णं रुद्ररथं ययौ ।
अभिद्रुत्य च जग्राह रुद्रस्य रथकूबरम् ॥ ०५७ ॥

यदा रुद्ररथं क्रुद्धो महिषः सहसा गतः ।
रेसतू रोदसी गाढं मुमुहुश्च महर्षयः ॥ ०५८ ॥

व्यनदंश्च महाकाया दैत्या जलधरोपमाः ।
आसीच्च निश्चितं तेषां जितमस्माभिरित्युत ॥ ०५९ ॥

तथाभूते तु भगवान्नावधीन्महिषं रणे ।
सस्मार च तदा स्कन्दं मृत्युं तस्य दुरात्मनः ॥ ०६० ॥

महिषोऽपि रथं दृष्ट्वा रौद्रं रुद्रस्य नानदत् ।
देवान्संत्रासयंश्चापि दैत्यांश्चापि प्रहर्षयन् ॥ ०६१ ॥

ततस्तस्मिन्भये घोरे देवानां समुपस्थिते ।
आजगाम महासेनः क्रोधात्सूर्य इव ज्वलन् ॥ ०६२ ॥

लोहिताम्बरसंवीतो लोहितस्रग्विभूषणः ।

लोहितास्यो महाबाहुर्हिरण्यकवचः प्रभुः ॥ ०६३ ॥

रथमादित्यसङ्काशमास्थितः कनकप्रभम् ।
तं दृष्ट्वा दैत्यसेना सा व्यद्रवत्सहसा रणे ॥ ०६४ ॥

स चापि तां प्रज्वलितां महिषस्य विदारिणीम् ।
मुमोच शक्तिं राजेन्द्र महासेनो महाबलः ॥ ०६५ ॥

सा मुक्ताभ्यहनच्छक्तिर्महिषस्य शिरो महत् ।
पपात भिन्ने शिरसि महिषस्त्यक्तजीवितः ॥ ०६६ ॥

क्षिप्ताक्षिप्ता तु सा शक्तिर्हत्वा शत्रून्सहस्रशः ।
स्कन्दहस्तमनुप्राप्ता दृश्यते देवदानवैः ॥ ०६७ ॥

प्रायः शरैर्विनिहता महासेनेन धीमता ।
शेषा दैत्यगणा घोरा भीतास्त्रस्ता दुरासदैः ॥ ०६८ ॥

स्कन्दस्य पार्षदैर्हत्वा भक्षिताः शतसंघशः ॥ ०६८ ॥

दानवान्भक्षयन्तस्ते प्रपिबन्तश्च शोणितम् ।
क्षणान्निर्दानवं सर्वमकार्षुर्भृशहर्षिताः ॥ ०६९ ॥

तमांसीव यथा सूर्यो वृक्षानग्निर्घनान्खगः ।
तथा स्कन्दोऽजयच्छत्रून्स्वेन वीर्येण कीर्तिमान् ॥ ०७० ॥

संपूज्यमानस्त्रिदशैरभिवाद्य महेश्वरम् ।
शुशुभे कृत्तिकापुत्रः प्रकीर्णांशुरिवांशुमान् ॥ ०७१ ॥

नष्टशत्रुर्यदा स्कन्दः प्रयातश्च महेश्वरम् ।
अथाब्रवीन्महासेनं परिष्वज्य पुरंदरः ॥ ०७२ ॥

ब्रह्मदत्तवरः स्कन्द त्वयायं महिषो हतः ।
देवास्तृणमया यस्य बभूवुर्जयतां वर ॥ ०७३ ॥

सोऽयं त्वया महाबाहो शमितो देवकण्टकः ॥ ०७३ ॥

शतं महिषतुल्यानां दानवानां त्वया रणे ।
निहतं देवशत्रूणां यैर्वयं पूर्वतापिताः ॥ ०७४ ॥

तावकैर्भक्षिताश्चान्ये दानवाः शतसंघशः ।
अजेयस्त्वं रणेऽरीणामुमापतिरिव प्रभुः ॥ ०७५ ॥

एतत्ते प्रथमं देव ख्यातं कर्म भविष्यति ।
त्रिषु लोकेषु कीर्तिश्च तवाक्षय्या भविष्यति ॥ ०७६ ॥

वशगाश्च भविष्यन्ति सुरास्तव सुरात्मज ॥ ०७६ ॥

महासेनेत्येवमुक्त्वा निवृत्तः सह दैवतैः ।
अनुज्ञातो भगवता त्र्यम्बकेन शचीपतिः ॥ ०७७ ॥

गतो भद्रवटं रुद्रो निवृत्ताश्च दिवौकसः ।
उक्ताश्च देवा रुद्रेण स्कन्दं पश्यत मामिव ॥ ०७८ ॥

स हत्वा दानवगणान्पूज्यमानो महर्षिभिः ।
एकाह्नैवाजयत्सर्वं त्रैलोक्यं वह्निनन्दनः ॥ ०७९ ॥

स्कन्दस्य य इदं जन्म पठते सुसमाहितः ।
स पुष्टिमिह संप्राप्य स्कन्दसालोक्यतामियात् ॥ ०८० ॥

# द्रौपदिसत्यभामासंवादपर्व

## अध्याय २२२

वैशंपायन उवाच ॥

उपासीनेषु विप्रेषु पाण्डवेषु महात्मसु ।
द्रौपदी सत्यभामा च विविशाते तदा समम् ॥ ००१ ॥

जाहस्यमाने सुप्रीते सुखं तत्र निषीदतुः ॥ ००१ ॥

चिरस्य दृष्ट्वा राजेन्द्र तेऽन्योन्यस्य प्रियंवदे ।
कथयामासतुश्चित्राः कथाः कुरुयदुक्षिताम् ॥ ००२ ॥

अथाब्रवीत्सत्यभामा कृष्णस्य महिषी प्रिया ।
सात्राजिती याज्ञसेनीं रहसीदं सुमध्यमा ॥ ००३ ॥

केन द्रौपदि वृत्तेन पाण्डवानुपतिष्ठसि ।
लोकपालोपमान्वीरान्यूनः परमसंमतान् ॥ ००४ ॥

कथं च वशगास्तुभ्यं न कुप्यन्ति च ते शुभे ॥ ००४ ॥

तव वश्या हि सततं पाण्डवाः प्रियदर्शने ।
मुखप्रेक्षाश्च ते सर्वे तत्त्वमेतद्ब्रवीहि मे ॥ ००५ ॥

व्रतचर्या तपो वापि स्नानमन्त्रौषधानि वा ।
विद्यावीर्यं मूलवीर्यं जपहोमस्तथागदाः ॥ ००६ ॥

मम आचक्ष्व पाञ्चालि यशस्यं भगवेदनम् ।
येन कृष्णे भवेन्नित्यं मम कृष्णो वशानुगः ॥ ००७ ॥

एवमुक्त्वा सत्यभामा विरराम यशस्विनी ।
पतिव्रता महाभागा द्रौपदी प्रत्युवाच ताम्  ॥ ००८  ॥

असत्स्त्रीणां समाचारं सत्ये मामनुपृच्छसि ।
असदाचरिते मार्गे कथं स्यादनुकीर्तनम्  ॥ ००९  ॥

अनुप्रश्नः संशयो वा नैतत्त्वय्युपपद्यते ।
तथा ह्युपेता बुद्ध्या त्वं कृष्णस्य महिषी प्रिया  ॥ ०१०  ॥

यदैव भर्ता जानीयान्मन्त्रमूलपरां स्त्रियम् ।
उद्विजेत तदैवास्याः सर्पाद्वेश्मगतादिव  ॥ ०११  ॥

उद्विग्नस्य कुतः शान्तिरशान्तस्य कुतः सुखम् ।
न जातु वशगो भर्ता स्त्रियाः स्यान्मन्त्रकारणात्  ॥ ०१२  ॥

अमित्रप्रहितांश्चापि गदान्परमदारुणान् ।
मूलप्रवादैर्हि विषं प्रयच्छन्ति जिघांसवः  ॥ ०१३  ॥

जिह्वया यानि पुरुषस्त्वचा वाप्युपसेवते ।
तत्र चूर्णानि दत्तानि हन्युः क्षिप्रमसंशयम्  ॥ ०१४  ॥

जलोदरसमायुक्ताः श्वित्रिणः पलितास्तथा ।
अपुमांसः कृताः स्त्रीभिर्जडान्धबधिरास्तथा  ॥ ०१५  ॥

पापानुगास्तु पापास्ताः पतीनुपसृजन्त्युत ।
न जातु विप्रियं भर्तुः स्त्रिया कार्यं कथञ्चन  ॥ ०१६  ॥

वर्ताम्यहं तु यां वृत्तिं पाण्डवेषु महात्मसु ।
तां सर्वां शृणु मे सत्यां सत्यभामे यशस्विनि  ॥ ०१७  ॥

अहङ्कारं विहायाहं कामक्रोधौ च सर्वदा ।

सदारान्पाण्डवान्नित्यं प्रयतोपचराम्यहम् ॥ ०१८ ॥

प्रणयं प्रतिसङ्गृह्य निधायात्मानमात्मनि ।
शुश्रूषुर्निरभीमाना पतीनां चित्तरक्षिणी ॥ ०१९ ॥

दुर्व्याहृताच्छङ्कमाना दुःस्थितादुरवेक्षितात् ।
दुरासितादुर्व्रजितादिङ्गिताध्यासितादपि ॥ ०२० ॥

सूर्यवैश्वानरनिभान्सोमकल्पान्महारथान् ।
सेवे चक्षुर्हणः पार्थानुग्रतेजःप्रतापिनः ॥ ०२१ ॥

देवो मनुष्यो गन्धर्वो युवा चापि स्वलङ्कृतः ।
द्रव्यवानभिरूपो वा न मेऽन्यः पुरुषो मतः ॥ ०२२ ॥

नाभुक्तवति नास्नाते नासंविष्टे च भर्तरि ।
न संविशामि नाश्नामि सदा कर्मकरेष्वपि ॥ ०२३ ॥

क्षेत्राद्वनाद्वा ग्रामाद्वा भर्तारं गृहमागतम् ।
प्रत्युत्थायाभिनन्दामि आसनेनोदकेन च ॥ ०२४ ॥

प्रमृष्टभाण्डा मृष्टान्ना काले भोजनदायिनी ।
संयता गुप्तधान्या च सुसंमृष्टनिवेशना ॥ ०२५ ॥

अतिरस्कृतसंभाषा दुःस्त्रियो नानुसेवती ।
अनुकूलवती नित्यं भवाम्यनलसा सदा ॥ ०२६ ॥

अनर्मे चापि हसनं द्वारि स्थानमभीक्ष्णशः ।
अवस्करे चिरस्थानं निष्कुटेषु च वर्जये ॥ ०२७ ॥

अतिहासातिरोषौ च क्रोधस्थानं च वर्जये ।
निरताहं सदा सत्ये भर्तॄणामुपसेवने ॥ ०२८ ॥

सर्वथा भर्तृरहितं न ममेष्टं कथञ्चन ॥ ०२८ ॥

यदा प्रवसते भर्ता कुटुम्बार्थेन केनचित् ।
सुमनोवर्णकापेता भवामि व्रतचारिणी ॥ ०२९ ॥

यच्च भर्ता न पिबति यच्च भर्ता न खादति ।
यच्च नाश्नाति मे भर्ता सर्वं तद्वर्जयाम्यहम् ॥ ०३० ॥

यथोपदेशं नियता वर्तमाना वराङ्गने ।
स्वलङ्कृता सुप्रयता भर्तुः प्रियहिते रता ॥ ०३१ ॥

ये च धर्माः कुटुम्बेषु श्वश्र्वा मे कथिताः पुरा ।
भिक्षाबलिश्राद्धमिति स्थालीपाकाश्च पर्वसु ॥ ०३२ ॥

मान्यानां मानसत्कारा ये चान्ये विदिता मया ॥ ०३२ ॥

तान्सर्वाननुवर्तामि दिवारात्रमतन्द्रिता ।
विनयान्नियमांश्चापि सदा सर्वात्मना श्रिता ॥ ०३३ ॥

मृदून्सतः सत्यशीलान्सत्यधर्मानुपालिनः ।
आशीविषानिव क्रुद्धान्पतीन्परिचराम्यहम् ॥ ०३४ ॥

पत्याश्रयो हि मे धर्मो मतः स्त्रीणां सनातनः ।
स देवः सा गतिर्नान्या तस्य का विप्रियं चरेत् ॥ ०३५ ॥

अहं पतीन्नातिशये नात्यश्ने नातिभूषये ।
नापि परिवदे श्वश्रूं सर्वदा परियन्त्रिता ॥ ०३६ ॥

अवधानेन सुभगे नित्योत्थानतयैव च ।
भर्तारो वशगा मह्यं गुरुशुश्रूषणेन च ॥ ०३७ ॥

नित्यमार्यामहं कुन्तीं वीरसूं सत्यवादिनीम् ।
स्वयं परिचराम्येका स्नानाच्छादनभोजनैः ॥ ०३८ ॥

नैतामतिशये जातु वस्त्रभूषणभोजनैः ।
नापि परिवदे चाहं तां पृथां पृथिवीसमाम् ॥ ०३९ ॥

अष्टावग्रे ब्राह्मणानां सहस्राणि स्म नित्यदा ।
भुञ्जते रुक्मपात्रीषु युधिष्ठिरनिवेशने ॥ ०४० ॥

अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः ।
त्रिंशद्दासीक एकैको यान्बिभर्ति युधिष्ठिरः ॥ ०४१ ॥

दशान्यानि सहस्राणि येषामन्नं सुसंस्कृतम् ।
ह्रियते रुक्मपात्रीभिर्यतीनामूर्ध्वरेतसाम् ॥ ०४२ ॥

तान्सर्वानग्रहारेण ब्राह्मणान्ब्रह्मवादिनः ।
यथार्हं पूजयामि स्म पानाच्छादनभोजनैः ॥ ०४३ ॥

शतं दासीसहस्राणि कौन्तेयस्य महात्मनः ।
कम्बुकेयूरधारिण्यो निष्ककण्ठ्यः स्वलङ्कृताः ॥ ०४४ ॥

महार्हमाल्याभरणाः सुवर्णाश्चन्दनोक्षिताः ।
मणीन्हेम च बिभ्रत्यो नृत्यगीतविशारदाः ॥ ०४५ ॥

तासां नाम च रूपं च भोजनाच्छादनानि च ।
सर्वासामेव वेदाहं कर्म चैव कृताकृतम् ॥ ०४६ ॥

शतं दासीसहस्राणि कुन्तीपुत्रस्य धीमतः ।
पात्रीहस्ता दिवारात्रमतिथीन्भोजयन्त्युत ॥ ०४७ ॥

शतमश्वसहस्राणि दश नागायुतानि च ।
युधिष्ठिरस्यानुयात्रमिन्द्रप्रस्थनिवासिनः ॥ ०४८ ॥

एतदासीत्तदा राज्ञो यन्महीं पर्यपालयत् ।
येषां संख्याविधिं चैव प्रदिशामि शृणोमि च ॥ ०४९ ॥

अन्तःपुराणां सर्वेषां भृत्यानां चैव सर्वशः ।
आ गोपालाविपालेभ्यः सर्वं वेद कृताकृतम् ॥ ०५० ॥

सर्वं राज्ञः समुदयमायं च व्ययमेव च ।
एकाहं वेद्मि कल्याणि पाण्डवानां यशस्विनाम् ॥ ०५१ ॥

मयि सर्वं समासज्य कुटुम्बं भरतर्षभाः ।
उपासनरताः सर्वे घटन्ते स्म शुभानने ॥ ०५२ ॥

तमहं भारमासक्तमनाधृष्यं दुरात्मभिः ।
सुखं सर्वं परित्यज्य रात्र्यहानि घटामि वै ॥ ०५३ ॥

अधृष्यं वरुणस्येव निधिपूर्णमिवोदधिम् ।
एकाहं वेद्मि कोशं वै पतीनां धर्मचारिणाम् ॥ ०५४ ॥

अनिशायां निशायां च सहायाः क्षुत्पिपासयोः ।
आराधयन्त्याः कौरव्यांस्तुल्या रात्रिरहश्च मे ॥ ०५५ ॥

प्रथमं प्रतिबुध्यामि चरमं संविशामि च ।
नित्यकालमहं सत्ये एतत्संवननं मम ॥ ०५६ ॥

एतज्जानाम्यहं कर्तुं भर्तृसंवननं महत् ।
असत्स्त्रीणां समाचारं नाहं कुर्यां न कामये ॥ ०५७ ॥

तच्छ्रुत्वा धर्मसहितं व्याहृतं कृष्णया तदा ।

उवाच सत्या सत्कृत्य पाञ्चालीं धर्मचारिणीम्  ॥ ०५८  ॥

अभिपन्नास्मि पाञ्चालि याज्ञसेनि क्षमस्व मे ।
कामकारः सखीनां हि सोपहासं प्रभाषितुम्  ॥ ०५९  ॥

---

# अध्याय २२३

द्रौपद्युवाच  ॥

इमं तु ते मार्गमपेतदोषं ; वक्ष्यामि चित्तग्रहणाय भर्तुः ।
यस्मिन्यथावत्सखि वर्तमाना ; भर्तारमाच्छेत्स्यसि कामिनीभ्यः  ॥ ००१  ॥

नैतादृशं दैवतमस्ति सत्ये ; सर्वेषु लोकेषु सदैवतेषु ।
यथा पतिस्तस्य हि सर्वकामा ; लभ्याः प्रसादे कुपितश्च हन्यात्  ॥ ००२  ॥

तस्मादपत्यं विविधाश्च भोगाः ; शय्यासनान्यद्भुतदर्शनानि ।
वस्त्राणि माल्यानि तथैव गन्धाः ; स्वर्गश्च लोको विषमा च कीर्तिः  ॥ ००३  ॥

सुखं सुखेनेह न जातु लभ्यं ; दुःखेन साध्वी लभते सुखानि ।
सा कृष्णमाराधय सौहृदेन ; प्रेम्णा च नित्यं प्रतिकर्मणा च  ॥ ००४  ॥

तथाशनैश्चारुभिरग्र्यमाल्यै ;दाक्षिण्ययोगैर्विविधैश्च गन्धैः ।
अस्याः प्रियोऽस्मीति यथा विदित्वा ; त्वामेव संश्लिष्यति सर्वभावैः  ॥ ००५  ॥

श्रुत्वा स्वरं द्वारगतस्य भर्तुः ; प्रत्युत्थिता तिष्ठ गृहस्य मध्ये ।
दृष्ट्वा प्रविष्टं त्वरितासनेन ; पाद्येन चैव प्रतिपूजय त्वम्  ॥ ००६  ॥

संप्रेषितायामथ चैव दास्या ;मुत्थाय सर्वं स्वयमेव कुर्याः ।
जानातु कृष्णस्तव भावमेतं ; सर्वात्मना मां भजतीति सत्ये ॥ ००७ ॥

त्वत्संनिधौ यत्कथयेत्पतिस्ते ; यद्यप्यगुह्यं परिरक्षितव्यम् ।
काचित्सपत्नी तव वासुदेवं ; प्रत्यादिशेत्तेन भवेद्विरागः ॥ ००८ ॥

प्रियांश्च रक्तांश्च हितांश्च भर्तु ;स्तान्भोजयेथा विविधैरुपायैः ।
द्वेष्यैरपक्षैरहितैश्च तस्य ; भिद्यस्व नित्यं कुहकोद्धतैश्च ॥ ००९ ॥

मदं प्रमादं पुरुषेषु हित्वा ; संयच्छ भावं प्रतिगृह्य मौनम् ।
प्रद्युम्नसाम्बावपि ते कुमारौ ; नोपासितव्यौ रहिते कदाचित् ॥ ०१० ॥

महाकुलीनाभिरपापिकाभिः ; स्त्रीभिः सतीभिस्तव सख्यमस्तु ।
चण्डाश्च शौण्डाश्च महाशनाश्च ; चौराश्च दुष्टाश्चपलाश्च वर्ज्याः ॥ ०११ ॥

एतद्यशस्यं भगवेदनं च ; स्वर्ग्यं तथा शत्रुनिबर्हणं च ।
महार्हमाल्याभरणाङ्गरागा ; भर्तारमाराधय पुण्यगन्धा ॥ ०१२ ॥

---

# अध्याय २२४

वैशंपायन उवाच ॥

मार्कण्डेयादिभिर्विप्रैः पाण्डवैश्च महात्मभिः ।
कथाभिरनुकूलाभिः सहासित्वा जनार्दनः ॥ ००१ ॥

ततस्तैः संविदं कृत्वा यथावन्मधुसूदनः ।
आरुरुक्षू रथं सत्यामाह्वयामास केशवः ॥ ००२ ॥

सत्यभामा ततस्तत्र स्वजित्वा द्रुपदात्मजाम् ।
उवाच वचनं हृद्यं यथाभावसमाहितम्  ॥ ००३  ॥

कृष्णे मा भूत्तवोत्कण्ठा मा व्यथा मा प्रजागरः ।
भर्तृभिर्देवसङ्काशैर्जितां प्राप्स्यसि मेदिनीम्  ॥ ००४  ॥

न ह्येवं शीलसंपन्ना नैवं पूजितलक्षणाः ।
प्राप्नुवन्ति चिरं क्लेशं यथा त्वमसितेक्षणे  ॥ ००५  ॥

अवश्यं च त्वया भूमिरियं निहतकण्टका ।
भर्तृभिः सह भोक्तव्या निर्द्वंद्वेति श्रुतं मया  ॥ ००६  ॥

धार्तराष्ट्रवधं कृत्वा वैराणि प्रतियात्य च ।
युधिष्ठिरस्थां पृथिवीं द्रष्टासि द्रुपदात्मजे  ॥ ००७  ॥

यास्ताः प्रव्राजमानां त्वां प्राहसन्दर्पमोहिताः ।
ताः क्षिप्रं हतसङ्कल्पा द्रक्ष्यसि त्वं कुरुस्त्रियः  ॥ ००८  ॥

तव दुःखोपपन्नाया यैराचरितमप्रियम् ।
विद्धि संप्रस्थितान्सर्वांस्तान्कृष्णे यमसादनम्  ॥ ००९  ॥

पुत्रस्ते प्रतिविन्ध्यश्च सुतसोमस्तथा विभुः ।
श्रुतकर्मार्जुनिश्चैव शतानीकश्च नाकुलिः  ॥ ०१०  ॥

सहदेवाच्च यो जातः श्रुतसेनस्तवात्मजः  ॥ ०१०  ॥

सर्वे कुशलिनो वीराः कृतास्त्राश्च सुतास्तव ।
अभिमन्युरिव प्रीता द्वारवत्यां रता भृशम्  ॥ ०११  ॥

त्वमिवैषां सुभद्रा च प्रीत्या सर्वात्मना स्थिता ।

प्रीयते भावनिर्द्वंद्वा तेभ्यश्च विगतज्वरा ॥ ०१२ ॥

भेजे सर्वात्मना चैव प्रद्युम्नजननी तथा ।
भानुप्रभृतिभिश्चैनान्विशिनष्टि च केशवः ॥ ०१३ ॥

भोजनाच्छादने चैषां नित्यं मे श्वशुरः स्थितः ।
रामप्रभृतयः सर्वे भजन्त्यन्धकवृष्णयः ॥ ०१४ ॥

तुल्यो हि प्रणयस्तेषां प्रद्युम्नस्य च भामिनि ॥ ०१४ ॥

एवमादि प्रियं प्रीत्या हृद्यमुक्त्वा मनोनुगम् ।
गमनाय मनश्चक्रे वासुदेवरथं प्रति ॥ ०१५ ॥

तां कृष्णां कृष्णमहिषी चकाराभिप्रदक्षिणम् ।
आरुरोह रथं शौरेः सत्यभामा च भामिनी ॥ ०१६ ॥

स्मयित्वा तु यदुश्रेष्ठो द्रौपदीं परिसान्त्व्य च ।
उपावर्त्य ततः शीघ्रैर्हयैः प्रायात्परंतपः ॥ ०१७ ॥

---

# घोषयात्रापर्व

## अध्याय २२५

जनमेजय उवाच ॥

एवं वने वर्तमाना नराग्र्याः ; शीतोष्णवातातपकर्शिताङ्गाः ।
सरस्तदासाद्य वनं च पुण्यं ; ततः परं किमकुर्वन्त पार्थाः ॥ ००१ ॥

वैशंपायन उवाच ॥

सरस्तदासाद्य तु पाण्डुपुत्रा ; जनं समुत्सृज्य विधाय चैषाम् ।
वनानि रम्याण्यथ पर्वतांश्च ; नदीप्रदेशांश्च तदा विचेरुः ॥ ००२ ॥

तथा वने तान्वसतः प्रवीरा ;न्स्वाध्यायवन्तश्च तपोधनाश्च ।
अभ्याययुर्वेदविदः पुराणा ;स्तान्पूजयामासुरथो नराग्र्याः ॥ ००३ ॥

ततः कदाचित्कुशलः कथासु ; विप्रोऽभ्यगच्छद्भुवि कौरवेयान् ।
स तैः समेत्याथ यदृच्छयैव ; वैचित्रवीर्यं नृपमभ्यगच्छत् ॥ ००४ ॥

अथोपविष्टः प्रतिसत्कृतश्च ; वृद्धेन राज्ञा कुरुसत्तमेन ।
प्रचोदितः सन्कथयां बभूव ; धर्मानिलेन्द्रप्रभवान्यमौ च ॥ ००५ ॥

कृशांश्च वातातपकर्शिताङ्गा ;न्दुःखस्य चोग्रस्य मुखे प्रपन्नान् ।
तां चाप्यनाथामिव वीरनाथां ; कृष्णां परिक्लेशगुणेन युक्ताम् ॥ ००६ ॥

ततः कथां तस्य निशम्य राजा ; वैचित्रवीर्यः कृपयाभितप्तः ।
वने स्थितान्पार्थिवपुत्रपौत्रा ;ञ्श्रुत्वा तदा दुःखनदीं प्रपन्नान् ॥ ००७ ॥

प्रोवाच दैन्याभिहतान्तरात्मा ; निःश्वासबाष्पोपहतः स पार्थान् ।
वाचं कथञ्चित्स्थिरतामुपेत्य ; तत्सर्वमात्मप्रभवं विचिन्त्य ॥ ००८ ॥

कथं नु सत्यः शुचिरार्यवृत्तो ; ज्येष्ठः सुतानां मम धर्मराजः ।
अजातशत्रुः पृथिवीतलस्थः ; शेते पुरा राङ्कवकूटशायी ॥ ००९ ॥

प्रबोध्यते मागधसूतपूगै ;र्नित्यं स्तुवद्भिः स्वयमिन्द्रकल्पः ।
पतत्रिसंघैः स जघन्यरात्रे ; प्रबोध्यते नूनमिडातलस्थः ॥ ०१० ॥

कथं नु वातातपकर्शिताङ्गो ; वृकोदरः कोपपरिप्लुताङ्गः ।

शेते पृथिव्यामतथोचिताङ्गः ; कृष्णासमक्षं वसुधातलस्थः ॥ ०११ ॥

तथार्जुनः सुकुमारो मनस्वी ; वशे स्थितो धर्मसुतस्य राज्ञः ।
विदूयमानैरिव सर्वगात्रै ;ध्रुवं न शेते वसतीरमर्षात् ॥ ०१२ ॥

यमौ च कृष्णां च युधिष्ठिरं च ; भीमं च दृष्ट्वा सुखविप्रयुक्तान् ।
विनिःश्वसन्सर्प इवोग्रतेजा ; ध्रुवं न शेते वसतीरमर्षात् ॥ ०१३ ॥

तथा यमौ चाप्यसुखौ सुखार्हौ ; समृद्धरूपावमरौ दिवीव ।
प्रजागरस्थौ ध्रुवमप्रशान्तौ ; धर्मेण सत्येन च वार्यमाणौ ॥ ०१४ ॥

समीरणेनापि समो बलेन ; समीरणस्यैव सुतो बलीयान् ।
स धर्मपाशेन सितोग्रतेजा ; ध्रुवं विनिःश्वस्य सहत्यमर्षम् ॥ ०१५ ॥

स चापि भूमौ परिवर्तमानो ; वधं सुतानां मम काङ्क्षमाणः ।
सत्येन धर्मेण च वार्यमाणः ; कालं प्रतीक्षत्यधिको रणेऽन्यैः ॥ ०१६ ॥

अजातशत्रौ तु जिते निकृत्या ; दुःशासनो यत्परुषाण्यवोचत् ।
तानि प्रविष्टानि वृकोदराङ्गं ; दहन्ति मर्माग्निरिवेन्धनानि ॥ ०१७ ॥

न पापकं ध्यास्यति धर्मपुत्रो ; धनञ्जयश्चाप्यनुवर्तते तम् ।
अरण्यवासेन विवर्धते तु ; भीमस्य कोपोऽग्निरिवानिलेन ॥ ०१८ ॥

स तेन कोपेन विदीर्यमाणः ; करं करेणाभिनिपीड्य वीरः ।
विनिःश्वसत्युष्णमतीव घोरं ; दहन्निवेमान्मम पुत्रपौत्रान् ॥ ०१९ ॥

गाण्डीवधन्वा च वृकोदरश्च ; संरम्भिणावन्तककालकल्पौ ।
न शेषयेतां युधि शत्रुसेनां ; शरान्किरन्तावशनिप्रकाशान् ॥ ०२० ॥

दुर्योधनः शकुनिः सूतपुत्रो ; दुःशासनश्चापि सुमन्दचेताः ।
मधु प्रपश्यन्ति न तु प्रपातं ; वृकोदरं चैव धनञ्जयं च ॥ ०२१ ॥

शुभाशुभं पुरुषः कर्म कृत्वा ; प्रतीक्षते तस्य फलं स्म कर्ता ।
स तेन युज्यत्यवशः फलेन ; मोक्षः कथं स्यात्पुरुषस्य तस्मात्  ॥ ०२२  ॥

क्षेत्रे सुकृष्टे ह्युपिते च बीजे ; देवे च वर्षत्यृतुकालयुक्तम् ।
न स्यात्फलं तस्य कुतः प्रसिद्धि ;रन्यत्र दैवादिति चिन्तयामि  ॥ ०२३  ॥

कृतं मताक्षेण यथा न साधु ; साधुप्रवृत्तेन च पाण्डवेन ।
मया च दुष्पुत्रवशानुगेन ; यथा कुरूणामयमन्तकालः  ॥ ०२४  ॥

ध्रुवं प्रवास्यत्यसमीरितोऽपि ; ध्रुवं प्रजास्यत्युत गर्भिणी या ।
ध्रुवं दिनादौ रजनीप्रणाश ;स्तथा क्षपादौ च दिनप्रणाशः  ॥ ०२५  ॥

क्रियेत कस्मान्न परे च कुर्यु ;र्वित्तं न दद्युः पुरुषाः कथञ्चित् ।
प्राप्यार्थकालं च भवेदनर्थः ; कथं नु तत्स्यादिति तत्कुतः स्यात्  ॥ ०२६  ॥

कथं न भिद्येत न च स्रवेत ; न च प्रसिच्येदिति रक्षितव्यम् ।
अरक्ष्यमाणः शतधा विशीर्ये ;द्ध्रुवं न नाशोऽस्ति कृतस्य लोके  ॥ ०२७  ॥

गतो ह्यरण्यादपि शक्रलोकं ; धनञ्जयः पश्यत वीर्यमस्य ।
अस्त्राणि दिव्यानि चतुर्विधानि ; ज्ञात्वा पुनर्लोकमिमं प्रपन्नः  ॥ ०२८  ॥

स्वर्गं हि गत्वा सशरीर एव ; को मानुषः पुनरागन्तुमिच्छेत् ।
अन्यत्र कालोपहताननेका ;न्समीक्षमाणस्तु कुरून्मुमूर्षून्  ॥ ०२९  ॥

धनुर्ग्राहश्चार्जुनः सव्यसाची ; धनुश्च तद्गाण्डिवं लोकसारम् ।
अस्त्राणि दिव्यानि च तानि तस्य ; त्रयस्य तेजः प्रसहेत को नु  ॥ ०३०  ॥

निशम्य तद्वचनं पार्थिवस्य ; दुर्योधनो रहिते सौबलश्च ।
अबोधयत्कर्णमुपेत्य सर्वं ; स चाप्यहृष्टोऽभवदल्पचेताः  ॥ ०३१  ॥

# अध्याय २२६

वैशंपायन उवाच ॥

धृतराष्ट्रस्य तद्वाक्यं निशम्य सहसौबलः ।
दुर्योधनमिदं काले कर्णो वचनमब्रवीत् ॥ ००१ ॥

प्रव्राज्य पाण्डवान्वीरान्स्वेन वीर्येण भारत ।
भुङ्क्षेमां पृथिवीमेको दिवं शम्बरहा यथा ॥ ००२ ॥

प्राच्याश्च दाक्षिणात्याश्च प्रतीच्योदीच्यवासिनः ।
कृताः करप्रदाः सर्वे राजानस्ते नराधिप ॥ ००३ ॥

या हि सा दीप्यमानेव पाण्डवान्भजते पुरा ।
साद्य लक्ष्मीस्त्वया राजन्नवाप्ता भ्रातृभिः सह ॥ ००४ ॥

इन्द्रप्रस्थगते यां तां दीप्यमानां युधिष्ठिरे ।
अपश्याम श्रियं राजन्नचिरं शोककर्शिताः ॥ ००५ ॥

सा तु बुद्धिबलेनेयं राज्ञस्तस्माद्युधिष्ठिरात् ।
त्वयाक्षिप्ता महाबाहो दीप्यमानेव दृश्यते ॥ ००६ ॥

तथैव तव राजेन्द्र राजानः परवीरहन् ।
शासनेऽधिष्ठिताः सर्वे किं कुर्म इति वादिनः ॥ ००७ ॥

तवाद्य पृथिवी राजन्निखिला सागराम्बरा ।
सपर्वतवना देवी सग्रामनगराकरा ॥ ००८ ॥

नानावनोद्देशवती पत्तनैरुपशोभिता ॥ ००८ ॥

वन्द्यमानो द्विजै राजन्पूज्यमानश्च राजभिः ।
पौरुषाद्दिवि देवेषु भ्राजसे रश्मिवानिव ॥ ००९ ॥

रुद्रैरिव यमो राजा मरुद्भिरिव वासवः ।
कुरुभिस्त्वं वृतो राजन्भासि नक्षत्रराडिव ॥ ०१० ॥

ये स्म ते नाद्रियन्तेऽऽज्ञा नोद्विजन्ते कदा च न ।
पश्यामस्ताञ्श्रिया हीनान्पाण्डवान्वनवासिनः ॥ ०११ ॥

श्रूयन्ते हि महाराज सरो द्वैतवनं प्रति ।
वसन्तः पाण्डवाः सार्धं ब्राह्मणैर्वनवासिभिः ॥ ०१२ ॥

स प्रयाहि महाराज श्रिया परमया युतः ।
प्रतपन्पाण्डुपुत्रांस्त्वं रश्मिवानिव तेजसा ॥ ०१३ ॥

स्थितो राज्ये च्युतान्राज्याच्छ्रिया हीनाञ्श्रिया वृतः ।
असमृद्धान्समृद्धार्थः पश्य पाण्डुसुतान्नृप ॥ ०१४ ॥

महाभिजनसंपन्नं भद्रे महति संस्थितम् ।
पाण्डवास्त्वाभिवीक्षन्तां ययातिमिव नाहुषम् ॥ ०१५ ॥

यां श्रियं सुहृदश्चैव दुर्हृदश्च विशां पते ।
पश्यन्ति पुरुषे दीप्तां सा समर्था भवत्युत ॥ ०१६ ॥

समस्थो विषमस्थान्हि दुर्हृदो योऽभिवीक्षते ।
जगतीस्थानिवाद्रिस्थः किं ततः परमं सुखम् ॥ ०१७ ॥

न पुत्रधनलाभेन न राज्येनापि विन्दति ।
प्रीतिं नृपतिशार्दूल याममित्राघदर्शनात् ॥ ०१८ ॥

किं नु तस्य सुखं न स्यादाश्रमे यो धनञ्जयम् ।
अभिवीक्षेत सिद्धार्थो वल्कलाजिनवाससम्  ॥ ०१९  ॥

सुवाससो हि ते भार्या वल्कलाजिनवाससम् ।
पश्यन्त्वसुखितां कृष्णां सा च निर्विद्यतां पुनः  ॥ ०२०  ॥

विनिन्दतां तथात्मानं जीवितं च धनच्युता  ॥ ०२०  ॥

न तथा हि सभामध्ये तस्या भवितुमर्हति ।
वैमनस्यं यथा दृष्ट्वा तव भार्याः स्वलङ्कृताः  ॥ ०२१  ॥

एवमुक्त्वा तु राजानं कर्णः शकुनिना सह ।
तूष्णीं बभूवतुरुभौ वाक्यान्ते जनमेजय  ॥ ०२२  ॥

---

# अध्याय २२७

वैशंपायन उवाच  ॥

कर्णस्य वचनं श्रुत्वा राजा दुर्योधनस्तदा ।
हृष्टो भूत्वा पुनर्दीन इदं वचनमब्रवीत्  ॥ ००१  ॥

ब्रवीषि यदिदं कर्ण सर्वं मे मनसि स्थितम् ।
न त्वभ्यनुज्ञां लप्स्यामि गमने यत्र पाण्डवाः  ॥ ००२  ॥

परिदेवति तान्वीरान्धृतराष्ट्रो महीपतिः ।
मन्यतेऽभ्यधिकांश्चापि तपोयोगेन पाण्डवान्  ॥ ००३  ॥

अथ वाप्यनुबुध्येत नृपोऽस्माकं चिकीर्षितम् ।
एवमप्यायतिं रक्षन्नाभ्यनुज्ञातुमर्हति ॥ ००४ ॥

न हि द्वैतवने किञ्चिद्विद्यतेऽन्यत्प्रयोजनम् ।
उत्सादनमृते तेषां वनस्थानां मम द्विषाम् ॥ ००५ ॥

जानासि हि यथा क्षत्ता द्यूतकाल उपस्थिते ।
अब्रवीद्यच्च मां त्वां च सौबलं च वचस्तदा ॥ ००६ ॥

तानि पूर्वाणि वाक्यानि यच्चान्यत्परिदेवितम् ।
विचिन्त्य नाधिगच्छामि गमनायेतराय वा ॥ ००७ ॥

ममापि हि महान्हर्षो यदहं भीमफल्गुनौ ।
क्लिष्टावरण्ये पश्येयं कृष्णया सहिताविति ॥ ००८ ॥

न तथा प्राप्नुयां प्रीतिमवाप्य वसुधामपि ।
दृष्ट्वा यथा पाण्डुसुतान्वल्कलाजिनवाससः ॥ ००९ ॥

किं नु स्यादधिकं तस्माद्यदहं द्रुपदात्मजाम् ।
द्रौपदीं कर्ण पश्येयं काषायवसनां वने ॥ ०१० ॥

यदि मां धर्मराजश्च भीमसेनश्च पाण्डवः ।
युक्तं परमया लक्ष्म्या पश्येतां जीवितं भवेत् ॥ ०११ ॥

उपायं न तु पश्यामि येन गच्छेम तद्वनम् ।
यथा चाभ्यनुजानीयाद्गच्छन्तं मां महीपतिः ॥ ०१२ ॥

स सौबलेन सहितस्तथा दुःशासनेन च ।
उपायं पश्य निपुणं येन गच्छेम तद्वनम् ॥ ०१३ ॥

अहमप्यद्य निश्चित्य गमनायेतराय वा ।
काल्यमेव गमिष्यामि समीपं पार्थिवस्य ह ॥ ०१४ ॥

मयि तत्रोपविष्टे तु भीष्मे च कुरुसत्तमे ।
उपायो यो भवेद्दृष्टस्तं ब्रूयाः सहसौबलः ॥ ०१५ ॥

ततो भीष्मस्य राज्ञश्च निशम्य गमनं प्रति ।
व्यवसायं करिष्येऽहमनुनीय पितामहम् ॥ ०१६ ॥

तथेत्युक्त्वा तु ते सर्वे जग्मुरावसथान्प्रति ।
व्युषितायां रजन्यां तु कर्णो राजानमभ्ययात् ॥ ०१७ ॥

ततो दुर्योधनं कर्णः प्रहसन्निदमब्रवीत् ।
उपायः परिदृष्टोऽयं तं निबोध जनेश्वर ॥ ०१८ ॥

घोषा द्वैतवने सर्वे त्वत्प्रतीक्षा नराधिप ।
घोषयात्रापदेशेन गमिष्यामो न संशयः ॥ ०१९ ॥

उचितं हि सदा गन्तुं घोषयात्रां विशां पते ।
एवं च त्वां पिता राजन्समनुज्ञातुमर्हति ॥ ०२० ॥

तथा कथयमानौ तौ घोषयात्राविनिश्चयम् ।
गान्धारराजः शकुनिः प्रत्युवाच हसन्निव ॥ ०२१ ॥

उपायोऽयं मया दृष्टो गमनाय निरामयः ।
अनुज्ञास्यति नो राजा चोदयिष्यति चाप्युत ॥ ०२२ ॥

घोषा द्वैतवने सर्वे त्वत्प्रतीक्षा नराधिप ।
घोषयात्रापदेशेन गमिष्यामो न संशयः ॥ ०२३ ॥

ततः प्रहसिताः सर्वे तेऽन्योन्यस्य तलान्ददुः ।

तदेव च विनिश्चित्य ददृशुः कुरुसत्तमम्  ॥ ०२४  ॥

---

# अध्याय २२८

वैशंपायन उवाच  ॥

धृतराष्ट्रं ततः सर्वे ददृशुर्जनमेजय ।
पृष्ट्वा सुखमथो राज्ञः पृष्ट्वा राज्ञा च भारत  ॥ ००१  ॥

ततस्तैर्विहितः पूर्वं समङ्गो नाम बल्लवः ।
समीपस्थास्तदा गावो धृतराष्ट्रे न्यवेदयत्  ॥ ००२  ॥

अनन्तरं च राधेयः शकुनिश्च विशां पते ।
आहतुः पार्थिवश्रेष्ठं धृतराष्ट्रं जनाधिपम्  ॥ ००३  ॥

रमणीयेषु देशेषु घोषाः संप्रति कौरव ।
स्मारणासमयः प्राप्तो वत्सानामपि चाङ्कनम्  ॥ ००४  ॥

मृगया चोचिता राजन्नस्मिन्काले सुतस्य ते ।
दुर्योधनस्य गमनं त्वमनुज्ञातुमर्हसि  ॥ ००५  ॥

धृतराष्ट्र उवाच  ॥

मृगया शोभना तात गवां च समवेक्षणम् ।
विश्रम्भस्तु न गन्तव्यो बल्लवानामिति स्मरे  ॥ ००६  ॥

ते तु तत्र नरव्याघ्राः समीप इति नः श्रुतम् ।
अतो नाभ्यनुजानामि गमनं तत्र वः स्वयम्  ॥ ००७  ॥

छद्मना निर्जितास्ते हि कर्शिताश्च महावने ।
तपोनित्याश्च राधेय समर्थाश्च महारथाः ॥ ००८ ॥

धर्मराजो न सङ्क्रुध्येद्भीमसेनस्त्वमर्षणः ।
यज्ञसेनस्य दुहिता तेज एव तु केवलम् ॥ ००९ ॥

यूयं चाप्यपराध्येयुर्दर्पमोहसमन्विताः ।
ततो विनिर्दहेयुस्ते तपसा हि समन्विताः ॥ ०१० ॥

अथ वा सायुधा वीरा मन्युनाभिपरिप्लुताः ।
सहिता बद्धनिस्त्रिंशा दहेयुः शस्त्रतेजसा ॥ ०११ ॥

अथ यूयं बहुत्वात्तानारभध्वं कथञ्चन ।
अनार्यं परमं तत्स्यादशक्यं तच्च मे मतम् ॥ ०१२ ॥

उषितो हि महाबाहुरिन्द्रलोके धनञ्जयः ।
दिव्यान्यस्त्राण्यवाप्याथ ततः प्रत्यागतो वनम् ॥ ०१३ ॥

अकृतास्त्रेण पृथिवी जिता बीभत्सुना पुरा ।
किं पुनः स कृतास्त्रोऽद्य न हन्याद्वो महारथः ॥ ०१४ ॥

अथ वा मद्वचः श्रुत्वा तत्र यत्ता भविष्यथ ।
उद्विग्नवासो विश्रम्भाद्दुःखं तत्र भविष्यति ॥ ०१५ ॥

अथ वा सैनिकाः केचिदपकुर्युर्युधिष्ठिरे ।
तदबुद्धिकृतं कर्म दोषमुत्पादयेच्च वः ॥ ०१६ ॥

तस्माद्गच्छन्तु पुरुषाः स्मारणायाप्तकारिणः ।
न स्वयं तत्र गमनं रोचये तव भारत ॥ ०१७ ॥

शकुनिरुवाच ॥

धर्मज्ञः पाण्डवो ज्येष्ठः प्रतिज्ञातं च संसदि ।
तेन द्वादश वर्षाणि वस्तव्यानीति भारत ॥ ०१८ ॥

अनुवृत्ताश्च ते सर्वे पाण्डवा धर्मचारिणः ।
युधिष्ठिरश्च कौन्तेयो न नः कोपं करिष्यति ॥ ०१९ ॥

मृगयां चैव नो गन्तुमिच्छा संवर्धते भृशम् ।
स्मारणं च चिकीर्षामो न तु पाण्डवदर्शनम् ॥ ०२० ॥

न चानार्यसमाचारः कश्चित्तत्र भविष्यति ।
न च तत्र गमिष्यामो यत्र तेषां प्रतिश्रयः ॥ ०२१ ॥

वैशंपायन उवाच ॥

एवमुक्तः शकुनिना धृतराष्ट्रो जनेश्वरः ।
दुर्योधनं सहामात्यमनुजज्ञे न कामतः ॥ ०२२ ॥

अनुज्ञातस्तु गान्धारिः कर्णेन सहितस्तदा ।
निर्ययौ भरतश्रेष्ठो बलेन महता वृतः ॥ ०२३ ॥

दुःशासनेन च तथा सौबलेन च देविना ।
संवृतो भ्रातृभिश्चान्यैः स्त्रीभिश्चापि सहस्रशः ॥ ०२४ ॥

तं निर्यान्तं महाबाहुं द्रष्टुं द्वैतवनं सरः ।
पौराश्चानुययुः सर्वे सहदारा वनं च तत् ॥ ०२५ ॥

अष्टौ रथसहस्राणि त्रीणि नागायुतानि च ।
पत्तयो बहुसाहस्रा हयाश्च नवतिः शताः ॥ ०२६ ॥

शकटापणवेश्याश्च वणिजो बन्दिनस्तथा ।
नराश्च मृगयाशीलाः शतशोऽथ सहस्रशः ॥ ०२७ ॥

ततः प्रयाणे नृपतेः सुमहानभवत्स्वनः ।
प्रावृषीव महावायोरुद्धतस्य विशां पते ॥ ०२८ ॥

गव्यूतिमात्रे न्यवसद्राजा दुर्योधनस्तदा ।
प्रयातो वाहनैः सर्वैस्ततो द्वैतवनं सरः ॥ ०२९ ॥

---

# अध्याय २२९

वैशंपायन उवाच ॥

अथ दुर्योधनो राजा तत्र तत्र वने वसन् ।
जगाम घोषानभितस्तत्र चक्रे निवेशनम् ॥ ००१ ॥

रमणीये समाज्ञाते सोदके समहीरुहे ।
देशे सर्वगुणोपेते चक्रुरावसथं नराः ॥ ००२ ॥

तथैव तत्समीपस्थान्पृथगावसथान्बहून् ।
कर्णस्य शकुनेश्चैव भ्रातृणां चैव सर्वशः ॥ ००३ ॥

ददर्श स तदा गावः शतशोऽथ सहस्रशः ।
अङ्कैर्लक्षैश्च ताः सर्वा लक्षयामास पार्थिवः ॥ ००४ ॥

अङ्कयामास वत्सांश्च जज्ञे चोपसृतास्त्वपि ।
बालवत्साश्च या गावः कालयामास ता अपि ॥ ००५ ॥

अथ स स्मारणं कृत्वा लक्षयित्वा त्रिहायनान् ।
वृतो गोपालकैः प्रीतो व्यहरत्कुरुनन्दनः ॥ ००६ ॥

स च पौरजनः सर्वः सैनिकाश्च सहस्रशः ।
यथोपजोषं चिक्रीडुर्वने तस्मिन्यथामराः ॥ ००७ ॥

ततो गोपाः प्रगातारः कुशला नृत्तवादिते ।
धार्तराष्ट्रमुपातिष्ठन्कन्याश्चैव स्वलङ्कृताः ॥ ००८ ॥

स स्त्रीगणवृतो राजा प्रहृष्टः प्रददौ वसु ।
तेभ्यो यथार्हमन्नानि पानानि विविधानि च ॥ ००९ ॥

ततस्ते सहिताः सर्वे तरक्षून्महिषान्मृगान् ।
गवयर्क्षवराहांश्च समन्तात्पर्यकालयन् ॥ ०१० ॥

स ताञ्शरैर्विनिर्भिन्दन्गजान्बध्नन्महावने ।
रमणीयेषु देशेषु ग्राहयामास वै मृगान् ॥ ०११ ॥

गोरसानुपयुञ्जान उपभोगांश्च भारत ।
पश्यन्सुरमणीयानि पुष्पितानि वनानि च ॥ ०१२ ॥

मत्तभ्रमरजुष्टानि बर्हिणाभिरुतानि च ।
अगच्छदानुपूर्व्येण पुण्यं द्वैतवनं सरः ॥ ०१३ ॥

ऋद्ध्या परमया युक्तो महेन्द्र इव वज्रभृत् ॥ ०१३ ॥

यदृच्छया च तदहो धर्मपुत्रो युधिष्ठिरः ।
ईजे राजर्षियज्ञेन सद्यस्केन विशां पते ॥ ०१४ ॥

दिव्येन विधिना राजा वन्येन कुरुसत्तमः ॥ ०१४ ॥

कृत्वा निवेशमभितः सरसस्तस्य कौरवः ।
द्रौपद्या सहितो धीमान्धर्मपत्न्या नराधिपः ॥ ०१५ ॥

ततो दुर्योधनः प्रेष्यानादिदेश सहानुजः ।
आक्रीडावसथाः क्षिप्रं क्रियन्तामिति भारत ॥ ०१६ ॥

ते तथेत्येव कौरव्यमुक्त्वा वचनकारिणः ।
चिकीर्षन्तस्तदाक्रीडाञ्जग्मुर्द्वैतवनं सरः ॥ ०१७ ॥

सेनाग्रं धार्तराष्ट्रस्य प्राप्तं द्वैतवनं सरः ।
प्रविशन्तं वनद्वारि गन्धर्वाः समवारयन् ॥ ०१८ ॥

तत्र गन्धर्वराजो वै पूर्वमेव विशां पते ।
कुबेरभवनाद्राजन्नाजगाम गणावृतः ॥ ०१९ ॥

गणैरप्सरसां चैव त्रिदशानां तथात्मजैः ।
विहारशीलः क्रीडार्थं तेन तत्संवृतं सरः ॥ ०२० ॥

तेन तत्संवृतं दृष्ट्वा ते राजपरिचारकाः ।
प्रतिजग्मुस्ततो राजन्यत्र दुर्योधनो नृपः ॥ ०२१ ॥

स तु तेषां वचः श्रुत्वा सैनिकान्युद्धदुर्मदान् ।
प्रेषयामास कौरव्य उत्सारयत तानिति ॥ ०२२ ॥

तस्य तद्वचनं श्रुत्वा राज्ञः सेनाग्रयायिनः ।
सरो द्वैतवनं गत्वा गन्धर्वानिदमब्रुवन् ॥ ०२३ ॥

राजा दुर्योधनो नाम धृतराष्ट्रसुतो बली ।
विजिहीर्षुरिहायाति तदर्थमपसर्पत ॥ ०२४ ॥

एवमुक्तास्तु गन्धर्वाः प्रहसन्तो विशां पते ।

प्रत्यब्रुवंस्तान्पुरुषानिदं सुपरुषं वचः ॥ ०२५ ॥

न चेतयति वो राजा मन्दबुद्धिः सुयोधनः ।
योऽस्मानाज्ञापयत्येवं वश्यानिव दिवौकसः ॥ ०२६ ॥

यूयं मुमूर्षवश्चापि मन्दप्रज्ञा न संशयः ।
ये तस्य वचनादेवमस्मान्ब्रूत विचेतसः ॥ ०२७ ॥

गच्छत त्वरिताः सर्वे यत्र राजा स कौरवः ।
द्वेष्यं माद्यैव गच्छध्वं धर्मराजनिवेशनम् ॥ ०२८ ॥

एवमुक्तास्तु गन्धर्वै राज्ञः सेनाग्रयायिनः ।
संप्राद्रवन्यतो राजा धृतराष्ट्रसुतोऽभवत् ॥ ०२९ ॥

---

# अध्याय २३०

वैशंपायन उवाच ॥

ततस्ते सहिताः सर्वे दुर्योधनमुपागमन् ।
अब्रुवंश्च महाराज यदूचुः कौरवं प्रति ॥ ००१ ॥

गन्धर्वैर्वारिते सैन्ये धार्तराष्ट्रः प्रतापवान् ।
अमर्षपूर्णः सैन्यानि प्रत्यभाषत भारत ॥ ००२ ॥

शासतैनानधर्मज्ञान्मम विप्रियकारिणः ।
यदि प्रक्रीडितो देवैः सर्वैः सह शतक्रतुः ॥ ००३ ॥

दुर्योधनवचः श्रुत्वा धार्तराष्ट्रा महाबलाः ।

सर्वं एवाभिसंनद्धा योधाश्चापि सहस्रशः ॥ ००४ ॥

ततः प्रमथ्य गन्धर्वांस्तद्वनं विविशुर्बलात् ।
सिंहनादेन महता पूरयन्तो दिशो दश ॥ ००५ ॥

ततोऽपरैरवार्यन्त गन्धर्वैः कुरुसैनिकाः ।
ते वार्यमाणा गन्धर्वैः साम्नैव वसुधाधिप ॥ ००६ ॥

ताननादृत्य गन्धर्वांस्तद्वनं विविशुर्महत् ॥ ००६ ॥

यदा वाचा न तिष्ठन्ति धार्तराष्ट्राः सराजकाः ।
ततस्ते खेचराः सर्वे चित्रसेने न्यवेदयन् ॥ ००७ ॥

गन्धर्वराजस्तान्सर्वानब्रवीत्कौरवान्प्रति ।
अनार्याञ्शासतेत्येवं चित्रसेनोऽत्यमर्षणः ॥ ००८ ॥

अनुज्ञातास्तु गन्धर्वाश्चित्रसेनेन भारत ।
प्रगृहीतायुधाः सर्वे धार्तराष्ट्रानभिद्रवन् ॥ ००९ ॥

तान्दृष्ट्वा पततः शीघ्रान्गन्धर्वानुद्यतायुधान् ।
सर्वे ते प्राद्रवन्संख्ये धार्तराष्ट्रस्य पश्यतः ॥ ०१० ॥

तान्दृष्ट्वा द्रवतः सर्वान्धार्तराष्ट्रान्पराङ्मुखान् ।
वैकर्तनस्तदा वीरो नासीत्तत्र पराङ्मुखः ॥ ०११ ॥

आपतन्तीं तु संप्रेक्ष्य गन्धर्वाणां महाचमूम् ।
महता शरवर्षेण राधेयः प्रत्यवारयत् ॥ ०१२ ॥

क्षुरप्रैर्विशिखैर्भल्लैर्वत्सदन्तैस्तथायसैः ।
गन्धर्वाञ्शतशोऽभ्यघ्न.ण्ल्लघुत्वात्सूतनन्दनः ॥ ०१३ ॥

पातयन्नुत्तमाङ्गानि गन्धर्वाणां महारथः ।
क्षणेन व्यधमत्सर्वां चित्रसेनस्य वाहिनीम् ॥ ०१४ ॥

ते वध्यमाना गन्धर्वाः सूतपुत्रेण धीमता ।
भूय एवाभ्यवर्तन्त शतशोऽथ सहस्रशः ॥ ०१५ ॥

गन्धर्वभूता पृथिवी क्षणेन समपद्यत ।
आपतद्भिर्महावेगैश्चित्रसेनस्य सैनिकैः ॥ ०१६ ॥

अथ दुर्योधनो राजा शकुनिश्चापि सौबलः ।
दुःशासनो विकर्णश्च ये चान्ये धृतराष्ट्रजाः ॥ ०१७ ॥

न्यहनंस्तत्तदा सैन्यं रथैर्गरुडनिस्वनैः ॥ ०१७ ॥

भूयश्च योधयामासुः कृत्वा कर्णमथाग्रतः ।
महता रथघोषेण हयचारेण चाप्युत ॥ ०१८ ॥

वैकर्तनं परीप्सन्तो गन्धर्वान्समवारयन् ॥ ०१८ ॥

ततः संन्यपतन्सर्वे गन्धर्वाः कौरवैः सह ।
तदा सुतुमुलं युद्धमभवल्लोमहर्षणम् ॥ ०१९ ॥

ततस्ते मृदवोऽभूवन्गन्धर्वाः शरपीडिताः ।
उच्चुक्रुशुश्च कौरव्या गन्धर्वान्प्रेक्ष्य पीडितान् ॥ ०२० ॥

गन्धर्वांस्त्रासितान्दृष्ट्वा चित्रसेनोऽत्यमर्षणः ।
उत्पपातासनात्क्रुद्धो वधे तेषां समाहितः ॥ ०२१ ॥

ततो मायास्त्रमास्थाय युयुधे चित्रमार्गवित् ।
तयामुह्यन्त कौरव्याश्चित्रसेनस्य मायया ॥ ०२२ ॥

एकैको हि तदा योधो धार्तराष्ट्रस्य भारत ।
पर्यवर्तत गन्धर्वैर्दशभिर्दशभिः सह ॥ ०२३ ॥

ततः संपीड्यमानास्ते बलेन महता तदा ।
प्राद्रवन्त रणे भीता यत्र राजा युधिष्ठिरः ॥ ०२४ ॥

भज्यमानेष्वनीकेषु धार्तराष्ट्रेषु सर्वशः ।
कर्णो वैकर्तनो राजंस्तस्थौ गिरिरिवाचलः ॥ ०२५ ॥

दुर्योधनश्च कर्णश्च शकुनिश्चापि सौबलः ।
गन्धर्वान्योधयां चक्रुः समरे भृशविक्षताः ॥ ०२६ ॥

सर्व एव तु गन्धर्वाः शतशोऽथ सहस्रशः ।
जिघांसमानाः सहिताः कर्णमभ्यद्रवन्रणे ॥ ०२७ ॥

असिभिः पट्टिशैः शूलैर्गदाभिश्च महाबलाः ।
सूतपुत्रं जिघांसन्तः समन्तात्पर्यवारयन् ॥ ०२८ ॥

अन्येऽस्य युगमच्छिन्दन्ध्वजमन्ये न्यपातयन् ।
ईषामन्ये हयानन्ये सूतमन्ये न्यपातयन् ॥ ०२९ ॥

अन्ये छत्रं वरूथं च बन्धुरं च तथापरे ।
गन्धर्वा बहुसाहस्राः खण्डशोऽभ्यहनन्रथम् ॥ ०३० ॥

ततो रथादवप्लुत्य सूतपुत्रोऽसिचर्मभृत् ।
विकर्णरथमास्थाय मोक्षायाश्वानचोदयत् ॥ ०३१ ॥

# अध्याय २३१

वैशंपायन उवाच ॥

गन्धर्वैस्तु महाराज भग्ने कर्णे महारथे ।
संप्राद्रवच्चमूः सर्वा धार्तराष्ट्रस्य पश्यतः ॥ ००१ ॥

तान्दृष्ट्वा द्रवतः सर्वान्धार्तराष्ट्रान्पराङ्मुखान् ।
दुर्योधनो महाराज नासीत्तत्र पराङ्मुखः ॥ ००२ ॥

तामापतन्तीं संप्रेक्ष्य गन्धर्वाणां महाचमूम् ।
महता शरवर्षेण सोऽभ्यवर्षदरिंदमः ॥ ००३ ॥

अचिन्त्य शरवर्षं तु गन्धर्वास्तस्य तं रथम् ।
दुर्योधनं जिघांसन्तः समन्तात्पर्यवारयन् ॥ ००४ ॥

युगमीषां वरूथं च तथैव ध्वजसारथी ।
अश्वांस्त्रिवेणुं तल्पं च तिलशोऽभ्यहनन्रथम् ॥ ००५ ॥

दुर्योधनं चित्रसेनो विरथं पतितं भुवि ।
अभिद्रुत्य महाबाहुर्जीवग्राहमथाग्रहीत् ॥ ००६ ॥

तस्मिन्गृहीते राजेन्द्र स्थितं दुःशासनं रथे ।
पर्यगृह्णन्त गन्धर्वाः परिवार्य समन्ततः ॥ ००७ ॥

विविंशतिं चित्रसेनमादायान्ये प्रदुद्रुवुः ।
विन्दानुविन्दावपरे राजदारांश्च सर्वशः ॥ ००८ ॥

सैन्यास्तु धार्तराष्ट्रस्य गन्धर्वैः समभिद्रुताः ।
पूर्वं प्रभग्नैः सहिताः पाण्डवानभ्ययुस्तदा ॥ ००९ ॥

शकटापणवेश्याश्च यानयुग्यं च सर्वशः ।
शरणं पाण्डवाञ्जग्मुर्ह्रियमाणे महीपतौ  ॥ ०१०  ॥

प्रियदर्शनो महाबाहुर्धार्तराष्ट्रो महाबलः ।
गन्धर्वैर्ह्रियते राजा पार्थास्तमनुधावत  ॥ ०११  ॥

दुःशासनो दुर्विषहो दुर्मुखो दुर्जयस्तथा ।
बद्धा ह्रियन्ते गन्धर्वै राजदाराश्च सर्वशः  ॥ ०१२  ॥

इति दुर्योधनामात्याः क्रोशन्तो राजगृद्धिनः ।
आर्ता दीनस्वराः सर्वे युधिष्ठिरमुपागमन्  ॥ ०१३  ॥

तांस्तथा व्यथितान्दीनान्भिक्षमाणान्युधिष्ठिरम् ।
वृद्धान्दुर्योधनामात्यान्भीमसेनोऽभ्यभाषत  ॥ ०१४  ॥

अन्यथा वर्तमानानामर्थो जातोऽयमन्यथा ।
अस्माभिर्यदनुष्ठेयं गन्धर्वैस्तदनुष्ठितम्  ॥ ०१५  ॥

दुर्मन्त्रितमिदं तात राज्ञो दुर्द्यूतदेविनः ।
द्वेष्टारमन्ये क्लीबस्य पातयन्तीति नः श्रुतम्  ॥ ०१६  ॥

तदिदं कृतं नः प्रत्यक्षं गन्धर्वैरतिमानुषम् ।
दिष्ट्या लोके पुमानस्ति कश्चिदस्मत्प्रिये स्थितः  ॥ ०१७  ॥

येनास्माकं हृतो भार आसीनानां सुखावहः  ॥ ०१७  ॥

शीतवातातपसहांस्तपसा चैव कर्शितान् ।
समस्थो विषमस्थान्हि द्रष्टुमिच्छति दुर्मतिः  ॥ ०१८  ॥

अधर्मचारिणस्तस्य कौरव्यस्य दुरात्मनः ।
ये शीलमनुवर्तन्ते ते पश्यन्ति पराभवम्  ॥ ०१९  ॥

अधर्मो हि कृतस्तेन येनैतदुपशिक्षितम् ।
अनृशंसास्तु कौन्तेयास्तस्याध्यक्षान्ब्रवीमि वः ॥ ०२० ॥

एवं ब्रुवाणं कौन्तेयं भीमसेनममर्षणम् ।
न कालः परुषस्यायमिति राजाभ्यभाषत ॥ ०२१ ॥

---

# अध्याय २३२

युधिष्ठिर उवाच ॥

अस्मानभिगतांस्तात भयार्ताञ्शरणैषिणः ।
कौरवान्विषमप्राप्तान्कथं ब्रूयास्त्वमीदृशम् ॥ ००१ ॥

भवन्ति भेदा ज्ञातीनां कलहाश्च वृकोदर ।
प्रसक्तानि च वैराणि ज्ञातिधर्मो न नश्यति ॥ ००२ ॥

यदा तु कश्चिज्ज्ञातीनां बाह्यः प्रार्थयते कुलम् ।
न मर्षयन्ति तत्सन्तो बाह्येनाभिप्रमर्षणम् ॥ ००३ ॥

जानाति ह्येष दुर्बुद्धिरस्मानिह चिरोषितान् ।
स एष परिभूयास्मानकार्षीदिदमप्रियम् ॥ ००४ ॥

दुर्योधनस्य ग्रहणाद्गन्धर्वेण बलाद्रणे ।
स्त्रीणां बाह्याभिमर्शाच्च हतं भवति नः कुलम् ॥ ००५ ॥

शरणं च प्रपन्नानां त्राणार्थं च कुलस्य नः ।
उत्तिष्ठध्वं नरव्याघ्राः सज्जीभवत माचिरम् ॥ ००६ ॥

अर्जुनश्च यमौ चैव त्वं च भीमापराजितः ।
मोक्षयध्वं धार्तराष्ट्रं ह्रियमाणं सुयोधनम् ॥ ००७ ॥

एते रथा नरव्याघ्राः सर्वशस्त्रसमन्विताः ।
इन्द्रसेनादिभिः सूतैः संयताः कनकध्वजाः ॥ ००८ ॥

एतानास्थाय वै तात गन्धर्वान्योद्धुमाहवे ।
सुयोधनस्य मोक्षाय प्रयतध्वमतन्द्रिताः ॥ ००९ ॥

य एव कश्चिद्राजन्यः शरणार्थमिहागतम् ।
परं शक्त्याभिरक्षेत किं पुनस्त्वं वृकोदर ॥ ०१० ॥

क इहान्यो भवेत्त्राणमभिधावेति चोदितः ।
प्राञ्जलिं शरणापन्नं दृष्ट्वा शत्रुमपि ध्रुवम् ॥ ०११ ॥

वरप्रदानं राज्यं च पुत्रजन्म च पाण्डव ।
शत्रोश्च मोक्षणं क्लेशात्त्रीणि चैकं च तत्समम् ॥ ०१२ ॥

किं ह्यभ्यधिकमेतस्माद्यदापन्नः सुयोधनः ।
त्वद्बाहुबलमाश्रित्य जीवितं परिमार्गति ॥ ०१३ ॥

स्वयमेव प्रधावेयं यदि न स्याद्वृकोदर ।
विततोऽयं क्रतुर्वीर न हि मेऽत्र विचारणा ॥ ०१४ ॥

साम्नैव तु यथा भीम मोक्षयेथाः सुयोधनम् ।
तथा सर्वैरुपायैस्त्वं यतेथाः कुरुनन्दन ॥ ०१५ ॥

न साम्ना प्रतिपद्येत यदि गन्धर्वराडसौ ।
पराक्रमेण मृदुना मोक्षयेथाः सुयोधनम् ॥ ०१६ ॥

अथासौ मृदुयुद्धेन न मुञ्चेद्भीम कौरवान् ।
सर्वोपायैर्विमोच्यास्ते निगृह्य परिपन्थिनः ॥ ०१७ ॥

एतावद्धि मया शक्यं संदेष्टुं वै वृकोदर ।
वैताने कर्मणि तते वर्तमाने च भारत ॥ ०१८ ॥

वैशंपायन उवाच ॥

अजातशत्रोर्वचनं तच्छ्रुत्वा तु धनञ्जयः ।
प्रतिजज्ञे गुरोर्वाक्यं कौरवाणां विमोक्षणम् ॥ ०१९ ॥

अर्जुन उवाच ॥

यदि साम्ना न मोक्ष्यन्ति गन्धर्वा धृतराष्ट्रजान् ।
अद्य गन्धर्वराजस्य भूमिः पास्यति शोणितम् ॥ ०२० ॥

वैशंपायन उवाच ॥

अर्जुनस्य तु तां श्रुत्वा प्रतिज्ञां सत्यवादिनः ।
कौरवाणां तदा राजन्पुनः प्रत्यागतं मनः ॥ ०२१ ॥

---

# अध्याय २३३

वैशंपायन उवाच ॥

युधिष्ठिरवचः श्रुत्वा भीमसेनपुरोगमाः ।
प्रहृष्टवदनाः सर्वे समुत्तस्थुर्नरर्षभाः ॥ ००१ ॥

अभेद्यानि ततः सर्वे समनह्यन्त भारत ।
जाम्बूनदविचित्राणि कवचानि महारथाः ॥ ००२ ॥

ते दंशिता रथैः सर्वे ध्वजिनः सशरासनाः ।
पाण्डवाः प्रत्यदृश्यन्त ज्वलिता इव पावकाः ॥ ००३ ॥

तान्रथान्साधु संपन्नान्संयुक्ताञ्जवनैर्हयैः ।
आस्थाय रथशार्दूलाः शीघ्रमेव ययुस्ततः ॥ ००४ ॥

ततः कौरवसैन्यानां प्रादुरासीन्महास्वनः ।
प्रयातान्सहितान्दृष्ट्वा पाण्डुपुत्रान्महारथान् ॥ ००५ ॥

जितकाशिनश्च खचरास्त्वरिताश्च महारथाः ।
क्षणेनैव वने तस्मिन्समाजग्मुरभीतवत् ॥ ००६ ॥

न्यवर्तन्त ततः सर्वे गन्धर्वा जितकाशिनः ।
दृष्ट्वा रथगतान्वीरान्पाण्डवांश्चतुरो रणे ॥ ००७ ॥

तांस्तु विभ्राजतो दृष्ट्वा लोकपालानिवोद्यतान् ।
व्यूढानीका व्यतिष्ठन्त गन्धमादनवासिनः ॥ ००८ ॥

राज्ञस्तु वचनं श्रुत्वा धर्मराजस्य धीमतः ।
क्रमेण मृदुना युद्धमुपक्रामन्त भारत ॥ ००९ ॥

न तु गन्धर्वराजस्य सैनिका मन्दचेतसः ।
शक्यन्ते मृदुना श्रेयः प्रतिपादयितुं तदा ॥ ०१० ॥

ततस्तान्युधि दुर्धर्षः सव्यसाची परंतपः ।
सान्त्वपूर्वमिदं वाक्यमुवाच खचरान्रणे ॥ ०११ ॥

नैतद्गन्धर्वराजस्य युक्तं कर्म जुगुप्सितम् ।
परदाराभिमर्शश्च मानुषैश्च समागमः ॥ ०१२ ॥

उत्सृजध्वं महावीर्यान्धृतराष्ट्रसुतानिमान् ।
दारांश्चैषां विमुञ्चध्वं धर्मराजस्य शासनात् ॥ ०१३ ॥

एवमुक्तास्तु गन्धर्वाः पाण्डवेन यशस्विना ।
उत्स्मयन्तस्तदा पार्थमिदं वचनमब्रुवन् ॥ ०१४ ॥

एकस्यैव वयं तात कुर्याम वचनं भुवि ।
यस्य शासनमाज्ञाय चराम विगतज्वराः ॥ ०१५ ॥

तेनैकेन यथादिष्टं तथा वर्ताम भारत ।
न शास्ता विद्यतेऽस्माकमन्यस्तस्मात्सुरेश्वरात् ॥ ०१६ ॥

एवमुक्तस्तु गन्धर्वैः कुन्तीपुत्रो धनञ्जयः ।
गन्धर्वान्पुनरेवेदं वचनं प्रत्यभाषत ॥ ०१७ ॥

यदि साम्ना न मोक्षध्वं गन्धर्वा धृतराष्ट्रजम् ।
मोक्षयिष्यामि विक्रम्य स्वयमेव सुयोधनम् ॥ ०१८ ॥

एवमुक्त्वा ततः पार्थः सव्यसाची धनञ्जयः ।
ससर्ज निशितान्बाणान्खचरान्खचरान्प्रति ॥ ०१९ ॥

तथैव शरवर्षेण गन्धर्वास्ते बलोत्कटाः ।
पाण्डवानभ्यवर्तन्त पाण्डवाश्च दिवौकसः ॥ ०२० ॥

ततः सुतुमुलं युद्धं गन्धर्वाणां तरस्विनाम् ।
बभूव भीमवेगानां पाण्डवानां च भारत ॥ ०२१ ॥

# अध्याय २३४

वैशंपायन उवाच ॥

ततो दिव्यास्त्रसंपन्ना गन्धर्वा हेममालिनः ।
विसृजन्तः शरान्दीप्तान्समन्तात्पर्यवारयन् ॥ ००१ ॥

चत्वारः पाण्डवा वीरा गन्धर्वाश्च सहस्रशः ।
रणे संन्यपतन्राजंस्तदद्भुतमिवाभवत् ॥ ००२ ॥

यथा कर्णस्य च रथो धार्तराष्ट्रस्य चोभयोः ।
गन्धर्वैः शतशश्छिन्नौ तथा तेषां प्रचक्रिरे ॥ ००३ ॥

तान्समापततो राजन्गन्धर्वाञ्शतशो रणे ।
प्रत्यगृह्णन्नरव्याघ्राः शरवर्षैरनेकशः ॥ ००४ ॥

अवकीर्यमाणाः खगमाः शरवर्षैः समन्ततः ।
न शेकुः पाण्डुपुत्राणां समीपे परिवर्तितुम् ॥ ००५ ॥

अभिक्रुद्धानभिप्रेक्ष्य गन्धर्वानर्जुनस्तदा ।
लक्षयित्वाथ दिव्यानि महास्त्राण्युपचक्रमे ॥ ००६ ॥

सहस्राणां सहस्रं स प्राहिणोद्यमसादनम् ।
आग्नेयेनार्जुनः संख्ये गन्धर्वाणां बलोत्कटः ॥ ००७ ॥

तथा भीमो महेष्वासः संयुगे बलिनां वरः ।
गन्धर्वाञ्शतशो राजञ्जघान निशितैः शरैः ॥ ००८ ॥

माद्रीपुत्रावपि तथा युध्यमानौ बलोत्कटौ ।

परिगृह्याग्रतो राजञ्जघ्नतुः शतशः परान् ॥ ००९ ॥

ते वध्यमाना गन्धर्वा दिव्यैरस्त्रैर्महात्मभिः ।
उत्पेतुः खमुपादाय धृतराष्ट्रसुतांस्ततः ॥ ०१० ॥

तानुत्पतिष्णून्बुद्ध्वा तु कुन्तीपुत्रो धनञ्जयः ।
महता शरजालेन समन्तात्पर्यवारयत् ॥ ०११ ॥

ते बद्धाः शरजालेन शकुन्ता इव पञ्जरे ।
ववर्षुरर्जुनं क्रोधाद्गदाशक्त्यृष्टिवृष्टिभिः ॥ ०१२ ॥

गदाशक्त्यसिवृष्टीस्ता निहत्य स महास्त्रवित् ।
गात्राणि चाहनद्भल्लैर्गन्धर्वाणां धनञ्जयः ॥ ०१३ ॥

शिरोभिः प्रपतद्भिश्च चरणैर्बाहुभिस्तथा ।
अश्मवृष्टिरिवाभाति परेषामभवद्भयम् ॥ ०१४ ॥

ते वध्यमाना गन्धर्वाः पाण्डवेन महात्मना ।
भूमिष्ठमन्तरिक्षस्थाः शरवर्षैरवाकिरन् ॥ ०१५ ॥

तेषां तु शरवर्षाणि सव्यसाची परंतपः ।
अस्त्रैः संवार्य तेजस्वी गन्धर्वान्प्रत्यविध्यत ॥ ०१६ ॥

स्थूणाकर्णेन्द्रजालं च सौरं चापि तथार्जुनः ।
आग्नेयं चापि सौम्यं च ससर्ज कुरुनन्दनः ॥ ०१७ ॥

ते दह्यमाना गन्धर्वाः कुन्तीपुत्रस्य सायकैः ।
दैतेया इव शक्रेण विषादमगमन्परम् ॥ ०१८ ॥

ऊर्ध्वमाक्रममाणाश्च शरजालेन वारिताः ।
विसर्पमाणा भल्लैश्च वार्यन्ते सव्यसाचिना ॥ ०१९ ॥

गन्धर्वांस्त्रासितान्दृष्ट्वा कुन्तीपुत्रेण धीमता ।
चित्रसेनो गदां गृह्य सव्यसाचिनमाद्रवत्  ॥ ०२० ॥

तस्याभिपततस्तूर्णं गदाहस्तस्य संयुगे ।
गदां सर्वायसीं पार्थः शरैश्चिच्छेद सप्तधा  ॥ ०२१ ॥

स गदां बहुधा दृष्ट्वा कृत्तां बाणैस्तरस्विना ।
संवृत्य विद्ययात्मानं योधयामास पाण्डवम्  ॥ ०२२ ॥

अस्त्राणि तस्य दिव्यानि योधयामास खे स्थितः  ॥ ०२२ ॥

गन्धर्वराजो बलवान्मायायान्तर्हितस्तदा ।
अन्तर्हितं समालक्ष्य प्रहरन्तमथार्जुनः  ॥ ०२३ ॥

ताडयामास खचरैर्दिव्यास्त्रप्रतिमन्त्रितैः  ॥ ०२३ ॥

अन्तर्धानवधं चास्य चक्रे क्रुद्धोऽर्जुनस्तदा ।
शब्दवेध्यमुपाश्रित्य बहुरूपो धनञ्जयः  ॥ ०२४ ॥

स वध्यमानस्तैरस्त्रैरर्जुनेन महात्मना ।
अथास्य दर्शयामास तदात्मानं प्रियः सखा  ॥ ०२५ ॥

चित्रसेनमथालक्ष्य सखायं युधि दुर्बलम् ।
सञ्जहारास्त्रमथ तत्प्रसृष्टं पाण्डवर्षभः  ॥ ०२६ ॥

दृष्ट्वा तु पाण्डवाः सर्वे संहृतास्त्रं धनञ्जयम् ।
सञ्जहुः प्रद्रुतानश्वाञ्शरवेगान्धनूंषि च  ॥ ०२७ ॥

चित्रसेनश्च भीमश्च सव्यसाची यमावपि ।
पृष्ट्वा कौशलमन्योन्यं रथेष्वेवावतस्थिरे  ॥ ०२८ ॥

# अध्याय २३५

वैशंपायन उवाच ॥

ततोऽर्जुनश्चित्रसेनं प्रहसन्निदमब्रवीत् ।
मध्ये गन्धर्वसैन्यानां महेष्वासो महाद्युतिः ॥ ००१ ॥

किं ते व्यवसितं वीर कौरवाणां विनिग्रहे ।
किमर्थं च सदारोऽयं निगृहीतः सुयोधनः ॥ ००२ ॥

चित्रसेन उवाच ॥

विदितोऽयमभिप्रायस्तत्रस्थेन महात्मना ।
दुर्योधनस्य पापस्य कर्णस्य च धनञ्जय ॥ ००३ ॥

वनस्थान्भवतो ज्ञात्वा क्लिश्यमानाननर्हवत् ।
इमेऽवहसितुं प्राप्ता द्रौपदीं च यशस्विनीम् ॥ ००४ ॥

ज्ञात्वा चिकीर्षितं चैषां मामुवाच सुरेश्वरः ।
गच्छ दुर्योधनं बद्ध्वा सामात्यं त्वमिहानय ॥ ००५ ॥

धनञ्जयश्च ते रक्ष्यः सह भ्रातृभिराहवे ।
स हि प्रियः सखा तुभ्यं शिष्यश्च तव पाण्डवः ॥ ००६ ॥

वचनाद्देवराजस्य ततोऽस्मीहागतो द्रुतम् ।
अयं दुरात्मा बद्धश्च गमिष्यामि सुरालयम् ॥ ००७ ॥

अर्जुन उवाच ॥

उत्सृज्यतां चित्रसेन भ्रातास्माकं सुयोधनः ।
धर्मराजस्य संदेशान्मम चेदिच्छसि प्रियम् ॥ ००८ ॥

चित्रसेन उवाच ॥

पापोऽयं नित्यसंदुष्टो न विमोक्षणमर्हति ।
प्रलब्धा धर्मराजस्य कृष्णायाश्च धनञ्जय ॥ ००९ ॥

नेदं चिकीर्षितं तस्य कुन्तीपुत्रो महाव्रतः ।
जानाति धर्मराजो हि श्रुत्वा कुरु यथेच्छसि ॥ ०१० ॥

वैशंपायन उवाच ॥

ते सर्व एव राजानमभिजग्मुर्युधिष्ठिरम् ।
अभिगम्य च तत्सर्वं शशंसुस्तस्य दुष्कृतम् ॥ ०११ ॥

अजातशत्रुस्तच्छ्रुत्वा गन्धर्वस्य वचस्तदा ।
मोक्षयामास तान्सर्वान्गन्धर्वान्प्रशशंस च ॥ ०१२ ॥

दिष्ट्या भवद्भिर्बलिभिः शक्तैः सर्वैर्न हिंसितः ।
दुर्वृत्तो धार्तराष्ट्रोऽयं सामात्यज्ञातिबान्धवः ॥ ०१३ ॥

उपकारो महांस्तात कृतोऽयं मम खेचराः ।
कुलं न परिभूतं मे मोक्षेणास्य दुरात्मनः ॥ ०१४ ॥

आज्ञापयध्वमिष्टानि प्रीयामो दर्शनेन वः ।
प्राप्य सर्वानभिप्रायांस्ततो व्रजत माचिरम् ॥ ०१५ ॥

अनुज्ञातास्तु गन्धर्वाः पाण्डुपुत्रेण धीमता ।

सहाप्सरोभिः संहृष्टाश्चित्रसेनमुखा ययुः ॥ ०१६ ॥

देवराडपि गन्धर्वान्मृतांस्तान्समजीवयत् ।
दिव्येनामृतवर्षेण ये हताः कौरवैर्युधि ॥ ०१७ ॥

ज्ञातींस्तानवमुच्याथ राजदारांश्च सर्वशः ।
कृत्वा च दुष्करं कर्म प्रीतियुक्ताश्च पाण्डवाः ॥ ०१८ ॥

सस्त्रीकुमारैः कुरुभिः पूज्यमाना महारथाः ।
बभ्राजिरे महात्मानः कुरुमध्ये यथाग्नयः ॥ ०१९ ॥

ततो दुर्योधनं मुच्य भ्रातृभिः सहितं तदा ।
युधिष्ठिरः सप्रणयमिदं वचनमब्रवीत् ॥ ०२० ॥

मा स्म तात पुनः कार्षीरीदृशं साहसं क्वचित् ।
न हि साहसकर्तारः सुखमेधन्ति भारत ॥ ०२१ ॥

स्वस्तिमान्सहितः सर्वैर्भ्रातृभिः कुरुनन्दन ।
गृहान्व्रज यथाकामं वैमनस्यं च मा कृथाः ॥ ०२२ ॥

पाण्डवेनाभ्यनुज्ञातो राजा दुर्योधनस्तदा ।
विदीर्यमाणो व्रीडेन जगाम नगरं प्रति ॥ ०२३ ॥

तस्मिन्गते कौरवेये कुन्तीपुत्रो युधिष्ठिरः ।
भ्रातृभिः सहितो वीरः पूज्यमानो द्विजातिभिः ॥ ०२४ ॥

तपोधनैश्च तैः सर्वैर्वृतः शक्र इवामरैः ।
वने द्वैतवने तस्मिन्विजहार मुदा युतः ॥ ०२५ ॥

# अध्याय २३६

जनमेजय उवाच ॥

शत्रुभिर्जितबद्धस्य पाण्डवैश्च महात्मभिः ।
मोक्षितस्य युधा पश्चान्मानस्थस्य दुरात्मनः ॥ ००१ ॥

कत्थनस्यावलिप्तस्य गर्वितस्य च नित्यशः ।
सदा च पौरुषौदार्यैः पाण्डवानवमन्यतः ॥ ००२ ॥

दुर्योधनस्य पापस्य नित्याहङ्कारवादिनः ।
प्रवेशो हास्तिनपुरे दुष्करः प्रतिभाति मे ॥ ००३ ॥

तस्य लज्जान्वितस्यैव शोकव्याकुलचेतसः ।
प्रवेशं विस्तरेण त्वं वैशंपायन कीर्तय ॥ ००४ ॥

वैशंपायन उवाच ॥

धर्मराजनिसृष्टस्तु धार्तराष्ट्रः सुयोधनः ।
लज्जयाधोमुखः सीदन्नुपासर्पत्सुदुःखितः ॥ ००५ ॥

स्वपुरं प्रययौ राजा चतुरङ्गबलानुगः ।
शोकोपहतया बुद्ध्या चिन्तयानः पराभवम् ॥ ००६ ॥

विमुच्य पथि यानानि देशे सुयवसोदके ।
संनिविष्टः शुभे रम्ये भूमिभागे यथेप्सितम् ॥ ००७ ॥

हस्त्यश्वरथपादातं यथास्थानं न्यवेशयत् ॥ ००७ ॥

अथोपविष्टं राजानं पर्यङ्के ज्वलनप्रभे ।
उपप्लुतं यथा सोमं राहुणा रात्रिसङ्क्षये ॥ ००८ ॥

उपगम्याब्रवीत्कर्णो दुर्योधनमिदं तदा ॥ ००८ ॥

दिष्ट्या जीवसि गान्धारे दिष्ट्या नः सङ्गमः पुनः ।
दिष्ट्या त्वया जिताश्चैव गन्धर्वाः कामरूपिणः ॥ ००९ ॥

दिष्ट्या समग्रान्पश्यामि भ्रातॄंस्ते कुरुनन्दन ।
विजिगीषून्रणान्मुक्तान्निर्जितारीन्महारथान् ॥ ०१० ॥

अहं त्वभिद्रुतः सर्वैर्गन्धर्वैः पश्यतस्तव ।
नाशक्नुवं स्थापयितुं दीर्यमाणां स्ववाहिनीम् ॥ ०११ ॥

शरक्षताङ्गश्च भृशं व्यपयातोऽभिपीडितः ।
इदं त्वत्यद्भुतं मन्ये यद्युष्मानिह भारत ॥ ०१२ ॥

अरिष्टानक्षतांश्चापि सदारधनवाहनान् ।
विमुक्तान्संप्रपश्यामि तस्माद्युद्धादमानुषात् ॥ ०१३ ॥

नैतस्य कर्ता लोकेऽस्मिन्पुमान्विद्येत भारत ।
यत्कृतं ते महाराज सह भ्रातृभिराहवे ॥ ०१४ ॥

एवमुक्तस्तु कर्णेन राजा दुर्योधनस्तदा ।
उवाचावाक्शिरा राजन्बाष्पगद्गदया गिरा ॥ ०१५ ॥

---

# अध्याय २३७

दुर्योधन उवाच ॥

अजानतस्ते राधेय नाभ्यसूयाम्यहं वचः ।
जानासि त्वं जिताञ्शत्रून्गन्धर्वांस्तेजसा मया ॥ ००१ ॥

आयोधितास्तु गन्धर्वाः सुचिरं सोदरैर्मम ।
मया सह महाबाहो कृतश्चोभयतः क्षयः ॥ ००२ ॥

मायाधिकास्त्वयुध्यन्त यदा शूरा वियद्गताः ।
तदा नो नसमं युद्धमभवत्सह खेचरैः ॥ ००३ ॥

पराजयं च प्राप्ताः स्म रणे बन्धनमेव च ।
सभृत्यामात्यपुत्राश्च सदारधनवाहनाः ॥ ००४ ॥

उच्चैराकाशमार्गेण ह्रियामस्तैः सुदुःखिताः ॥ ००४ ॥

अथ नः सैनिकाः केचिदमात्याश्च महारथान् ।
उपगम्याब्रुवन्दीनाः पाण्डवाञ्शरणप्रदान् ॥ ००५ ॥

एष दुर्योधनो राजा धार्तराष्ट्रः सहानुजः ।
सामात्यदारो ह्रियते गन्धर्वैर्दिवमास्थितैः ॥ ००६ ॥

तं मोक्षयत भद्रं वः सहदारं नराधिपम् ।
परामर्शो मा भविष्यत्कुरुदारेषु सर्वशः ॥ ००७ ॥

एवमुक्ते तु धर्मात्मा ज्येष्ठः पाण्डुसुतस्तदा ।
प्रसाद्य सोदरान्सर्वानाज्ञापयत मोक्षणे ॥ ००८ ॥

अथागम्य तमुद्देशं पाण्डवाः पुरुषर्षभाः ।
सान्त्वपूर्वमयाचन्त शक्ताः सन्तो महारथाः ॥ ००९ ॥

यदा चास्मान्न मुमुचुर्गन्धर्वाः सान्त्विता अपि ।

ततोऽर्जुनश्च भीमश्च यमजौ च बलोत्कटौ ॥ ०१० ॥

मुमुचुः शरवर्षाणि गन्धर्वान्प्रत्यनेकशः ॥ ०१० ॥

अथ सर्वे रणं मुक्त्वा प्रयाताः खचरा दिवम् ।
अस्मानेवाभिकर्षन्तो दीनान्मुदितमानसाः ॥ ०११ ॥

ततः समन्तात्पश्यामि शरजालेन वेष्टितम् ।
अमानुषाणि चास्त्राणि प्रयुञ्जानं धनञ्जयम् ॥ ०१२ ॥

समावृता दिशो दृष्ट्वा पाण्डवेन शितैः शरैः ।
धनञ्जयसखात्मानं दर्शयामास वै तदा ॥ ०१३ ॥

चित्रसेनः पाण्डवेन समाश्लिष्य परंतपः ।
कुशलं परिपप्रच्छ तैः पृष्टश्चाप्यनामयम् ॥ ०१४ ॥

ते समेत्य तथान्योन्यं संनाहान्विप्रमुच्य च ।
एकीभूतास्ततो वीरा गन्धर्वाः सह पाण्डवैः ॥ ०१५ ॥

अपूजयेतामन्योन्यं चित्रसेनधनञ्जयौ ॥ ०१५ ॥

---

# अध्याय २३८

दुर्योधन उवाच ॥

चित्रसेनं समागम्य प्रहसन्नर्जुनस्तदा ।
इदं वचनमक्लीबमब्रवीत्परवीरहा ॥ ००१ ॥

भ्रातॄनर्हसि नो वीर मोक्तुं गन्धर्वसत्तम ।
अनर्हा धर्षणं हीमे जीवमानेषु पाण्डुषु ॥ ००२ ॥

एवमुक्तस्तु गन्धर्वः पाण्डवेन महात्मना ।
उवाच यत्कर्ण वयं मन्त्रयन्तो विनिर्गताः ॥ ००३ ॥

द्रष्टारः स्म सुखाद्धीनान्सदारान्पाण्डवानिति ॥ ००३ ॥

तस्मिन्नुच्चार्यमाणे तु गन्धर्वेण वचस्यथ ।
भूमेर्विवरमन्वैच्छं प्रवेष्टुं व्रीडयान्वितः ॥ ००४ ॥

युधिष्ठिरमथागम्य गन्धर्वाः सह पाण्डवैः ।
अस्मद्दुर्मन्त्रितं तस्मै बद्धांश्चास्मान्न्यवेदयन् ॥ ००५ ॥

स्त्रीसमक्षमहं दीनो बद्धः शत्रुवशं गतः ।
युधिष्ठिरस्योपहृतः किं नु दुःखमतः परम् ॥ ००६ ॥

ये मे निराकृता नित्यं रिपुर्येषामहं सदा ।
तैर्मोक्षितोऽहं दुर्बुद्धिर्दत्तं तैर्जीवितं च मे ॥ ००७ ॥

प्राप्तः स्यां यद्यहं वीर वधं तस्मिन्महारणे ।
श्रेयस्तद्भविता मह्यमेवंभूतं न जीवितम् ॥ ००८ ॥

भवेद्यशः पृथिव्यां मे ख्यातं गन्धर्वतो वधात् ।
प्राप्ताश्च लोकाः पुण्याः स्युर्महेन्द्रसदनेऽक्षयाः ॥ ००९ ॥

यत्त्वद्य मे व्यवसितं तच्छृणुध्वं नरर्षभाः ।
इह प्रायमुपासिष्ये यूयं व्रजत वै गृहान् ॥ ०१० ॥

भ्रातरश्चैव मे सर्वे प्रयान्त्वद्य पुरं प्रति ॥ ०१० ॥

कर्णप्रभृतयश्चैव सुहृदो बान्धवाश्च ये ।
दुःशासनं पुरस्कृत्य प्रयान्त्वद्य पुरं प्रति ॥ ०११ ॥

न ह्यहं प्रतियास्यामि पुरं शत्रुनिराकृतः ।
शत्रुमानापहो भूत्वा सुहृदां मानकृत्तथा ॥ ०१२ ॥

स सुहृच्छोकदो भूत्वा शत्रूणां हर्षवर्धनः ।
वारणाह्वयमासाद्य किं वक्ष्यामि जनाधिपम् ॥ ०१३ ॥

भीष्मो द्रोणः कृपो द्रौणिर्विदुरः सञ्जयस्तथा ।
बाह्लीकः सोमदत्तश्च ये चान्ये वृद्धसंमताः ॥ ०१४ ॥

ब्राह्मणाः श्रेणिमुख्याश्च तथोदासीनवृत्तयः ।
किं मां वक्ष्यन्ति किं चापि प्रतिवक्ष्यामि तानहम् ॥ ०१५ ॥

रिपूणां शिरसि स्थित्वा तथा विक्रम्य चोरसि ।
आत्मदोषात्परिभ्रष्टः कथं वक्ष्यामि तानहम् ॥ ०१६ ॥

दुर्विनीताः श्रियं प्राप्य विद्यामैश्वर्यमेव च ।
तिष्ठन्ति न चिरं भद्रे यथाहं मदगर्वितः ॥ ०१७ ॥

अहो बत यथेदं मे कष्टं दुश्चरितं कृतम् ।
स्वयं दुर्बुद्धिना मोहाद्येन प्राप्तोऽस्मि संशयम् ॥ ०१८ ॥

तस्मात्प्रायमुपासिष्ये न हि शक्ष्यामि जीवितुम् ।
चेतयानो हि को जीवेत्कृच्छ्राच्छत्रुभिरुद्धृतः ॥ ०१९ ॥

शत्रुभिश्चावहसितो मानी पौरुषवर्जितः ।
पाण्डवैर्विक्रमाढ्यैश्च सावमानमवेक्षितः ॥ ०२० ॥

वैशंपायन उवाच ॥

एवं चिन्तापरिगतो दुःशासनमथाब्रवीत् ।
दुःशासन निबोधेदं वचनं मम भारत ॥ ०२१ ॥

प्रतीच्छ त्वं मया दत्तमभिषेकं नृपो भव ।
प्रशाधि पृथिवीं स्फीतां कर्णसौबलपालिताम् ॥ ०२२ ॥

भ्रातॄन्पालय विस्रब्धं मरुतो वृत्रहा यथा ।
बान्धवास्त्वोपजीवन्तु देवा इव शतक्रतुम् ॥ ०२३ ॥

ब्राह्मणेषु सदा वृत्तिं कुर्वीथाश्चाप्रमादतः ।
बन्धूनां सुहृदां चैव भवेथास्त्वं गतिः सदा ॥ ०२४ ॥

ज्ञातींश्चाप्यनुपश्येथा विष्णुर्देवगणानिव ।
गुरवः पालनीयास्ते गच्छ पालय मेदिनीम् ॥ ०२५ ॥

नन्दयन्सुहृदः सर्वाञ्शात्रवांश्चावभर्त्सयन् ।
कण्ठे चैनं परिष्वज्य गम्यतामित्युवाच ह ॥ ०२६ ॥

तस्य तद्वचनं श्रुत्वा दीनो दुःशासनोऽब्रवीत् ।
अश्रुकण्ठः सुदुःखार्तः प्राञ्जलिः प्रणिपत्य च ॥ ०२७ ॥

सगद्गदमिदं वाक्यं भ्रातरं ज्येष्ठमात्मनः ॥ ०२७ ॥

प्रसीदेत्यपतद्भूमौ दूयमानेन चेतसा ।
दुःखितः पादयोस्तस्य नेत्रजं जलमुत्सृजन् ॥ ०२८ ॥

उक्तवांश्च नरव्याघ्रो नैतदेवं भविष्यति ।
विदीर्येत्सनगा भूमिर्द्यौश्चापि शकलीभवेत् ॥ ०२९ ॥

रविरात्मप्रभां जह्यात्सोमः शीतांशुतां त्यजेत् ॥ ०२९ ॥

वायुः शैघ्र्यमथो जह्याद्धिमवांश्च परिव्रजेत् ।
शुष्येत्तोयं समुद्रेषु वह्निरप्युष्णतां त्यजेत् ॥ ०३० ॥

न चाहं त्वदृते राजन्प्रशासेयं वसुंधराम् ।
पुनः पुनः प्रसीदेति वाक्यं चेदमुवाच ह ॥ ०३१ ॥

त्वमेव नः कुले राजा भविष्यसि शतं समाः ॥ ०३१ ॥

एवमुक्त्वा स राजेन्द्र सस्वनं प्ररुरोद ह ।
पादौ सङ्गृह्य मानार्हौ भ्रातुर्ज्येष्ठस्य भारत ॥ ०३२ ॥

तथा तौ दुःखितौ दृष्ट्वा दुःशासनसुयोधनौ ।
अभिगम्य व्यथाविष्टः कर्णस्तौ प्रत्यभाषत ॥ ०३३ ॥

विषीदथः किं कौरव्यौ बालिश्यात्प्राकृताविव ।
न शोकः शोचमानस्य विनिवर्तेत कस्यचित् ॥ ०३४ ॥

यदा च शोचतः शोको व्यसनं नापकर्षति ।
सामर्थ्यं किं त्वतः शोके शोचमानौ प्रपश्यथः ॥ ०३५ ॥

धृतिं गृह्णीत मा शत्रूञ्शोचन्तौ नन्दयिष्यथः ॥ ०३५ ॥

कर्तव्यं हि कृतं राजन्पाण्डवैस्तव मोक्षणम् ।
नित्यमेव प्रियं कार्यं राज्ञो विषयवासिभिः ॥ ०३६ ॥

पाल्यमानास्त्वया ते हि निवसन्ति गतज्वराः ॥ ०३६ ॥

नार्हस्येवङ्गते मन्युं कर्तुं प्राकृतवद्यथा ।
विषण्णास्तव सोदर्यास्त्वयि प्रायं समास्थिते ॥ ०३७ ॥

उत्तिष्ठ व्रज भद्रं ते समाश्वासय सोदरान्  ॥ ०३७  ॥

राजन्नद्यावगच्छामि तवेह लघुसत्त्वताम् ।
किमत्र चित्रं यद्वीर मोक्षितः पाण्डवैरसि  ॥ ०३८  ॥

सद्यो वशं समापन्नः शत्रूणां शत्रुकर्शन  ॥ ०३८  ॥

सेनाजीवैश्च कौरव्य तथा विषयवासिभिः ।
अज्ञातैर्यदि वा ज्ञातैः कर्तव्यं नृपतेः प्रियम्  ॥ ०३९  ॥

प्रायः प्रधानाः पुरुषाः क्षोभयन्त्यरिवाहिनीम् ।
निगृह्यन्ते च युद्धेषु मोक्ष्यन्ते च स्वसैनिकैः  ॥ ०४०  ॥

सेनाजीवाश्च ये राज्ञां विषये सन्ति मानवाः ।
तैः सङ्गम्य नृपार्थाय यतितव्यं यथातथम्  ॥ ०४१  ॥

यद्येवं पाण्डवै राजन्भवद्विषयवासिभिः ।
यदृच्छया मोक्षितोऽद्य तत्र का परिदेवना  ॥ ०४२  ॥

न चैतत्साधु यद्राजन्पाण्डवास्त्वां नृपोत्तम ।
स्वसेनया संप्रयान्तं नानुयान्ति स्म पृष्ठतः  ॥ ०४३  ॥

शूराश्च बलवन्तश्च संयुगेष्वपलायिनः ।
भवतस्ते सभायां वै प्रेष्यतां पूर्वमागताः  ॥ ०४४  ॥

पाण्डवेयानि रत्नानि त्वमद्याप्युपभुञ्जसे ।
सत्त्वस्थान्पाण्डवान्पश्य न ते प्रायमुपाविशन्  ॥ ०४५  ॥

उत्तिष्ठ राजन्भद्रं ते न चिन्तां कर्तुमर्हसि  ॥ ०४५  ॥

अवश्यमेव नृपते राज्ञो विषयवासिभिः ।

प्रियाण्याचरितव्यानि तत्र का परिदेवना ॥ ०४६ ॥

मद्वाक्यमेतद्राजेन्द्र यद्येवं न करिष्यसि ।
स्थास्यामीह भवत्पादौ शुश्रूषन्नरिमर्दन ॥ ०४७ ॥

नोत्सहे जीवितुमहं त्वद्विहीनो नरर्षभ ।
प्रायोपविष्टस्तु नृप राज्ञां हास्यो भविष्यसि ॥ ०४८ ॥

वैशंपायन उवाच ॥

एवमुक्तस्तु कर्णेन राजा दुर्योधनस्तदा ।
नैवोत्थातुं मनश्चक्रे स्वर्गाय कृतनिश्चयः ॥ ०४९ ॥

---

# अध्याय २३९

वैशंपायन उवाच ॥

प्रायोपविष्टं राजानं दुर्योधनममर्षणम् ।
उवाच सान्त्वयन्राजञ्शकुनिः सौबलस्तदा ॥ ००१ ॥

सम्यगुक्तं हि कर्णेन तच्छ्रुतं कौरव त्वया ।
मयाहृतां श्रियं स्फीतां मोहात्समपहाय किम् ॥ ००२ ॥

त्वमबुद्ध्या नृपवर प्राणानुत्स्रष्टुमिच्छसि ॥ ००२ ॥

अद्य चाप्यवगच्छामि न वृद्धाः सेवितास्त्वया ।
यः समुत्पतितं हर्षं दैन्यं वा न नियच्छति ॥ ००३ ॥

स नश्यति श्रियं प्राप्य पात्रमाममिवाम्भसि ॥ ००३ ॥

अतिभीरुमतिक्लीबं दीर्घसूत्रं प्रमादिनम् ।
व्यसनाद्विषयाक्रान्तं न भजन्ति नृपं श्रियः ॥ ००४ ॥

सत्कृतस्य हि ते शोको विपरीते कथं भवेत् ।
मा कृतं शोभनं पार्थैः शोकमालम्ब्य नाशय ॥ ००५ ॥

यत्र हर्षस्त्वया कार्यः सत्कर्तव्याश्च पाण्डवाः ।
तत्र शोचसि राजेन्द्र विपरीतमिदं तव ॥ ००६ ॥

प्रसीद मा त्यजात्मानं तुष्टश्च सुकृतं स्मर ।
प्रयच्छ राज्यं पार्थानां यशो धर्ममवाप्नुहि ॥ ००७ ॥

क्रियामेतां समाज्ञाय कृतघ्नो न भविष्यसि ।
सौभ्रात्रं पाण्डवैः कृत्वा समवस्थाप्य चैव तान् ॥ ००८ ॥

पित्र्यं राज्यं प्रयच्छैषां ततः सुखमवाप्नुहि ॥ ००८ ॥

शकुनेस्तु वचः श्रुत्वा दुःशासनमवेक्ष्य च ।
पादयोः पतितं वीरं विक्लवं भ्रातृसौहृदात् ॥ ००९ ॥

बाहुभ्यां साधुजाताभ्यां दुःशासनमरिंदमम् ।
उत्थाप्य संपरिष्वज्य प्रीत्याजिघ्रत मूर्धनि ॥ ०१० ॥

कर्णसौबलयोश्चापि संस्मृत्य वचनान्यसौ ।
निर्वेदं परमं गत्वा राजा दुर्योधनस्तदा ॥ ०११ ॥

व्रीडयाभिपरीतात्मा नैराश्यमगमत्परम् ॥ ०११ ॥

सुहृदां चैव तच्छ्रुत्वा समन्युरिदमब्रवीत् ।

न धर्मधनसौख्येन नैश्वर्येण न चाज्ञया ॥ ०१२ ॥

नैव भोगैश्च मे कार्यं मा विहन्यत गच्छत ॥ ०१२ ॥

निश्चितेयं मम मतिः स्थिता प्रायोपवेशने ।
गच्छध्वं नगरं सर्वे पूज्याश्च गुरवो मम ॥ ०१३ ॥

त एवमुक्ताः प्रत्यूचू राजानमरिमर्दनम् ।
या गतिस्तव राजेन्द्र सास्माकमपि भारत ॥ ०१४ ॥

कथं वा संप्रवेक्ष्यामस्त्वद्विहीनाः पुरं वयम् ॥ ०१४ ॥

स सुहृद्भिरमात्यैश्च भ्रातृभिः स्वजनेन च ।
बहुप्रकारमप्युक्तो निश्चयान्न व्यचाल्यत ॥ ०१५ ॥

दर्भप्रस्तरमास्तीर्य निश्चयाद्धृतराष्ट्रजः ।
संस्पृश्यापः शुचिर्भूत्वा भूतलं समुपाश्रितः ॥ ०१६ ॥

कुशाचीराम्बरधरः परं नियममास्थितः ।
वाग्यतो राजशार्दूलः स स्वर्गगतिकाङ्क्षया ॥ ०१७ ॥

मनसोपचितिं कृत्वा निरस्य च बहिष्क्रियाः ॥ ०१७ ॥

अथ तं निश्चयं तस्य बुद्धा दैतेयदानवाः ।
पातालवासिनो रौद्राः पूर्वं देवैर्विनिर्जिताः ॥ ०१८ ॥

ते स्वपक्षक्षयं तं तु ज्ञात्वा दुर्योधनस्य वै ।
आह्वानाय तदा चक्रुः कर्म वैतानसंभवम् ॥ ०१९ ॥

बृहस्पत्युशनोक्तैश्च मन्त्रैर्मन्त्रविशारदाः ।
अथर्ववेदप्रोक्तैश्च याश्चोपनिषदि क्रियाः ॥ ०२० ॥

मन्त्रजप्यसमायुक्तास्तास्तदा समवर्तयन् ॥ ०२० ॥

जुह्वत्यग्नौ हविः क्षीरं मन्त्रवत्सुसमाहिताः ।
ब्राह्मणा वेदवेदाङ्गपारगाः सुदृढव्रताः ॥ ०२१ ॥

कर्मसिद्धौ तदा तत्र जृम्भमाणा महाद्भुता ।
कृत्या समुत्थिता राजन्किं करोमीति चाब्रवीत् ॥ ०२२ ॥

आहुर्दैत्याश्च तां तत्र सुप्रीतेनान्तरात्मना ।
प्रायोपविष्टं राजानं धार्तराष्ट्रमिहानय ॥ ०२३ ॥

तथेति च प्रतिश्रुत्य सा कृत्या प्रययौ तदा ।
निमेषादगमच्चापि यत्र राजा सुयोधनः ॥ ०२४ ॥

समादाय च राजानं प्रविवेश रसातलम् ।
दानवानां मुहूर्ताच्च तमानीतं न्यवेदयत् ॥ ०२५ ॥

तमानीतं नृपं दृष्ट्वा रात्रौ संहत्य दानवाः ।
प्रहृष्टमनसः सर्वे किञ्चिदुत्फुल्ललोचनाः ॥ ०२६ ॥

साभिमानमिदं वाक्यं दुर्योधनमथाब्रुवन् ॥ ०२६ ॥

---

# अध्याय २४०

दानवा ऊचुः ॥

भोः सुयोधन राजेन्द्र भरतानां कुलोद्वह ।

शूरैः परिवृतो नित्यं तथैव च महात्मभिः ॥ ००१ ॥

अकार्षीः साहसमिदं कस्मात्प्रायोपवेशनम् ।
आत्मत्यागी ह्यवाग्याति वाच्यतां चायशस्करीम् ॥ ००२ ॥

न हि कार्यविरुद्धेषु बह्वपायेषु कर्मसु ।
मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ ००३ ॥

नियच्छैतां मतिं राजन्धर्मार्थसुखनाशिनीम् ।
यशःप्रतापधैर्यघ्नीं शत्रूणां हर्षवर्धनीम् ॥ ००४ ॥

श्रूयतां च प्रभो तत्त्वं दिव्यतां चात्मनो नृप ।
निर्माणं च शरीरस्य ततो धैर्यमवाप्नुहि ॥ ००५ ॥

पुरा त्वं तपसास्माभिर्लब्धो देवान्महेश्वरात् ।
पूर्वकायश्च सर्वस्ते निर्मितो वज्रसञ्चयैः ॥ ००६ ॥

अस्त्रैरभेद्यः शस्त्रैश्चाप्यधःकायश्च तेऽनघ ।
कृतः पुष्पमयो देव्या रूपतः स्त्रीमनोहरः ॥ ००७ ॥

एवमीश्वरसंयुक्तस्तव देहो नृपोत्तम ।
देव्या च राजशार्दूल दिव्यस्त्वं हि न मानुषः ॥ ००८ ॥

क्षत्रियाश्च महावीर्या भगदत्तपुरोगमाः ।
दिव्यास्त्रविदुषः शूराः क्षपयिष्यन्ति ते रिपून् ॥ ००९ ॥

तदलं ते विषादेन भयं तव न विद्यते ।
साह्यार्थं च हि ते वीराः संभूता भुवि दानवाः ॥ ०१० ॥

भीष्मद्रोणकृपादींश्च प्रवेक्ष्यन्त्यपरेऽसुराः ।
यैराविष्टा घृणां त्यक्त्वा योत्स्यन्ते तव वैरिभिः ॥ ०११ ॥

नैव पुत्रान्न च भ्रातॄन्न पितॄन्न च बान्धवान् ।
नैव शिष्यान्न च ज्ञातीन्न बालान्स्थविरान्न च ॥ ०१२ ॥

युधि संप्रहरिष्यन्तो मोक्ष्यन्ति कुरुसत्तम ।
निःस्नेहा दानवाविष्टाः समाक्रान्तेऽन्तरात्मनि ॥ ०१३ ॥

प्रहरिष्यन्ति बन्धुभ्यः स्नेहमुत्सृज्य दूरतः ।
हृष्टाः पुरुषशार्दूलाः कलुषीकृतमानसाः ॥ ०१४ ॥

अविज्ञानविमूढाश्च दैवाच्च विधिनिर्मितात् ॥ ०१४ ॥

व्याभाषमाणाश्चान्योन्यं न मे जीवन्विमोक्ष्यसे ।
सर्वशस्त्रास्त्रमोक्षेण पौरुषे समवस्थिताः ॥ ०१५ ॥

श्लाघमानाः कुरुश्रेष्ठ करिष्यन्ति जनक्षयम् ॥ ०१५ ॥

तेऽपि शक्त्या महात्मानः प्रतियोत्स्यन्ति पाण्डवाः ।
वधं चैषां करिष्यन्ति दैवयुक्ता महाबलाः ॥ ०१६ ॥

दैत्यरक्षोगणाश्चापि संभूताः क्षत्रयोनिषु ।
योत्स्यन्ति युधि विक्रम्य शत्रुभिस्तव पार्थिव ॥ ०१७ ॥

गदाभिर्मुसलैः खड्गैः शस्त्रैरुच्चावचैस्तथा ॥ ०१७ ॥

यच्च तेऽन्तर्गतं वीर भयमर्जुनसंभवम् ।
तत्रापि विहितोऽस्माभिर्वधोपायोऽर्जुनस्य वै ॥ ०१८ ॥

हतस्य नरकस्यात्मा कर्णमूर्तिमुपाश्रितः ।
तद्वैरं संस्मरन्वीर योत्स्यते केशवार्जुनौ ॥ ०१९ ॥

स ते विक्रमशौण्डीरो रणे पार्थं विजेष्यति ।
कर्णः प्रहरतां श्रेष्ठः सर्वांश्चारीन्महारथः ॥ ०२० ॥

ज्ञात्वैतच्छद्मना वज्री रक्षार्थं सव्यसाचिनः ।
कुण्डले कवचं चैव कर्णस्यापहरिष्यति ॥ ०२१ ॥

तस्मादस्माभिरप्यत्र दैत्याः शतसहस्रशः ।
नियुक्ता राक्षसाश्चैव ये ते संशप्तका इति ॥ ०२२ ॥

प्रख्यातास्तेऽर्जुनं वीरं निहनिष्यन्ति मा शुचः ॥ ०२२ ॥

असपत्ना त्वया हीयं भोक्तव्या वसुधा नृप ।
मा विषादं नयस्वास्मान्नैतत्त्वय्युपपद्यते ॥ ०२३ ॥

विनष्टे त्वयि चास्माकं पक्षो हीयेत कौरव ॥ ०२३ ॥

गच्छ वीर न ते बुद्धिरन्या कार्या कथञ्चन ।
त्वमस्माकं गतिर्नित्यं देवतानां च पाण्डवाः ॥ ०२४ ॥

वैशंपायन उवाच ॥

एवमुक्त्वा परिष्वज्य दैत्यास्तं राजकुञ्जरम् ।
समाश्वास्य च दुर्धर्षं पुत्रवद्दानवर्षभाः ॥ ०२५ ॥

स्थिरां कृत्वा बुद्धिमस्य प्रियाण्युक्त्वा च भारत ।
गम्यतामित्यनुज्ञाय जयमाप्नुहि चेत्यथ ॥ ०२६ ॥

तैर्विसृष्टं महाबाहुं कृत्या सैवानयत्पुनः ।
तमेव देशं यत्रासौ तदा प्रायमुपाविशत् ॥ ०२७ ॥

प्रतिनिक्षिप्य तं वीरं कृत्या समभिपूज्य च ।

अनुज्ञाता च राज्ञा सा तत्रैवान्तरधीयत ॥ ०२८ ॥

गतायामथ तस्यां तु राजा दुर्योधनस्तदा ।
स्वप्नभूतमिदं सर्वमचिन्तयत भारत ॥ ०२९ ॥

विजेष्यामि रणे पाण्डूनिति तस्याभवन्मतिः ॥ ०२९ ॥

कर्णं संशप्तकांश्चैव पार्थस्यामित्रघातिनः ।
अमन्यत वधे युक्तान्समर्थांश्च सुयोधनः ॥ ०३० ॥

एवमाशा दृढा तस्य धार्तराष्ट्रस्य दुर्मतेः ।
विनिर्जये पाण्डवानामभवद्भरतर्षभ ॥ ०३१ ॥

कर्णोऽप्याविष्टचित्तात्मा नरकस्यान्तरात्मना ।
अर्जुनस्य वधे क्रूरामकरोत्स मतिं तदा ॥ ०३२ ॥

संशप्तकाश्च ते वीरा राक्षसाविष्टचेतसः ।
रजस्तमोभ्यामाक्रान्ताः फल्गुनस्य वधैषिणः ॥ ०३३ ॥

भीष्मद्रोणकृपाद्याश्च दानवाक्रान्तचेतसः ।
न तथा पाण्डुपुत्राणां स्नेहवन्तो विशां पते ॥ ०३४ ॥

न चाचचक्षे कस्मैचिदेतद्राजा सुयोधनः ॥ ०३४ ॥

दुर्योधनं निशान्ते च कर्णो वैकर्तनोऽब्रवीत् ।
स्मयन्निवाञ्जलिं कृत्वा पार्थिवं हेतुमद्वचः ॥ ०३५ ॥

न मृतो जयते शत्रूञ्जीवन्भद्राणि पश्यति ।
मृतस्य भद्राणि कुतः कौरवेय कुतो जयः ॥ ०३६ ॥

न कालोऽद्य विषादस्य भयस्य मरणस्य वा ॥ ०३६ ॥

परिष्वज्याब्रवीच्चैनं भुजाभ्यां स महाभुजः ।
उत्तिष्ठ राजन्किं शेषे कस्माच्छोचसि शत्रुहन् ॥ ०३७ ॥

शत्रून्प्रताप्य वीर्येण स कथं मर्तुमिच्छसि ॥ ०३७ ॥

अथ वा ते भयं जातं दृष्ट्वार्जुनपराक्रमम् ।
सत्यं ते प्रतिजानामि वधिष्यामि रणेऽर्जुनम् ॥ ०३८ ॥

गते त्रयोदशे वर्षे सत्येनायुधमालभे ।
आनयिष्याम्यहं पार्थान्वशं तव जनाधिप ॥ ०३९ ॥

एवमुक्तस्तु कर्णेन दैत्यानां वचनात्तथा ।
प्रणिपातेन चान्येषामुदतिष्ठत्सुयोधनः ॥ ०४० ॥

दैत्यानां तद्वचः श्रुत्वा हृदि कृत्वा स्थिरां मतिम् ॥ ०४० ॥

ततो मनुजशार्दूलो योजयामास वाहिनीम् ।
रथनागाश्वकलिलां पदातिजनसङ्कुलाम् ॥ ०४१ ॥

गङ्गौघप्रतिमा राजन्प्रयाता सा महाचमूः ।
श्वेतच्छत्रैः पताकाभिश्चामरैश्च सुपाण्डुरैः ॥ ०४२ ॥

रथैर्नागैः पदातैश्च शुशुभेऽतीव सङ्कुला ।
व्यपेताभ्रघने काले द्यौरिवाव्यक्तशारदी ॥ ०४३ ॥

जयाशीर्भिर्द्विजेन्द्रैस्तु स्तूयमानोऽधिराजवत् ।
गृह्णन्नञ्जलिमालाश्च धार्तराष्ट्रो जनाधिपः ॥ ०४४ ॥

सुयोधनो ययावग्रे श्रिया परमया ज्वलन् ।
कर्णेन सार्धं राजेन्द्र सौबलेन च देविना ॥ ०४५ ॥

दुःशासनाद्यश्चास्य भ्रातरः सर्व एव ते ।
भूरिश्रवाः सोमदत्तो महाराजश्च बाह्लिकः ॥ ०४६ ॥

रथैर्नानाविधाकारैर्हयैर्गजवरैस्तथा ।
प्रयान्तं नृपसिंहं तमनुजग्मुः कुरूद्वहाः ॥ ०४७ ॥

कालेनाल्पेन राजंस्ते विविशुः स्वपुरं तदा ॥ ०४७ ॥

---

# अध्याय २४१

जनमेजय उवाच ॥

वसमानेषु पार्थेषु वने तस्मिन्महात्मसु ।
धार्तराष्ट्रा महेष्वासाः किमकुर्वन्त सत्तम ॥ ००१ ॥

कर्णो वैकर्तनश्चापि शकुनिश्च महाबलः ।
भीष्मद्रोणकृपाश्चैव तन्मे शंसितुमर्हसि ॥ ००२ ॥

वैशंपायन उवाच ॥

एवं गतेषु पार्थेषु विसृष्टे च सुयोधने ।
आगते हास्तिनपुरं मोक्षिते पाण्डुनन्दनैः ॥ ००३ ॥

भीष्मोऽब्रवीन्महाराज धार्तराष्ट्रमिदं वचः ॥ ००३ ॥

उक्तं तात मया पूर्वं गच्छतस्ते तपोवनम् ।
गमनं मे न रुचितं तव तन्न कृतं च ते ॥ ००४ ॥

ततः प्राप्तं त्वया वीर ग्रहणं शत्रुभिर्बलात् ।
मोक्षितश्चासि धर्मज्ञैः पाण्डवैर्न च लज्जसे ॥ ००५ ॥

प्रत्यक्षं तव गान्धारे ससैन्यस्य विशां पते ।
सूतपुत्रोऽपयाद्भीतो गन्धर्वाणां तदा रणात् ॥ ००६ ॥

क्रोशतस्तव राजेन्द्र ससैन्यस्य नृपात्मज ॥ ००६ ॥

दृष्टस्ते विक्रमश्चैव पाण्डवानां महात्मनाम् ।
कर्णस्य च महाबाहो सूतपुत्रस्य दुर्मतेः ॥ ००७ ॥

न चापि पादभाक्कर्णः पाण्डवानां नृपोत्तम ।
धनुर्वेदे च शौर्ये च धर्मे वा धर्मवत्सल ॥ ००८ ॥

तस्य तेऽहं क्षमं मन्ये पाण्डवैस्तैर्महात्मभिः ।
संधिं संधिविदां श्रेष्ठ कुलस्यास्य विवृद्धये ॥ ००९ ॥

एवमुक्तस्तु भीष्मेण धार्तराष्ट्रो जनेश्वरः ।
प्रहस्य सहसा राजन्विप्रतस्थे ससौबलः ॥ ०१० ॥

तं तु प्रस्थितमाज्ञाय कर्णदुःशासनादयः ।
अनुजग्मुर्महेष्वासा धार्तराष्ट्रं महाबलम् ॥ ०११ ॥

तांस्तु संप्रस्थितान्दृष्ट्वा भीष्मः कुरुपितामहः ।
लज्जया व्रीडितो राजञ्जगाम स्वं निवेशनम् ॥ ०१२ ॥

गते भीष्मे महाराज धार्तराष्ट्रो जनाधिपः ।
पुनरागम्य तं देशममन्त्रयत मन्त्रिभिः ॥ ०१३ ॥

किमस्माकं भवेच्छ्रेयः किं कार्यमवशिष्यते ।

कथं नु सुकृतं च स्यान्मन्त्रयामास भारत ॥ ०१४ ॥

कर्ण उवाच ॥

दुर्योधन निबोधेदं यत्त्वा वक्ष्यामि कौरव ।
श्रुत्वा च तत्तथा सर्वं कर्तुमर्हस्यरिंदम ॥ ०१५ ॥

तवाद्य पृथिवी वीर निःसपत्ना नृपोत्तम ।
तां पालय यथा शक्रो हतशत्रुर्महामनाः ॥ ०१६ ॥

वैशंपायन उवाच ॥

एवमुक्तस्तु कर्णेन कर्णं राजाब्रवीत्पुनः ।
न किञ्चिद्दुर्लभं तस्य यस्य त्वं पुरुषर्षभ ॥ ०१७ ॥

सहायश्चानुरक्तश्च मदर्थं च समुद्यतः ।
अभिप्रायस्तु मे कश्चित्तं वै शृणु यथातथम् ॥ ०१८ ॥

राजसूयं पाण्डवस्य दृष्ट्वा क्रतुवरं तदा ।
मम स्पृहा समुत्पन्ना तां संपादय सूतज ॥ ०१९ ॥

एवमुक्तस्ततः कर्णो राजानमिदमब्रवीत् ।
तवाद्य पृथिवीपाला वश्याः सर्वे नृपोत्तम ॥ ०२० ॥

आहूयन्तां द्विजवराः संभाराश्च यथाविधि ।
संभ्रियन्तां कुरुश्रेष्ठ यज्ञोपकरणानि च ॥ ०२१ ॥

ऋत्विजश्च समाहूता यथोक्तं वेदपारगाः ।
क्रियां कुर्वन्तु ते राजन्यथाशास्त्रमरिंदम ॥ ०२२ ॥

बह्वन्नपानसंयुक्तः सुसमृद्धगुणान्वितः ।

प्रवर्ततां महायज्ञस्तवापि भरतर्षभ ॥ ०२३ ॥

एवमुक्तस्तु कर्णेन धार्तराष्ट्रो विशां पते ।
पुरोहितं समानाय्य इदं वचनमब्रवीत् ॥ ०२४ ॥

राजसूयं क्रतुश्रेष्ठं समाप्तवरदक्षिणम् ।
आहर त्वं मम कृते यथान्यायं यथाक्रमम् ॥ ०२५ ॥

स एवमुक्तो नृपतिमुवाच द्विजपुङ्गवः ।
न स शक्यः क्रतुश्रेष्ठो जीवमाने युधिष्ठिरे ॥ ०२६ ॥

आहर्तुं कौरवश्रेष्ठ कुले तव नृपोत्तम ॥ ०२६ ॥

दीर्घायुर्जीवति च वै धृतराष्ट्रः पिता तव ।
अतश्चापि विरुद्धस्ते क्रतुरेष नृपोत्तम ॥ ०२७ ॥

अस्ति त्वन्यन्महत्सत्रं राजसूयसमं प्रभो ।
तेन त्वं यज राजेन्द्र शृणु चेदं वचो मम ॥ ०२८ ॥

य इमे पृथिवीपालाः करदास्तव पार्थिव ।
ते करान्संप्रयच्छन्तु सुवर्णं च कृताकृतम् ॥ ०२९ ॥

तेन ते क्रियतामद्य लाङ्गलं नृपसत्तम ।
यज्ञवाटस्य ते भूमिः कृष्यतां तेन भारत ॥ ०३० ॥

तत्र यज्ञो नृपश्रेष्ठ प्रभूतान्नः सुसंस्कृतः ।
प्रवर्ततां यथान्यायं सर्वतो ह्यनिवारितः ॥ ०३१ ॥

एष ते वैष्णवो नाम यज्ञः सत्पुरुषोचितः ।
एतेन नेष्टवान्कश्चिदृते विष्णुं पुरातनम् ॥ ०३२ ॥

राजसूयं क्रतुश्रेष्ठं स्पर्धत्येष महाक्रतुः ।
अस्माकं रोचते चैव श्रेयश्च तव भारत ॥ ०३३ ॥

अविघ्नश्च भवेदेष सफला स्यात्स्पृहा तव ॥ ०३३ ॥

एवमुक्तस्तु तैर्विप्रैर्धार्तराष्ट्रो महीपतिः ।
कर्णं च सौबलं चैव भ्रातृंश्चैवेदमब्रवीत् ॥ ०३४ ॥

रोचते मे वचः कृत्स्नं ब्राह्मणानां न संशयः ।
रोचते यदि युष्माकं तन्मा प्रब्रूत माचिरम् ॥ ०३५ ॥

एवमुक्तास्तु ते सर्वे तथेत्यूचुर्नराधिपम् ।
संदिदेश ततो राजा व्यापारस्थान्यथाक्रमम् ॥ ०३६ ॥

हलस्य करणे चापि व्यादिष्टाः सर्वशिल्पिनः ।
यथोक्तं च नृपश्रेष्ठ कृतं सर्वं यथाक्रमम् ॥ ०३७ ॥

---

# अध्याय २४२

वैशंपायन उवाच ॥

ततस्तु शिल्पिनः सर्वे अमात्यप्रवराश्च ह ।
विदुरश्च महाप्राज्ञो धार्तराष्ट्रे न्यवेदयत् ॥ ००१ ॥

सज्जं क्रतुवरं राजन्कालप्राप्तं च भारत ।
सौवर्णं च कृतं दिव्यं लाङ्गलं सुमहाधनम् ॥ ००२ ॥

एतच्छ्रुत्वा नृपश्रेष्ठो धार्तराष्ट्रो विशां पते ।
आज्ञापयामास नृपः क्रतुराजप्रवर्तनम् ॥ ००३ ॥

ततः प्रववृते यज्ञः प्रभूतान्नः सुसंस्कृतः ।
दीक्षितश्चापि गान्धारिर्यथाशास्त्रं यथाक्रमम् ॥ ००४ ॥

प्रहृष्टो धृतराष्ट्रोऽभूद्विदुरश्च महायशाः ।
भीष्मो द्रोणः कृपः कर्णो गान्धारी च यशस्विनी ॥ ००५ ॥

निमन्त्रणार्थं दूतांश्च प्रेषयामास शीघ्रगान् ।
पार्थिवानां च राजेन्द्र ब्राह्मणानां तथैव च ॥ ००६ ॥

ते प्रयाता यथोद्दिष्टं दूतास्त्वरितवाहनाः ॥ ००६ ॥

तत्र कश्चित्प्रयातं तु दूतं दुःशासनोऽब्रवीत् ।
गच्छ द्वैतवनं शीघ्रं पाण्डवान्पापपूरुषान् ॥ ००७ ॥

निमन्त्र्य यथान्यायं विप्रांस्तस्मिन्महावने ॥ ००७ ॥

स गत्वा पाण्डवावासमुवाचाभिप्रणम्य तान् ।
दुर्योधनो महाराज यजते नृपसत्तमः ॥ ००८ ॥

स्ववीर्यार्जितमर्थौघमवाप्य कुरुनन्दनः ।
तत्र गच्छन्ति राजानो ब्राह्मणाश्च ततस्ततः ॥ ००९ ॥

अहं तु प्रेषितो राजन्कौरवेण महात्मना ।
आमन्त्रयति वो राजा धार्तराष्ट्रो जनेश्वरः ॥ ०१० ॥

मनोऽभिलषितं राज्ञस्तं क्रतुं द्रष्टुमर्हथ ॥ ०१० ॥

ततो युधिष्ठिरो राजा तच्छ्रुत्वा दूतभाषितम् ।

अब्रवीन्नृपशार्दूलो दिष्ट्या राजा सुयोधनः ॥ ०११ ॥

यजते क्रतुमुख्येन पूर्वेषां कीर्तिवर्धनः ॥ ०११ ॥

वयमप्युपयास्यामो न त्विदानीं कथञ्चन ।
समयः परिपाल्यो नो यावद्वर्षं त्रयोदशम् ॥ ०१२ ॥

श्रुत्वैतद्धर्मराजस्य भीमो वचनमब्रवीत् ।
तदा तु नृपतिर्गन्ता धर्मराजो युधिष्ठिरः ॥ ०१३ ॥

अस्त्रशस्त्रप्रदीप्तेऽग्नौ यदा तं पातयिष्यति ।
वर्षात्त्रयोदशादूर्ध्वं रणसत्रे नराधिपः ॥ ०१४ ॥

यदा क्रोधहविर्मोक्ता धार्तराष्ट्रेषु पाण्डवः ।
आगन्तारस्तदा स्मेति वाच्यस्ते स सुयोधनः ॥ ०१५ ॥

शेषास्तु पाण्डवा राजन्नैवोचुः किञ्चिदप्रियम् ।
दूतश्चापि यथावृत्तं धार्तराष्ट्रे न्यवेदयत् ॥ ०१६ ॥

अथाजग्मुर्नरश्रेष्ठा नानाजनपदेश्वराः ।
ब्राह्मणाश्च महाभागा धार्तराष्ट्रपुरं प्रति ॥ ०१७ ॥

ते त्वर्चिता यथाशास्त्रं यथावर्णं यथाक्रमम् ।
मुदा परमया युक्ताः प्रीत्या चापि नरेश्वर ॥ ०१८ ॥

धृतराष्ट्रोऽपि राजेन्द्र संवृतः सर्वकौरवैः ।
हर्षेण महता युक्तो विदुरं प्रत्यभाषत ॥ ०१९ ॥

यथा सुखी जनः सर्वः क्षत्तः स्यादन्नसंयुतः ।
तुष्येच्च यज्ञसदने तथा क्षिप्रं विधीयताम् ॥ ०२० ॥

विदुरस्त्वेवमाज्ञप्तः सर्ववर्णानरिंदम ।
यथाप्रमाणतो विद्वान्पूजयामास धर्मवित् ॥ ०२१ ॥

भक्ष्यभोज्यान्नपानेन माल्यैश्चापि सुगन्धिभिः ।
वासोभिर्विविधैश्चैव योजयामास हृष्टवत् ॥ ०२२ ॥

कृत्वा ह्यवभृथं वीरो यथाशास्त्रं यथाक्रमम् ।
सान्त्वयित्वा च राजेन्द्रो दत्त्वा च विविधं वसु ॥ ०२३ ॥

विसर्जयामास नृपान्ब्राह्मणांश्च सहस्रशः ॥ ०२३ ॥

विसर्जयित्वा स नृपान्भ्रातृभिः परिवारितः ।
विवेश हास्तिनपुरं सहितः कर्णसौबलैः ॥ ०२४ ॥

---

# अध्याय २४३

वैशंपायन उवाच ॥

प्रविशन्तं महाराज सूतास्तुष्टुवुरच्युतम् ।
जनाश्चापि महेष्वासं तुष्टुवू राजसत्तमम् ॥ ००१ ॥

लाजैश्चन्दनचूर्णैश्चाप्यवकीर्य जनास्तदा ।
ऊचुर्दिष्ट्या नृपाविघ्नात्समाप्तोऽयं क्रतुस्तव ॥ ००२ ॥

अपरे त्वब्रुवंस्तत्र वातिकास्तं महीपतिम् ।
युधिष्ठिरस्य यज्ञेन न समो ह्येष तु क्रतुः ॥ ००३ ॥

नैव तस्य क्रतोरेष कलामर्हति षोडशीम्  ॥ ००३  ॥

एवं तत्राब्रुवन्केचिद्वातिकास्तं नरेश्वरम् ।
सुहृदस्त्वब्रुवंस्तत्र अति सर्वानयं क्रतुः  ॥ ००४  ॥

ययातिर्नहुषश्चापि मान्धाता भरतस्तथा ।
क्रतुमेनं समाहृत्य पूताः सर्वे दिवं गताः  ॥ ००५  ॥

एता वाचः शुभाः शृण्वन्सुहृदां भरतर्षभ ।
प्रविवेश पुरं हृष्टः स्ववेश्म च नराधिपः  ॥ ००६  ॥

अभिवाद्य ततः पादौ मातापित्रोर्विशां पते ।
भीष्मद्रोणकृपाणां च विदुरस्य च धीमतः  ॥ ००७  ॥

अभिवादितः कनीयोभिर्भ्रातृभिर्भ्रातृवत्सलः ।
निषसादासने मुख्ये भ्रातृभिः परिवारितः  ॥ ००८  ॥

तमुत्थाय महाराज सूतपुत्रोऽब्रवीद्वचः ।
दिष्ट्या ते भरतश्रेष्ठ समाप्तोऽयं महाक्रतुः  ॥ ००९  ॥

हतेषु युधि पार्थेषु राजसूये तथा त्वया ।
आहृतेऽहं नरश्रेष्ठ त्वां सभाजयिता पुनः  ॥ ०१०  ॥

तमब्रवीन्महाराजो धार्तराष्ट्रो महायशाः ।
सत्यमेतत्त्वया वीर पाण्डवेषु दुरात्मसु  ॥ ०११  ॥

निहतेषु नरश्रेष्ठ प्राप्ते चापि महाक्रतौ ।
राजसूये पुनर्वीर त्वं मां संवर्धयिष्यसि  ॥ ०१२  ॥

एवमुक्त्वा महाप्राज्ञः कर्णमाश्लिष्य भारत ।
राजसूयं क्रतुश्रेष्ठं चिन्तयामास कौरवः  ॥ ०१३  ॥

सोऽब्रवीत्सुहृदश्चापि पार्श्वस्थान्नृपसत्तमः ।
कदा तु तं क्रतुवरं राजसूयं महाधनम् ॥ ०१४ ॥

निहत्य पाण्डवान्सर्वानाहरिष्यामि कौरवाः ॥ ०१४ ॥

तमब्रवीत्तदा कर्णः शृणु मे राजकुञ्जर ।
पादौ न धावये तावद्यावन्न निहतोऽर्जुनः ॥ ०१५ ॥

अथोत्क्रुष्टं महेष्वासैर्धार्तराष्ट्रैर्महारथैः ।
प्रतिज्ञाते फल्गुनस्य वधे कर्णेन संयुगे ॥ ०१६ ॥

विजितांश्चाप्यमन्यन्त पाण्डवान्धृतराष्ट्रजाः ॥ ०१६ ॥

दुर्योधनोऽपि राजेन्द्र विसृज्य नरपुङ्गवान् ।
प्रविवेश गृहं श्रीमान्यथा चैत्ररथं प्रभुः ॥ ०१७ ॥

तेऽपि सर्वे महेष्वासा जग्मुर्वेश्मानि भारत ॥ ०१७ ॥

पाण्डवाश्च महेष्वासा दूतवाक्यप्रचोदिताः ।
चिन्तयन्तस्तमेवार्थं नालभन्त सुखं क्वचित् ॥ ०१८ ॥

भूयश्च चारै राजेन्द्र प्रवृत्तिरुपपादिता ।
प्रतिज्ञा सूतपुत्रस्य विजयस्य वधं प्रति ॥ ०१९ ॥

एतच्छ्रुत्वा धर्मसुतः समुद्विग्नो नराधिप ।
अभेद्यकवचं मत्वा कर्णमद्भुतविक्रमम् ॥ ०२० ॥

अनुस्मरंश्च सङ्क्लेशान्न शान्तिमुपयाति सः ॥ ०२० ॥

तस्य चिन्तापरीतस्य बुद्धिर्जज्ञे महात्मनः ।

बहुव्यालमृगाकीर्णं त्यक्तुं द्वैतवनं वनम्  ॥ ०२१  ॥

धार्तराष्ट्रोऽपि नृपतिः प्रशशास वसुंधराम् ।
भ्रातृभिः सहितो वीरैर्भीष्मद्रोणकृपैस्तथा  ॥ ०२२  ॥

सङ्गम्य सूतपुत्रेण कर्णेनाहवशोभिना ।
दुर्योधनः प्रिये नित्यं वर्तमानो महीपतिः  ॥ ०२३  ॥

पूजयामास विप्रेन्द्रान्क्रतुभिर्भूरिदक्षिणैः  ॥ ०२३  ॥

भ्रातृणां च प्रियं राजन्स चकार परंतपः ।
निश्चित्य मनसा वीरो दत्तभुक्तफलं धनम्  ॥ ०२४  ॥

---

# मृगस्वप्नभयपर्व

## अध्याय २४४

जनमेजय उवाच  ॥

दुर्योधनं मोचयित्वा पाण्डुपुत्रा महाबलाः ।
किमकार्षुर्वने तस्मिंस्तन्ममाख्यातुमर्हसि  ॥ ००१  ॥

वैशंपायन उवाच  ॥

ततः शयानं कौन्तेयं रात्रौ द्वैतवने मृगाः ।
स्वप्नान्ते दर्शयामासुर्बाष्पकण्ठा युधिष्ठिरम्  ॥ ००२  ॥

तानब्रवीत्स राजेन्द्रो वेपमानान्कृताञ्जलीन् ।
ब्रूत यद्वक्तुकामाः स्थ के भवन्तः किमिष्यते ॥ ००३ ॥

एवमुक्ताः पाण्डवेन कौन्तेयेन यशस्विना ।
प्रत्यब्रुवन्मृगास्तत्र हतशेषा युधिष्ठिरम् ॥ ००४ ॥

वयं मृगा द्वैतवने हतशिष्टाः स्म भारत ।
नोत्सीदेम महाराज क्रियतां वासपर्ययः ॥ ००५ ॥

भवन्तो भ्रातरः शूराः सर्व एवास्त्रकोविदाः ।
कुलान्यल्पावशिष्टानि कृतवन्तो वनौकसाम् ॥ ००६ ॥

बीजभूता वयं केचिदवशिष्टा महामते ।
विवर्धेमहि राजेन्द्र प्रसादात्ते युधिष्ठिर ॥ ००७ ॥

तान्वेपमानान्वित्रस्तान्बीजमात्रावशेषितान् ।
मृगान्दृष्ट्वा सुदुःखार्तो धर्मराजो युधिष्ठिरः ॥ ००८ ॥

तांस्तथेत्यब्रवीद्राजा सर्वभूतहिते रतः ।
तथ्यं भवन्तो ब्रुवते करिष्यामि च तत्तथा ॥ ००९ ॥

इत्येवं प्रतिबुद्धः स रात्र्यन्ते राजसत्तमः ।
अब्रवीत्सहितान्भ्रातृन्दयापन्नो मृगान्प्रति ॥ ०१० ॥

उक्तो रात्रौ मृगैरस्मि स्वप्नान्ते हतशेषितैः ।
तनुभूताः स्म भद्रं ते दया नः क्रियतामिति ॥ ०११ ॥

ते सत्यमाहुः कर्तव्या दयास्माभिर्वनौकसाम् ।
साष्टमासं हि नो वर्षं यदेनानुपयुञ्ज्महे ॥ ०१२ ॥

पुनर्बहुमृगं रम्यं काम्यकं काननोत्तमम् ।

मरुभूमेः शिरः ख्यातं तृणबिन्दुसरः प्रति ॥ ०१३ ॥

तत्रेमा वसतीः शिष्टा विहरन्तो रमेमहि ॥ ०१३ ॥

ततस्ते पाण्डवाः शीघ्रं प्रययुर्धर्मकोविदाः ।
ब्राह्मणैः सहिता राजन्ये च तत्र सहोषिताः ॥ ०१४ ॥

इन्द्रसेनादिभिश्चैव प्रेष्यैरनुगतास्तदा ॥ ०१४ ॥

ते यात्वानुसृतैर्मार्गैः स्वन्नैः शुचिजलान्वितैः ।
ददृशुः काम्यकं पुण्यमाश्रमं तापसायुतम् ॥ ०१५ ॥

विविशुस्ते स्म कौरव्या वृता विप्रर्षभैस्तदा ।
तद्वनं भरतश्रेष्ठाः स्वर्गं सुकृतिनो यथा ॥ ०१६ ॥

---

# व्रीहिद्रौणिकपर्व

## अध्याय २४५

वैशंपायन उवाच ॥

वने निवसतां तेषां पाण्डवानां महात्मनाम् ।
वर्षाण्येकादशातीयुः कृच्छ्रेण भरतर्षभ ॥ ००१ ॥

फलमूलाशनास्ते हि सुखार्हा दुःखमुत्तमम् ।
प्राप्तकालमनुध्यान्तः सेहुरुत्तमपूरुषाः ॥ ००२ ॥

युधिष्ठिरस्तु राजर्षिरात्मकर्मापराधजम् ।
चिन्तयन्स महाबाहुर्भ्रातॄणां दुःखमुत्तमम् ॥ ००३ ॥

न सुष्वाप सुखं राजा हृदि शल्यैरिवार्पितैः ।
दौरात्म्यमनुपश्यंस्तत्काले द्यूतोद्भवस्य हि ॥ ००४ ॥

संस्मरन्परुषा वाचः सूतपुत्रस्य पाण्डवः ।
निःश्वासपरमो दीनो बिभ्रत्कोपविषं महत् ॥ ००५ ॥

अर्जुनो यमजौ चोभौ द्रौपदी च यशस्विनी ।
स च भीमो महातेजाः सर्वेषामुत्तमो बली ॥ ००६ ॥

युधिष्ठिरमुदीक्षन्तः सेहुर्दुःखमनुत्तमम् ॥ ००६ ॥

अवशिष्टमल्पकालं मन्वानाः पुरुषर्षभाः ।
वपुरन्यदिवाकार्षुरुत्साहामर्षचेष्टितैः ॥ ००७ ॥

कस्यचित्त्वथ कालस्य व्यासः सत्यवतीसुतः ।
आजगाम महायोगी पाण्डवानवलोककः ॥ ००८ ॥

तमागतमभिप्रेक्ष्य कुन्तीपुत्रो युधिष्ठिरः ।
प्रत्युद्गम्य महात्मानं प्रत्यगृह्णाद्यथाविधि ॥ ००९ ॥

तमासीनमुपासीनः शुश्रूषुर्नियतेन्द्रियः ।
तोषयन्प्रणिपातेन व्यासं पाण्डवनन्दनः ॥ ०१० ॥

तानवेक्ष्य कृशान्पौत्रान्वने वन्येन जीवतः ।
महर्षिरनुकम्पार्थमब्रवीद्बाष्पगद्गदम् ॥ ०११ ॥

युधिष्ठिर महाबाहो शृणु धर्मभृतां वर ।
नातप्ततपसः पुत्र प्राप्नुवन्ति महत्सुखम् ॥ ०१२ ॥

सुखदुःखे हि पुरुषः पर्यायेणोपसेवते ।
नात्यन्तमसुखं कश्चित्प्राप्नोति पुरुषर्षभ ॥ ०१३ ॥

प्रज्ञावांस्त्वेव पुरुषः संयुक्तः परया धिया ।
उदयास्तमयज्ञो हि न शोचति न हृष्यति ॥ ०१४ ॥

सुखमापतितं सेवेद्दुःखमापतितं सहेत् ।
कालप्राप्तमुपासीत सस्यानामिव कर्षकः ॥ ०१५ ॥

तपसो हि परं नास्ति तपसा विन्दते महत् ।
नासाध्यं तपसः किञ्चिदिति बुध्यस्व भारत ॥ ०१६ ॥

सत्यमार्जवमक्रोधः संविभागो दमः शमः ।
अनसूयाविहिंसा च शौचमिन्द्रियसंयमः ॥ ०१७ ॥

साधनानि महाराज नराणां पुण्यकर्मणाम् ॥ ०१७ ॥

अधर्मरुचयो मूढास्तिर्यग्गतिपरायणाः ।
कृच्छ्रां योनिमनुप्राप्य न सुखं विन्दते जनाः ॥ ०१८ ॥

इह यत्क्रियते कर्म तत्परत्रोपभुज्यते ।
तस्माच्छरीरं युञ्जीत तपसा नियमेन च ॥ ०१९ ॥

यथाशक्ति प्रयच्छेच्च संपूज्याभिप्रणम्य च ।
काले पात्रे च हृष्टात्मा राजन्विगतमत्सरः ॥ ०२० ॥

सत्यवादी लभेतायुरनायासमथार्जवी ।
अक्रोधनोऽनसूयश्च निर्वृतिं लभते पराम् ॥ ०२१ ॥

दान्तः शमपरः शश्वत्परिक्लेशं न विन्दति ।

न च तप्यति दान्तात्मा दृष्ट्वा परगतां श्रियम् ॥ ०२२ ॥

संविभक्ता च दाता च भोगवान्सुखवान्नरः ।
भवत्यहिंसकश्चैव परमारोग्यमश्नुते ॥ ०२३ ॥

मान्यान्मानयिता जन्म कुले महति विन्दति ।
व्यसनैर्न तु संयोगं प्राप्नोति विजितेन्द्रियः ॥ ०२४ ॥

शुभानुशयबुद्धिर्हि संयुक्तः कालधर्मणा ।
प्रादुर्भवति तद्योगात्कल्याणमतिरेव सः ॥ ०२५ ॥

युधिष्ठिर उवाच ॥

भगवन्दानधर्माणां तपसो वा महामुने ।
किं स्विद्बहुगुणं प्रेत्य किं वा दुष्करमुच्यते ॥ ०२६ ॥

व्यास उवाच ॥

दानान्न दुष्करतरं पृथिव्यामस्ति किञ्चन ।
अर्थे हि महती तृष्णा स च दुःखेन लभ्यते ॥ ०२७ ॥

परित्यज्य प्रियान्प्राणान्धनार्थं हि महाहवम् ।
प्रविशन्ति नरा वीराः समुद्रमटवीं तथा ॥ ०२८ ॥

कृषिगोरक्ष्यमित्येके प्रतिपद्यन्ति मानवाः ।
पुरुषाः प्रेष्यतामेके निर्गच्छन्ति धनार्थिनः ॥ ०२९ ॥

तस्य दुःखार्जितस्यैवं परित्यागः सुदुष्करः ।
न दुष्करतरं दानात्तस्माद्दानं मतं मम ॥ ०३० ॥

विशेषस्त्वत्र विज्ञेयो न्यायेनोपार्जितं धनम् ।

पात्रे देशे च काले च साधुभ्यः प्रतिपादयेत्  ॥ ०३१  ॥

अन्यायसमुपात्तेन दानधर्मो धनेन यः ।
क्रियते न स कर्तारं त्रायते महतो भयात्  ॥ ०३२  ॥

पात्रे दानं स्वल्पमपि काले दत्तं युधिष्ठिर ।
मनसा सुविशुद्धेन प्रेत्यानन्तफलं स्मृतम्  ॥ ०३३  ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
व्रीहिद्रोणपरित्यागाद्यत्फलं प्राप मुद्गलः  ॥ ०३४  ॥

---

# अध्याय २४६

युधिष्ठिर उवाच  ॥

व्रीहिद्रोणः परित्यक्तः कथं तेन महात्मना ।
कस्मै दत्तश्च भगवन्विधिना केन चात्थ मे  ॥ ००१  ॥

प्रत्यक्षधर्मा भगवान्यस्य तुष्टो हि कर्मभिः ।
सफलं तस्य जन्माहं मन्ये सद्धर्मचारिणः  ॥ ००२  ॥

व्यास उवाच  ॥

शिलोञ्छवृत्तिर्धर्मात्मा मुद्गलः संशितव्रतः ।
आसीद्राजन्कुरुक्षेत्रे सत्यवागनसूयकः  ॥ ००३  ॥

अतिथिव्रती क्रियावांश्च कापोतीं वृत्तिमास्थितः ।
सत्रमिष्टीकृतं नाम समुपास्ते महातपाः  ॥ ००४  ॥

सपुत्रदारो हि मुनिः पक्षाहारो बभूव सः ।
कपोतवृत्त्या पक्षेण व्रीहिद्रोणमुपार्जयत् ॥ ००५ ॥

दर्शं च पौर्णमासं च कुर्वन्विगतमत्सरः ।
देवतातिथिशेषेण कुरुते देहयापनम् ॥ ००६ ॥

तस्येन्द्रः सहितो देवैः साक्षात्त्रिभुवनेश्वरः ।
प्रत्यगृह्णान्महाराज भागं पर्वणि पर्वणि ॥ ००७ ॥

स पर्वकालं कृत्वा तु मुनिवृत्त्या समन्वितः ।
अतिथिभ्यो ददावन्नं प्रहृष्टेनान्तरात्मना ॥ ००८ ॥

व्रीहिद्रोणस्य तदहो ददतोऽन्नं महात्मनः ।
शिष्टं मात्सर्यहीनस्य वर्धत्यतिथिदर्शनात् ॥ ००९ ॥

तच्छतान्यपि भुञ्जन्ति ब्राह्मणानां मनीषिणाम् ।
मुनेस्त्यागविशुद्ध्या तु तदन्नं वृद्धिमृच्छति ॥ ०१० ॥

तं तु शुश्राव धर्मिष्ठं मुद्गलं संशितव्रतम् ।
दुर्वासा नृप दिग्वासास्तमथाभ्याजगाम ह ॥ ०११ ॥

बिभ्रच्चानियतं वेषमुन्मत्त इव पाण्डव ।
विकचः परुषा वाचो व्याहरन्विविधा मुनिः ॥ ०१२ ॥

अभिगम्याथ तं विप्रमुवाच मुनिसत्तमः ।
अन्नार्थिनमनुप्राप्तं विद्धि मां मुनिसत्तम ॥ ०१३ ॥

स्वागतं तेऽस्त्विति मुनिं मुद्गलः प्रत्यभाषत ।
पाद्यमाचमनीयं च प्रतिवेद्यान्नमुत्तमम् ॥ ०१४ ॥

प्रादात्स तपसोपात्तं क्षुधितायातिथिव्रती ।
उन्मत्ताय परां श्रद्धामास्थाय स धृतव्रतः ॥ ०१५ ॥

ततस्तदन्नं रसवत्स एव क्षुधयान्वितः ।
बुभुजे कृत्स्नमुन्मत्तः प्रादात्तस्मै च मुद्गलः ॥ ०१६ ॥

भुक्त्वा चान्नं ततः सर्वमुच्छिष्टेनात्मनस्ततः ।
अथानुलिलिपेऽङ्गानि जगाम च यथागतम् ॥ ०१७ ॥

एवं द्वितीये संप्राप्ते पर्वकाले मनीषिणः ।
आगम्य बुभुजे सर्वमन्नमुञ्छोपजीविनः ॥ ०१८ ॥

निराहारस्तु स मुनिरुञ्छमार्जयते पुनः ।
न चैनं विक्रियां नेतुमशकन्मुद्गलं क्षुधा ॥ ०१९ ॥

न क्रोधो न च मात्सर्यं नावमानो न संभ्रमः ।
सपुत्रदारमुञ्छन्तमाविवेश द्विजोत्तमम् ॥ ०२० ॥

तथा तमुञ्छधर्माणं दुर्वासा मुनिसत्तमम् ।
उपतस्थे यथाकालं षट्कृत्वः कृतनिश्चयः ॥ ०२१ ॥

न चास्य मानसं किञ्चिद्विकारं ददृशे मुनिः ।
शुद्धसत्त्वस्य शुद्धं स ददृशे निर्मलं मनः ॥ ०२२ ॥

तमुवाच ततः प्रीतः स मुनिर्मुद्गलं तदा ।
त्वत्समो नास्ति लोकेऽस्मिन्दाता मात्सर्यवर्जितः ॥ ०२३ ॥

क्षुद्धर्मसञ्ज्ञां प्रणुदत्यादत्ते धैर्यमेव च ।
विषयानुसारिणी जिह्वा कर्षत्येव रसान्प्रति ॥ ०२४ ॥

आहारप्रभवाः प्राणा मनो दुर्निग्रहं चलम् ।

मनसश्चेन्द्रियाणां चाप्यैकाग्र्यं निश्चितं तपः ॥ ०२५ ॥

श्रमेणोपार्जितं त्यक्तुं दुःखं शुद्धेन चेतसा ।
तत्सर्वं भवता साधो यथावदुपपादितम् ॥ ०२६ ॥

प्रीताः स्मोऽनुगृहीताश्च समेत्य भवता सह ।
इन्द्रियाभिजयो धैर्यं संविभागो दमः शमः ॥ ०२७ ॥

दया सत्यं च धर्मश्च त्वयि सर्वं प्रतिष्ठितम् ।
जितास्ते कर्मभिर्लोकाः प्राप्तोऽसि परमां गतिम् ॥ ०२८ ॥

अहो दानं विघुष्टं ते सुमहत्स्वर्गवासिभिः ।
सशरीरो भवान्गन्ता स्वर्गं सुचरितव्रत ॥ ०२९ ॥

इत्येवं वदतस्तस्य तदा दुर्वाससो मुनेः ।
देवदूतो विमानेन मुद्गलं प्रत्युपस्थितः ॥ ०३० ॥

हंससारसयुक्तेन किङ्किणीजालमालिना ।
कामगेन विचित्रेण दिव्यगन्धवता तथा ॥ ०३१ ॥

उवाच चैनं विप्रर्षिं विमानं कर्मभिर्जितम् ।
समुपारोह संसिद्धिं प्राप्तोऽसि परमां मुने ॥ ०३२ ॥

तमेवंवादिनमृषिर्देवदूतमुवाच ह ।
इच्छामि भवता प्रोक्तान्गुणान्स्वर्गनिवासिनाम् ॥ ०३३ ॥

के गुणास्तत्र वसतां किं तपः कश्च निश्चयः ।
स्वर्गे स्वर्गसुखं किं च दोषो वा देवदूतक ॥ ०३४ ॥

सतां सप्तपदं मित्रमाहुः सन्तः कुलोचिताः ।
मित्रतां च पुरस्कृत्य पृच्छामि त्वामहं विभो ॥ ०३५ ॥

यदत्र तथ्यं पथ्यं च तद्ब्रवीह्यविचारयन् ।
श्रुत्वा तथा करिष्यामि व्यवसायं गिरा तव ॥ ०३६ ॥

---

# अध्याय २४७

देवदूत उवाच ॥

महर्षेऽकार्यबुद्धिस्त्वं यः स्वर्गसुखमुत्तमम् ।
संप्राप्तं बहु मन्तव्यं विमृशस्यबुधो यथा ॥ ००१ ॥

उपरिष्टादसौ लोको योऽयं स्वरिति सञ्ज्ञितः ।
ऊर्ध्वगः सत्पथः शश्वद्देवयानचरो मुने ॥ ००२ ॥

नातप्ततपसः पुंसो नामहायज्ञयाजिनः ।
नानृता नास्तिकाश्चैव तत्र गच्छन्ति मुद्गल ॥ ००३ ॥

धर्मात्मानो जितात्मानः शान्ता दान्ता विमत्सराः ।
दानधर्मरताः पुंसः शूराश्चाहतलक्षणाः ॥ ००४ ॥

तत्र गच्छन्ति कर्माग्र्यं कृत्वा शमदमात्मकम् ।
लोकान्पुण्यकृतां ब्रह्मन्सद्भिरासेवितान्नृभिः ॥ ००५ ॥

देवाः साध्यास्तथा विश्वे मरुतश्च महर्षिभिः ।
यामा धामाश्च मौद्गल्य गन्धर्वाप्सरसस्तथा ॥ ००६ ॥

एषां देवनिकायानां पृथक्पृथगनेकशः ।
भास्वन्तः कामसंपन्ना लोकास्तेजोमयाः शुभाः ॥ ००७ ॥

त्रयस्त्रिंशत्सहस्राणि योजनानां हिरण्मयः ।
मेरुः पर्वतराड्यत्र देवोद्यानानि मुद्गल ॥ ००८ ॥

नन्दनादीनि पुण्यानि विहाराः पुण्यकर्मणाम् ।
न क्षुत्पिपासे न ग्लानिर्न शीतोष्णभयं तथा ॥ ००९ ॥

बीभत्समशुभं वापि रोगा वा तत्र केचन ।
मनोज्ञाः सर्वतो गन्धाः सुखस्पर्शाश्च सर्वशः ॥ ०१० ॥

शब्दाः श्रुतिमनोग्राह्याः सर्वतस्तत्र वै मुने ।
न शोको न जरा तत्र नायासपरिदेवने ॥ ०११ ॥

ईदृशः स मुने लोकः स्वकर्मफलहेतुकः ।
सुकृतैस्तत्र पुरुषाः संभवन्त्यात्मकर्मभिः ॥ ०१२ ॥

तैजसानि शरीराणि भवन्त्यत्रोपपद्यताम् ।
कर्मजान्येव मौद्गल्य न मातृपितृजान्युत ॥ ०१३ ॥

न च स्वेदो न दौर्गन्ध्यं पुरीषं मूत्रमेव च ।
तेषां न च रजो वस्त्रं बाधते तत्र वै मुने ॥ ०१४ ॥

न म्लायन्ति स्रजस्तेषां दिव्यगन्धा मनोरमाः ।
पर्युह्यन्ते विमानैश्च ब्रह्मन्नेवंविधाश्च ते ॥ ०१५ ॥

ईर्ष्याशोकक्लमापेता मोहमात्सर्यवर्जिताः ।
सुखं स्वर्गजितस्तत्र वर्तयन्ति महामुने ॥ ०१६ ॥

तेषां तथाविधानां तु लोकानां मुनिपुङ्गव ।
उपर्युपरि शक्रस्य लोका दिव्यगुणान्विताः ॥ ०१७ ॥

पुरस्ताद्ब्रह्मणस्तत्र लोकास्तेजोमयाः शुभाः ।
यत्र यान्त्यृषयो ब्रह्मन्पूताः स्वैः कर्मभिः शुभैः ॥ ०१८ ॥

ऋभवो नाम तत्रान्ये देवानामपि देवताः ।
तेषां लोकाः परतरे तान्यजन्तीह देवताः ॥ ०१९ ॥

स्वयंप्रभास्ते भास्वन्तो लोकाः कामदुघाः परे ।
न तेषां स्त्रीकृतस्तापो न लोकैश्वर्यमत्सरः ॥ ०२० ॥

न वर्तयन्त्याहुतिभिस्ते नाप्यमृतभोजनाः ।
तथा दिव्यशरीरास्ते न च विग्रहमूर्तयः ॥ ०२१ ॥

न सुखे सुखकामाश्च देवदेवाः सनातनाः ।
न कल्पपरिवर्तेषु परिवर्तन्ति ते तथा ॥ ०२२ ॥

जरा मृत्युः कुतस्तेषां हर्षः प्रीतिः सुखं न च ।
न दुःखं न सुखं चापि रागद्वेषौ कुतो मुने ॥ ०२३ ॥

देवानामपि मौद्गल्य काङ्क्षिता सा गतिः परा ।
दुष्प्रापा परमा सिद्धिरगम्या कामगोचरैः ॥ ०२४ ॥

त्रयस्त्रिंशदिमे लोकाः शेषा लोका मनीषिभिः ।
गम्यन्ते नियमैः श्रेष्ठैर्दानैर्वा विधिपूर्वकैः ॥ ०२५ ॥

सेयं दानकृता व्युष्टिरत्र प्राप्ता सुखावहा ।
तां भुङ्क्ष्व सुकृतैर्लब्धां तपसा द्योतितप्रभः ॥ ०२६ ॥

एतत्स्वर्गसुखं विप्र लोका नानाविधास्तथा ।
गुणाः स्वर्गस्य प्रोक्तास्ते दोषानपि निबोध मे ॥ ०२७ ॥

कृतस्य कर्मणस्तत्र भुज्यते यत्फलं दिवि ।

न चान्यत्क्रियते कर्म मूलच्छेदेन भुज्यते ॥ ०२८ ॥

सोऽत्र दोषो मम मतस्तस्यान्ते पतनं च यत् ।
सुखव्याप्तमनस्कानां पतनं यच्च मुद्गल ॥ ०२९ ॥

असंतोषः परीतापो दृष्ट्वा दीप्ततराः श्रियः ।
यद्भवत्यवरे स्थाने स्थितानां तच्च दुष्करम् ॥ ०३० ॥

सञ्ज्ञामोहश्च पततां रजसा च प्रधर्षणम् ।
प्रम्लानेषु च माल्येषु ततः पिपतिषोर्भयम् ॥ ०३१ ॥

आ ब्रह्मभवनादेते दोषा मौद्गल्य दारुणाः ।
नाकलोके सुकृतिनां गुणास्त्वयुतशो नृणाम् ॥ ०३२ ॥

अयं त्वन्यो गुणः श्रेष्ठश्च्युतानां स्वर्गतो मुने ।
शुभानुशययोगेन मनुष्येषूपजायते ॥ ०३३ ॥

तत्रापि सुमहाभागः सुखभागभिजायते ।
न चेत्संबुध्यते तत्र गच्छत्यधमतां ततः ॥ ०३४ ॥

इह यत्क्रियते कर्म तत्परत्रोपभुज्यते ।
कर्मभूमिरियं ब्रह्मन्फलभूमिरसौ मता ॥ ०३५ ॥

एतत्ते सर्वमाख्यातं यन्मां पृच्छसि मुद्गल ।
तवानुकम्पया साधो साधु गच्छाम माचिरम् ॥ ०३६ ॥

व्यास उवाच ॥

एतच्छ्रुत्वा तु मौद्गल्यो वाक्यं विममृशे धिया ।
विमृश्य च मुनिश्रेष्ठो देवदूतमुवाच ह ॥ ०३७ ॥

देवदूत नमस्तेऽस्तु गच्छ तात यथासुखम् ।
महादोषेण मे कार्यं न स्वर्गेण सुखेन वा ॥ ०३८ ॥

पतनं तन्महद्दुःखं परितापः सुदारुणः ।
स्वर्गभाजश्च्यवन्तीह तस्मात्स्वर्गं न कामये ॥ ०३९ ॥

यत्र गत्वा न शोचन्ति न व्यथन्ति चलन्ति वा ।
तदहं स्थानमत्यन्तं मार्गयिष्यामि केवलम् ॥ ०४० ॥

इत्युक्त्वा स मुनिर्वाक्यं देवदूतं विसृज्य तम् ।
शिलोञ्छवृत्तिमुत्सृज्य शममातिष्ठदुत्तमम् ॥ ०४१ ॥

तुल्यनिन्दास्तुतिर्भूत्वा समलोष्टाश्मकाञ्चनः ।
ज्ञानयोगेन शुद्धेन ध्याननित्यो बभूव ह ॥ ०४२ ॥

ध्यानयोगाद्बलं लब्ध्वा प्राप्य चर्द्धिमनुत्तमाम् ।
जगाम शाश्वतीं सिद्धिं परां निर्वाणलक्षणाम् ॥ ०४३ ॥

तस्मात्त्वमपि कौन्तेय न शोकं कर्तुमर्हसि ।
राज्यात्स्फीतात्परिभ्रष्टस्तपसा तदवाप्स्यसि ॥ ०४४ ॥

सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
पर्यायेणोपवर्तन्ते नरं नेमिमरा इव ॥ ०४५ ॥

पितृपैतामहं राज्यं प्राप्स्यस्यमितविक्रम ।
वर्षात्त्रयोदशादूर्ध्वं व्येतु ते मानसो ज्वरः ॥ ०४६ ॥

वैशंपायन उवाच ॥

एवमुक्त्वा स भगवान्व्यासः पाण्डवनन्दनम् ।
जगाम तपसे धीमान्पुनरेवाश्रमं प्रति ॥ ०४७ ॥

# द्रौपदीहरणपर्व

## अध्याय २४८

वैशंपायन उवाच ॥

तस्मिन्बहुमृगेऽरण्ये रममाणा महारथाः ।
काम्यके भरतश्रेष्ठा विजह्रुस्ते यथामराः ॥ ००१ ॥

प्रेक्षमाणा बहुविधान्वनोद्देशान्समन्ततः ।
यथर्तुकालरम्याश्च वनराजीः सुपुष्पिताः ॥ ००२ ॥

पाण्डवा मृगयाशीलाश्चरन्तस्तन्महावनम् ।
विजह्रुरिन्द्रप्रतिमाः कञ्चित्कालमरिंदमाः ॥ ००३ ॥

ततस्ते यौगपद्येन ययुः सर्वे चतुर्दिशम् ।
मृगयां पुरुषव्याघ्रा ब्राह्मणार्थे परंतपाः ॥ ००४ ॥

द्रौपदीमाश्रमे न्यस्य तृणबिन्दोरनुज्ञया ।
महर्षेर्दीप्ततपसो धौम्यस्य च पुरोधसः ॥ ००५ ॥

ततस्तु राजा सिन्धूनां वार्द्धक्षत्रिर्महायशाः ।
विवाहकामः शाल्वेयान्प्रयातः सोऽभवत्तदा ॥ ००६ ॥

महता परिबर्हेण राजयोग्येन संवृतः ।
राजभिर्बहुभिः सार्धमुपायात्काम्यकं च सः ॥ ००७ ॥

तत्रापश्यत्प्रियां भार्यां पाण्डवानां यशस्विनीम् ।
तिष्ठन्तीमाश्रमद्वारि द्रौपदीं निर्जने वने ॥ ००८ ॥

विभ्राजमानां वपुषा बिभ्रतीं रूपमुत्तमम् ।
भ्राजयन्तीं वनोद्देशं नीलाभ्रमिव विद्युतम् ॥ ००९ ॥

अप्सरा देवकन्या वा माया वा देवनिर्मिता ।
इति कृत्वाञ्जलिं सर्वे ददृशुस्तामनिन्दिताम् ॥ ०१० ॥

ततः स राजा सिन्धूनां वार्द्धक्षत्रिर्जयद्रथः ।
विस्मितस्तामनिन्द्याङ्गीं दृष्ट्वासीद्धृष्टमानसः ॥ ०११ ॥

स कोटिकाश्यं राजानमब्रवीत्काममोहितः ।
कस्य त्वेषानवद्याङ्गी यदि वापि न मानुषी ॥ ०१२ ॥

विवाहार्थो न मे कश्चिदिमां दृष्ट्वातिसुन्दरीम् ।
एतामेवाहमादाय गमिष्यामि स्वमालयम् ॥ ०१३ ॥

गच्छ जानीहि सौम्यैनां कस्य का च कुतोऽपि वा ।
किमर्थमागता सुभ्रूरिदं कण्टकितं वनम् ॥ ०१४ ॥

अपि नाम वरारोहा मामेषा लोकसुन्दरी ।
भजेदद्यायतापाङ्गी सुदती तनुमध्यमा ॥ ०१५ ॥

अप्यहं कृतकामः स्यामिमां प्राप्य वरस्त्रियम् ।
गच्छ जानीहि को न्वस्या नाथ इत्येव कोटिक ॥ ०१६ ॥

स कोटिकाश्यस्तच्छ्रुत्वा रथात्प्रस्कन्द्य कुण्डली ।
उपेत्य पप्रच्छ तदा क्रोष्टा व्याघ्रवधूमिव ॥ ०१७ ॥

# अध्याय २४९

कोटिकाश्य उवाच ॥

का त्वं कदम्बस्य विनम्य शाखा ;मेकाश्रमे तिष्ठसि शोभमाना ।
देदीप्यमानाग्निशिखेव नक्तं ; दोधूयमाना पवनेन सुभ्रूः ॥ ००१ ॥

अतीव रूपेण समन्विता त्वं ; न चाप्यरण्येषु बिभेषि किं नु ।
देवी नु यक्षी यदि दानवी वा ; वराप्सरा दैत्यवराङ्गना वा ॥ ००२ ॥

वपुष्मती वोरगराजकन्या ; वनेचरी वा क्षणदाचरस्त्री ।
यद्येव राज्ञो वरुणस्य पत्नी ; यमस्य सोमस्य धनेश्वरस्य ॥ ००३ ॥

धातुर्विधातुः सवितुर्विभोर्वा ; शक्रस्य वा त्वं सदनात्प्रपन्ना ।
न ह्येव नः पृच्छसि ये वयं स्म ; न चापि जानीम तवेह नाथम् ॥ ००४ ॥

वयं हि मानं तव वर्धयन्तः ; पृच्छाम भद्रे प्रभवं प्रभुं च ।
आचक्ष्व बन्धूंश्च पतिं कुलं च ; तत्त्वेन यच्चेह करोषि कार्यम् ॥ ००५ ॥

अहं तु राज्ञः सुरथस्य पुत्रो ; यं कोटिकाश्येति विदुर्मनुष्याः ।
असौ तु यस्तिष्ठति काञ्चनाङ्गे ; रथे हुतोऽग्निश्चयने यथैव ॥ ००६ ॥

त्रिगर्तराजः कमलायताक्षि ; क्षेमङ्करो नाम स एष वीरः ॥ ००६ ॥

अस्मात्परस्त्वेष महाधनुष्मा ;न्पुत्रः कुणिन्दाधिपतेर्वरिष्ठः ।
निरीक्षते त्वां विपुलायतांसः ; सुविस्मितः पर्वतवासनित्यः ॥ ००७ ॥

असौ तु यः पुष्करिणीसमीपे ; श्यामो युवा तिष्ठति दर्शनीयः ।

इक्ष्वाकुराज्ञः सुबलस्य पुत्रः ; स एष हन्ता द्विषतां सुगात्रि ॥ ००८ ॥

यस्यानुयात्रं ध्वजिनः प्रयान्ति ; सौवीरका द्वादश राजपुत्राः ।
शोणाश्वयुक्तेषु रथेषु सर्वे ; मखेषु दीप्ता इव हव्यवाहाः ॥ ००९ ॥

अङ्गारकः कुञ्जरगुप्तकश्च ; शत्रुञ्जयः सञ्जयसुप्रवृद्धौ ।
प्रभङ्करोऽथ भ्रमरो रविश्च ; शूरः प्रतापः कुहरश्च नाम ॥ ०१० ॥

यं षड्सहस्रा रथिनोऽनुयान्ति ; नागा हयाश्चैव पदातिनश्च ।
जयद्रथो नाम यदि श्रुतस्ते ; सौवीरराजः सुभगे स एषः ॥ ०११ ॥

तस्यापरे भ्रातरोऽदीनसत्त्वा ; बलाहकानीकविदारणाघ्याः ।
सौवीरवीराः प्रवरा युवानो ; राजानमेते बलिनोऽनुयान्ति ॥ ०१२ ॥

एतैः सहायैरुपयाति राजा ; मरुद्गणैरिन्द्र इवाभिगुप्तः ।
अजानतां ख्यापय नः सुकेशि ; कस्यासि भार्या दुहिता च कस्य ॥ ०१३ ॥

---

# अध्याय २५०

वैशंपायन उवाच ॥

अथाब्रवीद्द्रौपदी राजपुत्री ; पृष्टा शिबीनां प्रवरेण तेन ।
अवेक्ष्य मन्दं प्रविमुच्य शाखां ; सङ्गृह्णती कौशिकमुत्तरीयम् ॥ ००१ ॥

बुद्ध्याभिजानामि नरेन्द्रपुत्र ; न मादृशी त्वामभिभाष्टुमर्हा ।
न त्वेह वक्तास्ति तवेह वाक्य ;मन्यो नरो वाप्यथ वापि नारी ॥ ००२ ॥

एका ह्यहं संप्रति तेन वाचं ; ददानि वै भद्र निबोध चेदम् ।

अहं ह्यरण्ये कथमेकमेका ; त्वामालपेयं निरता स्वधर्मे ॥ ००३ ॥

जानामि च त्वां सुरथस्य पुत्रं ; यं कोटिकाश्येति विदुर्मनुष्याः ।
तस्मादहं शैब्य तथैव तुभ्य ;माख्यामि बन्धून्प्रति तन्निबोध ॥ ००४ ॥

अपत्यमस्मि द्रुपदस्य राज्ञः ; कृष्णेति मां शैब्य विदुर्मनुष्याः ।
साहं वृणे पञ्च जनान्पतित्वे ; ये खाण्डवप्रस्थगताः श्रुतास्ते ॥ ००५ ॥

युधिष्ठिरो भीमसेनार्जुनौ च ; माद्र्याश्च पुत्रौ पुरुषप्रवीरौ ।
ते मां निवेश्येह दिशश्चतस्रो ; विभज्य पार्था मृगयां प्रयाताः ॥ ००६ ॥

प्राचीं राजा दक्षिणां भीमसेनो ; जयः प्रतीचीं यमजावुदीचीम् ।
मन्ये तु तेषां रथसत्तमानां ; कालोऽभितः प्राप्त इहोपयातुम् ॥ ००७ ॥

संमानिता यास्यथ तैर्यथेष्टं ; विमुच्य वाहानवगाहयध्वम् ।
प्रियातिथिर्धर्मसुतो महात्मा ; प्रीतो भविष्यत्यभिवीक्ष्य युष्मान् ॥ ००८ ॥

एतावदुक्त्वा द्रुपदात्मजा सा ; शैब्यात्मजं चन्द्रमुखी प्रतीता ।
विवेश तां पर्णकुटीं प्रशस्तां ; सञ्चिन्त्य तेषामतिथिस्वधर्मम् ॥ ००९ ॥

---

# अध्याय २५१

वैशंपायन उवाच ॥

अथासीनेषु सर्वेषु तेषु राजसु भारत ।
कोटिकाश्यवचः श्रुत्वा शैब्यं सौवीरकोऽब्रवीत् ॥ ००१ ॥

यदा वाचं व्याहरन्त्यामस्यां मे रमते मनः ।
सीमन्तिनीनां मुख्यायां विनिवृत्तः कथं भवान्  ॥ ००२  ॥

एतां दृष्ट्वा स्त्रियो मेऽन्या यथा शाखामृगस्त्रियः ।
प्रतिभान्ति महाबाहो सत्यमेतद्ब्रवीमि ते  ॥ ००३  ॥

दर्शनादेव हि मनस्तया मेऽपहृतं भृशम् ।
तां समाचक्ष्व कल्याणीं यदि स्याच्छैब्य मानुषी  ॥ ००४  ॥

कोटिकाश्य उवाच  ॥

एषा वै द्रौपदी कृष्णा राजपुत्री यशस्विनी ।
पञ्चानां पाण्डुपुत्राणां महिषी संमता भृशम्  ॥ ००५  ॥

सर्वेषां चैव पार्थानां प्रिया बहुमता सती ।
तया समेत्य सौवीर सुवीरान्सुसुखी व्रज  ॥ ००६  ॥

वैशंपायन उवाच  ॥

एवमुक्तः प्रत्युवाच पश्यामो द्रौपदीमिति ।
पतिः सौवीरसिन्धूनां दुष्टभावो जयद्रथः  ॥ ००७  ॥

स प्रविश्याश्रमं शून्यं सिंहगोष्ठं वृको यथा ।
आत्मना सप्तमः कृष्णामिदं वचनमब्रवीत्  ॥ ००८  ॥

कुशलं ते वरारोहे भर्तारस्तेऽप्यनामयाः ।
येषां कुशलकामासि तेऽपि कच्चिदनामयाः  ॥ ००९  ॥

द्रौपद्युवाच  ॥

कौरव्यः कुशली राजा कुन्तीपुत्रो युधिष्ठिरः ।

अहं च भ्रातरश्चास्य यांश्चान्यान्परिपृच्छसि ॥ ०१० ॥

पाद्यं प्रतिगृहाणेदमासनं च नृपात्मज ।
मृगान्पञ्चाशतं चैव प्रातराशं ददानि ते ॥ ०११ ॥

ऐणेयान्पृषतान्न्यङ्कून्हरिणाञ्शरभाञ्शशान् ।
ऋश्यान्रुरूञ्शम्बरांश्च गवयांश्च मृगान्बहून् ॥ ०१२ ॥

वराहान्महिषांश्चैव याश्चान्या मृगजातयः ।
प्रदास्यति स्वयं तुभ्यं कुन्तीपुत्रो युधिष्ठिरः ॥ ०१३ ॥

जयद्रथ उवाच ॥

कुशलं प्रातराशस्य सर्वा मेऽपचितिः कृता ।
एहि मे रथमारोह सुखमाप्नुहि केवलम् ॥ ०१४ ॥

गतश्रीकांश्च्युतान्राज्यात्कृपणान्गतचेतसः ।
अरण्यवासिनः पार्थान्नानुरोद्धुं त्वमर्हसि ॥ ०१५ ॥

न वै प्राज्ञा गतश्रीकं भर्तारमुपयुञ्जते ।
युञ्जानमनुयुञ्जीत न श्रियः सङ्क्षये वसेत् ॥ ०१६ ॥

श्रिया विहीना राज्याच्च विनष्टाः शाश्वतीः समाः ।
अलं ते पाण्डुपुत्राणां भक्त्या क्लेशमुपासितुम् ॥ ०१७ ॥

भार्या मे भव सुश्रोणि त्यजैनान्सुखमाप्नुहि ।
अखिलान्सिन्धुसौवीरानवाप्नुहि मया सह ॥ ०१८ ॥

वैशंपायन उवाच ॥

इत्युक्ता सिन्धुराजेन वाक्यं हृदयकम्पनम् ।

कृष्णा तस्मादपाक्रामद्देशात्सभ्रुकुटीमुखी ॥ ०१९ ॥

अवमत्यास्य तद्वाक्यमाक्षिप्य च सुमध्यमा ।
मैवमित्यब्रवीत्कृष्णा लज्जस्वेति च सैन्धवम् ॥ ०२० ॥

सा काङ्क्षमाणा भर्तॄणामुपयानमनिन्दिता ।
विलोभयामास परं वाक्यैर्वाक्यानि युञ्जती ॥ ०२१ ॥

---

# अध्याय २५२

वैशंपायन उवाच ॥

सरोषरागोपहतेन वल्गुना ; सरागनेत्रेण नतोन्नतभ्रुवा ।
मुखेन विस्फूर्य सुवीरराष्ट्रपं ; ततोऽब्रवीत्तं द्रुपदात्मजा पुनः ॥ ००१ ॥

यशस्विनस्तीक्ष्णविषान्महारथा ;नधिक्षिपन्मूढ न लज्जसे कथम् ।
महेन्द्रकल्पान्निरतान्स्वकर्मसु ; स्थितान्समूहेष्वपि यक्षरक्षसाम् ॥ ००२ ॥

न किञ्चिदीड्यं प्रवदन्ति पापं ; वनेचरं वा गृहमेधिनं वा ।
तपस्विनं संपरिपूर्णविद्यं ; भषन्ति हैवं श्वनराः सुवीर ॥ ००३ ॥

अहं तु मन्ये तव नास्ति कश्चि ;देतादृशे क्षत्रियसंनिवेशे ।
यस्त्वाद्य पातालमुखे पतन्तं ; पाणौ गृहीत्वा प्रतिसंहरेत ॥ ००४ ॥

नागं प्रभिन्नं गिरिकूटकल्प ;मुपत्यकां हैमवतीं चरन्तम् ।
दण्डीव यूथादपसेधसे त्वं ; यो जेतुमाशंससि धर्मराजम् ॥ ००५ ॥

बाल्यात्प्रसुप्तस्य महाबलस्य ; सिंहस्य पक्ष्माणि मुखाल्लुनासि ।
पदा समाहत्य पलायमानः ; क्रुद्धं यदा द्रक्ष्यसि भीमसेनम्  ॥ ००६  ॥

महाबलं घोरतरं प्रवृद्धं ; जातं हरिं पर्वतकन्दरेषु ।
प्रसुप्तमुग्रं प्रपदेन हंसि ; यः क्रुद्धमासेत्स्यसि जिष्णुमुग्रम्  ॥ ००७  ॥

कृष्णोरगौ तीक्ष्णविषौ द्विजिह्वौ ; मत्तः पदाक्रामसि पुच्छदेशे ।
यः पाण्डवाभ्यां पुरुषोत्तमाभ्यां ; जघन्यजाभ्यां प्रयुयुत्ससे त्वम्  ॥ ००८  ॥

यथा च वेणुः कदली नलो वा ; फलन्त्यभावाय न भूतयेऽऽत्मनः ।
तथैव मां तैः परिरक्ष्यमाणा ;मादास्यसे कर्कटकीव गर्भम्  ॥ ००९  ॥

जयद्रथ उवाच  ॥

जानामि कृष्णे विदितं ममैत ;द्यथाविधास्ते नरदेवपुत्राः ।
न त्वेवमेतेन विभीषणेन ; शक्या वयं त्रासयितुं त्वयाद्य  ॥ ०१०  ॥

वयं पुनः सप्तदशेषु कृष्णे ; कुलेषु सर्वेऽनवमेषु जाताः ।
षड्भ्यो गुणेभ्योऽभ्यधिका विहीना ;न्मन्यामहे द्रौपदि पाण्डुपुत्रान्  ॥ ०११  ॥

सा क्षिप्रमातिष्ठ गजं रथं वा ; न वाक्यमात्रेण वयं हि शक्याः ।
आशंस वा त्वं कृपणं वदन्ती ; सौवीरराजस्य पुनः प्रसादम्  ॥ ०१२  ॥

द्रौपद्युवाच  ॥

महाबला किं त्विह दुर्बलेव ; सौवीरराजस्य मताहमस्मि ।
याहं प्रमाथादिह संप्रतीता ; सौवीरराजं कृपणं वदेयम्  ॥ ०१३  ॥

यस्या हि कृष्णौ पदवीं चरेतां ; समास्थितावेकरथे सहायौ ।
इन्द्रोऽपि तां नापहरेत्कथं चि ;न्मनुष्यमात्रः कृपणः कुतोऽन्यः  ॥ ०१४  ॥

यदा किरीटी परवीरघाती ; निघ्नन्रथस्थो द्विषतां मनांसि ।
मदन्तरे त्वद्ध्वजिनीं प्रवेष्टा ; कक्षं दहन्नग्निरिवोष्णगेषु ॥ ०१५ ॥

जनार्दनस्यानुगा वृष्णिवीरा ; महेष्वासाः केकयाश्चापि सर्वे ।
एते हि सर्वे मम राजपुत्राः ; प्रहृष्टरूपाः पदवीं चरेयुः ॥ ०१६ ॥

मौर्वीविसृष्टाः स्तनयित्नुघोषा ; गाण्डीवमुक्तास्त्वतिवेगवन्तः ।
हस्तं समाहत्य धनञ्जयस्य ; भीमाः शब्दं घोरतरं नदन्ति ॥ ०१७ ॥

गाण्डीवमुक्तांश्च महाशरौघा ;न्पतङ्गसंघानिव शीघ्रवेगान् ।
सशङ्खघोषः सतलत्रघोषो ; गाण्डीवधन्वा मुहुरुद्वमंश्च ॥ ०१८ ॥

यदा शरानर्पयिता तवोरसि ; तदा मनस्ते किमिवाभविष्यत् ॥ ०१८ ॥

गदाहस्तं भीममभिद्रवन्तं ; माद्रीपुत्रौ संपतन्तौ दिशश्च ।
अमर्षजं क्रोधविषं वमन्तौ ; दृष्ट्वा चिरं तापमुपैष्यसेऽधम ॥ ०१९ ॥

यथा चाहं नातिचरे कथं चि ;त्पतीन्महार्हान्मनसापि जातु ।
तेनाद्य सत्येन वशीकृतं त्वां ; द्रष्टास्मि पार्थैः परिकृष्यमाणम् ॥ ०२० ॥

न संभ्रमं गन्तुमहं हि शक्ष्ये ; त्वया नृशंसेन विकृष्यमाणा ।
समागताहं हि कुरुप्रवीरैः ; पुनर्वनं काम्यकमागता च ॥ ०२१ ॥

वैशंपायन उवाच ॥

सा ताननुप्रेक्ष्य विशालनेत्रा ; जिघृक्षमाणानवभर्त्सयन्ती ।
प्रोवाच मा मा स्पृशतेति भीता ; धौम्यं प्रचुक्रोश पुरोहितं सा ॥ ०२२ ॥

जग्राह तामुत्तरवस्त्रदेशे ; जयद्रथस्तं समवाक्षिपत्सा ।
तया समाक्षिप्ततनुः स पापः ; पपात शाखीव निकृत्तमूलः ॥ ०२३ ॥

प्रगृह्यमाणा तु महाजवेन ; मुहुर्विनिःश्वस्य च राजपुत्री ।
सा कृष्यमाणा रथमारुरोह ; धौम्यस्य पादावभिवाद्य कृष्णा ॥ ०२४ ॥

धौम्य उवाच ॥

नेयं शक्या त्वया नेतुमविजित्य महारथान् ।
धर्मं क्षत्रस्य पौराणमवेक्षस्व जयद्रथ ॥ ०२५ ॥

क्षुद्रं कृत्वा फलं पापं प्राप्स्यसि त्वमसंशयम् ।
आसाद्य पाण्डवान्वीरान्धर्मराजपुरोगमान् ॥ ०२६ ॥

वैशंपायन उवाच ॥

इत्युक्त्वा ह्रियमाणां तां राजपुत्रीं यशस्विनीम् ।
अन्वगच्छत्तदा धौम्यः पदातिगणमध्यगः ॥ ०२७ ॥

---

# अध्याय २५३

वैशंपायन उवाच ॥

ततो दिशः संप्रविहृत्य पार्था ; मृगान्वराहान्महिषांश्च हत्वा ।
धनुर्धराः श्रेष्ठतमाः पृथिव्यां ; पृथक्चरन्तः सहिता बभूवुः ॥ ००१ ॥

ततो मृगव्यालगणानुकीर्णं ; महावनं तद्विहगोपघुष्टम् ।
भ्रातॄंश्च तानभ्यवदद्युधिष्ठिरः ; श्रुत्वा गिरो व्याहरतां मृगाणाम् ॥ ००२ ॥

आदित्यदीप्तां दिशमभ्युपेत्य ; मृगद्विजाः क्रूरमिमे वदन्ति ।

आयासमुग्रं प्रतिवेदयन्तो ; महाहवं शत्रुभिर्वावमानम् ॥ ००३ ॥

क्षिप्रं निवर्तध्वमलं मृगैर्नो ; मनो हि मे दूयति दह्यते च ।
बुद्धिं समाच्छाद्य च मे समन्यु ;रुद्धूयते प्राणपतिः शरीरे ॥ ००४ ॥

सरः सुपर्णेन हृतोरगं यथा ; राष्ट्रं यथाराजकमात्तलक्ष्मि ।
एवंविधं मे प्रतिभाति काम्यकं ; शौण्डैर्यथा पीतरसश्च कुम्भः ॥ ००५ ॥

ते सैन्धवैरत्यनिलौघवेगै ;र्महाजवैर्वाजिभिरुह्यमानाः ।
युक्तैर्बृहद्भिः सुरथैर्नृवीरा ;स्तदाश्रमायाभिमुखा बभूवुः ॥ ००६ ॥

तेषां तु गोमायुरनल्पघोषो ; निवर्ततां वाममुपेत्य पार्श्वम् ।
प्रव्याहरत्तं प्रविमृश्य राजा ; प्रोवाच भीमं च धनञ्जयं च ॥ ००७ ॥

यथा वदत्येष विहीनयोनिः ; शालावृको वाममुपेत्य पार्श्वम् ।
सुव्यक्तमस्मानवमन्य पापैः ; कृतोऽभिमर्दः कुरुभिः प्रसह्य ॥ ००८ ॥

इत्येव ते तद्वनमाविशन्तो ; महत्यरण्ये मृगयां चरित्वा ।
बालामपश्यन्त तदा रुदन्तीं ; धात्रेयिकां प्रेष्यवधूं प्रियायाः ॥ ००९ ॥

तामिन्द्रसेनस्त्वरितोऽभिसृत्य ; रथादवप्लुत्य ततोऽभ्यधावत् ।
प्रोवाच चैनां वचनं नरेन्द्र ; धात्रेयिकामार्ततरस्तदानीम् ॥ ०१० ॥

किं रोदिषि त्वं पतिता धरण्यां ; किं ते मुखं शुष्यति दीनवर्णम् ।
कच्चिन्न पापैः सुनृशंसकृद्भिः ; प्रमाथिता द्रौपदी राजपुत्री ॥ ०११ ॥

अनिन्द्यरूपा सुविशालनेत्रा ; शरीरतुल्या कुरुपुङ्गवानाम् ॥ ०११ ॥

यद्येव देवी पृथिवीं प्रविष्टा ; दिवं प्रपन्नाप्यथ वा समुद्रम् ।
तस्या गमिष्यन्ति पदं हि पार्था ;स्तथा हि संतप्यति धर्मराजः ॥ ०१२ ॥

को हीदृशानामरिमर्दनानां ; क्लेशक्षमाणामपराजितानाम् ।
प्राणैः समामिष्टतमां जिहीर्षे ;दनुत्तमं रत्नमिव प्रमूढः ॥ ०१३ ॥

न बुध्यते नाथवतीमिहाद्य ; बहिश्चरं हृदयं पाण्डवानाम् ॥ ०१३ ॥

कस्याद्य कायं प्रतिभिद्य घोरा ; महीं प्रवेक्ष्यन्ति शिताः शराग्र्याः ।
मा त्वं शुचस्तां प्रति भीरु विद्धि ; यथाद्य कृष्णा पुनरेष्यतीति ॥ ०१४ ॥

निहत्य सर्वान्द्विषतः समग्रा ;न्पार्थाः समेष्यन्त्यथ याज्ञसेन्या ॥ ०१४ ॥

अथाब्रवीच्चारुमुखं प्रमृज्य ; धात्रेयिका सारथिमिन्द्रसेनम् ।
जयद्रथेनापहृता प्रमथ्य ; पञ्चेन्द्रकल्पान्परिभूय कृष्णा ॥ ०१५ ॥

तिष्ठन्ति वर्त्मानि नवान्यमूनि ; वृक्षाश्च न म्लान्ति तथैव भग्नाः ।
आवर्तयध्वं ह्यनुयात शीघ्रं ; न दूरयातैव हि राजपुत्री ॥ ०१६ ॥

संनह्यध्वं सर्व एवेन्द्रकल्पा ; महान्ति चारूणि च दंशनानि ।
गृह्णीत चापानि महाधनानि ; शरांश्च शीघ्रं पदवीं व्रजध्वम् ॥ ०१७ ॥

पुरा हि निर्भर्त्सनदण्डमोहिता ; प्रमूढचित्ता वदनेन शुष्यता ।
ददाति कस्मैचिदनर्हते तनुं ; वराज्यपूर्णामिव भस्मनि स्रुचम् ॥ ०१८ ॥

पुरा तुषाग्नाविव हूयते हविः ; पुरा श्मशाने स्रगिवापविध्यते ।
पुरा च सोमोऽध्वरगोऽवलिह्यते ; शुना यथा विप्रजने प्रमोहिते ॥ ०१९ ॥

महत्यरण्ये मृगयां चरित्वा ; पुरा शृगालो नलिनीं विगाहते ॥ ०१९ ॥

मा वः प्रियायाः सुनसं सुलोचनं ; चन्द्रप्रभाच्छं वदनं प्रसन्नम् ।
स्पृश्याच्छुभं कश्चिदकृत्यकारी ; श्वा वै पुरोडाशमिवोपयुङ्क्षीत् ॥ ०२० ॥

एतानि वर्त्मान्यनुयात शीघ्रं ; मा वः कालः क्षिप्रमिहात्यगाद्वै ॥ ०२० ॥

युधिष्ठिर उवाच ॥

भद्रे तूष्णीमास्स्व नियच्छ वाचं ; मास्मत्सकाशे परुषाण्यवोचः ।
राजानो वा यदि वा राजपुत्रा ; बलेन मत्ता वञ्चनां प्राप्नुवन्ति ॥ ०२१ ॥

वैशंपायन उवाच ॥

एतावदुक्त्वा प्रययुर्हि शीघ्रं ; तान्येव वर्त्मान्यनुवर्तमानाः ।
मुहुर्मुहुर्व्यालवदुच्छ्वसन्तो ; ज्यां विक्षिपन्तश्च महाधनुर्भ्यः ॥ ०२२ ॥

ततोऽपश्यंस्तस्य सैन्यस्य रेणु ;मुद्धूतं वै वाजिखुरप्रणुन्नम् ।
पदातीनां मध्यगतं च धौम्यं ; विक्रोशन्तं भीममभिद्रवेति ॥ ०२३ ॥

ते सान्त्व्य धौम्यं परिदीनसत्त्वाः ; सुखं भवानेत्विति राजपुत्राः ।
श्येना यथैवामिषसंप्रयुक्ता ; जवेन तत्सैन्यमथाभ्यधावन् ॥ ०२४ ॥

तेषां महेन्द्रोपमविक्रमाणां ; संरब्धानां धर्षणाद्याज्ञसेन्याः ।
क्रोधः प्रजज्वाल जयद्रथं च ; दृष्ट्वा प्रियां तस्य रथे स्थितां च ॥ ०२५ ॥

प्रचुक्रुशुश्चाप्यथ सिन्धुराजं ; वृकोदरश्चैव धनञ्जयश्च ।
यमौ च राजा च महाधनुर्धरा ;स्ततो दिशः संमुमुहुः परेषाम् ॥ ०२६ ॥

---

# अध्याय २५४

वैशंपायन उवाच ॥

ततो घोरतरः शब्दो वने समभवत्तदा ।
भीमसेनार्जुनौ दृष्ट्वा क्षत्रियाणाममर्षिणाम् ॥ ००१ ॥

तेषां ध्वजाग्राण्यभिवीक्ष्य राजा ; स्वयं दुरात्मा कुरुपुङ्गवानाम् ।
जयद्रथो याज्ञसेनीमुवाच ; रथे स्थितां भानुमतीं हतौजाः ॥ ००२ ॥

आयान्तीमे पञ्च रथा महान्तो ; मन्ये च कृष्णे पतयस्तवैते ।
सा जानती ख्यापय नः सुकेशि ; परं परं पाण्डवानां रथस्थम् ॥ ००३ ॥

द्रौपद्युवाच ॥

किं ते ज्ञातैर्मूढ महाधनुर्धरै ;रनायुष्यं कर्म कृत्वातिघोरम् ।
एते वीराः पतयो मे समेता ; न वः शेषः कश्चिदिहास्ति युद्धे ॥ ००४ ॥

आख्यातव्यं त्वेव सर्वं मुमूर्षो ;र्मया तुभ्यं पृष्टया धर्म एषः ।
न मे व्यथा विद्यते त्वद्भयं वा ; संपश्यन्त्याः सानुजं धर्मराजम् ॥ ००५ ॥

यस्य ध्वजाग्रे नदतो मृदङ्गौ ; नन्दोपनन्दौ मधुरौ युक्तरूपौ ।
एतं स्वधर्मार्थविनिश्चयज्ञं ; सदा जनाः कृत्यवन्तोऽनुयान्ति ॥ ००६ ॥

य एष जाम्बूनदशुद्धगौरः ; प्रचण्डघोणस्तनुरायताक्षः ।
एतं कुरुश्रेष्ठतमं वदन्ति ; युधिष्ठिरं धर्मसुतं पतिं मे ॥ ००७ ॥

अप्येष शत्रोः शरणागतस्य ; दद्यात्प्राणान्धर्मचारी नृवीरः ।
परैह्येनं मूढ जवेन भूतये ; त्वमात्मनः प्राञ्जलिर्न्यस्तशस्त्रः ॥ ००८ ॥

अथाप्येनं पश्यसि यं रथस्थं ; महाभुजं शालमिव प्रवृद्धम् ।
संदष्टोष्ठं भ्रुकुटीसंहतभ्रुवं ; वृकोदरो नाम पतिर्ममैषः ॥ ००९ ॥

आजानेया बलिनः साधु दान्ता ; महाबलाः शूरमुदावहन्ति ।
एतस्य कर्माण्यतिमानुषाणि ; भीमेति शब्दोऽस्य गतः पृथिव्याम् ॥ ०१० ॥

नास्यापराद्धाः शेषमिहाप्नुवन्ति ; नाप्यस्य वैरं विस्मरते कदाचित् ।
वैरस्यान्तं संविधायोपयाति ; पश्चाच्छान्तिं न च गच्छत्यतीव ॥ ०११ ॥

मृदुर्वदान्यो धृतिमान्यशस्वी ; जितेन्द्रियो वृद्धसेवी नृवीरः ।
भ्राता च शिष्यश्च युधिष्ठिरस्य ; धनञ्जयो नाम पतिर्ममैषः ॥ ०१२ ॥

यो वै न कामान्न भयान्न लोभा ;त्त्यजेद्धर्मं न नृशंसं च कुर्यात् ।
स एष वैश्वानरतुल्यतेजाः ; कुन्तीसुतः शत्रुसहः प्रमाथी ॥ ०१३ ॥

यः सर्वधर्मार्थविनिश्चयज्ञो ; भयार्तानां भयहर्ता मनीषी ।
यस्योत्तमं रूपमाहुः पृथिव्यां ; यं पाण्डवाः परिरक्षन्ति सर्वे ॥ ०१४ ॥

प्राणैर्गरीयांसमनुव्रतं वै ; स एष वीरो नकुलः पतिर्मे ।
यः खड्गयोधी लघुचित्रहस्तो ; महांश्च धीमान्सहदेवोऽद्वितीयः ॥ ०१५ ॥

यस्याद्य कर्म द्रक्ष्यसे मूढसत्त्व ; शतक्रतोर्वा दैत्यसेनासु संख्ये ।
शूरः कृतास्त्रो मतिमान्मनीषी ; प्रियङ्करो धर्मसुतस्य राज्ञः ॥ ०१६ ॥

य एष चन्द्रार्कसमानतेजा ; जघन्यजः पाण्डवानां प्रियश्च ।
बुद्ध्या समो यस्य नरो न विद्यते ; वक्ता तथा सत्सु विनिश्चयज्ञः ॥ ०१७ ॥

स एष शूरो नित्यममर्षणश्च ; धीमान्प्राज्ञः सहदेवः पतिर्मे ।
त्यजेत्प्राणान्प्रविशेद्धव्यवाहं ; न त्वेवैष व्याहरेद्धर्मबाह्यम् ॥ ०१८ ॥

सदा मनस्वी क्षत्रधर्मे निविष्टः ; कुन्त्याः प्राणैरिष्टतमो नृवीरः ॥ ०१८ ॥

विशीर्यन्तीं नावमिवार्णवान्ते ; रत्नाभिपूर्णां मकरस्य पृष्ठे ।
सेनां तवेमां हतसर्वयोधां ; विक्षोभितां द्रक्ष्यसि पाण्डुपुत्रैः ॥ ०१९ ॥

इत्येते वै कथिताः पाण्डुपुत्रा ; यांस्त्वं मोहादवमन्य प्रवृत्तः ।

यद्येतैस्त्वं मुच्यसेऽरिष्टदेहः ; पुनर्जन्म प्राप्स्यसे जीव एव ॥ ०२० ॥

वैशंपायन उवाच ॥

ततः पार्थाः पञ्च पञ्चेन्द्रकल्पा ;स्त्यक्त्वा त्रस्तान्प्राञ्जलींस्तान्पदातीन् ।
रथानीकं शरवर्षान्धकारं ; चक्रुः क्रुद्धाः सर्वतः संनिगृह्य ॥ ०२१ ॥

---

# अध्याय २५५

वैशंपायन उवाच ॥

संतिष्ठत प्रहरत तूर्णं विपरिधावत ।
इति स्म सैन्धवो राजा चोदयामास तान्नृपान् ॥ ००१ ॥

ततो घोरतरः शब्दो रणे समभवत्तदा ।
भीमार्जुनयमान्दृष्ट्वा सैन्यानां सयुधिष्ठिरान् ॥ ००२ ॥

शिबिसिन्धुत्रिगर्तानां विषादश्चाप्यजायत ।
तान्दृष्ट्वा पुरुषव्याघ्रान्व्याघ्रानिव बलोत्कटान् ॥ ००३ ॥

हेमचित्रसमुत्सेधां सर्वशैक्यायसीं गदाम् ।
प्रगृह्याभ्यद्रवद्भीमः सैन्धवं कालचोदितम् ॥ ००४ ॥

तदन्तरमथावृत्य कोटिकाश्योऽभ्यहारयत् ।
महता रथवंशेन परिवार्य वृकोदरम् ॥ ००५ ॥

शक्तितोमरनाराचैर्वीरबाहुप्रचोदितैः ।
कीर्यमाणोऽपि बहुभिर्न स्म भीमोऽभ्यकम्पत ॥ ००६ ॥

गजं तु सगजारोहं पदातींश्च चतुर्दश ।
जघान गदया भीमः सैन्धवध्वजिनीमुखे ॥ ००७ ॥

पार्थः पञ्चशताञ्शूरान्पार्वतीयान्महारथान् ।
परीप्समानः सौवीरं जघान ध्वजिनीमुखे ॥ ००८ ॥

राजा स्वयं सुवीराणां प्रवराणां प्रहारिणाम् ।
निमेषमात्रेण शतं जघान समरे तदा ॥ ००९ ॥

ददृशे नकुलस्तत्र रथात्प्रस्कन्द्य खड्गधृक् ।
शिरांसि पादरक्षाणां बीजवत्प्रवपन्मुहुः ॥ ०१० ॥

सहदेवस्तु संयाय रथेन गजयोधिनः ।
पातयामास नाराचैर्द्रुमेभ्य इव बर्हिणः ॥ ०११ ॥

ततस्त्रिगर्तः सधनुरवतीर्य महारथात् ।
गदया चतुरो वाहान्राज्ञस्तस्य तदावधीत् ॥ ०१२ ॥

तमभ्याशगतं राजा पदातिं कुन्तिनन्दनः ।
अर्धचन्द्रेण बाणेन विव्याधोरसि धर्मराट् ॥ ०१३ ॥

स भिन्नहृदयो वीरो वक्त्राच्छोणितमुद्वमन् ।
पपाताभिमुखः पार्थं छिन्नमूल इव द्रुमः ॥ ०१४ ॥

इन्द्रसेनद्वितीयस्तु रथात्प्रस्कन्द्य धर्मराट् ।
हताश्वः सहदेवस्य प्रतिपेदे महारथम् ॥ ०१५ ॥

नकुलं त्वभिसंधाय क्षेमङ्करमहामुखौ ।
उभावुभयतस्तीक्ष्णैः शरवर्षैरवर्षताम् ॥ ०१६ ॥

तौ शरैरभिवर्षन्तौ जीमूताविव वार्षिकौ ।
एकैकेन विपाठेन जघ्ने माद्रवतीसुतः ॥ ०१७ ॥

त्रिगर्तराजः सुरथस्तस्याथ रथधूर्गतः ।
रथमाक्षेपयामास गजेन गजयानवित् ॥ ०१८ ॥

नकुलस्त्वपभीस्तस्माद्रथाच्चर्मासिपाणिमान् ।
उद्भ्रान्तं स्थानमास्थाय तस्थौ गिरिरिवाचलः ॥ ०१९ ॥

सुरथस्तं गजवरं वधाय नकुलस्य तु ।
प्रेषयामास सक्रोधमभ्युच्छ्रितकरं ततः ॥ ०२० ॥

नकुलस्तस्य नागस्य समीपपरिवर्तिनः ।
सविषाणं भुजं मूले खड्गेन निरकृन्तत ॥ ०२१ ॥

स विनद्य महानादं गजः कङ्कणभूषणः ।
पतन्नवाक्शिरा भूमौ हस्त्यारोहानपोथयत् ॥ ०२२ ॥

स तत्कर्म महत्कृत्वा शूरो माद्रवतीसुतः ।
भीमसेनरथं प्राप्य शर्म लेभे महारथः ॥ ०२३ ॥

भीमस्त्वापततो राज्ञः कोटिकाश्यस्य सङ्गरे ।
सूतस्य नुदतो वाहान्क्षुरेणापाहरच्छिरः ॥ ०२४ ॥

न बुबोध हतं सूतं स राजा बाहुशालिना ।
तस्याश्वा व्यद्रवन्संख्ये हतसूतास्ततस्ततः ॥ ०२५ ॥

विमुखं हतसूतं तं भीमः प्रहरतां वरः ।
जघान तलयुक्तेन प्रासेनाभ्येत्य पाण्डवः ॥ ०२६ ॥

द्वादशानां तु सर्वेषां सौवीराणां धनञ्जयः ।

चकर्त निषितैर्भल्लैर्धनूंषि च शिरांसि च ॥ ०२७ ॥

शिबीनिक्ष्वाकुमुख्यांश्च त्रिगर्तान्सैन्धवानपि ।
जघानातिरथः संख्ये बाणगोचरमागतान् ॥ ०२८ ॥

सादिताः प्रत्यदृश्यन्त बहवः सव्यसाचिना ।
सपताकाश्च मातङ्गाः सध्वजाश्च महारथाः ॥ ०२९ ॥

प्रच्छाद्य पृथिवीं तस्थुः सर्वमायोधनं प्रति ।
शरीराण्यशिरस्कानि विदेहानि शिरांसि च ॥ ०३० ॥

श्वगृध्रकङ्ककाकोलभासगोमायुवायसाः ।
अतृप्यंस्तत्र वीराणां हतानां मांसशोणितैः ॥ ०३१ ॥

हतेषु तेषु वीरेषु सिन्धुराजो जयद्रथः ।
विमुच्य कृष्णां संत्रस्तः पलायनपरोऽभवत् ॥ ०३२ ॥

स तस्मिन्सङ्कुले सैन्ये द्रौपदीमवतार्य वै ।
प्राणप्रेप्सुरुपाधावद्वनं येन नराधमः ॥ ०३३ ॥

द्रौपदीं धर्मराजस्तु दृष्ट्वा धौम्यपुरस्कृताम् ।
माद्रीपुत्रेण वीरेण रथमारोपयत्तदा ॥ ०३४ ॥

ततस्तद्विद्रुतं सैन्यमपयाते जयद्रथे ।
आदिश्यादिश्य नाराचैराजघान वृकोदरः ॥ ०३५ ॥

सव्यसाची तु तं दृष्ट्वा पलायन्तं जयद्रथम् ।
वारयामास निघ्नन्तं भीमं सैन्धवसैनिकान् ॥ ०३६ ॥

अर्जुन उवाच ॥

यस्यापचारात्प्राप्तोऽयमस्मान्क्लेशो दुरासदः ।
तमस्मिन्समरोद्देशे न पश्यामि जयद्रथम् ॥ ०३७ ॥

तमेवान्विष भद्रं ते किं ते योधैर्निपातितैः ।
अनामिषमिदं कर्म कथं वा मन्यते भवान् ॥ ०३८ ॥

वैशंपायन उवाच ॥

इत्युक्तो भीमसेनस्तु गुडाकेशेन धीमता ।
युधिष्ठिरमभिप्रेक्ष्य वाग्मी वचनमब्रवीत् ॥ ०३९ ॥

हतप्रवीरा रिपवो भूयिष्ठं विद्रुता दिशः ।
गृहीत्वा द्रौपदीं राजन्निवर्ततु भवानितः ॥ ०४० ॥

यमाभ्यां सह राजेन्द्र धौम्येन च महात्मना ।
प्राप्याश्रमपदं राजन्द्रौपदीं परिसान्त्वय ॥ ०४१ ॥

न हि मे मोक्ष्यते जीवन्मूढः सैन्धवको नृपः ।
पातालतलसंस्थोऽपि यदि शक्रोऽस्य सारथिः ॥ ०४२ ॥

युधिष्ठिर उवाच ॥

न हन्तव्यो महाबाहो दुरात्मापि स सैन्धवः ।
दुःशलामभिसंस्मृत्य गान्धारीं च यशस्विनीम् ॥ ०४३ ॥

वैशंपायन उवाच ॥

तच्छ्रुत्वा द्रौपदी भीममुवाच व्याकुलेन्द्रिया ।
कुपिता ह्रीमती प्राज्ञा पती भीमार्जुनावुभौ ॥ ०४४ ॥

कर्तव्यं चेत्प्रियं मह्यं वध्यः स पुरुषाधमः ।

सैन्धवापसदः पापो दुर्मतिः कुलपांसनः ॥ ०४५ ॥

भार्याभिहर्ता निर्वैरो यश्च राज्यहरो रिपुः ।
याचमानोऽपि सङ्ग्रामे न स जीवितुमर्हति ॥ ०४६ ॥

इत्युक्तौ तौ नरव्याघ्रौ ययतुर्यत्र सैन्धवः ।
राजा निववृते कृष्णामादाय सपुरोहितः ॥ ०४७ ॥

स प्रविश्याश्रमपदं व्यपविद्धबृसीघटम् ।
मार्कण्डेयादिभिर्विप्रैरनुकीर्णं ददर्श ह ॥ ०४८ ॥

द्रौपदीमनुशोचद्भिर्ब्राह्मणैस्तैः समागतैः ।
समियाय महाप्राज्ञः सभार्यो भ्रातृमध्यगः ॥ ०४९ ॥

ते स्म तं मुदिता दृष्ट्वा पुनरभ्यागतं नृपम् ।
जित्वा तान्सिन्धुसौवीरान्द्रौपदीं चाहृतां पुनः ॥ ०५० ॥

स तैः परिवृतो राजा तत्रैवोपविवेश ह ।
प्रविवेशाश्रमं कृष्णा यमाभ्यां सह भामिनी ॥ ०५१ ॥

भीमार्जुनावपि श्रुत्वा क्रोशमात्रगतं रिपुम् ।
स्वयमश्वांस्तुदन्तौ तौ जवेनैवाभ्यधावताम् ॥ ०५२ ॥

इदमत्यद्भुतं चात्र चकार पुरुषोऽर्जुनः ।
क्रोशमात्रगतानश्वान्सैन्धवस्य जघान यत् ॥ ०५३ ॥

स हि दिव्यास्त्रसंपन्नः कृच्छ्रकालेऽप्यसंभ्रमः ।
अकरोद्दुष्करं कर्म शरैरस्त्रानुमन्त्रितैः ॥ ०५४ ॥

ततोऽभ्यधावतां वीरावुभौ भीमधनञ्जयौ ।
हताश्वं सैन्धवं भीतमेकं व्याकुलचेतसम् ॥ ०५५ ॥

सैन्धवस्तु हतान्दृष्ट्वा तथाश्वान्स्वान्सुदुःखितः ।
दृष्ट्वा विक्रमकर्माणि कुर्वाणं च धनञ्जयम् ॥ ०५६ ॥

पलायनकृतोत्साहः प्राद्रवद्येन वै वनम् ॥ ०५६ ॥

सैन्धवं त्वभिसंप्रेक्ष्य पराक्रान्तं पलायने ।
अनुयाय महाबाहुः फल्गुनो वाक्यमब्रवीत् ॥ ०५७ ॥

अनेन वीर्येण कथं स्त्रियं प्रार्थयसे बलात् ।
राजपुत्र निवर्तस्व न ते युक्तं पलायनम् ॥ ०५८ ॥

कथं चानुचरान्हित्वा शत्रुमध्ये पलायसे ॥ ०५८ ॥

इत्युच्यमानः पार्थेन सैन्धवो न न्यवर्तत ।
तिष्ठ तिष्ठेति तं भीमः सहसाभ्यद्रवद्बली ॥ ०५९ ॥

मा वधीरिति पार्थस्तं दयावानभ्यभाषत ॥ ०५९ ॥

---

# अध्याय २५६

वैशंपायन उवाच ॥

जयद्रथस्तु संप्रेक्ष्य भ्रातरावुद्यतायुधौ ।
प्राद्रवत्तूर्णमव्यग्रो जीवितेप्सुः सुदुःखितः ॥ ००१ ॥

तं भीमसेनो धावन्तमवतीर्य रथाद्बली ।
अभिद्रुत्य निजग्राह केशपक्षेऽत्यमर्षणः ॥ ००२ ॥

समुद्यम्य च तं रोषान्निष्पिपेष महीतले ।
गले गृहीत्वा राजानं ताडयामास चैव ह ॥ ००३ ॥

पुनः सञ्जीवमानस्य तस्योत्पतितुमिच्छतः ।
पदा मूर्ध्नि महाबाहुः प्राहरद्विलपिष्यतः ॥ ००४ ॥

तस्य जानुं ददौ भीमो जघ्ने चैनमरत्निना ।
स मोहमगमद्राजा प्रहारवरपीडितः ॥ ००५ ॥

विरोषं भीमसेनं तु वारयामास फल्गुनः ।
दुःशलायाः कृते राजा यत्तदाहेति कौरव ॥ ००६ ॥

भीमसेन उवाच ॥

नायं पापसमाचारो मत्तो जीवितुमर्हति ।
द्रौपद्यास्तदनर्हायाः परिक्लेष्टा नराधमः ॥ ००७ ॥

किं नु शक्यं मया कर्तुं यद्राजा सततं घृणी ।
त्वं च बालिशया बुद्ध्या सदैवास्मान्प्रबाधसे ॥ ००८ ॥

एवमुक्त्वा सटास्तस्य पञ्च चक्रे वृकोदरः ।
अर्धचन्द्रेण बाणेन किञ्चिदब्रुवतस्तदा ॥ ००९ ॥

विकल्पयित्वा राजानं ततः प्राह वृकोदरः ।
जीवितुं चेच्छसे मूढ हेतुं मे गदतः श्रृणु ॥ ०१० ॥

दासोऽस्मीति त्वया वाच्यं संसत्सु च सभासु च ।
एवं ते जीवितं दद्यामेष युद्धजितो विधिः ॥ ०११ ॥

एवमस्त्विति तं राजा कृच्छ्रप्राणो जयद्रथः ।

प्रोवाच पुरुषव्याघ्रं भीममाहवशोभिनम् ॥ ०१२ ॥

तत एनं विचेष्टन्तं बद्ध्वा पार्थो वृकोदरः ।
रथमारोपयामास विसञ्ज्ञं पांसुगुण्ठितम् ॥ ०१३ ॥

ततस्तं रथमास्थाय भीमः पार्थानुगस्तदा ।
अभ्येत्याश्रममध्यस्थमभ्यगच्छद्युधिष्ठिरम् ॥ ०१४ ॥

दर्शयामास भीमस्तु तदवस्थं जयद्रथम् ।
तं राजा प्राहसद्दृष्ट्वा मुच्यतामिति चाब्रवीत् ॥ ०१५ ॥

राजानं चाब्रवीद्भीमो द्रौपद्यै कथयेति वै ।
दासभावं गतो ह्येष पाण्डूनां पापचेतनः ॥ ०१६ ॥

तमुवाच ततो ज्येष्ठो भ्राता सप्रणयं वचः ।
मुञ्चैनमधमाचारं प्रमाणं यदि ते वयम् ॥ ०१७ ॥

द्रौपदी चाब्रवीद्भीममभिप्रेक्ष्य युधिष्ठिरम् ।
दासोऽयं मुच्यतां राज्ञस्त्वया पञ्चसटः कृतः ॥ ०१८ ॥

स मुक्तोऽभ्येत्य राजानमभिवाद्य युधिष्ठिरम् ।
ववन्दे विह्वलो राजा तांश्च सर्वान्मुनींस्तदा ॥ ०१९ ॥

तमुवाच घृणी राजा धर्मपुत्रो युधिष्ठिरः ।
तथा जयद्रथं दृष्ट्वा गृहीतं सव्यसाचिना ॥ ०२० ॥

अदासो गच्छ मुक्तोऽसि मैवं कार्षीः पुनः क्वचित् ।
स्त्रीकामुक धिगस्तु त्वां क्षुद्रः क्षुद्रसहायवान् ॥ ०२१ ॥

एवंविधं हि कः कुर्यात्त्वदन्यः पुरुषाधमः ॥ ०२१ ॥

गतसत्त्वमिव ज्ञात्वा कर्तारमशुभस्य तम् ।
संप्रेक्ष्य भरतश्रेष्ठः कृपां चक्रे नराधिपः ॥ ०२२ ॥

धर्मे ते वर्धतां बुद्धिर्मा चाधर्मे मनः कृथाः ।
साश्वः सरथपादातः स्वस्ति गच्छ जयद्रथ ॥ ०२३ ॥

एवमुक्तस्तु सव्रीडं तूष्णीं किञ्चिदवाङ्मुखः ।
जगाम राजा दुःखार्तो गङ्गाद्वाराय भारत ॥ ०२४ ॥

स देवं शरणं गत्वा विरूपाक्षमुमापतिम् ।
तपश्चचार विपुलं तस्य प्रीतो वृषध्वजः ॥ ०२५ ॥

बलिं स्वयं प्रत्यगृह्णात्प्रीयमाणस्त्रिलोचनः ।
वरं चास्मै ददौ देवः स च जग्राह तच्छृणु ॥ ०२६ ॥

समस्तान्सरथान्पञ्च जयेयं युधि पाण्डवान् ।
इति राजाब्रवीद्देवं नेति देवस्तमब्रवीत् ॥ ०२७ ॥

अजय्यांश्चाप्यवध्यांश्च वारयिष्यसि तान्युधि ।
ऋतेऽर्जुनं महाबाहुं देवैरपि दुरासदम् ॥ ०२८ ॥

यमाहुरजितं देवं शङ्खचक्रगदाधरम् ।
प्रधानः सोऽस्त्रविदुषां तेन कृष्णेन रक्ष्यते ॥ ०२९ ॥

एवमुक्तस्तु नृपतिः स्वमेव भवनं ययौ ।
पाण्डवाश्च वने तस्मिन्न्यवसन्काम्यके तदा ॥ ०३० ॥

# अध्याय २५७

जनमेजय उवाच ॥

एवं हृतायां कृष्णायां प्राप्य क्लेशमनुत्तमम् ।
अत ऊर्ध्वं नरव्याघ्राः किमकुर्वत पाण्डवाः ॥ ००१ ॥

वैशंपायन उवाच ॥

एवं कृष्णां मोक्षयित्वा विनिर्जित्य जयद्रथम् ।
आसां चक्रे मुनिगणैर्धर्मराजो युधिष्ठिरः ॥ ००२ ॥

तेषां मध्ये महर्षीणां शृण्वतामनुशोचताम् ।
मार्कण्डेयमिदं वाक्यमब्रवीत्पाण्डुनन्दनः ॥ ००३ ॥

मन्ये कालश्च बलवान्दैवं च विधिनिर्मितम् ।
भवितव्यं च भूतानां यस्य नास्ति व्यतिक्रमः ॥ ००४ ॥

कथं हि पत्नीमस्माकं धर्मज्ञां धर्मचारिणीम् ।
संस्पृशेदीदृशो भावः शुचिं स्तैन्यमिवानृतम् ॥ ००५ ॥

न हि पापं कृतं किञ्चित्कर्म वा निन्दितं क्वचित् ।
द्रौपद्या ब्राह्मणेष्वेव धर्मः सुचरितो महान् ॥ ००६ ॥

तां जहार बलाद्राजा मूढबुद्धिर्जयद्रथः ।
तस्याः संहरणात्प्राप्तः शिरसः केशवापनम् ॥ ००७ ॥

पराजयं च सङ्ग्रामे ससहायः समाप्तवान् ॥ ००७ ॥

प्रत्याहृता तथास्माभिर्हत्वा तत्सैन्धवं बलम् ।
तद्दारहरणं प्राप्तमस्माभिरवितर्कितम् ॥ ००८ ॥

दुःखश्चायं वने वासो मृगयायां च जीविका ।
हिंसा च मृगजातीनां वनौकोभिर्वनौकसाम्  ॥ ००९  ॥

ज्ञातिभिर्विप्रवासश्च मिथ्या व्यवसितैरयम्  ॥ ००९  ॥

अस्ति नूनं मया कश्चिदल्पभाग्यतरो नरः ।
भवता दृष्टपूर्वो वा श्रुतपूर्वोऽपि वा भवेत्  ॥ ०१०  ॥

---

# रामोपाख्यानम्

## अध्याय २५८

मार्कण्डेय उवाच  ॥

प्राप्तमप्रतिमं दुःखं रामेण भरतर्षभ ।
रक्षसा जानकी तस्य हृता भार्या बलीयसा  ॥ ००१  ॥

आश्रमाद्राक्षसेन्द्रेण रावणेन विहायसा ।
मायामास्थाय तरसा हत्वा गृध्रं जटायुषम्  ॥ ००२  ॥

प्रत्याजहार तां रामः सुग्रीवबलमाश्रितः ।
बद्ध्वा सेतुं समुद्रस्य दग्ध्वा लङ्कां शितैः शरैः  ॥ ००३  ॥

युधिष्ठिर उवाच  ॥

कस्मिन्रामः कुले जातः किंवीर्यः किंपराक्रमः ।

रावणः कस्य वा पुत्रः किं वैरं तस्य तेन ह ॥ ००४ ॥

एतन्मे भगवन्सर्वं सम्यगाख्यातुमर्हसि ।
श्रोतुमिच्छामि चरितं रामस्याक्लिष्टकर्मणः ॥ ००५ ॥

मार्कण्डेय उवाच ॥

अजो नामाभवद्राजा महानिक्ष्वाकुवंशजः ।
तस्य पुत्रो दशरथः शश्वत्स्वाध्यायवाञ्शुचिः ॥ ००६ ॥

अभवंस्तस्य चत्वारः पुत्रा धर्मार्थकोविदाः ।
रामलक्ष्मणशत्रुघ्ना भरतश्च महाबलः ॥ ००७ ॥

रामस्य माता कौसल्या कैकेयी भरतस्य तु ।
सुतौ लक्ष्मणशत्रुघ्नौ सुमित्रायाः परंतपौ ॥ ००८ ॥

विदेहराजो जनकः सीता तस्यात्मजा विभो ।
यां चकार स्वयं त्वष्टा रामस्य महिषीं प्रियाम् ॥ ००९ ॥

एतद्रामस्य ते जन्म सीतायाश्च प्रकीर्तितम् ।
रावणस्यापि ते जन्म व्याख्यास्यामि जनेश्वर ॥ ०१० ॥

पितामहो रावणस्य साक्षाद्देवः प्रजापतिः ।
स्वयंभूः सर्वलोकानां प्रभुः स्रष्टा महातपाः ॥ ०११ ॥

पुलस्त्यो नाम तस्यासीन्मानसो दयितः सुतः ।
तस्य वैश्रवणो नाम गवि पुत्रोऽभवत्प्रभुः ॥ ०१२ ॥

पितरं स समुत्सृज्य पितामहमुपस्थितः ।
तस्य कोपात्पिता राजन्ससर्जात्मानमात्मना ॥ ०१३ ॥

स जज्ञे विश्रवा नाम तस्यात्मार्धेन वै द्विजः ।
प्रतीकाराय सक्रोधस्ततो वैश्रवणस्य वै ॥ ०१४ ॥

पितामहस्तु प्रीतात्मा ददौ वैश्रवणस्य ह ।
अमरत्वं धनेशत्वं लोकपालत्वमेव च ॥ ०१५ ॥

ईशानेन तथा सख्यं पुत्रं च नलकूबरम् ।
राजधानीनिवेशं च लङ्कां रक्षोगणान्विताम् ॥ ०१६ ॥

---

# अध्याय २५९

मार्कण्डेय उवाच ॥

पुलस्त्यस्य तु यः क्रोधादर्धदेहोऽभवन्मुनिः ।
विश्रवा नाम सक्रोधः स वैश्रवणमैक्षत ॥ ००१ ॥

बुबुधे तं तु सक्रोधं पितरं राक्षसेश्वरः ।
कुबेरस्तत्प्रसादार्थं यतते स्म सदा नृप ॥ ००२ ॥

स राजराजो लङ्कायां निवसन्नरवाहनः ।
राक्षसीः प्रददौ तिस्रः पितुर्वै परिचारिकाः ॥ ००३ ॥

तास्तदा तं महात्मानं संतोषयितुमुद्यताः ।
ऋषिं भरतशार्दूल नृत्तगीतविशारदाः ॥ ००४ ॥

पुष्पोत्कटा च राका च मालिनी च विशां पते ।
अन्योन्यस्पर्धया राजञ्श्रेयस्कामाः सुमध्यमाः ॥ ००५ ॥

तासां स भगवांस्तुष्टो महात्मा प्रददौ वरान् ।
लोकपालोपमान्पुत्रानेकैकस्या यथेप्सितान् ॥ ००६ ॥

पुष्पोत्कटायां जज्ञाते द्वौ पुत्रौ राक्षसेश्वरौ ।
कुम्भकर्णदशग्रीवौ बलेनाप्रतिमौ भुवि ॥ ००७ ॥

मालिनी जनयामास पुत्रमेकं विभीषणम् ।
राकायां मिथुनं जज्ञे खरः शूर्पणखा तथा ॥ ००८ ॥

विभीषणस्तु रूपेण सर्वेभ्योऽभ्यधिकोऽभवत् ।
स बभूव महाभागो धर्मगोप्ता क्रियारतिः ॥ ००९ ॥

दशग्रीवस्तु सर्वेषां ज्येष्ठो राक्षसपुङ्गवः ।
महोत्साहो महावीर्यो महासत्त्वपराक्रमः ॥ ०१० ॥

कुम्भकर्णो बलेनासीत्सर्वेभ्योऽभ्यधिकस्तदा ।
मायावी रणशौण्डश्च रौद्रश्च रजनीचरः ॥ ०११ ॥

खरो धनुषि विक्रान्तो ब्रह्मद्विद्पिशिताशनः ।
सिद्धविघ्नकरी चापि रौद्रा शूर्पणखा तथा ॥ ०१२ ॥

सर्वे वेदविदः शूराः सर्वे सुचरितव्रताः ।
ऊषुः पित्रा सह रता गन्धमादनपर्वते ॥ ०१३ ॥

ततो वैश्रवणं तत्र ददृशुर्नरवाहनम् ।
पित्रा सार्धं समासीनमृद्ध्या परमया युतम् ॥ ०१४ ॥

जातस्पर्धास्ततस्ते तु तपसे धृतनिश्चयाः ।
ब्रह्माणं तोषयामासुर्घोरेण तपसा तदा ॥ ०१५ ॥

अतिष्ठदेकपादेन सहस्रं परिवत्सरान् ।

वायुभक्षो दशग्रीवः पञ्चाग्निः सुसमाहितः ॥ ०१६ ॥

अधःशायी कुम्भकर्णो यताहारो यतव्रतः ।
विभीषणः शीर्णपर्णमेकमभ्यवहारयत् ॥ ०१७ ॥

उपवासरतिर्धीमान्सदा जप्यपरायणः ।
तमेव कालमातिष्ठत्तीव्रं तप उदारधीः ॥ ०१८ ॥

खरः शूर्पणखा चैव तेषां वै तप्यतां तपः ।
परिचर्यां च रक्षां च चक्रतुर्हृष्टमानसौ ॥ ०१९ ॥

पूर्णे वर्षसहस्रे तु शिरश्छित्त्वा दशाननः ।
जुहोत्यग्नौ दुराधर्षस्तेनातुष्यज्जगत्प्रभुः ॥ ०२० ॥

ततो ब्रह्मा स्वयं गत्वा तपसस्तान्न्यवारयत् ।
प्रलोभ्य वरदानेन सर्वानेव पृथक्पृथक् ॥ ०२१ ॥

ब्रह्मोवाच ॥

प्रीतोऽस्मि वो निवर्तध्वं वरान्वृणुत पुत्रकाः ।
यद्यदिष्टमृते त्वेकममरत्वं तथास्तु तत् ॥ ०२२ ॥

यद्यदग्नौ हुतं सर्वं शिरस्ते महदीप्सया ।
तथैव तानि ते देहे भविष्यन्ति यथेप्सितम् ॥ ०२३ ॥

वैरूप्यं च न ते देहे कामरूपधरस्तथा ।
भविष्यसि रणेऽरीणां विजेतासि न संशयः ॥ ०२४ ॥

रावण उवाच ॥

गन्धर्वदेवासुरतो यक्षराक्षसतस्तथा ।

सर्पकिंनरभूतेभ्यो न मे भूयात्पराभवः ॥ ०२५ ॥

ब्रह्मोवाच ॥

य एते कीर्तिताः सर्वे न तेभ्योऽस्ति भयं तव ।
ऋते मनुष्याद्भद्रं ते तथा तद्विहितं मया ॥ ०२६ ॥

मार्कण्डेय उवाच ॥

एवमुक्तो दशग्रीवस्तुष्टः समभवत्तदा ।
अवमेने हि दुर्बुद्धिर्मनुष्यान्पुरुषादकः ॥ ०२७ ॥

कुम्भकर्णमथोवाच तथैव प्रपितामहः ।
स वव्रे महतीं निद्रां तमसा ग्रस्तचेतनः ॥ ०२८ ॥

तथा भविष्यतीत्युक्त्वा विभीषणमुवाच ह ।
वरं वृणीष्व पुत्र त्वं प्रीतोऽस्मीति पुनः पुनः ॥ ०२९ ॥

विभीषण उवाच ॥

परमापद्गतस्यापि नाधर्मे मे मतिर्भवेत् ।
अशिक्षितं च भगवन्ब्रह्मास्त्रं प्रतिभातु मे ॥ ०३० ॥

ब्रह्मोवाच ॥

यस्माद्राक्षसयोनौ ते जातस्यामित्रकर्शन ।
नाधर्मे रमते बुद्धिरमरत्वं ददामि ते ॥ ०३१ ॥

मार्कण्डेय उवाच ॥

राक्षसस्तु वरं लब्ध्वा दशग्रीवो विशां पते ।

लङ्कायाश्च्यावयामास युधि जित्वा धनेश्वरम्  ॥ ०३२  ॥

हित्वा स भगवा.णल्लङ्कामाविशद्गन्धमादनम् ।
गन्धर्वयक्षानुगतो रक्षःकिंपुरुषैः सह  ॥ ०३३  ॥

विमानं पुष्पकं तस्य जहाराक्रम्य रावणः ।
शशाप तं वैश्रवणो न त्वामेतद्वहिष्यति  ॥ ०३४  ॥

यस्तु त्वां समरे हन्ता तमेवैतद्वहिष्यति ।
अवमन्य गुरुं मां च क्षिप्रं त्वं न भविष्यसि  ॥ ०३५  ॥

विभीषणस्तु धर्मात्मा सतां धर्ममनुस्मरन् ।
अन्वगच्छन्महाराज श्रिया परमया युतः  ॥ ०३६  ॥

तस्मै स भगवांस्तुष्टो भ्राता भ्रात्रे धनेश्वरः ।
सेनापत्यं ददौ धीमान्यक्षराक्षससेनयोः  ॥ ०३७  ॥

राक्षसाः पुरुषादाश्च पिशाचाश्च महाबलाः ।
सर्वे समेत्य राजानमभ्यषिञ्चद्दशाननम्  ॥ ०३८  ॥

दशग्रीवस्तु दैत्यानां देवानां च बलोत्कटः ।
आक्रम्य रत्नान्यहरत्कामरूपी विहङ्गमः  ॥ ०३९  ॥

रावयामास लोकान्यत्तस्माद्रावण उच्यते ।
दशग्रीवः कामबलो देवानां भयमादधत्  ॥ ०४०  ॥

# अध्याय २६०

मार्कण्डेय उवाच ॥

ततो ब्रह्मर्षयः सिद्धा देवराजर्षयस्तथा ।
हव्यवाहं पुरस्कृत्य ब्रह्माणं शरणं गताः ॥ ००१ ॥

अग्निरुवाच ॥

यः स विश्रवसः पुत्रो दशग्रीवो महाबलः ।
अवध्यो वरदानेन कृतो भगवता पुरा ॥ ००२ ॥

स बाधते प्रजाः सर्वा विप्रकारैर्महाबलः ।
ततो नस्त्रातु भगवन्नान्यस्त्राता हि विद्यते ॥ ००३ ॥

ब्रह्मोवाच ॥

न स देवासुरैः शक्यो युद्धे जेतुं विभावसो ।
विहितं तत्र यत्कार्यमभितस्तस्य निग्रहे ॥ ००४ ॥

तदर्थमवतीर्णोऽसौ मन्नियोगाच्चतुर्भुजः ।
विष्णुः प्रहरतां श्रेष्ठः स कर्मैतत्करिष्यति ॥ ००५ ॥

मार्कण्डेय उवाच ॥

पितामहस्ततस्तेषां संनिधौ वाक्यमब्रवीत् ।
सर्वैर्देवगणैः सार्धं संभवध्वं महीतले ॥ ००६ ॥

विष्णोः सहायानृक्षीषु वानरीषु च सर्वशः ।
जनयध्वं सुतान्वीरान्कामरूपबलान्वितान् ॥ ००७ ॥

ततो भागानुभागेन देवगन्धर्वदानवाः ।
अवतर्तुं महीं सर्वे रञ्जयामासुरञ्जसा ॥ ००८ ॥

तेषां समक्षं गन्धर्वीं दुन्दुभीं नाम नामतः ।
शशास वरदो देवो देवकार्यार्थसिद्धये ॥ ००९ ॥

पितामहवचः श्रुत्वा गन्धर्वी दुन्दुभी ततः ।
मन्थरा मानुषे लोके कुब्जा समभवत्तदा ॥ ०१० ॥

शक्रप्रभृतयश्चैव सर्वे ते सुरसत्तमाः ।
वानरर्क्षवरस्त्रीषु जनयामासुरात्मजान् ॥ ०११ ॥

तेऽन्ववर्तन्पितॄन्सर्वे यशसा च बलेन च ॥ ०११ ॥

भेत्तारो गिरिशृङ्गाणां शालतालशिलायुधाः ।
वज्रसंहननाः सर्वे सर्वे चौघबलास्तथा ॥ ०१२ ॥

कामवीर्यधराश्चैव सर्वे युद्धविशारदाः ।
नागायुतसमप्राणा वायुवेगसमा जवे ॥ ०१३ ॥

यत्रेच्छकनिवासाश्च केचिदत्र वनौकसः ॥ ०१३ ॥

एवं विधाय तत्सर्वं भगवा.ण्ल्लोकभावनः ।
मन्थरां बोधयामास यद्यत्कार्यं यथा यथा ॥ ०१४ ॥

सा तद्वचनमाज्ञाय तथा चक्रे मनोजवा ।
इतश्चेतश्च गच्छन्ती वैरसंधुक्षणे रता ॥ ०१५ ॥

# अध्याय २६१

युधिष्ठिर उवाच ॥

उक्तं भगवता जन्म रामादीनां पृथक्पृथक् ।
प्रस्थानकारणं ब्रह्मञ्श्रोतुमिच्छामि कथ्यताम् ॥ ००१ ॥

कथं दाशरथी वीरौ भ्रातरौ रामलक्ष्मणौ ।
प्रस्थापितौ वनं ब्रह्म मैथिली च यशस्विनी ॥ ००२ ॥

मार्कण्डेय उवाच ॥

जातपुत्रो दशरथः प्रीतिमानभवन्नृपः ।
क्रियारतिर्धर्मपरः सततं वृद्धसेविता ॥ ००३ ॥

क्रमेण चास्य ते पुत्रा व्यवर्धन्त महौजसः ।
वेदेषु सरहस्येषु धनुर्वेदे च पारगाः ॥ ००४ ॥

चरितब्रह्मचर्यास्ते कृतदाराश्च पार्थिव ।
यदा तदा दशरथः प्रीतिमानभवत्सुखी ॥ ००५ ॥

ज्येष्ठो रामोऽभवत्तेषां रमयामास हि प्रजाः ।
मनोहरतया धीमान्पितुर्हृदयतोषणः ॥ ००६ ॥

ततः स राजा मतिमान्मत्वात्मानं वयोऽधिकम् ।
मन्त्रयामास सचिवैर्धर्मज्ञैश्च पुरोहितैः ॥ ००७ ॥

अभिषेकाय रामस्य यौवराज्येन भारत ।
प्राप्तकालं च ते सर्वे मेनिरे मन्त्रिसत्तमाः ॥ ००८ ॥

लोहिताक्षं महाबाहुं मत्तमातङ्गगामिनम् ।

दीर्घबाहुं महोरस्कं नीलकुञ्चितमूर्धजम् ॥ ००९ ॥

दीप्यमानं श्रिया वीरं शक्रादनवमं बले ।
पारगं सर्वधर्माणां बृहस्पतिसमं मतौ ॥ ०१० ॥

सर्वानुरक्तप्रकृतिं सर्वविद्याविशारदम् ।
जितेन्द्रियममित्राणामपि दृष्टिमनोहरम् ॥ ०११ ॥

नियन्तारमसाधूनां गोप्तारं धर्मचारिणाम् ।
धृतिमन्तमनाधृष्यं जेतारमपराजितम् ॥ ०१२ ॥

पुत्रं राजा दशरथः कौसल्यानन्दवर्धनम् ।
संदृश्य परमां प्रीतिमगच्छत्कुरुनन्दन ॥ ०१३ ॥

चिन्तयंश्च महातेजा गुणान्रामस्य वीर्यवान् ।
अभ्यभाषत भद्रं ते प्रीयमाणः पुरोहितम् ॥ ०१४ ॥

अद्य पुष्यो निशि ब्रह्मन्पुण्यं योगमुपैष्यति ।
संभाराः संभ्रियन्तां मे रामश्चोपनिमन्त्र्यताम् ॥ ०१५ ॥

इति तद्राजवचनं प्रतिश्रुत्याथ मन्थरा ।
कैकेयीमभिगम्येदं काले वचनमब्रवीत् ॥ ०१६ ॥

अद्य कैकेयि दौर्भाग्यं राज्ञा ते ख्यापितं महत् ।
आशीविषस्त्वां सङ्क्रुद्धश्चण्डो दशति दुर्भगे ॥ ०१७ ॥

सुभगा खलु कौसल्या यस्याः पुत्रोऽभिषेक्ष्यते ।
कुतो हि तव सौभाग्यं यस्याः पुत्रो न राज्यभाक् ॥ ०१८ ॥

सा तद्वचनमाज्ञाय सर्वाभरणभूषिता ।
वेदीविलग्नमध्येव बिभ्रती रूपमुत्तमम् ॥ ०१९ ॥

विविक्ते पतिमासाद्य हसन्तीव शुचिस्मिता ।
प्रणयं व्यञ्जयन्तीव मधुरं वाक्यमब्रवीत् ॥ ०२० ॥

सत्यप्रतिज्ञ यन्मे त्वं काममेकं निसृष्टवान् ।
उपाकुरुष्व तद्राजंस्तस्मान्मुच्यस्व सङ्कटात् ॥ ०२१ ॥

राजोवाच ॥

वरं ददानि ते हन्त तद्गृहाण यदिच्छसि ।
अवध्यो वध्यतां कोऽद्य वध्यः कोऽद्य विमुच्यताम् ॥ ०२२ ॥

धनं ददानि कस्याद्य ह्रियतां कस्य वा पुनः ।
ब्राह्मणस्वादिहान्यत्र यत्किञ्चिद्वित्तमस्ति मे ॥ ०२३ ॥

मार्कण्डेय उवाच ॥

सा तद्वचनमाज्ञाय परिगृह्य नराधिपम् ।
आत्मनो बलमाज्ञाय तत एनमुवाच ह ॥ ०२४ ॥

आभिषेचनिकं यत्ते रामार्थमुपकल्पितम् ।
भरतस्तदवाप्नोतु वनं गच्छतु राघवः ॥ ०२५ ॥

स तद्राजा वचः श्रुत्वा विप्रियं दारुणोदयम् ।
दुःखार्तो भरतश्रेष्ठ न किञ्चिद्व्याजहार ह ॥ ०२६ ॥

ततस्तथोक्तं पितरं रामो विज्ञाय वीर्यवान् ।
वनं प्रतस्थे धर्मात्मा राजा सत्यो भवत्विति ॥ ०२७ ॥

तमन्वगच्छल्लक्ष्मीवान्धनुष्मा.ण्लक्ष्मणस्तदा ।
सीता च भार्या भद्रं ते वैदेही जनकात्मजा ॥ ०२८ ॥

ततो वनं गते रामे राजा दशरथस्तदा ।
समयुज्यत देहस्य कालपर्यायधर्मणा ॥ ०२९ ॥

रामं तु गतमाज्ञाय राजानं च तथागतम् ।
आनाय्य भरतं देवी कैकेयी वाक्यमब्रवीत् ॥ ०३० ॥

गतो दशरथः स्वर्गं वनस्थौ रामलक्ष्मणौ ।
गृहाण राज्यं विपुलं क्षेमं निहतकण्टकम् ॥ ०३१ ॥

तामुवाच स धर्मात्मा नृशंसं बत ते कृतम् ।
पतिं हत्वा कुलं चेदमुत्साद्य धनलुब्धया ॥ ०३२ ॥

अयशः पातयित्वा मे मूर्ध्नि त्वं कुलपांसने ।
सकामा भव मे मातरित्युक्त्वा प्ररुरोद ह ॥ ०३३ ॥

स चारित्रं विशोध्याथ सर्वप्रकृतिसंनिधौ ।
अन्वयाद्भ्रातरं रामं विनिवर्तनलालसः ॥ ०३४ ॥

कौसल्यां च सुमित्रां च कैकेयीं च सुदुःखितः ।
अग्रे प्रस्थाप्य यानैः स शत्रुघ्नसहितो ययौ ॥ ०३५ ॥

वसिष्ठवामदेवाभ्यां विप्रैश्चान्यैः सहस्रशः ।
पौरजानपदैः सार्धं रामानयनकाङ्क्षया ॥ ०३६ ॥

ददर्श चित्रकूटस्थं स रामं सहलक्ष्मणम् ।
तापसानामलङ्कारं धारयन्तं धनुर्धरम् ॥ ०३७ ॥

विसर्जितः स रामेण पितुर्वचनकारिणा ।
नन्दिग्रामेऽकरोद्राज्यं पुरस्कृत्यास्य पादुके ॥ ०३८ ॥

रामस्तु पुनराशङ्क्य पौरजानपदागमम् ।
प्रविवेश महारण्यं शरभङ्गाश्रमं प्रति  ॥ ०३९  ॥

सत्कृत्य शरभङ्गं स दण्डकारण्यमाश्रितः ।
नदीं गोदावरीं रम्यामाश्रित्य न्यवसत्तदा  ॥ ०४०  ॥

वसतस्तस्य रामस्य ततः शूर्पणखाकृतम् ।
खरेणासीन्महद्वैरं जनस्थाननिवासिना  ॥ ०४१  ॥

रक्षार्थं तापसानां च राघवो धर्मवत्सलः ।
चतुर्दश सहस्राणि जघान भुवि रक्षसाम्  ॥ ०४२  ॥

दूषणं च खरं चैव निहत्य सुमहाबलौ ।
चक्रे क्षेमं पुनर्धीमान्धर्मारण्यं स राघवः  ॥ ०४३  ॥

हतेषु तेषु रक्षःसु ततः शूर्पणखा पुनः ।
ययौ निकृत्तनासोष्ठी लङ्कां भ्रातुर्निवेशनम्  ॥ ०४४  ॥

ततो रावणमभ्येत्य राक्षसी दुःखमूर्छिता ।
पपात पादयोर्भ्रातुः संशुष्करुधिरानना  ॥ ०४५  ॥

तां तथा विकृतां दृष्ट्वा रावणः क्रोधमूर्छितः ।
उत्पपातासनात्क्रुद्धो दन्तैर्दन्तानुपस्पृशन्  ॥ ०४६  ॥

स्वानमात्यान्विसृज्याथ विविक्ते तामुवाच सः ।
केनास्येवं कृता भद्रे मामचिन्त्यावमन्य च  ॥ ०४७  ॥

कः शूलं तीक्ष्णमासाद्य सर्वगात्रैर्निषेवते ।
कः शिरस्यग्निमादाय विश्वस्तः स्वपते सुखम्  ॥ ०४८  ॥

आशीविषं घोरतरं पादेन स्पृशतीह कः ।

सिंहं केसरिणं कश्च दंष्ट्रासु स्पृश्य तिष्ठति ॥ ०४९ ॥

इत्येवं ब्रुवतस्तस्य स्रोतोभ्यस्तेजसोऽर्चिषः ।
निश्चेरुर्दह्यतो रात्रौ वृक्षस्येव स्वरन्ध्रतः ॥ ०५० ॥

तस्य तत्सर्वमाचख्यौ भगिनी रामविक्रमम् ।
खरदूषणसंयुक्तं राक्षसानां पराभवम् ॥ ०५१ ॥

स निश्चित्य ततः कृत्यं स्वसारमुपसान्त्व्य च ।
ऊर्ध्वमाचक्रमे राजा विधाय नगरे विधिम् ॥ ०५२ ॥

त्रिकूटं समतिक्रम्य कालपर्वतमेव च ।
ददर्श मकरावासं गम्भीरोदं महोदधिम् ॥ ०५३ ॥

तमतीत्याथ गोकर्णमभ्यगच्छद्दशाननः ।
दयितं स्थानमव्यग्रं शूलपाणेर्महात्मनः ॥ ०५४ ॥

तत्राभ्यगच्छन्मारीचं पूर्वामात्यं दशाननः ।
पुरा रामभयादेव तापस्यं समुपाश्रितम् ॥ ०५५ ॥

---

# अध्याय २६२

मार्कण्डेय उवाच ॥

मारीचस्त्वथ संभ्रान्तो दृष्ट्वा रावणमागतम् ।
पूजयामास सत्कारैः फलमूलादिभिस्तथा ॥ ००१ ॥

विश्रान्तं चैनमासीनमन्वासीनः स राक्षसः ।
उवाच प्रश्रितं वाक्यं वाक्यज्ञो वाक्यकोविदम् ॥ ००२ ॥

न ते प्रकृतिमान्वर्णः कच्चित्क्षेमं पुरे तव ।
कच्चित्प्रकृतयः सर्वा भजन्ते त्वां यथा पुरा ॥ ००३ ॥

किमिहागमने चापि कार्यं ते राक्षसेश्वर ।
कृतमित्येव तद्विद्धि यद्यपि स्यात्सुदुष्करम् ॥ ००४ ॥

शशंस रावणस्तस्मै तत्सर्वं रामचेष्टितम् ।
मारीचस्त्वब्रवीच्छ्रुत्वा समासेनैव रावणम् ॥ ००५ ॥

अलं ते राममासाद्य वीर्यज्ञो ह्यस्मि तस्य वै ।
बाणवेगं हि कस्तस्य शक्तः सोढुं महात्मनः ॥ ००६ ॥

प्रव्रज्यायां हि मे हेतुः स एव पुरुषर्षभः ।
विनाशमुखमेतत्ते केनाख्यातं दुरात्मना ॥ ००७ ॥

तमुवाचाथ सक्रोधो रावणः परिभर्त्सयन् ।
अकुर्वतोऽस्मद्वचनं स्यान्मृत्युरपि ते ध्रुवम् ॥ ००८ ॥

मारीचश्चिन्तयामास विशिष्टान्मरणं वरम् ।
अवश्यं मरणे प्राप्ते करिष्याम्यस्य यन्मतम् ॥ ००९ ॥

ततस्तं प्रत्युवाचाथ मारीचो राक्षसेश्वरम् ।
किं ते साह्यं मया कार्यं करिष्याम्यवशोऽपि तत् ॥ ०१० ॥

तमब्रवीद्दशग्रीवो गच्छ सीतां प्रलोभय ।
रत्नशृङ्गो मृगो भूत्वा रत्नचित्रतनूरुहः ॥ ०११ ॥

ध्रुवं सीता समालक्ष्य त्वां रामं चोदयिष्यति ।

अपक्रान्ते च काकुत्स्थे सीता वश्या भविष्यति ॥ ०१२ ॥

तामादायापनेष्यामि ततः स न भविष्यति ।
भार्यावियोगाद्दुर्बुद्धिरेतत्साह्यं कुरुष्व मे ॥ ०१३ ॥

इत्येवमुक्तो मारीचः कृत्वोदकमथात्मनः ।
रावणं पुरतो यान्तमन्वगच्छत्सुदुःखितः ॥ ०१४ ॥

ततस्तस्याश्रमं गत्वा रामस्याक्लिष्टकर्मणः ।
चक्रतुस्तत्तथा सर्वमुभौ यत्पूर्वमन्त्रितम् ॥ ०१५ ॥

रावणस्तु यतिर्भूत्वा मुण्डः कुण्डी त्रिदण्डधृक् ।
मृगश्च भूत्वा मारीचस्तं देशमुपजग्मतुः ॥ ०१६ ॥

दर्शयामास वैदेहीं मारीचो मृगरूपधृक् ।
चोदयामास तस्यार्थे सा रामं विधिचोदिता ॥ ०१७ ॥

रामस्तस्याः प्रियं कुर्वन्धनुरादाय सत्वरः ।
रक्षार्थे लक्ष्मणं न्यस्य प्रययौ मृगलिप्सया ॥ ०१८ ॥

स धन्वी बद्धतूणीरः खड्गगोधाङ्गुलित्रवान् ।
अन्वधावन्मृगं रामो रुद्रस्तारामृगं यथा ॥ ०१९ ॥

सोऽन्तर्हितः पुनस्तस्य दर्शनं राक्षसो व्रजन् ।
चकर्ष महदध्वानं रामस्तं बुबुधे ततः ॥ ०२० ॥

निशाचरं विदित्वा तं राघवः प्रतिभानवान् ।
अमोघं शरमादाय जघान मृगरूपिणम् ॥ ०२१ ॥

स रामबाणाभिहतः कृत्वा रामस्वरं तदा ।
हा सीते लक्ष्मणेत्येवं चुक्रोशार्तस्वरेण ह ॥ ०२२ ॥

शुश्राव तस्य वैदेही ततस्तां करुणां गिरम् ।
सा प्राद्रवद्यतः शब्दस्तामुवाचाथ लक्ष्मणः ॥ ०२३ ॥

अलं ते शङ्कया भीरु को रामं विषहिष्यति ।
मुहूर्ताद्द्रक्ष्यसे राममागतं तं शुचिस्मिते ॥ ०२४ ॥

इत्युक्त्वा सा प्ररुदती पर्यशङ्कत देवरम् ।
हता वै स्त्रीस्वभावेन शुद्धचारित्रभूषणम् ॥ ०२५ ॥

सा तं परुषमारब्धा वक्तुं साध्वी पतिव्रता ।
नैष कालो भवेन्मूढ यं त्वं प्रार्थयसे हृदा ॥ ०२६ ॥

अप्यहं शस्त्रमादाय हन्यामात्मानमात्मना ।
पतेयं गिरिशृङ्गाद्वा विशेयं वा हुताशनम् ॥ ०२७ ॥

रामं भर्तारमुत्सृज्य न त्वहं त्वां कथञ्चन ।
निहीनमुपतिष्ठेयं शार्दूली क्रोष्टुकं यथा ॥ ०२८ ॥

एतादृशं वचः श्रुत्वा लक्ष्मणः प्रियराघवः ।
पिधाय कर्णौ सद्वृत्तः प्रस्थितो येन राघवः ॥ ०२९ ॥

स रामस्य पदं गृह्य प्रससार धनुर्धरः ॥ ०२९ ॥

एतस्मिन्नन्तरे रक्षो रावणः प्रत्यदृश्यत ।
अभव्यो भव्यरूपेण भस्मच्छन्न इवानलः ॥ ०३० ॥

यतिवेषप्रतिच्छन्नो जिहीर्षुस्तामनिन्दिताम् ॥ ०३० ॥

सा तमालक्ष्य संप्राप्तं धर्मज्ञा जनकात्मजा ।
निमन्त्रयामास तदा फलमूलाशनादिभिः ॥ ०३१ ॥

अवमन्य स तत्सर्वं स्वरूपं प्रतिपद्य च ।
सान्त्वयामास वैदेहीमिति राक्षसपुङ्गवः ॥ ०३२ ॥

सीते राक्षसराजोऽहं रावणो नाम विश्रुतः ।
मम लङ्का पुरी नाम्ना रम्या पारे महोदधेः ॥ ०३३ ॥

तत्र त्वं वरनारीषु शोभिष्यसि मया सह ।
भार्या मे भव सुश्रोणि तापसं त्यज राघवम् ॥ ०३४ ॥

एवमादीनि वाक्यानि श्रुत्वा सीताथ जानकी ।
पिधाय कर्णौ सुश्रोणी मैवमित्यब्रवीद्वचः ॥ ०३५ ॥

प्रपतेद्द्यौः सनक्षत्रा पृथिवी शकलीभवेत् ।
शैत्यमग्निरियान्नाहं त्यजेयं रघुनन्दनम् ॥ ०३६ ॥

कथं हि भिन्नकरटं पद्मिनं वनगोचरम् ।
उपस्थाय महानागं करेणुः सूकरं स्पृशेत् ॥ ०३७ ॥

कथं हि पीत्वा माध्वीकं पीत्वा च मधुमाधवीम् ।
लोभं सौवीरके कुर्यान्नारी काचिदिति स्मरे ॥ ०३८ ॥

इति सा तं समाभाष्य प्रविवेशाश्रमं पुनः ।
तामनुद्रुत्य सुश्रोणीं रावणः प्रत्यषेधयत् ॥ ०३९ ॥

भर्त्सयित्वा तु रूक्षेण स्वरेण गतचेतनाम् ।
मूर्धजेषु निजग्राह खमुपाचक्रमे ततः ॥ ०४० ॥

तां ददर्श तदा गृध्रो जटायुर्गिरिगोचरः ।
रुदतीं राम रामेति ह्रियमाणां तपस्विनीम् ॥ ०४१ ॥

# अध्याय २६३

मार्कण्डेय उवाच ॥

सखा दशरथस्यासीज्जटायुररुणात्मजः ।
गृध्रराजो महावीर्यः संपातिर्यस्य सोदरः ॥ ००१ ॥

स ददर्श तदा सीतां रावणाङ्कगतां स्नुषाम् ।
क्रोधादभ्यद्रवत्पक्षी रावणं राक्षसेश्वरम् ॥ ००२ ॥

अथैनमब्रवीद्गृध्रो मुञ्च मुञ्चेति मैथिलीम् ।
ध्रियमाणे मयि कथं हरिष्यसि निशाचर ॥ ००३ ॥

न हि मे मोक्ष्यसे जीवन्यदि नोत्सृजसे वधूम् ॥ ००३ ॥

उक्त्वैवं राक्षसेन्द्रं तं चकर्त नखरैर्भृशम् ।
पक्षतुण्डप्रहारैश्च बहुशो जर्जरीकृतः ॥ ००४ ॥

चक्षार रुधिरं भूरि गिरिः प्रस्रवणैरिव ॥ ००४ ॥

स वध्यमानो गृध्रेण रामप्रियहितैषिणा ।
खड्गमादाय चिच्छेद भुजौ तस्य पतत्रिणः ॥ ००५ ॥

निहत्य गृध्रराजं स छिन्नाभ्रशिखरोपमम् ।
ऊर्ध्वमाचक्रमे सीतां गृहीत्वाङ्केन राक्षसः ॥ ००६ ॥

यत्र यत्र तु वैदेही पश्यत्याश्रममण्डलम् ।
सरो वा सरितं वापि तत्र मुञ्चति भूषणम् ॥ ००७ ॥

सा ददर्श गिरिप्रस्थे पञ्च वानरपुङ्गवान् ।
तत्र वासो महद्दिव्यमुत्ससर्ज मनस्विनी ॥ ००८ ॥

तत्तेषां वानरेन्द्राणां पपात पवनोद्धुतम् ।
मध्ये सुपीतं पञ्चानां विद्युन्मेघान्तरे यथा ॥ ००९ ॥

एवं हृतायां वैदेह्यां रामो हत्वा महामृगम् ।
निवृत्तो ददृशे धीमान्भ्रातरं लक्ष्मणं तदा ॥ ०१० ॥

कथमुत्सृज्य वैदेहीं वने राक्षससेविते ।
इत्येवं भ्रातरं दृष्ट्वा प्राप्तोऽसीति व्यगर्हयत् ॥ ०११ ॥

मृगरूपधरेणाथ रक्षसा सोऽपकर्षणम् ।
भ्रातुरागमनं चैव चिन्तयन्पर्यतप्यत ॥ ०१२ ॥

गर्हयन्नेव रामस्तु त्वरितस्तं समासदत् ।
अपि जीवति वैदेही नेति पश्यामि लक्ष्मण ॥ ०१३ ॥

तस्य तत्सर्वमाचख्यौ सीताया लक्ष्मणो वचः ।
यदुक्तवत्यसदृशं वैदेही पश्चिमं वचः ॥ ०१४ ॥

दह्यमानेन तु हृदा रामोऽभ्यपतदाश्रमम् ।
स ददर्श तदा गृध्रं निहतं पर्वतोपमम् ॥ ०१५ ॥

राक्षसं शङ्कमानस्तु विकृष्य बलवद्धनुः ।
अभ्यधावत काकुत्स्थस्ततस्तं सहलक्ष्मणः ॥ ०१६ ॥

स तावुवाच तेजस्वी सहितौ रामलक्ष्मणौ ।
गृध्रराजोऽस्मि भद्रं वां सखा दशरथस्य ह ॥ ०१७ ॥

तस्य तद्वचनं श्रुत्वा सङ्गृह्य धनुषी शुभे ।
कोऽयं पितरमस्माकं नाम्नाहेत्यूचतुश्च तौ ॥ ०१८ ॥

ततो ददृशतुस्तौ तं छिन्नपक्षद्वयं तथा ।
तयोः शशंस गृध्रस्तु सीतार्थे रावणाद्वधम् ॥ ०१९ ॥

अपृच्छद्राघवो गृध्रं रावणः कां दिशं गतः ।
तस्य गृध्रः शिरःकम्पैराचचक्षे ममार च ॥ ०२० ॥

दक्षिणामिति काकुत्स्थो विदित्वास्य तदिङ्गितम् ।
संस्कारं लम्भयामास सखायं पूजयन्पितुः ॥ ०२१ ॥

ततो दृष्ट्वाश्रमपदं व्यपविद्धबृसीघटम् ।
विध्वस्तकलशं शून्यं गोमायुबलसेवितम् ॥ ०२२ ॥

दुःखशोकसमाविष्टौ वैदेहीहरणार्दितौ ।
जग्मतुर्दण्डकारण्यं दक्षिणेन परंतपौ ॥ ०२३ ॥

वने महति तस्मिंस्तु रामः सौमित्रिणा सह ।
ददर्श मृगयूथानि द्रवमाणानि सर्वशः ॥ ०२४ ॥

शब्दं च घोरं सत्त्वानां दावाग्नेरिव वर्धतः ॥ ०२४ ॥

अपश्येतां मुहूर्ताच्च कबन्धं घोरदर्शनम् ।
मेघपर्वतसङ्काशं शालस्कन्धं महाभुजम् ॥ ०२५ ॥

उरोगतविशालाक्षं महोदरमहामुखम् ॥ ०२५ ॥

यदृच्छयाथ तद्रक्षः करे जग्राह लक्ष्मणम् ।
विषादमगमत्सद्यः सौमित्रिरथ भारत ॥ ०२६ ॥

स राममभिसंप्रेक्ष्य कृष्यते येन तन्मुखम् ।
विषण्णश्चाब्रवीद्रामं पश्यावस्थामिमां मम ॥ ०२७ ॥

हरणं चैव वैदेह्या मम चायमुपप्लवः ।
राज्यभ्रंशश्च भवतस्तातस्य मरणं तथा ॥ ०२८ ॥

नाहं त्वां सह वैदेह्या समेतं कोसलागतम् ।
द्रक्ष्यामि पृथिवीराज्ये पितृपैतामहे स्थितम् ॥ ०२९ ॥

द्रक्ष्यन्त्यार्यस्य धन्या ये कुशलाजशमीलवैः ।
अभिषिक्तस्य वदनं सोमं साभ्रलवं यथा ॥ ०३० ॥

एवं बहुविधं धीमान्विललाप स लक्ष्मणः ।
तमुवाचाथ काकुत्स्थः संभ्रमेष्वप्यसंभ्रमः ॥ ०३१ ॥

मा विषीद नरव्याघ्र नैष कश्चिन्मयि स्थिते ।
छिन्ध्यस्य दक्षिणं बाहुं छिन्नः सव्यो मया भुजः ॥ ०३२ ॥

इत्येवं वदता तस्य भुजो रामेण पातितः ।
खड्गेन भृशतीक्ष्णेन निकृत्तस्तिलकाण्डवत् ॥ ०३३ ॥

ततोऽस्य दक्षिणं बाहुं खड्गेनाजघ्निवान्बली ।
सौमित्रिरपि संप्रेक्ष्य भ्रातरं राघवं स्थितम् ॥ ०३४ ॥

पुनरभ्याहनत्पार्श्वे तद्रक्षो लक्ष्मणो भृशम् ।
गतासुरपतद्भूमौ कबन्धः सुमहांस्ततः ॥ ०३५ ॥

तस्य देहाद्विनिःसृत्य पुरुषो दिव्यदर्शनः ।
ददृशे दिवमास्थाय दिवि सूर्य इव ज्वलन् ॥ ०३६ ॥

पप्रच्छ रामस्तं वाग्मी कस्त्वं प्रब्रूहि पृच्छतः ।

कामया किमिदं चित्रमाश्चर्यं प्रतिभाति मे ॥ ०३७ ॥

तस्याचचक्षे गन्धर्वो विश्वावसुरहं नृप ।
प्राप्तो ब्रह्मानुशापेन योनिं राक्षससेविताम् ॥ ०३८ ॥

रावणेन हृता सीता राज्ञा लङ्कानिवासिना ।
सुग्रीवमभिगच्छस्व स ते साह्यं करिष्यति ॥ ०३९ ॥

एषा पम्पा शिवजला हंसकारण्डवायुता ।
ऋश्यमूकस्य शैलस्य संनिकर्षे तटाकिनी ॥ ०४० ॥

संवसत्यत्र सुग्रीवश्चतुर्भिः सचिवैः सह ।
भ्राता वानरराजस्य वालिनो हेममालिनः ॥ ०४१ ॥

एतावच्छक्यमस्माभिर्वक्तुं द्रष्टासि जानकीम् ।
ध्रुवं वानरराजस्य विदितो रावणालयः ॥ ०४२ ॥

इत्युक्त्वान्तर्हितो दिव्यः पुरुषः स महाप्रभः ।
विस्मयं जग्मतुश्चोभौ तौ वीरौ रामलक्ष्मणौ ॥ ०४३ ॥

---

# अध्याय २६४

मार्कण्डेय उवाच ॥

ततोऽविदूरे नलिनीं प्रभूतकमलोत्पलाम् ।
सीताहरणदुःखार्तः पम्पां रामः समासदत् ॥ ००१ ॥

मारुतेन सुशीतेन सुखेनामृतगन्धिना ।

सेव्यमानो वने तस्मिञ्जगाम मनसा प्रियाम्  ॥ ००२  ॥

विललाप स राजेन्द्रस्तत्र कान्तामनुस्मरन् ।
कामबाणाभिसंतप्तः सौमित्रिस्तमथाब्रवीत्  ॥ ००३  ॥

न त्वामेवंविधो भावः स्प्रष्टुमर्हति मानद ।
आत्मवन्तमिव व्याधिः पुरुषं वृद्धशीलिनम्  ॥ ००४  ॥

प्रवृत्तिरुपलब्धा ते वैदेह्या रावणस्य च ।
तां त्वं पुरुषकारेण बुद्ध्या चैवोपपादय  ॥ ००५  ॥

अभिगच्छाव सुग्रीवं शैलस्थं हरिपुङ्गवम् ।
मयि शिष्ये च भृत्ये च सहाये च समाश्वस  ॥ ००६  ॥

एवं बहुविधैर्वाक्यैर्लक्ष्मणेन स राघवः ।
उक्तः प्रकृतिमापेदे कार्ये चानन्तरोऽभवत्  ॥ ००७  ॥

निषेव्य वारि पम्पायास्तर्पयित्वा पितॄनपि ।
प्रतस्थतुरुभौ वीरौ भ्रातरौ रामलक्ष्मणौ  ॥ ००८  ॥

तावृश्यमूकमभ्येत्य बहुमूलफलं गिरिम् ।
गिर्यग्रे वानरान्पञ्च वीरौ ददृशतुस्तदा  ॥ ००९  ॥

सुग्रीवः प्रेषयामास सचिवं वानरं तयोः ।
बुद्धिमन्तं हनूमन्तं हिमवन्तमिव स्थितम्  ॥ ०१०  ॥

तेन संभाष्य पूर्वं तौ सुग्रीवमभिजग्मतुः ।
सख्यं वानरराजेन चक्रे रामस्ततो नृप  ॥ ०११  ॥

तद्वासो दर्शयामासुस्तस्य कार्ये निवेदिते ।
वानराणां तु यत्सीता ह्रियमाणाभ्यवासृजत्  ॥ ०१२  ॥

तत्प्रत्ययकरं लब्ध्वा सुग्रीवं प्लवगाधिपम् ।
पृथिव्यां वानरैश्वर्ये स्वयं रामोऽभ्यषेचयत् ॥ ०१३ ॥

प्रतिजज्ञे च काकुत्स्थः समरे वालिनो वधम् ।
सुग्रीवश्चापि वैदेह्याः पुनरानयनं नृप ॥ ०१४ ॥

इत्युक्त्वा समयं कृत्वा विश्वास्य च परस्परम् ।
अभ्येत्य सर्वे किष्किन्धां तस्थुर्युद्धाभिकाङ्क्षिणः ॥ ०१५ ॥

सुग्रीवः प्राप्य किष्किन्धां ननादौघनिभस्वनः ।
नास्य तन्ममृषे वाली तं तारा प्रत्यषेधयत् ॥ ०१६ ॥

यथा नदति सुग्रीवो बलवानेष वानरः ।
मन्ये चाश्रयवान्प्राप्तो न त्वं निर्गन्तुमर्हसि ॥ ०१७ ॥

हेममाली ततो वाली तारां ताराधिपाननाम् ।
प्रोवाच वचनं वाग्मी तां वानरपतिः पतिः ॥ ०१८ ॥

सर्वभूतरुतज्ञा त्वं पश्य बुद्ध्या समन्विता ।
केनापाश्रयवान्प्राप्तो ममैष भ्रातृगन्धिकः ॥ ०१९ ॥

चिन्तयित्वा मुहूर्तं तु तारा ताराधिपप्रभा ।
पतिमित्यब्रवीत्प्राज्ञा शृणु सर्वं कपीश्वर ॥ ०२० ॥

हृतदारो महासत्त्वो रामो दशरथात्मजः ।
तुल्यारिमित्रतां प्राप्तः सुग्रीवेण धनुर्धरः ॥ ०२१ ॥

भ्राता चास्य महाबाहुः सौमित्रिरपराजितः ।
लक्ष्मणो नाम मेधावी स्थितः कार्यार्थसिद्धये ॥ ०२२ ॥

मैन्दश्च द्विविदश्चैव हनूमांश्चानिलात्मजः ।
जाम्बवानृक्षराजश्च सुग्रीवसचिवाः स्थिताः ॥ ०२३ ॥

सर्व एते महात्मानो बुद्धिमन्तो महाबलाः ।
अलं तव विनाशाय रामवीर्यव्यपाश्रयात् ॥ ०२४ ॥

तस्यास्तदाक्षिप्य वचो हितमुक्तं कपीश्वरः ।
पर्यशङ्कत तामीर्षुः सुग्रीवगतमानसाम् ॥ ०२५ ॥

तारां परुषमुक्त्वा स निर्जगाम गुहामुखात् ।
स्थितं माल्यवतोऽभ्याशे सुग्रीवं सोऽभ्यभाषत ॥ ०२६ ॥

असकृत्त्वं मया मूढ निर्जितो जीवितप्रियः ।
मुक्तो ज्ञातिरिति ज्ञात्वा का त्वरा मरणे पुनः ॥ ०२७ ॥

इत्युक्तः प्राह सुग्रीवो भ्रातरं हेतुमद्वचः ।
प्राप्तकालममित्रघ्नो रामं संबोधयन्निव ॥ ०२८ ॥

हृतदारस्य मे राजन्हृतराज्यस्य च त्वया ।
किं नु जीवितसामर्थ्यमिति विद्धि समागतम् ॥ ०२९ ॥

एवमुक्त्वा बहुविधं ततस्तौ संनिपेततुः ।
समरे वालिसुग्रीवौ शालतालशिलायुधौ ॥ ०३० ॥

उभौ जघ्नतुरन्योन्यमुभौ भूमौ निपेततुः ।
उभौ ववल्गतुश्चित्रं मुष्टिभिश्च निजघ्नतुः ॥ ०३१ ॥

उभौ रुधिरसंसिक्तौ नखदन्तपरिक्षतौ ।
शुशुभाते तदा वीरौ पुष्पिताविव किंशुकौ ॥ ०३२ ॥

न विशेषस्तयोर्युद्धे तदा कश्चन दृश्यते ।

सुग्रीवस्य तदा मालां हनूमान्कण्ठ आसजत् ॥ ०३३ ॥

स मालया तदा वीरः शुशुभे कण्ठसक्तया ।
श्रीमानिव महाशैलो मलयो मेघमालया ॥ ०३४ ॥

कृतचिह्नं तु सुग्रीवं रामो दृष्ट्वा महाधनुः ।
विचकर्ष धनुःश्रेष्ठं वालिमुद्दिश्य लक्ष्यवत् ॥ ०३५ ॥

विस्फारस्तस्य धनुषो यन्त्रस्येव तदा बभौ ।
वितत्रास तदा वाली शरेणाभिहतो हृदि ॥ ०३६ ॥

स भिन्नमर्माभिहतो वक्त्राच्छोणितमुद्वमन् ।
ददर्शावस्थितं राममारात्सौमित्रिणा सह ॥ ०३७ ॥

गर्हयित्वा स काकुत्स्थं पपात भुवि मूर्छितः ।
तारा ददर्श तं भूमौ तारापतिमिव च्युतम् ॥ ०३८ ॥

हते वालिनि सुग्रीवः किष्किन्धां प्रत्यपद्यत ।
तां च तारापतिमुखीं तारां निपतितेश्वराम् ॥ ०३९ ॥

रामस्तु चतुरो मासान्पृष्ठे माल्यवतः शुभे ।
निवासमकरोद्धीमान्सुग्रीवेणाभ्युपस्थितः ॥ ०४० ॥

रावणोऽपि पुरीं गत्वा लङ्कां कामबलात्कृतः ।
सीतां निवेशयामास भवने नन्दनोपमे ॥ ०४१ ॥

अशोकवनिकाभ्याशे तापसाश्रमसंनिभे ॥ ०४१ ॥

भर्तृस्मरणतन्वङ्गी तापसीवेषधारिणी ।
उपवासतपःशीला तत्र सा पृथुलेक्षणा ॥ ०४२ ॥

उवास दुःखवसतीः फलमूलकृताशना ॥ ०४२ ॥

दिदेश राक्षसीस्तत्र रक्षणे राक्षसाधिपः ।
प्रासासिशूलपरशुमुद्गरालातधारिणीः ॥ ०४३ ॥

द्व्यक्षीं त्र्यक्षीं ललाटाक्षीं दीर्घजिह्वामजिह्विकाम् ।
त्रिस्तनीमेकपादां च त्रिजटामेकलोचनाम् ॥ ०४४ ॥

एताश्चान्याश्च दीप्ताक्ष्यः करभोत्कटमूर्धजाः ।
परिवार्यासते सीतां दिवारात्रमतन्द्रिताः ॥ ०४५ ॥

तास्तु तामायतापाङ्गीं पिशाच्यो दारुणस्वनाः ।
तर्जयन्ति सदा रौद्राः परुषव्यञ्जनाक्षराः ॥ ०४६ ॥

खादाम पाटयामैनां तिलशः प्रविभज्य ताम् ।
येयं भर्तारमस्माकमवमन्येह जीवति ॥ ०४७ ॥

इत्येवं परिभर्त्सन्तीस्त्रास्यमाना पुनः पुनः ।
भर्तृशोकसमाविष्टा निःश्वस्येदमुवाच ताः ॥ ०४८ ॥

आर्याः खादत मां शीघ्रं न मे लोभोऽस्ति जीविते ।
विना तं पुण्डरीकाक्षं नीलकुञ्चितमूर्धजम् ॥ ०४९ ॥

अप्येवाहं निराहारा जीवितप्रियवर्जिता ।
शोषयिष्यामि गात्राणि व्याली तालगता यथा ॥ ०५० ॥

न त्वन्यमभिगच्छेयं पुमांसं राघवादृते ।
इति जानीत सत्यं मे क्रियतां यदनन्तरम् ॥ ०५१ ॥

तस्यास्तद्वचनं श्रुत्वा राक्षस्यस्ताः खरस्वनाः ।
आख्यातुं राक्षसेन्द्राय जग्मुस्तत्सर्वमादितः ॥ ०५२ ॥

गतासु तासु सर्वासु त्रिजटा नाम राक्षसी ।
सान्त्वयामास वैदेहीं धर्मज्ञा प्रियवादिनी ॥ ०५३ ॥

सीते वक्ष्यामि ते किञ्चिद्विश्वासं कुरु मे सखि ।
भयं ते व्येतु वामोरु श्रृणु चेदं वचो मम ॥ ०५४ ॥

अविन्ध्यो नाम मेधावी वृद्धो राक्षसपुङ्गवः ।
स रामस्य हितान्वेषी त्वदर्थे हि स मावदत् ॥ ०५५ ॥

सीता मद्वचनाद्वाच्या समाश्वास्य प्रसाद्य च ।
भर्ता ते कुशली रामो लक्ष्मणानुगतो बली ॥ ०५६ ॥

सख्यं वानरराजेन शक्रप्रतिमतेजसा ।
कृतवान्राघवः श्रीमांस्त्वदर्थे च समुद्यतः ॥ ०५७ ॥

मा च तेऽस्तु भयं भीरु रावणाल्लोकगर्हितात् ।
नलकूबरशापेन रक्षिता ह्यस्यनिन्दिते ॥ ०५८ ॥

शप्तो ह्येष पुरा पापो वधूं रम्भां परामृशन् ।
न शक्तो विवशां नारीमुपैतुमजितेन्द्रियः ॥ ०५९ ॥

क्षिप्रमेष्यति ते भर्ता सुग्रीवेणाभिरक्षितः ।
सौमित्रिसहितो धीमांस्त्वां चेतो मोक्षयिष्यति ॥ ०६० ॥

स्वप्ना हि सुमहाघोरा दृष्टा मेऽनिष्टदर्शनाः ।
विनाशायास्य दुर्बुद्धेः पौलस्त्यकुलघातिनः ॥ ०६१ ॥

दारुणो ह्येष दुष्टात्मा क्षुद्रकर्मा निशाचरः ।
स्वभावाच्छीलदोषेण सर्वेषां भयवर्धनः ॥ ०६२ ॥

स्पर्धते सर्वदेवैर्यः कालोपहतचेतनः ।
मया विनाशलिङ्गानि स्वप्ने दृष्टानि तस्य वै ॥ ०६३ ॥

तैलाभिषिक्तो विकचो मज्जन्पङ्के दशाननः ।
असकृत्खरयुक्ते तु रथे नृत्यन्निव स्थितः ॥ ०६४ ॥

कुम्भकर्णादयश्चेमे नग्नाः पतितमूर्धजाः ।
कृष्यन्ते दक्षिणामाशां रक्तमाल्यानुलेपनाः ॥ ०६५ ॥

श्वेतातपत्रः सोष्णीषः शुक्लमाल्यविभूषणः ।
श्वेतपर्वतमारूढ एक एव विभीषणः ॥ ०६६ ॥

सचिवाश्चास्य चत्वारः शुक्लमाल्यानुलेपनाः ।
श्वेतपर्वतमारूढा मोक्ष्यन्तेऽस्मान्महाभयात् ॥ ०६७ ॥

रामस्यास्त्रेण पृथिवी परिक्षिप्ता ससागरा ।
यशसा पृथिवीं कृत्स्नां पूरयिष्यति ते पतिः ॥ ०६८ ॥

अस्थिसञ्चयमारूढो भुञ्जानो मधुपायसम् ।
लक्ष्मणश्च मया दृष्टो निरीक्षन्सर्वतोदिशः ॥ ०६९ ॥

रुदती रुधिरार्द्राङ्गी व्याघ्रेण परिरक्षिता ।
असकृत्त्वं मया दृष्टा गच्छन्ती दिशमुत्तराम् ॥ ०७० ॥

हर्षमेष्यसि वैदेहि क्षिप्रं भर्तृसमन्विता ।
राघवेण सह भ्रात्रा सीते त्वमचिरादिव ॥ ०७१ ॥

इति सा मृगशावाक्षी तच्छ्रुत्वा त्रिजटावचः ।
बभूवाशावती बाला पुनर्भर्तृसमागमे ॥ ०७२ ॥

यावदभ्यागता रौद्राः पिशाच्यस्ताः सुदारुणाः ।

ददृशुस्तां त्रिजटया सहासीनां यथा पुरा ॥ ०७३ ॥

---

# अध्याय २६५

मार्कण्डेय उवाच ॥

ततस्तां भर्तृशोकार्तां दीनां मलिनवाससम् ।
मणिशेषाभ्यलङ्कारां रुदतीं च पतिव्रताम् ॥ ००१ ॥

राक्षसीभिरुपास्यन्तीं समासीनां शिलातले ।
रावणः कामबाणार्तो ददर्शोपससर्प च ॥ ००२ ॥

देवदानवगन्धर्वयक्षकिंपुरुषैर्युधि ।
अजितोऽशोकवनिकां ययौ कन्दर्पमोहितः ॥ ००३ ॥

दिव्याम्बरधरः श्रीमान्सुमृष्टमणिकुण्डलः ।
विचित्रमाल्यमुकुटो वसन्त इव मूर्तिमान् ॥ ००४ ॥

स कल्पवृक्षसदृशो यत्नादपि विभूषितः ।
श्मशानचैत्यद्रुमवद्भूषितोऽपि भयङ्करः ॥ ००५ ॥

स तस्यास्तनुमध्यायाः समीपे रजनीचरः ।
ददृशे रोहिणीमेत्य शनैश्चर इव ग्रहः ॥ ००६ ॥

स तामामन्त्र्य सुश्रोणीं पुष्पकेतुशराहतः ।
इदमित्यब्रवीद्बालां त्रस्तां रौहीमिवाबलाम् ॥ ००७ ॥

सीते पर्याप्तमेतावत्कृतो भर्तुरनुग्रहः ।
प्रसादं कुरु तन्वङ्गि क्रियतां परिकर्म ते ॥ ००८ ॥

भजस्व मां वरारोहे महार्हाभरणाम्बरा ।
भव मे सर्वनारीणामुत्तमा वरवर्णिनि ॥ ००९ ॥

सन्ति मे देवकन्याश्च राजर्षीणां तथाङ्गनाः ।
सन्ति दानवकन्याश्च दैत्यानां चापि योषितः ॥ ०१० ॥

चतुर्दश पिशाचानां कोट्यो मे वचने स्थिताः ।
द्विस्तावत्पुरुषादानां रक्षसां भीमकर्मणाम् ॥ ०११ ॥

ततो मे त्रिगुणा यक्षा ये मद्वचनकारिणः ।
केचिदेव धनाध्यक्षं भ्रातरं मे समाश्रिताः ॥ ०१२ ॥

गन्धर्वाप्सरसो भद्रे मामापानगतं सदा ।
उपतिष्ठन्ति वामोरु यथैव भ्रातरं मम ॥ ०१३ ॥

पुत्रोऽहमपि विप्रर्षेः साक्षाद्विश्रवसो मुनेः ।
पञ्चमो लोकपालानामिति मे प्रथितं यशः ॥ ०१४ ॥

दिव्यानि भक्ष्यभोज्यानि पानानि विविधानि च ।
यथैव त्रिदशेशस्य तथैव मम भामिनि ॥ ०१५ ॥

क्षीयतां दुष्कृतं कर्म वनवासकृतं तव ।
भार्या मे भव सुश्रोणि यथा मन्दोदरी तथा ॥ ०१६ ॥

इत्युक्ता तेन वैदेही परिवृत्य शुभानना ।
तृणमन्तरतः कृत्वा तमुवाच निशाचरम् ॥ ०१७ ॥

अशिवेनातिवामोरूरजस्रं नेत्रवारिणा ।

स्तनावपतितौ बाला सहितावभिवर्षती ॥ ०१८ ॥

उवाच वाक्यं तं क्षुद्रं वैदेही पतिदेवता ॥ ०१८ ॥

असकृद्वदतो वाक्यमीदृशं राक्षसेश्वर ।
विषादयुक्तमेतत्ते मया श्रुतमभाग्यया ॥ ०१९ ॥

तद्भद्रसुख भद्रं ते मानसं विनिवर्त्यताम् ।
परदारास्म्यलभ्या च सततं च पतिव्रता ॥ ०२० ॥

न चैवोपयिकी भार्या मानुषी कृपणा तव ।
विवशां धर्षयित्वा च कां त्वं प्रीतिमवाप्स्यसि ॥ ०२१ ॥

प्रजापतिसमो विप्रो ब्रह्मयोनिः पिता तव ।
न च पालयसे धर्मं लोकपालसमः कथम् ॥ ०२२ ॥

भ्रातरं राजराजानं महेश्वरसखं प्रभुम् ।
धनेश्वरं व्यपदिशन्कथं त्विह न लज्जसे ॥ ०२३ ॥

इत्युक्त्वा प्रारुदत्सीता कम्पयन्ती पयोधरौ ।
शिरोधरां च तन्वङ्गी मुखं प्रच्छाद्य वाससा ॥ ०२४ ॥

तस्या रुदत्या भामिन्या दीर्घा वेणी सुसंयता ।
ददृशे स्वसिता स्निग्धा काली व्यालीव मूर्धनि ॥ ०२५ ॥

तच्छ्रुत्वा रावणो वाक्यं सीतयोक्तं सुनिष्ठुरम् ।
प्रत्याख्यातोऽपि दुर्मेधाः पुनरेवाब्रवीद्वचः ॥ ०२६ ॥

काममङ्गानि मे सीते दुनोतु मकरध्वजः ।
न त्वामकामां सुश्रोणीं समेष्ये चारुहासिनीम् ॥ ०२७ ॥

किं नु शक्यं मया कर्तुं यत्त्वमद्यापि मानुषम् ।
आहारभूतमस्माकं राममेवानुरुध्यसे ॥ ०२८ ॥

इत्युक्त्वा तामनिन्द्याङ्गीं स राक्षसगणेश्वरः ।
तत्रैवान्तर्हितो भूत्वा जगामाभिमतां दिशम् ॥ ०२९ ॥

राक्षसीभिः परिवृता वैदेही शोककर्शिता ।
सेव्यमाना त्रिजटया तत्रैव न्यवसत्तदा ॥ ०३० ॥

---

# अध्याय २६६

मार्कण्डेय उवाच ॥

राघवस्तु ससौमित्रिः सुग्रीवेणाभिपालितः ।
वसन्माल्यवतः पृष्ठे ददर्श विमलं नभः ॥ ००१ ॥

स दृष्ट्वा विमले व्योम्नि निर्मलं शशलक्षणम् ।
ग्रहनक्षत्रताराभिरनुयातममित्रहा ॥ ००२ ॥

कुमुदोत्पलपद्मानां गन्धमादाय वायुना ।
महीधरस्थः शीतेन सहसा प्रतिबोधितः ॥ ००३ ॥

प्रभाते लक्ष्मणं वीरमभ्यभाषत दुर्मनाः ।
सीतां संस्मृत्य धर्मात्मा रुद्धां राक्षसवेश्मनि ॥ ००४ ॥

गच्छ लक्ष्मण जानीहि किष्किन्धायां कपीश्वरम् ।
प्रमत्तं ग्राम्यधर्मेषु कृतघ्नं स्वार्थपण्डितम् ॥ ००५ ॥

योऽसौ कुलाधमो मूढो मया राज्येऽभिषेचितः ।
सर्ववानरगोपुच्छा यमृक्षाश्च भजन्ति वै ॥ ००६ ॥

यदर्थं निहतो वाली मया रघुकुलोद्वह ।
त्वया सह महाबाहो किष्किन्धोपवने तदा ॥ ००७ ॥

कृतघ्नं तमहं मन्ये वानरापसदं भुवि ।
यो मामेवङ्गतो मूढो न जानीतेऽद्य लक्ष्मण ॥ ००८ ॥

असौ मन्ये न जानीते समयप्रतिपादनम् ।
कृतोपकारं मां नूनमवमन्याल्पया धिया ॥ ००९ ॥

यदि तावदनुद्युक्तः शेते कामसुखात्मकः ।
नेतव्यो वालिमार्गेण सर्वभूतगतिं त्वया ॥ ०१० ॥

अथापि घटतेऽस्माकमर्थे वानरपुङ्गवः ।
तमादायैहि काकुत्स्थ त्वरावान्भव मा चिरम् ॥ ०११ ॥

इत्युक्तो लक्ष्मणो भ्रात्रा गुरुवाक्यहिते रतः ।
प्रतस्थे रुचिरं गृह्य समार्गणगुणं धनुः ॥ ०१२ ॥

किष्किन्धाद्वारमासाद्य प्रविवेशानिवारितः ॥ ०१२ ॥

सक्रोध इति तं मत्वा राजा प्रत्युद्ययौ हरिः ।
तं सदारो विनीतात्मा सुग्रीवः प्लवगाधिपः ॥ ०१३ ॥

पूजया प्रतिजग्राह प्रीयमाणस्तदर्हया ॥ ०१३ ॥

तमब्रवीद्रामवचः सौमित्रिरकुतोभयः ।
स तत्सर्वमशेषेण श्रुत्वा प्रह्वः कृताञ्जलिः ॥ ०१४ ॥

सभृत्यदारो राजेन्द्र सुग्रीवो वानराधिपः ।
इदमाह वचः प्रीतो लक्ष्मणं नरकुञ्जरम् ॥ ०१५ ॥

नास्मि लक्ष्मण दुर्मेधा न कृतघ्नो न निर्घृणः ।
श्रूयतां यः प्रयत्नो मे सीतापर्येषणे कृतः ॥ ०१६ ॥

दिशः प्रस्थापिताः सर्वे विनीता हरयो मया ।
सर्वेषां च कृतः कालो मासेनागमनं पुनः ॥ ०१७ ॥

यैरियं सवना साद्रिः सपुरा सागराम्बरा ।
विचेतव्या मही वीर सग्रामनगराकरा ॥ ०१८ ॥

स मासः पञ्चरात्रेण पूर्णो भवितुमर्हति ।
ततः श्रोष्यसि रामेण सहितः सुमहत्प्रियम् ॥ ०१९ ॥

इत्युक्तो लक्ष्मणस्तेन वानरेन्द्रेण धीमता ।
त्यक्त्वा रोषमदीनात्मा सुग्रीवं प्रत्यपूजयत् ॥ ०२० ॥

स रामं सहसुग्रीवो माल्यवत्पृष्ठमास्थितम् ।
अभिगम्योदयं तस्य कार्यस्य प्रत्यवेदयत् ॥ ०२१ ॥

इत्येवं वानरेन्द्रास्ते समाजग्मुः सहस्रशः ।
दिशस्तिस्रो विचित्याथ न तु ये दक्षिणां गताः ॥ ०२२ ॥

आचख्युस्ते तु रामाय महीं सागरमेखलाम् ।
विचितां न तु वैदेह्या दर्शनं रावणस्य वा ॥ ०२३ ॥

गतास्तु दक्षिणामाशां ये वै वानरपुङ्गवाः ।
आशावांस्तेषु काकुत्स्थः प्राणानार्तोऽप्यधारयत् ॥ ०२४ ॥

द्विमासोपरमे काले व्यतीते प्लवगास्ततः ।

सुग्रीवमभिगम्येदं त्वरिता वाक्यमब्रुवन् ॥ ०२५ ॥

रक्षितं वालिना यत्तत्स्फीतं मधुवनं महत् ।
त्वया च प्लवगश्रेष्ठ तद्भुङ्क्ते पवनात्मजः ॥ ०२६ ॥

वालिपुत्रोऽङ्गदश्चैव ये चान्ये प्लवगर्षभाः ।
विचेतुं दक्षिणामाशां राजन्प्रस्थापितास्त्वया ॥ ०२७ ॥

तेषां तं प्रणयं श्रुत्वा मेने स कृतकृत्यताम् ।
कृतार्थानां हि भृत्यानामेतद्भवति चेष्टितम् ॥ ०२८ ॥

स तद्रामाय मेधावी शशंस प्लवगर्षभः ।
रामश्चाप्यनुमानेन मेने दृष्टां तु मैथिलीम् ॥ ०२९ ॥

हनूमत्प्रमुखाश्चापि विश्रान्तास्ते प्लवङ्गमाः ।
अभिजग्मुर्हरीन्द्रं तं रामलक्ष्मणसंनिधौ ॥ ०३० ॥

गतिं च मुखवर्णं च दृष्ट्वा रामो हनूमतः ।
अगमत्प्रत्ययं भूयो दृष्टा सीतेति भारत ॥ ०३१ ॥

हनूमत्प्रमुखास्ते तु वानराः पूर्णमानसाः ।
प्रणेमुर्विधिवद्रामं सुग्रीवं लक्ष्मणं तथा ॥ ०३२ ॥

तानुवाचागतान्रामः प्रगृह्य सशरं धनुः ।
अपि मां जीवयिष्यध्वमपि वः कृतकृत्यता ॥ ०३३ ॥

अपि राज्यमयोध्यायां कारयिष्याम्यहं पुनः ।
निहत्य समरे शत्रूनाहृत्य जनकात्मजाम् ॥ ०३४ ॥

अमोक्षयित्वा वैदेहीमहत्वा च रिपून्रणे ।
हृतदारोऽवधूतश्च नाहं जीवितुमुत्सहे ॥ ०३५ ॥

इत्युक्तवचनं रामं प्रत्युवाचानिलात्मजः ।
प्रियमाख्यामि ते राम दृष्टा सा जानकी मया ॥ ०३६ ॥

विचित्य दक्षिणामाशां सपर्वतवनाकराम् ।
श्रान्ताः काले व्यतीते स्म दृष्टवन्तो महागुहाम् ॥ ०३७ ॥

प्रविशामो वयं तां तु बहुयोजनमायताम् ।
अन्धकारां सुविपिनां गहनां कीटसेविताम् ॥ ०३८ ॥

गत्वा सुमहदध्वानमादित्यस्य प्रभां ततः ।
दृष्टवन्तः स्म तत्रैव भवनं दिव्यमन्तरा ॥ ०३९ ॥

मयस्य किल दैत्यस्य तदासीद्वेश्म राघव ।
तत्र प्रभावती नाम तपोऽतप्यत तापसी ॥ ०४० ॥

तया दत्तानि भोज्यानि पानानि विविधानि च ।
भुक्त्वा लब्धबलाः सन्तस्तयोक्तेन पथा ततः ॥ ०४१ ॥

निर्याय तस्मादुद्देशात्पश्यामो लवणाम्भसः ।
समीपे सह्यमलयौ दर्दुरं च महागिरिम् ॥ ०४२ ॥

ततो मलयमारुह्य पश्यन्तो वरुणालयम् ।
विषण्णा व्यथिताः खिन्ना निराशा जीविते भृशम् ॥ ०४३ ॥

अनेकशतविस्तीर्णं योजनानां महोदधिम् ।
तिमिनक्रझषावासं चिन्तयन्तः सुदुःखिताः ॥ ०४४ ॥

तत्रानशनसङ्कल्पं कृत्वासीना वयं तदा ।
ततः कथान्ते गृध्रस्य जटायोरभवत्कथा ॥ ०४५ ॥

ततः पर्वतश्रृङ्गाभं घोररूपं भयावहम् ।
पक्षिणं दृष्टवन्तः स्म वैनतेयमिवापरम्  ॥ ०४६  ॥

सोऽस्मानतर्कयद्धोक्तुमथाभ्येत्य वचोऽब्रवीत् ।
भोः क एष मम भ्रातुर्जटायोः कुरुते कथाम्  ॥ ०४७  ॥

संपातिर्नाम तस्याहं ज्येष्ठो भ्राता खगाधिपः ।
अन्योन्यस्पर्धयारूढावावामादित्यसंसदम्  ॥ ०४८  ॥

ततो दग्धाविमौ पक्षौ न दग्धौ तु जटायुषः ।
तदा मे चिरदृष्टः स भ्राता गृध्रपतिः प्रियः  ॥ ०४९  ॥

निर्दग्धपक्षः पतितो ह्यहमस्मिन्महागिरौ  ॥ ०४९  ॥

तस्यैवं वदतोऽस्माभिर्हतो भ्राता निवेदितः ।
व्यसनं भवतश्चेदं सङ्क्षेपाद्वै निवेदितम्  ॥ ०५०  ॥

स संपातिस्तदा राजञ्श्रुत्वा सुमहदप्रियम् ।
विषण्णचेताः पप्रच्छ पुनरस्मानरिंदम  ॥ ०५१  ॥

कः स रामः कथं सीता जटायुश्च कथं हतः ।
इच्छामि सर्वमेवैतच्छ्रोतुं प्लवगसत्तमाः  ॥ ०५२  ॥

तस्याहं सर्वमेवैतं भवतो व्यसनागमम् ।
प्रायोपवेशने चैव हेतुं विस्तरतोऽब्रुवम्  ॥ ०५३  ॥

सोऽस्मानुत्थापयामास वाक्येनानेन पक्षिराट् ।
रावणो विदितो मह्यं लङ्का चास्य महापुरी  ॥ ०५४  ॥

दृष्टा पारे समुद्रस्य त्रिकूटगिरिकन्दरे ।
भवित्री तत्र वैदेही न मेऽस्त्यत्र विचारणा  ॥ ०५५  ॥

इति तस्य वचः श्रुत्वा वयमुत्थाय सत्वराः ।
सागरप्लवने मन्त्रं मन्त्रयामः परंतप ॥ ०५६ ॥

नाध्यवस्यद्यदा कश्चित्सागरस्य विलङ्घने ।
ततः पितरमाविश्य पुप्लुवेऽहं महार्णवम् ॥ ०५७ ॥

शतयोजनविस्तीर्णं निहत्य जलराक्षसीम् ॥ ०५७ ॥

तत्र सीता मया दृष्टा रावणान्तःपुरे सती ।
उपवासतपःशीला भर्तृदर्शनलालसा ॥ ०५८ ॥

जटिला मलदिग्धाङ्गी कृशा दीना तपस्विनी ॥ ०५८ ॥

निमित्तैस्तामहं सीतामुपलभ्य पृथग्विधैः ।
उपसृत्याब्रुवं चार्यामभिगम्य रहोगताम् ॥ ०५९ ॥

सीते रामस्य दूतोऽहं वानरो मारुतात्मजः ।
त्वद्दर्शनमभिप्रेप्सुरिह प्राप्तो विहायसा ॥ ०६० ॥

राजपुत्रौ कुशलिनौ भ्रातरौ रामलक्ष्मणौ ।
सर्वशाखामृगेन्द्रेण सुग्रीवेणाभिपालितौ ॥ ०६१ ॥

कुशलं त्वाब्रवीद्रामः सीते सौमित्रिणा सह ।
सखिभावाच्च सुग्रीवः कुशलं त्वानुपृच्छति ॥ ०६२ ॥

क्षिप्रमेष्यति ते भर्ता सर्वशाखामृगैः सह ।
प्रत्ययं कुरु मे देवि वानरोऽस्मि न राक्षसः ॥ ०६३ ॥

मुहूर्तमिव च ध्यात्वा सीता मां प्रत्युवाच ह ।
अवैमि त्वां हनूमन्तमविन्ध्यवचनादहम् ॥ ०६४ ॥

अविन्ध्यो हि महाबाहो राक्षसो वृद्धसंमतः ।
कथितस्तेन सुग्रीवस्त्वद्विधैः सचिवैर्वृतः ॥ ०६५ ॥

गम्यतामिति चोक्त्वा मां सीता प्रादादिमं मणिम् ।
धारिता येन वैदेही कालमेतमनिन्दिता ॥ ०६६ ॥

प्रत्ययार्थं कथां चेमां कथयामास जानकी ।
क्षिप्तामिषीकां काकस्य चित्रकूटे महागिरौ ॥ ०६७ ॥

भवता पुरुषव्याघ्र प्रत्यभिज्ञानकारणात् ॥ ०६७ ॥

श्रावयित्वा तदात्मानं ततो दग्ध्वा च तां पुरीम् ।
संप्राप्त इति तं रामः प्रियवादिनमर्चयत् ॥ ०६८ ॥

---

# अध्याय २६७

मार्कण्डेय उवाच ॥

ततस्तत्रैव रामस्य समासीनस्य तैः सह ।
समाजग्मुः कपिश्रेष्ठाः सुग्रीववचनात्तदा ॥ ००१ ॥

वृतः कोटिसहस्रेण वानराणां तरस्विनाम् ।
श्वशुरो वालिनः श्रीमान्सुषेणो राममभ्ययात् ॥ ००२ ॥

कोटीशतवृतौ चापि गजो गवय एव च ।
वानरेन्द्रौ महावीर्यौ पृथक्पृथगदृश्यताम् ॥ ००३ ॥

षष्टिकोटिसहस्राणि प्रकर्षन्प्रत्यदृश्यत ।
गोलाङ्गूलो महाराज गवाक्षो भीमदर्शनः ॥ ००४ ॥

गन्धमादनवासी तु प्रथितो गन्धमादनः ।
कोटीसहस्रमुग्राणां हरीणां समकर्षत ॥ ००५ ॥

पनसो नाम मेधावी वानरः सुमहाबलः ।
कोटीर्दश द्वादश च त्रिंशत्पञ्च प्रकर्षति ॥ ००६ ॥

श्रीमान्दधिमुखो नाम हरिवृद्धोऽपि वीर्यवान् ।
प्रचकर्ष महत्सैन्यं हरीणां भीमतेजसाम् ॥ ००७ ॥

कृष्णानां मुखपुण्ड्राणामृक्षाणां भीमकर्मणाम् ।
कोटीशतसहस्रेण जाम्बवान्प्रत्यदृश्यत ॥ ००८ ॥

एते चान्ये च बहवो हरियूथपयूथपाः ।
असंख्येया महाराज समीयू रामकारणात् ॥ ००९ ॥

शिरीषकुसुमाभानां सिंहानामिव नर्दताम् ।
श्रूयते तुमुलः शब्दस्तत्र तत्र प्रधावताम् ॥ ०१० ॥

गिरिकूटनिभाः केचित्केचिन्महिषसंनिभाः ।
शरदभ्रप्रतीकाशाः पिष्टहिङ्गुलकाननाः ॥ ०११ ॥

उत्पतन्तः पतन्तश्च प्लवमानाश्च वानराः ।
उद्धुन्वन्तोऽपरे रेणून्समाजग्मुः समन्ततः ॥ ०१२ ॥

स वानरमहालोकः पूर्णसागरसंनिभः ।
निवेशमकरोत्तत्र सुग्रीवानुमते तदा ॥ ०१३ ॥

ततस्तेषु हरीन्द्रेषु समावृत्तेषु सर्वशः ।

तिथौ प्रशस्ते नक्षत्रे मुहूर्ते चाभिपूजिते ॥ ०१४ ॥

तेन व्यूढेन सैन्येन लोकानुद्वर्तयन्निव ।
प्रययौ राघवः श्रीमान्सुग्रीवसहितस्तदा ॥ ०१५ ॥

मुखमासीत्तु सैन्यस्य हनूमान्मारुतात्मजः ।
जघनं पालयामास सौमित्रिरकुतोभयः ॥ ०१६ ॥

बद्धगोधाङ्गुलित्राणौ राघवौ तत्र रेजतुः ।
वृतौ हरिमहामात्रैश्चन्द्रसूर्यौ ग्रहैरिव ॥ ०१७ ॥

प्रबभौ हरिसैन्यं तच्छालतालशिलायुधम् ।
सुमहच्छालिभवनं यथा सूर्योदयं प्रति ॥ ०१८ ॥

नलनीलाङ्गदक्राथमैन्दद्विविदपालिता ।
ययौ सुमहती सेना राघवस्यार्थसिद्धये ॥ ०१९ ॥

विधिवत्सुप्रशस्तेषु बहुमूलफलेषु च ।
प्रभूतमधुमांसेषु वारिमत्सु शिवेषु च ॥ ०२० ॥

निवसन्ती निराबाधा तथैव गिरिसानुषु ।
उपायाद्धरिसेना सा क्षारोदमथ सागरम् ॥ ०२१ ॥

द्वितीयसागरनिभं तद्बलं बहुलध्वजम् ।
वेलावनं समासाद्य निवासमकरोत्तदा ॥ ०२२ ॥

ततो दाशरथिः श्रीमान्सुग्रीवं प्रत्यभाषत ।
मध्ये वानरमुख्यानां प्राप्तकालमिदं वचः ॥ ०२३ ॥

उपायः को नु भवतां मतः सागरलङ्घने ।
इयं च महती सेना सागरश्चापि दुस्तरः ॥ ०२४ ॥

तत्रान्ये व्याहरन्ति स्म वानराः पटुमानिनः ।
समर्था लङ्घने सिन्धोर्न तु कृत्स्नस्य वानराः  ॥ ०२५  ॥

केचिन्नौभिर्व्यवस्यन्ति केचीच्च विविधैः प्लवैः ।
नेति रामश्च तान्सर्वान्सान्त्वयन्प्रत्यभाषत  ॥ ०२६  ॥

शतयोजनविस्तारं न शक्ताः सर्ववानराः ।
क्रान्तुं तोयनिधिं वीरा नैषा वो नैष्ठिकी मतिः  ॥ ०२७  ॥

नावो न सन्ति सेनाया बह्व्यस्तारयितुं तथा ।
वणिजामुपघातं च कथमस्मद्विधश्चरेत्  ॥ ०२८  ॥

विस्तीर्णं चैव नः सैन्यं हन्याच्छिद्रेषु वै परः ।
प्लवोडुपप्रतारश्च नैवात्र मम रोचते  ॥ ०२९  ॥

अहं त्विमं जलनिधिं समारप्स्याम्युपायतः ।
प्रतिशेष्याम्युपवसन्दर्शयिष्यति मां ततः  ॥ ०३०  ॥

न चेद्दर्शयिता मार्गं धक्ष्याम्येनमहं ततः ।
महास्त्रैरप्रतिहतैरत्यग्निपवनोज्ज्वलैः  ॥ ०३१  ॥

इत्युक्त्वा सहसौमित्रिरुपस्पृश्याथ राघवः ।
प्रतिशिश्ये जलनिधिं विधिवत्कुशसंस्तरे  ॥ ०३२  ॥

सागरस्तु ततः स्वप्ने दर्शयामास राघवम् ।
देवो नदनदीभर्ता श्रीमान्यादोगणैर्वृतः  ॥ ०३३  ॥

कौसल्यामातरित्येवमाभाष्य मधुरं वचः ।
इदमित्याह रत्नानामाकरैः शतशो वृतः  ॥ ०३४  ॥

ब्रूहि किं ते करोम्यत्र साहाय्यं पुरुषर्षभ ।
इक्ष्वाकुरस्मि ते ज्ञातिरिति रामस्तमब्रवीत्  ॥ ०३५  ॥

मार्गमिच्छामि सैन्यस्य दत्तं नदनदीपते ।
येन गत्वा दशग्रीवं हन्यां पौलस्त्यपांसनम्  ॥ ०३६  ॥

यद्येवं याचतो मार्गं न प्रदास्यति मे भवान् ।
शरैस्त्वां शोषयिष्यामि दिव्यास्त्रप्रतिमन्त्रितैः  ॥ ०३७  ॥

इत्येवं ब्रुवतः श्रुत्वा रामस्य वरुणालयः ।
उवाच व्यथितो वाक्यमिति बद्धाञ्जलिः स्थितः  ॥ ०३८  ॥

नेच्छामि प्रतिघातं ते नास्मि विघ्नकरस्तव ।
शृणु चेदं वचो राम श्रुत्वा कर्तव्यमाचर  ॥ ०३९  ॥

यदि दास्यामि ते मार्गं सैन्यस्य व्रजतोऽऽज्ञया ।
अन्येऽप्याज्ञापयिष्यन्ति मामेवं धनुषो बलात्  ॥ ०४०  ॥

अस्ति त्वत्र नलो नाम वानरः शिल्पिसंमतः ।
त्वष्टुर्देवस्य तनयो बलवान्विश्वकर्मणः  ॥ ०४१  ॥

स यत्काष्ठं तृणं वापि शिलां वा क्षेप्स्यते मयि ।
सर्वं तद्धारयिष्यामि स ते सेतुर्भविष्यति  ॥ ०४२  ॥

इत्युक्त्वान्तर्हिते तस्मिन्रामो नलमुवाच ह ।
कुरु सेतुं समुद्रे त्वं शक्तो ह्यसि मतो मम  ॥ ०४३  ॥

तेनोपायेन काकुत्स्थः सेतुबन्धमकारयत् ।
दशयोजनविस्तारमायतं शतयोजनम्  ॥ ०४४  ॥

नलसेतुरिति ख्यातो योऽद्यापि प्रथितो भुवि ।

रामस्याज्ञां पुरस्कृत्य धार्यते गिरिसंनिभः ॥ ०४५ ॥

तत्रस्थं स तु धर्मात्मा समागच्छद्विभीषणः ।
भ्राता वै राक्षसेन्द्रस्य चतुर्भिः सचिवैः सह ॥ ०४६ ॥

प्रतिजग्राह रामस्तं स्वागतेन महामनाः ।
सुग्रीवस्य तु शङ्काभूत्प्रणिधिः स्यादिति स्म ह ॥ ०४७ ॥

राघवस्तस्य चेष्टाभिः सम्यक्क चरितेङ्गितैः ।
यदा तत्त्वेन तुष्टोऽभूत्तत एनमपूजयत् ॥ ०४८ ॥

सर्वराक्षसराज्ये चाप्यभ्यषिञ्चद्विभीषणम् ।
चक्रे च मन्त्रानुचरं सुहृदं लक्ष्मणस्य च ॥ ०४९ ॥

विभीषणमते चैव सोऽत्यक्रामन्महार्णवम् ।
ससैन्यः सेतुना तेन मासेनैव नराधिप ॥ ०५० ॥

ततो गत्वा समासाद्य लङ्कोद्यानान्यनेकशः ।
भेदयामास कपिभिर्महान्ति च बहूनि च ॥ ०५१ ॥

तत्रास्तां रावणामात्यौ राक्षसौ शुकसारणौ ।
चारौ वानररूपेण तौ जग्राह विभीषणः ॥ ०५२ ॥

प्रतिपन्नौ यदा रूपं राक्षसं तौ निशाचरौ ।
दर्शयित्वा ततः सैन्यं रामः पश्चादवासृजत् ॥ ०५३ ॥

निवेश्योपवने सैन्यं तच्छूरः प्राज्ञवानरम् ।
प्रेषयामास दौत्येन रावणस्य ततोऽङ्गदम् ॥ ०५४ ॥

# अध्याय २६८

मार्कण्डेय उवाच ॥

प्रभूतान्नोदके तस्मिन्बहुमूलफले वने ।
सेनां निवेश्य काकुत्स्थो विधिवत्पर्यरक्षत ॥ ००१ ॥

रावणश्च विधिं चक्रे लङ्कायां शास्त्रनिर्मितम् ।
प्रकृत्यैव दुराधर्षा दृढप्राकारतोरणा ॥ ००२ ॥

अगाधतोयाः परिखा मीननक्रसमाकुलाः ।
बभूवुः सप्त दुर्धर्षाः खादिरैः शङ्कुभिश्चिताः ॥ ००३ ॥

कर्णाट्टयन्त्रदुर्धर्षा बभूवुः सहुडोपलाः ।
साशीविषघटायोधाः ससर्जरसपांसवः ॥ ००४ ॥

मुसलालातनाराचतोमरासिपरश्वधैः ।
अन्विताश्च शतघ्नीभिः समधूच्छिष्टमुद्गराः ॥ ००५ ॥

पुरद्वारेषु सर्वेषु गुल्माः स्थावरजङ्गमाः ।
बभूवुः पत्तिबहुलाः प्रभूतगजवाजिनः ॥ ००६ ॥

अङ्गदस्त्वथ लङ्काया द्वारदेशमुपागतः ।
विदितो राक्षसेन्द्रस्य प्रविवेश गतव्यथः ॥ ००७ ॥

मध्ये राक्षसकोटीनां बह्वीनां सुमहाबलः ।
शुशुभे मेघमालाभिरादित्य इव संवृतः ॥ ००८ ॥

स समासाद्य पौलस्त्यममात्यैरभिसंवृतम् ।
रामसंदेशमामन्त्र्य वाग्मी वक्तुं प्रचक्रमे ॥ ००९ ॥

आह त्वां राघवो राजन्कोसलेन्द्रो महायशाः ।
प्राप्तकालमिदं वाक्यं तदादत्स्व कुरुष्व च ॥ ०१० ॥

अकृतात्मानमासाद्य राजानमनये रतम् ।
विनश्यन्त्यनयाविष्टा देशाश्च नगराणि च ॥ ०११ ॥

त्वयैकेनापराद्धं मे सीतामाहरता बलात् ।
वधायानपराद्धानामन्येषां तद्भविष्यति ॥ ०१२ ॥

ये त्वया बलदर्पाभ्यामाविष्टेन वनेचराः ।
ऋषयो हिंसिताः पूर्वं देवाश्चाप्यवमानिताः ॥ ०१३ ॥

राजर्षयश्च निहता रुदन्त्यश्चाहृताः स्त्रियः ।
तदिदं समनुप्राप्तं फलं तस्यानयस्य ते ॥ ०१४ ॥

हन्तास्मि त्वां सहामात्यं युध्यस्व पुरुषो भव ।
पश्य मे धनुषो वीर्यं मानुषस्य निशाचर ॥ ०१५ ॥

मुच्यतां जानकी सीता न मे मोक्ष्यसि कर्हिचित् ।
अराक्षसमिमं लोकं कर्तास्मि निशितैः शरैः ॥ ०१६ ॥

इति तस्य ब्रुवाणस्य दूतस्य परुषं वचः ।
श्रुत्वा न ममृषे राजा रावणः क्रोधमूर्छितः ॥ ०१७ ॥

इङ्गितज्ञास्ततो भर्तुश्चत्वारो रजनीचराः ।
चतुर्ष्वङ्गेषु जगृहुः शार्दूलमिव पक्षिणः ॥ ०१८ ॥

तांस्तथाङ्गेषु संसक्तानङ्गदो रजनीचरान् ।
आदायैव खमुत्पत्य प्रासादतलमाविशत् ॥ ०१९ ॥

वेगेनोत्पततस्तस्य पेतुस्ते रजनीचराः ।

भुवि संभिन्नहृदयाः प्रहारपरिपीडिताः ॥ ०२० ॥

स मुक्तो हर्म्यशिखरात्तस्मात्पुनरवापतत् ।
लङ्घयित्वा पुरीं लङ्कां स्वबलस्य समीपतः ॥ ०२१ ॥

कोसलेन्द्रमथाभ्येत्य सर्वमावेद्य चाङ्गदः ।
विशश्राम स तेजस्वी राघवेणाभिनन्दितः ॥ ०२२ ॥

ततः सर्वाभिसारेण हरीणां वातरंहसाम् ।
भेदयामास लङ्कायाः प्राकारं रघुनन्दनः ॥ ०२३ ॥

विभीषणर्क्षाधिपती पुरस्कृत्याथ लक्ष्मणः ।
दक्षिणं नगरद्वारमवामृद्नाद्दुरासदम् ॥ ०२४ ॥

करभारुणगात्राणां हरीणां युद्धशालिनाम् ।
कोटीशतसहस्रेण लङ्कामभ्यपतत्तदा ॥ ०२५ ॥

उत्पतद्भिः पतद्भिश्च निपतद्भिश्च वानरैः ।
नादृश्यत तदा सूर्यो रजसा नाशितप्रभः ॥ ०२६ ॥

शालिप्रसूनसदृशैः शिरीषकुसुमप्रभैः ।
तरुणादित्यसदृशैः शरगौरैश्च वानरैः ॥ ०२७ ॥

प्राकारं ददृशुस्ते तु समन्तात्कपिलीकृतम् ।
राक्षसा विस्मिता राजन्सस्त्रीवृद्धाः समन्ततः ॥ ०२८ ॥

बिभिदुस्ते मणिस्तम्भान्कर्णाट्टशिखराणि च ।
भग्नोन्मथितवेगानि यन्त्राणि च विचिक्षिपुः ॥ ०२९ ॥

परिगृह्य शतघ्नीश्च सचक्राः सहुडोपलाः ।
चिक्षिपुर्भुजवेगेन लङ्कामध्ये महाबलाः ॥ ०३० ॥

प्राकारस्थाश्च ये केचिन्निशाचरगणास्तदा ।
प्रदुद्रुवुस्ते शतशः कपिभिः समभिद्रुताः ॥ ०३१ ॥

ततस्तु राजवचनाद्राक्षसाः कामरूपिणः ।
निर्ययुर्विकृताकाराः सहस्रशतसंघशः ॥ ०३२ ॥

शस्त्रवर्षाणि वर्षन्तो द्रावयन्तो वनौकसः ।
प्राकारं शोधयन्तस्ते परं विक्रममास्थिताः ॥ ०३३ ॥

स माषराशिसदृशैर्बभूव क्षणदाचरैः ।
कृतो निर्वानरो भूयः प्राकारो भीमदर्शनैः ॥ ०३४ ॥

पेतुः शूलविभिन्नाङ्गा बहवो वानरर्षभाः ।
स्तम्भतोरणभग्नाश्च पेतुस्तत्र निशाचराः ॥ ०३५ ॥

केशाकेश्यभवद्युद्धं रक्षसां वानरैः सह ।
नखैर्दन्तैश्च वीराणां खादतां वै परस्परम् ॥ ०३६ ॥

निष्टनन्तो ह्युभयतस्तत्र वानरराक्षसाः ।
हता निपतिता भूमौ न मुञ्चन्ति परस्परम् ॥ ०३७ ॥

रामस्तु शरजालानि ववर्ष जलदो यथा ।
तानि लङ्कां समासाद्य जघ्नुस्तान्रजनीचरान् ॥ ०३८ ॥

सौमित्रिरपि नाराचैर्दृढधन्वा जितक्लमः ।
आदिश्यादिश्य दुर्गस्थान्पातयामास राक्षसान् ॥ ०३९ ॥

ततः प्रत्यवहारोऽभूत्सैन्यानां राघवाज्ञया ।
कृते विमर्दे लङ्कायां लब्धलक्षो जयोत्तरः ॥ ०४० ॥

# अध्याय २६९

मार्कण्डेय उवाच ॥

ततो निविशमानांस्तान्सैनिकान्रावणानुगाः ।
अभिजग्मुर्गणानेके पिशाचक्षुद्ररक्षसाम् ॥ ००१ ॥

पर्वणः पूतनो जम्भः खरः क्रोधवशो हरिः ।
प्ररुजश्चारुजश्चैव प्रघसश्चैवमादयः ॥ ००२ ॥

ततोऽभिपततां तेषामदृश्यानां दुरात्मनाम् ।
अन्तर्धानवधं तज्ज्ञश्चकार स विभीषणः ॥ ००३ ॥

ते दृश्यमाना हरिभिर्बलिभिर्दूरपातिभिः ।
निहताः सर्वशो राजन्महीं जग्मुर्गतासवः ॥ ००४ ॥

अमृष्यमाणः सबलो रावणो निर्ययावथ ।
व्यूह्य चौशनसं व्यूहं हरीन्सर्वानहारयत् ॥ ००५ ॥

राघवस्त्वभिनिर्याय व्यूढानीकं दशाननम् ।
बार्हस्पत्यं विधिं कृत्वा प्रत्यव्यूहन्निशाचरम् ॥ ००६ ॥

समेत्य युयुधे तत्र ततो रामेण रावणः ।
युयुधे लक्ष्मणश्चैव तथैवेन्द्रजिता सह ॥ ००७ ॥

विरूपाक्षेण सुग्रीवस्तारेण च निखर्वटः ।
तुण्डेन च नलस्तत्र पटुशः पनसेन च ॥ ००८ ॥

विषह्यं यं हि यो मेने स स तेन समेयिवान् ।
युयुधे युद्धवेलायां स्वबाहुबलमाश्रितः ॥ ००९ ॥

स संप्रहारो ववृधे भीरूणां भयवर्धनः ।
लोमसंहर्षणो घोरः पुरा देवासुरे यथा ॥ ०१० ॥

रावणो राममानर्छच्छक्तिशूलासिवृष्टिभिः ।
निशितैरायसैस्तीक्ष्णै रावणं चापि राघवः ॥ ०११ ॥

तथैवेन्द्रजितं यत्तं लक्ष्मणो मर्मभेदिभिः ।
इन्द्रजिच्चापि सौमित्रिं बिभेद बहुभिः शरैः ॥ ०१२ ॥

विभीषणः प्रहस्तं च प्रहस्तश्च विभीषणम् ।
खगपत्रैः शरैस्तीक्ष्णैरभ्यवर्षद्गतव्यथः ॥ ०१३ ॥

तेषां बलवतामासीन्महास्त्राणां समागमः ।
विव्यथुः सकला येन त्रयो लोकाश्चराचराः ॥ ०१४ ॥

---

# अध्याय २७०

मार्कण्डेय उवाच ॥

ततः प्रहस्तः सहसा समभ्येत्य विभीषणम् ।
गदया ताडयामास विनद्य रणकर्कशः ॥ ००१ ॥

स तयाभिहतो धीमान्गदया भीमवेगया ।
नाकम्पत महाबाहुर्हिमवानिव सुस्थिरः ॥ ००२ ॥

ततः प्रगृह्य विपुलां शतघण्टां विभीषणः ।
अभिमन्त्र्य महाशक्तिं चिक्षेपास्य शिरः प्रति ॥ ००३ ॥

पतन्त्या स तया वेगाद्राक्षसोऽशनिनादया ।
हृतोत्तमाङ्गो ददृशे वातरुग्ण इव द्रुमः ॥ ००४ ॥

तं दृष्ट्वा निहतं संख्ये प्रहस्तं क्षणदाचरम् ।
अभिदुद्राव धूम्राक्षो वेगेन महता कपीन् ॥ ००५ ॥

तस्य मेघोपमं सैन्यमापतद्भीमदर्शनम् ।
दृष्ट्वैव सहसा दीर्णा रणे वानरपुङ्गवाः ॥ ००६ ॥

ततस्तान्सहसा दीर्णान्दृष्ट्वा वानरपुङ्गवान् ।
निर्याय कपिशार्दूलो हनूमान्पर्यवस्थितः ॥ ००७ ॥

तं दृष्ट्वावस्थितं संख्ये हरयः पवनात्मजम् ।
वेगेन महता राजन्संन्यवर्तन्त सर्वशः ॥ ००८ ॥

ततः शब्दो महानासीत्तुमुलो लोमहर्षणः ।
रामरावणसैन्यानामन्योन्यमभिधावताम् ॥ ००९ ॥

तस्मिन्प्रवृत्ते सङ्ग्रामे घोरे रुधिरकर्दमे ।
धूम्राक्षः कपिसैन्यं तद्द्रावयामास पत्रिभिः ॥ ०१० ॥

तं राक्षसमहामात्रमापतन्तं सपत्नजित् ।
तरसा प्रतिजग्राह हनूमान्पवनात्मजः ॥ ०११ ॥

तयोर्युद्धमभूद्घोरं हरिराक्षसवीरयोः ।
जिगीषतोर्युधान्योन्यमिन्द्रप्रह्लादयोरिव ॥ ०१२ ॥

गदाभिः परिघैश्चैव राक्षसो जघ्निवान्कपिम् ।
कपिश्च जघ्निवान्रक्षः सस्कन्धविटपैर्द्रुमैः ॥ ०१३ ॥

ततस्तमतिकायेन साश्वं सरथसारथिम् ।
धूम्राक्षमवधीद्धीमान्हनूमान्मारुतात्मजः ॥ ०१४ ॥

ततस्तं निहतं दृष्ट्वा धूम्राक्षं राक्षसोत्तमम् ।
हरयो जातविस्रम्भा जघ्नुरभ्येत्य सैनिकान् ॥ ०१५ ॥

ते वध्यमाना बलिभिर्हरिभिर्जितकाशिभिः ।
राक्षसा भग्नसङ्कल्पा लङ्कामभ्यपतन्भयात् ॥ ०१६ ॥

तेऽभिपत्य पुरं भग्ना हतशेषा निशाचराः ।
सर्वं राज्ञे यथावृत्तं रावणाय न्यवेदयन् ॥ ०१७ ॥

श्रुत्वा तु रावणस्तेभ्यः प्रहस्तं निहतं युधि ।
धूम्राक्षं च महेष्वासं ससैन्यं वानरर्षभैः ॥ ०१८ ॥

सुदीर्घमिव निःश्वस्य समुत्पत्य वरासनात् ।
उवाच कुम्भकर्णस्य कर्मकालोऽयमागतः ॥ ०१९ ॥

इत्येवमुक्त्वा विविधैर्वादित्रैः सुमहास्वनैः ।
शयानमतिनिद्रालुं कुम्भकर्णमबोधयत् ॥ ०२० ॥

प्रबोध्य महता चैनं यत्नेनागतसाध्वसः ।
स्वस्थमासीनमव्यग्रं विनिद्रं राक्षसाधिपः ॥ ०२१ ॥

ततोऽब्रवीद्दशग्रीवः कुम्भकर्णं महाबलम् ॥ ०२१ ॥

धन्योऽसि यस्य ते निद्रा कुम्भकर्णेयमीदृशी ।
य इमं दारुणं कालं न जानीषे महाभयम् ॥ ०२२ ॥

एष तीर्त्वार्णवं रामः सेतुना हरिभिः सह ।
अवमन्येह नः सर्वान्करोति कदनं महत्  ॥ ०२३  ॥

मया ह्यपहृता भार्या सीता नामास्य जानकी ।
तां मोक्षयिषुरायातो बद्ध्वा सेतुं महार्णवे  ॥ ०२४  ॥

तेन चैव प्रहस्तादिर्महान्नः स्वजनो हतः ।
तस्य नान्यो निहन्तास्ति त्वदृते शत्रुकर्शन  ॥ ०२५  ॥

स दंशितोऽभिनिर्याय त्वमद्य बलिनां वर ।
रामादीन्समरे सर्वाञ्जहि शत्रूनरिंदम  ॥ ०२६  ॥

दूषणावरजौ चैव वज्रवेगप्रमाथिनौ ।
तौ त्वां बलेन महता सहितावनुयास्यतः  ॥ ०२७  ॥

इत्युक्त्वा राक्षसपतिः कुम्भकर्णं तरस्विनम् ।
संदिदेशेतिकर्तव्ये वज्रवेगप्रमाथिनौ  ॥ ०२८  ॥

तथेत्युक्त्वा तु तौ वीरौ रावणं दूषणानुजौ ।
कुम्भकर्णं पुरस्कृत्य तूर्णं निर्ययतुः पुरात्  ॥ ०२९  ॥

---

# अध्याय २७१

मार्कण्डेय उवाच  ॥

ततो विनिर्याय पुरात्कुम्भकर्णः सहानुगः ।

अपश्यत्कपिसैन्यं तज्जितकाश्यग्रतः स्थितम्  ॥ ००१  ॥

तमभ्येत्याशु हरयः परिवार्य समन्ततः ।
अभ्यघ्नंश्च महाकायैर्बहुभिर्जगतीरुहैः  ॥ ००२  ॥

करजैरतुदंश्चान्ये विहाय भयमुत्तमम्  ॥ ००२  ॥

बहुधा युध्यमानास्ते युद्धमार्गैः प्लवङ्गमाः ।
नानाप्रहरणैर्भीमं राक्षसेन्द्रमताडयन्  ॥ ००३  ॥

स ताड्यमानः प्रहसन्भक्षयामास वानरान् ।
पनसं च गवाक्षं च वज्रबाहुं च वानरम्  ॥ ००४  ॥

तद्दृष्ट्वा व्यथनं कर्म कुम्भकर्णस्य रक्षसः ।
उदक्रोशन्परित्रस्तास्तारप्रभृतयस्तदा  ॥ ००५  ॥

तं तारमुच्चैः क्रोशन्तमन्यांश्च हरियूथपान् ।
अभिदुद्राव सुग्रीवः कुम्भकर्णमपेतभीः  ॥ ००६  ॥

ततोऽभिपत्य वेगेन कुम्भकर्णं महामनाः ।
शालेन जघ्निवान्मूर्ध्नि बलेन कपिकुञ्जरः  ॥ ००७  ॥

स महात्मा महावेगः कुम्भकर्णस्य मूर्धनि ।
बिभेद शालं सुग्रीवो न चैवाव्यथयत्कपिः  ॥ ००८  ॥

ततो विनद्य प्रहसञ्शालस्पर्शविबोधितः ।
दोर्भ्यामादाय सुग्रीवं कुम्भकर्णोऽहरद्बलात्  ॥ ००९  ॥

ह्रियमाणं तु सुग्रीवं कुम्भकर्णेन रक्षसा ।
अवेक्ष्याभ्यद्रवद्वीरः सौमित्रिर्मित्रनन्दनः  ॥ ०१०  ॥

सोऽभिपत्य महावेगं रुक्मपुङ्खं महाशरम् ।
प्राहिणोत्कुम्भकर्णाय लक्ष्मणः परवीरहा ॥ ०११ ॥

स तस्य देहावरणं भित्त्वा देहं च सायकः ।
जगाम दारयन्भूमिं रुधिरेण समुक्षितः ॥ ०१२ ॥

तथा स भिन्नहृदयः समुत्सृज्य कपीश्वरम् ।
कुम्भकर्णो महेष्वासः प्रगृहीतशिलायुधः ॥ ०१३ ॥

अभिदुद्राव सौमित्रिमुद्यम्य महतीं शिलाम् ॥ ०१३ ॥

तस्याभिद्रवतस्तूर्णं क्षुराभ्यामुच्छ्रितौ करौ ।
चिच्छेद निशिताग्राभ्यां स बभूव चतुर्भुजः ॥ ०१४ ॥

तानप्यस्य भुजान्सर्वान्प्रगृहीतशिलायुधान् ।
क्षुरैश्चिच्छेद लघ्वस्त्रं सौमित्रिः प्रतिदर्शयन् ॥ ०१५ ॥

स बभूवातिकायश्च बहुपादशिरोभुजः ।
तं ब्रह्मास्त्रेण सौमित्रिर्ददाहाद्रिचयोपमम् ॥ ०१६ ॥

स पपात महावीर्यो दिव्यास्त्राभिहतो रणे ।
महाशनिविनिर्दग्धः पादपोऽङ्कुरवानिव ॥ ०१७ ॥

तं दृष्ट्वा वृत्रसङ्काशं कुम्भकर्णं तरस्विनम् ।
गतासुं पतितं भूमौ राक्षसाः प्राद्रवन्भयात् ॥ ०१८ ॥

तथा तान्द्रवतो योधान्दृष्ट्वा तौ दूषणानुजौ ।
अवस्थाप्याथ सौमित्रिं सङ्क्रुद्धावभ्यधावताम् ॥ ०१९ ॥

तावाद्रवन्तौ सङ्क्रुद्धौ वज्रवेगप्रमाथिनौ ।
प्रतिजग्राह सौमित्रिर्विनद्योभौ पतत्रिभिः ॥ ०२० ॥

ततः सुतुमुलं युद्धमभवल्लोमहर्षणम् ।
दूषणानुजयोः पार्थ लक्ष्मणस्य च धीमतः ॥ ०२१ ॥

महता शरवर्षेण राक्षसौ सोऽभ्यवर्षत ।
तौ चापि वीरौ सङ्क्रुद्धावुभौ तौ समवर्षताम् ॥ ०२२ ॥

मुहूर्तमेवमभवद्वज्रवेगप्रमाथिनोः ।
सौमित्रेश्च महाबाहोः संप्रहारः सुदारुणः ॥ ०२३ ॥

अथाद्रिशृङ्गमादाय हनूमान्मारुतात्मजः ।
अभिद्रुत्याददे प्राणान्वज्रवेगस्य रक्षसः ॥ ०२४ ॥

नीलश्च महता ग्राव्णा दूषणावरजं हरिः ।
प्रमाथिनमभिद्रुत्य प्रममाथ महाबलः ॥ ०२५ ॥

ततः प्रावर्तत पुनः सङ्ग्रामः कटुकोदयः ।
रामरावणसैन्यानामन्योन्यमभिधावताम् ॥ ०२६ ॥

शतशो नैरृतान्वन्या जघ्नुर्वन्यांश्च नैरृताः ।
नैरृतास्तत्र वध्यन्ते प्रायशो न तु वानराः ॥ ०२७ ॥

---

# अध्याय २७२

मार्कण्डेय उवाच ॥

ततः श्रुत्वा हतं संख्ये कुम्भकर्णं सहानुगम् ।

प्रहस्तं च महेष्वासं धूम्राक्षं चातितेजसम्  ॥ ००१  ॥

पुत्रमिन्द्रजितं शूरं रावणः प्रत्यभाषत ।
जहि राममित्रघ्न सुग्रीवं च सलक्ष्मणम्  ॥ ००२  ॥

त्वया हि मम सत्पुत्र यशो दीप्तमुपार्जितम् ।
जित्वा वज्रधरं संख्ये सहस्राक्षं शचीपतिम्  ॥ ००३  ॥

अन्तर्हितः प्रकाशो वा दिव्यैर्दत्तवरैः शरैः ।
जहि शत्रूनमित्रघ्न मम शस्त्रभृतां वर  ॥ ००४  ॥

रामलक्ष्मणसुग्रीवाः शरस्पर्शं न तेऽनघ ।
समर्थाः प्रतिसंसोढुं कुतस्तदनुयायिनः  ॥ ००५  ॥

अकृता या प्रहस्तेन कुम्भकर्णेन चानघ ।
खरस्यापचितिः संख्ये तां गच्छस्व महाभुज  ॥ ००६  ॥

त्वमद्य निशितैर्बाणैर्हत्वा शत्रून्ससैनिकान् ।
प्रतिनन्दय मां पुत्र पुरा बद्ध्वेव वासवम्  ॥ ००७  ॥

इत्युक्तः स तथेत्युक्त्वा रथमास्थाय दंशितः ।
प्रययाविन्द्रजिद्राजंस्तूर्णमायोधनं प्रति  ॥ ००८  ॥

तत्र विश्राव्य विस्पष्टं नाम राक्षसपुङ्गवः ।
आह्वयामास समरे लक्ष्मणं शुभलक्षणम्  ॥ ००९  ॥

तं लक्ष्मणोऽप्यभ्यधावत्प्रगृह्य सशरं धनुः ।
त्रासयंस्तलघोषेण सिंहः क्षुद्रमृगं यथा  ॥ ०१०  ॥

तयोः समभवद्युद्धं सुमहज्जयगृद्धिनोः ।
दिव्यास्त्रविदुषोस्तीव्रमन्योन्यस्पर्धिनोस्तदा  ॥ ०११  ॥

रावणिस्तु यदा नैनं विशेषयति सायकैः ।
ततो गुरुतरं यत्नमातिष्ठद्बलिनां वरः ॥ ०१२ ॥

तत एनं महावेगैरर्दयामास तोमरैः ।
तानागतान्स चिच्छेद सौमित्रिर्निशितैः शरैः ॥ ०१३ ॥

ते निकृत्ताः शरैस्तीक्ष्णैर्न्यपतन्वसुधातले ॥ ०१३ ॥

तमङ्गदो वालिसुतः श्रीमानुद्यम्य पादपम् ।
अभिद्रुत्य महावेगस्ताडयामास मूर्धनि ॥ ०१४ ॥

तस्येन्द्रजिदसंभ्रान्तः प्रासेनोरसि वीर्यवान् ।
प्रहर्तुमैच्छत्तं चास्य प्रासं चिच्छेद लक्ष्मणः ॥ ०१५ ॥

तमभ्याशगतं वीरमङ्गदं रावणात्मजः ।
गदयाताडयत्सव्ये पार्श्वे वानरपुङ्गवम् ॥ ०१६ ॥

तमचिन्त्य प्रहारं स बलवान्वालिनः सुतः ।
ससर्जेन्द्रजितः क्रोधाच्छालस्कन्धममित्रजित् ॥ ०१७ ॥

सोऽङ्गदेन रुषोत्सृष्टो वधायेन्द्रजितस्तरुः ।
जघानेन्द्रजितः पार्थ रथं साश्वं ससारथिम् ॥ ०१८ ॥

ततो हताश्वात्प्रस्कन्द्य रथात्स हतसारथिः ।
तत्रैवान्तर्दधे राजन्मायया रावणात्मजः ॥ ०१९ ॥

अन्तर्हितं विदित्वा तं बहुमायं च राक्षसम् ।
रामस्तं देशमागम्य तत्सैन्यं पर्यरक्षत ॥ ०२० ॥

स राममुद्दिश्य शरैस्ततो दत्तवरैस्तदा ।

विव्याध सर्वगात्रेषु लक्ष्मणं च महारथम्  ॥ ०२१  ॥

तमदृश्यं शरैः शूरौ माययान्तर्हितं तदा ।
योधयामासतुरुभौ रावणिं रामलक्ष्मणौ  ॥ ०२२  ॥

स रुषा सर्वगात्रेषु तयोः पुरुषसिंहयोः ।
व्यसृजत्सायकान्भूयः शतशोऽथ सहस्रशः  ॥ ०२३  ॥

तमदृश्यं विचिन्वन्तः सृजन्तमनिशं शरान् ।
हरयो विविशुर्व्योम प्रगृह्य महतीः शिलाः  ॥ ०२४  ॥

तांश्च तौ चाप्यदृश्यः स शरैर्विव्याध राक्षसः ।
स भृशं ताडयन्वीरो रावणिर्माययावृतः  ॥ ०२५  ॥

तौ शरैराचितौ वीरौ भ्रातरौ रामलक्ष्मणौ ।
पेततुर्गगनाद्भूमिं सूर्याचन्द्रमसाविव  ॥ ०२६  ॥

---

# अध्याय २७३

मार्कण्डेय उवाच  ॥

तावुभौ पतितौ दृष्ट्वा भ्रातरावमितौजसौ ।
बबन्ध रावणिर्भूयः शरैर्दत्तवरैस्तदा  ॥ ००१  ॥

तौ वीरौ शरजालेन बद्धाविन्द्रजिता रणे ।
रेजतुः पुरुषव्याघ्रौ शकुन्ताविव पञ्जरे  ॥ ००२  ॥

तौ दृष्ट्वा पतितौ भूमौ शतशः सायकैश्चितौ ।

सुग्रीवः कपिभिः सार्धं परिवार्य ततः स्थितः ॥ ००३ ॥

सुषेणमैन्दद्विविदैः कुमुदेनाङ्गदेन च ।
हनूमन्नीलतारैश्च नलेन च कपीश्वरः ॥ ००४ ॥

ततस्तं देशमागम्य कृतकर्मा विभीषणः ।
बोधयामास तौ वीरौ प्रज्ञास्त्रेण प्रबोधितौ ॥ ००५ ॥

विशल्यौ चापि सुग्रीवः क्षणेनोभौ चकार तौ ।
विशल्यया महौषध्या दिव्यमन्त्रप्रयुक्तया ॥ ००६ ॥

तौ लब्धसञ्ज्ञौ नृवरौ विशल्यावुदतिष्ठताम् ।
गततन्द्रीक्लमौ चास्तां क्षणेनोभौ महारथौ ॥ ००७ ॥

ततो विभीषणः पार्थ राममिक्ष्वाकुनन्दनम् ।
उवाच विज्वरं दृष्ट्वा कृताञ्जलिरिदं वचः ॥ ००८ ॥

अयमम्भो गृहीत्वा तु राजराजस्य शासनात् ।
गुह्यकोऽभ्यागतः श्वेतात्त्वत्सकाशमरिंदम ॥ ००९ ॥

इदमम्भः कुबेरस्ते महाराजः प्रयच्छति ।
अन्तर्हितानां भूतानां दर्शनार्थं परंतप ॥ ०१० ॥

अनेन स्पृष्टनयनो भूतान्यन्तर्हितान्युत ।
भवान्द्रक्ष्यति यस्मै च भवानेतत्प्रदास्यति ॥ ०११ ॥

तथेति रामस्तद्वारि प्रतिगृह्याथ सत्कृतम् ।
चकार नेत्रयोः शौचं लक्ष्मणश्च महामनाः ॥ ०१२ ॥

सुग्रीवजाम्बवन्तौ च हनूमानङ्गदस्तथा ।
मैन्दद्विविदनीलाश्च प्रायः प्लवगसत्तमाः ॥ ०१३ ॥

तथा समभवच्चापि यदुवाच विभीषणः ।
क्षणेनातीन्द्रियाण्येषां चक्षूंष्यासन्युधिष्ठिर ॥ ०१४ ॥

इन्द्रजित्कृतकर्मा तु पित्रे कर्म तदात्मनः ।
निवेद्य पुनरागच्छत्त्वरयाजिशिरः प्रति ॥ ०१५ ॥

तमापतन्तं सङ्क्रुद्धं पुनरेव युयुत्सया ।
अभिदुद्राव सौमित्रिर्विभीषणमते स्थितः ॥ ०१६ ॥

अकृताह्निकमेवैनं जिघांसुर्जितकाशिनम् ।
शरैर्जघान सङ्क्रुद्धः कृतसञ्ज्ञोऽथ लक्ष्मणः ॥ ०१७ ॥

तयोः समभवद्युद्धं तदान्योन्यं जिगीषतोः ।
अतीव चित्रमाश्चर्यं शक्रप्रह्लादयोरिव ॥ ०१८ ॥

अविध्यदिन्द्रजित्तीक्ष्णैः सौमित्रिं मर्मभेदिभिः ।
सौमित्रिश्चानलस्पर्शैरविध्यद्रावणिं शरैः ॥ ०१९ ॥

सौमित्रिशरसंस्पर्शाद्रावणिः क्रोधमूर्छितः ।
असृजल्लक्ष्मणायाष्टौ शरानाशीविषोपमान् ॥ ०२० ॥

तस्यासून्पावकस्पर्शैः सौमित्रिः पत्रिभिस्त्रिभिः ।
यथा निरहरद्वीरस्तन्मे निगदतः शृणु ॥ ०२१ ॥

एकेनास्य धनुष्मन्तं बाहुं देहादपातयत् ।
द्वितीयेन सनाराचं भुजं भूमौ न्यपातयत् ॥ ०२२ ॥

तृतीयेन तु बाणेन पृथुधारेण भास्वता ।
जहार सुनसं चारु शिरो भ्राजिष्णुकुण्डलम् ॥ ०२३ ॥

विनिकृत्तभुजस्कन्धं कबन्धं भीमदर्शनम् ।
तं हत्वा सूतमप्यस्त्रैर्जघान बलिनां वरः ॥ ०२४ ॥

लङ्कां प्रवेशयामासुर्वाजिनस्तं रथं तदा ।
ददर्श रावणस्तं च रथं पुत्रविनाकृतम् ॥ ०२५ ॥

स पुत्रं निहतं दृष्ट्वा त्रासात्संभ्रान्तलोचनः ।
रावणः शोकमोहार्तो वैदेहीं हन्तुमुद्यतः ॥ ०२६ ॥

अशोकवनिकास्थां तां रामदर्शनलालसाम् ।
खड्गमादाय दुष्टात्मा जवेनाभिपपात ह ॥ ०२७ ॥

तं दृष्ट्वा तस्य दुर्बुद्धेरविन्ध्यः पापनिश्चयम् ।
शमयामास सङ्क्रुद्धं श्रूयतां येन हेतुना ॥ ०२८ ॥

महाराज्ये स्थितो दीप्ते न स्त्रियं हन्तुमर्हसि ।
हतैवैषा यदा स्त्री च बन्धनस्था च ते गृहे ॥ ०२९ ॥

न चैषा देहभेदेन हता स्यादिति मे मतिः ।
जहि भर्तारमेवास्या हते तस्मिन्हता भवेत् ॥ ०३० ॥

न हि ते विक्रमे तुल्यः साक्षादपि शतक्रतुः ।
असकृद्धि त्वया सेन्द्रास्त्रासितास्त्रिदशा युधि ॥ ०३१ ॥

एवं बहुविधैर्वाक्यैरविन्ध्यो रावणं तदा ।
क्रुद्धं संशमयामास जगृहे च स तद्वचः ॥ ०३२ ॥

निर्याणे स मतिं कृत्वा निधायासिं क्षपाचरः ।
आज्ञापयामास तदा रथो मे कल्प्यतामिति ॥ ०३३ ॥

# अध्याय २७४

मार्कण्डेय उवाच ॥

ततः क्रुद्धो दशग्रीवः प्रिये पुत्रे निपातिते ।
निर्ययौ रथमास्थाय हेमरत्नविभूषितम् ॥ ००१ ॥

संवृतो राक्षसैर्घोरैर्विविधायुधपाणिभिः ।
अभिदुद्राव रामं स पोथयन्हरियूथपान् ॥ ००२ ॥

तमाद्रवन्तं सङ्क्रुद्धं मैन्दनीलनलाङ्गदाः ।
हनूमाञ्जाम्बवांश्चैव ससैन्याः पर्यवारयन् ॥ ००३ ॥

ते दशग्रीवसैन्यं तदृक्षवानरयूथपाः ।
द्रुमैर्विध्वंसयां चक्रुर्दशग्रीवस्य पश्यतः ॥ ००४ ॥

ततः स्वसैन्यमालोक्य वध्यमानमरातिभिः ।
मायावी व्यदधान्मायां रावणो राक्षसेश्वरः ॥ ००५ ॥

तस्य देहाद्विनिष्क्रान्ताः शतशोऽथ सहस्रशः ।
राक्षसाः प्रत्यदृश्यन्त शरशक्त्यृष्टिपाणयः ॥ ००६ ॥

तान्रामो जघ्निवान्सर्वान्दिव्येनास्त्रेण राक्षसान् ।
अथ भूयोऽपि मायां स व्यदधाद्राक्षसाधिपः ॥ ००७ ॥

कृत्वा रामस्य रूपाणि लक्ष्मणस्य च भारत ।
अभिदुद्राव रामं च लक्ष्मणं च दशाननः ॥ ००८ ॥

ततस्ते राममर्छन्तो लक्ष्मणं च क्षपाचराः ।

अभिपेतुस्तदा राजन्प्रगृहीतोच्चकार्मुकाः ॥ ००९ ॥

तां दृष्ट्वा राक्षसेन्द्रस्य मायामिक्ष्वाकुनन्दनः ।
उवाच रामं सौमित्रिरसंभ्रान्तो बृहद्वचः ॥ ०१० ॥

जहीमान्राक्षसान्पापानात्मनः प्रतिरूपकान् ।
जघान रामस्तांश्चान्यानात्मनः प्रतिरूपकान् ॥ ०११ ॥

ततो हर्यश्वयुक्तेन रथेनादित्यवर्चसा ।
उपतस्थे रणे रामं मातलिः शक्रसारथिः ॥ ०१२ ॥

मातलिरुवाच ॥

अयं हर्यश्वयुग्जैत्रो मघोनः स्यन्दनोत्तमः ।
अनेन शक्रः काकुत्स्थ समरे दैत्यदानवान् ॥ ०१३ ॥

शतशः पुरुषव्याघ्र रथोदारेण जघ्निवान् ॥ ०१३ ॥

तदनेन नरव्याघ्र मया यत्तेन संयुगे ।
स्यन्दनेन जहि क्षिप्रं रावणं मा चिरं कृथाः ॥ ०१४ ॥

इत्युक्तो राघवस्तथ्यं वचोऽशङ्कत मातलेः ।
मायेयं राक्षसस्येति तमुवाच विभीषणः ॥ ०१५ ॥

नेयं माया नरव्याघ्र रावणस्य दुरात्मनः ।
तदातिष्ठ रथं शीघ्रमिममैन्द्रं महाद्युते ॥ ०१६ ॥

ततः प्रहृष्टः काकुत्स्थस्तथेत्युक्त्वा विभीषणम् ।
रथेनाभिपपाताशु दशग्रीवं रुषान्वितः ॥ ०१७ ॥

हाहाकृतानि भूतानि रावणे समभिद्रुते ।

सिंहनादाः सपटहा दिवि दिव्याश्च नानदन्  ॥ ०१८  ॥

स रामाय महाघोरं विससर्ज निशाचरः ।
शूलमिन्द्राशनिप्रख्यं ब्रह्मदण्डमिवोद्यतम्  ॥ ०१९  ॥

तच्छूलमन्तरा रामश्चिच्छेद निशितैः शरैः ।
तद्दृष्ट्वा दुष्करं कर्म रावणं भयमाविशत्  ॥ ०२०  ॥

ततः क्रुद्धः ससर्जाशु दशग्रीवः शिताञ्शरान् ।
सहस्रायुतशो रामे शस्त्राणि विविधानि च  ॥ ०२१  ॥

ततो भुशुण्डीः शूलांश्च मुसलानि परश्वधान् ।
शक्तीश्च विविधाकाराः शतघ्नीश्च शितक्षुराः  ॥ ०२२  ॥

तां मायां विकृतां दृष्ट्वा दशग्रीवस्य रक्षसः ।
भयात्प्रदुद्रुवुः सर्वे वानराः सर्वतोदिशम्  ॥ ०२३  ॥

ततः सुपत्रं सुमुखं हेमपुङ्खं शरोत्तमम् ।
तूणादादाय काकुत्स्थो ब्रह्मास्त्रेण युयोज ह  ॥ ०२४  ॥

तं बाणवर्यं रामेण ब्रह्मास्त्रेणाभिमन्त्रितम् ।
जहृषुर्देवगन्धर्वा दृष्ट्वा शक्रपुरोगमाः  ॥ ०२५  ॥

अल्पावशेषमायुश्च ततोऽमन्यन्त रक्षसः ।
ब्रह्मास्त्रोदीरणाच्छत्रोर्देवगन्धर्वकिंनराः  ॥ ०२६  ॥

ततः ससर्ज तं रामः शरमप्रतिमौजसम् ।
रावणान्तकरं घोरं ब्रह्मदण्डमिवोद्यतम्  ॥ ०२७  ॥

स तेन राक्षसश्रेष्ठः सरथः साश्वसारथिः ।
प्रजज्वाल महाज्वालेनाग्निनाभिपरिष्कृतः  ॥ ०२८  ॥

ततः प्रहृष्टास्त्रिदशाः सगन्धर्वाः सचारणाः ।
निहतं रावणं दृष्ट्वा रामेणाक्लिष्टकर्मणा ॥ ०२९ ॥

तत्यजुस्तं महाभागं पञ्च भूतानि रावणम् ।
भ्रंशितः सर्वलोकेषु स हि ब्रह्मास्त्रतेजसा ॥ ०३० ॥

शरीरधातवो ह्यस्य मांसं रुधिरमेव च ।
नेशुर्ब्रह्मास्त्रनिर्दग्धा न च भस्माप्यदृश्यत ॥ ०३१ ॥

---

# अध्याय २७५

मार्कण्डेय उवाच ॥

स हत्वा रावणं क्षुद्रं राक्षसेन्द्रं सुरद्विषम् ।
बभूव हृष्टः ससुहृद्रामः सौमित्रिणा सह ॥ ००१ ॥

ततो हते दशग्रीवे देवाः सर्षिपुरोगमाः ।
आशीर्भिर्जययुक्ताभिरानर्चुस्तं महाभुजम् ॥ ००२ ॥

रामं कमलपत्राक्षं तुष्टुवुः सर्वदेवताः ।
गन्धर्वाः पुष्पवर्षैश्च वाग्भिश्च त्रिदशालयाः ॥ ००३ ॥

पूजयित्वा यथा रामं प्रतिजग्मुर्यथागतम् ।
तन्महोत्सवसङ्काशमासीदाकाशमच्युत ॥ ००४ ॥

ततो हत्वा दशग्रीवं लङ्कां रामो महायशाः ।

विभीषणाय प्रददौ प्रभुः परपुरञ्जयः ॥ ००५ ॥

ततः सीतां पुरस्कृत्य विभीषणपुरस्कृताम् ।
अविन्ध्यो नाम सुप्रज्ञो वृद्धामात्यो विनिर्ययौ ॥ ००६ ॥

उवाच च महात्मानं काकुत्स्थं दैन्यमास्थितम् ।
प्रतीच्छ देवीं सद्वृत्तां महात्मञ्जानकीमिति ॥ ००७ ॥

एतच्छ्रुत्वा वचस्तस्मादवतीर्य रथोत्तमात् ।
बाष्पेणापिहितां सीतां ददर्शेक्ष्वाकुनन्दनः ॥ ००८ ॥

तां दृष्ट्वा चारुसर्वाङ्गीं यानस्थां शोककर्शिताम् ।
मलोपचितसर्वाङ्गीं जटिलां कृष्णवाससम् ॥ ००९ ॥

उवाच रामो वैदेहीं परामर्शविशङ्कितः ।
गच्छ वैदेहि मुक्ता त्वं यत्कार्यं तन्मया कृतम् ॥ ०१० ॥

मामासाद्य पतिं भद्रे न त्वं राक्षसवेश्मनि ।
जरां व्रजेथा इति मे निहतोऽसौ निशाचरः ॥ ०११ ॥

कथं ह्यस्मद्विधो जातु जानन्धर्मविनिश्चयम् ।
परहस्तगतां नारीं मुहूर्तमपि धारयेत् ॥ ०१२ ॥

सुवृत्तामसुवृत्तां वाप्यहं त्वामद्य मैथिलि ।
नोत्सहे परिभोगाय श्वावलीढं हविर्यथा ॥ ०१३ ॥

ततः सा सहसा बाला तच्छ्रुत्वा दारुणं वचः ।
पपात देवी व्यथिता निकृत्ता कदली यथा ॥ ०१४ ॥

यो ह्यस्या हर्षसंभूतो मुखरागस्तदाभवत् ।
क्षणेन स पुनर्भ्रष्टो निःश्वासादिव दर्पणे ॥ ०१५ ॥

ततस्ते हरयः सर्वे तच्छ्रुत्वा रामभाषितम् ।
गतासुकल्पा निश्चेष्टा बभूवुः सहलक्ष्मणाः ॥ ०१६ ॥

ततो देवो विशुद्धात्मा विमानेन चतुर्मुखः ।
पितामहो जगत्स्रष्टा दर्शयामास राघवम् ॥ ०१७ ॥

शक्रश्चाग्निश्च वायुश्च यमो वरुण एव च ।
यक्षाधिपश्च भगवांस्तथा सप्तर्षयोऽमलाः ॥ ०१८ ॥

राजा दशरथश्चैव दिव्यभास्वरमूर्तिमान् ।
विमानेन महार्हेण हंसयुक्तेन भास्वता ॥ ०१९ ॥

ततोऽन्तरिक्षं तत्सर्वं देवगन्धर्वसङ्कुलम् ।
शुशुभे तारकाचित्रं शरदीव नभस्तलम् ॥ ०२० ॥

तत उत्थाय वैदेहि तेषां मध्ये यशस्विनी ।
उवाच वाक्यं कल्याणी रामं पृथुलवक्षसम् ॥ ०२१ ॥

राजपुत्र न ते कोपं करोमि विदिता हि मे ।
गतिः स्त्रीणां नराणां च शृणु चेदं वचो मम ॥ ०२२ ॥

अन्तश्चरति भूतानां मातरिश्वा सदागतिः ।
स मे विमुञ्चतु प्राणान्यदि पापं चराम्यहम् ॥ ०२३ ॥

अग्निरापस्तथाकाशं पृथिवी वायुरेव च ।
विमुञ्चन्तु मम प्राणान्यदि पापं चराम्यहम् ॥ ०२४ ॥

ततोऽन्तरिक्षे वागासीत्सर्वा विश्रावयन्दिशः ।
पुण्या संहर्षणी तेषां वानराणां महात्मनाम् ॥ ०२५ ॥

वायुरुवाच ॥

भो भो राघव सत्यं वै वायुरस्मि सदागतिः ।
अपापा मैथिली राजन्सङ्गच्छ सह भार्यया ॥ ०२६ ॥

अग्निरुवाच ॥

अहमन्तःशरीरस्थो भूतानां रघुनन्दन ।
सुसूक्ष्ममपि काकुत्स्थ मैथिली नापराध्यति ॥ ०२७ ॥

वरुण उवाच ॥

रसा वै मत्प्रसूता हि भूतदेहेषु राघव ।
अहं वै त्वां प्रब्रवीमि मैथिली प्रतिगृह्यताम् ॥ ०२८ ॥

ब्रह्मोवाच ॥

पुत्र नैतदिहाश्चर्यं त्वयि राजर्षिधर्मिणि ।
साधो सद्वृत्तमार्गस्थे शृणु चेदं वचो मम ॥ ०२९ ॥

शत्रुरेष त्वया वीर देवगन्धर्वभोगिनाम् ।
यक्षाणां दानवानां च महर्षीणां च पातितः ॥ ०३० ॥

अवध्यः सर्वभूतानां मत्प्रसादात्पुराभवत् ।
कस्माच्चित्कारणात्पापः कञ्चित्कालमुपेक्षितः ॥ ०३१ ॥

वधार्थमात्मनस्तेन हृता सीता दुरात्मना ।
नलकूबरशापेन रक्षा चास्याः कृता मया ॥ ०३२ ॥

यदि ह्यकामामासेवेत्स्त्रियमन्यामपि ध्रुवम् ।
शतधास्य फलेद्देह इत्युक्तः सोऽभवत्पुरा ॥ ०३३ ॥

नात्र शङ्का त्वया कार्या प्रतीच्छेमां महाद्युते ।
कृतं त्वया महत्कार्यं देवानाममरप्रभ ॥ ०३४ ॥

दशरथ उवाच ॥

प्रीतोऽस्मि वत्स भद्रं ते पिता दशरथोऽस्मि ते ।
अनुजानामि राज्यं च प्रशाधि पुरुषोत्तम ॥ ०३५ ॥

राम उवाच ॥

अभिवादये त्वां राजेन्द्र यदि त्वं जनको मम ।
गमिष्यामि पुरीं रम्यामयोध्यां शासनात्तव ॥ ०३६ ॥

मार्कण्डेय उवाच ॥

तमुवाच पिता भूयः प्रहृष्टो मनुजाधिप ।
गच्छायोध्यां प्रशाधि त्वं राम रक्तान्तलोचन ॥ ०३७ ॥

ततो देवान्नमस्कृत्य सुहृद्भिरभिनन्दितः ।
महेन्द्र इव पौलोम्या भार्यया स समेयिवान् ॥ ०३८ ॥

ततो वरं ददौ तस्मै अविन्ध्याय परंतपः ।
त्रिजटां चार्थमानाभ्यां योजयामास राक्षसीम् ॥ ०३९ ॥

तमुवाच ततो ब्रह्मा देवैः शक्रमुखैर्वृतः ।
कौसल्यामातरिष्टांस्ते वरानद्य ददानि कान् ॥ ०४० ॥

वव्रे रामः स्थितिं धर्मे शत्रुभिश्चापराजयम् ।
राक्षसैर्निहतानां च वानराणां समुद्भवम् ॥ ०४१ ॥

ततस्ते ब्रह्मणा प्रोक्ते तथेति वचने तदा ।
समुत्तस्थुर्महाराज वानरा लब्धचेतसः ॥ ०४२ ॥

सीता चापि महाभागा वरं हनुमते ददौ ।
रामकीर्त्या समं पुत्र जीवितं ते भविष्यति ॥ ०४३ ॥

दिव्यास्त्वामुपभोगाश्च मत्प्रसादकृताः सदा ।
उपस्थास्यन्ति हनुमन्निति स्म हरिलोचन ॥ ०४४ ॥

ततस्ते प्रेक्षमाणानां तेषामक्लिष्टकर्मणाम् ।
अन्तर्धानं ययुर्देवाः सर्वे शक्रपुरोगमाः ॥ ०४५ ॥

दृष्ट्वा तु रामं जानक्या समेतं शक्रसारथिः ।
उवाच परमप्रीतः सुहृन्मध्य इदं वचः ॥ ०४६ ॥

देवगन्धर्वयक्षाणां मानुषासुरभोगिनाम् ।
अपनीतं त्वया दुःखमिदं सत्यपराक्रम ॥ ०४७ ॥

सदेवासुरगन्धर्वा यक्षराक्षसपन्नगाः ।
कथयिष्यन्ति लोकास्त्वां यावद्भूमिर्धरिष्यति ॥ ०४८ ॥

इत्येवमुक्त्वानुज्ञाप्य रामं शस्त्रभृतां वरम् ।
संपूज्यापाक्रमत्तेन रथेनादित्यवर्चसा ॥ ०४९ ॥

ततः सीतां पुरस्कृत्य रामः सौमित्रिणा सह ।
सुग्रीवप्रमुखैश्चैव सहितः सर्ववानरैः ॥ ०५० ॥

विधाय रक्षां लङ्कायां विभीषणपुरस्कृतः ।
संततार पुनस्तेन सेतुना मकरालयम् ॥ ०५१ ॥

पुष्पकेण विमानेन खेचरेण विराजता ।

कामगेन यथा मुख्यैरमात्यैः संवृतो वशी ॥ ०५२ ॥

ततस्तीरे समुद्रस्य यत्र शिश्ये स पार्थिवः ।
तत्रैवोवास धर्मात्मा सहितः सर्ववानरैः ॥ ०५३ ॥

अथैनान्राघवः काले समानीयाभिपूज्य च ।
विसर्जयामास तदा रत्नैः संतोष्य सर्वशः ॥ ०५४ ॥

गतेषु वानरेन्द्रेषु गोपुच्छर्क्षेषु तेषु च ।
सुग्रीवसहितो रामः किष्किन्धां पुनरागमत् ॥ ०५५ ॥

विभीषणेनानुगतः सुग्रीवसहितस्तदा ।
पुष्पकेण विमानेन वैदेह्या दर्शयन्वनम् ॥ ०५६ ॥

किष्किन्धां तु समासाद्य रामः प्रहरतां वरः ।
अङ्गदं कृतकर्माणं यौवराज्येऽभ्यषेचयत् ॥ ०५७ ॥

ततस्तैरेव सहितो रामः सौमित्रिणा सह ।
यथागतेन मार्गेण प्रययौ स्वपुरं प्रति ॥ ०५८ ॥

अयोध्यां स समासाद्य पुरीं राष्ट्रपतिस्ततः ।
भरताय हनूमन्तं दूतं प्रस्थापयत्तदा ॥ ०५९ ॥

लक्षयित्वेङ्गितं सर्वं प्रियं तस्मै निवेद्य च ।
वायुपुत्रे पुनः प्राप्ते नन्दिग्राममुपागमत् ॥ ०६० ॥

स तत्र मलदिग्धाङ्गं भरतं चीरवाससम् ।
अग्रतः पादुके कृत्वा ददर्शासीनमासने ॥ ०६१ ॥

समेत्य भरतेनाथ शत्रुघ्नेन च वीर्यवान् ।
राघवः सहसौमित्रिर्मुमुदे भरतर्षभ ॥ ०६२ ॥

तथा भरतशत्रुघ्नौ समेतौ गुरुणा तदा ।
वैदेह्या दर्शनेनोभौ प्रहर्षं समवापतुः ॥ ०६३ ॥

तस्मै तद्भरतो राज्यमागतायाभिसत्कृतम् ।
न्यासं निर्यातयामास युक्तः परमया मुदा ॥ ०६४ ॥

ततस्तं वैष्णवे शूरं नक्षत्रेऽभिमतेऽहनि ।
वसिष्ठो वामदेवश्च सहितावभ्यषिञ्चताम् ॥ ०६५ ॥

सोऽभिषिक्तः कपिश्रेष्ठं सुग्रीवं ससुहृज्जनम् ।
विभीषणं च पौलस्त्यमन्वजानाद्गृहान्प्रति ॥ ०६६ ॥

अभ्यर्च्य विविधै रत्नैः प्रीतियुक्तौ मुदा युतौ ।
समाधायेतिकर्तव्यं दुःखेन विससर्ज ह ॥ ०६७ ॥

पुष्पकं च विमानं तत्पूजयित्वा स राघवः ।
प्रादाद्वैश्रवणायैव प्रीत्या स रघुनन्दनः ॥ ०६८ ॥

ततो देवर्षिसहितः सरितं गोमतीमनु ।
दशाश्वमेधानाजह्रे जारूथ्यान्स निरर्गलान् ॥ ०६९ ॥

---

# अध्याय २७६

मार्कण्डेय उवाच ॥

एवमेतन्महाबाहो रामेणामिततेजसा ।

प्राप्तं व्यसनमत्युग्रं वनवासकृतं पुरा ॥ ००१ ॥

मा शुचः पुरुषव्याघ्र क्षत्रियोऽसि परंतप ।
बाहुवीर्याश्रये मार्गे वर्तसे दीप्तनिर्णये ॥ ००२ ॥

न हि ते वृजिनं किञ्चिद्दृश्यते परमण्वपि ।
अस्मिन्मार्गे विषीदेयुः सेन्द्रा अपि सुरासुराः ॥ ००३ ॥

संहत्य निहतो वृत्रो मरुद्भिर्वज्रपाणिना ।
नमुचिश्चैव दुर्धर्षो दीर्घजिह्वा च राक्षसी ॥ ००४ ॥

सहायवति सर्वार्थाः संतिष्ठन्तीह सर्वशः ।
किं नु तस्याजितं संख्ये भ्राता यस्य धनञ्जयः ॥ ००५ ॥

अयं च बलिनां श्रेष्ठो भीमो भीमपराक्रमः ।
युवानौ च महेष्वासौ यमौ माद्रवतीसुतौ ॥ ००६ ॥

एभिः सहायैः कस्मात्त्वं विषीदसि परंतप ॥ ००६ ॥

य इमे वज्रिणः सेनां जयेयुः समरुद्गणाम् ।
त्वमप्येभिर्महेष्वासैः सहायैर्देवरूपिभिः ॥ ००७ ॥

विजेष्यसि रणे सर्वानमित्रान्भरतर्षभ ॥ ००७ ॥

इतश्च त्वमिमां पश्य सैन्धवेन दुरात्मना ।
बलिना वीर्यमत्तेन हृतामेभिर्महात्मभिः ॥ ००८ ॥

आनीतां द्रौपदीं कृष्णां कृत्वा कर्म सुदुष्करम् ।
जयद्रथं च राजानं विजितं वशमागतम् ॥ ००९ ॥

असहायेन रामेण वैदेही पुनराहृता ।

हत्वा संख्ये दशग्रीवं राक्षसं भीमविक्रमम् ॥ ०१० ॥

यस्य शाखामृगा मित्रा ऋक्षाः कालमुखास्तथा ।
जात्यन्तरगता राजन्नेतद्बुद्ध्यानुचिन्तय ॥ ०११ ॥

तस्मात्त्वं कुरुशार्दूल मा शुचो भरतर्षभ ।
त्वद्विधा हि महात्मानो न शोचन्ति परंतप ॥ ०१२ ॥

वैशंपायन उवाच ॥

एवमाश्वासितो राजा मार्कण्डेयेन धीमता ।
त्यक्त्वा दुःखमदीनात्मा पुनरेवेदमब्रवीत् ॥ ०१३ ॥

---

# सावित्र्युपाख्यानम्

## अध्याय २७७

युधिष्ठिर उवाच ॥

नात्मानमनुशोचामि नेमान्भ्रातॄन्महामुने ।
हरणं चापि राज्यस्य यथेमां द्रुपदात्मजाम् ॥ ००१ ॥

द्यूते दुरात्मभिः क्लिष्टाः कृष्णया तारिता वयम् ।
जयद्रथेन च पुनर्वनादपहृता बलात् ॥ ००२ ॥

अस्ति सीमन्तिनी काचिद्दृष्टपूर्वाथ वा श्रुता ।
पतिव्रता महाभागा यथेयं द्रुपदात्मजा ॥ ००३ ॥

मार्कण्डेय उवाच ॥

श्रृणु राजन्कुलस्त्रीणां महाभाग्यं युधिष्ठिर ।
सर्वमेतद्यथा प्राप्तं सावित्र्या राजकन्यया ॥ ००४ ॥

आसीन्मद्रेषु धर्मात्मा राजा परमधार्मिकः ।
ब्रह्मण्यश्च शरण्यश्च सत्यसंधो जितेन्द्रियः ॥ ००५ ॥

यज्वा दानपतिर्दक्षः पौरजानपदप्रियः ।
पार्थिवोऽश्वपतिर्नाम सर्वभूतहिते रतः ॥ ००६ ॥

क्षमावाननपत्यश्च सत्यवाग्विजितेन्द्रियः ।
अतिक्रान्तेन वयसा संतापमुपजग्मिवान् ॥ ००७ ॥

अपत्योत्पादनार्थं स तीव्रं नियममास्थितः ।
काले परिमिताहारो ब्रह्मचारी जितेन्द्रियः ॥ ००८ ॥

हुत्वा शतसहस्रं स सावित्र्या राजसत्तम ।
षष्ठे षष्ठे तदा काले बभूव मितभोजनः ॥ ००९ ॥

एतेन नियमेनासीद्वर्षाण्यष्टादशैव तु ।
पूर्णे त्वष्टादशे वर्षे सावित्री तुष्टिमभ्यगात् ॥ ०१० ॥

स्वरूपिणी तदा राजन्दर्शयामास तं नृपम् ॥ ०१० ॥

अग्निहोत्रात्समुत्थाय हर्षेण महतान्विता ।
उवाच चैनं वरदा वचनं पार्थिवं तदा ॥ ०११ ॥

ब्रह्मचर्येण शुद्धेन दमेन नियमेन च ।
सर्वात्मना च मद्भक्त्या तुष्टास्मि तव पार्थिव ॥ ०१२ ॥

वरं वृणीष्वाश्वपते मद्रराज यथेप्सितम् ।
न प्रमादश्च धर्मेषु कर्तव्यस्ते कथञ्चन ॥ ०१३ ॥

अश्वपतिरुवाच ॥

अपत्यार्थः समारम्भः कृतो धर्मेप्सया मया ।
पुत्रा मे बहवो देवि भवेयुः कुलभावनाः ॥ ०१४ ॥

तुष्टासि यदि मे देवि काममेतं वृणोम्यहम् ।
संतानं हि परो धर्म इत्याहुर्मां द्विजातयः ॥ ०१५ ॥

सावित्र्युवाच ॥

पूर्वमेव मया राजन्नभिप्रायमिमं तव ।
ज्ञात्वा पुत्रार्थमुक्तो वै तव हेतोः पितामहः ॥ ०१६ ॥

प्रसादाच्चैव तस्मात्ते स्वयंभुविहिताद्भुवि ।
कन्या तेजस्विनी सौम्य क्षिप्रमेव भविष्यति ॥ ०१७ ॥

उत्तरं च न ते किञ्चिद्व्याहर्तव्यं कथञ्चन ।
पितामहनिसर्गेण तुष्टा ह्येतद्ब्रवीमि ते ॥ ०१८ ॥

मार्कण्डेय उवाच ॥

स तथेति प्रतिज्ञाय सावित्र्या वचनं नृपः ।
प्रसादयामास पुनः क्षिप्रमेवं भवेदिति ॥ ०१९ ॥

अन्तर्हितायां सावित्र्यां जगाम स्वगृहं नृपः ।
स्वराज्ये चावसत्प्रीतः प्रजा धर्मेण पालयन् ॥ ०२० ॥

कस्मिंश्चित्तु गते काले स राजा नियतव्रतः ।
ज्येष्ठायां धर्मचारिण्यां महिष्यां गर्भमादधे ॥ ०२१ ॥

राजपुत्र्यां तु गर्भः स मालव्यां भरतर्षभ ।
व्यवर्धत यथा शुक्ले तारापतिरिवाम्बरे ॥ ०२२ ॥

प्राप्ते काले तु सुषुवे कन्यां राजीवलोचनाम् ।
क्रियाश्च तस्या मुदितश्चक्रे स नृपतिस्तदा ॥ ०२३ ॥

सावित्र्या प्रीतया दत्ता सावित्र्या हुतया ह्यपि ।
सावित्रीत्येव नामास्याश्चक्रुर्विप्रास्तथा पिता ॥ ०२४ ॥

सा विग्रहवतीव श्रीर्व्यवर्धत नृपात्मजा ।
कालेन चापि सा कन्या यौवनस्था बभूव ह ॥ ०२५ ॥

तां सुमध्यां पृथुश्रोणीं प्रतिमां काञ्चनीमिव ।
प्राप्तेयं देवकन्येति दृष्ट्वा संमेनिरे जनाः ॥ ०२६ ॥

तां तु पद्मपलाशाक्षीं ज्वलन्तीमिव तेजसा ।
न कश्चिद्वरयामास तेजसा प्रतिवारितः ॥ ०२७ ॥

अथोपोष्य शिरःस्नाता दैवतान्यभिगम्य सा ।
हुत्वाग्निं विधिवद्विप्रान्वाचयामास पर्वणि ॥ ०२८ ॥

ततः सुमनसः शेषाः प्रतिगृह्य महात्मनः ।
पितुः सकाशमगमद्देवी श्रीरिव रूपिणी ॥ ०२९ ॥

साभिवाद्य पितुः पादौ शेषाः पूर्वं निवेद्य च ।
कृताञ्जलिर्वरारोहा नृपतेः पार्श्वतः स्थिता ॥ ०३० ॥

यौवनस्थां तु तां दृष्ट्वा स्वां सुतां देवरूपिणीम् ।

अयाच्यमानां च वरैर्नृपतिर्दुःखितोऽभवत् ॥ ०३१ ॥

राजोवाच ॥

पुत्रि प्रदानकालस्ते न च कश्चिद्वृणोति माम् ।
स्वयमन्विच्छ भर्तारं गुणैः सदृशमात्मनः ॥ ०३२ ॥

प्रार्थितः पुरुषो यश्च स निवेद्यस्त्वया मम ।
विमृश्याहं प्रदास्यामि वरय त्वं यथेप्सितम् ॥ ०३३ ॥

श्रुतं हि धर्मशास्त्रे मे पठ्यमानं द्विजातिभिः ।
तथा त्वमपि कल्याणि गदतो मे वचः शृणु ॥ ०३४ ॥

अप्रदाता पिता वाच्यो वाच्यश्चानुपयन्पतिः ।
मृते भर्तरि पुत्रश्च वाच्यो मातुररक्षिता ॥ ०३५ ॥

इदं मे वचनं श्रुत्वा भर्तुरन्वेषणे त्वर ।
देवतानां यथा वाच्यो न भवेयं तथा कुरु ॥ ०३६ ॥

मार्कण्डेय उवाच ॥

एवमुक्त्वा दुहितरं तथा वृद्धांश्च मन्त्रिणः ।
व्यादिदेशानुयात्रं च गम्यतामित्यचोदयत् ॥ ०३७ ॥

साभिवाद्य पितुः पादौ व्रीडितेव मनस्विनी ।
पितुर्वचनमाज्ञाय निर्जगामाविचारितम् ॥ ०३८ ॥

सा हैमं रथमास्थाय स्थविरैः सचिवैर्वृता ।
तपोवनानि रम्याणि राजर्षीणां जगामह ॥ ०३९ ॥

मान्यानां तत्र वृद्धानां कृत्वा पादाभिवन्दनम् ।

वनानि क्रमशस्तात सर्वाण्येवाभ्यगच्छत ॥ ०४० ॥

एवं सर्वेषु तीर्थेषु धनोत्सर्गं नृपात्मजा ।
कुर्वती द्विजमुख्यानां तं तं देशं जगाम ह ॥ ०४१ ॥

---

# अध्याय २७८

मार्कण्डेय उवाच ॥

अथ मद्राधिपो राजा नारदेन समागतः ।
उपविष्टः सभामध्ये कथायोगेन भारत ॥ ००१ ॥

ततोऽभिगम्य तीर्थानि सर्वाण्येवाश्रमांस्तथा ।
आजगाम पितुर्वेश्म सावित्री सह मन्त्रिभिः ॥ ००२ ॥

नारदेन सहासीनं दृष्ट्वा सा पितरं शुभा ।
उभयोरेव शिरसा चक्रे पादाभिवन्दनम् ॥ ००३ ॥

नारद उवाच ॥

क्व गताभूत्सुतेयं ते कुतश्चैवागता नृप ।
किमर्थं युवतीं भर्त्रे न चैनां संप्रयच्छसि ॥ ००४ ॥

अश्वपतिरुवाच ॥

कार्येण खल्वनेनैव प्रेषिताद्यैव चागता ।
तदस्याः शृणु देवर्षे भर्तारं योऽनया वृतः ॥ ००५ ॥

मार्कण्डेय उवाच ॥

सा ब्रूहि विस्तरेणेति पित्रा सञ्चोदिता शुभा ।
दैवतस्येव वचनं प्रतिगृह्येदमब्रवीत् ॥ ००६ ॥

आसीच्छाल्वेषु धर्मात्मा क्षत्रियः पृथिवीपतिः ।
द्युमत्सेन इति ख्यातः पश्चादन्धो बभूव ह ॥ ००७ ॥

विनष्टचक्षुषस्तस्य बालपुत्रस्य धीमतः ।
सामीप्येन हृतं राज्यं छिद्रेऽस्मिन्पूर्ववैरिणा ॥ ००८ ॥

स बालवत्सया सार्धं भार्यया प्रस्थितो वनम् ।
महारण्यगतश्चापि तपस्तेपे महाव्रतः ॥ ००९ ॥

तस्य पुत्रः पुरे जातः संवृद्धश्च तपोवने ।
सत्यवाननुरूपो मे भर्तेति मनसा वृतः ॥ ०१० ॥

नारद उवाच ॥

अहो बत महत्पापं सावित्र्या नृपते कृतम् ।
अजानन्त्या यदनया गुणवान्सत्यवान्वृतः ॥ ०११ ॥

सत्यं वदत्यस्य पिता सत्यं माता प्रभाषते ।
ततोऽस्य ब्राह्मणाश्चक्रुर्नामैतत्सत्यवानिति ॥ ०१२ ॥

बालस्याश्वाः प्रियाश्चास्य करोत्यश्वांश्च मृन्मयान् ।
चित्रेऽपि च लिखत्यश्वांश्चित्राश्व इति चोच्यते ॥ ०१३ ॥

राजोवाच ॥

अपीदानीं स तेजस्वी बुद्धिमान्वा नृपात्मजः ।

क्षमावानपि वा शूरः सत्यवान्पितृनन्दनः ॥ ०१४ ॥

नारद उवाच ॥

विवस्वानिव तेजस्वी बृहस्पतिसमो मतौ ।
महेन्द्र इव शूरश्च वसुधेव क्षमान्वितः ॥ ०१५ ॥

अश्वपतिरुवाच ॥

अपि राजात्मजो दाता ब्रह्मण्यो वापि सत्यवान् ।
रूपवानप्युदारो वाप्यथ वा प्रियदर्शनः ॥ ०१६ ॥

नारद उवाच ॥

साङ्कृते रन्तिदेवस्य स शक्त्या दानतः समः ।
ब्रह्मण्यः सत्यवादी च शिबिरौशीनरो यथा ॥ ०१७ ॥

ययातिरिव चोदारः सोमवत्प्रियदर्शनः ।
रूपेणान्यतमोऽश्विभ्यां द्युमत्सेनसुतो बली ॥ ०१८ ॥

स दान्तः स मृदुः शूरः स सत्यः स जितेन्द्रियः ।
स मैत्रः सोऽनसूयश्च स ह्रीमान्धृतिमांश्च सः ॥ ०१९ ॥

नित्यशश्चार्जवं तस्मिन्स्थितिस्तस्यैव च ध्रुवा ।
सङ्क्षेपतस्तपोवृद्धैः शीलवृद्धैश्च कथ्यते ॥ ०२० ॥

अश्वपतिरुवाच ॥

गुणैरुपेतं सर्वैस्तं भगवन्प्रब्रवीषि मे ।
दोषानप्यस्य मे ब्रूहि यदि सन्तीह केचन ॥ ०२१ ॥

नारद उवाच ॥

एको दोषोऽस्य नान्योऽस्ति सोऽद्य प्रभृति सत्यवान् ।
संवत्सरेण क्षीणायुर्देहन्यासं करिष्यति ॥ ०२२ ॥

राजोवाच ॥

एहि सावित्रि गच्छ त्वमन्यं वरय शोभने ।
तस्य दोषो महानेको गुणानाक्रम्य तिष्ठति ॥ ०२३ ॥

यथा मे भगवानाह नारदो देवसत्कृतः ।
संवत्सरेण सोऽल्पायुर्देहन्यासं करिष्यति ॥ ०२४ ॥

सावित्र्युवाच ॥

सकृदंशो निपतति सकृत्कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सकृत्सकृत् ॥ ०२५ ॥

दीर्घायुरथ वाल्पायुः सगुणो निर्गुणोऽपि वा ।
सकृद्वृतो मया भर्ता न द्वितीयं वृणोम्यहम् ॥ ०२६ ॥

मनसा निश्चयं कृत्वा ततो वाचाभिधीयते ।
क्रियते कर्मणा पश्चात्प्रमाणं मे मनस्ततः ॥ ०२७ ॥

नारद उवाच ॥

स्थिरा बुद्धिर्नरश्रेष्ठ सावित्र्या दुहितुस्तव ।
नैषा चालयितुं शक्या धर्मादस्मात्कथञ्चन ॥ ०२८ ॥

नान्यस्मिन्पुरुषे सन्ति ये सत्यवति वै गुणाः ।
प्रदानमेव तस्मान्मे रोचते दुहितुस्तव ॥ ०२९ ॥

राजोवाच ॥

अविचार्यमेतदुक्तं हि तथ्यं भगवता वचः ।
करिष्याम्येतदेवं च गुरुर्हि भगवान्मम ॥ ०३० ॥

नारद उवाच ॥

अविघ्नमस्तु सावित्र्याः प्रदाने दुहितुस्तव ।
साधयिष्यामहे तावत्सर्वेषां भद्रमस्तु वः ॥ ०३१ ॥

मार्कण्डेय उवाच ॥

एवमुक्त्वा खमुत्पत्य नारदस्त्रिदिवं गतः ।
राजापि दुहितुः सर्वं वैवाहिकमकारयत् ॥ ०३२ ॥

---

# अध्याय २७९

मार्कण्डेय उवाच ॥

अथ कन्याप्रदाने स तमेवार्थं विचिन्तयन् ।
समानिन्ये च तत्सर्वं भाण्डं वैवाहिकं नृपः ॥ ००१ ॥

ततो वृद्धान्द्विजान्सर्वानृत्विजः सपुरोहितान् ।
समाहूय तिथौ पुण्ये प्रययौ सह कन्यया ॥ ००२ ॥

मेध्यारण्यं स गत्वा च द्युमत्सेनाश्रमं नृपः ।

पद्ध्यामेव द्विजैः सार्धं राजर्षिं तमुपागमत्  ॥ ००३  ॥

तत्रापश्यन्महाभागं शालवृक्षमुपाश्रितम् ।
कौश्यां बृस्यां समासीनं चक्षुर्हीनं नृपं तदा  ॥ ००४  ॥

स राजा तस्य राजर्षेः कृत्वा पूजां यथार्हतः ।
वाचा सुनियतो भूत्वा चकारात्मनिवेदनम्  ॥ ००५  ॥

तस्यार्घ्यमासनं चैव गां चावेद्य स धर्मवित् ।
किमागमनमित्येवं राजा राजानमब्रवीत्  ॥ ००६  ॥

तस्य सर्वमभिप्रायमितिकर्तव्यतां च ताम् ।
सत्यवन्तं समुद्दिश्य सर्वमेव न्यवेदयत्  ॥ ००७  ॥

अश्वपतिरुवाच  ॥

सावित्री नाम राजर्षे कन्येयं मम शोभना ।
तां स्वधर्मेण धर्मज्ञ स्नुषार्थे त्वं गृहाण मे  ॥ ००८  ॥

द्युमत्सेन उवाच  ॥

च्युताः स्म राज्याद्वनवासमाश्रिता ;श्चराम धर्मं नियतास्तपस्विनः ।
कथं त्वनर्हा वनवासमाश्रमे ; सहिष्यते क्लेशमिमं सुता तव  ॥ ००९  ॥

अश्वपतिरुवाच  ॥

सुखं च दुःखं च भवाभवात्मकं ; यदा विजानाति सुताहमेव च ।
न मद्विधे युज्यति वाक्यमीदृशं ; विनिश्चयेनाभिगतोऽस्मि ते नृप  ॥ ०१०  ॥

आशां नार्हसि मे हन्तुं सौहृदाद्प्रणयेन च ।
अभितश्चागतं प्रेम्णा प्रत्याख्यातुं न मार्हसि  ॥ ०११  ॥

अनुरूपो हि संयोगे त्वं ममाहं तवापि च ।
स्नुषां प्रतीच्छ मे कन्यां भार्यां सत्यवतः सुताम्  ॥ ०१२  ॥

द्युमत्सेन उवाच  ॥

पूर्वमेवाभिलषितः संबन्धो मे त्वया सह ।
भ्रष्टराज्यस्त्वहमिति तत एतद्विचारितम्  ॥ ०१३  ॥

अभिप्रायस्त्वयं यो मे पूर्वमेवाभिकाङ्क्षितः ।
स निर्वर्ततु मेऽद्यैव काङ्क्षितो ह्यसि मेऽतिथिः  ॥ ०१४  ॥

मार्कण्डेय उवाच  ॥

ततः सर्वान्समानीय द्विजानाश्रमवासिनः ।
यथाविधि समुद्वाहं कारयामासतुर्नृपौ  ॥ ०१५  ॥

दत्त्वा त्वश्वपतिः कन्यां यथार्हं च परिच्छदम् ।
ययौ स्वमेव भवनं युक्तः परमया मुदा  ॥ ०१६  ॥

सत्यवानपि भार्यां तां लब्ध्वा सर्वगुणान्विताम् ।
मुमुदे सा च तं लब्ध्वा भर्तारं मनसेप्सितम्  ॥ ०१७  ॥

गते पितरि सर्वाणि संन्यस्याभरणानि सा ।
जगृहे वल्कलान्येव वस्त्रं काषायमेव च  ॥ ०१८  ॥

परिचारैर्गुणैश्चैव प्रश्रयेण दमेन च ।
सर्वकामक्रियाभिश्च सर्वेषां तुष्टिमावहत्  ॥ ०१९  ॥

श्वश्रूं शरीरसत्कारैः सर्वैराच्छादनादिभिः ।
श्वशुरं देवकार्यैश्च वाचः संयमनेन च  ॥ ०२०  ॥

तथैव प्रियवादेन नैपुणेन शमेन च ।
रहश्चैवोपचारेण भर्तारं पर्यतोषयत् ॥ ०२१ ॥

एवं तत्राश्रमे तेषां तदा निवसतां सताम् ।
कालस्तपस्यतां कश्चिदतिचक्राम भारत ॥ ०२२ ॥

सावित्र्यास्तु शयानायास्तिष्ठन्त्याश्च दिवानिशम् ।
नारदेन यदुक्तं तद्वाक्यं मनसि वर्तते ॥ ०२३ ॥

---

# अध्याय २८०

मार्कण्डेय उवाच ॥

ततः काले बहुतिथे व्यतिक्रान्ते कदाचन ।
प्राप्तः स कालो मर्तव्यं यत्र सत्यवता नृप ॥ ००१ ॥

गणयन्त्याश्च सावित्र्या दिवसे दिवसे गते ।
तद्वाक्यं नारदेनोक्तं वर्तते हृदि नित्यशः ॥ ००२ ॥

चतुर्थेऽहनि मर्तव्यमिति सञ्चिन्त्य भामिनी ।
व्रतं त्रिरात्रमुद्दिश्य दिवारात्रं स्थिताभवत् ॥ ००३ ॥

तं श्रुत्वा नियमं दुःखं वध्वा दुःखान्वितो नृपः ।
उत्थाय वाक्यं सावित्रीमब्रवीत्परिसान्त्वयन् ॥ ००४ ॥

अतितीव्रोऽयमारम्भस्त्वयारब्धो नृपात्मजे ।
तिसृणां वसतीनां हि स्थानं परमदुष्करम् ॥ ००५ ॥

सावित्र्युवाच ॥

न कार्यस्तात संतापः पारयिष्याम्यहं व्रतम् ।
व्यवसायकृतं हीदं व्यवसायश्च कारणम् ॥ ००६ ॥

द्युमत्सेन उवाच ॥

व्रतं भिन्धीति वक्तुं त्वां नास्मि शक्तः कथञ्चन ।
पारयस्वेति वचनं युक्तमस्मद्विधो वदेत् ॥ ००७ ॥

मार्कण्डेय उवाच ॥

एवमुक्त्वा द्युमत्सेनो विरराम महामनाः ।
तिष्ठन्ती चापि सावित्री काष्ठभूतेव लक्ष्यते ॥ ००८ ॥

श्वोभूते भर्तृमरणे सावित्र्या भरतर्षभ ।
दुःखान्वितायास्तिष्ठन्त्याः सा रात्रिर्व्यत्यवर्तत ॥ ००९ ॥

अद्य तद्दिवसं चेति हुत्वा दीप्तं हुताशनम् ।
युगमात्रोदिते सूर्ये कृत्वा पौर्वाह्णिकीः क्रियाः ॥ ०१० ॥

ततः सर्वान्द्विजान्वृद्धाञ्श्वश्रूं श्वशुरमेव च ।
अभिवाद्यानुपूर्व्येण प्राञ्जलिर्नियता स्थिता ॥ ०११ ॥

अवैधव्याशिषस्ते तु सावित्र्यर्थं हिताः शुभाः ।
ऊचुस्तपस्विनः सर्वे तपोवननिवासिनः ॥ ०१२ ॥

एवमस्त्विति सावित्री ध्यानयोगपरायणा ।
मनसा ता गिरः सर्वाः प्रत्यगृह्णात्तपस्विनाम् ॥ ०१३ ॥

तं कालं च मुहूर्तं च प्रतीक्षन्ती नृपात्मजा ।
यथोक्तं नारदवचश्चिन्तयन्ती सुदुःखिता ॥ ०१४ ॥

ततस्तु श्वश्रूश्वशुरावूचतुस्तां नृपात्मजाम् ।
एकान्तस्थमिदं वाक्यं प्रीत्या भरतसत्तम ॥ ०१५ ॥

श्वशुरावूचतुः ॥

व्रतो यथोपदिष्टोऽयं यथावत्पारितस्त्वया ।
आहारकालः संप्राप्तः क्रियतां यदनन्तरम् ॥ ०१६ ॥

सावित्र्युवाच ॥

अस्तं गते मयादित्ये भोक्तव्यं कृतकामया ।
एष मे हृदि सङ्कल्पः समयश्च कृतो मया ॥ ०१७ ॥

मार्कण्डेय उवाच ॥

एवं संभाषमाणायाः सावित्र्या भोजनं प्रति ।
स्कन्धे परशुमादाय सत्यवान्प्रस्थितो वनम् ॥ ०१८ ॥

सावित्री त्वाह भर्तारं नैकस्त्वं गन्तुमर्हसि ।
सह त्वयागमिष्यामि न हि त्वां हातुमुत्सहे ॥ ०१९ ॥

सत्यवानुवाच ॥

वनं न गतपूर्वं ते दुःखः पन्थाश्च भामिनि ।
व्रतोपवासक्षामा च कथं पद्भ्यां गमिष्यसि ॥ ०२० ॥

सावित्र्युवाच ॥

उपवासान्न मे ग्लानिर्नास्ति चापि परिश्रमः ।
गमने च कृतोत्साहां प्रतिषेद्धुं न मार्हसि ॥ ०२१ ॥

सत्यवानुवाच ॥

यदि ते गमनोत्साहः करिष्यामि तव प्रियम् ।
मम त्वामन्त्रय गुरून्न मां दोषः स्पृशेदयम् ॥ ०२२ ॥

मार्कण्डेय उवाच ॥

साभिगम्याब्रवीच्छ्वश्रूं श्वशुरं च महाव्रता ।
अयं गच्छति मे भर्ता फलाहारो महावनम् ॥ ०२३ ॥

इच्छेयमभ्यनुज्ञातुमार्यया श्वशुरेण च ।
अनेन सह निर्गन्तुं न हि मे विरहः क्षमः ॥ ०२४ ॥

गुर्वग्निहोत्रार्थकृते प्रस्थितश्च सुतस्तव ।
न निवार्यो निवार्यः स्यादन्यथा प्रस्थितो वनम् ॥ ०२५ ॥

संवत्सरः किञ्चिदूनो न निष्क्रान्ताहमाश्रमात् ।
वनं कुसुमितं द्रष्टुं परं कौतूहलं हि मे ॥ ०२६ ॥

द्युमत्सेन उवाच ॥

यतः प्रभृति सावित्री पित्रा दत्ता स्नुषा मम ।
नानयाभ्यर्थनायुक्तमुक्तपूर्वं स्मराम्यहम् ॥ ०२७ ॥

तदेषा लभतां कामं यथाभिलषितं वधूः ।
अप्रमादश्च कर्तव्यः पुत्रि सत्यवतः पथि ॥ ०२८ ॥

मार्कण्डेय उवाच ॥

उभाभ्यामभ्यनुज्ञाता सा जगाम यशस्विनी ।
सह भर्त्रा हसन्तीव हृदयेन विदूयता ॥ ०२९ ॥

सा वनानि विचित्राणि रमणीयानि सर्वशः ।
मयूररवघुष्टानि ददर्श विपुलेक्षणा ॥ ०३० ॥

नदीः पुण्यवहाश्चैव पुष्पितांश्च नगोत्तमान् ।
सत्यवानाह पश्येति सावित्रीं मधुराक्षरम् ॥ ०३१ ॥

निरीक्षमाणा भर्तारं सर्वावस्थमनिन्दिता ।
मृतमेव हि तं मेने काले मुनिवचः स्मरन् ॥ ०३२ ॥

अनुवर्तती तु भर्तारं जगाम मृदुगामिनी ।
द्विधेव हृदयं कृत्वा तं च कालमवेक्षती ॥ ०३३ ॥

---

# अध्याय २८१

मार्कण्डेय उवाच ॥

अथ भार्यासहायः स फलान्यादाय वीर्यवान् ।
कठिनं पूरयामास ततः काष्ठान्यपाटयत् ॥ ००१ ॥

तस्य पाटयतः काष्ठं स्वेदो वै समजायत ।
व्यायामेन च तेनास्य जज्ञे शिरसि वेदना ॥ ००२ ॥

सोऽभिगम्य प्रियां भार्यामुवाच श्रमपीडितः ।
व्यायामेन ममानेन जाता शिरसि वेदना ॥ ००३ ॥

अङ्गानि चैव सावित्रि हृदयं दूयतीव च ।
अस्वस्थमिव चात्मानं लक्षये मितभाषिणि ॥ ००४ ॥

शूलैरिव शिरो विद्धमिदं संलक्षयाम्यहम् ।
तत्स्वप्तुमिच्छे कल्याणि न स्थातुं शक्तिरस्ति मे ॥ ००५ ॥

समासाद्याथ सावित्री भर्तारमुपगूह्य च ।
उत्सङ्गेऽस्य शिरः कृत्वा निषसाद महीतले ॥ ००६ ॥

ततः सा नारदवचो विमृशन्ती तपस्विनी ।
तं मुहूर्तं क्षणं वेलां दिवसं च युयोज ह ॥ ००७ ॥

मुहूर्तादिव चापश्यत्पुरुषं पीतवाससम् ।
बद्धमौलिं वपुष्मन्तमादित्यसमतेजसम् ॥ ००८ ॥

श्यामावदातं रक्ताक्षं पाशहस्तं भयावहम् ।
स्थितं सत्यवतः पार्श्वे निरीक्षन्तं तमेव च ॥ ००९ ॥

तं दृष्ट्वा सहसोत्थाय भर्तुर्न्यस्य शनैः शिरः ।
कृताञ्जलिरुवाचार्ता हृदयेन प्रवेपता ॥ ०१० ॥

दैवतं त्वाभिजानामि वपुरेतद्ध्यमानुषम् ।
कामया ब्रूहि मे देव कस्त्वं किं च चिकीर्षसि ॥ ०११ ॥

यम उवाच ॥

पतिव्रतासि सावित्रि तथैव च तपोन्विता ।
अतस्त्वामभिभाषामि विद्धि मां त्वं शुभे यमम् ॥ ०१२ ॥

अयं ते सत्यवान्भर्ता क्षीणायुः पार्थिवात्मजः ।

नेष्याम्येनमहं बद्ध्वा विद्ध्येतन्मे चिकीर्षितम्  ॥ ०१३  ॥

मार्कण्डेय उवाच  ॥

इत्युक्त्वा पितृराजस्तां भगवान्स्वं चिकीर्षितम् ।
यथावत्सर्वमाख्यातुं तत्प्रियार्थं प्रचक्रमे  ॥ ०१४  ॥

अयं हि धर्मसंयुक्तो रूपवान्गुणसागरः ।
नार्हो मत्पुरुषैर्नेतुमतोऽस्मि स्वयमागतः  ॥ ०१५  ॥

ततः सत्यवतः कायात्पाशबद्धं वशं गतम् ।
अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्  ॥ ०१६  ॥

ततः समुद्धृतप्राणं गतश्वासं हतप्रभम् ।
निर्विचेष्टं शरीरं तद्बभूवाप्रियदर्शनम्  ॥ ०१७  ॥

यमस्तु तं तथा बद्ध्वा प्रयातो दक्षिणामुखः ।
सावित्री चापि दुःखार्ता यममेवान्वगच्छत  ॥ ०१८  ॥

नियमव्रतसंसिद्धा महाभागा पतिव्रता  ॥ ०१८  ॥

यम उवाच  ॥

निवर्त गच्छ सावित्रि कुरुष्वास्यौर्ध्वदेहिकम् ।
कृतं भर्तुस्त्वयानृण्यं यावद्गम्यं गतं त्वया  ॥ ०१९  ॥

सावित्र्युवाच  ॥

यत्र मे नीयते भर्ता स्वयं वा यत्र गच्छति ।
मयापि तत्र गन्तव्यमेष धर्मः सनातनः  ॥ ०२०  ॥

तपसा गुरुवृत्त्या च भर्तुः स्नेहाद्व्रतेन च ।
तव चैव प्रसादेन न मे प्रतिहता गतिः ॥ ०२१ ॥

प्राहुः सप्तपदं मित्रं बुधास्तत्त्वार्थदर्शिनः ।
मित्रतां च पुरस्कृत्य किंचिद्वक्ष्यामि तच्छृणु ॥ ०२२ ॥

नानात्मवन्तस्तु वने चरन्ति ; धर्मं च वासं च परिश्रमं च ।
विज्ञानतो धर्ममुदाहरन्ति ; तस्मात्सन्तो धर्ममाहुः प्रधानम् ॥ ०२३ ॥

एकस्य धर्मेण सतां मतेन ; सर्वे स्म तं मार्गमनुप्रपन्नाः ।
मा वै द्वितीयं मा तृतीयं च वाञ्छे ; तस्मात्सन्तो धर्ममाहुः प्रधानम् ॥ ०२४ ॥

यम उवाच ॥

निवर्त तुष्टोऽस्मि तवानया गिरा ; स्वराक्षरव्यञ्जनहेतुयुक्तया ।
वरं वृणीष्वेह विनास्य जीवितं ; ददानि ते सर्वमनिन्दिते वरम् ॥ ०२५ ॥

सावित्र्युवाच ॥

च्युतः स्वराज्याद्वनवासमाश्रितो ; विनष्टचक्षुः श्वशुरो ममाश्रमे ।
स लब्धचक्षुर्बलवान्भवेन्नृप ;स्तव प्रसादाज्ज्वलनार्कसंनिभः ॥ ०२६ ॥

यम उवाच ॥

ददानि ते सर्वमनिन्दिते वरं ; यथा त्वयोक्तं भविता च तत्तथा ।
तवाध्वना ग्लानिमिवोपलक्षये ; निवर्त गच्छस्व न ते श्रमो भवेत् ॥ ०२७ ॥

सावित्र्युवाच ॥

कुतः श्रमो भर्तृसमीपतो हि मे ; यतो हि भर्ता मम सा गतिर्ध्रुवा ।
यतः पतिं नेष्यसि तत्र मे गतिः ; सुरेश भूयश्च वचो निबोध मे ॥ ०२८ ॥

सतां सकृत्सङ्गतमीप्सितं परं ; ततः परं मित्रमिति प्रचक्षते ।
न चाफलं सत्पुरुषेण सङ्गतं ; ततः सतां संनिवसेत्समागमे ॥ ०२९ ॥

यम उवाच ॥

मनोनुकूलं बुधबुद्धिवर्धनं ; त्वयाहमुक्तो वचनं हिताश्रयम् ।
विना पुनः सत्यवतोऽस्य जीवितं ; वरं द्वितीयं वरयस्व भामिनि ॥ ०३० ॥

सावित्र्युवाच ॥

हृतं पुरा मे श्वशुरस्य धीमतः ; स्वमेव राज्यं स लभेत पार्थिवः ।
जह्यात्स्वधर्मं न च मे गुरुर्यथा ; द्वितीयमेतं वरयामि ते वरम् ॥ ०३१ ॥

यम उवाच ॥

स्वमेव राज्यं प्रतिपत्स्यतेऽचिरा ;न्न च स्वधर्मात्परिहास्यते नृपः ।
कृतेन कामेन मया नृपात्मजे ; निवर्त गच्छस्व न ते श्रमो भवेत् ॥ ०३२ ॥

सावित्र्युवाच ॥

प्रजास्त्वयेमा नियमेन संयता ; नियम्य चैता नयसे न कामया ।
अतो यमत्वं तव देव विश्रुतं ; निबोध चेमां गिरमीरितां मया ॥ ०३३ ॥

अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानं च सतां धर्मः सनातनः ॥ ०३४ ॥

एवंप्रायश्च लोकोऽयं मनुष्याः शक्तिपेशलाः ।
सन्तस्त्वेवाप्यमित्रेषु दयां प्राप्तेषु कुर्वते ॥ ०३५ ॥

यम उवाच ॥

पिपासितस्येव यथा भवेत्पय ;स्तथा त्वया वाक्यमिदं समीरितम् ।
विना पुनः सत्यवतोऽस्य जीवितं ; वरं वृणीष्वेह शुभे यदिच्छसि ॥ ०३६ ॥

सावित्र्युवाच ॥

ममानपत्यः पृथिवीपतिः पिता ; भवेत्पितुः पुत्रशतं ममौरसम् ।
कुलस्य संतानकरं च यद्भवे ;त्तृतीयमेतं वरयामि ते वरम् ॥ ०३७ ॥

यम उवाच ॥

कुलस्य संतानकरं सुवर्चसं ; शतं सुतानां पितुरस्तु ते शुभे ।
कृतेन कामेन नराधिपात्मजे ; निवर्त दूरं हि पथस्त्वमागता ॥ ०३८ ॥

सावित्र्युवाच ॥

न दूरमेतन्मम भर्तृसंनिधौ ; मनो हि मे दूरतरं प्रधावति ।
तथा व्रजन्नेव गिरं समुद्यतां ; मयोच्यमानां श्रृणु भूय एव च ॥ ०३९ ॥

विवस्वतस्त्वं तनयः प्रतापवां ;स्ततो हि वैवस्वत उच्यसे बुधैः ।
शमेन धर्मेण च रञ्जिताः प्रजा ;स्ततस्तवेहेश्वर धर्मराजता ॥ ०४० ॥

आत्मन्यपि न विश्वासस्तावान्भवति सत्सु यः ।
तस्मात्सत्सु विशेषेण सर्वः प्रणयमिच्छति ॥ ०४१ ॥

सौहृदात्सर्वभूतानां विश्वासो नाम जायते ।
तस्मात्सत्सु विशेषेण विश्वासं कुरुते जनः ॥ ०४२ ॥

यम उवाच ॥

उदाहृतं ते वचनं यदङ्गने ; शुभे न तादृक्त्वदृते मया श्रुतम् ।

अनेन तुष्टोऽस्मि विनास्य जीवितं ; वरं चतुर्थं वरयस्व गच्छ च ॥ ०४३ ॥

सावित्र्युवाच ॥

ममात्मजं सत्यवतस्तथौरसं ; भवेदुभाभ्यामिह यत्कुलोद्वहम् ।
शतं सुतानां बलवीर्यशालिना ;मिदं चतुर्थं वरयामि ते वरम् ॥ ०४४ ॥

यम उवाच ॥

शतं सुतानां बलवीर्यशालिनां ; भविष्यति प्रीतिकरं तवाबले ।
परिश्रमस्ते न भवेन्नृपात्मजे ; निवर्त दूरं हि पथस्त्वमागता ॥ ०४५ ॥

सावित्र्युवाच ॥

सतां सदा शाश्वती धर्मवृत्तिः ; सन्तो न सीदन्ति न च व्यथन्ति ।
सतां सद्भिर्नाफलः सङ्गमोऽस्ति ; सद्भ्यो भयं नानुवर्तन्ति सन्तः ॥ ०४६ ॥

सन्तो हि सत्येन नयन्ति सूर्यं ; सन्तो भूमिं तपसा धारयन्ति ।
सन्तो गतिर्भूतभव्यस्य राज ;न्सतां मध्ये नावसीदन्ति सन्तः ॥ ०४७ ॥

आर्यजुष्टमिदं वृत्तमिति विज्ञाय शाश्वतम् ।
सन्तः परार्थं कुर्वाणा नावेक्षन्ते प्रतिक्रियाम् ॥ ०४८ ॥

न च प्रसादः सत्पुरुषेषु मोघो ; न चाप्यर्थो नश्यति नापि मानः ।
यस्मादेतन्नियतं सत्सु नित्यं ; तस्मात्सन्तो रक्षितारो भवन्ति ॥ ०४९ ॥

यम उवाच ॥

यथा यथा भाषसि धर्मसंहितं ; मनोनुकूलं सुपदं महार्थवत् ।
तथा तथा मे त्वयि भक्तिरुत्तमा ; वरं वृणीष्वाप्रतिमं यतव्रते ॥ ०५० ॥

सावित्र्युवाच ॥

न तेऽपवर्गः सुकृताद्विनाकृत ;स्तथा यथान्येषु वरेषु मानद ।
वरं वृणे जीवतु सत्यवानयं ; यथा मृता ह्येवमहं विना पतिम् ॥ ०५१ ॥

न कामये भर्तृविनाकृता सुखं ; न कामये भर्तृविनाकृता दिवम् ।
न कामये भर्तृविनाकृता श्रियं ; न भर्तृहीना व्यवसामि जीवितुम् ॥ ०५२ ॥

वरातिसर्गः शतपुत्रता मम ; त्वयैव दत्तो ह्रियते च मे पतिः ।
वरं वृणे जीवतु सत्यवानयं ; तवैव सत्यं वचनं भविष्यति ॥ ०५३ ॥

मार्कण्डेय उवाच ॥

तथेत्युक्त्वा तु तान्पाशान्मुक्त्वा वैवस्वतो यमः ।
धर्मराजः प्रहृष्टात्मा सावित्रीमिदमब्रवीत् ॥ ०५४ ॥

एष भद्रे मया मुक्तो भर्ता ते कुलनन्दिनि ।
अरोगस्तव नेयश्च सिद्धार्थश्च भविष्यति ॥ ०५५ ॥

चतुर्वर्षशतं चायुस्त्वया सार्धमवाप्स्यति ।
इष्ट्वा यज्ञैश्च धर्मेण ख्यातिं लोके गमिष्यति ॥ ०५६ ॥

त्वयि पुत्रशतं चैव सत्यवाञ्जनयिष्यति ।
ते चापि सर्वे राजानः क्षत्रियाः पुत्रपौत्रिणः ॥ ०५७ ॥

ख्यातास्त्वन्नामधेयाश्च भविष्यन्तीह शाश्वताः ॥ ०५७ ॥

पितुश्च ते पुत्रशतं भविता तव मातरि ।
मालव्यां मालवा नाम शाश्वताः पुत्रपौत्रिणः ॥ ०५८ ॥

भ्रातरस्ते भविष्यन्ति क्षत्रियास्त्रिदशोपमाः ॥ ०५८ ॥

एवं तस्यै वरं दत्त्वा धर्मराजः प्रतापवान् ।
निवर्तयित्वा सावित्रीं स्वमेव भवनं ययौ  ॥ ०५९  ॥

सावित्र्यपि यमे याते भर्तारं प्रतिलभ्य च ।
जगाम तत्र यत्रास्या भर्तुः शावं कलेवरम्  ॥ ०६०  ॥

सा भूमौ प्रेक्ष्य भर्तारमुपसृत्योपगूह्य च ।
उत्सङ्गे शिर आरोप्य भूमावुपविवेश ह  ॥ ०६१  ॥

सञ्ज्ञां च सत्यवा.ण्ल्लब्ध्वा सावित्रीमभ्यभाषत ।
प्रोष्यागत इव प्रेम्णा पुनः पुनरुदीक्ष्य वै  ॥ ०६२  ॥

सत्यवानुवाच  ॥

सुचिरं बत सुप्तोऽस्मि किमर्थं नावबोधितः ।
क्व चासौ पुरुषः श्यामो योऽसौ मां सञ्चकर्ष ह  ॥ ०६३  ॥

सावित्र्युवाच  ॥

सुचिरं बत सुप्तोऽसि ममाङ्के पुरुषर्षभ ।
गतः स भगवान्देवः प्रजासंयमनो यमः  ॥ ०६४  ॥

विश्रान्तोऽसि महाभाग विनिद्रश्च नृपात्मज ।
यदि शक्यं समुत्तिष्ठ विगाढां पश्य शर्वरीम्  ॥ ०६५  ॥

मार्कण्डेय उवाच  ॥

उपलभ्य ततः सञ्ज्ञां सुखसुप्त इवोत्थितः ।
दिशः सर्वा वनान्तांश्च निरीक्ष्योवाच सत्यवान्  ॥ ०६६  ॥

फलाहारोऽस्मि निष्क्रान्तस्त्वया सह सुमध्यमे ।
ततः पाटयतः काष्ठं शिरसो मे रुजाभवत् ॥ ०६७ ॥

शिरोभितापसंतप्तः स्थातुं चिरमशक्नुवन् ।
तवोत्सङ्गे प्रसुप्तोऽहमिति सर्वं स्मरे शुभे ॥ ०६८ ॥

त्वयोपगूढस्य च मे निद्रयापहृतं मनः ।
ततोऽपश्यं तमो घोरं पुरुषं च महौजसम् ॥ ०६९ ॥

तद्यदि त्वं विजानासि किं तद्ब्रूहि सुमध्यमे ।
स्वप्नो मे यदि वा दृष्टो यदि वा सत्यमेव तत् ॥ ०७० ॥

तमुवाचाथ सावित्री रजनी व्यवगाहते ।
श्वस्ते सर्वं यथावृत्तमाख्यास्यामि नृपात्मज ॥ ०७१ ॥

उत्तिष्ठोत्तिष्ठ भद्रं ते पितरौ पश्य सुव्रत ।
विगाढा रजनी चेयं निवृत्तश्च दिवाकरः ॥ ०७२ ॥

नक्तञ्चराश्चरन्त्येते हृष्टाः क्रूराभिभाषिणः ।
श्रूयन्ते पर्णशब्दाश्च मृगाणां चरतां वने ॥ ०७३ ॥

एताः शिवा घोरनादा दिशं दक्षिणपश्चिमाम् ।
आस्थाय विरुवन्त्युग्राः कम्पयन्त्यो मनो मम ॥ ०७४ ॥

सत्यवानुवाच ॥

वनं प्रतिभयाकारं घनेन तमसा वृतम् ।
न विज्ञास्यसि पन्थानं गन्तुं चैव न शक्ष्यसि ॥ ०७५ ॥

सावित्र्युवाच ॥

अस्मिन्नद्य वने दग्धे शुष्कवृक्षः स्थितो ज्वलन् ।
वायुना धम्यमानोऽग्निर्दृश्यतेऽत्र क्वचित्क्वचित् ॥ ०७६ ॥

ततोऽग्निमानयित्वेह ज्वालयिष्यामि सर्वतः ।
काष्ठानीमानि सन्तीह जहि संतापमात्मनः ॥ ०७७ ॥

यदि नोत्सहसे गन्तुं सरुजं त्वाभिलक्षये ।
न च ज्ञास्यसि पन्थानं तमसा संवृते वने ॥ ०७८ ॥

श्वः प्रभाते वने दृश्ये यास्यावोऽनुमते तव ।
वसावेह क्षपामेतां रुचितं यदि तेऽनघ ॥ ०७९ ॥

सत्यवानुवाच ॥

शिरोरुजा निवृत्ता मे स्वस्थान्यङ्गानि लक्षये ।
मातापितृभ्यामिच्छामि सङ्गमं त्वत्प्रसादजम् ॥ ०८० ॥

न कदाचिद्विकाले हि गतपूर्वो मयाश्रमः ।
अनागतायां संध्यायां माता मे प्ररुणद्धि माम् ॥ ०८१ ॥

दिवापि मयि निष्क्रान्ते संतप्येते गुरू मम ।
विचिनोति च मां तातः सहैवाश्रमवासिभिः ॥ ०८२ ॥

मात्रा पित्रा च सुभृशं दुःखिताभ्यामहं पुरा ।
उपालब्धः सुबहुशश्चिरेणागच्छसीति ह ॥ ०८३ ॥

का त्ववस्था तयोरद्य मदर्थमिति चिन्तये ।
तयोरदृश्ये मयि च महद्दुःखं भविष्यति ॥ ०८४ ॥

पुरा मामूचतुश्चैव रात्रावस्त्रायमाणकौ ।
भृशं सुदुःखितौ वृद्धौ बहुशः प्रीतिसंयुतौ ॥ ०८५ ॥

त्वया हीनौ न जीवाव मुहूर्तमपि पुत्रक ।
यावद्धरिष्यसे पुत्र तावन्नौ जीवितं ध्रुवम् ॥ ०८६ ॥

वृद्धयोरन्धयोर्यष्टिस्त्वयि वंशः प्रतिष्ठितः ।
त्वयि पिण्डश्च कीर्तिश्च संतानं चावयोरिति ॥ ०८७ ॥

माता वृद्धा पिता वृद्धस्तयोर्यष्टिरहं किल ।
तौ रात्रौ मामपश्यन्तौ कामवस्थां गमिष्यतः ॥ ०८८ ॥

निद्रायाश्चाभ्यसूयामि यस्या हेतोः पिता मम ।
माता च संशयं प्राप्ता मत्कृतेऽनपकारिणी ॥ ०८९ ॥

अहं च संशयं प्राप्तः कृच्छ्रामापदमास्थितः ।
मातापितृभ्यां हि विना नाहं जीवितुमुत्सहे ॥ ०९० ॥

व्यक्तमाकुलया बुद्ध्या प्रज्ञाचक्षुः पिता मम ।
एकैकमस्यां वेलायां पृच्छत्याश्रमवासिनम् ॥ ०९१ ॥

नात्मानमनुशोचामि यथाहं पितरं शुभे ।
भर्तारं चाप्यनुगतां मातरं परिदुर्बलाम् ॥ ०९२ ॥

मत्कृतेन हि तावद्य संतापं परमेष्यतः ।
जीवन्तावनुजीवामि भर्तव्यौ तौ मयेति ह ॥ ०९३ ॥

तयोः प्रियं मे कर्तव्यमिति जीवामि चाप्यहम् ॥ ०९३ ॥

मार्कण्डेय उवाच ॥

एवमुक्त्वा स धर्मात्मा गुरुवर्ती गुरुप्रियः ।
उच्छ्रित्य बाहू दुःखार्तः सस्वरं प्ररुरोद ह ॥ ०९४ ॥

ततोऽब्रवीत्तथा दृष्ट्वा भर्तारं शोककर्शितम् ।
प्रमृज्याश्रूणि नेत्राभ्यां सावित्री धर्मचारिणी ॥ ०९५ ॥

यदि मेऽस्ति तपस्तप्तं यदि दत्तं हुतं यदि ।
श्वश्रूश्वशुरभर्तॄणां मम पुण्यास्तु शर्वरी ॥ ०९६ ॥

न स्मराम्युक्तपूर्वां वै स्वैरेष्वप्यनृतां गिरम् ।
तेन सत्येन तावद्य ध्रियेतां श्वशुरौ मम ॥ ०९७ ॥

सत्यवानुवाच ॥

कामये दर्शनं पित्रोर्याहि सावित्रि माचिरम् ।
पुरा मातुः पितुर्वापि यदि पश्यामि विप्रियम् ॥ ०९८ ॥

न जीविष्ये वरारोहे सत्येनात्मानमालभे ॥ ०९८ ॥

यदि धर्मे च ते बुद्धिर्मां चेज्जीवन्तमिच्छसि ।
मम प्रियं वा कर्तव्यं गच्छस्वाश्रममन्तिकात् ॥ ०९९ ॥

मार्कण्डेय उवाच ॥

सावित्री तत उत्थाय केशान्संयम्य भामिनी ।
पतिमुत्थापयामास बाहुभ्यां परिगृह्य वै ॥ १०० ॥

उत्थाय सत्यवांश्चापि प्रमृज्याङ्गानि पाणिना ।
दिशः सर्वाः समालोक्य कठिने दृष्टिमादधे ॥ १०१ ॥

तमुवाचाथ सावित्री श्वः फलानीह नेष्यसि ।
योगक्षेमार्थमेतत्ते नेष्यामि परशुं त्वहम् ॥ १०२ ॥

कृत्वा कठिनभारं सा वृक्षशाखावलम्बिनम् ।
गृहीत्वा परशुं भर्तुः सकाशं पुनरागमत् ॥ १०३ ॥

वामे स्कन्धे तु वामोरूर्भर्तुर्बाहुं निवेश्य सा ।
दक्षिणेन परिष्वज्य जगाम मृदुगामिनी ॥ १०४ ॥

सत्यवानुवाच ॥

अभ्यासगमनाद्भीरु पन्थानो विदिता मम ।
वृक्षान्तरालोकितया ज्योत्स्नया चापि लक्षये ॥ १०५ ॥

आगतौ स्वः पथा येन फलान्यवचितानि च ।
यथागतं शुभे गच्छ पन्थानं मा विचारय ॥ १०६ ॥

पलाशषण्डे चैतस्मिन्पन्था व्यावर्तते द्विधा ।
तस्योत्तरेण यः पन्थास्तेन गच्छ त्वरस्व च ॥ १०७ ॥

स्वस्थोऽस्मि बलवानस्मि दिदृक्षुः पितरावुभौ ॥ १०७ ॥

मार्कण्डेय उवाच ॥

ब्रुवन्नेवं त्वरायुक्तः स प्रायादाश्रमं प्रति ।

---

# अध्याय २८२

मार्कण्डेय उवाच ॥

एतस्मिन्नेव काले तु द्युमत्सेनो महावने ।
लब्धचक्षुः प्रसन्नात्मा दृष्ट्या सर्वं ददर्श ह ॥ ००१ ॥

स सर्वानाश्रमान्गत्वा शैब्यया सह भार्यया ।
पुत्रहेतोः परामार्तिं जगाम मनुजर्षभ ॥ ००२ ॥

तावाश्रमान्नदीश्चैव वनानि च सरांसि च ।
तांस्तान्देशान्विचिन्वन्तौ दम्पती परिजग्मतुः ॥ ००३ ॥

श्रुत्वा शब्दं तु यत्किञ्चिदुन्मुखौ सुतशङ्कया ।
सावित्रीसहितोऽभ्येति सत्यवानित्यधावताम् ॥ ००४ ॥

भिन्नैश्च परुषैः पादैः सव्रणैः शोणितोक्षितैः ।
कुशकण्टकविद्धाङ्गावुन्मत्ताविव धावतः ॥ ००५ ॥

ततोऽभिसृत्य तैर्विप्रैः सर्वैराश्रमवासिभिः ।
परिवार्य समाश्वास्य समानीतौ स्वमाश्रमम् ॥ ००६ ॥

तत्र भार्यासहायः स वृतो वृद्धैस्तपोधनैः ।
आश्वासितो विचित्रार्थैः पूर्वराज्ञां कथाश्रयैः ॥ ००७ ॥

ततस्तौ पुनराश्वस्तौ वृद्धौ पुत्रदिदृक्षया ।
बाल्ये वृत्तानि पुत्रस्य स्मरन्तौ भृशदुःखितौ ॥ ००८ ॥

पुनरुक्त्वा च करुणां वाचं तौ शोककर्शितौ ।
हा पुत्र हा साध्वि वधूः क्वासि क्वासीत्यरोदताम् ॥ ००९ ॥

सुवर्चा उवाच ॥

यथास्य भार्या सावित्री तपसा च दमेन च ।
आचारेण च संयुक्ता तथा जीवति सत्यवान् ॥ ०१० ॥

गौतम उवाच ॥

वेदाः साङ्गा मयाधीतास्तपो मे सञ्चितं महत् ।
कौमारं ब्रह्मचर्यं मे गुरवोऽग्निश्च तोषिताः ॥ ०११ ॥

समाहितेन चीर्णानि सर्वाण्येव व्रतानि मे ।
वायुभक्षोपवासश्च कुशलानि च यानि मे ॥ ०१२ ॥

अनेन तपसा वेद्मि सर्वं परिचिकीर्षितम् ।
सत्यमेतन्निबोध त्वं ध्रियते सत्यवानिति ॥ ०१३ ॥

शिष्य उवाच ॥

उपाध्यायस्य मे वक्त्राद्यथा वाक्यं विनिःसृतम् ।
नैतज्जातु भवेन्मिथ्या तथा जीवति सत्यवान् ॥ ०१४ ॥

ऋषय ऊचुः ॥

यथास्य भार्या सावित्री सर्वैरेव सुलक्षणैः ।
अवैधव्यकरैर्युक्ता तथा जीवति सत्यवान् ॥ ०१५ ॥

भारद्वाज उवाच ॥

यथास्य भार्या सावित्री तपसा च दमेन च ।
आचारेण च संयुक्ता तथा जीवति सत्यवान् ॥ ०१६ ॥

दाल्भ्य उवाच ॥

यथा दृष्टिः प्रवृत्ता ते सावित्र्याश्च यथा व्रतम् ।
गताहारमकृत्वा च तथा जीवति सत्यवान् ॥ ०१७ ॥

माण्डव्य उवाच ॥

यथा वदन्ति शान्तायां दिशि वै मृगपक्षिणः ।
पार्थिवी च प्रवृत्तिस्ते तथा जीवति सत्यवान्  ॥ ०१८ ॥

धौम्य उवाच ॥

सर्वैर्गुणैरुपेतस्ते यथा पुत्रो जनप्रियः ।
दीर्घायुर्लक्षणोपेतस्तथा जीवति सत्यवान्  ॥ ०१९ ॥

मार्कण्डेय उवाच ॥

एवमाश्वासितस्तैस्तु सत्यवाग्भिस्तपस्विभिः ।
तांस्तान्विगणयन्नर्थानवस्थित इवाभवत्  ॥ ०२० ॥

ततो मुहूर्तात्सावित्री भर्त्रा सत्यवता सह ।
आजगामाश्रमं रात्रौ प्रहृष्टा प्रविवेश ह  ॥ ०२१ ॥

ब्राह्मणा ऊचुः ॥

पुत्रेण सङ्गतं त्वाद्य चक्षुष्मन्तं निरीक्ष्य च ।
सर्वे वयं वै पृच्छामो वृद्धिं ते पृथिवीपते  ॥ ०२२ ॥

समागमेन पुत्रस्य सावित्र्या दर्शनेन च ।
चक्षुषश्चात्मनो लाभात्त्रिभिर्दिष्ट्या विवर्धसे  ॥ ०२३ ॥

सर्वैरस्माभिरुक्तं यत्तथा तन्नात्र संशयः ।
भूयो भूयश्च वृद्धिस्ते क्षिप्रमेव भविष्यति  ॥ ०२४ ॥

मार्कण्डेय उवाच ॥

ततोऽग्निं तत्र सञ्ज्वाल्य द्विजास्ते सर्व एव हि ।

उपासां चक्रिरे पार्थ द्युमत्सेनं महीपतिम्  ॥ ०२५  ॥

शैब्या च सत्यवांश्चैव सावित्री चैकतः स्थिताः ।
सर्वैस्तैरभ्यनुज्ञाता विशोकाः समुपाविशन्  ॥ ०२६  ॥

ततो राज्ञा सहासीनाः सर्वे ते वनवासिनः ।
जातकौतूहलाः पार्थ पप्रच्छुर्नृपतेः सुतम्  ॥ ०२७  ॥

प्रागेव नागतं कस्मात्सभार्येण त्वया विभो ।
विरात्रे चागतं कस्मात्कोऽनुबन्धश्च तेऽभवत्  ॥ ०२८  ॥

संतापितः पिता माता वयं चैव नृपात्मज ।
नाकस्मादिति जानीमस्तत्सर्वं वक्तुमर्हसि  ॥ ०२९  ॥

सत्यवानुवाच  ॥

पित्राहमभ्यनुज्ञातः सावित्रीसहितो गतः ।
अथ मेऽभूच्छिरोदुःखं वने काष्ठानि भिन्दतः  ॥ ०३०  ॥

सुप्तश्चाहं वेदनया चिरमित्युपलक्षये ।
तावत्कालं च न मया सुप्तपूर्वं कदाचन  ॥ ०३१  ॥

सर्वेषामेव भवतां संतापो मा भवेदिति ।
अतो विरात्रागमनं नान्यदस्तीह कारणम्  ॥ ०३२  ॥

गौतम उवाच  ॥

अकस्माच्चक्षुषः प्राप्तिर्द्युमत्सेनस्य ते पितुः ।
नास्य त्वं कारणं वेत्थ सावित्री वक्तुमर्हति  ॥ ०३३  ॥

श्रोतुमिच्छामि सावित्रि त्वं हि वेत्थ परावरम् ।

त्वां हि जानामि सावित्रि सावित्रीमिव तेजसा ॥ ०३४ ॥

त्वमत्र हेतुं जानीषे तस्मात्सत्यं निरुच्यताम् ।
रहस्यं यदि ते नास्ति किञ्चिदत्र वदस्व नः ॥ ०३५ ॥

सावित्र्युवाच ॥

एवमेतद्यथा वेत्थ सङ्कल्पो नान्यथा हि वः ।
न च किञ्चिद्रहस्यं मे श्रूयतां तथ्यमत्र यत् ॥ ०३६ ॥

मृत्युर्मे भर्तुराख्यातो नारदेन महात्मना ।
स चाद्य दिवसः प्राप्तस्ततो नैनं जहाम्यहम् ॥ ०३७ ॥

सुप्तं चैनं यमः साक्षादुपागच्छत्सकिङ्करः ।
स एनमनयद्बद्ध्वा दिशं पितृनिषेविताम् ॥ ०३८ ॥

अस्तौषं तमहं देवं सत्येन वचसा विभुम् ।
पञ्च वै तेन मे दत्ता वराः शृणुत तान्मम ॥ ०३९ ॥

चक्षुषी च स्वराज्यं च द्वौ वरौ श्वशुरस्य मे ।
लब्धं पितुः पुत्रशतं पुत्राणामात्मनः शतम् ॥ ०४० ॥

चतुर्वर्षशतायुर्मे भर्ता लब्धश्च सत्यवान् ।
भर्तुर्हि जीवितार्थं तु मया चीर्णं स्थिरं व्रतम् ॥ ०४१ ॥

एतत्सत्यं मयाख्यातं कारणं विस्तरेण वः ।
यथा वृत्तं सुखोदर्कमिदं दुःखं महन्मम ॥ ०४२ ॥

ऋषय ऊचुः ॥

निमज्जमानं व्यसनैरभिद्रुतं ; कुलं नरेन्द्रस्य तमोमये ह्रदे ।

त्वया सुशीले धृतधर्मपुण्यया ; समुद्धृतं साध्वि पुनः कुलीनया ॥ ०४३ ॥

मार्कण्डेय उवाच ॥

तथा प्रशस्य ह्यभिपूज्य चैव ते ; वरस्त्रियं तामृषयः समागताः ।
नरेन्द्रमामन्त्र्य सपुत्रमञ्जसा ; शिवेन जग्मुर्मुदिताः स्वमालयम् ॥ ०४४ ॥

---

# अध्याय २८३

मार्कण्डेय उवाच ॥

तस्यां रात्र्यां व्यतीतायामुदिते सूर्यमण्डले ।
कृतपूर्वाह्णिकाः सर्वे समेयुस्ते तपोधनाः ॥ ००१ ॥

तदेव सर्वं सावित्र्या महाभाग्यं महर्षयः ।
द्युमत्सेनाय नातृप्यन्कथयन्तः पुनः पुनः ॥ ००२ ॥

ततः प्रकृतयः सर्वाः शाल्वेभ्योऽभ्यागता नृप ।
आचख्युर्निहतं चैव स्वेनामात्येन तं नृपम् ॥ ००३ ॥

तं मन्त्रिणा हतं श्रुत्वा ससहायं सबान्धवम् ।
न्यवेदयन्यथातत्त्वं विद्रुतं च द्विषद्बलम् ॥ ००४ ॥

ऐकमत्यं च सर्वस्य जनस्याथ नृपं प्रति ।
सचक्षुर्वाप्यचक्षुर्वा स नो राजा भवत्विति ॥ ००५ ॥

अनेन निश्चयेनेह वयं प्रस्थापिता नृप ।

प्राप्तानीमानि यानानि चतुरङ्गं च ते बलम् ॥ ००६ ॥

प्रयाहि राजन्भद्रं ते घुष्टस्ते नगरे जयः ।
अध्यास्स्व चिररात्राय पितृपैतामहं पदम् ॥ ००७ ॥

चक्षुष्मन्तं च तं दृष्ट्वा राजानं वपुषान्वितम् ।
मूर्धभिः पतिताः सर्वे विस्मयोत्फुल्ललोचनाः ॥ ००८ ॥

ततोऽभिवाद्य तान्वृद्धान्द्विजानाश्रमवासिनः ।
तैश्चाभिपूजितः सर्वैः प्रययौ नगरं प्रति ॥ ००९ ॥

शैब्या च सह सावित्र्या स्वास्तीर्णेन सुवर्चसा ।
नरयुक्तेन यानेन प्रययौ सेनया वृता ॥ ०१० ॥

ततोऽभिषिषिचुः प्रीत्या द्युमत्सेनं पुरोहिताः ।
पुत्रं चास्य महात्मानं यौवराज्येऽभ्यषेचयन् ॥ ०११ ॥

ततः कालेन महता सावित्र्याः कीर्तिवर्धनम् ।
तद्वै पुत्रशतं जज्ञे शूराणामनिवर्तिनाम् ॥ ०१२ ॥

भ्रातृणां सोदराणां च तथैवास्याभवच्छतम् ।
मद्राधिपस्याश्वपतेर्मालव्यां सुमहाबलम् ॥ ०१३ ॥

एवमात्मा पिता माता श्वश्रूः श्वशुर एव च ।
भर्तुः कुलं च सावित्र्या सर्वं कृच्छ्रात्समुद्धृतम् ॥ ०१४ ॥

तथैवैषापि कल्याणी द्रौपदी शीलसंमता ।
तारयिष्यति वः सर्वान्सावित्रीव कुलाङ्गना ॥ ०१५ ॥

वैशंपायन उवाच ॥

एवं स पाण्डवस्तेन अनुनीतो महात्मना ।
विशोको विज्वरो राजन्काम्यके न्यवसत्तदा ॥ ०१६ ॥

---

# कुण्डलाहरणपर्व

## अध्याय २८४

जनमेजय उवाच ॥

यत्तत्तदा महाब्रह्म.ण्ल्लोमशो वाक्यमब्रवीत् ।
इन्द्रस्य वचनादेत्य पाण्डुपुत्रं युधिष्ठिरम् ॥ ००१ ॥

यच्चापि ते भयं तीव्रं न च कीर्तयसे क्वचित् ।
तच्चाप्यपहरिष्यामि सव्यसाचाविहागते ॥ ००२ ॥

किं नु तद्विदुषां श्रेष्ठ कर्णं प्रति महद्भयम् ।
आसीन्न च स धर्मात्मा कथयामास कस्यचित् ॥ ००३ ॥

वैशंपायन उवाच ॥

अहं ते राजशार्दूल कथयामि कथामिमाम् ।
पृच्छते भरतश्रेष्ठ शुश्रूषस्व गिरं मम ॥ ००४ ॥

द्वादशे समतिक्रान्ते वर्षे प्राप्ते त्रयोदशे ।
पाण्डूनां हितकृच्छक्रः कर्णं भिक्षितुमुद्यतः ॥ ००५ ॥

अभिप्रायमथो ज्ञात्वा महेन्द्रस्य विभावसुः ।

कुण्डलार्थे महाराज सूर्यः कर्णमुपागमत् ॥ ००६ ॥

महार्हे शयने वीरं स्पर्ध्यास्तरणसंवृते ।
शयानमभिविश्वस्तं ब्रह्मण्यं सत्यवादिनम् ॥ ००७ ॥

स्वप्नान्ते निशि राजेन्द्र दर्शयामास रश्मिवान् ।
कृपया परयाविष्टः पुत्रस्नेहाच्च भारत ॥ ००८ ॥

ब्राह्मणो वेदविद्भूत्वा सूर्यो योगाद्धि रूपवान् ।
हितार्थमब्रवीत्कर्णं सान्त्वपूर्वमिदं वचः ॥ ००९ ॥

कर्ण मद्वचनं तात शृणु सत्यभृतां वर ।
ब्रुवतोऽद्य महाबाहो सौहृदात्परमं हितम् ॥ ०१० ॥

उपायास्यति शक्रस्त्वां पाण्डवानां हितेप्सया ।
ब्राह्मणच्छद्मना कर्ण कुण्डलापजिहीर्षया ॥ ०११ ॥

विदितं तेन शीलं ते सर्वस्य जगतस्तथा ।
यथा त्वं भिक्षितः सद्भिर्ददास्येव न याचसे ॥ ०१२ ॥

त्वं हि तात ददास्येव ब्राह्मणेभ्यः प्रयाचितः ।
वित्तं यच्चान्यदप्याहुर्न प्रत्याख्यासि कर्हिचित् ॥ ०१३ ॥

तं त्वामेवंविधं ज्ञात्वा स्वयं वै पाकशासनः ।
आगन्ता कुण्डलार्थाय कवचं चैव भिक्षितुम् ॥ ०१४ ॥

तस्मै प्रयाचमानाय न देये कुण्डले त्वया ।
अनुनेयः परं शक्त्या श्रेय एतद्धि ते परम् ॥ ०१५ ॥

कुण्डलार्थे ब्रुवंस्तात कारणैर्बहुभिस्त्वया ।
अन्यैर्बहुविधैर्वित्तैः स निवार्यः पुनः पुनः ॥ ०१६ ॥

रत्नैः स्त्रीभिस्तथा भोगैर्धनैर्बहुविधैरपि ।
निदर्शनैश्च बहुभिः कुण्डलेप्सुः पुरंदरः ॥ ०१७ ॥

यदि दास्यसि कर्ण त्वं सहजे कुण्डले शुभे ।
आयुषः प्रक्षयं गत्वा मृत्योर्वशमुपेष्यसि ॥ ०१८ ॥

कवचेन च संयुक्तः कुण्डलाभ्यां च मानद ।
अवध्यस्त्वं रणेऽरीणामिति विद्धि वचो मम ॥ ०१९ ॥

अमृतादुत्थितं ह्येतदुभयं रत्नसंभवम् ।
तस्माद्रक्ष्यं त्वया कर्ण जीवितं चेत्प्रियं तव ॥ ०२० ॥

कर्ण उवाच ॥

को मामेवं भवान्प्राह दर्शयन्सौहृदं परम् ।
कामया भगवन्ब्रूहि को भवान्द्विजवेषधृक् ॥ ०२१ ॥

ब्राह्मण उवाच ॥

अहं तात सहस्रांशुः सौहृदात्त्वां निदर्शये ।
कुरुष्वैतद्वचो मे त्वमेतच्छ्रेयः परं हि ते ॥ ०२२ ॥

कर्ण उवाच ॥

श्रेय एव ममात्यन्तं यस्य मे गोपतिः प्रभुः ।
प्रवक्ताद्य हितान्वेषी श‍ृणु चेदं वचो मम ॥ ०२३ ॥

प्रसादये त्वां वरदं प्रणयाच्च ब्रवीम्यहम् ।
न निवार्यो व्रतादस्मादहं यद्यस्मि ते प्रियः ॥ ०२४ ॥

व्रतं वै मम लोकोऽयं वेत्ति कृत्स्नो विभावसो ।
यथाहं द्विजमुख्येभ्यो दद्यां प्राणानपि ध्रुवम्  ॥ ०२५  ॥

यद्यागच्छति शक्रो मां ब्राह्मणच्छद्मनावृतः ।
हितार्थं पाण्डुपुत्राणां खेचरोत्तम भिक्षितुम्  ॥ ०२६  ॥

दास्यामि विबुधश्रेष्ठ कुण्डले वर्म चोत्तमम् ।
न मे कीर्तिः प्रणश्येत त्रिषु लोकेषु विश्रुता  ॥ ०२७  ॥

मद्विधस्यायशस्यं हि न युक्तं प्राणरक्षणम् ।
युक्तं हि यशसा युक्तं मरणं लोकसंमतम्  ॥ ०२८  ॥

सोऽहमिन्द्राय दास्यामि कुण्डले सह वर्मणा ।
यदि मां बलवृत्रघ्नो भिक्षार्थमुपयास्यति  ॥ ०२९  ॥

हितार्थं पाण्डुपुत्राणां कुण्डले मे प्रयाचितुम् ।
तन्मे कीर्तिकरं लोके तस्याकीर्तिर्भविष्यति  ॥ ०३०  ॥

वृणोमि कीर्तिं लोके हि जीवितेनापि भानुमन् ।
कीर्तिमानश्नुते स्वर्गं हीनकीर्तिस्तु नश्यति  ॥ ०३१  ॥

कीर्तिर्हि पुरुषं लोके सञ्जीवयति मातृवत् ।
अकीर्तिर्जीवितं हन्ति जीवतोऽपि शरीरिणः  ॥ ०३२  ॥

अयं पुराणः श्लोको हि स्वयं गीतो विभावसो ।
धात्रा लोकेश्वर यथा कीर्तिरायुर्नरस्य वै  ॥ ०३३  ॥

पुरुषस्य परे लोके कीर्तिरेव परायणम् ।
इह लोके विशुद्धा च कीर्तिरायुर्विवर्धनी  ॥ ०३४  ॥

सोऽहं शरीरजे दत्त्वा कीर्तिं प्राप्स्यामि शाश्वतीम् ।

दत्त्वा च विधिवद्दानं ब्राह्मणेभ्यो यथाविधि ॥ ०३५ ॥

हुत्वा शरीरं सङ्ग्रामे कृत्वा कर्म सुदुष्करम् ।
विजित्य वा परानाजौ यशः प्राप्स्यामि केवलम् ॥ ०३६ ॥

भीतानामभयं दत्त्वा सङ्ग्रामे जीवितार्थिनाम् ।
वृद्धान्बालान्द्विजातींश्च मोक्षयित्वा महाभयात् ॥ ०३७ ॥

प्राप्स्यामि परमं लोके यशः स्वर्भानुसूदन ।
जीवितेनापि मे रक्ष्या कीर्तिस्तद्विद्धि मे व्रतम् ॥ ०३८ ॥

सोऽहं दत्त्वा मघवते भिक्षामेतामनुत्तमाम् ।
ब्राह्मणच्छद्मिने देव लोके गन्ता परां गतिम् ॥ ०३९ ॥

---

# अध्याय २८५

सूर्य उवाच ॥

माहितं कर्ण कार्षीस्त्वमात्मनः सुहृदां तथा ।
पुत्राणामथ भार्याणामथो मातुरथो पितुः ॥ ००१ ॥

शरीरस्याविरोधेन प्राणिनां प्राणभृद्वर ।
इष्यते यशसः प्राप्तिः कीर्तिश्च त्रिदिवे स्थिरा ॥ ००२ ॥

यस्त्वं प्राणविरोधेन कीर्तिमिच्छसि शाश्वतीम् ।
सा ते प्राणान्समादाय गमिष्यति न संशयः ॥ ००३ ॥

जीवतां कुरुते कार्यं पिता माता सुतास्तथा ।

ये चान्ये बान्धवाः केचिल्लोकेऽस्मिन्पुरुषर्षभ ॥ ००४ ॥

राजानश्च नरव्याघ्र पौरुषेण निबोध तत् ॥ ००४ ॥

कीर्तिश्च जीवतः साध्वी पुरुषस्य महाद्युते ।
मृतस्य कीर्त्या किं कार्यं भस्मीभूतस्य देहिनः ॥ ००५ ॥

मृतः कीर्तिं न जानाति जीवन्कीर्तिं समश्नुते ॥ ००५ ॥

मृतस्य कीर्तिर्मर्त्यस्य यथा माला गतायुषः ।
अहं तु त्वां ब्रवीम्येतद्भक्तोऽसीति हितेप्सया ॥ ००६ ॥

भक्तिमन्तो हि मे रक्ष्या इत्येतेनापि हेतुना ।
भक्तोऽयं परया भक्त्या मामित्येव महाभुज ॥ ००७ ॥

ममापि भक्तिरुत्पन्ना स त्वं कुरु वचो मम ॥ ००७ ॥

अस्ति चात्र परं किञ्चिदध्यात्मं देवनिर्मितम् ।
अतश्च त्वां ब्रवीम्येतत्क्रियतामविशङ्कया ॥ ००८ ॥

देवगुह्यं त्वया ज्ञातुं न शक्यं पुरुषर्षभ ।
तस्मान्नाख्यामि ते गुह्यं काले वेत्स्यति तद्भवान् ॥ ००९ ॥

पुनरुक्तं च वक्ष्यामि त्वं राधेय निबोध तत् ।
मास्मै ते कुण्डले दद्या भिक्षवे वज्रपाणये ॥ ०१० ॥

शोभसे कुण्डलाभ्यां हि रुचिराभ्यां महाद्युते ।
विशाखयोर्मध्यगतः शशीव विमलो दिवि ॥ ०११ ॥

कीर्तिश्च जीवतः साध्वी पुरुषस्येति विद्धि तत् ।
प्रत्याख्येयस्त्वया तात कुण्डलार्थे पुरंदरः ॥ ०१२ ॥

शक्या बहुविधैर्वाक्यैः कुण्डलेप्सा त्वयानघ ।
विहन्तुं देवराजस्य हेतुयुक्तैः पुनः पुनः ॥ ०१३ ॥

उपपत्त्युपपन्नार्थैर्माधुर्यकृतभूषणैः ।
पुरंदरस्य कर्ण त्वं बुद्धिमेतामपानुद ॥ ०१४ ॥

त्व हि नित्यं नरव्याघ्र स्पर्धसे सव्यसाचिना ।
सव्यसाची त्वया चैव युधि शूरः समेष्यति ॥ ०१५ ॥

न तु त्वामर्जुनः शक्तः कुण्डलाभ्यां समन्वितम् ।
विजेतुं युधि यद्यस्य स्वयमिन्द्रः शरो भवेत् ॥ ०१६ ॥

तस्मान्न देये शक्राय त्वयैते कुण्डले शुभे ।
सङ्ग्रामे यदि निर्जेतुं कर्ण कामयसेऽर्जुनम् ॥ ०१७ ॥

---

# अध्याय २८६

कर्ण उवाच ॥

भगवन्तमहं भक्तो यथा मां वेत्थ गोपते ।
तथा परमतिग्मांशो नान्यं देवं कथञ्चन ॥ ००१ ॥

न मे दारा न मे पुत्रा न चात्मा सुहृदो न च ।
तथेष्टा वै सदा भक्त्या यथा त्वं गोपते मम ॥ ००२ ॥

इष्टानां च महात्मानो भक्तानां च न संशयः ।
कुर्वन्ति भक्तिमिष्टां च जानीषे त्वं च भास्कर ॥ ००३ ॥

इष्टो भक्तश्च मे कर्णो न चान्यद्दैवतं दिवि ।
जानीत इति वै कृत्वा भगवानाह मद्धितम्  ॥ ००४  ॥

भूयश्च शिरसा याचे प्रसाद्य च पुनः पुनः ।
इति ब्रवीमि तिग्मांशो त्वं तु मे क्षन्तुमर्हसि  ॥ ००५  ॥

बिभेमि न तथा मृत्योर्यथा बिभ्येऽनृतादहम् ।
विशेषेण द्विजातीनां सर्वेषां सर्वदा सताम्  ॥ ००६  ॥

प्रदाने जीवितस्यापि न मेऽत्रास्ति विचारणा  ॥ ००६  ॥

यच्च मामात्थ देव त्वं पाण्डवं फल्गुनं प्रति ।
व्येतु संतापजं दुःखं तव भास्कर मानसम्  ॥ ००७  ॥

अर्जुनं प्रति मां चैव विजेष्यामि रणेऽर्जुनम्  ॥ ००७  ॥

तवापि विदितं देव ममाप्यस्त्रबलं महत् ।
जामदग्न्यादुपात्तं यत्तथा द्रोणान्महात्मनः  ॥ ००८  ॥

इदं त्वमनुजानीहि सुरश्रेष्ठ व्रतं मम ।
भिक्षते वज्रिणे दद्यामपि जीवितमात्मनः  ॥ ००९  ॥

सूर्य उवाच  ॥

यदि तात ददास्येते वज्रिणे कुण्डले शुभे ।
त्वमप्येनमथो ब्रूया विजयार्थं महाबल  ॥ ०१०  ॥

नियमेन प्रदद्यास्त्वं कुण्डले वै शतक्रतोः ।
अवध्यो ह्यसि भूतानां कुण्डलाभ्यां समन्वितः  ॥ ०११  ॥

अर्जुनेन विनाशं हि तव दानवसूदनः ।
प्रार्थयानो रणे वत्स कुण्डले ते जिहीर्षति ॥ ०१२ ॥

स त्वमप्येनमाराध्य सूनृताभिः पुनः पुनः ।
अभ्यर्थयेथा देवेशममोघार्थं पुरंदरम् ॥ ०१३ ॥

अमोघां देहि मे शक्तिममित्रविनिबर्हिणीम् ।
दास्यामि ते सहस्राक्ष कुण्डले वर्म चोत्तमम् ॥ ०१४ ॥

इत्येवं नियमेन त्वं दद्याः शक्राय कुण्डले ।
तया त्वं कर्ण सङ्ग्रामे हनिष्यसि रणे रिपून् ॥ ०१५ ॥

नाहत्वा हि महाबाहो शत्रूनेति करं पुनः ।
सा शक्तिर्देवराजस्य शतशोऽथ सहस्रशः ॥ ०१६ ॥

वैशंपायन उवाच ॥

एवमुक्त्वा सहस्रांशुः सहसान्तरधीयत ।
ततः सूर्याय जप्यान्ते कर्णः स्वप्नं न्यवेदयत् ॥ ०१७ ॥

यथादृष्टं यथातत्त्वं यथोक्तमुभयोर्निशि ।
तत्सर्वमानुपूर्व्येण शशंसास्मै वृषस्तदा ॥ ०१८ ॥

तच्छ्रुत्वा भगवान्देवो भानुः स्वर्भानुसूदनः ।
उवाच तं तथेत्येव कर्णं सूर्यः स्मयन्निव ॥ ०१९ ॥

ततस्तत्त्वमिति ज्ञात्वा राधेयः परवीरहा ।
शक्तिमेवाभिकाङ्क्षन्वै वासवं प्रत्यपालयत् ॥ ०२० ॥

# अध्याय २८७

जनमेजय उवाच ॥

किं तद्गुह्यं न चाख्यातं कर्णायेहोष्णरश्मिना ।
कीदृशे कुण्डले ते च कवचं चैव कीदृशम् ॥ ००१ ॥

कुतश्च कवचं तस्य कुण्डले चैव सत्तम ।
एतदिच्छाम्यहं श्रोतुं तन्मे ब्रूहि तपोधन ॥ ००२ ॥

वैशंपायन उवाच ॥

अयं राजन्ब्रवीम्येतद्यत्तद्गुह्यं विभावसोः ।
यादृशे कुण्डले चैव कवचं चैव यादृशम् ॥ ००३ ॥

कुन्तिभोजं पुरा राजन्ब्राह्मणः समुपस्थितः ।
तिग्मतेजा महाप्रांशुः श्मश्रुदण्डजटाधरः ॥ ००४ ॥

दर्शनीयोऽनवद्याङ्गस्तेजसा प्रज्वलन्निव ।
मधुपिङ्गो मधुरवाक्तपःस्वाध्यायभूषणः ॥ ००५ ॥

स राजानं कुन्तिभोजमब्रवीत्सुमहातपाः ।
भिक्षामिच्छाम्यहं भोक्तुं तव गेहे विमत्सर ॥ ००६ ॥

न मे व्यलीकं कर्तव्यं त्वया वा तव चानुगैः ।
एवं वत्स्यामि ते गेहे यदि ते रोचतेऽनघ ॥ ००७ ॥

यथाकामं च गच्छेयमागच्छेयं तथैव च ।
शय्यासने च मे राजन्नापराध्येत कश्चन ॥ ००८ ॥

तमब्रवीत्कुन्तिभोजः प्रीतियुक्तमिदं वचः ।

एवमस्तु परं चेति पुनश्चैनमथाब्रवीत्  ॥ ००९  ॥

मम कन्या महाब्रह्मन्पृथा नाम यशस्विनी ।
शीलवृत्तान्विता साध्वी नियता न च मानिनी  ॥ ०१०  ॥

उपस्थास्यति सा त्वां वै पूजयानवमन्य च ।
तस्याश्च शीलवृत्तेन तुष्टिं समुपयास्यसि  ॥ ०११  ॥

एवमुक्त्वा तु तं विप्रमभिपूज्य यथाविधि ।
उवाच कन्यामभ्येत्य पृथां पृथुललोचनाम्  ॥ ०१२  ॥

अयं वत्से महाभागो ब्राह्मणो वस्तुमिच्छति ।
मम गेहे मया चास्य तथेत्येवं प्रतिश्रुतम्  ॥ ०१३  ॥

त्वयि वत्से पराश्वस्य ब्राह्मणस्याभिराधनम् ।
तन्मे वाक्यं न मिथ्या त्वं कर्तुमर्हसि कर्हिचित्  ॥ ०१४  ॥

अयं तपस्वी भगवान्स्वाध्यायनियतो द्विजः ।
यद्यद्ब्रूयान्महातेजास्तत्तद्देयममत्सरात्  ॥ ०१५  ॥

ब्राह्मणा हि परं तेजो ब्राह्मणा हि परं तपः ।
ब्राह्मणानां नमस्कारैः सूर्यो दिवि विराजते  ॥ ०१६  ॥

अमानयन्हि मानार्हान्वातापिश्च महासुरः ।
निहतो ब्रह्मदण्डेन तालजङ्घस्तथैव च  ॥ ०१७  ॥

सोऽयं वत्से महाभार आहितस्त्वयि सांप्रतम् ।
त्वं सदा नियता कुर्या ब्राह्मणस्याभिराधनम्  ॥ ०१८  ॥

जानामि प्रणिधानं ते बाल्यात्प्रभृति नन्दिनि ।
ब्राह्मणेष्विह सर्वेषु गुरुबन्धुषु चैव ह  ॥ ०१९  ॥

तथा प्रेष्येषु सर्वेषु मित्रसंबन्धिमातृषु ।
मयि चैव यथावत्त्वं सर्वमादृत्य वर्तसे ॥ ०२० ॥

न ह्यतुष्टो जनोऽस्तीह पुरे चान्तःपुरे च ते ।
सम्यग्वृत्त्यानवद्याङ्गि तव भृत्यजनेष्वपि ॥ ०२१ ॥

संदेष्टव्यां तु मन्ये त्वां द्विजातिं कोपनं प्रति ।
पृथे बालेति कृत्वा वै सुता चासि ममेति च ॥ ०२२ ॥

वृष्णीनां त्वं कुले जाता शूरस्य दयिता सुता ।
दत्ता प्रीतिमता मह्यं पित्रा बाला पुरा स्वयम् ॥ ०२३ ॥

वसुदेवस्य भगिनी सुतानां प्रवरा मम ।
अग्र्यमग्रे प्रतिज्ञाय तेनासि दुहिता मम ॥ ०२४ ॥

तादृशे हि कुले जाता कुले चैव विवर्धिता ।
सुखात्सुखमनुप्राप्ता ह्रदाद्ध्रदमिवागता ॥ ०२५ ॥

दौष्कुलेया विशेषेण कथञ्चित्प्रग्रहं गताः ।
बालभावाद्विकुर्वन्ति प्रायशः प्रमदाः शुभे ॥ ०२६ ॥

पृथे राजकुले जन्म रूपं चाद्भुतदर्शनम् ।
तेन तेनासि संपन्ना समुपेता च भामिनी ॥ ०२७ ॥

सा त्वं दर्पं परित्यज्य दम्भं मानं च भामिनि ।
आराध्य वरदं विप्रं श्रेयसा योक्ष्यसे पृथे ॥ ०२८ ॥

एवं प्राप्स्यसि कल्याणि कल्याणमनघे ध्रुवम् ।
कोपिते तु द्विजश्रेष्ठे कृत्स्नं दह्येत मे कुलम् ॥ ०२९ ॥

# अध्याय २८८

कुन्त्युवाच ॥

ब्राह्मणं यन्त्रिता राजनुपस्थास्यामि पूजया ।
यथाप्रतिज्ञं राजेन्द्र न च मिथ्या ब्रवीम्यहम् ॥ ००१ ॥

एष चैव स्वभावो मे पूजयेयं द्विजानिति ।
तव चैव प्रियं कार्यं श्रेयश्चैतत्परं मम ॥ ००२ ॥

यद्येवैष्यति सायाह्ने यदि प्रातरथो निशि ।
यद्यर्धरात्रे भगवान्न मे कोपं करिष्यति ॥ ००३ ॥

लाभो ममैष राजेन्द्र यद्वै पूजयती द्विजान् ।
आदेशे तव तिष्ठन्ती हितं कुर्यां नरोत्तम ॥ ००४ ॥

विस्रब्धो भव राजेन्द्र न व्यलीकं द्विजोत्तमः ।
वसन्प्राप्स्यति ते गेहे सत्यमेतद्ब्रवीमि ते ॥ ००५ ॥

यत्प्रियं च द्विजस्यास्य हितं चैव तवानघ ।
यतिष्यामि तथा राजन्व्येतु ते मानसो ज्वरः ॥ ००६ ॥

ब्राह्मणा हि महाभागाः पूजिताः पृथिवीपते ।
तारणाय समर्थाः स्युर्विपरीते वधाय च ॥ ००७ ॥

साहमेतद्विजानन्ती तोषयिष्ये द्विजोत्तमम् ।
न मत्कृते व्यथां राजन्प्राप्स्यसि द्विजसत्तमात् ॥ ००८ ॥

अपराधे हि राजेन्द्र राज्ञामश्रेयसे द्विजाः ।
भवन्ति च्यवनो यद्वत्सुकन्यायाः कृते पुरा ॥ ००९ ॥

नियमेन परेणाहमुपस्थास्ये द्विजोत्तमम् ।
यथा त्वया नरेन्द्रेदं भाषितं ब्राह्मणं प्रति ॥ ०१० ॥

राजोवाच ॥

एवमेतत्त्वया भद्रे कर्तव्यमविशङ्कया ।
मद्धितार्थं कुलार्थं च तथात्मार्थं च नन्दिनि ॥ ०११ ॥

वैशंपायन उवाच ॥

एवमुक्त्वा तु तां कन्यां कुन्तिभोजो महायशाः ।
पृथां परिददौ तस्मै द्विजाय सुतवत्सलः ॥ ०१२ ॥

इयं ब्रह्मन्मम सुता बाला सुखविवर्धिता ।
अपराध्येत यत्किञ्चिन्न तत्कार्यं हृदि त्वया ॥ ०१३ ॥

द्विजातयो महाभागा वृद्धबालतपस्विषु ।
भवन्त्यक्रोधनाः प्रायो विरुद्धेष्वपि नित्यदा ॥ ०१४ ॥

सुमहत्यपराधेऽपि क्षान्तिः कार्या द्विजातिभिः ।
यथाशक्ति यथोत्साहं पूजा ग्राह्या द्विजोत्तम ॥ ०१५ ॥

तथेति ब्राह्मणेनोक्ते स राजा प्रीतमानसः ।
हंसचन्द्रांशुसङ्काशं गृहमस्य न्यवेदयत् ॥ ०१६ ॥

तत्राग्निशरणे क्लृप्तमासनं तस्य भानुमत् ।
आहारादि च सर्वं तत्तथैव प्रत्यवेदयत् ॥ ०१७ ॥

निक्षिप्य राजपुत्री तु तन्द्रीं मानं तथैव च ।
आतस्थे परमं यत्नं ब्राह्मणस्याभिराधने ॥ ०१८ ॥

तत्र सा ब्राह्मणं गत्वा पृथा शौचपरा सती ।
विधिवत्परिचारार्हं देववत्पर्यतोषयत् ॥ ०१९ ॥

---

# अध्याय २८९

वैशंपायन उवाच ॥

सा तु कन्या महाराज ब्राह्मणं संशितव्रतम् ।
तोषयामास शुद्धेन मनसा संशितव्रता ॥ ००१ ॥

प्रातरायास्य इत्युक्त्वा कदाचिद्द्विजसत्तमः ।
तत आयाति राजेन्द्र साये रात्रावथो पुनः ॥ ००२ ॥

तं च सर्वासु वेलासु भक्ष्यभोज्यप्रतिश्रयैः ।
पूजयामास सा कन्या वर्धमानैस्तु सर्वदा ॥ ००३ ॥

अन्नादिसमुदाचारः शय्यासनकृतस्तथा ।
दिवसे दिवसे तस्य वर्धते न तु हीयते ॥ ००४ ॥

निर्भर्त्सनापवादैश्च तथैवाप्रियया गिरा ।
ब्राह्मणस्य पृथा राजन्न चकाराप्रियं तदा ॥ ००५ ॥

व्यस्ते काले पुनश्चैति न चैति बहुशो द्विजः ।
दुर्लभ्यमपि चैवान्नं दीयतामिति सोऽब्रवीत् ॥ ००६ ॥

कृतमेव च तत्सर्वं पृथा तस्मै न्यवेदयत् ।
शिष्यवत्पुत्रवच्चैव स्वसृवच्च सुसंयता ॥ ००७ ॥

यथोपजोषं राजेन्द्र द्विजातिप्रवरस्य सा ।
प्रीतिमुत्पादयामास कन्या यत्नैरनिन्दिता ॥ ००८ ॥

तस्यास्तु शीलवृत्तेन तुतोष द्विजसत्तमः ।
अवधानेन भूयोऽस्य परं यत्नमथाकरोत् ॥ ००९ ॥

तां प्रभाते च सायें च पिता पप्रच्छ भारत ।
अपि तुष्यति ते पुत्रि ब्राह्मणः परिचर्यया ॥ ०१० ॥

तं सा परममित्येव प्रत्युवाच यशस्विनी ।
ततः प्रीतिमवापाग्र्यां कुन्तिभोजो महामनाः ॥ ०११ ॥

ततः संवत्सरे पूर्णे यदासौ जपतां वरः ।
नापश्यद्दुष्कृतं किञ्चित्पृथायाः सौहृदे रतः ॥ ०१२ ॥

ततः प्रीतमना भूत्वा स एनां ब्राह्मणोऽब्रवीत् ।
प्रीतोऽस्मि परमं भद्रे परिचारेण ते शुभे ॥ ०१३ ॥

वरान्वृणीष्व कल्याणि दुरापान्मानुषैरिह ।
यैस्त्वं सीमन्तिनीः सर्वा यशसाभिभविष्यसि ॥ ०१४ ॥

कुन्त्युवाच ॥

कृतानि मम सर्वाणि यस्या मे वेदवित्तम ।
त्वं प्रसन्नः पिता चैव कृतं विप्र वरैर्मम ॥ ०१५ ॥

ब्राह्मण उवाच ॥

यदि नेच्छसि भद्रे त्वं वरं मत्तः शुचिस्मिते ।
इमं मन्त्रं गृहाण त्वमाह्वानाय दिवौकसाम्  ॥ ०१६  ॥

यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि ।
तेन तेन वशे भद्रे स्थातव्यं ते भविष्यति  ॥ ०१७  ॥

अकामो वा सकामो वा न स नैष्यति ते वशम् ।
विबुधो मन्त्रसंशान्तो वाक्ये भृत्य इवानतः  ॥ ०१८  ॥

वैशंपायन उवाच  ॥

न शशाक द्वितीयं सा प्रत्याख्यातुमनिन्दिता ।
तं वै द्विजातिप्रवरं तदा शापभयान्नृप  ॥ ०१९  ॥

ततस्तामनवद्याङ्गीं ग्राहयामास वै द्विजः ।
मन्त्रग्रामं तदा राजन्नथर्वशिरसि श्रुतम्  ॥ ०२०  ॥

तं प्रदाय तु राजेन्द्र कुन्तिभोजमुवाच ह ।
उषितोऽस्मि सुखं राजन्कन्यया परितोषितः  ॥ ०२१  ॥

तव गेहे सुविहितः सदा सुप्रतिपूजितः ।
साधयिष्यामहे तावदित्युक्त्वान्तरधीयत  ॥ ०२२  ॥

स तु राजा द्विजं दृष्ट्वा तत्रैवान्तर्हितं तदा ।
बभूव विस्मयाविष्टः पृथां च समपूजयत्  ॥ ०२३  ॥

# अध्याय २९०

वैशंपायन उवाच ॥

गते तस्मिन्द्विजश्रेष्ठे कस्मिंश्चित्कालपर्यये ।
चिन्तयामास सा कन्या मन्त्रग्रामबलाबलम् ॥ ००१ ॥

अयं वै कीदृशस्तेन मम दत्तो महात्मना ।
मन्त्रग्रामो बलं तस्य ज्ञास्ये नातिचिरादिव ॥ ००२ ॥

एवं सञ्चिन्तयन्ती सा ददर्शर्तुं यदृच्छया ।
व्रीडिता साभवद्बाला कन्याभावे रजस्वला ॥ ००३ ॥

अथोद्यन्तं सहस्रांशुं पृथा दीप्तं ददर्श ह ।
न ततर्प च रूपेण भानोः संध्यागतस्य सा ॥ ००४ ॥

तस्या दृष्टिरभूद्दिव्या सापश्यद्दिव्यदर्शनम् ।
आमुक्तकवचं देवं कुण्डलाभ्यां विभूषितम् ॥ ००५ ॥

तस्याः कौतूहलं त्वासीन्मन्त्रं प्रति नराधिप ।
आह्वानमकरोत्साथ तस्य देवस्य भामिनी ॥ ००६ ॥

प्राणानुपस्पृश्य तदा आजुहाव दिवाकरम् ।
आजगाम ततो राजंस्त्वरमाणो दिवाकरः ॥ ००७ ॥

मधुपिङ्गो महाबाहुः कम्बुग्रीवो हसन्निव ।
अङ्गदी बद्धमुकुटो दिशः प्रज्वालयन्निव ॥ ००८ ॥

योगात्कृत्वा द्विधात्मानमाजगाम तताप च ।
आबभाषे ततः कुन्तीं साम्ना परमवल्गुना ॥ ००९ ॥

आगतोऽस्मि वशं भद्रे तव मन्त्रबलात्कृतः ।

किं करोम्यवशो राज्ञि ब्रूहि कर्ता तदस्मि ते ॥ ०१० ॥

कुन्त्युवाच ॥

गम्यतां भगवंस्तत्र यतोऽसि समुपागतः ।
कौतूहलात्समाहूतः प्रसीद भगवन्निति ॥ ०११ ॥

सूर्य उवाच ॥

गमिष्येऽहं यथा मां त्वं ब्रवीषि तनुमध्यमे ।
न तु देवं समाहूय न्याय्यं प्रेषयितुं वृथा ॥ ०१२ ॥

तवाभिसंधिः सुभगे सूर्यात्पुत्रो भवेदिति ।
वीर्येणाप्रतिमो लोके कवची कुण्डलीति च ॥ ०१३ ॥

सा त्वमात्मप्रदानं वै कुरुष्व गजगामिनि ।
उत्पत्स्यति हि पुत्रस्ते यथासङ्कल्पमङ्गने ॥ ०१४ ॥

अथ गच्छाम्यहं भद्रे त्वयासङ्गम्य सुस्मिते ।
शप्स्यामि त्वामहं क्रुद्धो ब्राह्मणं पितरं च ते ॥ ०१५ ॥

त्वत्कृते तान्प्रधक्ष्यामि सर्वानपि न संशयः ।
पितरं चैव ते मूढं यो न वेत्ति तवानयम् ॥ ०१६ ॥

तस्य च ब्राह्मणस्याद्य योऽसौ मन्त्रमदात्तव ।
शीलवृत्तमविज्ञाय धास्यामि विनयं परम् ॥ ०१७ ॥

एते हि विबुधाः सर्वे पुरंदरमुखा दिवि ।
त्वया प्रलब्धं पश्यन्ति स्मयन्त इव भामिनि ॥ ०१८ ॥

पश्य चैनान्सुरगणान्दिव्यं चक्षुरिदं हि ते ।

पूर्वमेव मया दत्तं दृष्टवत्यसि येन माम् ॥ ०१९ ॥

वैशंपायन उवाच ॥

ततोऽपश्यत्त्रिदशान्राजपुत्री ; सर्वानेव स्वेषु धिष्ण्येषु खस्थान् ।
प्रभासन्तं भानुमन्तं महान्तं ; यथादित्यं रोचमानं तथैव ॥ ०२० ॥

सा तान्दृष्ट्वा व्रीडमानेव बाला ; सूर्यं देवी वचनं प्राह भीता ।
गच्छ त्वं वै गोपते स्वं विमानं ; कन्याभावाद्दुःख एषोपचारः ॥ ०२१ ॥

पिता माता गुरवश्चैव येऽन्ये ; देहस्यास्य प्रभवन्ति प्रदाने ।
नाहं धर्मं लोपयिष्यामि लोके ; स्त्रीणां वृत्तं पूज्यते देहरक्षा ॥ ०२२ ॥

मया मन्त्रबलं ज्ञातुमाहूतस्त्वं विभावसो ।
बाल्याद्बालेति कृत्वा तत्क्षन्तुमर्हसि मे विभो ॥ ०२३ ॥

सूर्य उवाच ॥

बालेति कृत्वानुनयं तवाहं ; ददानि नान्यानुनयं लभेत ।
आत्मप्रदानं कुरु कुन्तिकन्ये ; शान्तिस्तवैवं हि भवेच्च भीरु ॥ ०२४ ॥

न चापि युक्तं गन्तुं हि मया मिथ्याकृतेन वै ।
गमिष्याम्यनवद्याङ्गि लोके समवहास्यताम् ॥ ०२५ ॥

सर्वेषां विबुधानां च वक्तव्यः स्यामहं शुभे ॥ ०२५ ॥

सा त्वं मया समागच्छ पुत्रं लप्स्यसि मादृशम् ।
विशिष्टा सर्वलोकेषु भविष्यसि च भामिनि ॥ ०२६ ॥

# अध्याय २९१

वैशंपायन उवाच ॥

सा तु कन्या बहुविधं ब्रुवन्ती मधुरं वचः ।
अनुनेतुं सहस्रांशुं न शशाक मनस्विनी ॥ ००१ ॥

न शशाक यदा बाला प्रत्याख्यातुं तमोनुदम् ।
भीता शापात्ततो राजन्दध्यौ दीर्घमथान्तरम् ॥ ००२ ॥

अनागसः पितुः शापो ब्राह्मणस्य तथैव च ।
मन्निमित्तः कथं न स्यात्क्रुद्धादस्माद्विभावसोः ॥ ००३ ॥

बालेनापि सता मोहाद्भृशं सापह्नवान्यपि ।
नात्यासादयितव्यानि तेजांसि च तपांसि च ॥ ००४ ॥

साहमद्य भृशं भीता गृहीता च करे भृशम् ।
कथं त्वकार्यं कुर्यां वै प्रदानं ह्यात्मनः स्वयम् ॥ ००५ ॥

सैवं शापपरित्रस्ता बहु चिन्तयती तदा ।
मोहेनाभिपरीताङ्गी स्मयमाना पुनः पुनः ॥ ००६ ॥

तं देवमब्रवीद्भीता बन्धूनां राजसत्तम ।
व्रीडाविह्वलया वाचा शापत्रस्ता विशां पते ॥ ००७ ॥

कुन्त्युवाच ॥

पिता मे ध्रियते देव माता चान्ये च बान्धवाः ।
न तेषु ध्रियमाणेषु विधिलोपो भवेदयम् ॥ ००८ ॥

त्वया मे सङ्गमो देव यदि स्याद्विधिवर्जितः ।

मन्निमित्तं कुलस्यास्य लोके कीर्तिर्नशेत्ततः ॥ ००९ ॥

अथ वा धर्ममेतं त्वं मन्यसे तपतां वर ।
ऋते प्रदानाद्बन्धुभ्यस्तव कामं करोम्यहम् ॥ ०१० ॥

आत्मप्रदानं दुर्धर्ष तव कृत्वा सती त्वहम् ।
त्वयि धर्मो यशश्चैव कीर्तिरायुश्च देहिनाम् ॥ ०११ ॥

सूर्य उवाच ॥

न ते पिता न ते माता गुरवो वा शुचिस्मिते ।
प्रभवन्ति वरारोहे भद्रं ते श्र‍ृणु मे वचः ॥ ०१२ ॥

सर्वान्कामयते यस्मात्कनेर्धातोश्च भामिनि ।
तस्मात्कन्येह सुश्रोणि स्वतन्त्रा वरवर्णिनि ॥ ०१३ ॥

नाधर्मश्चरितः कश्चित्त्वया भवति भामिनि ।
अधर्मं कुत एवाहं चरेयं लोककाम्यया ॥ ०१४ ॥

अनावृताः स्त्रियः सर्वा नराश्च वरवर्णिनि ।
स्वभाव एष लोकानां विकारोऽन्य इति स्मृतः ॥ ०१५ ॥

सा मया सह सङ्गम्य पुनः कन्या भविष्यसि ।
पुत्रश्च ते महाबाहुर्भविष्यति महायशाः ॥ ०१६ ॥

कुन्त्युवाच ॥

यदि पुत्रो मम भवेत्त्वत्तः सर्वतमोपह ।
कुण्डली कवची शूरो महाबाहुर्महाबलः ॥ ०१७ ॥

सूर्य उवाच ॥

भविष्यति महाबाहुः कुण्डली दिव्यवर्मभृत् ।
उभयं चामृतमयं तस्य भद्रे भविष्यति ॥ ०१८ ॥

कुन्त्युवाच ॥

यद्येतदमृतादस्ति कुण्डले वर्म चोत्तमम् ।
मम पुत्रस्य यं वै त्वं मत्त उत्पादयिष्यसि ॥ ०१९ ॥

अस्तु मे सङ्गमो देव यथोक्तं भगवंस्त्वया ।
त्वद्वीर्यरूपसत्त्वौजा धर्मयुक्तो भवेत्स च ॥ ०२० ॥

सूर्य उवाच ॥

अदित्या कुण्डले राज्ञि दत्ते मे मत्तकाशिनि ।
तेऽस्य दास्यामि वै भीरु वर्म चैवेदमुत्तमम् ॥ ०२१ ॥

पृथोवाच ॥

परमं भगवन्देव सङ्गमिष्ये त्वया सह ।
यदि पुत्रो भवेदेवं यथा वदसि गोपते ॥ ०२२ ॥

वैशंपायन उवाच ॥

तथेत्युक्त्वा तु तां कुन्तीमाविवेश विहङ्गमः ।
स्वर्भानुशत्रुर्योगात्मा नाभ्यां पस्पर्श चैव ताम् ॥ ०२३ ॥

ततः सा विह्वलेवासीत्कन्या सूर्यस्य तेजसा ।
पपाताथ च सा देवी शयने मूढचेतना ॥ ०२४ ॥

सूर्य उवाच ॥

साधयिष्यामि सुश्रोणि पुत्रं वै जनयिष्यसि ।
सर्वशस्त्रभृतां श्रेष्ठं कन्या चैव भविष्यसि ॥ ०२५ ॥

वैशंपायन उवाच ॥

ततः सा व्रीडिता बाला तदा सूर्यमथाब्रवीत् ।
एवमस्त्विति राजेन्द्र प्रस्थितं भूरिवर्चसम् ॥ ०२६ ॥

इति स्मोक्ता कुन्तिराजात्मजा सा ; विवस्वन्तं याचमाना सलज्जा ।
तस्मिन्पुण्ये शयनीये पपात ; मोहाविष्टा भज्यमाना लतेव ॥ ०२७ ॥

तां तिग्मांशुस्तेजसा मोहयित्वा ; योगेनाविष्यात्मसंस्थां चकार ।
न चैवैनां दूषयामास भानुः ; सञ्ज्ञां लेभे भूय एवाथ बाला ॥ ०२८ ॥

---

# अध्याय २९२

वैशंपायन उवाच ॥

ततो गर्भः समभवत्पृथायाः पृथिवीपते ।
शुक्ले दशोत्तरे पक्षे तारापतिरिवाम्बरे ॥ ००१ ॥

सा बान्धवभयाद्बाला तं गर्भं विनिगूहती ।
धारयामास सुश्रोणी न चैनां बुबुधे जनः ॥ ००२ ॥

न हि तां वेद नार्यन्या काचिद्धात्रेयिकामृते ।
कन्यापुरगतां बालां निपुणां परिरक्षणे ॥ ००३ ॥

ततः कालेन सा गर्भं सुषुवे वरवर्णिनी ।
कन्यैव तस्य देवस्य प्रसादादमरप्रभम् ॥ ००४ ॥

तथैव बद्धकवचं कनकोज्ज्वलकुण्डलम् ।
हर्यक्षं वृषभस्कन्धं यथास्य पितरं तथा ॥ ००५ ॥

जातमात्रं च तं गर्भं धात्र्या संमन्त्र्य भामिनी ।
मञ्जूषायामवदधे स्वास्तीर्णायां समन्ततः ॥ ००६ ॥

मधूच्छिष्टस्थितायां सा सुखायां रुदती तथा ।
श्लक्ष्णायां सुपिधानायामश्वनद्यामवासृजत् ॥ ००७ ॥

जानती चाप्यकर्तव्यं कन्याया गर्भधारणम् ।
पुत्रस्नेहेन राजेन्द्र करुणं पर्यदेवयत् ॥ ००८ ॥

समुत्सृजन्ती मञ्जूषामश्वनद्यास्तदा जले ।
उवाच रुदती कुन्ती यानि वाक्यानि तच्छृणु ॥ ००९ ॥

स्वस्ति तेऽस्त्वान्तरिक्षेभ्यः पार्थिवेभ्यश्च पुत्रक ।
दिव्येभ्यश्चैव भूतेभ्यस्तथा तोयचराश्च ये ॥ ०१० ॥

शिवास्ते सन्तु पन्थानो मा च ते परिपन्थिनः ।
आगमाश्च तथा पुत्र भवन्त्वद्रोहचेतसः ॥ ०११ ॥

पातु त्वां वरुणो राजा सलिले सलिलेश्वरः ।
अन्तरिक्षेऽन्तरिक्षस्थः पवनः सर्वगस्तथा ॥ ०१२ ॥

पिता त्वां पातु सर्वत्र तपनस्तपतां वरः ।
येन दत्तोऽसि मे पुत्र दिव्येन विधिना किल ॥ ०१३ ॥

आदित्या वसवो रुद्राः साध्या विश्वे च देवताः ।

मरुतश्च सहेन्द्रेण दिशश्च सदिगीश्वराः ॥ ०१४ ॥

रक्षन्तु त्वां सुराः सर्वे समेषु विषमेषु च ।
वेत्स्यामि त्वां विदेशेऽपि कवचेनोपसूचितम् ॥ ०१५ ॥

धन्यस्ते पुत्र जनको देवो भानुर्विभावसुः ।
यस्त्वां द्रक्ष्यति दिव्येन चक्षुषा वाहिनीगतम् ॥ ०१६ ॥

धन्या सा प्रमदा या त्वां पुत्रत्वे कल्पयिष्यति ।
यस्यास्त्वं तृषितः पुत्र स्तनं पास्यसि देवज ॥ ०१७ ॥

को नु स्वप्नस्तया दृष्टो या त्वामादित्यवर्चसम् ।
दिव्यवर्मसमायुक्तं दिव्यकुण्डलभूषितम् ॥ ०१८ ॥

पद्मायतविशालाक्षं पद्मताम्रतलोज्ज्वलम् ।
सुललाटं सुकेशान्तं पुत्रत्वे कल्पयिष्यति ॥ ०१९ ॥

धन्या द्रक्ष्यन्ति पुत्र त्वां भूमौ संसर्पमाणकम् ।
अव्यक्तकलवाक्यानि वदन्तं रेणुगुण्ठितम् ॥ ०२० ॥

धन्या द्रक्ष्यन्ति पुत्र त्वां पुनर्यौवनगे मुखे ।
हिमवद्वनसंभूतं सिंहं केसरिणं यथा ॥ ०२१ ॥

एवं बहुविधं राजन्विलप्य करुणं पृथा ।
अवासृजत मञ्जूषामश्वनद्यास्तदा जले ॥ ०२२ ॥

रुदती पुत्रशोकार्ता निशीथे कमलेक्षणा ।
धात्र्या सह पृथा राजन्पुत्रदर्शनलालसा ॥ ०२३ ॥

विसर्जयित्वा मञ्जूषां संबोधनभयात्पितुः ।
विवेश राजभवनं पुनः शोकातुरा ततः ॥ ०२४ ॥

मञ्जूषा त्वश्वनद्याः सा ययौ चर्मण्वतीं नदीम् ।
चर्मण्वत्याश्च यमुनां ततो गङ्गां जगाम ह ॥ ०२५ ॥

गङ्गायाः सूतविषयं चम्पामभ्याययौ पुरीम् ।
स मञ्जूषागतो गर्भस्तरङ्गैरुह्यमानकः ॥ ०२६ ॥

अमृतादुत्थितं दिव्यं तत्तु वर्म सकुण्डलम् ।
धारयामास तं गर्भं दैवं च विधिनिर्मितम् ॥ ०२७ ॥

---

# अध्याय २९३

वैशंपायन उवाच ॥

एतस्मिन्नेव काले तु धृतराष्ट्रस्य वै सखा ।
सूतोऽधिरथ इत्येव सदारो जाह्नवीं ययौ ॥ ००१ ॥

तस्य भार्याभवद्राजन्रूपेणासदृशी भुवि ।
राधा नाम महाभागा न सा पुत्रमविन्दत ॥ ००२ ॥

अपत्यार्थे परं यत्नमकरोच्च विशेषतः ॥ ००२ ॥

सा ददर्शाथ मञ्जूषामुह्यमानां यदृच्छया ।
दत्तरक्षाप्रतिसरामन्वालभनशोभिताम् ॥ ००३ ॥

ऊर्मीतरङ्गैर्जाह्नव्याः समानीतामुपह्वरम् ॥ ००३ ॥

सा तां कौतूहलात्प्राप्तां ग्राहयामास भामिनी ।
ततो निवेदयामास सूतस्याधिरथस्य वै ॥ ००४ ॥

स तामुद्धृत्य मञ्जूषामुत्सार्य जलमन्तिकात् ।
यन्त्रैरुद्घाटयामास सोऽपश्यत्तत्र बालकम् ॥ ००५ ॥

तरुणादित्यसङ्काशं हेमवर्मधरं तथा ।
मृष्टकुण्डलयुक्तेन वदनेन विराजता ॥ ००६ ॥

स सूतो भार्यया सार्धं विस्मयोत्फुल्ललोचनः ।
अङ्कमारोप्य तं बालं भार्यां वचनमब्रवीत् ॥ ००७ ॥

इदमत्यद्भुतं भीरु यतो जातोऽस्मि भामिनि ।
दृष्टवान्देवगर्भोऽयं मन्येऽस्मान्समुपागतः ॥ ००८ ॥

अनपत्यस्य पुत्रोऽयं देवैर्दत्तो ध्रुवं मम ।
इत्युक्त्वा तं ददौ पुत्रं राधायै स महीपते ॥ ००९ ॥

प्रतिजग्राह तं राधा विधिवद्दिव्यरूपिणम् ।
पुत्रं कमलगर्भाभं देवगर्भं श्रिया वृतम् ॥ ०१० ॥

पुपोष चैनं विधिवद्ववृधे स च वीर्यवान् ।
ततः प्रभृति चाप्यन्ये प्राभवन्नौरसाः सुताः ॥ ०११ ॥

वसुवर्मधरं दृष्ट्वा तं बालं हेमकुण्डलम् ।
नामास्य वसुषेणेति ततश्चक्रुर्द्विजातयः ॥ ०१२ ॥

एवं स सूतपुत्रत्वं जगामामितविक्रमः ।
वसुषेण इति ख्यातो वृष इत्येव च प्रभुः ॥ ०१३ ॥

स ज्येष्ठपुत्रः सूतस्य ववृधेऽङ्गेषु वीर्यवान् ।

चारेण विदितश्चासीत्पृथाया दिव्यवर्मभृत्  ॥ ०१४  ॥

सूतस्त्वधिरथः पुत्रं विवृद्धं समये ततः ।
दृष्ट्वा प्रस्थापयामास पुरं वारणसाह्वयम्  ॥ ०१५  ॥

तत्रोपसदनं चक्रे द्रोणस्येष्वस्त्रकर्मणि ।
सख्यं दुर्योधनेनैवमगच्छत्स च वीर्यवान्  ॥ ०१६  ॥

द्रोणात्कृपाच्च रामाच्च सोऽस्त्रग्रामं चतुर्विधम् ।
लब्ध्वा लोकेऽभवत्ख्यातः परमेष्वासतां गतः  ॥ ०१७  ॥

संधाय धार्तराष्ट्रेण पार्थानां विप्रिये स्थितः ।
योद्धुमाशंसते नित्यं फल्गुनेन महात्मना  ॥ ०१८  ॥

सदा हि तस्य स्पर्धासीदर्जुनेन विशां पते ।
अर्जुनस्य च कर्णेन यतो दृष्टो बभूव सः  ॥ ०१९  ॥

तं तु कुण्डलिनं दृष्ट्वा वर्मणा च समन्वितम् ।
अवध्यं समरे मत्वा पर्यतप्यद्युधिष्ठिरः  ॥ ०२०  ॥

यदा तु कर्णो राजेन्द्र भानुमन्तं दिवाकरम् ।
स्तौति मध्यंदिने प्राप्ते प्राञ्जलिः सलिले स्थितः  ॥ ०२१  ॥

तत्रैनमुपतिष्ठन्ति ब्राह्मणा धनहेतवः ।
नादेयं तस्य तत्काले किञ्चिदस्ति द्विजातिषु  ॥ ०२२  ॥

तमिन्द्रो ब्राह्मणो भूत्वा भिक्षां देहीत्युपस्थितः ।
स्वागतं चेति राधेयस्तमथ प्रत्यभाषत  ॥ ०२३  ॥

# अध्याय २९४

वैशंपायन उवाच ॥

देवराजमनुप्राप्तं ब्राह्मणच्छद्मना वृषः ।
दृष्ट्वा स्वागतमित्याह न बुबोधास्य मानसम् ॥ ००१ ॥

हिरण्यकण्ठीः प्रमदा ग्रामान्वा बहुगोकुलान् ।
किं ददानीति तं विप्रमुवाचाधिरथिस्ततः ॥ ००२ ॥

ब्राह्मण उवाच ॥

हिरण्यकण्ठ्यः प्रमदा यच्चान्यत्प्रीतिवर्धनम् ।
नाहं दत्तमिहेच्छामि तदर्थिभ्यः प्रदीयताम् ॥ ००३ ॥

यदेतत्सहजं वर्म कुण्डले च तवानघ ।
एतदुत्कृत्य मे देहि यदि सत्यव्रतो भवान् ॥ ००४ ॥

एतदिच्छाम्यहं क्षिप्रं त्वया दत्तं परंतप ।
एष मे सर्वलाभानां लाभः परमको मतः ॥ ००५ ॥

कर्ण उवाच ॥

अवनिं प्रमदा गाश्च निर्वापं बहुवार्षिकम् ।
तत्ते विप्र प्रदास्यामि न तु वर्म न कुण्डले ॥ ००६ ॥

वैशंपायन उवाच ॥

एवं बहुविधैर्वाक्यैर्याच्यमानः स तु द्विजः ।
कर्णेन भरतश्रेष्ठ नान्यं वरमयाचत ॥ ००७ ॥

सान्त्वितश्च यथाशक्ति पूजितश्च यथाविधि ।

नैवान्यं स द्विजश्रेष्ठः कामयामास वै वरम् ॥ ००८ ॥

यदा नान्यं प्रवृणुते वरं वै द्विजसत्तमः ।
तदैनमब्रवीद्भूयो राधेयः प्रहसन्निव ॥ ००९ ॥

सहजं वर्म मे विप्र कुण्डले चामृतोद्भवे ।
तेनावध्योऽस्मि लोकेषु ततो नैतद्ददाम्यहम् ॥ ०१० ॥

विशालं पृथिवीराज्यं क्षेमं निहतकण्टकम् ।
प्रतिगृह्णीष्व मत्तस्त्वं साधु ब्राह्मणपुङ्गव ॥ ०११ ॥

कुण्डलाभ्यां विमुक्तोऽहं वर्मणा सहजेन च ।
गमनीयो भविष्यामि शत्रूणां द्विजसत्तम ॥ ०१२ ॥

यदा नान्यं वरं वव्रे भगवान्पाकशासनः ।
ततः प्रहस्य कर्णस्तं पुनरित्यब्रवीद्वचः ॥ ०१३ ॥

विदितो देवदेवेश प्रागेवासि मम प्रभो ।
न तु न्याय्यं मया दातुं तव शक्र वृथा वरम् ॥ ०१४ ॥

त्वं हि देवेश्वरः साक्षात्त्वया देयो वरो मम ।
अन्येषां चैव भूतानामीश्वरो ह्यसि भूतकृत् ॥ ०१५ ॥

यदि दास्यामि ते देव कुण्डले कवचं तथा ।
वध्यतामुपयास्यामि त्वं च शक्रावहास्यताम् ॥ ०१६ ॥

तस्माद्विनिमयं कृत्वा कुण्डले वर्म चोत्तमम् ।
हरस्व शक्र कामं मे न दद्यामहमन्यथा ॥ ०१७ ॥

शक्र उवाच ॥

विदितोऽहं रवेः पूर्वमायन्नेव तवान्तिकम् ।
तेन ते सर्वमाख्यातमेवमेतन्न संशयः ॥ ०१८ ॥

काममस्तु तथा तात तव कर्ण यथेच्छसि ।
वर्जयित्वा तु मे वज्रं प्रवृणीष्व यदिच्छसि ॥ ०१९ ॥

वैशंपायन उवाच ॥

ततः कर्णः प्रहृष्टस्तु उपसङ्गम्य वासवम् ।
अमोघां शक्तिमभ्येत्य वव्रे संपूर्णमानसः ॥ ०२० ॥

कर्ण उवाच ॥

वर्मणा कुण्डलाभ्यां च शक्तिं मे देहि वासव ।
अमोघां शत्रुसंघानां घातनीं पृतनामुखे ॥ ०२१ ॥

वैशंपायन उवाच ॥

ततः सञ्चिन्त्य मनसा मुहूर्तमिव वासवः ।
शक्त्यर्थं पृथिवीपाल कर्णं वाक्यमथाब्रवीत् ॥ ०२२ ॥

कुण्डले मे प्रयच्छस्व वर्म चैव शरीरजम् ।
गृहाण कर्ण शक्तिं त्वमनेन समयेन मे ॥ ०२३ ॥

अमोघा हन्ति शतशः शत्रून्मम करच्युता ।
पुनश्च पाणिमभ्येति मम दैत्यान्विनिघ्नतः ॥ ०२४ ॥

सेयं तव करं प्राप्य हत्वैकं रिपुमूर्जितम् ।
गर्जन्तं प्रतपन्तं च मामेवैष्यति सूतज ॥ ०२५ ॥

कर्ण उवाच ॥

एकमेवाहमिच्छामि रिपुं हन्तुं महाहवे ।
गर्जन्तं प्रतपन्तं च यतो मम भयं भवेत् ॥ ०२६ ॥

इन्द्र उवाच ॥

एकं हनिष्यसि रिपुं गर्जन्तं बलिनं रणे ।
त्वं तु यं प्रार्थयस्येकं रक्ष्यते स महात्मना ॥ ०२७ ॥

यमाहुर्वेदविद्वांसो वराहमजितं हरिम् ।
नारायणमचिन्त्यं च तेन कृष्णेन रक्ष्यते ॥ ०२८ ॥

कर्ण उवाच ॥

एवमप्यस्तु भगवन्नेकवीरवधे मम ।
अमोघा प्रवरा शक्तिर्येन हन्यां प्रतापिनम् ॥ ०२९ ॥

उत्कृत्य तु प्रदास्यामि कुण्डले कवचं च ते ।
निकृत्तेषु च गात्रेषु न मे बीभत्सता भवेत् ॥ ०३० ॥

इन्द्र उवाच ॥

न ते बीभत्सता कर्ण भविष्यति कथञ्चन ।
व्रणश्चापि न गात्रेषु यस्त्वं नानृतमिच्छसि ॥ ०३१ ॥

यादृशस्ते पितुर्वर्णस्तेजश्च वदतां वर ।
तादृशेनैव वर्णेन त्वं कर्ण भविता पुनः ॥ ०३२ ॥

विद्यमानेषु शस्त्रेषु यद्यमोघामसंशये ।
प्रमत्तो मोक्ष्यसे चापि त्वय्येवैषा पतिष्यति ॥ ०३३ ॥

कर्ण उवाच ॥

संशयं परमं प्राप्य विमोक्ष्ये वासवीमिमाम् ।
यथा मामात्थ शक्र त्वं सत्यमेतद्ब्रवीमि ते ॥ ०३४ ॥

वैशंपायन उवाच ॥

ततः शक्तिं प्रज्वलितां प्रतिगृह्य विशां पते ।
शस्त्रं गृहीत्वा निशितं सर्वगात्राण्यकृन्तत ॥ ०३५ ॥

ततो देवा मानवा दानवाश्च ; निकृन्तन्तं कर्णमात्मानमेवम् ।
दृष्ट्वा सर्वे सिद्धसंघाश्च नेदु ;र्न ह्यस्यासीद्दुःखजो वै विकारः ॥ ०३६ ॥

ततो दिव्या दुन्दुभयः प्रणेदुः ; पपातोच्चैः पुष्पवर्षं च दिव्यम् ।
दृष्ट्वा कर्णं शस्त्रसङ्कृत्तगात्रं ; मुहुश्चापि स्मयमानं नृवीरम् ॥ ०३७ ॥

ततश्छित्त्वा कवचं दिव्यमङ्गा ;त्तथैवार्द्रं प्रददौ वासवाय ।
तथोत्कृत्य प्रददौ कुण्डले ते ; वैकर्तनः कर्मणा तेन कर्णः ॥ ०३८ ॥

ततः शक्रः प्रहसन्वञ्चयित्वा ; कर्णं लोके यशसा योजयित्वा ।
कृतं कार्यं पाण्डवानां हि मेने ; ततः पश्चाद्दिवमेवोत्पपात ॥ ०३९ ॥

श्रुत्वा कर्णं मुषितं धार्तराष्ट्रा ; दीनाः सर्वे भग्नदर्पा इवासन् ।
तां चावस्थां गमितं सूतपुत्रं ; श्रुत्वा पार्था जहृषुः काननस्थाः ॥ ०४० ॥

जनमेजय उवाच ॥

क्वस्था वीराः पाण्डवास्ते बभूवुः ; कुतश्चैतच्छ्रुतवन्तः प्रियं ते ।
किं वाकार्षुर्द्वादशेऽब्दे व्यतीते ; तन्मे सर्वं भगवान्व्याकरोतु ॥ ०४१ ॥

वैशंपायन उवाच ॥

लब्ध्वा कृष्णां सैन्धवं द्रावयित्वा ; विप्रैः सार्धं काम्यकादाश्रमात्ते ।
मार्कण्डेयाच्छ्रुतवन्तः पुराणं ; देवर्षीणां चरितं विस्तरेण ॥ ०४२ ॥

प्रत्याजग्मुः सरथाः सानुयात्राः ; सर्वैः सार्धं सूदपौरोगवैश्च ।
ततः पुण्यं द्वैतवनं नृवीरा ; निस्तीर्यौग्रं वनवासं समग्रम् ॥ ०४३ ॥

---

# आरणेयपर्व

## अध्याय २९५

जनमेजय उवाच ॥

एवं हृतायां कृष्णायां प्राप्य क्लेशमनुत्तमम् ।
प्रतिलभ्य ततः कृष्णां किमकुर्वत पाण्डवाः ॥ ००१ ॥

वैशंपायन उवाच ॥

एवं हृतायां कृष्णायां प्राप्य क्लेशमनुत्तमम् ।
विहाय काम्यकं राजा सह भ्रातृभिरच्युतः ॥ ००२ ॥

पुनर्द्वैतवनं रम्यमाजगाम युधिष्ठिरः ।
स्वादुमूलफलं रम्यं मार्कण्डेयाश्रमं प्रति ॥ ००३ ॥

अनुगुप्तफलाहाराः सर्व एव मिताशनाः ।
न्यवसन्पाण्डवास्तत्र कृष्णया सह भारत ॥ ००४ ॥

वसन्द्वैतवने राजा कुन्तीपुत्रो युधिष्ठिरः ।
भीमसेनोऽर्जुनश्चैव माद्रीपुत्रौ च पाण्डवौ ॥ ००५ ॥

ब्राह्मणार्थे पराक्रान्ता धर्मात्मानो यतव्रताः ।
क्लेशमार्छन्त विपुलं सुखोदर्कं परंतपाः ॥ ००६ ॥

अजातशत्रुमासीनं भ्रातृभिः सहितं वने ।
आगम्य ब्राह्मणस्तूर्णं संतप्त इदमब्रवीत् ॥ ००७ ॥

अरणीसहितं मह्यं समासक्तं वनस्पतौ ।
मृगस्य घर्षमाणस्य विषाणे समसज्जत ॥ ००८ ॥

तदादाय गतो राजंस्त्वरमाणो महामृगः ।
आश्रमात्त्वरितः शीघ्रं प्लवमानो महाजवः ॥ ००९ ॥

तस्य गत्वा पदं शीघ्रमासाद्य च महामृगम् ।
अग्निहोत्रं न लुप्येत तदानयत पाण्डवाः ॥ ०१० ॥

ब्राह्मणस्य वचः श्रुत्वा संतप्तोऽथ युधिष्ठिरः ।
धनुरादाय कौन्तेयः प्राद्रवद्भ्रातृभिः सह ॥ ०११ ॥

सन्नद्धा धन्विनः सर्वे प्राद्रवन्नरपुङ्गवाः ।
ब्राह्मणार्थे यतन्तस्ते शीघ्रमन्वगमन्मृगम् ॥ ०१२ ॥

कर्णिनालीकनाराचानुत्सृजन्तो महारथाः ।
नाविध्यन्पाण्डवास्तत्र पश्यन्तो मृगमन्तिकात् ॥ ०१३ ॥

तेषां प्रयतमानानां नादृश्यत महामृगः ।
अपश्यन्तो मृगं श्रान्ता दुःखं प्राप्ता मनस्विनः ॥ ०१४ ॥

शीतलच्छायमासाद्य न्यग्रोधं गहने वने ।

क्षुत्पिपासापरीताङ्गाः पाण्डवाः समुपाविशन् ॥ ०१५ ॥

तेषां समुपविष्टानां नकुलो दुःखितस्तदा ।
अब्रवीद्भ्रातरं ज्येष्ठममर्षात्कुरुसत्तम ॥ ०१६ ॥

नास्मिन्कुले जातु ममज्ज धर्मो ; न चालस्यादर्थलोपो बभूव ।
अनुत्तराः सर्वभूतेषु भूयः ; संप्राप्ताः स्मः संशयं केन राजन् ॥ ०१७ ॥

---

# अध्याय २९६

युधिष्ठिर उवाच ॥

नापदामस्ति मर्यादा न निमित्तं न कारणम् ।
धर्मस्तु विभजत्यत्र उभयोः पुण्यपापयोः ॥ ००१ ॥

भीम उवाच ॥

प्रातिकाम्यनयत्कृष्णां सभायां प्रेष्यवत्तदा ।
न मया निहतस्तत्र तेन प्राप्ताः स्म संशयम् ॥ ००२ ॥

अर्जुन उवाच ॥

वाचस्तीक्ष्णास्थिभेदिन्यः सूतपुत्रेण भाषिताः ।
अतितीक्ष्णा मया क्षान्तास्तेन प्राप्ताः स्म संशयम् ॥ ००३ ॥

सहदेव उवाच ॥

शकुनिस्त्वां यदाजैषीदक्षद्यूतेन भारत ।

स मया न हतस्तत्र तेन प्राप्ताः स्म संशयम् ॥ ००४ ॥

वैशंपायन उवाच ॥

ततो युधिष्ठिरो राजा नकुलं वाक्यमब्रवीत् ।
आरुह्य वृक्षं माद्रेय निरीक्षस्व दिशो दश ॥ ००५ ॥

पानीयमन्तिके पश्य वृक्षान्वाप्युदकाश्रयान् ।
इमे हि भ्रातरः श्रान्तास्तव तात पिपासिताः ॥ ००६ ॥

नकुलस्तु तथेत्युक्त्वा शीघ्रमारुह्य पादपम् ।
अब्रवीद्भ्रातरं ज्येष्ठमभिवीक्ष्य समन्ततः ॥ ००७ ॥

पश्यामि बहुलान्राजन्वृक्षानुदकसंश्रयान् ।
सारसानां च निर्ह्रादमत्रोदकमसंशयम् ॥ ००८ ॥

ततोऽब्रवीत्सत्यधृतिः कुन्तीपुत्रो युधिष्ठिरः ।
गच्छ सौम्य ततः शीघ्रं तूर्णं पानीयमानय ॥ ००९ ॥

नकुलस्तु तथेत्युक्त्वा भ्रातुर्ज्येष्ठस्य शासनात् ।
प्राद्रवद्यत्र पानीयं शीघ्रं चैवान्वपद्यत ॥ ०१० ॥

स दृष्ट्वा विमलं तोयं सारसैः परिवारितम् ।
पातुकामस्ततो वाचमन्तरिक्षात्स शुश्रुवे ॥ ०११ ॥

मा तात साहसं कार्षीर्मम पूर्वपरिग्रहः ।
प्रश्नानुक्त्वा तु माद्रेय ततः पिब हरस्व च ॥ ०१२ ॥

अनादृत्य तु तद्वाक्यं नकुलः सुपिपासितः ।
अपिबच्छीतलं तोयं पीत्वा च निपपात ह ॥ ०१३ ॥

चिरायमाणे नकुले कुन्तीपुत्रो युधिष्ठिरः ।
अब्रवीद्भ्रातरं वीरं सहदेवमरिंदमम् ॥ ०१४ ॥

भ्राता चिरायते तात सहदेव तवाग्रजः ।
तं चैवानय सोदर्यं पानीयं च त्वमानय ॥ ०१५ ॥

सहदेवस्तथेत्युक्त्वा तां दिशं प्रत्यपद्यत ।
ददर्श च हतं भूमौ भ्रातरं नकुलं तदा ॥ ०१६ ॥

भ्रातृशोकाभिसंतप्तस्तृषया च प्रपीडितः ।
अभिदुद्राव पानीयं ततो वागभ्यभाषत ॥ ०१७ ॥

मा तात साहसं कार्षीर्मम पूर्वपरिग्रहः ।
प्रश्नानुक्त्वा यथाकामं ततः पिब हरस्व च ॥ ०१८ ॥

अनादृत्य तु तद्वाक्यं सहदेवः पिपासितः ।
अपिबच्छीतलं तोयं पीत्वा च निपपात ह ॥ ०१९ ॥

अथाब्रवीत्स विजयं कुन्तीपुत्रो युधिष्ठिरः ।
भ्रातरौ ते चिरगतौ बीभत्सो शत्रुकर्शन ॥ ०२० ॥

तौ चैवानय भद्रं ते पानीयं च त्वमानय ॥ ०२० ॥

एवमुक्तो गुडाकेशः प्रगृह्य सशरं धनुः ।
आमुक्तखड्गो मेधावी तत्सरः प्रत्यपद्यत ॥ ०२१ ॥

यतः पुरुषशार्दूलौ पानीयहरणे गतौ ।
तौ ददर्श हतौ तत्र भ्रातरौ श्वेतवाहनः ॥ ०२२ ॥

प्रसुप्ताविव तौ दृष्ट्वा नरसिंहः सुदुःखितः ।
धनुरुद्यम्य कौन्तेयो व्यलोकयत तद्वनम् ॥ ०२३ ॥

नापश्यत्तत्र किञ्चित्स भूतं तस्मिन्महावने ।
सव्यसाची ततः श्रान्तः पानीयं सोऽभ्यधावत ॥ ०२४ ॥

अभिधावंस्ततो वाचमन्तरिक्षात्स शुश्रुवे ।
किमासीदसि पानीयं नैतच्छक्यं बलात्त्वया ॥ ०२५ ॥

कौन्तेय यदि वै प्रश्नान्मयोक्तान्प्रतिपत्स्यसे ।
ततः पास्यसि पानीयं हरिष्यसि च भारत ॥ ०२६ ॥

वारितस्त्वब्रवीत्पार्थो दृश्यमानो निवारय ।
यावद्बाणैर्विनिर्भिन्नः पुनर्नैवं वदिष्यसि ॥ ०२७ ॥

एवमुक्त्वा ततः पार्थः शरैरस्त्रानुमन्त्रितैः ।
ववर्ष तां दिशं कृत्स्नां शब्दवेधं च दर्शयन् ॥ ०२८ ॥

कर्णिनालीकनाराचानुत्सृजन्भरतर्षभ ।
अनेकैरिषुसंघातैरन्तरिक्षं ववर्ष ह ॥ ०२९ ॥

यक्ष उवाच ॥

किं विघातेन ते पार्थ प्रश्नानुक्त्वा ततः पिब ।
अनुक्त्वा तु ततः प्रश्नान्पीत्वैव न भविष्यसि ॥ ०३० ॥

वैशंपायन उवाच ॥

स त्वमोघानिषून्मुक्त्वा तृष्णयाभिप्रपीडितः ।
अविज्ञायैव तान्प्रश्नान्पीत्वैव निपपात ह ॥ ०३१ ॥

अथाब्रवीद्भीमसेनं कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च बीभत्सुश्चापराजितः ॥ ०३२ ॥

चिरं गतास्तोयहेतोर्न चागच्छन्ति भारत ।
तांश्चैवानय भद्रं ते पानीयं च त्वमानय ॥ ०३३ ॥

भीमसेनस्तथेत्युक्त्वा तां दिशं प्रत्यपद्यत ।
यत्र ते पुरुषव्याघ्रा भ्रातरोऽस्य निपातिताः ॥ ०३४ ॥

तान्दृष्ट्वा दुःखितो भीमस्तृषया च प्रपीडितः ।
अमन्यत महाबाहुः कर्म तद्यक्षरक्षसाम् ॥ ०३५ ॥

स चिन्तयामास तदा योद्धव्यं ध्रुवमद्य मे ॥ ०३५ ॥

पास्यामि तावत्पानीयमिति पार्थो वृकोदरः ।
ततोऽभ्यधावत्पानीयं पिपासुः पुरुषर्षभः ॥ ०३६ ॥

यक्ष उवाच ॥

मा तात साहसं कार्षीर्मम पूर्वपरिग्रहः ।
प्रश्नानुक्त्वा तु कौन्तेय ततः पिब हरस्व च ॥ ०३७ ॥

वैशंपायन उवाच ॥

एवमुक्तस्ततो भीमो यक्षेणामिततेजसा ।
अविज्ञायैव तान्प्रश्नान्पीत्वैव निपपात ह ॥ ०३८ ॥

ततः कुन्तीसुतो राजा विचिन्त्य पुरुषर्षभः ।
समुत्थाय महाबाहुर्दह्यमानेन चेतसा ॥ ०३९ ॥

अपेतजननिर्घोषं प्रविवेश महावनम् ।
रुरुभिश्च वराहैश्च पक्षिभिश्च निषेवितम् ॥ ०४० ॥

नीलभास्वरवर्णैश्च पादपैरुपशोभितम् ।
भ्रमरैरुपगीतं च पक्षिभिश्च महायशाः  ॥ ०४१  ॥

स गच्छन्कानने तस्मिन्हेमजालपरिष्कृतम् ।
ददर्श तत्सरः श्रीमान्विश्वकर्मकृतं यथा  ॥ ०४२  ॥

उपेतं नलिनीजालैः सिन्धुवारैश्च वेतसैः ।
केतकैः करवीरैश्च पिप्पलैश्चैव संवृतम्  ॥ ०४३  ॥

श्रमार्तस्तदुपागम्य सरो दृष्ट्वाथ विस्मितः  ॥ ०४३  ॥

---

## यक्षप्रश्नाः

## अध्याय २९७

वैशंपायन उवाच  ॥

स ददर्श हतान्भ्रातृ.ण्लोकपालानिव च्युतान् ।
युगान्ते समनुप्राप्ते शक्रप्रतिमगौरवान्  ॥ ००१  ॥

विप्रकीर्णधनुर्बाणं दृष्ट्वा निहतमर्जुनम् ।
भीमसेनं यमौ चोभौ निर्विचेष्टान्गतायुषः  ॥ ००२  ॥

स दीर्घमुष्णं निःश्वस्य शोकबाष्पपरिप्लुतः ।
बुद्ध्या विचिन्तयामास वीराः केन निपातिताः  ॥ ००३  ॥

नैषां शस्त्रप्रहारोऽस्ति पदं नेहास्ति कस्यचित् ।

भूतं महदिदं मन्ये भ्रातरो येन मे हताः ॥ ००४ ॥

एकाग्रं चिन्तयिष्यामि पीत्वा वेत्स्यामि वा जलम् ॥ ००४ ॥

स्यात्तु दुर्योधनेनेदमुपांशुविहितं कृतम् ।
गान्धारराजरचितं सततं जिह्मबुद्धिना ॥ ००५ ॥

यस्य कार्यमकार्यं वा सममेव भवत्युत ।
कस्तस्य विश्वसेद्वीरो दुर्मतेरकृतात्मनः ॥ ००६ ॥

अथ वा पुरुषैर्गूढैः प्रयोगोऽयं दुरात्मनः ।
भवेदिति महाबाहुर्बहुधा समचिन्तयत् ॥ ००७ ॥

तस्यासीन्न विषेणेदमुदकं दूषितं यथा ।
मुखवर्णाः प्रसन्ना मे भ्रातॄणामित्यचिन्तयत् ॥ ००८ ॥

एकैकशश्चौघबलानिमान्पुरुषसत्तमान् ।
कोऽन्यः प्रतिसमासेत कालान्तकयमादृते ॥ ००९ ॥

एतेनाध्यवसायेन तत्तोयमवगाढवान् ।
गाहमानश्च तत्तोयमन्तरिक्षात्स शुश्रुवे ॥ ०१० ॥

यक्ष उवाच ॥

अहं बकः शैवलमत्स्यभक्षो ; मया नीताः प्रेतवशं तवानुजाः ।
त्वं पञ्चमो भविता राजपुत्र ; न चेत्प्रश्नान्पृच्छतो व्याकरोषि ॥ ०११ ॥

मा तात साहसं कार्षीर्मम पूर्वपरिग्रहः ।
प्रश्नानुक्त्वा तु कौन्तेय ततः पिब हरस्व च ॥ ०१२ ॥

युधिष्ठिर उवाच ॥

रुद्राणां वा वसूनां वा मरुतां वा प्रधानभाक् ।
पृच्छामि को भवान्देवो नैतच्छकुनिना कृतम्  ॥ ०१३  ॥

हिमवान्पारियात्रश्च विन्ध्यो मलय एव च ।
चत्वारः पर्वताः केन पातिता भुवि तेजसा  ॥ ०१४  ॥

अतीव ते महत्कर्म कृतं बलवतां वर ।
यन्न देवा न गन्धर्वा नासुरा न च राक्षसाः  ॥ ०१५  ॥

विषहेरन्महायुद्धे कृतं ते तन्महाद्भुतम्  ॥ ०१५  ॥

न ते जानामि यत्कार्यं नाभिजानामि काङ्क्षितम् ।
कौतूहलं महज्जातं साध्वसं चागतं मम  ॥ ०१६  ॥

येनास्म्युद्विग्नहृदयः समुत्पन्नशिरोज्वरः ।
पृच्छामि भगवंस्तस्मात्को भवानिह तिष्ठति  ॥ ०१७  ॥

यक्ष उवाच  ॥

यक्षोऽहमस्मि भद्रं ते नास्मि पक्षी जलेचरः ।
मयैते निहताः सर्वे भ्रातरस्ते महौजसः  ॥ ०१८  ॥

वैशंपायन उवाच  ॥

ततस्तामशिवां श्रुत्वा वाचं स परुषाक्षराम् ।
यक्षस्य ब्रुवतो राजन्नुपक्रम्य तदा स्थितः  ॥ ०१९  ॥

विरूपाक्षं महाकायं यक्षं तालसमुच्छ्रयम् ।
ज्वलनार्कप्रतीकाशमधृष्यं पर्वतोपमम्  ॥ ०२०  ॥

सेतुमाश्रित्य तिष्ठन्तं ददर्श भरतर्षभः ।
मेघगम्भीरया वाचा तर्जयन्तं महाबलम्  ॥ ०२१  ॥

यक्ष उवाच  ॥

इमे ते भ्रातरो राजन्वार्यमाणा मयासकृत् ।
बलात्तोयं जिहीर्षन्तस्ततो वै सूदिता मया  ॥ ०२२  ॥

न पेयमुदकं राजन्प्राणानिह परीप्सता ।
पार्थ मा साहसं कार्षीर्मम पूर्वपरिग्रहः  ॥ ०२३  ॥

प्रश्नानुक्त्वा तु कौन्तेय ततः पिब हरस्व च  ॥ ०२३  ॥

युधिष्ठिर उवाच  ॥

नैवाहं कामये यक्ष तव पूर्वपरिग्रहम् ।
कामं नैतत्प्रशंसन्ति सन्तो हि पुरुषाः सदा  ॥ ०२४  ॥

यदात्मना स्वमात्मानं प्रशंसेत्पुरुषः प्रभो ।
यथाप्रज्ञं तु ते प्रश्नान्प्रतिवक्ष्यामि पृच्छ माम्  ॥ ०२५  ॥

यक्ष उवाच  ॥

किं स्विदादित्यमुन्नयति के च तस्याभितश्चराः ।
कश्चैनमस्तं नयति कस्मिंश्च प्रतितिष्ठति  ॥ ०२६  ॥

युधिष्ठिर उवाच  ॥

ब्रह्मादित्यमुन्नयति देवास्तस्याभितश्चराः ।
धर्मश्चास्तं नयति च सत्ये च प्रतितिष्ठति  ॥ ०२७  ॥

यक्ष उवाच ॥

केन स्विच्छ्रोत्रियो भवति केन स्विद्विन्दते महत् ।
केन द्वितीयवान्भवति राजन्केन च बुद्धिमान् ॥ ०२८ ॥

युधिष्ठिर उवाच ॥

श्रुतेन श्रोत्रियो भवति तपसा विन्दते महत् ।
धृत्या द्वितीयवान्भवति बुद्धिमान्वृद्धसेवया ॥ ०२९ ॥

यक्ष उवाच ॥

किं ब्राह्मणानां देवत्वं कश्च धर्मः सतामिव ।
कश्चैषां मानुषो भावः किमेषामसतामिव ॥ ०३० ॥

युधिष्ठिर उवाच ॥

स्वाध्याय एषां देवत्वं तप एषां सतामिव ।
मरणं मानुषो भावः परिवादोऽसतामिव ॥ ०३१ ॥

यक्ष उवाच ॥

किं क्षत्रियाणां देवत्वं कश्च धर्मः सतामिव ।
कश्चैषां मानुषो भावः किमेषामसतामिव ॥ ०३२ ॥

युधिष्ठिर उवाच ॥

इष्वस्त्रमेषां देवत्वं यज्ञ एषां सतामिव ।
भयं वै मानुषो भावः परित्यागोऽसतामिव ॥ ०३३ ॥

यक्ष उवाच ॥

किमेकं यज्ञियं साम किमेकं यज्ञियं यजुः ।
का चैका वृश्चते यज्ञं कां यज्ञो नातिवर्तते ॥ ०३४ ॥

युधिष्ठिर उवाच ॥

प्राणो वै यज्ञियं साम मनो वै यज्ञियं यजुः ।
वागेका वृश्चते यज्ञं तां यज्ञो नातिवर्तते ॥ ०३५ ॥

यक्ष उवाच ॥

किं स्विदापततां श्रेष्ठं किं स्विन्निपततां वरम् ।
किं स्वित्प्रतिष्ठमानानां किं स्वित्प्रवदतां वरम् ॥ ०३६ ॥

युधिष्ठिर उवाच ॥

वर्षमापततां श्रेष्ठं बीजं निपततां वरम् ।
गावः प्रतिष्ठमानानां पुत्रः प्रवदतां वरः ॥ ०३७ ॥

यक्ष उवाच ॥

इन्द्रियार्थाननुभवन्बुद्धिमा.ण्ल्लोकपूजितः ।
संमतः सर्वभूतानामुच्छ्वसन्को न जीवति ॥ ०३८ ॥

युधिष्ठिर उवाच ॥

देवतातिथिभृत्यानां पितृणामात्मनश्च यः ।
न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति ॥ ०३९ ॥

यक्ष उवाच ॥

किं स्विद्गुरुतरं भूमेः किं स्विदुच्चतरं च खात् ।

किं स्विच्छीघ्रतरं वायोः किं स्विद्बहुतरं नृणाम्  ॥ ०४०  ॥

युधिष्ठिर उवाच  ॥

माता गुरुतरा भूमेः पिता उच्चतरश्च खात् ।
मनः शीघ्रतरं वायोश्चिन्ता बहुतरी नृणाम्  ॥ ०४१  ॥

यक्ष उवाच  ॥

किं स्वित्सुप्तं न निमिषति किं स्विज्जातं न चोपति ।
कस्य स्विद्धृदयं नास्ति किं स्विद्वेगेन वर्धते  ॥ ०४२  ॥

युधिष्ठिर उवाच  ॥

मत्स्यः सुप्तो न निमिषत्यण्डं जातं न चोपति ।
अश्मनो हृदयं नास्ति नदी वेगेन वर्धते  ॥ ०४३  ॥

यक्ष उवाच  ॥

किं स्वित्प्रवसतो मित्रं किं स्विन्मित्रं गृहे सतः ।
आतुरस्य च किं मित्रं किं स्विन्मित्रं मरिष्यतः  ॥ ०४४  ॥

युधिष्ठिर उवाच  ॥

सार्थः प्रवसतो मित्रं भार्या मित्रं गृहे सतः ।
आतुरस्य भिषङ्मित्रं दानं मित्रं मरिष्यतः  ॥ ०४५  ॥

यक्ष उवाच  ॥

किं स्विदेको विचरति जातः को जायते पुनः ।
किं स्विद्धिमस्य भैषज्यं किं स्विदावपनं महत्  ॥ ०४६  ॥

युधिष्ठिर उवाच ॥

सूर्य एको विचरति चन्द्रमा जायते पुनः ।
अग्निर्हिमस्य भैषज्यं भूमिरावपनं महत् ॥ ०४७ ॥

यक्ष उवाच ॥

किं स्विदेकपदं धर्म्यं किं स्विदेकपदं यशः ।
किं स्विदेकपदं स्वर्ग्यं किं स्विदेकपदं सुखम् ॥ ०४८ ॥

युधिष्ठिर उवाच ॥

दाक्ष्यमेकपदं धर्म्यं दानमेकपदं यशः ।
सत्यमेकपदं स्वर्ग्यं शीलमेकपदं सुखम् ॥ ०४९ ॥

यक्ष उवाच ॥

किं स्विदात्मा मनुष्यस्य किं स्विद्दैवकृतः सखा ।
उपजीवनं किं स्विदस्य किं स्विदस्य परायणम् ॥ ०५० ॥

युधिष्ठिर उवाच ॥

पुत्र आत्मा मनुष्यस्य भार्या दैवकृतः सखा ।
उपजीवनं च पर्जन्यो दानमस्य परायणम् ॥ ०५१ ॥

यक्ष उवाच ॥

धन्यानामुत्तमं किं स्विद्धनानां किं स्विदुत्तमम् ।
लाभानामुत्तमं किं स्वित्किं सुखानां तथोत्तमम् ॥ ०५२ ॥

युधिष्ठिर उवाच ॥

धन्यानामुत्तमं दाक्ष्यं धनानामुत्तमं श्रुतम् ।
लाभानां श्रेष्ठमारोग्यं सुखानां तुष्टिरुत्तमा ॥ ०५३ ॥

यक्ष उवाच ॥

कश्च धर्मः परो लोके कश्च धर्मः सदाफलः ।
किं नियम्य न शोचन्ति कैश्च संधिर्न जीर्यते ॥ ०५४ ॥

युधिष्ठिर उवाच ॥

आनृशंस्यं परो धर्मस्त्रयीधर्मः सदाफलः ।
मनो यम्य न शोचन्ति सद्भिः संधिर्न जीर्यते ॥ ०५५ ॥

यक्ष उवाच ॥

किं नु हित्वा प्रियो भवति किं नु हित्वा न शोचति ।
किं नु हित्वार्थवान्भवति किं नु हित्वा सुखी भवेत् ॥ ०५६ ॥

युधिष्ठिर उवाच ॥

मानं हित्वा प्रियो भवति क्रोधं हित्वा न शोचति ।
कामं हित्वार्थवान्भवति लोभं हित्वा सुखी भवेत् ॥ ०५७ ॥

यक्ष उवाच ॥

मृतः कथं स्यात्पुरुषः कथं राष्ट्रं मृतं भवेत् ।
श्राद्धं मृतं कथं च स्यात्कथं यज्ञो मृतो भवेत् ॥ ०५८ ॥

युधिष्ठिर उवाच ॥

मृतो दरिद्रः पुरुषो मृतं राष्ट्रमराजकम् ।
मृतमश्रोत्रियं श्राद्धं मृतो यज्ञस्त्वदक्षिणः ॥ ०५९ ॥

यक्ष उवाच ॥

का दिक्किमुदकं प्रोक्तं किमन्नं पार्थ किं विषम् ।
श्राद्धस्य कालमाख्याहि ततः पिब हरस्व च ॥ ०६० ॥

युधिष्ठिर उवाच ॥

सन्तो दिग्जलमाकाशं गौरन्नं प्रार्थना विषम् ।
श्राद्धस्य ब्राह्मणः कालः कथं वा यक्ष मन्यसे ॥ ०६१ ॥

यक्ष उवाच ॥

व्याख्याता मे त्वया प्रश्ना याथातथ्यं परंतप ।
पुरुषं त्विदानीमाख्याहि यश्च सर्वधनी नरः ॥ ०६२ ॥

युधिष्ठिर उवाच ॥

दिवं स्पृशति भूमिं च शब्दः पुण्यस्य कर्मणः ।
यावत्स शब्दो भवति तावत्पुरुष उच्यते ॥ ०६३ ॥

तुल्ये प्रियाप्रिये यस्य सुखदुःखे तथैव च ।
अतीतानागते चोभे स वै सर्वधनी नरः ॥ ०६४ ॥

यक्ष उवाच ॥

व्याख्यातः पुरुषो राजन्यश्च सर्वधनी नरः ।
तस्मात्तवैको भ्रातॄणां यमिच्छसि स जीवतु ॥ ०६५ ॥

युधिष्ठिर उवाच ॥

श्यामो य एष रक्ताक्षो बृहच्छाल इवोद्गतः ।
व्यूढोरस्को महाबाहुर्नकुलो यक्ष जीवतु ॥ ०६६ ॥

यक्ष उवाच ॥

प्रियस्ते भीमसेनोऽयमर्जुनो वः परायणम् ।
स कस्मान्नकुलं राजन्सापत्नं जीवमिच्छसि ॥ ०६७ ॥

यस्य नागसहस्रेण दशसंख्येन वै बलम् ।
तुल्यं तं भीममुत्सृज्य नकुलं जीवमिच्छसि ॥ ०६८ ॥

तथैनं मनुजाः प्राहुर्भीमसेनं प्रियं तव ।
अथ केनानुभावेन सापत्नं जीवमिच्छसि ॥ ०६९ ॥

यस्य बाहुबलं सर्वे पाण्डवाः समुपाश्रिताः ।
अर्जुनं तमपाहाय नकुलं जीवमिच्छसि ॥ ०७० ॥

युधिष्ठिर उवाच ॥

आनृशंस्यं परो धर्मः परमार्थाच्च मे मतम् ।
आनृशंस्यं चिकीर्षामि नकुलो यक्ष जीवतु ॥ ०७१ ॥

धर्मशीलः सदा राजा इति मां मानवा विदुः ।
स्वधर्मान्न चलिष्यामि नकुलो यक्ष जीवतु ॥ ०७२ ॥

यथा कुन्ती तथा माद्री विशेषो नास्ति मे तयोः ।
मातृभ्यां सममिच्छामि नकुलो यक्ष जीवतु ॥ ०७३ ॥

यक्ष उवाच ॥

यस्य तेऽर्थाच्च कामाच्च आनृशंस्यं परं मतम् ।
तस्मात्ते भ्रातरः सर्वे जीवन्तु भरतर्षभ ॥ ०७४ ॥

---

# अध्याय २९८

वैशंपायन उवाच ॥

ततस्ते यक्षवचनादुदतिष्ठन्त पाण्डवाः ।
क्षुत्पिपासे च सर्वेषां क्षणे तस्मिन्व्यगच्छताम् ॥ ००१ ॥

युधिष्ठिर उवाच ॥

सरस्येकेन पादेन तिष्ठन्तमपराजितम् ।
पृच्छामि को भवान्देवो न मे यक्षो मतो भवान् ॥ ००२ ॥

वसूनां वा भवानेको रुद्राणामथ वा भवान् ।
अथ वा मरुतां श्रेष्ठो वज्री वा त्रिदशेश्वरः ॥ ००३ ॥

मम हि भ्रातर इमे सहस्रशतयोधिनः ।
न तं योगं प्रपश्यामि येन स्युर्विनिपातिताः ॥ ००४ ॥

सुखं प्रतिविबुद्धानामिन्द्रियाण्युपलक्षये ।
स भवान्सुहृदस्माकमथ वा नः पिता भवान् ॥ ००५ ॥

यक्ष उवाच ॥

अहं ते जनकस्तात धर्मो मृदुपराक्रम ।
त्वां दिदृक्षुरनुप्राप्तो विद्धि मां भरतर्षभ ॥ ००६ ॥

यशः सत्यं दमः शौचमार्जवं ह्रीरचापलम् ।
दानं तपो ब्रह्मचर्यमित्येतास्तनवो मम ॥ ००७ ॥

अहिंसा समता शान्तिस्तपः शौचममत्सरः ।
द्वाराण्येतानि मे विद्धि प्रियो ह्यसि सदा मम ॥ ००८ ॥

दिष्ट्या पञ्चसु रक्तोऽसि दिष्ट्या ते षट्पदी जिता ।
द्वे पूर्वे मध्यमे द्वे च द्वे चान्ते सांपरायिके ॥ ००९ ॥

धर्मोऽहमस्मि भद्रं ते जिज्ञासुस्त्वामिहागतः ।
आनृशंस्येन तुष्टोऽस्मि वरं दास्यामि तेऽनघ ॥ ०१० ॥

वरं वृणीष्व राजेन्द्र दाता ह्यस्मि तवानघ ।
ये हि मे पुरुषा भक्ता न तेषामस्ति दुर्गतिः ॥ ०११ ॥

युधिष्ठिर उवाच ॥

अरणीसहितं यस्य मृग आदाय गच्छति ।
तस्याग्नयो न लुप्येरन्प्रथमोऽस्तु वरो मम ॥ ०१२ ॥

धर्म उवाच ॥

अरणीसहितं तस्य ब्राह्मणस्य हृतं मया ।
मृगवेषेण कौन्तेय जिज्ञासार्थं तव प्रभो ॥ ०१३ ॥

वैशंपायन उवाच ॥

ददानीत्येव भगवानुत्तरं प्रत्यपद्यत ।

अन्यं वरय भद्रं ते वरं त्वममरोपम  ॥ ०१४  ॥

युधिष्ठिर उवाच  ॥

वर्षाणि द्वादशारण्ये त्रयोदशमुपस्थितम् ।
तत्र नो नाभिजानीयुर्वसतो मनुजाः क्वचित्  ॥ ०१५  ॥

वैशंपायन उवाच  ॥

ददानीत्येव भगवानुत्तरं प्रत्यपद्यत ।
भूयश्चाश्वासयामास कौन्तेयं सत्यविक्रमम्  ॥ ०१६  ॥

यद्यपि स्वेन रूपेण चरिष्यथ महीमिमाम् ।
न वो विज्ञास्यते कश्चित्त्रिषु लोकेषु भारत  ॥ ०१७  ॥

वर्षं त्रयोदशं चेदं मत्प्रसादात्कुरूद्वहाः ।
विराटनगरे गूढा अविज्ञाताश्चरिष्यथ  ॥ ०१८  ॥

यद्वः सङ्कल्पितं रूपं मनसा यस्य यादृशम् ।
तादृशं तादृशं सर्वे छन्दतो धारयिष्यथ  ॥ ०१९  ॥

अरणीसहितं चेदं ब्राह्मणाय प्रयच्छत ।
जिज्ञासार्थं मया ह्येतदाहृतं मृगरूपिणा  ॥ ०२०  ॥

तृतीयं गृह्यतां पुत्र वरमप्रतिमं महत् ।
त्वं हि मत्प्रभवो राजन्विदुरश्च ममांशभाक्  ॥ ०२१  ॥

युधिष्ठिर उवाच  ॥

देवदेवो मया दृष्टो भवान्साक्षात्सनातनः ।
यं ददासि वरं तुष्टस्तं ग्रहीष्याम्यहं पितः  ॥ ०२२  ॥

जयेयं लोभमोहौ च क्रोधं चाहं सदा विभो ।
दाने तपसि सत्ये च मनो मे सततं भवेत्  ॥ ०२३  ॥

धर्म उवाच  ॥

उपपन्नो गुणैः सर्वैः स्वभावेनासि पाण्डव ।
भवान्धर्मः पुनश्चैव यथोक्तं ते भविष्यति  ॥ ०२४  ॥

वैशंपायन उवाच  ॥

इत्युक्त्वान्तर्दधे धर्मो भगवा.ण्ल्लोकभावनः ।
समेताः पाण्डवाश्चैव सुखसुप्ता मनस्विनः  ॥ ०२५  ॥

अभ्येत्य चाश्रमं वीराः सर्व एव गतक्लमाः ।
आरणेयं ददुस्तस्मै ब्राह्मणाय तपस्विने  ॥ ०२६  ॥

इदं समुत्थानसमागमं मह ;त्पितुश्च पुत्रस्य च कीर्तिवर्धनम् ।
पठन्नरः स्याद्विजितेन्द्रियो वशी ; सपुत्रपौत्रः शतवर्षभाग्भवेत्  ॥ ०२७  ॥

न चाप्यधर्मे न सुहृद्विभेदने ; परस्वहारे परदारमर्शने ।
कदर्यभावे न रमेन्मनः सदा ; नृणां सदाख्यानमिदं विजानताम्  ॥ ०२८  ॥

---

# अध्याय २९९

वैशंपायन उवाच  ॥

धर्मेण तेऽभ्यनुज्ञाताः पाण्डवाः सत्यविक्रमाः ।

अज्ञातवासं वत्स्यन्तश्छन्ना वर्षं त्रयोदशम्  ॥ ००१  ॥

उपोपविश्य विद्वांसः सहिताः संशितव्रताः  ॥ ००१  ॥

ये तद्भक्ता वसन्ति स्म वनवासे तपस्विनः ।
तानब्रुवन्महात्मानः शिष्टाः प्राञ्जलयस्तदा  ॥ ००२  ॥

अभ्यनुज्ञापयिष्यन्तस्तं निवासं धृतव्रताः  ॥ ००२  ॥

विदितं भवतां सर्वं धार्तराष्ट्रैर्यथा वयम् ।
छद्मना हृतराज्याश्च निःस्वाश्च बहुशः कृताः  ॥ ००३  ॥

उषिताश्च वने कृच्छ्रं यत्र द्वादश वत्सरान् ।
अज्ञातवाससमयं शेषं वर्षं त्रयोदशम्  ॥ ००४  ॥

तद्वत्स्यामो वयं छन्नास्तदनुज्ञातुमर्हथ  ॥ ००४  ॥

सुयोधनश्च दुष्टात्मा कर्णश्च सहसौबलः ।
जानन्तो विषमं कुर्युरस्मास्वत्यन्तवैरिणः  ॥ ००५  ॥

युक्ताचाराश्च युक्ताश्च पौरस्य स्वजनस्य च  ॥ ००५  ॥

अपि नस्तद्भवेद्भूयो यद्वयं ब्राह्मणैः सह ।
समस्ताः स्वेषु राष्ट्रेषु स्वराज्यस्था भवेमहि  ॥ ००६  ॥

इत्युक्त्वा दुःखशोकार्तः शुचिर्धर्मसुतस्तदा ।
संमूर्छितोऽभवद्राजा साश्रुकण्ठो युधिष्ठिरः  ॥ ००७  ॥

तमथाश्वासयन्सर्वे ब्राह्मणा भ्रातृभिः सह ।
अथ धौम्योऽब्रवीद्वाक्यं महार्थं नृपतिं तदा  ॥ ००८  ॥

राजन्विद्वान्भवान्दान्तः सत्यसंधो जितेन्द्रियः ।
नैवंविधाः प्रमुह्यन्ति नराः कस्याञ्चिदापदि ॥ ००९ ॥

देवैरप्यापदः प्राप्ताश्छन्नैश्च बहुशस्तथा ।
तत्र तत्र सपत्नानां निग्रहार्थं महात्मभिः ॥ ०१० ॥

इन्द्रेण निषधान्प्राप्य गिरिप्रस्थाश्रमे तदा ।
छन्नेनोष्य कृतं कर्म द्विषतां बलनिग्रहे ॥ ०११ ॥

विष्णुनाश्वशिरः प्राप्य तथादित्यां निवत्स्यता ।
गर्भे वधार्थं दैत्यानामज्ञातेनोषितं चिरम् ॥ ०१२ ॥

प्राप्य वामनरूपेण प्रच्छन्नं ब्रह्मरूपिणा ।
बलेर्यथा हृतं राज्यं विक्रमैस्तच्च ते श्रुतम् ॥ ०१३ ॥

और्वेण वसता छन्नमूरौ ब्रह्मर्षिणा तदा ।
यत्कृतं तात लोकेषु तच्च सर्वं श्रुतं त्वया ॥ ०१४ ॥

प्रच्छन्नं चापि धर्मज्ञ हरिणा वृत्रनिग्रहे ।
वज्रं प्रविश्य शक्रस्य यत्कृतं तच्च ते श्रुतम् ॥ ०१५ ॥

हुताशनेन यच्चापः प्रविश्य छन्नमासता ।
विबुधानां कृतं कर्म तच्च सर्वं श्रुतं त्वया ॥ ०१६ ॥

एवं विवस्वता तात छन्नेनोत्तमतेजसा ।
निर्दग्धाः शत्रवः सर्वे वसता भुवि सर्वशः ॥ ०१७ ॥

विष्णुना वसता चापि गृहे दशरथस्य वै ।
दशग्रीवो हतश्छन्नं संयुगे भीमकर्मणा ॥ ०१८ ॥

एवमेते महात्मानः प्रच्छन्नास्तत्र तत्र ह ।

अजयञ्शात्रवान्युद्धे तथा त्वमपि जेष्यसि ॥ ०१९ ॥

तथा धौम्येन धर्मज्ञो वाक्यैः संपरितोषितः ।
शास्त्रबुद्ध्या स्वबुद्ध्या च न चचाल युधिष्ठिरः ॥ ०२० ॥

अथाब्रवीन्महाबाहुर्भीमसेनो महाबलः ।
राजानं बलिनां श्रेष्ठो गिरा संपरिहर्षयन् ॥ ०२१ ॥

अवेक्षया महाराज तव गाण्डीवधन्वना ।
धर्मानुगतया बुद्ध्या न किञ्चित्साहसं कृतम् ॥ ०२२ ॥

सहदेवो मया नित्यं नकुलश्च निवारितौ ।
शक्तौ विध्वंसने तेषां शत्रुघ्नौ भीमविक्रमौ ॥ ०२३ ॥

न वयं तत्प्रहास्यामो यस्मिन्योक्ष्यति नो भवान् ।
भवान्विधत्तां तत्सर्वं क्षिप्रं जेष्यामहे परान् ॥ ०२४ ॥

इत्युक्ते भीमसेनेन ब्राह्मणाः परमाशिषः ।
प्रयुज्यापृच्छ्य भरतान्यथास्वान्स्वान्ययुर्गृहान् ॥ ०२५ ॥

सर्वे वेदविदो मुख्या यतयो मुनयस्तथा ।
आशीरुक्त्वा यथान्यायं पुनर्दर्शनकाङ्क्षिणः ॥ ०२६ ॥

सह धौम्येन विद्वांसस्तथा ते पञ्च पाण्डवाः ।
उत्थाय प्रययुर्वीराः कृष्णामादाय भारत ॥ ०२७ ॥

क्रोशमात्रमतिक्रम्य तस्माद्देशान्निमित्ततः ।
श्वोभूते मनुजव्याघ्राश्छन्नवासार्थमुद्यताः ॥ ०२८ ॥

पृथक्शास्त्रविदः सर्वे सर्वे मन्त्रविशारदाः ।
संधिविग्रहकालज्ञा मन्त्राय समुपाविशन् ॥ ०२९ ॥